**दृष्ट्वा कुमुद्वंतमखंडमंडलं रमाननाभं नवकुंकुमारुणम् ॥ वनं च तत्कोमलगोऽभिरंजितं जगौ कलं वामदृशां मनोहरम् ॥ ३ ॥**

**कुमुत्कुमुदं विकसनीयं विद्यते यस्य तं कुमुद्वंतं न खंडं मंडलं यस्य तं रमाया आननस्याभेव आभा यस्य तं नवकुंकुममिवारुणमेवंविधं चंद्रं दृष्ट्वा तथा वनं**

पूर्णकलत्वादित्यर्थः । प्रियः भर्ता । स्वप्रियायाः निजभार्यायाः । ''अरुणं कुंकुमे रक्ते संध्यारागेऽर्कसारथौ'' इति धरणिः । प्राच्याः ककुभ इंद्रेशायाः । परपत्न्या इत्यर्थः । अनेन 'यद्यदाचरति श्रेष्ठः' इति न्यायेन यद्य स्मद्वंशप्रवर्तकश्चंद्र इन्द्रभार्यायाः प्राच्या मुखं विलिंपति, तदा कुलपरंपरागतत्वादस्माकमेतत्सदृशकर्माणि न दोष इति विमृश्य भगवान्प्रीतो भवत्वित्युक्तं स्वामिचरणैः-तत्प्रीतये इति । इत्यर्थ इति । अरुणतापादनमेवात्र विलिंपनपदार्थः । चर्षणीनां मनुष्याणां वा सस्यानाम् ''अर्यम्णो मातृकापत्नी तयोश्चर्षणयः सुताः । यत्र वै मानुषी जातिर्ब्रह्मणा चोपकल्पिता ॥'' इत्युक्तेश्चर्षणयो मनुष्याः । ''चर्षणिर्मानुषे सस्ये श्रांते चाध्वनि वाहने'' इति निरुक्तिकोशः । सस्यपक्षे खरकिरणसंतापम्लानरूपाः शुच इति ज्ञेयम् ॥ * ॥ तदैवोद्दीपनानन्तरं प्रादुर्बभूवेत्याह-तदेति । उडुराजश्चंद्र उदगात् । किंच, न केवलमयमुद्दीपन एव अपि तु गोपस्त्रीरमणस्य तस्य प्रमाणीभूत इत्याह-ककुभ इति । दीर्घकालेन दर्शनं यस्य सः । प्रियो रमणः । प्रियायाः स्वरमण्या मुखमरुणेन कुंकुमेन स्वकरधृतेन यथा विलिंपति तथा प्राच्याः ककुभो दिशो मुखं शंतमैः सुखतमैः करैः किरणैः धृतेनारुणेनो दयरागेण लिंपन्नरुणीकुर्वन्नित्यर्थः । स प्रसिद्ध एव । चर्षणीनाम् 'अर्यम्णा-' इति षष्ठोक्तेर्मनुष्यजातीनां शुचः संतापान् मृजन् अपनयन् । अयमर्थः-श्रीकृष्णस्य सः कुलादिपुरुषः पुरात नोऽपि द्विजराजोपि रमणार्हबहुतरस्त्रीमानपि प्राच्या दिश इन्द्रभार्यत्वात्परस्त्रिया मुखं स्वकरैः स्पृशति, स्वयं तस्यामनुरक्तस्तामप्यनुरागवतीं करोति यदि, तदा कृष्णस्य तद्वंश्यस्य नवीनवयसो गोपजाते रलब्धविवाहत्वात्स्वीयस्त्रीरहितस्याथ च स्वसौंदर्येण मानुषजातीरानंदयतो गोपस्त्रीरमणे कः खलु दोष इति ॥ अत्र **तोषिणी**-एवं निजरिरंसया चंद्रमपि प्राचीदिशा सह प्रियः प्रिययेव रन्तुमुद्यतं मन्यमानस्य श्रीभगवतो भावमभिव्यंजयंस्तासां रात्रीणामुत्तमांगतारूपायामस्यामभिव्यक्तसर्वमंगलसूचकमन्यदप्याह-तदेति । उडूनां राजेति । ता अपि तत्परिवारत्वेनोदगुरिति ध्वनितम् । रश्मिभिररुणेनेति करणद्वयमुभयेषामपि साधकतमत्वात् । रश्मिधृतेन रागेणेत्यर्थः । विशेषेण लिंपन्निति पूर्णचंद्राभिप्रायेणैव, ततो राकैवेयं तिथिः । 'उत्फुल्लमल्लिका रात्रीर्वीक्ष्य' इतिवत्तस्याप्युद्दीपनत्वेन सहजोद्गमौचित्यात् । 'राकेशकररंजितम्' इति वक्ष्यमाणानुसारेण तत्तिथावेव तात्पर्यात् । स इति ता इतिवत् । न केवलमेवममुना प्राचीदिश एव तापोऽपहृतः किं तु सर्वेषां जनानामपीत्याह-चर्षणीनामिति । शुचः शरदर्कजसंतापदुःखानि । यद्वा-मनोदुःखानि । भगवतः सर्वशक्त्या श्रयपरमशक्तिरूपाणां तासामनुल्लासोल्लासाभ्यां स्वत एव सर्वेषां तत्तद्भावात्, श्रीकृष्णजन्मदिनादिवत् । प्रियः प्रियाया इवेति । सरागत्वसाधुत्वानन्यत्वादिनान्योन्यं रुचेरविशेषो दर्शितः । अत एव तत्परिजनानां शोका श्रूणि मार्जयन्यथाऽसौ परमसुखकरेण करेण लिंपति तथेति व्यंजितम् । दीर्घदर्शन इत्यनेन परमौत्कंठ्यं सूचितम् । एवं सर्वमिदं श्रीभगवतो रिरंसाविर्भावनमेवोक्तम् ॥ २ ॥ कुमुदम् रात्रिविकाशिकमलम् । विकसनीयम् प्रकाशनीयम् । यद्वा-कौ भूमौ मुद् यतः सा प्रभा तद्वन्तम् । तस्य चंद्रस्य । गोभिः किरणैः । ''नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु'' इति केशवोक्तेः । रंजितम् मंडितम् । कलम् ''कलं शुक्रे त्रिष्वजीर्णे नाव्योक्तमधुरध्वनौ'' इति मेदिनी । गूढार्थस्तु-वामदृक् ईकारस्तद्युक्तं कलं क्लीमिति बीजम् । अं वासुदेवं मानयति विज्ञापयतीयं मनः सांतोऽयं द्वितीया या अलुगार्षः । तच्छ्रुत्वा वासुदेवो वादयतीति ज्ञायते । पुनः औ अकारौ हरति त्यजतीत्यहरम् । कलमित्यत्र अकारयोस्त्यागपूर्वकमीकारसंगत्या क्लीमिति संपद्यते । तथा च-कामबीजं जगौ । वंशपर्वद्वारा विरहकर्षितप्रेमरसार्द्रतद्धृदयक्षेत्रे काममुद्रावयामास वपनेनेवेति तत्त्वम् ॥ * ॥ ततश्च तद्दर्शनेनोद्भूतकंदर्पविकारः ''यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः'' इति स्मृत्या स्वकुलादिपुरुषस्य तस्य धर्मं स्वस्मिन्नपि पश्यन्निःशंकमेत्र परस्त्रीरानेतुं कमप्यमोघं यत्नमकरोदित्याह-दृष्ट्वेति । कुमुत् कुमुदम् 'कुमुदेऽपि कुमुत्प्रोक्तम्' इति विश्वः । तत् विकाशनीयत्वेन वर्तते यस्य तम् । कोः पृथिव्या अपि मुत् कर्तव्यत्वेन वर्तते यस्य तमात्मानञ्च दृष्ट्वेत्यपि व्याख्येयम् । विशेष्यविशेषणानुक्तेः । न खंडं मंडलं बिम्बं स्वरूपं यस्य तम् पूर्णमित्यर्थः । रमा लक्ष्मीः तद्भ्रातृत्वात्तदाननाभम् । यद्वा-''सर्वलक्ष्मीमयी सर्वकांतिः संमोहिनी परा'' इति स्मृतेः रमा श्रीराधा, रमन्ते रमयंतीति वा रमाः गोप्यश्च, तासामाननस्येवाभा यस्य तमिति ।

निशम्य गीतं तदनंगवर्धनं व्रजस्त्रियः कृष्णगृहीतमानसाः ॥ आजग्मुरन्योऽन्यमलक्षितोद्यमाः स यत्र कांतो जवलोलकुंडलाः ॥ ४ ॥

च तस्य कोमलैर्गोभी रश्मिभिरभिरंजितं दृष्ट्वा कलं मधुरं जगौ अगायत । कथम् । वामदृशां वामा मनोहरा दृशो यासां तासां मनोहरं यथा ॥ ३ ॥ असापत्न्यायान्यो

तद्दर्शनेन ताः स्मृतिपथमारूढा इति भावः । पक्षे–रमाणां तासामानने आभा अन्तः कंदर्पविकारद्योतिनी सम्यक् कांतिर्यतस्तमात्मानमुदयरागव्याप्तत्वान्नवकुंकुमपिंडवदरुणम् । पक्षे–नवकुंकुमचर्चयाऽरुणं तथा वनं च तस्य कोमलैर्गोभिः किरणैरंजितं म्रक्षितम् अभिरंजितमिति समासो वा । पक्षे–तैः प्रसिद्धैर्गोभिः स्वांगकांतिभिः स्वपाल्यमानगवीभिर्वाऽभिरंजितम् । अभिरंजितरुचमित्यर्थः । टजभाव आर्षः । इत्युद्दीपनालंबनाविभावौ दृष्ट्वा कलं मधुरमगायत । वेणुनेति शेषः । 'कामं गते कलपदामृतवेणुगीते' इत्यग्रिमोक्तेः । कथम्–वामा मनोहरा दृशो यासां तासां युवतीनामेव मनोहरं यथा स्यात्तथा गायन्तम् "स्त्रियः कामयन्ते" इति श्रुतेः । श्लेषेण ककारलकारम् । वामदृशामिति लुप्तविभक्तिकं पदं, वामदृक् चतुर्थः स्वरः तया सह पंचदशं कामबीजं जगाविति रहस्यम् । मनोहरम् मनस आकर्षकत्वात्स्वस्वरूपभूतमहामन्मथमंत्रमित्यर्थः ॥ अत्र **तोषिणी**–ततश्च तं दृष्ट्वा भावविशेषाविर्भावेण वनमागत्य तच्च तद्रश्मिभी रंजितं तत्र यमुनातीरभागमद्यापि 'रसौली' इति प्रसिद्धव्रजस्थापितग्रामचत्वरमागत्य च कर्षणवेणुना किमपि गीतमगायदिति । पूर्ववत्तस्यां रात्रौ प्रकटितवेणुशिक्षाविशेषत्वमप्याह–दृष्ट्वेति । तच्च रमाननाभम् रमयंतीति रमास्तासां रमाणां परमरमारूपाणामेव तासां तत्प्रेयसीनां मध्ये परमप्रेयसी या राधा तत्प्राहत्यर्थमेव वेणुशिक्षाविशेषं प्रकटयितुम् । नूनमेतावन्तं कालं तासामपि संगमे शिथिलोऽभूत्, तस्या यदाननं तदाभं दृष्ट्वा तत्तया वितर्क्य तेन तत्स्मृत्वा कलं जगावित्यन्वयः । वितर्काद्युपपादनाय साम्येन विशेषणानि–कुमुत् कुमुदं, तथा च विश्वः 'कुमुदेऽपि कुमुत्प्रोक्तम्' इति तद्वंतमिति वा । स्वप्रकाशनाय च कुमुदानि तदानीं विकासितानीति ध्वन्यर्थः । अत्र विशेषणैरेव विशेष्यश्चन्द्रो लभ्यते । "अयमुदयति मुद्राभंजनः पद्मिनीनाम्" इतिवत् । आननस्य पक्षे–कोः पृथिव्या मुत् कर्तव्यत्वेन विद्यते यस्य तादिति विशेष्यवशाल्लिंगपरिणामेन ज्ञेयम् । परमरमारूपत्वात्तस्याः अखंडमंडलं षोडशकलम् । पक्षे–यथावत्परिमाणसंवलितं मंडलमवयववृंदं यत्र । नवकुंकुमपिंडवदरुणम् । पक्षे–नवकुंकुमरागेणारुणम् । एवं कालस्य रतियोग्यतां प्रदर्श्य स्थानस्यापि दर्शयति–वनञ्चेति । तस्य प्रथमोदयेनाल्पमात्रप्रकाशवद्भिर्गोभिः रंजितम् । दीर्घत्वाभावश्छांदसः । एवं भावोद्दीपनमेव दर्शितम् । कलं मधुराव्यक्तं ध्वनिं जगौ, वेणुनेति ज्ञेयम् । 'का स्त्र्यंग ते कलपदामृतवेणुगीत–' इत्यादिवक्ष्यमाणत्वात् । तत्र मधुरत्वं मनोहरणाय, अस्फुटत्वं सर्वासामपि तासां स्वस्वनाममयत्वादिभ्रमाय । वामदृशां मनोहरमिति–तादृशभाववतीनामेव मनोहरं यथा स्यात्तथेति । आदिरसमात्रोद्दीपनं रागविशेषं जगावित्यर्थः । वक्ष्यते च–'अनंगवर्द्धनम्' इति । स च नूनं मध्यमादिनामा । यत उक्तं मोडररागभेदे–"मध्यमादिर्मग्रहान्तो मध्यमग्रामरागजः । अयं सायं तु गातव्यः श्रृंगारे ऋषवर्जितः ॥" इति । मेति मध्यमः । ऋषेति ऋषभधैवतौ स्वरौ । "ग्रहः स्वरस इत्युक्तो यो गीतादौ समर्पितः" इति । पूर्वं तु "इति वेणुरवं राजन्सर्वभूतमनोहरम्" इति सामान्यविषयकत्वात्स्वभावानुसारेण तासां मोहनमात्रं जातम्, अधुना तु रसविशेषोद्दीपनत्वादाकर्षणमिति । तत्रतत्र वंश्या अपि वैशिष्ट्यमस्ति । यथोक्तम्–"अर्द्धांगुलांतरोन्मानं तारादिविवराष्टकम् । ततोंगुलांतरे यत्र मुखरंध्रं तथांगुलम् ॥ शिरो वेदांगुलं पुच्छं त्र्यंगुलं सा तु वंशिका । नवरंध्रा स्मृता सप्तदशांगुलमिता बुधैः ॥ दशांगुलांतरा स्याच्चेत्सा तारमुखरंध्रयोः । महानंदेति विख्याता तथा संमोहिनीति च ॥ भवेत्सूर्यान्तरा सा चेत्तत आकर्षणी मता । आनंदिनी तदा वंशी भवेदिंद्रांतरा यदि ॥ गोपानां वल्लभा सेयं वंशुलीति च विश्रुता । क्रमान्मणिमयी हैमी वैणवीति त्रिधा च सा ॥" इति । अतो द्वादशांतरे तारमुखरंध्रा हैमीयं ज्ञेया । एवं गानवैशिष्ट्यमपि ज्ञेयम् । वामदृशामिति–श्लेषेण स्वस्मिन्कुटिलमेव पश्यंतीनां तासां मनोरूपमूलाकृष्ट्या दृष्ट्यादिसर्वेंद्रियवृन्दमेवाकृष्टमित्यर्थः । अत्र श्लेषेण कामबीजं जगाविति रहस्यम् । यतो वामदृक्सम्बन्धि यत् तत्सहितं कलमिति प्रथमाक्षरत्रयं व्यंजितम् । कीदृशम्–मनोहरम् । मनःशब्देन तदधिष्ठाता चंद्र उच्यते, स च तदाकारत्वेन लवकस्तं हरति आकर्षतीति । तत्संवलितमित्यर्थः । नादयुक्तत्वं तु वेणुनादस्वाभाव्यादेवेति भावः । तदुक्तम्–"कला तु माया लवका तु मूर्तिः कलक्वणद्वेणुनिनादरम्यः" इति ॥ ३ ॥ असापत्न्याय सापत्न्यनिवृत्तये । सहगमने

दुहंत्योऽभिययुः काश्चिदोहं हित्वा समुत्सुकाः ॥ पयोऽधिश्रित्य संयावमनुद्वास्यापरा ययुः ॥ ९ ॥

न्यमलक्षितो न ज्ञापित उद्यमो याभिस्ताः स कांतो यत्र तत्र गीतध्वनिमार्गेण जग्मुः । जवेन वेगेन लोलानि चंचलानि कुंडलानि यासां ताः ॥ ॥ ४ ॥ श्रीकृष्णसूचकशब्दश्रवणेन तत्प्रवणचित्तानां तत्क्षणमेव त्रैवर्गिककर्मनिवृत्तिं द्योतयंत्य इवार्धावसितं कर्म विहाय ययुस्तदाह । दुहंत्य इति । पयः स्था

त्वीर्ष्या स्यादित्यर्थः । सः कृष्णः । यत्र स्थाने । कुंडलानां रथत्वं पक्षत्वमंकुशत्वं च, किं वा भूमिः संकुचिता सैवाग्रे विवृता भविष्यतीति जवलोलकुंडला इत्यनेन ध्वनितम् ॥ * ॥ कलगीतसूत्रगुंफिताः पञ्चालिका इव ताः कृष्णांतिकमायाता इत्याह—तद्गीतं मनोहरमपि मनोजवर्धनम् । किं च, कृष्णो हि वेणुगीताख्यं महाचोरं व्रजे प्रेषितवांस्तेन च व्रजस्त्रीणां निष्कपाटेन कर्णद्वारेणांतःकरणकोशागारं प्रविश्य मनसा सह धैर्यलज्जा विवेकादीनि महाधनान्यपहृत्य झटित्यानीय कृष्णाय दत्तानीत्याह—कृष्णेन गृहीतानि मानसानि मनांसि च, मानसानि मनःसंबंधीनि धृतिस्मृतिविवेकलज्जाभीतिमित्यादीनि, यासां ताः आजग्मुः । महाचौरचक्र वर्तिनः कृष्णात् तानि स्वस्वधनानि प्रार्थयितुमिवेति भावः । तदेव मन्ये तं महाचौर धर्तुं व्यग्राणामन्योन्यं न लक्षित उद्यमो यासां ताः चौरस्य पश्चात्पश्चादवाजग्मुः । क—स कान्तो यत्र। जवेन वेगेन लोलानि कुंड लानि कुंडलोपलक्षितानि कंकणकिंकिण्यादीन्यपि यासां बहिष्करणगृहास्थितानि अल्पमूल्यत्वबुद्ध्या चौरेण तेन नापहृतानीति भावः ॥ अत्र **तोषिणी**—अन्ये तु तद्गीतं न श्रुतवन्तः किन्तु तेन ता एवाकृष्टा इति तस्य शक्तिविशेषं द्योतयन्नाह—निशम्येति । तत् पूर्वोक्तप्रकारं श्रीकृष्णवेणूद्गतम् । अनंगं श्रीभगवद्विषयं कामं प्राग्वर्तमानमेवाधुना वर्द्धयतीति तथा तत् । यद्यपि वामदृशां मनोहरमित्यनेनानंगवर्द्धनत्वमायातमेव तथापीयमुक्तिस्तद तिशयविवक्षया । अनंगशब्दप्रयोगश्च पूर्वं बीजांकुररूपेणैव स्थितः सम्प्रति पल्लवित इत्यर्थं बोधयति । एतेन तद्गानस्यामृतसेकत्वमप्युत्प्रेक्ष्यते सद्यस्तथाभावात् । व्रजस्य स्त्रियस्तद्विशेषाः प्रकरणबलात् । अत एव कृष्णेन परमाकर्षकेण पूर्वमेव गृहीतमाकृष्टं मानसं मनस्तदीयाशेषं वा यासां ताः, विशेषतश्चेदानीं गीतं श्रुत्वाऽऽजग्मुः । अन्योन्यालक्षितत्वे हेतुर्व्याख्यातः । यद्वा—स्वस्वयूथे मिथः सख्यवतीनामपि तासाम् । तत्र हेतुः—कृष्णेति । तदानीं कृष्णाकृष्टचित्तत्वेन विचारापगमादिति भावः । अत एव जवेति । आजग्मुरिति—श्रीबादरायणेः श्रीकृष्णांतिके सदैव स्फूर्तेः, किं वा—तासां तद्गमनवार्तया भावविशेषोदयेन तासामिव स्वस्यापि तत्र गमनस्फूर्त्या साक्षादिव श्रीकृष्णांतिकतायाः स्फुरणात् । अग्रे तु ययुरिति चलनार्थकमेव । स इति तादृशतत्स्मरणोत्कंठावचनम्, परममोहनरूपगुणवेणुभावैः प्राचीनैस्तदानींतनैश्च तासामस्माकञ्च मुहुरत्यर्थमभी प्सित इत्यर्थः । कान्तो रमणो यत्रेति तत्रैव परमसुखमयस्थान इत्यर्थः । तस्य वेणुवाद्यस्य परमाकर्षकविद्यारूपत्वादन्यत्र भ्रमणादिकमपि नासीदिति भावः ॥ ४ ॥ श्रीकृष्णसूचकशब्दो वेणुनादः । तस्मिञ्श्रीकृष्णे प्रवणं संलग्नं चित्तं येषां ते तथा ‘ प्रवणं नतलग्नयोः ’ इति धरणिधरः । तत्क्षणम् भगवत्संबन्धिशब्दश्रवणक्षण इत्यर्थः । हरिसंलग्नमनसामपि लोकसंग्रहार्थं त्रैवर्गिककर्म कार्यमिति सूचयितुमिवशब्दमाह—द्योतयंत्य इवेति । अर्द्धावसितम् अर्द्धसमाप्तम् “ अवसितमृद्धे ज्ञातेऽप्यवसानगते च वाच्यलिंगं स्यात् ” इति मेदिनी । तत् अर्द्धावसितम् । चुल्ल्याम् अग्निसंरोधयंत्रे उद्धाने ‘ चुल्ली चितायामुद्धाने ’ इति मेदिनी । अधिश्रित्य श्रपयितु मारोप्य । एतत्काथम् पयःक्वथनम् । प्रतीक्षमाणाः कालविलम्बमसहमानाः । अनवतार्य अनवरोप्य ॥ * ॥ तासां तत्पार्श्वगमनकाले परमोत्कंठया विलंबस्यासह्यत्वात् । ममताहंतास्पदकर्मापेक्षाभावं श्लोकत्रय्या वदन् कासांचित्स्वज्ञातिधर्मपरित्यागमाह—दुहन्त्यः गाः दोहयन्त्यः, तं दोहं दोहनकर्म हित्वाऽभिययुरभिसस्रुः । पयो दुग्धं पात्रस्थं चुल्ल्यामधिश्रित्याध्यारोह्य एतत्काथमप्रतीक्षमाणाः । काश्चित्संयावं गोधूमकणान्नं पक्वमप्यनुद्वास्या नवतार्य ॥ अत्र **तोषिणी**—एवं तत्प्राप्तिमुक्त्वापि परममोहनतद्गीतेनाऽऽवेगान्निजदेहदैहिकाद्युपेक्षयात्मकर्मलोकधर्मादिकं परित्यज्य चलितानां श्लोकत्रय्या विशेषप्रतिपत्तये पुनः प्रस्थानोद्यममेव वर्णयंस्तत्रादौ कासांचित्स्वजा तिकर्मपरित्यागमाह—दुहन्त्य इति । युग्मकमिदम् । दुहन्त्यो गाः, अंतर्भूतण्यर्थत्वाद्दोहयन्त्य इत्यर्थः । अभिययुः वेणुगीताभिमुखं ययुः । काश्चिदित्यादिकं बहुषु यूथेषु कासांचिदेकक्रियासंघटनात् ‘ वनिताशतयूथपः ’ इति वक्ष्यमाणत्वात् । दोहं दोहनं दुग्धं वा । तथाऽभियाने हेतुः—समुत्सुकाः कालविलंबसहनाद्यसमर्थाः । एष हेतुरग्रेपि सर्वत्रानुवर्त्यः । अपरा इत्यस्य पूर्वेण परेणाप्यन्वयः, एवमग्रेपि । अन्यत्तैः । यद्वा—पयश्चुल्ल्यामधि

**परिवेषयंत्यस्तद्धित्वा पाययंत्यः शिशून्पयः ॥ शुश्रूषंत्यः पतीन्काश्चिदश्नंत्योऽपास्य भोजनम्॥६॥लिंपंत्यः प्रमृजंत्योऽन्या अंजंत्यः काश्च लोचने॥ व्यत्यस्तवस्त्राभरणाः काश्चित्कृष्णांतिकं ययुः ॥७॥ ता वार्यमाणाः पतिभिः पितृभिर्भ्रातृबंधुभिः ॥ गोविंदापहृतात्मानो न न्यवर्तंत मोहिताः ॥ ८ ॥**

लीस्थं चुल्ल्यामधिश्रित्यैतत्क्राथमप्रतीक्षमाणाः काश्चिद्ययुः।संयावं गोधूमकणान्नं पक्वमनुद्वास्य अनुत्तार्य॥५॥६॥अन्याः प्रमृजंत्योंगोद्वर्तनादि कुर्वंत्यः।काश्च काश्चित्।कृष्णतुष्ट्यर्थं कर्म तदासक्तमनसामन्यथा कृतमपि फलत्येवेति द्योतयन्नाह।व्यत्यस्तेति।स्थानतः स्वरूपतश्चोर्ध्वाधोधारणेन विपर्ययं प्राप्तानि वस्त्राभरणानि यासां ताः॥७॥न च कृष्णा

श्रित्यानुद्वास्य पक्वमपि ततोऽनवतार्य संयावश्चाधिश्रित्यानुद्वास्येति ॥ ५ ॥ परिवेषयन्त्यः भुंजानानां पात्रेषु भोक्तव्यं विन्यस्यन्त्यः । सुतान् पयः क्षीरं पाययंत्यः । स्तनपानं कारयन्त्य इत्यर्थः । शुश्रूषंत्यः पादसंवाहनादिना । अश्नंत्यः भुंजानाः । अपास्य हित्वा ॥ * ॥ स्त्रीमात्रधर्मत्यागमाह—परिवेषयन्त्यः । तत् परिवेषणम् । पतीनुष्णोदकप्रदानादिना शुश्रूषन्त्यः ॥ अत्र **तोषिणी**—एवं कासांचित्सायंतनमुख्यकर्मत्रयत्यागमुक्त्वा तत्रैव कासांचिल्लोकधर्मत्यागं पादत्रय्या वदंस्तत्रादौ कासांचित्सामान्यबंधुभृत्यादिपरित्यागमाह—परीति पादेन । परिवेषयन्त्यः बंधुभृत्येभ्य इति शेषः । तत्परिवेषणं हित्वा ययुरिति पूर्वेणैवान्वयः । अतिस्नेहास्पदपरित्यागमपि कासांचिदाह—पाययन्त्य इति पादेन । हित्वेत्यनुवर्तते वक्ष्यमाणानुसारेण । भगिनीयातृपुत्रादीन् हित्वा अन्यथा रसाभासापत्तेः । एवं लोकपरित्यागमुक्त्वा धर्मपरित्यागमाह—शुश्रूषंत्यः शुश्रूषमाणाः । स्नानाद्यर्थोष्णोदकार्पणादिना सेवमानाः । कासांचिद्देहापेक्षात्यागमाह—अश्नन्त्य इति । अश्नन्त्यः भुंजानाः । अनेन तत्प्रेमाविष्टेषु दैहिकशुद्ध्यशुद्धिविचारो नास्तीति गम्यते । अत्रैवं संदर्भः—शिशून्भगिनीयातृपुत्रादीन् 'पयो गवां सुतान् स्तनम्' इत्युक्तेरालंबनवैरूप्यात्, 'सर्वाः शरत्काव्यकथारसाश्रयाः' इति वक्ष्यमाणरसाश्रयविरोधाच्चेत्याह—शुश्रूषंत्य इत्यंतर्गृहरीतिकाः काश्चिदेव ज्ञेयाः, अन्यासाम् 'यत्पत्यपत्यसुहृदाम्' इत्यादिना तदस्वीकारादिति ॥ ६ ॥ तदासक्तमनसां कृष्णासक्तचेतसाम् । स्थानतो विपर्ययः पादभूषणं बाह्वोर्बाहुभूषणं पादयोः । उपर्यंगावरकमधोंगेऽधोंगावरकमूर्ध्वांगे इति । स्वरूपतो विपर्ययः अधोवस्त्रस्योर्ध्वभागेन धृतिरूर्ध्ववस्त्रस्याधोभागेन । एवं भूषणेष्वपि ज्ञेयम् ॥ * ॥ कासांचिदावश्यकदैहिकवेषत्यागमाह—लिंपन्त्यः देहेऽनुलेपं चंदनादिना कुर्वंत्यः । प्रमृजंत्यः उद्वर्तनादिकं कुर्वत्यः । कासांचिदावेगवशाद्देहावयवविशेषस्यापि परिचयो नाभूदित्याह—व्यत्यस्त्येति । विभ्रमाख्यानुभावोयम् । तदुक्तम्—"वल्लभप्राप्तिवेलायां मदनावेशसंभ्रमात् । विभ्रमो हारमालादिभूषास्थानविपर्ययः ॥" इति । अत्र **तोषिणी**—कासांचिच्चाहरहस्तत्प्रत्याशया 'विरहेऽप्यंगेष्वाभरणं करोति वल्लभ—' इति गीतगोविन्दरीत्या श्रीभगवत्प्रेमविलषितस्यापि निजांगवेषस्य परमोत्कंठया परित्यागमाह—लिंपन्त्य इत्यादिना । लिंपन्त्योंगरागं कुर्वत्यः । लेपनादिकमप्यपास्येति ज्ञेयम् । अन्या इत्यस्य लिंपन्त्य इत्यादिपदद्वयेनान्वयः । तत्रैव हेतुं दर्शयन् किं वक्तव्यं दैहिकदेहाद्यपेक्षापरित्यक्तेति कासांचिद्देहावयवविशेषानुसंधानं जातमिति व्यनक्ति—व्यत्यस्येति । पूर्वोक्तसर्वत्यागानुभावकस्यौत्सुक्यस्य विभ्रमाख्योयमनुभावः । तल्लक्षणं पूर्वमुक्तमेव । अनेन तद्विधानां प्रेम यथा भगवतोऽपेक्षितं न तथा वेशादीति गम्यते । किं तु, पश्चात्तेनैव परिहितस्य स्वयं तथात्वपरिधापितामिति ज्ञेयम् । एवं दोहनादीनामन्येषामवश्यापेक्ष्यत्वेन यथोत्तरं श्रैष्ठ्यमूह्यम् । तदेवं सर्वा अपि कृष्णस्यांतिकमभिययुः प्रस्थितवत्यः ॥ ७ ॥ हरिपरायणानां सर्वविघ्नहानिरित्याह—न चेति । प्रभवन्ति समर्था भवंति । पतिभिः पत्नीशुभाशुभभागित्वाद्वार्यमाणा धर्मोपदेशेन हस्तादिना वा, स्नेहात्पितृभिः, दुष्कीर्तिभयात्स्नेहाच्च भ्रातृभिः, कुलदोषशंकया बन्धुभिरिति । "रक्षेत्कन्यां पिता प्रौढां पतिः पुत्रस्तु वार्द्धके । अभावे ज्ञातयस्त्वेवम्" इति स्मृतेश्चत्वारो रक्षकाः । प्रायः पुत्रानुत्पत्तेस्तेऽत्र नोक्ता इति भावः । गोविन्देनापहृत आत्मा जीवाख्यो यासामिति । निवृत्तौ जीवनेन विच्छेदः स्यादिति जीवनार्थं गता इति भावः । मोहिता मोहावेशवशादपि निवृत्तिज्ञानशून्या बभूवुरिति भावः ॥ * ॥ ननु ताः प्रेमप्राबल्यात्सर्वापेक्षां तत्यजुरित्युचितमेव तासामपेक्षां तत्पत्यादयः कथं तत्यजुस्तत्राह—ताः कुलवध्वः पतिभिः कुलकन्याश्च ताः पित्रादिभिर्वार्यमाणा न न्यवर्तंत । तत्र हेतुः—गोविन्देति । भयलज्जादीनां का वार्ता तासामात्मनामपि गोविन्देनापहृतत्वात् । मोहिताः मूर्छिता इति, सूत्रसंचारितपञ्चालिका इवेत्यर्थः । पत्यादिभिर्गतप्राणानामपि भार्यादिदेहानामप्रतिष्ठाभयादेवान्यत्र सञ्चारो न सह्यते

**अंतर्गृहगताः काश्चिद्गोप्योऽलब्धविनिर्गमाः ॥ कृष्णं तद्भावनायुक्ता दध्युर्मीलितलोचनाः ॥ ९ ॥**

**कृष्टमनसां विघ्नाः प्रभवंतीत्याह । ता वार्यमाणा इति ॥ ८ ॥ न लब्धो विनिर्गमो याभिस्ताः प्रागपि तद्भावनायुक्तास्तदा नितरां दध्युरि**

इति चेत्—सत्यम् । विप्रतिपात्तिरियं योगमाययैव समाहिता ज्ञेया । तच्च समाधानं तयैव कल्पितानां तत्क्षण एव तादृशगोपीनां स्वस्वभार्यादिकत्वेन प्रत्यायितानां स्वस्वगृहान्प्रति पत्यादिभिः परावर्तनमेव ॥ अत्र **तोषिणी**—अपि ताः पत्यादिभिः क नु रात्रौ बहिर्गम्यत इत्यादिनिर्बन्धेन मुहुर्वार्यमाणा अपि न न्यवर्तंत, किन्तु ययुरेवेत्यर्थः । कुतः—मोहिताः हतविवेकाः । तत्कुतः—गोविन्देनापहृत आत्मा चित्तं यासां ताः । अयं पत्यादीनामपि शैथिल्ये हेतुर्ज्ञेयः, तद्भक्तिमात्रस्य सर्वविघ्नापहारिप्रभावत्वात् । तत्तदन्तिकवार्तीभिः पतिभिः काश्चित्पित्रादिभिश्च काश्चन, तत्र च पित्रादिभिरविवाहिताः स्ववासिन्यश्चेति "रक्षेत्कन्यां पिता प्रौढां पतिः पुत्रस्तु वार्द्धके । अभावे ज्ञातयस्त्वेवं न स्वातंत्र्यं कचित्स्त्रियः ॥" इति स्मृतेः ॥ ८ ॥ अंतर्गृहं गृहमध्यं तत्र गतास्तत्र निरुद्धाः काश्चिन्महालक्ष्म्यंशभूताः । विनिर्गमो बहिर्गमनम् । यद्वा—न लब्धोऽन्यगोपीवत् वीनां पक्षिणामिवातिशीघ्रं निःसरणं याभिः । यद्वा—वेः पक्षिणोऽपि निर्गमो यस्माच्छिद्रात्तदपि न लब्धं याभिस्तदाधिकं कृत्वा तस्करावेशवन्निस्सरणार्थमिति भावः । तस्य कृष्णस्य भावना:भक्तिसंस्कारस्तया युक्ताः । प्राक् वेणुनादश्रुतेः पूर्वमपि । तदा वेणुध्वनिश्रवणक्षणे । इत्यर्थ इति । तच्छ्रवणस्य तदाविर्भावबोधकत्वेन ध्यानहेतुतेत्यर्थः ॥ * ॥ अत्रो**ज्ज्वलनीलमण्युक्त**रीत्या विविच्यते—गोप्यस्तावद्द्विविधाः—नित्यसिद्धाः साधनसिद्धाश्च । साधनसिद्धाश्च द्विविधाः—यौथिक्योऽयौथिक्यश्च । यौथिक्यश्च द्विविधाः—श्रुतियूथभूतत्वाच्छ्रुतिचर्याः, ऋषियूथभूतत्वादृषिचर्यश्चि । ततश्चासां चतुर्विधत्वमुक्तं पाद्मे—"गोप्यस्तु श्रुतयो ज्ञेया ऋषिजा गोपकन्यकाः । देवकन्याश्च राजेंद्र न मानुष्यः कथंचन ॥" इति । गोपीत्वेनैव मानुषीत्वे लब्धेऽपि न मानुष्य इति निषेधस्तासां प्राकृतमानुषीत्वाभावं ज्ञापयति । अत्र गोपकन्यका एव नित्यसिद्धास्तासां साधनाऽश्रवणात् । गोपीत्वे सत्यपि कात्यायन्यर्चनस्य तु साधनत्वं नरलीलत्वमेव ज्ञापयति, गोपीत्वस्य सिद्धत्वादेवेति तत्प्रसंगे एव प्रपञ्चितम् । तासां नित्यसिध्यत्वे 'आनन्दचिन्मयरसप्रतिभाविताभिः' इति ब्रह्मसंहितोक्त्या तासां ह्लादिनीशक्तित्वप्रतिपादनात्, 'ह्लादिनी या महाशक्तिः' इति बृहद्गौतमीयाच्च, ताभिस्सह कृष्णस्य रमणस्यानादित्वाच्च, दशाष्टादशाक्षरादिमंत्रेषु तासां निर्देशात्, तन्मंत्रोपासनानां तद्विधायकश्रुतीनां चानाद्यन्तकालभावितत्वाच्च । 'संस्तुवन्त्वमरस्त्रियः' इति प्रमाणावगतानां देवकन्यानां नित्यसिद्धगोपिकांशभूतत्वं व्याख्यातमुज्ज्वलनीलमणौ । श्रुतिचरीणां साधनसिद्धत्वम् "कंदर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः । कामिनीभावमासाद्य स्मरक्षुब्धान्यसंशयः ॥ यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिकाः । भजान्ति रमणं मत्वा चिकीर्षाऽजनि नस्तथा ॥" इत्यादिबृहद्वामनवचनेभ्योऽवगतम् । ऋषिचरीणाञ्च "गोपालोपासकाः पूर्वमप्राप्ताभीष्टसिद्धयः" इत्युज्ज्वलनीलमण्युक्तानां तथाभूतत्वम् । "पुरा महर्षयः सर्वे दंडकारण्यवासिनः । दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन्सुविग्रहम् ॥ ते सर्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले । हरिं संप्राप्य कामेन ततो मुक्ता भवार्णवात् ॥" इति पाद्मोत्तरखंडात् । अत्र रामं दृष्ट्वा हरिं भोक्तुमैच्छन्निति रामसौंदर्यदर्शनेन स्वोपास्यस्य हरेर्गोपालस्य स्मरणात्तमेव भोक्तुमैच्छन्नित्यर्थः । लज्जया तु साक्षात्तं न वृतवंतः । ततश्च कल्पवृक्षस्येवावदतोऽपि रामस्य प्रसादात्तेषामभीष्टसिद्धिर्जातेत्याह—ते सर्वे इति । हरिं कामेन संप्राप्य इत्यनुसंहितं फलम्, ततः कामादेव हेतोर्भवार्णवात्संसारान्मुक्ता इत्यनुसंहितं फलम् । अत्र 'मातरः पितरः पुत्राः' इति 'यत्पत्यपत्यसुहृदामनुवृत्तिरंग' इति 'पतिसुतान्वयभ्रातृबांधवान्' इत्याद्यग्रिमग्रंथदृष्टेरपत्यवत्यो गोप्य एवांतर्गृहनिरुद्धा बभूवुरिति श्रीकविकर्णपूरगोस्वामिकृतदशमटीकायां दृष्टमतस्तदनुसारेण सार्वत्रिकं मूलार्थमव्याकोप्यैवं व्याख्यायते । गोपालोपासका ऋषयस्तु श्रीराममूर्तिमाधुरीदर्शनाद्रागमयभक्तेर्निष्ठारुच्यासक्तिरत्यंकुरभूमिका आरूढाः सम्यगपरिपक्वकषाया अपि श्रीयोगमाययादेव्या गोकुलमानीय गोपीगर्भे जनिताः कन्यका बभूवुः । तासामेव मध्ये काश्चिन्नित्यसिद्धगोपीसंगभूम्ना वयःसंधिदशामारभ्यैव लब्धपूर्वानुरागाः स्फूर्तिप्राप्तकृष्णांगसंगाः दग्धसम्यक्कषायाः प्रेमस्नेहादिभूमिका आरूढा गोपैर्व्यूढा अपि योगमाययैव तदंगस्पर्शदोषाद्रहिताश्चिन्मयदेहीभूताः कृष्णोपभुक्तास्तस्यां रात्रौ वेणुवादनसमये पतिभिर्वार्यमाणा अपि योगमायासाहाय्यप्रसादान्नित्यसिद्धगोपीभिः सहिता एव प्रेष्ठमभिसस्रुः । काश्चित्तु नित्यसिद्धादिगोपीसंगभाग्याभावादलब्धप्रेमत्वाददग्धकषाया गोपैर्व्यूढा गोपोपभुक्ता अपत्यवत्यो बभूवुः । ताः खलु तदनंतरमेव नित्यसिद्धादिगोपीसंगभूम्ना कृष्णांगसंगस्पृहोद्रेकात्पूर्वरागवत्यस्तासां कृपापात्रीभवं

त्योऽपि कृष्णांगसंगायोग्यदेहत्वेन योगमायासहाय्याकरणात्पतिभिर्वारिताः कृष्णमभिसर्तुमक्षमा महाविपद्ग्रस्ताः पतिभ्रातृपुत्रादीन्स्वप्राणवैरित्वेन पश्यन्त्यो मरणदशायामुपस्थितायां सत्यां यथान्या मात्रादिबंधुजनं स्मरन्ति तथैव स्वप्राणैकबन्धुं कृष्णं सस्मरुरित्याह—अन्तारिति । न लब्धो विनिर्गमो गतिर्याभिस्ता इति पतीनां द्वार्येव सतर्जनं सयष्टिकमुपविष्टत्वादिति भावः । सदैव तद्भावनया युक्ता अपि तदानीं दध्युः—हाहा प्राणैकबन्धो वृन्दावनकलानिधे जन्मान्तरेऽपि त्वत्प्रेयसीभूयासमस्मिन्नन्तकाले त्वन्मुखचन्द्रं नाऽपश्यं, भवतु मनसापि पश्यामीति प्रत्येकं स्वगतमनुलपन्त्यो मुद्रितलोचनाः सत्यो नितरां दध्युः ॥ अत्र **तोषिणी**—यदि च तास्तादृश विघ्नेन वारिता अभविष्यंस्तर्हि सद्य एव दशमीं[1] दशामिव दशामगमिष्यन्निति तासां सर्वासामेव भावविशेषं दृष्टान्तेन प्रदर्शयंस्तासां प्रस्थितवतीनामेव मध्ये कासांचिदवस्थाविशेषमाह—अंतारिति त्रिभिः । अयमर्थः—श्रीकृष्णस्य व्रजप्रेयस्यस्तावद्विविधाः—नित्यसिद्धाः साधनासिद्धाश्च । तत्रैकासां नित्यसिद्धात्वमष्टादशाक्षरादावाभिर्विशिष्टत्वेनैव तदाराधनविधानाद्व्यक्तम्, तच्छ्रुतीनां तदाराधनानाद्यानांद्यनंतभावितत्वात् । अतो ब्रह्मसंहितायाम्—'चिन्तामणिप्रकरसद्मसुकल्पवृक्षलक्षावृतेषु' इति, 'आनन्दचिन्मयरसप्रतिभाविताभिः' इति, "श्रियः कान्ताः कान्तः परमपुरुषः" इत्येता एव तदीयलक्ष्मीत्वेनोक्ताः । तत्र च श्रीराधिकाया वैशिष्ट्यं बृहद्गौतमीये—"देवी कृष्णमयी प्रोक्ता राधिका परदेवता । सर्वलक्ष्मीमयी सर्वकांतिः संमोहिनी परा ॥" इति । अत एव ऋक्परिशिष्टे च परस्परमव्यभिचारित्वं प्रोक्तम्—"राधया माधवो देवो माधवेनैव राधिका । विभ्राजन्ते जनेषु—" इति । अतो मात्स्यादौ—"रुक्मिणी द्वारवत्यास्तु राधा वृन्दावने वने" इति शक्तित्वसाधारण्येनानयोर्गणनेऽपि वैशिष्ट्यं ज्ञेयम् । ब्रह्माण्डे तु श्रीकृष्णस्वरूपत्वं कृष्णस्याप्याराध्यत्वं चोक्तं ब्रह्मणा—"राधा कृष्णात्मिका नित्यं कृष्णो राधात्मको ध्रुवम् । वृंदावनेश्वरी राधा राधैवाराध्यते मया ॥" इति । अथावरासां साधनसिद्धत्वं यथा पाद्मोत्तरखंडे—"पुरा महर्षयः सर्वे दंडकारण्यवासिनः । दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन्सुविग्रहम् ॥ ते सर्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले । हरिं संप्राप्य कामेन ततो मुक्ता भवार्णवात् ॥" इति । गोकुल इत्यस्य हरिं संप्राप्येत्यनेनाप्यन्वयात् 'ये यथा मां प्रपद्यन्ते' इति न्यायाच्च । महर्षयः पूर्वं तादृशभावेन श्रीकृष्णोपासका इत्यर्थः । अतो रामं दृष्ट्वेति सारूप्येण जातस्वोपासनसंस्कारा हरिं स्वोपास्यं श्रीकृष्णमेवोपभोक्तुमैच्छन्, लज्जया तु साक्षान्न वृतवन्त इति । ततश्च कल्पवृक्षस्येवावदतोपि श्रीरामस्य प्रसादात्तेषामिष्टसिद्धिर्जातेत्याह—ते सर्वे इति । गोकुले गर्भतः स्त्रीत्वमापन्ना गोकुल एव समुद्भूता गोकुल एव च हरिं श्रीकृष्णं कामेन स्ववासनानुसारेण संप्राप्य तस्मिन्नंतर्गृह एव स्वयमाविर्भूतं लब्ध्वा ततस्तदनंतरमेव भवार्णवान्मुक्ता इति । न च वक्तव्यं गोकुलजातानां प्रापञ्चिकदेहादित्वं न संभवतीति, अवतारलीलायाः प्रापञ्चिकमिश्रत्वात् । श्रीदेवकीदेव्यामपि षड्गर्भसंज्ञकानां जन्म श्रूयत इति, 'कदाचिच्छ्रुतयो गोप्यो जाताः' इति बृहद्वामनपुराणप्रसिद्धिः, आदिपुराणीयवृन्दावनमाहात्म्येप्येतद्वृत्तं स्फुटमस्ति । तत्रत्यवाक्यजातमिह विस्तरभिया नोक्तम् । अत एव यथा व्याख्यास्यते "स्त्रिय उरगेंद्रभोगभुजदंडविषक्तधियो वयमपि ते समाः समदृशोंघ्रिसरोजसुधाः" इति । 'गायत्री तासु जाता' इति पाद्मे सृष्टिखण्डे । यथा ब्रह्मणा गोपकन्यारूपाया गायत्र्या उद्वाहे गोपेषु श्रीविष्णुवरः "मया जाता ततः कन्या दत्ता चैषा विरिञ्चये । युष्माकं च कुले चाहं देवकार्यार्थसिद्धये ॥ अवतारं करिष्यामि मत्कान्ता तु भविष्यति ।" इति । अतः 'तत्प्रियार्थं संभवन्तु सुरस्त्रियः' इत्यत्रापि तथा व्याख्यातम् । अत एव तासां चतुर्विधत्वमुक्तं पाद्मे—"गोप्यस्तु श्रुतयो ज्ञेया ऋषिजा गोपकन्यकाः । देवकन्याश्च राजेन्द्र न मानुष्यः कथंचन ॥" इति । अत्र गोपकन्यका एव नित्याः 'न मानुष्यः कथञ्चन' इति प्राकृतमनुष्यतानिषेधात् । तासु च पाद्मोत्तरखंडे निर्दिष्टानामन्तर्गृहगता इत्युक्तानामप्येकत्वमुक्तत्वसादृश्येन लब्धानां लभ्यते । एता एव 'शुश्रूषन्त्यः पतीन्काश्चित्' इति प्रोक्ता ज्ञेयाः तासां दोहनादिपृथक्कर्मानुक्तेरंतर्गृहगतत्वस्य पतिशुश्रूषायां तात्पर्याच्च । तथा च सति याः काश्चन गोकुले समुद्भूताः साधनवशात्सिद्धपूर्णभावाः न तु सिद्धदेहाः नितरामन्या इव नित्यसिद्धाः पतिशुश्रूषणार्थमंतर्गृहगता गृहमध्यस्थिता एव पत्यादिभिः साग्रहद्वारादिनिरोधान्न लब्धो विशेषेण केनापि प्रकारेण निर्गमो याभिस्ताः । अत्र तासां साक्षाच्छ्रीगोविन्दसंगमे तादृशदेहस्थितेरेव विघ्नत्वात्पूर्ववत्तद्भक्तेरातिशैथिल्याविधानादावप्रवृत्तेरिति ज्ञेयम् । अलब्धनिर्गमत्वादेव तद्भावनायुक्तास्तास्मिन्श्रीकृष्णे समुत्कंठितचित्ताः सत्यः कृष्णं निजचित्ताकर्षकं तमेव दध्युर्ध्यातवत्यः ।

१ दशमीं मरणरूपाम् "दृष्टिप्रेम पुरा भ्रमोऽथ मदनः प्रोक्तोऽथ संकल्पको निद्रोच्छित्तिरतः शरीरतनुता लज्जाविनाशस्ततः । वैराग्यं विषयेष्वथो निगदिते उन्मादमूर्च्छे ततो मृत्युः स्यादिति पण्डितैः स्मरदशा उक्ता दशैताः क्रमात् ॥" इत्युक्तेः ।

दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः ॥ ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमंगलाः ॥ १० ॥

त्यर्थः ॥ ९ ॥ किं च तदानीमेव तं परमात्मानं श्रीकृष्णं ध्यानतः प्राप्ताः सत्यो गुणमयं देहं जहुरित्याह श्लोकद्वयेन । दुःसहेति । ननु कथं जहुः परमात्मेति ज्ञानाभावा

तत्रानुभावमाह—दुःखविशेषेण ध्यानविशेषेण च मुद्रितनेत्राः । यद्वा—मीलितमंतर्हितं लोचनमन्याशेषज्ञानं यासां ताः ॥ ९ ॥ न केवलं दध्युरेव किन्तु तमेवापुरित्याह—किं चेति । तदानीमेव ध्यानसमकालमेव । गुणमयम् त्रिगुणकार्यम् । ननु देहत्यागोऽस्तु यथाकथञ्चिद्भेदेन रूपेण तत्संगस्त्वज्ञानामतिदुःशक इत्याशंकते—नन्विति । वस्तुनो वह्न्यादेः शक्तिः दाहिकादिरूपा । बुद्धिम् अयमग्निर्दाहक इत्येवंरूपज्ञानवंतमेव दहति, ज्ञानं नापेक्षते नेच्छति । अन्यथा मत्वापि जलमिदमित्येवं ज्ञात्वापि यथा जलबुद्ध्या पीतामृतो जरामृत्युवर्जितो भवति तद्वदिति ज्ञेयम् । इति भाव इति तात्पर्यम् । अन्यथा पीताऽमृतोऽपि मृतो भवेदिति । "अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्" इत्यादिस्मृतिमनुसृत्य पुनराशंकते—नन्विति । तथापि ज्ञाने सत्यपि वस्तुशक्त्या तत्प्राप्तिरस्तु देहं कथं जहुरिति ज्ञेयम् । तत्र प्रश्ने । सद्यः तत्क्षणमेव । किञ्च, बंधनध्वंसोऽपि प्रारब्धपुण्यपापप्रणाशेनैव दृष्टस्सचात्र कथमिति शंकते—नन्विति । अत्रोत्तरम्—दुःसहेति । दुःसहः सोढुमशक्यो यः प्रेष्ठस्य परमात्मनः श्रीकृष्णस्य विरहः सांसारिको वियोगस्तेन तीव्रोऽत्युत्कटस्तापो ज्वरानुभवस्तेन धुतानि निरस्तान्यशुभानि पापानि । तदप्राप्तिरूपं यत्परमदुःखं तद्भोगेनानुभवेन ।इत्यर्थ इति—दुःखभोगेनैव पापं क्षीयत इति तात्पर्यम् । पुण्यक्षयः कथमित्याकांक्षायामाह—तथेति । यतः परमात्मप्राप्तिरेव गुणमयदेहत्यागे हेतुरतो हेतोः । यदि कश्चिदनारब्धफलानां कुतो नाश इत्याशंकेत तं प्रत्याह—जारेति । जारः उपपतिः पत्युरप्यधिकप्रियो भवति, तं कृष्णं परमात्मानं नारायणमेव संगताः सम्यग्ज्ञातवत्यः । गत्यर्थानां ज्ञानार्थताप्रसिद्धेः । अनेन बिंबभूतहरिज्ञानेनारब्धकर्मणामपि नाश इति सूचितम् । तदधिगमः "उत्तरपूर्वाघयोरसंश्लेषविनाशौ" इति सूत्रात् । "तस्य सुहृदः साधुकृत्यां द्विषंतः पापकृत्याम्" इति श्रुतेः । तस्य ज्ञानिन इत्यर्थः । किं चाहिकंचुकवत्त्यक्तदेहानामप्यंतर्धापनं योगमायया कृतं यावदब्दमघासुरशरीरांतर्धापनवत्, तथा रोधकानां विस्मृतिश्च जनिता, अन्यथा रोधनादिकृतो लोकापवादो दुर्वारः स्यादिति ॥ * ॥ अत्र गोपीनां प्राप्यमतिरहस्यं वस्तु बहिरंगलोकेभ्यो गोपयंस्तान्प्रति बाह्यमर्थमंतरंगान्भक्तिसिद्धान्तविज्ञान्प्रति स्वाभीप्सितमाभ्यंतरमेवार्थं ज्ञापयंस्तंत्रेणाह—दुःसहेति । तत्र बहिर्मुखान्प्रति ताभ्यः कृष्णो मोक्षं ददावित्याह—दुःसहो यः प्रेष्ठविरहस्तेन तीव्रतापस्तेन धूतानि गतान्यशुभानि यासां ताः, ध्यानेन प्राप्तस्याच्युतस्याश्लेषेण या निर्वृतिरानंदस्तेन क्षीणं मंगलं पुण्यं यासां ताः । अतः प्रक्षीणप्रारब्धबंधना जारबुद्ध्याऽपि तमेव परमात्मानं प्राप्ता देहं जहुरिति । अन्तर्मुखान्प्रति तु तदानीं स्वप्रेष्ठविरहसंयोगोत्थानि दुःखसुखान्यपरिमितानि प्राप्य लब्धमनोरथा एव ताः क्रमेण बभूवुरित्याह—दुःसहेन प्रेष्ठविरहेण यस्तीव्रतापस्तेन धुतानि कंपितीकृतानि अशुभानि याभिस्ताः । यासां प्रेष्ठविरहतापस्य तीव्रतां वीक्ष्य कोटिब्रह्मांडस्थवाडवानलमहाकालकूटादिरूपाणि परःसहस्राण्यपि अशुभानि स्वतीव्रताहंकारं परित्यज्य स्वपराजयबुद्ध्या चकंपिरे इत्यर्थः । ध्यानेन प्राप्तः स्फूर्त्याऽऽगतो योऽच्युतस्तेन तदैवोद्भूतस्य प्रेमपूर्णचिन्मयस्य तादृशस्वभावाभिमानादिमतो देहस्य य आश्लेषस्तेनाश्लेषेण या निर्वृतिस्तया क्षीणानि कृशीभूतानि मंगलानि प्राकृताऽप्राकृतानि यासां ताः । यासां स्फूर्तिप्राप्तं प्रेष्ठाश्लेषोत्थसुखं वीक्ष्य कोटिब्रह्मांडगतविषयसुखनिर्विषयब्रह्मानुभवसुखसहस्राणि मंगलशब्दवाच्यानि क्षीणानि । यदपेक्षया निकृष्टान्येव बभूवुरित्यर्थः । भगवद्विरहसंयोगोत्थदुःखसुखाभ्यां प्रारब्धपापपुण्यानि नष्टानि तेषां स्वफलभोगैकनाश्यत्वादिति व्याख्यातुं वैष्णवानां मते न युज्यते, भगवद्विरहसंयोगयोः पापपुण्यफलत्वाभावात् । तादृशानां प्रारब्धनाशस्तु भजनदशायामेवानर्थनिवृत्तिभूमिकारूढानामित्याहुः । ततश्च तमेव परमात्मानं परमप्रेमास्पदं जारबुद्ध्यातिनिकृष्टयापि संगताः अत्युत्कृष्टपतिबुद्धिमतीभ्यो रुक्मिण्यादिभ्योऽपि सकाशात्सम्यक् प्राप्ताः, पतिबुद्धेः सकाशादपि जारबुद्धौ 'या दुस्त्यजं स्वजनमार्यपथञ्च हित्वा' इत्युद्धववाक्यनिर्धारितान्निरंकुशप्रेमोत्कर्षात् । तथाऽस्मिन्नवतारे निकृष्टवस्तून्यप्युत्कृष्टीकुर्वती लीला दृश्यते । यथा महाराजराजेश्वरलीलातः सकाशादपि "विजयरथकुटुंब आत्ततोत्रे धृतहयरश्मिनि तच्छ्रियेक्षणीये" इति भीष्मोक्तेः पार्थसारथित्वलीलाया उत्कर्षः, तथोत्कृष्टाच्छांतरसादपि निकृष्टस्य शृंगाररसस्य तत्रापि दास्यभावाद्यौपपत्यभावस्य तथोत्कृष्टाद्रत्नालंकारादपि गुंजागैरिकशिखिपुच्छादेरुत्कर्षो दृष्ट एवेति । संगताः काश्चिद्योगमायाकृतानुकूल्यान्निरोधमुक्ता अपि तस्यामेव रात्रौ रासविहारिणं तं प्राप्ताः, काश्चिदन्यस्यामपि । ननु पुरुषं

दित्याशंक्याह । जारबुद्ध्याऽपीति । न हि वस्तुशक्तिर्बुद्धिमपेक्षते । अन्यथा मत्वापि पीतामृतवदिति भावः । ननु तदपि प्रारब्धकर्मबंधने सति कथं जहुस्तत्राह । सद्यः प्रक्षीण तरोपभुक्तदेहाभिस्ताभिः सह भगवद्विलासो न युज्यत इति तत्राह—जहुरिति । देहमिति जात्यपेक्षयैकत्वम् । तस्य देहस्य योगमाययैवालक्षितमंतर्द्धापनमित्येके । अन्ये त्वेवमाहुः—अत्र हेयो देहो गुणमय एव भवत्यतो गुणमयमिति । विशेषणस्याधिक्यात्तासां देहा वेणुवादनात्पूर्वं द्विधाभूता गुणमयाश्चिन्मयाश्चासन्निति बुध्यते । तत्र ये गुणमयाः स्वपत्युपभुक्ता देहास्तानेव जहुः । अयमत्र विवेकः—गुरूपदिष्टभक्त्यारंभदशात एव भक्तानां श्रवणकीर्तनस्मरणदंडवत्प्रणतिपरिचर्यादिमय्यां शुद्धभक्तौ श्रोत्रादिषु प्रविष्टायां सत्याम् 'निर्गुणो मदपाश्रयः' इति भगवदुक्तेर्भक्तस्वश्रोत्रादिभिर्भगवद्गुणादिकं विषयीकुर्वन्निर्गुणो भवति, व्यावहारिकशब्दादिकमपि विषयीकुर्वन्गुणमयोऽपि भवतीति भक्तदेहस्यांशेन निर्गुणत्वं गुणमयत्वं च स्यात् । ततश्च 'भक्तिः परेशानुभवो विरक्तिः' इति, 'तुष्टिः पुष्टिः क्षुदपायोऽनुघासम्' इति न्यायेन भक्तिवृद्धितारतम्येन निर्गुणदेहांशानामाधिक्यतारतम्यं स्यात्, तेन च गुणमयदेहांशानां क्षीणत्वतारतम्यं स्यात् । संपूर्णप्रेमण्युत्पन्ने तु गुणमयदेहांशेषु नष्टेषु सम्यङ् निर्गुण एव देहः स्यात्, तदपि स्थूलदेहपातस्तु बहिर्मुखमतोत्थताभावार्थं भक्तियोगस्य रहस्यत्वरक्षार्थश्च भगवतैव मायया प्रदर्श्यते यथा मौसललीलायां यादवानाम् । क्वचित्तु भक्तियोगोत्कर्षज्ञापनार्थं न प्रदर्श्यते च यथा ध्रुवादीनाम् । अत्र प्रमाणमेकादशे पञ्चविंशतितमाध्याये श्रद्धादयो निर्गुणा गुणमयाश्चेति प्रदर्शिताम्—"येनेमे निर्जिताः सौम्य गुणा जीवेन चित्तजाः । भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते ॥" इति अनेन भक्त्यैव गुणमयवस्तूनां निर्जयो नाश एवोक्तो भगवता । अत एव धुतानि विधूतानि रंधितानि अशुभानि गुणमयशरीराणि यासां ता इति । आश्लेषनिर्वृत्याऽक्षीणानि विवर्द्धितानि मंगलानि चिन्मयशरीराणि यासां ता इत्यप्यर्थश्चिकीर्षितो भवति । अतः प्रक्षीणबंधनाः अविद्याबंधात्पत्यादिवारणाच्च योगमायानुकूल्यं प्राप्य विच्युता इत्यर्थः । मरणवशाद्देहपात एव तासामिति तु न व्याख्येयम् "या मया क्रीडता रात्र्यां वनेऽस्मिन्व्रज आस्थिताः । अलब्धरासाः कल्याण्यो मापुर्मद्वीर्यचिंतया ॥" इति भगवद्वाक्येन कल्याण्य इति पदोपादानात् । पतिकृतवारणान्मद्विरहसन्तापाच्च स्वदेहांस्तदा जिहासूनामपि तासां परममंगलरासोत्सवारंभे मरणस्यामंगलस्य सदनभिमतत्वात्ताः कल्याणवत्य एवाभवन्निति भगवदभिप्रायात्, तथा "ता ऊचुरुद्धवं प्रीतास्तत्संदेशागतस्मृतीः" इति शुकवाक्याच्च । ता ऊचुः याः पूर्वमलब्धरासा अन्तर्गृहनिरुद्धा आसन्निति । तेन मरणं विनैव ता गुणमयान्देहाञ्जहुरिति । विरहतीव्रतापरंधितास्तासां गुणमयदेहा गुणमयत्वं परित्यज्य चिन्मयत्वं ध्रुवादीनामिव प्रापुरेव । एवं देहत्याग इत्यर्थोऽवगम्यते, तथाऽत्र 'अलब्धविनिर्गमाः' इति, तत्र व्रज आस्थिताः इति तथाऽत्र 'ध्यानप्राप्ताच्युताश्लेष०' इति, तत्र 'मापुर्मद्वीर्यचिन्तया' इति तुल्यार्थतैव । किन्त्वत्र संगता इति तत्रालब्धरासा इत्यर्थभेददर्शनादेवांतर्गृहनिरुद्धगोपीनां द्वैविध्यं व्याख्यातम् । यथा सप्ताष्टानां फलानां सम्यक्पाकेऽवगते सत्याम्रवृक्षोऽयं पक्वफल इति ज्ञात्वा सर्वाण्येव फलानि वृक्षादवचित्य गृहमानीयन्ते, आनीय च यानियानि च समुचितकालेन सौरकिरणादिना च सौरूप्यसौरभ्यसौरस्यसौकुमार्यवन्ति राज्ञो भोगार्हाणि रोचकानि जातानि फलानि विचक्षणपरिजनेन परिष्कृत्य समये राज्ञो भोगाय कल्प्यन्ते, यानि तु अन्तःपक्वानि बहिरपक्वानि सौरूप्यादिगुणरहितत्वादरसनीयानि राज्ञोऽनर्हाणि ज्ञायंते तान्यूष्मविशेषयोगेन परिक्लृप्त्यैव द्वितीयतृतीयदिनादिषु राज्ञे समर्प्यन्ते । तथैव गोकुले जनितानां मुनिचरीणां गोपीनां मध्ये याः प्राकृतगुणमयशरीरतां परित्यज्य प्रथममेव शुद्धचिन्मयीभूतशरीरा अजनिषत, ताः पुरुषांतरास्पृष्टाः श्रीयोगमायया नित्यसिद्धादिगोपीभिः सहैवाभिसारिताः, यास्तु बहिर्गुणमयशरीरवत्यस्ता अपि श्रीकृष्णविरहोष्मप्रापणया गुणमयशरीरभावत्याजनयैव विनष्टपुरुषांतरस्पर्शदोषाश्चिन्मयीभूतशरीराः काश्चित्तस्यां रात्रावेव सर्वासां पश्चादभिसारिताः, काश्चिदीषन्मात्रस्थितकषायाः प्रेक्ष्य विरहौष्म्येणैव तन्निवर्तनार्थं रात्र्यन्तरेष्वभिसारिताः, ततश्च ताः प्राप्तरासादिविलासा रात्र्यंते नित्यसिद्धगोपीभिः सह पतिगृहमागत्य तदारभ्य पतिसंगतो योगमाययैव रक्ष्यमाणाः पत्यपत्यादिषु ममताशून्याः कृष्णप्रेमातिभरपरिप्लुताः शुद्धपयस्तन्यः स्वापत्यान्यपुष्णत्यो ग्रहग्रस्तत्वेनैव तद्बंधुभिः प्रतीयन्ते स्मेति सर्वमनवद्यम् । अन्ये तु—अन्तर्गृहनिरुद्धा अपि नाऽपत्यवत्यः अग्रिमग्रंथेषु अपत्यादिशब्दैः सपत्नीपुत्रः प्रोष्यपुत्रो भ्रातृपुत्रो वा लक्षणीय इत्याहुः ॥ अत्र **तोषिणी**—एवं ततश्च सद्य एव श्रीकृष्णेन सह संयोगं प्राप्ता इत्याह—दुःसहेति युग्मकेन । तत्रोत्कंठापरिणामं दुःसहेत्यर्धेन, ध्यानपरिणामं ध्यानेत्यर्द्धेन । उत्कंठया दुःसहप्रेष्ठविरहः विप्रलंभोत्थो भावस्तेन तीव्रतापस्तेन धुताऽशुभाः । ध्यानेन हेतुना प्राप्ता याऽच्युतस्य निजभक्तेषु च्युतिरहितत्वेन प्रसिद्धस्याश्लेषनिर्वृतिस्तया क्षीणमंगलाः । अत्र दुःसहशब्देन तीव्रशब्देन च दुःखस्य परा काष्ठा दर्शिता, अच्युतशब्देन निर्वृतिशब्देन च सुखस्य च । अशुभ भगवन्नित्यसंयोगप्राप्तिः प्राचीन

तमेव परमात्मानं जारबुद्ध्याऽपि संगताः ॥ जहुर्गुणमयं देहं सद्यः प्रक्षीणबंधनाः ॥ ११ ॥

बंधना इति । ननु कथं भोगमंतरेण प्रारब्धं कर्म क्षीणं भोगेनैव सद्यः क्षीणमित्याह । दुःसहेति । दुःसहो यः प्रेष्ठस्य विरहस्तेन तीव्रस्तापस्तेन धुतानि गतान्यशुभानि यासां तद
प्राप्तिपरमदुःखभोगेन पापं क्षीणमित्यर्थः।तथा ध्यानेन प्राप्ता अच्युतस्य आश्लेषेण या निर्वृतिः परमसुखभोगस्तया क्षीणं मंगलं पुण्यबंधनं यासां ताः अतो ध्यानेन परमात्म

दशायां दुःखजनिका, तद्विरहस्फूर्तिः मंगलं च तद्दशायामेव सुखजनिका । प्राप्तव्यतत्संयोगस्फूर्तिः यावतीभ्यां ताभ्यां वृत्तिभ्यामेव प्रौढभावः साधकः सिध्यति तावत्योश्च तयोः शनैर्भोग्ययोरपि संप्रति युगपदेव भोगो जात इति धूतत्वं क्षीणत्वञ्चोक्तम् ॥ १० ॥ ० ॥ * ॥ ० ॥ अत्र **तोषिण्येव**–अतस्तत्रैव तं श्रीकृष्णमेव संगता मिलिताः । तथा च वासनाभाष्यधृतं मार्कण्डेयवचनम्–"तदानीमेव ताः प्राप्ताः श्रीमन्तं भक्तवत्स लम् । ध्यानतः परमानंदं कृष्णं गोकुलनायिकाः ॥" इति । तयोः शब्दयोः पापपुण्यपर्यायत्वाभावात्, तयोः स्वस्वप्रतिनियतफलदातृत्वात्, पापस्य तु सुतरां भगवद्विरहमयप्रेमस्फोरकत्वाभावात्, "न कर्मबंधनं जन्म वैष्णवानाञ्च विद्यते" इति पाद्मकार्तिकमाहात्म्यानुसारेण तासां सुतरां तत्प्रारब्धजन्मत्वाभावात् । किञ्च, 'गुरुपुत्रमिहानीतम्' इत्यादिन्यायेन प्रारब्धरक्षणारक्षणयोः स्वप्रेमवर्द्धनविदग्धश्रीभगवदिच्छैकमयत्वान्नान्यथा व्याख्या तम् । ननु किं जारत्वेन संगताः नेत्याह–तादृशरागौत्सुक्येन सोपानीकृतया जारबुद्ध्यापि परमात्मानं सर्वांशिपरमस्वरूपत्वेन सर्वेषामपि स्वभावत एव यदुपपत्यादिशब्दवत्पालकत्वेनापि पतित्वे सिद्धे भावविशेषधारिणीनां तासां रमणत्वेनापि पतिरसावेति पतिरूपमेवेत्यर्थः । रमणत्वालाभेनैव जारबुद्ध्यापि तस्मिन्संगम्यमाने रमणलिप्सायाः प्रगल्भत्वाज्जारत्वस्य तस्मिन्सर्वांशिन्यसंभवात् । 'जिघांसयापि हरये' इत्यादिवज्जारबुद्ध्यापीति हेयतयैव निर्देशात् । प्राचीनस्य पत्युर्देहस्य च त्यागादिति भावः । तथाहि–"पटोलमूले रमणं स्यात्तथा रमणः प्रिये" इति विश्वप्रकाशकोशात्, "धवः प्रियः पतिर्भर्त्ता जारस्तूपपतिः समौ" इत्यमरकोशाच्च रमणपत्यादिशब्द वाच्यजारादिशब्दवाच्ययोर्नैकत्वं मंतव्यम् । किं तु, पूर्वस्य स्वामित्वादुत्तरस्य चोपपतित्वाद्विरुद्धवस्तुत्वमेव । तत्रापि सभ्यशब्दांतरमप्रयुज्य प्रयुक्तस्यासभ्यशब्दशब्दस्य जारशब्दस्य जिघांसाशब्दस्येव निंदातात्पर्यत्वमेव प्रती यते 'जारः पापपतिः' इति त्रिकांडशेषादिकोशाल्लोकाच्च । किन्तु, येन रागेण ता जारभावमयनिंद्यलोकधर्ममर्यादातिक्रममपि कृतवत्यस्तं सूचयित्वा तस्यैव प्रशस्तत्वं दर्श्यते, चेष्टाविशेषसाम्यात । कामतया व्यपदिष्ट त्वेऽपि प्रियानुकूल्यतात्पर्येण प्रेमैकरूपत्वं च । तथा च वक्ष्यते–'यत्ते सुजातचरणांबुरुहं स्तनेषु' इत्यादि । अत एवोक्तं तादृशैरपि–'आसामहो चरणरेणु–' इत्यादौ ' या दुस्त्यजं स्वजन–' इत्यादि । 'एताः परम्' इत्यादौ ' वाञ्छंति यद्भवभियो मुनयो वयञ्च ' इति । एवं हेयांशपरित्यागपूर्वकमहाप्रेमलभनीयश्रीकृष्णलक्षणपरमपुरुषार्थशिरोमणिप्राप्तिर्दर्शिता । तत्रानुषङ्गिकफलमाह–गुणमयञ्च देहं जहुरिति । यतः पूर्वोक्त प्रकारेण सद्यः प्रक्षीणबंधनाः एवं सच्चिदानंददेहप्राप्तिरपि सूचिता । एतदुक्तं भवति–अपित्र जारबुद्धेर्हेयत्वम् " जिघांसयापि हरये स्तनं दत्त्वाप सद्गतिम् " इत्यत्र जिघांसयेव व्यनक्ति, गर्हावचनेन तत्तच्छ ब्देनान्वयात । अत्र हेतुः–परमात्मानमिति । न हि परमात्मा तादृशनिंद्यशब्दवाच्यो भवितुमर्हति । तत्र च हेतुः–हरये इति । हरिशब्दोऽत्र कारुण्यादिमहागुणैः सर्वमनोहरतापरः । न ह्येवंभूतो जिघांस्यो भवितुमर्हति । तत्तदनर्हत्वेऽपि सासा च कथञ्चिज्जाता चेत्तर्हि परमात्मत्वाद्धरित्वाच्च सर्वहितकारित्वेनासौ परित्याजयेदेवायोग्यांशं तस्यामिवामूषु पुनश्च तस्या भक्त्याभासद्वेषं स्तनदानमात्रत्वेन भार्क्तिं मत्वा तदुप लक्षितां धात्रीगतिं ददावेव । अमूषु ' दुःसहप्रेष्ठविरह–' इत्यादिपद्योक्तमहाभक्तिविशेषेणांतःसंगममनुभवंस्तदुचितनिजप्रेयसीं गतिं कथं न दद्यादिति । संगतिश्चेयं पूर्वोक्तगोलोकाख्ये गोकुलप्रकाशाविशेषे एव ज्ञेया । अत एवोद्धवद्वारा श्रीभगवता संदिष्टम्–" या मया क्रीडता रात्र्यां वनेऽस्मिन्व्रज आस्थिताः । अलब्धरासाः कल्याण्यो मापुर्मद्वीर्यचिन्तया ॥ " इति । रासश्चायं तद्दिनगत एव तस्यैव विवक्षितत्वात् । तस्मिन्नपि प्रकाशे गोपलीलत्वेन दिनांतरेपि तत्संभवात् । किन्त्वत्र ' नासूयन्खलु कृष्णाय ' इति वक्ष्यमाणानुसारेण तत्पत्यादिषु दुःखाद्यनुत्पत्तये तन्माययैव त्यक्तानां देहानामंतर्द्धापनं, तत्सदृशीनामन्यासां स्फोरणं च गम्यते । एवं तावत्कालमेव तद्रहस्यं लब्धरासा भगवत्प्रेयस्योऽपि नाऽजानन्, यावदुद्धवद्वारा यथार्थानुभावकप्रभावम् ' या मया ' इत्यादिसंदेशं नाश्रृण्वन्निति च । अथ वा–तासां मुरलीवाद्यानुसरणेन तदन्तिकगतौ

॥ राजोवाच ॥ कृष्णं विदुः परं कांतं न तु ब्रह्मतया मुने ॥ गुणप्रवाहोपरमस्तासां गुणधियां कथम् ॥ १२ ॥

प्राप्तेस्तत्कालसुखदुःखाभ्यां निःशेषकर्मक्षयाद्गुणमयं देहं जहुरिति ॥ १० ॥ ११ ॥ ननु यथा पतिपुत्रादीनां वस्तुतो ब्रह्मत्वेऽपि न तद्भजनान्मोक्षस्तथा बुद्ध्यभावा

किमाश्चर्यम्, यतः काश्चिन्निरुध्यमाना अप्यंतर्गृह एव तं प्राप्ता इत्याह—अन्तारिति । तादृशतीव्रतापेन धुतं श्रीकृष्णकृपया खण्डितमशुभं विरहरूपं यासां ताः । तेन जगतामपि धुतमशुभं याभिस्ता इति वा । 'मद्भ क्तियुक्तो भुवनं पुनाति ' इतिवत् । तथा तादृशनिर्वृत्याऽक्षीणं क्षीणताविरुद्धं पुष्टं मंगलं निजतादृशतत्संयोगरूपं यासां ताः । तथा पुष्टं जगतामपि मंगलं याभ्यस्ता इति वा पूर्ववत् । गुणमयम् विरहभावमयम्, देहमावेशमित्यर्थः । तथा तृतीये सृष्टिप्रसंगे ब्रह्मणा दर्शितम् । अन्यत्समानम् । संगतिस्तस्मिन्नन्तर्गृह एव तस्य प्राकट्यात्, अन्तर्गृहगता इत्यन्वयात् । अत एव सद्यः प्रक्षीणं बंधनं सर्वतत्संगविरोधो यासां ताः, एवमलब्धरासास्तस्यामेव रात्राविति ज्ञेयं पूर्वहेतोरेव ॥ ११ ॥ यथावद्ब्रह्मज्ञानस्य मोक्षहेतुत्वात्तासां तदभावदर्शनात्कथं मोक्ष इत्यजानन्निवाशङ्कते—नन्विति । तद्भजनात् पतिपुत्रसेवनात । तथा बुध्यभावात् ब्रह्मबु ध्यभावात । तस्य कृष्णस्य संगतिः । मुने तत्तल्लीलामननशील । परं कांतं जारं पतिम् । गुणेषु विषयेषु धीः बुद्धिर्यासां ताः । गुणप्रवाहस्य संसारप्रवाहस्य उपरमो निवृत्तिः । निवृत्तिमार्गलभ्या प्रवृत्तिमार्गेण कथं संसारनिवृत्तिः " उत्तिष्ठत जाग्रत " इति श्रुतेः । यद्वा—गुणेषु भगवत्सौंदर्यादिषु धीर्यासां भक्तानामिति यावत् । गुणस्य भगवत्सेवारूपस्य प्रवाहो यस्मिंस्स देहस्तस्योपरमः कथं जातः " त्वयि भक्तस्तु कीटोऽपि भूयासं जन्मजन्मसु " इत्यादिवाक्यैर्भक्तौ तात्पर्यम्, भक्तिवृद्ध्यर्थं न मोक्ष इति भावः ॥ * ॥ तत्रत्यानां बहिरङ्गाणां केषांचिन्मुखदर्शनेनैव हृद्गतं संदेहमालक्ष्य राजा स्वयं शुकवाक्यस्याभिप्रेतमर्थं तत्प्रसादाज्जानन्नपि तेषां संदे हनिवर्त्तनार्थमेव संदिहान इवाह—कृष्णमिति । हे मुने सर्वज्ञ कृष्णं परमात्मानमपि परं परपुरुषं कान्तं स्वरमणं विदुः, ब्रह्मतया तु न विदुः । अतो गुणधियां [illegible] गुणप्रवा हस्योपरमः कथम् ' तमेव विदित्वाऽतिमृत्युमेति ' इति, " आत्मानमात्मात्मतया विचक्षते " इत्यादिश्रुतिस्मृतिवाक्यैः परमात्मज्ञानस्यैव मोक्षहेतुत्वोक्तेः ॥ अत्र **तोषिणी**—परि सर्वतोभावेनेक्षते सर्वेषां भावं जानातीति परीक्षिदित्यस्यायं भावः—यद्यपि स्वयं तन्माहात्म्यं जानात्येव तथाप्यंतर्मुखसंदिहानानां संदेहनिरासार्थमर्थविशेषेण संदेहविशेषः प्रपञ्चितः, बहिर्मुखसंदिहानानां च संदेहांतरनिरासार्थं ब्रह्मज्ञानवाद इव संदेहः प्रपञ्चितः । ' राजोवाच ' इति क्वचित्पाठः । अत्रापि सर्वभाववैचक्षण्य एव राजशब्दस्य तात्पर्यात्तथैवार्थः । श्रीमुनीन्द्रेणापि तथैव प्रतिवक्ष्यते । तत्र बहिर्मुखरीतितोऽर्थः प्रसिद्ध एव । अन्तर्मुखरीत्या त्वयमर्थः—ननु गुणमयं देहं जहुरित्युक्तम्, तत्र गुणशब्देन सत्त्वादिगुणत्रयमुच्यते, मयट्प्रत्ययेन विकारः, ततश्च हेयस्य देहस्य स्वतस्तन्मयत्वप्राप्तेः किं तन्निर्देशेन, तस्मात्पूर्वेण मानससाद्गुण्यपरंपरा, उत्तरेण तु प्राचुर्यं वाच्यम् । तत्रेदं पृच्छामः— कृष्णं विदुरिति । यदि च प्राप्तरासानां निस्त्रैगुण्यदेहतासूचनार्थमासामेव वा प्राप्तव्यदेहस्य तत्सूचनार्थमत्र गुणमयमिति विशिष्यते, तदपि तादृशांस्य देहस्योपलक्षणत्वेन मासगुणप्रवाहस्यापि तादृशत्वेन लब्धिः स्यात् । तत्रापि पृच्छाम इत्याह—कृष्णं विदुरिति । अर्थश्चायम्—कृष्णं परं केवलं कांतं सर्वाश्चर्यगुणमनोहरतया परमं श्रेष्ठं विदुः, न तु ब्रह्मतयां निर्गुणतदाविर्भावविशेषतया । तर्हि तासां गुणधियां ब्रह्मनिष्ठाया अपि त्याजकतया प्रसिद्धेषु तदीयतादृशगुणेषु धीरंतःकरणं यासां तादृशभूतानां तदेकनिष्ठत्वेन तद्गुणैक्यानुबंधतत्प्रेमवृत्तिगुणत्वादपाकृतगुणानामित्यर्थः । ततो देहस्यं तु तासामसिद्धत्वाद्भवतु नामोपरमः, कथमविच्छिदुरतादृशगुणपरंपराया उपरमः स्यादित्यर्थः । ब्रह्मोपासकेष्विव न तत्स्वरूपमात्राविर्भावः । किं तु, गुणैरपि सह तदाविर्भावः । तता ब्रह्मोपासकेषु ये गुणास्ते प्राकृतसत्त्वमया एवेति तेषामेव गुणप्रवाहोपरमः संभवति नाविर्भूतभयवद्गुणानां तद्विधानामिति वाक्यार्थः । श्लेषेण चेदं पृच्छति—कृष्णं परं केवलं कांततया विदुर्न तु ब्रह्मतया व्यापकतया, तर्हि ' ये यथा मां प्रपद्यन्ते ' इति न्यायेन तासु व्यापकतागुणस्याप्रकाशादन्तर्गृहे प्राकट्यभावेन कथं विरहा

**॥ श्रीशुक उवाच ॥ उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः ॥ द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः ॥ १३ ॥**

**देवं कृष्णेऽपि ब्रह्मबुद्ध्यभावेन तत्संगतिः कथं मोक्षहेतुरिति शंकते । कृष्णं विदुरिति । परं केवलं कांतं कमनीयम् ॥ १२ ॥ परिहरति । उक्तमिति । अयं भावः ।**

भावो गुणप्रवाहोपरमश्च । गुणधियां सुंदरोयं विदग्धोयमितिमात्रबुद्धीनाम् । मुने हे सर्वज्ञ ॥ १२ ॥ भक्त्या संततहरिमहिमसंस्मृतिसमुदितसंविदा निवृत्तियोग्या मुक्तिर्न तु कामादिना, तेन स्वर्गादिप्राप्तिरेवेति "कृष्ण कामास्तदा गोप्यस्त्यक्त्वा देहं दिवं गताः" इति विजयध्वजोक्तेर्नात्रेदं शोभनं प्रतिभाति । किन्तु, स्वामिचरणोक्त एव परिहारः सुष्ठु इति तदाह परिहरति—उत्तरं वक्ति । किंचिदमर्षादिनाऽव्यक्तवाक् । अहो भगवन्माहात्म्ये संदिहानोऽयमिति क्रुद्ध इवाह—उक्तमिति । न ह्यस्मदादिवद्भगवतः प्राकृतरूप इत्याह—अयं भाव इति । आवृतमिंद्रियादिरूपेण परिणतेनाज्ञानेन ब्रह्मत्वं ब्रह्मभाव आच्छादितं भस्मना वह्निरिव "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" इत्याद्युक्तेः । हृषीकेशत्वादीश्वरत्वात्सर्वज्ञत्वेन वशीकृतमायत्वात्तत्कृतावरणं नास्ति, ततस्तस्मात्तत्र श्रीकृष्णे बुद्ध्यपेक्षा साक्षात्परब्रह्मैवायमिति ज्ञानापेक्षा नेति भाव इति । अनावृतोग्निर्यथा प्रकाशदाहादिकार्यं करोति न त्वावृतः, एवं जीवानामावृतब्रह्मरूपत्वात्तत्र तु ब्रह्मात्मरूपज्ञानं द्वारीकृत्वैव मोक्षो, भगवतोऽनावृतब्रह्मरूपत्वात्तादृशज्ञानं विनापि मोक्षप्रदत्वमिति तात्पर्यम् । किं च, प्रेष्ठविरहजक्षोभातिशयात्ताभिर्देहध्वंसोंगीकृत इत्याकूतम् । पुरस्तात् सप्तमस्कंधे । एतत् तव प्रश्नोत्तरम् । द्विषन्नपि द्वेषं कुर्वन्नपि यथा संततं वैरधिया चेतोनिवेशेन सिद्धिं सायुज्यं गतः । अधोक्षज इन्द्रियजज्ञानाविषयसाक्षात्परब्रह्मैव प्रियोऽनुरागविषयो यासां ताः । सोपाधिको निरुपाधिको वा चेतःप्रवाहस्तत्प्राप्तिहेतुरिति तत्त्वम् ॥ * ॥ श्रीमुनींद्रोपि नायं राज्ञः प्रश्न इति मनसा जानन्नेव त्वमेवं पृच्छन्मेधाशून्य एवासीति तद्व्याजेनानभिज्ञानेव तान्भर्त्सयन्नाह—उक्तमिति । पुरस्तात् सप्तमस्कंधे एव । द्विषन्नपीति द्वेषलक्षणप्रतिकूलभावेनापि यदि सायुज्यं लभ्यते तर्हि कामलक्षणस्यानुकूलभावस्य का वार्तेति भावः । हृषीकेशमिति । निरुपाधिकृपया स्वयमवतीर्य ब्रह्मादीनामपि हृषीकैरग्राह्योपि मर्त्यलोके परमनीचानामपि हृषीकेषु ईष्टे स्वाचिंत्यशक्त्या विषयभूतो भवति तानुद्धर्तुमितीदमप्येकं तस्य कृपैश्वर्यमिति भावः । इमास्तु अधोक्षजस्य अतींद्रियस्य तस्य प्रियाः प्रीतिविषयाश्रयभूता एव । अत्र 'अघः सिद्धिं यथा गतः' इति प्रत्यासन्नमघासुरं हित्वा विप्रकृष्टचैद्यो यद्दृष्टांतितस्तेन राजानं प्रत्येतत्सरहस्यं प्राह,—चैद्यस्यापि द्वेषाभिनिवेशोद्रेकान्मुनिशापनिबंधनगुणमयदेहस्यैवोपरमः, अन्तश्चिन्मयपार्षददेहस्तु तस्यानश्वरो नित्यो वर्त्तत एव । यदुक्तम्—'विष्णुचक्रहतांहसौ' इति । विष्णुचक्रेण हतमंह एव ययोर्न तु ताविति । सिद्धिं गतः अभीष्टां गतिं पार्षदतां प्राप्त इत्यर्थः । यदुक्तम्—"वैरानुबंधतीव्रेण ध्यानेनाच्युतसात्मताम् । नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ॥" इति ॥ अत्र **तोषिणी**—श्रीयुक्तः शुक इति परीक्षिद्वचनस्य बहिर्मुखप्रतारणबुभुत्सुसंदेहनिरसनार्थां प्रवृत्तिमवगम्यापि तद्व्याजेन बहिर्मुखान्भर्त्सयन्निव किंचित्सामर्षत्वेनाव्यक्तवचनात्तथैवाह—उक्तं पुरस्तादिति । सिद्धिम् अभीष्टां गतिम् पुनः पार्षदताम् । "वैरानुबंधतीव्रेण ध्यानेनाच्युतसात्मताम् । नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ॥" इति सप्तमात् । ततस्तस्य द्वेषेऽपि जाते लीनतया स्थितैरपि स्वगुणैरेव सह पुनस्तत्प्राप्तिरिति सुतरामेवाधोक्षजप्रीतिविषयाश्रयाणां तासां वार्द्धिष्णुप्रेमतया प्रकटैस्तैरेव सह तत्प्राप्तिरित्यर्थः । मया तु गुणमयं देहमिति स्वरूपशक्तिवृत्तिरूपांतर्बहिर्देहप्राप्त्या समूलप्रकृतिप्राकृतसद्गुणैः सौन्दर्यादिभिः संवलितमपीत्येव विवक्षितम्, देहस्यैव विशेषणत्वादित्यर्थः । प्रश्नस्य श्लेषत्वे द्वितीयार्थे त्वयमुत्तरस्यार्थः प्रश्नस्य । 'ये यथा माम्' इत्यत्र तान्प्रत्येवान्यान् गुणान्न प्रकाशयामि स्वतस्तु मम सर्वेपि संत्येवेति विवक्षितम् । अतस्तादृशभक्त्यावेशात्तस्यानुसंधानाभावोऽपि तत्तच्छक्तय एव स्वावसरे तान्प्रकाशयन्ति । अन्यथा दूरतो भजतां केवलतन्माधुर्यनिष्ठानां तदप्राप्तिरेव स्यात् । तत्र कैमुत्येन दृष्टान्तं श्रृण्वियाह—द्विषन्नपीति । अन्यथा तत्राप्यंतेन मोक्षादिदायकमैश्वर्यं प्रकाशेतेति भावः । तत्तत्प्रकाशे नामद्वयेन हेतुमाह—हृषीकेशमिति, अधोक्षजेति च । उभयनामनिरुक्त्या तज्ज्ञानापेक्षयैव तेषां

नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप ॥ अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः ॥ १४ ॥
कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च ॥ नित्यं हरौ विदधतो यांति तन्मयतां हि ते ॥ १५ ॥

जीवेष्वावृतं ब्रह्मत्वं कृष्णस्य तु हृषीकेशत्वादनावृतमतो न तत्र बुद्ध्यपेक्षेति ॥ १३ ॥ ननु देही कथमनावृतः स्यादत आह । नृणामिति । गुणात्मनो गुणनियंतुः । भगवत एवंरूपा अभिव्यक्तिरतो न देहिसादृश्यमत्र वक्तुं युज्यत इति भावः ॥ १४ ॥ अतो यथाकथंचित्तदासक्तिर्मुक्तिकारणमित्याह । काममिति । ऐक्यं संबंधम् ।

सिद्ध्ये तद्गुणविशेषः प्रकाशित इति दर्शितम् ॥ १३ ॥ देहसंबन्धेनावृतत्वं वदतो–व्याघातो देहावरणस्य मूढेनापि ज्ञातत्वादित्याशङ्कते–नन्विति । वस्तुतो भगवतो देह एव नास्ति 'देहीवाऽऽभाति मायया' इत्यत्रेव शब्दोपादानात् "अशरीरं वा वसंतम्" इति श्रुतेश्चेत्यभिप्रेत्याह–नृणामिति । एवंरूपा अप्राकृतरूपा दिव्या अभिव्यक्तिः अवतारः, प्राकट्यमिति यावत् । यतो लौकिकप्रभावचिद्घनमूर्तिरतो हेतोर्न देहिसादृश्यं प्राकृतजन सादृश्यम् । अत्र श्रीकृष्णे । युज्यते युक्तम् । इति भाव इति । भक्तजनार्तिप्रशमनार्थं प्रदर्शितलीलाविग्रहानेककोटिब्रह्मांडाधीशेन नंदनंदनेन कथमन्यस्य तुल्यता संभवेदिति तात्पर्यम् ॥ * ॥ यतः श्रेयस्साधनहीनानपि मयि यत्किञ्चित्संबंधमात्रवतो जनानहमुद्धरामीति मनसि कृत्वैव भगवतावतीर्णमित्याह–नृणामिति द्वाभ्याम् । निःश्रेयसं केषुचित्सायुज्यं केषुचित्सालोक्यादिकं केषुचित्प्रेम चार्थस्तस्मै । भ्रूविजृंभमात्रेण ब्रह्मांडकोटिसंहारसमर्थस्य भूभारभूतकंसादिवधार्थमेव व्यक्तिरन्यथा नोपपद्यत इति भावः । अव्ययस्य प्रतिभक्तजनं स्वात्मदानेनापि न व्येतीत्यव्ययस्तस्य । केन प्रकारेणेति चेदत आह–अप्रमेयस्य, प्रमातुमशक्यस्य । कस्तत्र तत्त्वं जानातीति भावः । यतो निर्गुणस्य प्राकृतगुणरहितस्य, अथ च गुणात्मनः स्वरूपभूतकल्याणगुणमयस्य । न हि अप्राकृतचिदानंदमयगुणसागरः प्रमातुं शक्यो भवेदिति भावः ॥ अत्र **तोषिणी**–तदेवं तद्ध्यानप्रभाव उक्तः । तत्र भगवद्व्यक्तिसमये तु भगवत्पार्षदस्यागंतुकदैत्यभावस्य चैद्यस्य तथा तादृशश्रीभगवत्प्रेमवतीनां तासां तत्तत्संपादनाय भगवतः साहाय्यमप्यस्ति कैमुत्येन कारणमित्याह–नृणामिति । नृणां जीवमात्राणां निःश्रेयसार्थाय सर्वसाधन फलाय तत्तद्योग्यतासम्पत्पूर्वकस्वलीलानन्दप्राप्तिरूपाय । तं साधयितुमेवेत्यर्थः । व्यक्तिः प्राकट्यं तदर्थावधारणत्वमाह–भगवत इति । अन्यथा भ्रूविजृंभमात्रेण ब्रह्मांडकोटिसंहारसमर्थस्य भूभारसंहरणमात्रार्थं व्यक्तेरनुपपत्तिरित्य र्थः । हे नृपेति । यथा नृणां क्षेमार्थमेवेतस्ततो भवादृशस्य राज्ञो गमनमिति भावः । भगवत्त्वमेवाह–अव्ययस्येत्यादिचतुर्भिर्विशेषणैः । नित्यं नानाप्रकाशैर्नानाभक्तेभ्यः आत्मदानादिनापि न व्येतीत्यव्ययस्तस्य । कुतः–अप्रमेयस्यापारि च्छिन्नस्येत्यर्थः । तत्कुतः-निर्गुणस्य मायागुणातीतस्य । ततः कुतः-मायागुणानामात्मनः प्रवर्त्तकस्य । यद्वा-नृणां निःश्रेयसार्थायैव व्यक्तिमात्रं जन्म, अन्यथा कथञ्चिन्न संभवेदित्याह-अव्ययस्य जन्मादिविकाररहितस्य । किञ्च, प्रमेयस्य । तदर्थत्वे हेतुः–गुणात्मन इति । निजकारुण्याद्यशेषगुणानां सुप्तानामिव चेतयितुः प्रकटनपरस्येत्यर्थः । अन्यत्समानम् । श्लोकद्वयेऽस्मिन्नयं भाव इत्यादौ टीकायां बहिर्मुखसंदेहनिरासार्थस्तेषामयमभिप्रायः । ननु ब्रह्मणि कामा दिकमपि चेदर्थकरं तर्हि जीवेष्वपि चित्सामान्येनैक्याद्ब्रह्मत्वमस्तीति पत्यादिष्वपि तादृशं स्यात्तत्राह–जीवेष्विति । आवृतत्वे हेतुर्वक्ष्यमाणवैपरीत्यरीत्या हृषीकाधीनज्ञानत्वमेव ज्ञेयम् । तत्र स्वास्मिन्नावृतत्वं बहिर्विक्षेपात्, परे ष्वुपाधिमात्रग्रहणात् । हृषीकेशत्वादिति पूर्ववन्न हृषीकवशस्तदुदयः, अतः स्वप्रकाशतामयतामय एव, ततश्चानावृतमेव ब्रह्मत्वमिति स्थितम् । कामादिना केनापि तत्र प्रवृत्तिर्भवतु वस्त्वनुभवस्तु भवत्येवेत्यर्थः । ननु देहीति– पत्यादिवद्देहित्वेन प्रतीयमान इत्यर्थः । सिद्धान्तमाह–तत्तद्विशेषेण वैलक्षण्यादित्यर्थः । एवंरूपा अनावृतब्रह्मरूपा । न देहिसादृश्यं कुतो देहित्वमित्यर्थः । तद्विग्रहस्यैव स्वरूपशक्तिसिद्धवैचित्रिकपरमतत्त्वैकरूपत्वात्, तच्च विद्वदनुभवसेवितत्तच्छास्त्रप्रामाण्यात् । यथा च व्याख्यातम्–"नातः परं परम यद्भवतः स्वरूपम्" इत्यादिश्रुतिष्विति ॥ १४ ॥ यतोऽनावृतं ब्रह्मैव श्रीकृष्णोऽतो हेतोः । यथाकथंचित् येन केनप्रकारेण । तत्रासक्तिरति शयेन व्यासंगः । कामम् कांतप्रेमाणम् । क्रोधम् ज्वलनात्मकं, द्वेषमित्यर्थः । भयम् अयं मे मृत्युरिति हेतोः सदा तन्निवृत्त्युपायचिंता । स्नेहः अनुरागः । ऐक्यसौहृदे व्याख्याते एव स्वामिचरणैः । ये विदधते कुर्वन्ति ते तन्मयतां तत्सायुज्यम्, स्फुटीकृतमेतत्सप्तमस्कंधे ॥ * ॥ तस्मात्त्वया सामान्यतस्तावदेष सिद्धान्तोऽवधार्यतामित्याह–कामं गोपीजनादयः, क्रोधं द्वेषं चैद्यादयः, भयं कंसादयः, स्नेहं वात्सल्यं नंदादयः, ऐक्यमात्मारामाः,

न चैवं विस्मयः कार्यो भवता भगवत्यजे ॥ योगेश्वरेश्वरे कृष्णे यत एतद्विमुच्यते ॥ १६ ॥
ता दृष्ट्वांतिकमायाता भगवान्व्रजयोषितः ॥ अवदद्वदतां श्रेष्ठो वाचःपेशैर्विमोहयन् ॥ १७ ॥

**सौहृदं भक्तिम् ॥ १५ ॥ न च भगवतोऽयमतिभार इत्याह । न चैवमिति । यतः श्रीकृष्णादेतत्स्थावरादिकमपि विमुच्यते ॥ १६ ॥ प्रस्तुतमाह ।**

सौहृदं वृष्णिपांडवादयः नित्यं विदधते । अधुनापि तेते तंतं भावं कुर्वन्तस्तन्मयतां यांतीति । तासांतासां लीलानां नित्यत्वं ज्ञापयति । तन्मयताम् गोप्यादयस्तदासक्तताम्,यथा—स्त्रीमयः कामुक इति।अन्ये सायुज्यम् ॥ अत्र **तोषिणी—**अस्तु तावद्भगवद्व्यक्तिसमयगतानां वार्ता किन्तु सर्वदातनानामपीयं रीतिरित्याह—काममिति । अत्र कामं द्विविधम्—श्रीगोप्यादीनामिव प्रेममयं, सैरंध्र्यादीनामिव रिरंसामयञ्च । क्रोधं द्वेषं चैद्यादीनामिव, भयं कंसादिकानामिव, स्नेहं वृष्णिपांडवानामिव, श्रीमद्व्रजवासिनामिव वा, ऐक्यम् आत्मारामाणामिव, सौहृदं क्रथकौशिक्यादीनामिव । तत्र भयद्वेषौ तु नानुमतौ, यः खलु कल्याणगुणमप्यात्मानं भीषणं मन्यते गूढं द्विषतोऽपि तस्य भीतस्य तथा मत्सरादिना साक्षादपि द्विषतो धृष्टस्य भद्राय कल्पते, तस्मिन् कः परमपामरस्तच्च तच्च कुर्यात् । किन्तु, स्नेहं सौहृदमेव वा सर्वेपि कुर्युरिति हि तात्पर्यम् । तदित्थमेवोक्तं श्रीनारदेन— " तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत् " इति । केनापीति तत्र योग्येनेत्यर्थः । अतस्तत्रैव तदुक्तम्—" यथा वैरानुबंधेन मर्त्यस्तन्मयतामियात् । न तथा भक्तियोगेन इति मे निश्चिता मतिः ॥ " । तत्र च शास्त्रज्ञा गौरवमयभक्तियोगमतिक्रम्य भावमार्गे हेयस्यापि तस्य तन्मयताकारित्वाय प्राबल्यं दृश्यते इति व्यज्य स्नेहसौहृद्ये एवानुमते । तदित्थमेवोक्तम्—द्विषन्नपीति । तद्वदैक्यञ्च नानुमतम्, तत्र तादृशशतगुणास्फूर्तेरिति । एवशब्दः एकैकतः कृतार्थीभावाय । पाठांतरे ये विदधते । हि निश्चितम् । तन्मयताम् तत्तद्भावसमुचिताविर्भावं तदेकस्फूर्तिम् । किन्तु, श्रीभगवान्खलु " भक्त्याऽहमेकया ग्राह्यः श्रद्धयात्मा परः सताम् " इति भगवद्वाक्यात्, " योगिभिर्दृश्यते भक्त्या नाऽभक्त्या दृश्यते क्वचित् । द्रष्टुं न शक्यो रोषाच्च मत्सराच्च जनार्दनः ॥ " इति पाद्मोत्तरखंडात्, " नाहं प्रकाशः सर्वस्य योगमायासमावृतः " इति श्रीगीतोक्तेश्च । यद्यपि द्रष्टृप्रभृतिभिस्तस्य याथार्थ्यं नाऽनुभूयते किं त्वन्यथैवेति तथापि तत्प्रभावात्परंपरयाऽप्युत्तरकाले याथार्थ्यं स्फुरतीति क्रोधभये अप्यत्र गणिते । ' किमुताधोक्षजप्रियाः ' इत्यनेन कामस्तु प्रियत्वातिशयादुत्कर्षित इति विवेचनीयम् । चेति वेति पाठौ समानार्थौ ॥ १५ ॥ न तत्रेदमाश्चर्यमित्याह—न चेति । अतिभारः दुर्घटः । एवं विस्मयः गुणधियां गुणप्रवाहोपरमः कथमित्येवंरूपः संदेहः । भवतेति । गर्भादारभ्य श्रीकृष्णभक्तेन त्वया न कर्तव्योऽन्येन क्रियतां नामेत्याह—यतः श्रीकृष्णादेतज्जगद्विमुक्तं भवति, यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते " नाऽपरेण " इति श्रुतेः । स्थावरम् वृक्षादि । अत एवोक्तं ब्रह्मणा—' वृंदावने किमपि गुल्मलतौषधीनाम् ' इत्यादि । आदिना पाषाणादिग्रहः । तत्प्रसिद्धमहिल्योपाख्याने रामायणे अवतारभेदेप्यवतारिणोऽभेदात् " य एव रामश्च स एव कृष्णः " इति चिरंजीवभट्टोक्तेः ॥ * ॥ न चेति । अन्येन विस्मयं क्रियतां नामात्रार्थे भवता तु गर्भादारभ्य तन्महिमाऽभिज्ञेन न कार्यः । गोचारकत्वेऽपि भगवति, देवकीपुत्रत्वेऽप्यजे, गोपस्त्रीलांपट्येऽपि योगेश्वराणामपीश्वरे । कृष्णे सर्वावतारिणि । यत 'एतत्स्थावरादिकमपि विमुच्यते ' इति स्वामिचरणाः । यद्वा—तल्लीलापरिकराद्भिन्नमपि जगदधुनापि तत्तत्कामस्नेहादिभावमनुस्मृत्य विमुच्यते गुणप्रवाहान्मुक्तं भवति ॥ अत्र **तोषिणी—**न चेति । अन्येन क्रियतां भवता गर्भादारभ्य तन्महिमाभिज्ञेन न कार्य एवेत्यर्थः । अत एव भवतेति गौरवेणोक्तं न तु त्वयेति । विस्मयाऽकरणे हेतुविशेषः—भगवति अशेषैश्वर्ययुक्ते । ननु कथं तर्हि देवकीगर्भतो जन्म तत्राह—अनेन जीववन्न जायते किन्तु स्वेच्छयैव, भक्तवात्सल्यादिना स्वयमाविर्भवतीत्यर्थः । भगवत्त्वादेव योगेश्वरेश्वरे तत्रापि कृष्णे सर्वतः परिपूर्णाविर्भाव इत्यर्थः ॥ १६ ॥ प्रकृतमनुसरति—प्रस्तुतमिति । वदतां श्रेष्ठः चतुर्मुखशतमुखसहस्रमुखव्यासादिश्रेष्ठः । ताः गोप्यः । ' पेशोंगे दीप्तौ हेलायां चूर्णने पुंसि ' इति माधवः । उपेक्षाप्रार्थनाबोधकद्व्यर्थकवाक्यैर्विमोहयन्नवदत् । तत्रोपेक्षाद्योतकैर्विशेषेण मोहयन् आमुग्धा इव कुर्वन् । प्रार्थनागमकैस्तु विशेषेण स्नेहवतीः कुर्वन्निति विशेषः । अवाच इति छेदे लज्जया किमप्यवदन्तीरिति । पेशैः सौंदर्यैरित्यर्थः ॥ * ॥ प्रासंगिकं विरोधं समाधाय प्रस्तुतमाह—भो वेणुनादा

॥ श्रीभगवानुवाच ॥ स्वागतं वो महाभागाः प्रियं किं करवाणि वः ॥ व्रजस्यानामयं कच्चिद्ब्रूतागमनकारणम् ॥ १८ ॥

ता दृष्ट्वेति । वाचःपेशैर्वाग्विलासैः ॥ १७ ॥ सर्वाः ससंभ्रममागता विलोक्य सभयमिवाह । व्रजस्येति ॥ १८ ॥

कृष्टाः । वदतां कालदेशपात्रौचित्येन वचनचातुर्यवतां मध्ये श्रेष्ठः । पेशैः अवयवैः 'पिश–अवयवे' घञन्तः प्रयोगः । वाचोऽवयवाः वाच्यलक्ष्यव्यंगबोधका ये रूक्षाः स्निग्धाश्चांशास्तैर्विमोहयन् । वेणुनादेन मोहिता अपि ता विशेषेण मोहयितुमत्र ताः प्रति रूक्षोक्त्यैव भगवतस्त्रयो मनोरथाः सेत्स्यंति । प्रीतिविषयस्य कान्तस्य ममौदासीन्ये दृष्टेऽप्यासां प्रीतिलेशोऽपि न ह्रसतीति प्रीतेः शुद्धतां लोके दर्शयिष्यामीति, तथा–संप्रयोगे वैपरीत्यमित्राद्य नायिकाधर्ममवहित्थामयं वाम्यमहं ग्रहीष्यामि नायकधर्ममौत्सुक्यप्रकटनमयं दाक्षिण्यमेता ग्राहयिष्यामीति मननेऽपि वैपरीत्यं रचयिष्यामीति, तथा–परमलज्जावतीनां युवतीनां स्वाभाविक्यावहित्थया संगोपितान्यान्तरीणानि वचनानि प्रकृतिविपर्यासप्रापणया श्रोष्यामीति । यद्यपि कामिनीनां कुचाद्यवयववृन्दं वस्त्रावृतत्वेन गूढमेव चमत्कारकारकमिव तासामंतरीणमौत्सुक्यमपि बहिर्वाम्येनावृतमेव चमत्कारकारकं रसज्ञा मन्यंते न तूद्घाटितम्, तदपि कदाचित्कश्चिन्नायकः संभोग्याया नायिकाया अनावृतान्येवांगानि यथा दिदृक्षते, तथैव वाम्येनावृतमान्तरीणमौत्सुक्यवचनञ्च शुश्रूषते, किन्तु, पुरुषांतरस्य स्ववयस्यादेरपि सन्निधौ न दिदृक्षते नापि शुश्रूषते, तथैव कृष्णोऽदृष्टचरानावृतगोपीसर्वांगं संप्रति तासां वाम्यानावृतमान्तरीणं वचनवृन्दं शुश्रूषत इत्यत एव प्रियं नर्मसखमपि स्वसंगिनं तदानीं न चकारेति ज्ञेयम् ॥ अत्र **तोषिणी**–अतः परं परमरसमयरासलीलाप्रसंगोऽस्मिन्नंतरायानौचित्येऽपि सर्वेषामेकचित्ततापादनार्थमेवेदृशः प्रश्नो भवता कृतः, मयाऽपि भवदनुरोधेनैव सिद्धांतप्रक्रियेयं व्यञ्जितेति व्यंजयन् पुनरप्रार्थितोऽपि स्वयमुत्कंठया सहसा प्रस्तुतमेवाह–ताः वेणुगीताकृष्टाः परमविह्वलाः । तदेव दर्शयति–व्रजस्य योषितः व्रज एव स्थातुं योग्या न हि बहिर्वनमागन्तुमित्यर्थः । तत्रापि निजांतिकमेवायाताः प्राप्ता न तु लज्जादिना दूरतः स्थिता दृष्ट्वाऽवदत् । वाचःपेशैः वाग्विलासैः । ते च द्विविधाः–शाब्दिका आर्थिकाश्च । पूर्वे तु सुललितवर्णविन्याससुगमसुभगसमुच्चारणस्मितवलितश्रीमुखलोचनचिल्लीचालनविशेषादयः । उत्तरे रसा भावालंकारवस्तुरूपाः । एतेऽपि चतुर्विधाः–उपेक्षाभंगिमयाः, प्रार्थनाभंगिमयाः, तद्युगलार्थसंधापनमयाः, वास्तवार्थमयाश्च । तथा च सति विमोहयन्निति हृतचित्ता हृतविवेकाश्च कुर्वन्नित्यर्थो यथायथमूह्यः । तत्र पूर्वत्वं शाब्दिकप्रार्थनामयत्रास्तवार्थमयेषु, उत्तरोत्तरत्वं चान्ययोः । तत्र च शाब्दिकाः स्वभावेन विशेषतस्तु भावेन । आर्थिकेषूपेक्षामयाः स्वस्मिन्नुत्कंठावर्धनार्थमेव न तूपेक्षार्थं कृताः । 'रन्तुं मनश्चक्रे', 'जगौ कलं वामदृशाम्' इत्युक्तत्वात् । अत एवैतत्पक्षे वाक्ये शब्दमात्रता न तु तात्पर्यत इत्यर्थः । एवं मनस्यन्यद्वचस्यन्यदित्यवहित्थया तासामुत्कंठया विषण्णतासंपादनं, तेन च विवेकहरणमिति । तत्रापि प्रार्थनामया निजौत्सुक्यमात्रहेतुकाः, तद्युगुलार्थसंधापनं तु नर्मकौतुकार्थमिति । तथा वचने योग्यतां कैमुत्येनाह–वदतां श्रेष्ठः निखिलवाग्वैदग्ध्यविदां वरिष्ठः, यतो भगवान्स्वाभाविकतादृशज्ञानादिभिः सर्वातिशयी। यद्वा–सर्वत्रांतर्भूतोऽपि शब्दो द्रष्टव्यः । तथाहि–व्रजयोषितः सहजनिजप्रेमपरत्वेन प्रसिद्धा अपि, तत्रापि तास्तादृशं प्रेमविकारं प्राप्ता अपि, तत्रापि तदानीं निजांतिकमायाता अपि, साक्षाद्दृष्टा अपि, स्वयं च भगवान्सर्वज्ञत्वेन तासां भावाभिज्ञोऽपि वाचःपेशैः कपटवाक्यैर्विमोहयन् परमवैकल्यं प्रापयन्नवदत् । किमर्थम्–वदतां नर्मोक्तिचतुराणां मध्ये श्रेष्ठः, नर्मविशेषणार्थमित्यर्थः ॥ १७ ॥ भो महाभागाः वो युष्माकं वने सुष्ठु आगमनं जातं किम् ? अपि तु न, अतो वः प्रियं किं करवाणि, न मया किमपि कर्तुं शक्यम् । सर्वा गोप्यः । ससम्भ्रमं ससाध्वसं यथा सभयं प्रत्युच्यते तथाह–व्रजस्येति । व्रजस्य किंस्वित् अनामयं क्लेशाऽभावोस्ति ? एवं सम्भ्रमेणाऽऽगमने कारणं ब्रूतेत्युपेक्षायाम् । प्रार्थनायां तु मम महद्भागरूपा मदीयभाग्यरूपा वा महत्याभा कांतिर्यस्याः सा महाभा राधा तां गच्छंति सखीभावेनेति तथा । यद्वा–मह्यते पूज्यते मयेति महा राधा तस्या भा दीप्तिरागता यासु ताः । वः सुंदरमागमनं जातम् । व्रजगतपत्यादिभीतिमालक्ष्याह–व्रजस्य व्रजसंबन्धिनीनां वः अनामयम् अभयम् । ते श्रांता मायामोहिताः सुताः स्वागमनकारणमशंकितं ब्रूत । यद्वा–आगमनस्य कं सुखं तदेवारणं यस्य तं मां किञ्चित्संभाषणं कुरुतेति गूढोऽर्थः । ॥ * ॥ अथ स्त्रीपुरुषाणां रसज्ञानां मेलने तावदियं रीतिः–यत्पुमांसो रतौत्सुक्यमाविष्कुर्वते, स्त्रियस्तु तत्राऽसहिष्णवः कुप्यंतीत्यतस्तामेव रसरीतिं प्रथममाश्रित्य कृष्ण आह–स्वागतं वो युष्माकं कच्चित्सुखमयमागमनं वृत्तम् ।

रजन्येषा घोररूपा घोरसत्त्वनिषेविता ॥ प्रतियात व्रजं नेह स्थेयं स्त्रीभिः सुमध्यमाः ॥ १९ ॥

लज्जया मंदहसितमालक्ष्याह । रजन्येषेति ॥ १९ ॥

ततो यूयं महाभागा जन्मारभ्य दुःखस्य सुखं भवतीभिः कदापि न दृष्टमिति भावः । यद्वा—नायं प्रश्नः किन्तु प्रत्युक्तिः, अतो युष्माकं शोभनमद्यागमनं वृत्तं यदत्रागतं तत्सम्यक् कृतम्, यतो महाभागा भाग्यवतीनां हि सर्वाः क्रिया एव सफलीभवंत्यः स्वस्य च परस्य च सुखदा भवंतीति भावः । अतो वः प्रियं किं करवाणि अधुना रात्रावत्र निर्जने वने एकाकिना यूना मया युवतीनां वो यत्प्रियमातिथ्यं कर्तुं शक्यं स्यात्तद् ब्रूत, युष्मत्प्रियचिकीर्षौ मयि सारल्येन स्वप्रियं कृपया स्पष्टं वक्तव्यं, यथा निःसंदेहं तत्राहं प्रवर्त्तेयेति भावः । ततश्च भो महासाहसिक लंपट अस्मानपि पतिव्रता यदेवं वक्तुमुत्सहसे तत्किं धर्मतो राजतश्च न बिभेषीति समुचितमुत्तरमप्राप्तवता प्रियं किं करवाणीत्यस्य व्यंजितेंगसंगरूपेर्थे सम्मतिलक्षणं लज्जाहेतुकं मौनमेव दृष्टवता भगवता विचारितम्—यद्येताभिः स्वयमुचितं वाम्यमद्य नांगीक्रियते तर्हि मयापि समुचितमौत्सुक्यं न बहिष्करणीयम्, किन्तु वाम्यमिश्रमेव । ततश्च संभोगभेदे संप्रयोगे यथा वैपरीत्यमपि चारु भवति तथैव संभोगभेदे मेलनेऽपि वैपरीत्यं चारु भवतु, किन्त्वासां महामोहनवेणुनादमाध्वीकपानोत्थातिवैवश्यादेव प्रकृतिविपर्ययस्तत एव दाक्षिण्यम्, मम तु वैवश्याभावात्तदनुरोधादेव कृत्रिमं वाम्यं बहिरेव कार्यमन्तस्तु स्वाभाविकमौत्सुक्यमस्त्येवेत्यादिकं विचार्य च वाम्यपदवीमारोढुं सभयमत्र संपृच्छते—व्रजस्येति । कच्चिद्व्रजस्यानामयं मंगलम्, न जाने सांप्रतं व्रजे काश्चिदिंद्रादिकृत उपद्रवो वर्तते, यतः सर्वा एव भवत्यो भीताः पलाय्य स्वत्राणार्थं मदंतिकमायाता इति भावः । ततश्च केयमद्यतन्यस्य धूर्ततालहरीति मिथः सस्मितमविस्मयावलोकं वितर्कयंतीषु तास्वहो युष्माकं मौनेनैवावगम्यते नोपद्रवस्तर्हि कुतः किमर्थमायाताः । अहं तु नात्यूहितुं समर्थ इति भावः ॥ अत्र **तोषिणी**—प्रथममवहित्थयौदासीन्यमवलंबमानः सादरमाह—स्वागतमिति । वो युष्माकं शोभनमागमनं वृत्तमित्यर्थः । यद्वा—वो युष्माभिः सुष्ठु आगतं कच्चिदिति प्रश्नः । महान् भागो भाग्यं यासां तासां संबोधनम् । अतो वो युष्माकं किं प्रियं करवाणि, अपि तु न किंचित्कर्तुं शक्नोमीत्यर्थः । यद्वा—किं करवाणि तदाज्ञापयन्त्वित्यर्थः । महाभागानां प्रियाचरणेन ममापि धर्मविशेषो भावीति भावः । पूर्वं यज्ञपत्नीः प्रत्येवमेवोक्तं किन्तु तत्रास्यतामिति गौरवं विधाय किं कर्तुं शक्नोमि अपि तु न किमपीति केवलमौदास्यम् । अत्र तु प्रियं किमिति श्लेषेण साकांक्षत्वमपीति शेषः । वस्तुतस्त्वेतासां तादृशागमनं दृष्ट्वा परमप्रीत्यैवाह—स्वागतमित्यादि । महाभागा इति सर्वपरित्यागेन तदेकापेक्षया तासामागमनात् स्वस्य च नानाप्रियजनापेक्षया तादृशत्वाभावमननेन स्वस्मादपि प्रेममहत्त्वविवक्षयोक्तम् । भागोत्र भजनम् । अतस्तासां प्रेमवशः सन्नाह—प्रियमिति । तच्च प्रियजनवशीकरणचतुरस्य विदग्धशिरोमणेः स्वाभाविकमेवेति दिक् । तदित्थमेव परत्र च वस्तुत इत्यादिक इति शब्दपर्यन्तो वास्तवार्थो ज्ञेयः । तदनन्तरं तु नर्मादिमयो ज्ञेयः । तथाहि—स्वागतमित्यादिना नर्मणा सदाचारमिवाश्रित्य समागतजनेषु वक्तुं योग्यमुक्त्वा सर्वा एव युगपत्ससंभ्रममागता वीक्ष्य स्वयमपि कैतवेन सभयमसंभ्रममिव पृच्छति—व्रजस्येति । अनामयं मंगलं कच्चित् । ननु चतुरसिंह तथा सति गोपादयोप्यागताः स्युरितिचेत्—सत्यम्, तर्हि अंगनाविषयकः केषामप्युपद्रवो भवेदिति धूर्ततयाऽऽशंक्येव साटोपमाह—ब्रूतेति । निजागमनस्य कारणं हेतुं प्रयोजनं वा । अथ वा तदुक्त्यभिप्रायाऽनिर्धारणेन लज्जया चानुत्तरास्ता वीक्ष्य मन्ये शोकवेगेनामंगलस्याश्राव्यत्वेन वा किञ्चिन्न वदथेति व्यंजयन् किञ्चिदन्यदेव चोत्थापयन्सवैयग्र्यमिव पृच्छति—व्रजस्येति । एवं सर्वमप्रेप्याशंकादिकं कैतवेनैवेति ज्ञेयम् । तथाप्यवदंतीः प्रसन्नमुखीश्चालोक्यास्वस्थतामभिनयन्सलज्जामिवाह—ब्रूतेति । भवतु मद्दुर्वितर्क्यत्वं यूयमेव स्वयं ब्रूतेत्यर्थः । अत्रैकैकैव वाक् समुपेक्षामयी संप्रार्थनामयी चेत्युक्तम् । तत्र तस्याः समुपेक्षामयीत्वं प्रपञ्चितं संप्रार्थनामयीत्वं कथ्यते । इदमेव श्लेषार्थत्तयाऽग्रेऽपि प्रतिश्लोकं बोध्यम् । तथाहि—हे महाभागाः महान् भागो भाग्यं यासाम् । ईदृशी ज्यौत्स्नी, तत्रापीदृशं वनं, तत्रापीदृशं वो नवयौवनादि, तत्रापी दृशोऽनुवर्ती जनोऽयमनुकूल इति महदेव भाग्यमिति । अत्रेष्टप्रश्नरूपं प्रार्थनासोपानमाह—कच्चिद्वो युष्माकं स्वागतम् । प्रार्थनामाह—वो युष्माकं किं प्रियं करवाणि अतो यद्भवतीनां हृद्गतं किमपि प्रियमस्ति तदेव मम प्रार्थनीयमित्यर्थः । तत्र निरुत्तरा वीक्ष्य पुनः प्रार्थनार्थं सोपानांतरमाह—व्रजस्येति । प्रार्थनामाह—ब्रूतेति । मा लज्जतेति भावः ॥ १८ ॥ गोपांगनानां मंदहसितं स्मितम् । रजनी व्यभिचारिजनानुरंजन्यप्येषा घोराणां भयदानां

रूपं प्रकाशो यस्यां सा । तदेवाह—घोरसत्त्वा व्याघ्राद्यास्तैर्निषेविता । यद्वा—रात्रिचरत्वाद्घोरसत्त्वा राक्षसा वा । स्त्रीभिः भीरुस्वभावाभिः । यद्वा—घोरसत्त्वैरस्माभिः यष्टिकंबलधारिभिः निसेविता।सुमध्यमाः क्षीणकटिप्रदेशाः। न गोपयोग्या इति संबुद्ध्यभिप्रायः, प्रार्थनापरमिदम् । तांस्त्यक्त्वा मां सेवध्वमित्याभिप्रायः ॥ द्वितीयोऽर्थः—उदितपूर्णचंद्रा जनानुरंजनी अघोररूपा । अघोरसत्त्वाः योगिनस्तैर्जनसंबाधाभावान्निषेविता । तस्माद्व्रजं प्रति न यात इह स्थेयम् । अन्यत्र तिष्ठंतु नाम मत्पार्श्वे स्त्रीभिर्न स्थेयं ममाबालब्रह्मचारित्वेन स्त्रीसंगपरिहारात् ॥ * ॥ हन्तहन्त कुलधर्मधैर्यलज्जादिकं ध्वंसयित्वा प्रतिदिनमस्मानुपभुंजानोऽयमद्य वेणुनादेनाकृष्यानीय कारणं पृच्छतीत्यपांगचालनैरेव परस्परमाचक्षाणासु तासु सत्यं देवपूजोपयोगिरात्रिविकाशिपुष्पाहरणार्थमागच्छाम इति किं लतास्वपाङ्गनिक्षेपेण ब्रूध्वे, अयुक्तमिदं कालदेशपात्रानौचित्यादित्याह—रजनीति । एषा चंद्रिकाबहुलापि घोररूपा रात्रित्वादेवेति वल्लीमूलपल्लवादिषु सूक्ष्मसर्पवृश्चिकादेर्दुर्लक्ष्यत्वात्पुष्पाहरणस्य कालोऽयमनुचित इति भावः । घोरसत्त्वा व्याघ्रादयस्तैर्निषेवितेति कालसंबंधेन वृंदावनदेशोऽप्ययमनुचित इति भावः । तस्माद्व्रजं प्रति यात । ननु क्षणं विश्रम्य यास्यामस्तत्राह—नेह स्त्रीभिः स्थेयमिति । कालदेशसंबंधेन युष्मल्लक्षणानि पात्राण्यप्यनुचितानीति भावः । तत्रापि हे सुमध्यमा इति । यूयं युवतयः सुंदर्यः स्थ अहं च सुंदरो युवैवात्रास्मि, यद्यपि यूयं परमसाध्व्य एव अहं च "कृष्णो ब्रह्मचारी" इति गोपालतापिनीश्रुतिप्रामाण्येन ब्रह्मचार्येव, सहावस्थानेऽपि न कश्चिद्दोषस्तदपि मनः खल्वविश्वास्यं युष्माकं मम चेति भावः । एवं[1] व्यंजितौत्सुक्यं श्लिष्टार्थेनापि स्पष्टी भवति । तद्यथा—आगमनकारणं लज्जया न ब्रूध्वे चेन्मा बूत तदहं जानाम्येव तस्मात्तत्त्वं शृणुतेत्याह—रंजयतीति रजन्येषा ज्योत्स्नामयत्वादघोररूपा, तस्मादघोरैः सत्त्वैर्मृगादिभिरेव वृंदावनस्वभावेनाहिंस्रत्वाद्व्याघ्रादिभिरपि वा निषेवितेति । तेनात्र न भेतव्यमिति भावः । यद्वा—नात्र स्वस्वपत्यादिभ्यो भेतव्यं यतो घोरसत्त्वनिषेवितेति । तेऽत्र नागमिष्यन्तीति भावः । अतो व्रजं प्रति न यात इह मदंतिके स्थेयम् । कुतः—स्त्रीभिः । किं स्त्रीमात्रमेव स्वांतिके स्थापयसीत्यत आह—हे सुमध्यमा इति । सौंदर्ये तारुण्ये च सति याः स्त्रियः शोभनमध्यदेशा भवन्ति ताभिर्भवतीभिरेव नान्याभिः स्थेयमिति भावः । एवमुपेक्षामयाः अपेक्षामयाश्चार्थाः कृष्णोक्तीनां ज्ञेयाः ॥ अत्र **तोषिणी**—एषा प्रत्यक्षेति तासां तर्कवाग्मितामाशंक्य द्रढयति । ततः कुलवधूनां बहिर्वनादावागमनं नोचितमिति भावः । ननु समुदित्य बह्वीनामागमनं न दोषभाक्, यदि च दोषभाक् तर्हि व्रजेऽपि किमेषा रजनी नास्ति तत्राह—घोरेति । इह वन एव घोरं रूपं तामसस्वभावाभिव्यक्तिर्यस्या न तु व्रजे इहाऽसहायत्वात् तत्र मम सहायत्वादिति भावः । तथा इह घोरैः प्राणिभिर्नितरां सेविता व्याप्ता चातो व्रजं प्रति यात निवृत्य गच्छत नात्र विलंबो युक्त इत्याशयेनाह—नेति । ननु तर्हि कथमत्र भवता स्थीयते तत्राह—स्त्रीभिरिति । न तु स्त्रिय इव पुरुषा अल्पसत्त्वा इति भावः । किञ्च हे सुमध्यमा इति । 'यत्राकृतिस्तत्र गुणा वसन्ति' इति न्यायेन सुंदरीणां गुणवतीनां च भवतीनां नात्रागमनं युक्तमिति भावः । अन्यत्तैः । यद्वा—ननु रसिकशेखर भवानिव वयमप्यत्र विहर्तुं पुष्पाद्याहर्तुं वा समागतास्स्म इति छद्मना तासामवस्थितिमाशंक्याह—रजनीति । एषा रजन्येव न तु दिनम् । ननु रात्रिविलासिनस्ततः को नाम दोषस्तत्राह—घोरेति । हे कमललोचन ज्यौत्स्नीयं रात्रिस्तत्राह—घोरसत्त्वेति । श्लेषेण यूयं यूथशो बह्व्यो व्रजं तत्र स्थितान्स्वपतीन्प्रति यात भजत, एकाकिना मया बह्वीनां प्रियाचरणस्याशक्यत्वात् । ततोत्र न स्थेयमिति नर्मविशेषः । ननु भीरुप्रवर घोरसत्त्वेभ्योऽस्माकं न भयं तत्राह—सुमध्यमाः हे कृशमध्याः, तनुमध्यत्वात् कृशांगीनामबलानां बलिष्ठेभ्यो भयं स्यादेवेति भावः । वस्तुतश्चैतत्तासां स्वविषयकभावस्य व्यंजनार्थम् नर्मगोत्कंठावर्द्धनार्थञ्च । श्लेषार्थश्चायम्—भयसंभावनया च निजाभीष्टं मा निवर्त्तयतेत्याह—प्रथमार्द्धेन । एषा उदितपूर्णचन्द्रा जनान् रंजयतीति रजनी घोररूपेत्यादिकयोः, तस्मादत्र न कोऽप्यायास्यतीति भावः । तस्मादिह मम वीरस्यैव सन्निधौ स्थेयम् । यद्वा—अघोररूपा तमोपगमात् । अघोरैर्वृंदावनस्वभावेन मिथो मित्रत्वप्राप्त्या भयाऽजनकैरेव सत्त्वैः सर्वप्राणिभिः दिवसप्रायत्वात्तस्या ज्योत्स्नाऽघोरैः सत्त्वैर्भ्रमरकोकिलादिभिरेव वा निषेविता । यद्वा—घोरं दुष्टानां भयजनकम् । अकारविश्लेषेण केषांचिदपि भयाऽजनकं वा सत्त्वं बलं यस्य मम तेन निषेवितेति बालाश्वासनार्थम् । तच्छ्रुत्वा पृष्ठवर्तिनीः सस्मितं परावृत्य पश्यंतीः प्रत्याह—उत्तरार्धेन । अतः सर्वदा व्रजं प्रति यात न, इहैव स्थेयं

[1] रजन्याः ।

**मातरः पितरः पुत्रा भ्रातरः पतयश्च वः ॥ विचिन्वन्ति ह्यपश्यंतो मा कृध्वं बंधुसाध्वसम् ॥ २० ॥**
**दृष्टं वनं कुसुमितं राकेशकररंजितम् ॥ यमुनानिललीलैजत्तरुपल्लवशोभितम् ॥ २१ ॥**

किं च मातर इति । विचिन्वंति मृगयंते । बंधूनां साध्वसं भयं मा कृध्वं मा कुरुतेत्यर्थः ॥ २० ॥ ईषत्प्रणयकोपेनान्यतो विलोकयंतीः प्रत्याह । दृष्टमिति ।

युष्माभिः । कुतः—स्त्रीभिः । स्त्रीजातीनामीदृशस्थान एव स्थातुं योग्यत्वादित्यर्थः । तत्रापि च हे सुमध्यमाः परमसुंदरत्वान्मदंतिक एवात्र स्थातुं युज्यत एवेत्यर्थ इति ॥ १९ ॥ अन्यदप्याह—इह स्थितौ भवद्बंधूनां क्लेशो भवेदित्याह—किंचेति । मातरः स्नेहवशात्, पितरो निंदाभयात्, पुत्रा बालाः स्तन्यादिहेतोः, भ्रातरोऽपि निंदाभयादेव, पतयो व्यभिचारशङ्कया । 'भीतिर्भीः साध्वसं भयम्' इत्यमरः । बंधूनां मध्ये साधोः साधुत्वस्य असं क्षेपं मा कुरुत, न हि साध्वीनां रात्रौ बहिर्गमनमुचितामिति भावः । इत्यर्थ इति । साध्वसपरिगामित्वात्परस्मैपदप्रयोगेणार्थः कार्य इति तात्पर्यम् । प्रार्थनायां तु तेऽपश्यन्तो विचिन्वंतीति बंधुभयप्रयुक्तं साध्वसं मा कृध्वम् मा कुरुध्वं, यतस्ते मोहिताः । किंचात्रागता युष्मान्मत्पार्श्वे पश्येयुस्तदा युष्माकं मम च लज्जाभयं स्यादेव । अपश्यन्तो मा विचिन्वंति अतो बंधुभ्यो भयं मा कुरुत । माङ् उभयत्रान्वेति ॥ * ॥ ननु रात्रावपि वनेऽपि युवतीनामपि संघशो गमने दोषो न जनैरुद्घोष्यते—सत्यम्, तदपि बंधवो भवतीरनिष्टशंकया सांप्रतमवश्यमन्विष्यंत्यतस्तान्मा व्याकुलयतेत्याह—मातर इति । वो युष्मान्विचिन्वंति मृगयंते । अत्र पुत्रा द्वित्रिमास्या एव नान्वेषणे चतुराः 'पाययन्तः शिशून्पयः' इति, 'क्रंदंति वत्सा बालाश्च' इति पूर्वापरोक्तेः, तदपि भगवता स्वस्मिंस्तत्तद्विशेषज्ञानाभावमभिनीतवतैवोक्तमित्यदोषः । अतो बंधूनां साध्वसं युष्मद्दर्शनोत्थं भयं मा कृढं मोत्पादयत । पक्षेऽपश्यन्तो विचिन्वंत्येव न त्वतिदूरे, निबिडे वनेऽस्मिन् वो न द्रक्ष्यन्त्यतो बंधुभ्यः सकाशाद्भयं मा कृढ्वं स्वच्छन्देन मया सह रात्रौ विलसतेति भावः ॥ अत्र **तोषिणी**—ननु पुरुषसिंह परमबलीयसस्तवांतिके स्थितानां न कुतो भयमित्याशंक्य सशंकमाह—मातर इति । अत्र मातरः पितरो भ्रातर इति कुमारिका दृष्ट्वा भणितम् । व्यूढतया प्रतीता दृष्ट्वा पतयः पुत्रा इति यदुक्तं तत्खलु परिहासार्थं कल्पनामात्रमिति स्थापयिष्यते । च शब्दः उक्त समुच्चये । हि निश्चये । अतो यदि कदाचित्तेष्वेकोऽप्यत्रागत्य मत्पार्श्वे युष्मान्पश्येत्तदोभयेषामपि लज्जाभये स्यातामिति भावः । अतोऽत्रावस्थित्या निजबंधुभ्यो मम आत्मनश्च साध्वसं भयं मा कृढ्वं नोत्पादयत । यद्वा—महामंत्राभिज्ञ ते सुदुर्गमवनमध्ये नागमिष्यंति आगता अपि न द्रक्ष्यन्त्येव तत्राह—युष्माकमप्राप्त्या बंधूनामनिष्टाऽऽशंकातो भयं नोत्पादयत, 'साध्व्यो हि बंधुवत्सलाः' इति न्यायात् । अतस्तेषु स्नेहेन च निवर्त्तध्वामिति भावः । अथ वा श्लोकद्वयेऽस्मिन्प्रत्यावृत्त्येदं व्याख्येयम्—हे सुव्रत त्वत्पार्श्वास्थिता न कुतश्चिदपि बिभीम इत्याशंक्य चक्षुर्मुद्रणपूर्वकं साभिनयमाह—नेहेति । मत्पार्श्वे स्त्रीभिर्न स्थेयमाबालब्रह्मचारित्वेन मम स्त्रीसंगपरिहारादित्यर्थः । अहो बत बालिकानां वृद्धानां वा सहवासे दोषोऽपि न किल घटेत; यूयं तु नवयौवनारूढा इत्याह—हे सुमध्यमा इति । ननु महाकपटपटो ! व्रजेऽस्माभिः संगो भवता बहुधा भवत्येव तत्राह—इहेति । इह निर्जनवने समये च प्रदोष इति दोषविशेषं श्रीमुखभंगिविशेषेण सूचयति । अत इहेदानीं युष्मत्संगान्मम दुष्कीर्तिरेव बाढं स्यादिति सर्वथा प्रयातैवेति । ननु सुप्रतिष्ठ ! न कोऽपि ज्ञास्यतीति दुष्कीर्तेर्मा भैषीस्तत्राह—मातर इति । अतोऽत्रागता नूनं द्रक्ष्यन्त्येवेति भावः । अतो मद्बंधूनां म दुष्कीर्तेर्भयं मा संपादयत । अन्यत्समानम् । वस्तुतस्तु तेभ्यो भयोत्पादनेन वंशीवादनस्थानात् दूरे सुगुप्तस्थाने नेतुं तथोक्तमिति । श्लेषार्थश्चायम्—न चात्र स्वस्वबंधुजनागमनमाशंक्यम्, यतः मातर इत्यादि । एवार्थे हिशब्दः । गहने वनेऽस्मिन्नंधा इवापश्यंत एव विचिन्वंति, अतो बहुमार्गणेनापि न द्रक्ष्यंतीत्यर्थः । ततश्च बंधुभ्यो भयं मा कुरुतेति ॥ २० ॥ अन्यतो वनम् । उपेक्षायाम्—भवतीभिर्वनं दृष्टम् । किंभूतम्—कुसुमानि संजातान्यस्येति हासो लक्ष्यते भवतीनामनुचिताचारं वीक्ष्य वनमपि हसतीति भावः । ततोऽपि परावृत्याऽऽकाशदत्तदृष्टीर्दैवमुपालंभंतीरिवालक्ष्याह—राकेति । राकेशोऽपि वनेनैकरसं योगं कृत्वा हसत्येव । पुनरतिकोपेन यमुनाभिमुखीरालक्ष्याह—यमुनेति । यमुनापि समीरकंपितनीरतरुपल्लवचालनच्छलेन नेह स्थेयमित्युपदिशतीति

१ मा कृढ्वमित्येव पाठ एतन्मते ।

**तद्यात मा चिरं गोष्ठं शुश्रूषध्वं पतीन्सतीः ॥ क्रंदंति वत्सा बालाश्च तान्पाययत दुह्यत ॥ २२ ॥**

**राकेशस्य पूर्णचंद्रस्य करै रंजितं यमुनास्पर्शिनोऽनिलस्य लीला मंदगतिस्तया एजंतः कंपमानास्तरूणां पल्लवास्तैः शोभितम् ॥ २१ ॥ सतीः हे सत्यः ॥ २२ ॥**

भावः। पक्षेऽतीवशोभनरमणोपयोगि स्थलमिदं ततो रमणं कुरुतेति द्योतयति ॥ * ॥ ततश्च ता लज्जया परितो विलोकयंतीराह—दुष्टमिति। आः ! ज्ञातं वनदर्शनार्थमागता इति। ततश्च तासामूर्द्ध्वावलोकने सत्याह—राकेशेति। यमुनादिगवलोकने सत्याह—यमुनास्पर्शिनोऽनिलस्य लीला मंदगतिस्तया एजन्तः कंपमानास्तरूणां पल्लवाः पुष्पितास्तैः शोभितमित्यभीप्सितं वनादिदर्शनमपि निर्व्यूढमतो मा विलंबध्वमिति भावः। पक्षे वृंदावनमिदं सर्वोत्कृष्टं, तत्रापि पूर्णचंद्रा रजनी, तत्रापि चतुर्दिक्षु यमुना, तत्रापि शैत्यमांद्यसौगन्ध्यवन्तोऽनिला इत्युद्दीपनविभावा एते, आलंबनविभावश्चाहं वर्त्त एवेत्यद्य युष्माकं रसिकता परीक्षिता भविष्यतीति भावः ॥ अत्र **तोषिणी**—ततस्तासां प्रणयकोपेन यदन्यतो दर्शनं तदन्यथोत्प्रेक्ष्यते—दृष्टमिति। तद्यातेति परेणान्वयः। कुसुमितमित्यादिविशेषणैर्दृश्यतोक्ता। तत्र चेषत्प्रणयकोपतो वनावलोकने दृष्टं वनमित्युक्तम्। तत उर्द्ध्वावलोकने च राकेशकररंजितमिति। ततः कालिंदीतीरावलोकने तु यमुनेति विवेचनीयम्। अन्यत्तैः। यद्वा—ननु महामोहनवाक्याद्यतिक्रमेण तेऽस्माभिरुपेक्षिता एवेति कुतो भयमिति चेत्तर्हि तादृशप्रयत्नेन रात्रावागमनस्य किं नाम प्रयोजनमिति सकैतवं क्षणं ध्यात्वा—आः ! ज्ञातम्, दिष्ट्या पूर्णचंद्रायां रात्रौ मदीयश्रीवृंदावनशोभानिरीक्षणार्थमागतामिति। भवतु तच्च संपन्नमेवेत्यंगुल्यादिना दर्शयन्सलीलमाह—दृष्टमिति। अर्थः स एव। वस्तुतस्तु साक्षात्तथा तादृशवनादिप्रदर्शनेन भावमेवं विवर्द्धयतीति। श्लेषार्थश्चायम्—न केवलं तद्भयाभाव एव अपि तु परमसुखनिधानत्वमप्यत्रास्तीति भावोद्दीपनाय स्वयं दर्शयाति—दृष्टमिति। ईदृशसर्वगुणयुक्तं वनं दृष्टमेव तत्तस्माद्घोषं यातेत्यन्वय इति ॥ २१ ॥ यतो युष्मानपश्यंतो बंधवो भयमाप्नुवन्ति ततो हेतोर्यूयं मा चिरं शीघ्रं गोष्ठं यात, तान्वत्सान् पाययत गवां पार्श्वे त्यजत, बालांश्च दुह्यत स्वांगरसं तेषु पूरयत। दैवादिकत्वं दुहेरार्षम्। पक्षे माशब्दस्य सर्वत्रान्वयः। गोष्ठं मा यात किंभूतं चिरं चिरानुभूतमित्यर्थः। पतीन्मा शुश्रूषध्वं यतस्ते सुप्ताः। वत्सा मा क्रंदंत्यतस्तान्मा पाययत। बालाश्च मा क्रंदंति तानपि मा दुह्यतेत्यनेन ध्वनितमत्रैव रमध्वमिति ॥ * ॥ तत्तस्मान्मा चिरं यात, अपि तु शीघ्रमेव यातेत्यर्थः। सतीः पतिव्रता अपि शुश्रूषध्वम्, तद्धर्मग्रहणार्थं ता अपि भजनीया एवेति। इति परोढा उक्त्वा कुमारीः प्राह—वत्सा गवां क्रंदंति तान् दुह्यत दोहयत। मुनिचरीः प्राह—बालाः क्रन्दान्ति तान्पाययत। पक्षे—तत्तस्माच्चिरं समग्तामपि रात्रिं व्याप्य मा यात मया सह रमध्वमिति भावः। पतीन्साध्वश्चि मा शुश्रूषध्वं विधात्रा दत्तस्यैतादृशसौंदर्यस्य यौवनस्य च वैयर्थ्यप्रापणानौचित्यादिति भावः। एवं मा दोहयत मा पाययत मदनुरागिणीनां भवतीनां किं तैरिति भावः ॥ अत्र **तोषिणी**—तत्तस्माद्वनशोभादर्शनेन निजमनोरथपूरणान्मदोद्वेगीतिदधिमंथनगवादिशब्दैर्घोषयति शब्दायते इति घोषः। श्लेषेण तु सर्वेषां सर्ववृत्तं घोषयतीति तं गोपाऽऽवासं संयात। 'गोष्टम्' इति क्वचित्पाठः। तत्रैव भवतीनां सर्वा सामग्रीति तदेव गन्तुं युज्यत इति भावः। मा चिरम् अचिरादेवेत्यर्थः। यद्वा—तत्र विलंबं मा कुरुतेत्यर्थः। किमर्थम् ?, पतिं शुश्रूषध्वं सेवध्वम्। कुतः—सतीः। हे सत्यः अन्यथा साध्वीत्वभंगः स्यात्। अतः परपुरुषस्य मम पार्श्वे युष्माकमवस्थानमयुक्तमिति भावः। ननु परमसेव्यत्वत्सेवामसहमानाः सदाऽसूयावंतो दुष्टतरास्तेऽस्माभिः परित्यक्ता एव, पतिव्रतात्वमपि त्वत्पादाब्जं निर्मंछनीकृत्य दूरतः क्षिप्तमित्याशंक्य सकरुणमिव पक्षान्तरमाश्रयन् वत्सादिषु स्नेहं जनयति—क्रंदंतीति। अतस्तान्वत्सान्पाययत बालार्थं च दुग्धं दुह्यत दोहयत, एतच्च तत्तत्संनिधानविश्रंभितत्तत्प्रियगवाद्यपेक्षया। अत्रेदं तत्त्वम्—ताः खलूद्दिश्य "स वो हि स्वामी भवति" इति गोपालतापन्याम् "श्रियः कान्ताः कान्तः परमपुरुषः" इति ब्रह्मसंहितायाम्। दशाक्षरादिमंत्राश्च तथा श्रुत्यागमादौ कृष्णवध्व इति चात्रैव तदेव श्रीकृष्णैककान्तानां परमलक्ष्मीणां तासामन्यत्र विवाहो न संभवति तत्प्रतीतिश्च तासामुत्कंठावर्द्धनार्थम् 'योगमायामुपाश्रितः' इत्यादौ तदर्थं निर्दिष्टया योगमाययैवेति गम्यते। यैव खलु तत्प्रतिरूपकल्पनया तत्पतिंमन्यांस्तान्वंचयति। वक्ष्यते हि—'नासूयन्खलु कृष्णाय' इत्यादि। ततस्तैः सहांगसंगाभावेनाऽजातापत्या एव केवलं स्नेहविशेषेण भ्रातृप्रभतिपुत्रान् यान् पालयन्ति ते एव पुत्रा इति उच्यन्ते, तेषामपि लोके पुत्रतया व्यवहाराद्विशेषतस्तथा पाल्यमानत्वात्। श्रीबलदेवसांबावस्थु

**अथ वा मदभिस्नेहाद्भवत्यो यंत्रिताशयाः ॥ आगता ह्युपपन्नं वः प्रीयंते मयि जंतवः ॥ २३ ॥**

**संरंभक्षुभितदृष्टीः प्रत्याह । अथ वेति । यंत्रिताशया वशीकृतचित्ताः । उपपन्नं युक्तम् । प्रीयंते प्रीता भवंति ॥ २३ ॥**

दिश्य " ससुतः सस्नुषः प्रायात्सुहृद्भिरभिनंदितः " इति श्रीशुकवाक्येऽपि प्रयुक्तत्वात् । ततः स्तन्याभावेन गोदुग्धमेव तान्पाययंतीति तान्पाययत दुह्यतेत्युच्यते । अत एव मुनिनाप्युक्तम्–'पाययन्त्यः शिशून्पयः ' इत्यत्र शिशूनित्येव पय इत्येव च न तु सुतान्स्तनमिति । यदि च तासामुदरजा एव ते स्युस्तदा रासनृत्यनायिकानामादिरसनायिकानां च तासां वैरूप्येण तस्य रासनृत्यस्य रसस्य च वैरूप्यं स्यात् । 'मातरः पितरः पुत्राः' इत्यत्र श्रीभगवद्वाक्ये केषांचिद्रात्रावपि वनेऽपि मात्रादिविचेतृत्वेन कासांचिदर्द्धजरतीत्वमप्यायाति तत्र पुनरतीव तत्स्यात् । तत्तु श्रीवैशंपायनस्यासंमतम्–"युवतीर्गोपकन्याश्च रात्रौ संकाल्य कालवित्" इत्यनेन । तथा तदिदं तासामालंबनरूपाणामुद्दीपनसौष्ठवमपि वर्णयता मुनीन्द्रेण न मतम् । 'भगवानापि ता रात्रीः' इत्यादावुद्दीपनसौष्ठवेनालंबनरूपाणां तासां सौष्ठवमनुस्मृत्य रन्तुं मनश्चक्र इति च गमितम् । वक्ष्यते च तासां सौष्ठवं श्रीभगवंतमपेक्ष्य प्रौढत्वं च "मध्ये मणीनां हैमानां महामारकतो यथा" इत्यनेन, 'व्यरोचतैणांक इवोडुभिर्वृतः' इत्यनेन, 'तडित इव ता मेघचक्रे विरेजुः' इत्यनेन च । अत एव 'मातरः पितरः पुत्राः' इत्यादिकं च कल्पनामयमेव जल्पितम्, परिहास वचनं वा 'वाचःपेशैर्विमोहयन्' इत्यत्र 'प्रहस्य सदयं गोपीः' इत्यत्र च परिहासस्य स्फुटतरत्वात् । तस्माच्छ्रीभगवतस्तासां सपुत्रतया निर्देशस्तु परिहासपर एव न तु दोषोद्धारपरः । दोषोद्धारे 'निंदामि च पिबामि च' इति न्यायेन च तासां स्वीकारे परमवैरस्यमेव च स्यात् । आस्तां तावत्तासां स्वयं दोषोद्धारः तादृशस्यालंबनदोषस्यास्तित्वमात्रेऽपि रसव्याघातः स्यात् । तच्चान्यत्रापि सन्नायके कविभिर्वर्जनीयत्वेन स्वीकृते न संभवति किंमुत परमपुरुषोत्तमे महाकविवर्णनीये लीलारसविशेषवर्षणार्थमवतीर्णे तस्मिन् । वक्ष्यते च–"भजते तादृशीः क्रीडा यां श्रुत्वा तत्परो भवेत्" इति, 'सिषेव आत्मन्यवरुद्धसौरतः । सर्वाः शरत्काव्यकथारसाश्रयाः ' इति च । तस्मात्पतयोप्यासां मायामात्रप्रतीताः, पुत्राश्च गौणार्था इति । श्लेषार्थश्चायम्–तत्तस्माद्वंधुभ्यः साध्वसाभावात् वनशोभारतिसामग्रीसद्भावाच्च अचिरं शीघ्रं मा यात । यदि यास्यथ तदा विलंबेन रात्र्यंत एव यास्यथेत्यर्थः । चकारान्माशब्दस्याग्रेऽपि सर्वत्र संबंधः–पतीन् मा शुश्रूषध्वम् । सतीः साध्वीर्मा शुश्रूषध्वं न सेवध्वम्, तत्पदवीमपि न यातेत्यर्थः । स्वातंत्र्यादिसुखभंगादिति च नर्मैव । वत्सा बालाश्च मा क्रंदंति तस्मान्मा पाययत मा दुह्यत चेति स्वातंत्र्यं सूचितम् ॥ २२ ॥ संरंभः कोपावेशस्तेन क्षुभितदृष्टीर्भीतेक्षणाः । अथ वेति निपातद्वयं संभ्रमे मंगले वा । मयि विषये जंतवो जीवमात्राणि । अतो रमध्वमिति पक्षः ॥ * ॥ अथ वेति । हंत मया वृथैव तान्यागमनकारणानि कल्पितान्यधुनैव कारणमवगतमित्याह–मयि योऽभि सर्वतो भावेन स्नेहस्तस्मात् यंत्रिताशया वशीकृतचित्ता अत एवागतास्तदुपपन्नं मद्दर्शन लाभात् सिद्धम्, यतो मयि जंतवः प्राणिमात्राणि प्रीयन्ते इत्यात्पत्तिकं मे सौभाग्यं न त्वौपाधिकमिति भावः । तेन भवत्यो मयि प्रीतिसामान्यवत्य एव न तु कामोपाधिकप्रीतिविशेषवत्य इति ध्वनितम् । पक्षे–मदभिस्नेहः कांतभावमयः प्रेमा तस्माद्धेतोर्यैत्रीकृत आशयो याभिस्ताः । भवतीनां मनसा यंत्रेणैवाहमाकृष्टो वर्ते इत्यर्थः । तत् आगमनमुपपन्नमुचितमेव, न तूपपत्तिरहितमित्यर्थः । मयि जंतवोऽपि प्रीयंते किमुत भाववत्यो भवत्य इति भावः ॥ अत्र **तोषिणी**–अथ संरंभक्षुभितदृष्टीस्ता निवर्त्तयितुमिव जंतुमात्रसाधारणतानिर्देशेनातिक्षोभयन्नाह–अथ वेति । पक्षांतरमिदम् 'दृष्टं वनम्' इत्यादिनिरसनापेक्षया । मयि योऽभिस्नेहः प्रीतिसामान्यातिशयः तस्मादिति । रत्यर्थः पुंस्त्रीभावविशेषो न गृहीतः विशेषेणाभावात् । अत एव महौदास्यमाह–हि यतः सर्वेऽपि प्राणिनो मयि प्रीतिं कुर्वन्तीति । मदभिस्नेहादिति साक्षादुक्त्या तमपि शिथिलयति अत । एव गौरवेण भवत्य इति । अन्यत्तैः । यद्वा–अहो बत परित्यक्ता एव ते सर्वे तत्किं पुनस्तन्नामग्रहणेनेत्याशंक्य सद्भावं पक्षांतरमाह–अथ वेति । अर्थस्तथैव । वस्तुतस्तु एवमौदासीन्यं चातुर्यभंग्या भावविवर्द्धनार्थमेवेति । श्लेषार्थश्चायम्–एवं यद्यप्यन्यप्रयोजनायागतास्तथापि मत्प्रार्थनया कियंतं क्षणमत्र विश्राम्यतेत्येवमुक्त्वा पक्षांतरमाह–अथ वेति । अभिशब्देन स्नेहस्य सम्यक्त्वोक्त्या रत्याख्य भाव एव सूच्यते । ततश्च यदि वा मदभिस्नेहादागतास्तर्हि तदेतदुपपन्नं युक्तमेवेत्यर्थः । तत्र हेतुः–जन्तवः प्राणिमात्राणि । मम मत्संबंधे । प्रीयंते मयि प्रीता भवंतीत्यर्थः । ततस्तादृशभाववतीनां वा का वार्तेति भावः । अत एव प्रेमादरेण भवत्य इति । अतोऽधुना मया

**भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया ॥ तद्बंधूनां च कल्याण्यः प्रजानां चानुपोषणम् ॥ २४ ॥**
**दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा ॥ पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी ॥ २५ ॥**

**दृष्टादृष्टभयप्रदर्शनेन विवर्तयति भर्तुरित्यादिश्लोकत्रयेण ॥ २४ ॥ २५ ॥**

सह स्वच्छंदं रमध्वमिति भावः ॥ २३ ॥ शास्त्रसिद्धांतमाह—दृष्टं भयं राजनिंदादि, अदृष्टं नरकादि । अमायया अवंचनया । तद्बंधूनाम् भर्तृबंधूनां श्वशुरादीनाम् । प्रजानाम् संततीनां पालनं च परो धर्मः शास्त्रविहितत्वात् । अन्यथा कल्याणं नश्यतीति संबुद्ध्याह—हे कल्याण्य इति । भर्तुः सर्वपालकस्य मम अमायया नैष्कापट्येन सेवनं परोऽत्युत्तमो धर्मः, मम प्रसादहेतुत्वात् । "अमाययाऽनुवृत्त्या वै तुष्यत्यात्मप्रदो हरिः" इत्याद्युक्तेः । तद्बंधूनां देवानां ब्रह्मादीनां च यज्ञादिना सेवनं प्रजानां स्थावरजंगमानां यथोचितमनुपोषणं पानःपुन्येन पालनं स्थावराणां नित्यं जलादिप्रसेचनेन जंगमानामन्नवस्त्रादिप्रदानेनेत्यर्थः ॥ * ॥ ननु भवदभिस्नेहवत्यो वयं भवाम इति चेत्—जानामि । तर्हि तद्यात गोष्ठमिति मुहुः किं ब्रवीषि, न हि स्नेहाश्रयो जनः स्नेहविषयं जनं त्यक्तुं शक्नुयात्—सत्यम्, येन धर्मः सिध्येत्तदेव स्नेहवतापि व्रजजनेन कर्तव्यमिति शास्त्रम् । अत एतद्ब्रवीमीत्याह—भर्तुरिति । पर उत्कृष्टः । अमाययेति न तु पुंश्चलीत्वे सतीत्यर्थः । तद्बंधूनाम् श्वश्र्वादीनाम् । पक्षे स्त्रीणां प्रस्तुतत्वात् स्त्रीविशेषाणां व्रजसुंदरीणां भवतीनामित्यर्थः । भर्तुः शुश्रूषणं परो धर्मो न त्वात्मीयोऽतः स नानुष्ठेय इति भावः । यदुक्तम्—"विधर्मः परधर्मश्च आभास उपमाछलः । अधर्मशाखाः पंचेमा धर्मज्ञोऽधर्मवत्त्यजेत् ॥" इति । मम विष्णुत्वाद्भवतीनां च वैष्णवीत्वान्मद्भजनमेव भवतीनां स्वधर्मोऽन्यस्तु परधर्म एव । "धर्मान्संत्यज्य यः सर्वान्मां भजेत्स च सत्तमः" इति धर्मांतरत्यागपूर्वकस्य मद्भजनस्य विधिरिति भावः ॥ अत्र **तोषिणी**—ननु यद्यस्माकं भवदभिस्नेहो निश्चितस्तदा भवच्छुश्रूषाऽपि युक्तेत्याशंक्य धर्मशास्त्रेण भापयति—भर्तुरिति त्रिभिः । भर्त्रादीनामेव शुश्रूषणादिकं धर्मः न तु तादितरेषामस्माकम्, स चान्यधर्मापेक्षया परः । ननु तदप्यस्माभिर्यथायुक्तं क्रियत एव तत्राह—अमाययैवेति । परपुरुषस्य मम भजने सकपटमेव स्यात्ततः सोऽपि दुष्येदिति भावः । कल्याण्यो हे साध्व्यस्तदेव युष्माकमुचितमिति भावः । एतच्च कैतवेन प्रोत्साहनम् । वस्तुतस्तूपहास एव तस्य परमधर्मत्वाभावात् । "एतावानेव लोकेऽस्मिन्पुंसां धर्मः परः स्मृतः । भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥" इति श्रीधर्मराजवाक्यादिति । श्लेषार्थश्चायम्—न केवलं मदभिस्नेहहेतोरेवोपपन्नमपि तु धर्महेतोरपीत्याह—भर्तुरिति । अमायया कल्याणीभिर्निजसद्भाववृत्तत्वेनैव न तु बलादापादितत्वेन । यो भर्ता तस्यैव शुश्रूषणं परो धर्मस्तथा तद्बंधूनां चेत्यादि । अन्यत्र परमधर्मविदा श्रीभीष्मेणांबायाः परित्यागाद्धर्मतो भर्तृत्वाऽसिद्धेः । तदेवं सद्भावावृतत्वेन ते मायया कपटेनैव भर्तारः सद्भाववृत्तत्वेन त्वहमेव सत्यभर्ता भवतीभिः शुश्रूषणीय इत्यर्थः । अत्र बाल्यमारभ्य भवतीनां हृदयमेव मम साक्षीति भावः । वस्तुतश्च स एष एवार्थः स्थापयिष्यते ॥२४॥ पत्युः दौश्शील्यादिसत्त्वेऽपि स्त्रीभिस्त्यागो नोचित इत्याह—दुःशील इति । दुःशीलः कलहादिज्ञानसंपन्नः । दुर्भगः निर्वीर्यः, कांतिहीनो वा । वृद्धः प्रवयाः । जडः कर्तव्याकर्तव्यज्ञानहीनः । रोगी भग्नांगोऽल्पांगो वा । यद्वा—कुष्ठादिव्याध्यार्तः । दौशील्यादिसत्त्वेऽपि ब्रह्महत्यादिपंचमहापातकरहितश्चेत्तर्हि शुचिरेवेति । "आ शुद्धेः संप्रतीक्ष्यो हि पतिः पातकदूषितः" इति याज्ञवल्क्योक्तेः । लोकेप्सुभिः स्वर्गादिफलेच्छुभिः । पक्षे—एतादृशोऽप्यहं चेत्तर्हि न त्याज्यः । पातीति पतिः तद्वत्त्वात् । किं वा पतिर्व्रजवासी युष्माभिर्न हातव्यो न गन्तव्यः । 'ओहाङ्—गतौ' ॥ * ॥ ननु भवदभिस्नेहवतीनामस्माकमननुरूपाः प्रतिकूललीला अरोचकास्ते पतयः कथं सेव्या भवन्त्वित्यत आह—दुःशील इति । अपातकीति 'पतिं त्वपतितं भजेत्' इति स्मृतेः । पतनहेतुपातकवानेव पतिस्त्याज्य इत्यर्थः । लोकेप्सुभिः पतिलोकसुखवांछावतीभिः । पक्षे—लोकेप्सुभिः इह लोके परलोके चातिक्षुद्रकीर्तिसुखाद्यपेक्षावतीभिरेव न हातव्यः, युष्माभिस्तु लोकद्वयाय जलांजलीन्दत्त्वा मन्माधुर्यसुखवारिधौ खेलंतीभिः प्रथमत एव पतिस्त्यक्त एव ॥ अत्र **तोषिणी**—ननु परोपदेशपंडित सर्वथा पतयः त्यक्ता एवाधुना किं तदीयशुश्रूषाद्युपदेशेन तत्राह—दुःशील इति । दुश्शीलः चौर्यादिरतः । दुर्भगः भाग्यादिहीनः, निष्फलोद्यम इत्यर्थः । वृद्धः जराभिभूतः । जडः कर्मादिषु सामर्थ्यहीनः । रोगी महारोगग्रस्तः । अधनोऽतिदरिद्रः, निजोदरभरणेऽप्यसमर्थ इत्यर्थः । अपिशब्दस्य प्रत्येकमन्वयः । दौश्शील्यादियुक्तोऽपि न हेयः, व्रजवासी तु सर्वसद्गुणयुक्त एवेति कथं

**अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम् ॥ जुगुप्सितं च सर्वत्र औपपत्यं कुलस्त्रियाः ॥ २६ ॥**

**फल्गु तुच्छं कृच्छ्रं दुःसंपाद्यम् औपपत्यं जारसौख्यम् ॥ २६ ॥**

त्याज्यः स्यादित्यपिशब्दार्थः । लोकेप्सुभिः लोकद्वयापेक्षावतीभिः । अन्यथेह लोके परत्र च दुःखमेवेत्यर्थः । तत्र च पातक्येव परित्याज्य इत्याह—अपातकीति । पातकं पतनहेतुः पापविशेषः । तथा च स्मृतिः ‘ पतिं त्वपतितं भजेत् ’ इति । अतोऽत्रत्यानां सर्वेषामपि पापमात्राभावान्न हातुं योग्य एवेति भावः । वस्तुतस्तु तासां निश्चितेऽपि दृढभावे उत्कंठावर्धनार्थमेव तथोक्तमिति । श्लेषार्थश्चायम्—तस्माद्वस्तुतोऽहमेव पतिरिति स्थिते दुःशीलेत्यादिवचनानुसारेण तत्तद्दोषयुक्तोऽपि पतिर्न हातव्य इति स्थिते निखिलकल्याणगुणयुक्तः पतिरहं कथं हातव्यस्ते पुनस्तत्तद्दोषयुक्ता न च पतय इति कथं न हातव्या इत्याह—दुःशील इत्यादि ॥ २५ ॥ कामस्य पुरुषार्थत्वेन पतिदोषेण तदप्राप्त्या जन्मनो नैष्फल्यापनुत्तये प्रकारांतरेण किं जन्मसाफल्यं न कार्यमिति चेत्—तत्र बाधकमाह । चोऽवधारणे । उपपतिः—पत्युः प्रतिनिधिरुपपतिर्जारः ‘ जारस्तूपपतिः समौ ’ इत्यमरः । तत्संबंधि कर्म ग्राम्यलक्षणं तत्कुलस्त्रियाः सर्वत्र पत्युरुत्तमाधममध्यमेषु पुरुषेषु जुगुप्सितं गर्हितमेवेत्यन्वयः । कथम्, तदुच्यते—अस्वर्ग्यम् स्वर्गविरोध्येव, प्रत्युत सप्तसूर्म्यादियातनाप्रदम् । किञ्च, अयशस्यम् इहामुत्र दुष्कीर्तिकरम् । तथापि न बहुलं फल्गु तुच्छफलम् । अल्पकालविषयत्वात्कादाचित्कत्वेनेत्यर्थः । कृच्छ्रमिति व्याख्यातं स्वामिपादैः । दुःसंपाद्यमिति कर्तुरतिश्रमसाध्यत्वात् । भयावहम् मरणादिभयकरम् । निधुवने तत्पत्यादिसमागमादिनेत्यर्थः । पक्षे—उप समीपे पतिर्यस्याः सोपपतिस्तस्या भावस्तत्त्वम्, अष्टयामं पतिसामीप्यम् । कु कुत्सितं लात्याददातीति कुला सा चासौ स्त्री च तस्या एव न तु मान्निष्ठानां युष्माकम् । ताराहल्यादीनां तु व्यभिचारादप्यौपपत्यं जुगुप्सितं न जातं पुनः पतिभिरंगीकरणादिति ॥ * ॥ मयि स्नेहसामान्यवत्यो भवत्यः स्वभावाद्भवन्त्येव किन्तु धर्मप्रतिकूलधर्मविशेषस्तु सर्वथैव त्याज्य इत्याह—अस्वर्ग्यमिति । मास्तु स्वर्ग इति चेत्—अयशस्यम् । यशोऽपि मा स्यादिति चेत्—फल्गु । मिथ्यैव ब्रूषे नेदं फल्गु सर्वोत्कृष्टत्वेनानुभूतत्वादिति चेत्—कृच्छ्रम्,—पत्यादिवारणकष्टमयम् । ननु “ वामता दुर्लभत्वं च स्त्रीणां या च निवारणा । तदेव पंचबाणस्य मन्ये परममायुधम् ॥ ” इति, “ दुःखमप्यधिकं चित्ते सुखत्वेनैव रज्यते ” इति च रसशास्त्रोक्तेः प्रत्युत तत्कृच्छ्रं रागवतीनामस्माकं सुखाशयहेतुरेवेति चेत्—भयावहम्, लोकशास्त्रनिषिद्धत्वादैहिकपारात्रिकभयप्रदम् । ननु “ यत्र निषेधविशेषः सुदुर्लभत्वं च यन्मृगाक्षीणाम् । तत्रैव नागराणां निर्भरमासज्जते हृदयम् ॥ ” इति रसशास्त्रोक्तेः प्रत्युत रसाधायकमेवैतदिति तत्राह—जुगुप्सितमिति । सर्वदेशे सर्वकाले औपपत्यमुपपतिकर्तृकं कर्म कुलस्त्रिया जुगुप्सितमिति । सर्वत्र तद्वती कुलस्त्री निंद्यत इत्यर्थः । तत्र यद्यपि स्वाभीष्टसिद्ध्या स्वनिंदापि सुसहैव तथापि मत्प्रणयास्पदानां युष्माकं निंदा मयापि कथमुत्पादनीयेति । अतो गोष्ठमेव यातेति भावः । पक्षे—सर्वत्रेति जुगुप्सितमिदं सार्वत्रिकमेव, प्रस्तुते तु मम नारायणसमत्वं गर्गमुखपरंपरया श्रुतमेव युष्माभिरित्यतो ममौपपत्येऽपि नैव निंदा । परमेश्वरत्वेन शुभाशुभकर्मातीतत्वादिति भावः ॥ अत्र **तोषिणी**—ननु श्रीव्रजयुवराज भवदाज्ञया नैव पतयस्त्याज्याः किं तु सदा नाम्नैव तेषां पतित्वं पतित्वव्यवहारस्तु त्वया सहैवास्तामित्याशंक्य तासां दीर्घाभीष्टनिंदनेन परमाप्रियमवहित्थया साभ्यसूयमिवाह—अस्वर्ग्यमिति । अस्वर्ग्यम् स्वर्गप्राप्तौ प्रतिकूलम् । अयि कामिन्यो दृष्टत्वाभावान्मास्तु स्वर्गापेक्षा इह लोके यशोऽपेक्षा त्वस्त्येव तद्बाधकं चेत्याह—अयशस्यमिति । पूर्वसंचितयशसोऽपि लोपकम् । ननु सुगुप्तमेवैतत् को नाम जानातु तत्राह—तथापि फल्गु तुच्छम् अस्थिरत्वात् । ननु भो अच्युत त्वया सहास्माकं तत्सुस्थिरमेव तत्राह—तथापि कृच्छ्रं दुःखसाध्यम् । ननु स्वैरसिंह व्रजे श्रीवृंदावने च स्वच्छंदविहरणात्सुखसाध्यमेव तत्राह—तथापि भयं परलोकात्कदाचित् स्वाम्यादिभ्यश्च तत् आ सम्यग्वहति प्रापयतीति तत् । ननु अंमृतनिर्मंछनीयमधुराधर त्वदपेक्षयास्माभिः सर्वमुपेक्षितमेवेति कुतोपि न भयं तत्राह—तथापि सर्वत्र स्वदेशपरदेशयोर्व्यवहारपरमार्थयोश्च जुगुप्सितं निन्दितम् । हि निश्चितम् । ननु तत्त्वज्ञेन्द्र निजाभीष्टसिद्ध्या जुगुप्सापि सुसहैव तत्राह—कुलस्त्रिया इति । जातावेकत्वम् । कुलकलंकतोऽपि कुलस्त्रीणां परमानुचितमिति सर्वथा परिहार्यमेवेति भावः । वस्तुतस्तु पूर्ववदुत्कंठावर्द्धनार्थमेवेति । श्लेषार्थश्चायम्—पूर्ववदेव

श्रवणाद्दर्शनाद्ध्यानान्मयि भावोऽनुकीर्तनात् ॥ न तथा संनिकर्षेण प्रतियात ततो गृहान् ॥ २७ ॥
श्रीशुक उवाच ॥ इति विप्रियमाकर्ण्य गोप्यो गोविंदभाषितम् ॥ विषण्णा भग्नसंकल्पाश्चितामापुर्दुरत्ययाम् ॥ २८ ॥

किं च श्रवणादिति ॥ २७ ॥ २८ ॥

धर्मोपात्तः पतिस्तद्विपरीतस्तूपपतिरिति । अथ च लोकेऽप्यन्यथा प्रसिद्धिमालक्ष्य स्मृतिवाक्यमिदं छलार्थतया नर्म व्यंजयति । उप समीपे पतिर्यस्याः सा उपपतिस्तस्या भाव औपपत्यम् । पत्युः सामीप्यमित्यर्थः । तत्सर्वथाऽस्वर्ग्यादिदोषयुक्तमिति । एवं भर्तुः शुश्रूषणमित्यत्र परः सर्वाधिक एवाऽधर्म इति व्याख्येयम् ॥ २६ ॥ स्वप्रीतिसाधनमाह—किञ्चेति । अन्यदाहुः—तव मुख्यभर्तृत्वात्त्वत्सेवनं जारसेवनवदस्वर्ग्यादि न किन्तु पतिसेवनतोऽपि मुख्यं स्वर्ग्यादिसाधनमेवेति चेत्—तथापि मच्छ्रवणादिना मयि भावो भक्तिस्स्यान्न तथा सन्निकर्षेणात्यंतसामीप्येन तेजस्विनामत्यंतसामीप्यं वह्निवद्भयंकरमिति तात्पर्यम् । अतो गृहानवाप्य मद्भक्तिर्विधेयेत्याह—प्रतियातेति । पक्षे—श्रवणादिना तथा न यथा संनिकर्षेण ततोऽगृहान् अकृतदारगमनान् प्रति यात भजत । किं वा गृहान्मदीयकुंजभवनानि विशतेत्यर्थः ॥ * ॥ ननु कथमन्यथा संभावयासि न वयं त्वदंगसंगार्थमागताः किन्तु गर्गोक्तिप्रामाण्यान्नारायणस्य समो नान्य इत्यतस्त्वामेव नारायणं ज्ञात्वा त्वद्भक्तिकामा वयमागतास्तदद्यतनीं रात्रिं स्वसमीप एवास्मान्स्थापयित्वा कृपया स्वचरणसरोजं परिचारयेति चेत्, तत्राह—श्रवणादिति । शुद्धभक्ताः खलु सामीप्यसालोक्यादिकमपि न कामयन्ते यथा श्रवणकीर्त्तनादिकमिति प्रसिद्धिर्भवतीभिर्वैष्णवीभिः श्रुतैवेति भावः । पक्षे—श्रवणादिभ्यो भावः कंदर्पस्तथा न भवति यथा सन्निकर्षेणेत्यतो गृहान्प्रति न यातेति तत्र आवृत्त्यान्वयः । यद्वा—नञ्पर्यायस्याकारस्य प्रश्लेषेणाऽऽगृहान्, न गृहान्प्रति यातेत्यर्थः॥२७॥इति श्रुत्वा भगवन्पुनः किमुक्तं ताभिरिति पृच्छंतं परीक्षितं श्रीशुक उवाचेति । इतीत्थम् ' प्रतियात, नेह स्थेयं सुमध्यमाः' इतिप्रकारम् । विप्रियं चित्तौत्सुक्यानिवर्तकम् । विषण्णाः स्थातुं गन्तुं वाऽशक्ताः । भग्नः संकल्पो नंदनंदनेन रंस्यामह इत्येवंरूपो मनोरथो यासां ताः । चिंतां दुखेन मनसोऽस्वास्थ्यम् । दुरत्ययाम् विना भगवत्प्रसादमनिवार्याम् । पक्षे—विशेषेण प्रियम् । विगतं सन्नमवसादो यासां ता विषण्णास्ताश्च ता अभग्नसंकल्पाः संजातमनोरथास्तास्तथेत्येकं पदम् । दुरत्ययाम् मनोभवकृतदुःखहरां चिंतां चर्चां विचारं वा ' चिंता चर्चाविचारयोः ' इति यादवः ॥ * ॥ गाः नानाविधान् वाग्विलासान्प्रयोक्तुं विंदते लभत इति गोविंदस्तस्य भाषितम् ' भाष्—व्यक्तायां वाचि ' इत्यतो व्यक्तवाक्यं विप्रियमाकर्ण्य तदेव ध्वनिश्लेषयुक्तमव्यक्तवाक्यं तस्य प्रियत्वे बुद्ध्या सम्यगवगतेऽपीत्यर्थः । व्यक्तवाक्यस्य विप्रियत्वे कारणमपृष्ट्वाऽव्यक्तवाक्यस्यापि प्रियत्वे संदिहानास्ता अनुरागस्थायिभावोत्थदैन्योदयात्सत्यमयोग्या अस्मानयमुपेक्षते स्मैवेति निश्चित्य विषण्णाः,—यदर्थमहो पतिकुलपितृकुलधर्मधैर्यभयलज्जादिकमुपेक्ष्याऽऽयाताः स खल्वस्मानुपेक्षत इति भग्नसंकल्पाश्चिन्तामापुः । किं सकाकुपादग्रहणमिममनुनयेम, किं वा प्रयत्नतो धैर्यमवलंब्य कृत्रिमशाठ्येन व्रजं प्रति निवृत्य दुरवगाहगांभीर्यस्याप्यस्याशयं निर्धारयेम, किं वा प्राणान्परित्यजेम, तत्र चास्य साक्षादेव परोक्षं वा, यमुनाप्रवेशादिना वा हंत प्राणांस्त्यक्त्वास्य श्रीमुखं कथं पश्येम । अत्यक्त्वा वा कथमत्र स्थातुं प्राप्स्यामः, एतदादिष्टं पत्यादिभजनरूपं वान्तभक्षणं कर्तुं वा कथं प्रभवाम, क्व याम, किंकरवामेत्यादीतिकर्तव्यतामूढा बभूवुरित्यर्थः । " आहूय गोपीततिचातकावलीः स्ववेणुनादेन ववर्ष यद्विषम् । कृष्णस्तदेवाशु पपुः सुविस्मिता विश्वस्य ताः का जहति व्रतं निजम् ॥ " ॥ अत्र **तोषिणी**—एवं बहुधा प्रत्याख्यानेऽप्यनिवृत्तिमाशंक्य भावापलापेनाप्यौदास्यं विधत्ते—श्रवणादिति । श्रवणादिना यथा भावो भवति तथा संनिकर्षेणांगसंगेन न स्यात् । विरहे समुत्कंठया झटिति तद्वृद्धिः, संयोगे तूत्कंठाशैथिल्यादिति भावः । एवं परां काष्ठामापन्नोऽपि तासां भावोऽसिद्धतानिर्देशभंग्यापलपित एव । तत्र पूर्वरागे प्रायः पूर्वं श्रवणं, ततो दर्शनं, ततः संयोगप्राप्त्या निरंतरा तत्स्फूर्तिः, ततश्च तत्कथैवेति क्रमेणैव निर्दिष्टम् । वस्तुतस्तु परमकौतुकित्वान्निरंतरप्रेमभरसुकोमलितदक्षिणस्वभावानां तासां प्रेमवैयग्र्यदर्शनार्थमेवेति । श्लेषार्थश्चायम्—ननु येन सद्भावेन स्वस्य भर्तृत्वं तद्वैपरीत्येन तेषामभर्तृत्वं स्थापितं स एव न संभवति तव विप्रकृष्टत्वात्, तेषां तु सन्निकृष्टत्वादित्यत्राह—श्रवणादिति । यथा येन रसविशेषप्रकारेण मयि श्रवणादितोऽपि

कृत्वा मुखान्यवशुचः श्वसनेनशुष्यद्बिंबाधराणि चरणेन भुवं लिखंत्यः॥अस्रैरुपात्तमषिभिः कुचकुंकुमानि तस्थुर्मृजंत्य उरुदुःखभराः स्म तूष्णीम्॥२९॥

चिंतां प्राप्तानां स्थितिमाह। कृत्वेति। शुचः शोकादुद्गतेन श्वसनेन शुष्यंतो बिंबफलसदृशा अधरा येषु मुखेषु तानि अव अवांचि कृत्वा तथा चरणेन् चरणांगुष्ठेन महीं लिखंत्यः।

भावो भवति तथा सन्निकर्षेणापि न। येऽन्ये संनिकृष्टाः पतिंमन्यास्तेष्वपि न स्यादित्यर्थः। मिथः प्रेमयोग्ययोर्यथा सान्निकर्षेण प्रणयबंधो भवति तथा न श्रवणादिनेति लोकप्रसिद्धत्वादन्यपदमर्थायत्तम्, प्रथमत एव तथोप क्रांतत्वात् प्रकरणप्राप्तश्च। तस्माद्गृहान्प्रति न यातेत्युभयत्रापि नञोऽन्वयः। यद्वा—प्रतिषेधप्रत्याख्यानप्रतिपक्षादिषु प्रकृतार्थविरोधेऽपि प्रतिशब्दो दृष्टः, ततश्च प्रतियात गमनविरोधविषयान्कुरुतेत्यर्थः। एवं तासां पूर्ववत्सं लापो द्विधा—कासुचिद्यथार्थमेव, कासुचिद्वानुरागविवर्तेन नवीभावादिति ज्ञेयम्। इति एतद्गोविंदस्य गोकुलेंद्रत्वेन गोकुलमात्रहितस्यापि किमुत स्वेषु भाषितं स्फुटमेव वचनं विप्रियमिति। अर्थद्वयस्य स्पर्शित्वेनानि श्रिताशयत्वात्। उत्कंठास्वभावेन तासामुपेक्षैव स्फुरितेति। विषण्णाः अंतस्तप्ताः सत्यः। यतो भग्नः संकल्पस्तदंगसंगविषयश्चिरंतनमनोरथो यासां ताः। अतो दुरत्ययामनतिक्रम्यां चिंतामिष्टानवाप्तिजन्यं ध्यानमापुः। अयं प्रेमार्द्रकोमलस्वभावोऽपि परमकाठिन्यमस्मद्दौर्भाग्येन गतः, तदधुना किं सपादग्रहणकाकुभिरमुमनुनयेम उत प्रतिवचनेन वा प्रयत्नतः क्षणं धैर्यावलंबनेन वा शाठ्यतो व्रजं प्रति निवृत्त्या वा दुरवगाहगांभीर्यस्या स्याशयं निर्धारयेम, किं वा सद्य एव प्राणांस्त्यजेम। अत्र चास्य साक्षादेव परोक्षं वा, यमुनाप्रवेशादिनेत्यादि चिंतयामासुः॥ २८॥ चिंतायुताः कीदृश्यो बभूवुरिति चेदाह—कृत्वेति। उद्गतेन निःसृतेन श्वसनेन प्राणवायुना। बिंबफलम् अतिमृदुलरक्तम्। अधरा ओष्ठाः "अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वे च वाच्यवत्" इति मेदिनी। अंतर्गतशोकाग्नितापेन शुष्यदोष्ठा जाता इति भावः। अत्र "कामबाणप्रविद्धांगी स्विन्नयो निर्वरांगना। पादांगुष्ठनखेनाधोवदना लिखती भुवम्॥" इति कामशास्त्रप्रसिद्धं भावं दर्शितवत्य इति ज्ञेयम्। अस्रैरिति नेत्रद्वारांतस्थां कामपीडां बहिराविर्भावयामासुरिति सूचितम्। कोमले मुखे कर्कशवचनस्यानौ चित्याऽऽदर्शो ध्वनितः—मुखान्यधः कृत्वेति। तूष्णीं स्थिता वितर्कयंति—अयं प्रेमार्द्रकोमलस्वभावोऽपि परमकाठिन्यमस्मद्दौर्भाग्येन गतः सपादग्रहणचिबुकस्पर्शादिभिरनुनीयेत, किं वा प्रतिवचनेन प्रयत्नतः क्षणं धैर्या वलंबनेन वा, शाठ्यतो व्रजं प्रति निवृत्त्या दुरंतगाहगांभीर्यस्यास्याशयं निर्धारयेम, किं वा सद्यः प्राणान्परित्यजेम तत्र चास्य प्रत्यक्षं परोक्षं वा यमुनाप्रवेशादिना, वेति तर्काः। किं च किं वास्मद्भ्रांत्याऽन्या एवागता स्तास्त्वेवायमेवं वदतीति मौग्ध्येनात्मनोऽवलोकनाय किं वेदानीं किं विधेयमिति निजस्य पृच्छायै, किं वाऽतिनिष्ठुरमीदृशं वाक्यजातं निशम्याधुनापि जीवाम इति स्वत्रीक्षायै, किं मुखदर्शनेन दुःखाग्निश्वासधूमेना धरबिंबमुखपद्मानां शोषः मुकुलितप्रायत्वं तिरश्चीनत्वात्, किं वा निजानां चंद्रत्वानुभवात्तद्दर्शनेन नेत्रकमलसंकोचात्स्वादर्शनं भ्रमनिवारणायेत्येवं बहुधाऽन्येपि सन्तीत्यलं प्रपंचेन॥ * ॥ चिंताया अनुभावानेवाह—कृत्वेति। मुखानि अव अधः कृत्वेति लज्जा ध्वनिता। प्रेम्णोऽनुरोधादस्माकं स्वाभाविकलज्जात्याग एव संप्रति लज्जां प्राप। यतः कुलवतीनां पुंजीभूतलज्जानामप्यस्माकं लज्जात्यागः खलु प्रेमहेतुक एव। स च प्रेमरसविदां मते संगीत एव न तु विगीतः। प्रेम्णस्तु लक्षणमेतदेव यत्स्वविषयं परमेश्वरमप्यतिशयेन वशीकरोति तत्प्रेमेति। ततश्च यदस्माकं प्रेमविषयोऽयं कृष्णो न वशोऽभूत्तदस्माकं प्रेमैव नास्तीत्यवगतम्, लज्जात्यागोयं किंहेतुकोऽभूदित्यनुतापो लज्जा चिंता च। तत्रानुतापं विवृण्वन् मुखानि विशिनष्टि—कीदृशानि शुचः शोकादुद्भूतेन श्वसनेनोष्णश्वासेन शुष्यंतो बिंबाधरा येषु तानि। सूर्यातपेन पक्व बिंबफलानां शोषे सति स्थौल्यस्यापगमः स्पष्टमलिनत्वं च यथा भवेत्तथाऽधराणामप्यभूदिति भावः। लज्जाचिंते विवृणोति—चरणेन वामपदांगुष्ठेन भुवं लिखंत्य इति। हे धरित्रि विदीर्णा भव त्वयि वयं प्रविशाम इति। शोकसंतापौ विवृणोति—उपात्तमषिभिः कज्जलाक्तैरस्रैः कुचयोः कुंकुमानि मृजंत्यस्तेन विच्छेदवर्द्धकेन महासंतापक्रकचेन द्विधा विदारयितुं श्यामसूत्ररेखे दत्ते इति संभावना ध्वनिता। अस्रैरिति बहुवचनेन मृजंत्य इति वर्तमानकालेन चास्राणां प्रवाहवती धारा सूचिता। तावद्भिरप्यस्रैरंतरीयवस्त्राण्यप्यार्द्रयंतीत्यमुयोक्त्या एवं संभाव्यंते—नयनोत्थयमुनाद्वयहृदयोत्थसंतापानलयोर्निर्वापणशोषणकामयोर्विवादेन कस्यापि जयः पराजयो वा दृष्ट इति। उरुदुःखस्य भरो भारो यासां ताः। तूष्णीमिति—भारासहिष्णुतयैव चेतनाया अपगमादिति भावः। ततश्च तस्थुरिति तासां गतचेतनानां पांचालिकानामिवोर्द्ध्वावस्थितिरेव गम्यते॥

**प्रेष्ठं प्रियेतरमिव प्रतिभाषमाणं कृष्णं तदर्थविनिवर्तितसर्वकामाः॥नेत्रे विमृज्य रुदितोपहते स्म किंचित्संरंभगद्गदगिरोऽब्रुवतानुरक्ताः॥३०॥गोप्य ऊचुः॥ मैवं विभोऽर्हतिभवान्गदितुं नृशंसं संत्यज्य सर्वविषयांस्तव पादमूलम्॥भक्ता भजस्व दुरवग्रह मा त्यजास्मान्देवो यथाऽऽदिपुरुषो भजते मुमुक्षून् ॥३१॥**

तथा गृहीतकज्जलैरश्रुभिः कुचकुंकुमानि क्षालयंत्यस्तूष्णीं स्थिताः । यत उरुर्महान् दुःखस्य भरो भारो यासां ताः ॥ २९ ॥ किं च । प्रेष्ठमिति । किंचित्संरंभेण कोपावेशेन गद्गदा गिरो यासां ता अब्रुवत स्म । संरंभे कारणं प्रेष्ठमित्यादि । प्रियेतरमिव प्रतिभाषमाणं प्रत्याचक्षाणम् ॥ ३० ॥ एवं नृशंसं क्रूरम् । हे दुरवग्रह स्वच्छंदं तव पादमूलं भक्ताः सेवितवतीरस्मान्भजस्व मा त्यजेति ॥ ३१ ॥

अत्र **तोषिणी**—अत एव तूष्णीं तस्थुः, क्षणं परमचिन्तावेशेन वाग्रिन्द्रियवृत्त्यस्फूर्तेः । शुच इत्यनेन शुष्यदित्यनेन च श्वासस्योष्णता दीर्घता च ध्वनिता । शतृप्रत्ययेन शोषाऽविच्छेदः । बिंबेत्यरुणता कोमलता च । अतोऽधराणामतिशोषो म्लानता च सूचितैव । चरणेन वामपादांगुष्ठेन भूलिखनं चिन्तानुभावः । हे भूमे विदीर्णा भव प्रविशामो वयमित्यस्य भावः, एवमूर्द्ध्वस्थितिरेव गम्यते । उपात्तमसिभिरिति कुचकुंकुमानि मृजंत्य इति चास्राणां धारा सूच्यते । तस्या अपि बाहुल्यविवक्षया बहुत्वम् । तत्र सर्वत्र हेतुः—उरुदुःखस्य विषादस्य भरो भारो यासु ताः । अनेनानुक्तमपि संतापक्लेशादिकं गृह्यते । तेन वैवर्ण्यस्तंभादयोऽपि जाता इत्यर्थः । स्मेति प्रसिद्धौ । नर्मोक्त्यापि तासां तादृशशोके त्वया संभावना कार्या इति भावः । यद्वा—विस्मये तयापि तादृशदुःखमभूदहो प्रेममहिमेति । एते च चिंतानुभावा न तासां वक्ष्यमाणनिषेधरूपप्रतिवचनार्थ विशेषभंजकाः, कामिकृतप्रार्थनायां कुलवतीनां तत्संभवात् तासां रसाविरोधिभावोदयस्वभावाच्च ॥ २९ ॥ न केवलं तूष्णींभावमाश्रित्य स्थिता एव, अपि तु किंचिदब्रुवतेत्याह—किञ्चेति । दुःखकथनं त्वतिप्रियायोचितमित्याह—प्रेष्ठमिति । गद्गदाः स्खलिताक्षराः । संरंभपदेनाधरदशनं सूचितम् । प्रियेतरम् शत्रुम् । प्रत्याचक्षाणम् खण्डयन्तम् । चिंतां त्यजत, मा रुदत, स्वस्था भवत, गृहान्यातेत्यादि तदानीमपि वदंतमित्यर्थः । तदर्थं कृष्णकृते विनिवर्त्तितस्त्यक्तः,—सर्वे—कामा यस्मात्स सर्वकामः पतिः वांछितविषयो वा याभिस्तास्तथा । रुदितेन रोदनेनोपहते क्लिष्टे । अनुरक्ताः तत्परित्यागं कर्तुमशक्ताः ॥ * ॥ ततश्च किमरण्यरोदनं कुरुध्वे प्रसन्नमुख्यः सत्यः स्वस्वगृहं किं तूर्णं न गच्छतेत्युच्चैरुच्चरितेन भगवद्वाक्येन कर्णाध्वनांतःप्रविष्टवता मूर्छातस्ताः प्रबोधिताः किञ्चिद्विज्ञापयामासुरित्याह—प्रेष्ठम्, पूर्वं बहुशःकृतांगसंगात् प्रियतमम् । अथ च कारणं विनैव प्रियेतरमिव प्रतिकूलं स्वस्वपतिं भजध्वमित्यतिकठोरं भाषमाणम् । एतच्च नैव संभवेत्, यतस्तदर्थं विशेषेण पुनर्यथा संबंधगंधोपि तेषां न स्यात्तथा निवार्तिताः सर्वे कामा याभिस्ताः । अत्रान्यशब्दस्याप्रयोगाच्च भगवत्सुखार्थकामः कामशब्देन नोच्यते इति श्रीशुकाभिप्रायः । रुदितेनोपहते अंधीभूते नेत्रे विमृज्येति । अयमंतकालोऽस्माकमागतस्तत्सकृदप्येतस्य मुखकमलं दृष्ट्वा म्रियामहे इत्याकांक्षयेति भावः । हंतहंत प्रेयसापि भूत्वा विनैवापराधं कथमेतावान्प्राणांतो दंडः क्रियते इति संरंभः, तथा वयमेतदनुरूपगुणाद्यभावादंगसंगाऽयोग्या एव भवामोऽतस्त्यज्यामह इति मननात्संरंभाभावश्चेत्यतः किञ्चित्संरंभेण गद्गदागिरो यासां ताः । ननूभयथाऽपि प्रेमशून्यात्तस्मान्निवृत्तिरेवोचितेत्यत आह—अनुरक्ता इति । अनुरागांधा हि विचारं न सहन्त इति भावः ॥ अत्र **तोषिणी**—प्रेष्ठं प्रियतममपि प्रियेतरमिव प्रियमात्रादितरमिव प्रत्याख्यानं कुर्वन्तम् । ननु तर्हि तस्मान्मनः कथं न न्यवर्तयंस्तत्राह—तदर्थं कृष्णाप्तये विशेषेण निवर्त्तिताः पुनर्यथा संबंधगंधोऽपि तेषां न स्यात्तथा निरस्तास्तद्व्यतिरिक्ता अशेषाभिलाषा याभिस्ताः । अतस्तन्निवर्त्तयितुं नाशक्नुवन्निति भावः । कुतः—कृष्णम् परमानंदघनतया सर्वचित्ताकर्षकतया च तन्नाम्ना प्रसिद्धं श्रीव्रजेंद्रनंदनम् । ननूरुदुःखाक्रान्ताः कथं वक्तुमपि शक्तास्तत्राह—संरंभेति । अमर्षेण विषादकार्येणैव विषादावरणादिति भावः । तत्र नेत्रमार्जनं भावद्वयसंधिजम्, तच्च प्रणयकोपस्वभावतः किञ्चिच्छ्रीमुखावलोकनपूर्वकवचनार्थमिति परमार्त्या लज्जाशैथिल्यमपि गम्यते । किञ्चिदिति विषादांशस्यांतर्भूतत्वात् । तद्द्वयकार्यं गद्गदत्वमनुरक्तत्वञ्च विषण्णतादौ सर्वत्रैव हेतुः ॥ ॥ ३० ॥ विभो प्राणनाथ । नृशंसम् वज्रसारवत्काठिन्येन हृदयविदारकम् । मेति प्रयोगो दुःखवैषम्येण स्त्रीस्वभावाद्वा । भक्ता अस्मान्मा भजस्व अन्यथा "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्"

इत्युक्तिर्व्यर्था स्यात् । हे स्वेषु दुरवग्रह दुराग्रह । यद्वा—हे स्व हे बंधो दुरवग्रहं हठम् आ आसमंतात्त्यजेति । दृष्टान्तः—आदिपुरुषो महाविष्णुः यथा मुमुक्षून्मुक्तिकामनया भजतो न त्यजति 'ये यथा मां प्रपद्यन्ते' इत्याद्युक्तेः । वस्तुतस्तु अवग्रहो वृष्टिविघातस्तद्रहितो दुरवग्रह, भक्ताभीष्टवर्षणशीलेत्यर्थः । यद्वा—भानि नक्षत्राणि गभस्तयो वा वियंतेऽस्येति भवांश्चंद्रः, भा भयदा दूताः संत्यस्येति भवान्यमराजः । चंद्रेणापि रोहिणी प्रीत्याऽन्या भार्यास्त्यक्ताः । यमश्च लोकानां दुःखप्रदोऽस्त्येव स च स च नृशंसं गदितुमर्हति यतस्त्वं ताभ्यामन्योऽतो मैवम् । एवं मा वदेत्यर्थः ॥ * ॥ अस्मान्धर्ममुपादिशस्यथ च स्वयं पापराशिं चिकीर्षसीत्यनुचितमित्याहुः—मैवमिति । नृशंसं घातुकं साक्षान्मारकं यथा स्यात्तथा गदितुं भवान् प्रतिपुरुषं धार्मिकत्वख्यातिमतो नंदस्य पुत्रः सन्नार्हति । अन्यस्तु प्रतिपुरुषं मानुषमारणवृत्तिको वरमर्हतु नामेति भावः । "नृशंसो घातुकः क्रूरः" इत्यमरः । त्वया कोटिसंख्या अपि वाक्शरास्तथैकदैवास्मान्प्रति निक्षिप्ता यथाधुनैव शरीराणि परित्यज्य यमपुरं सर्वा एव वयं यामो न तु त्वदुपदिष्टं गोष्ठपुरम्, त्वं तु शतकोटिस्त्रीवधपातकानि गृहीत्वा स्वयमेव गोष्ठं याहि । स्त्रीवधान्नो चेज्जिघृक्षसि, तर्हि सर्वविषयांस्त्यक्त्वा तव पादमूलं भक्ताः सेवितवतीरस्मान्भजस्व । अत्राऽन्यविषयानित्यनुक्त्वा सर्वविषयानित्युक्त्या च भगवदंगसंगो हि विषयो न भवतीति ध्वनितम् । ननु भोः कामिन्यः स्वस्वपतिभ्यो भवतीनां कामो नोपशाम्यति ? यतस्तान्परित्यज्य मामेव भजध्वे, तत्राहुः—हे दुरवग्रहेति । "अवे ग्रहो वर्षप्रतिबंधे" इति पाणिनिस्मरणात् दुष्टो दोषयुक्तोऽवग्रहो वृष्टिप्रतिबंधोऽनावृष्टिर्यस्येत्यत्रान्यपदार्थस्य मेघस्यैवोपयुक्तत्वाद्दुःशब्दप्रयोगाच्च । हे विषमात्रवर्षुक मेघेत्यर्थः । तेन चातकीनामस्माकं दूरस्थोपि त्वमेव कृष्णमेघो बंधुः, स च दैवदोषादद्य विषं वर्षसि, अवग्रहवत्वात्सलिलं न चेद्वर्षसि तर्हि मा वर्ष त्वद्वृष्टं विषमेव पीत्वा वयं म्रियामहे न तु निकटस्थानां ह्रदादीनामपि जलं पिबामेत्यस्माकं स्वभावं जानीहीति भावः । अतोस्मान्मा त्यज यद्यात्मनः कृतज्ञत्वं दधासीति भावः । ननु च चातक्यो मेघमपेक्षंतां नाम मेघस्तु चातकीर्नापेक्षते, चातक्यो म्रियन्तां जीवन्तु वा मेघस्य न कापि हानिरिति चेत्—सत्यम्, न त्वं जडात्मको मेघ एव किन्तु विदग्धचूडामणिर्नारायणसमो नारायणवदेव वर्त्तस्वेत्याह—देव इति । मुमुक्षून् त्वदुपासनार्थं सर्वविषयांस्त्यक्तुमिच्छूनपि तदभीष्टोपपादनया भक्तवश्यत्वाद्भजते अस्मांस्तु त्वदर्थं संत्यक्तसर्वविषयश्रेणीका अपि त्वं कथं न भजसीत्यर्थः ॥ अत्र **तोषिणी**—श्रीगोप्य ऊचुरिति । तत्रैवं विवेचनीयम्—यद्यपि समानभावापन्नत्वेन युगपत्समानवचनस्फूर्तिरपि संभवति तथाप्येकदोक्तावतिकोलाहलतया नातिरसाधायकत्वात्कासांचिन्मुख्यानामेव वचनं ज्ञेयम् । तच्च युगपद्वा तत्तन्महावाक्योपसंहारे 'तन्नः प्रसीद वरद' इति, 'सिञ्चाङ्ग' इति, 'तन्नः प्रसीद वृजिन—' इति, 'तन्नो निधेहि' इति स्वस्वविवक्षितवचनचतुष्टयान्तं क्रमशो वा पूर्वपूर्वस्यां वाक्यस्थापनपूर्वकमेवोपन्यस्तमस्ति । चतुष्टयत्वं च—यूथशो दिक्चतुष्टयस्थितत्वात्तासाम् । तथापि सर्वासां तत्संमुखत्वञ्च 'कृष्णस्य विष्वक्पुरुराजिमंडलैरभ्याननाः' इतिवत् । "यासामेव प्रसादेन यासां श्रीनागरेश्वरे । जल्पितत्वं जायते ता बन्दे श्रीनागरेश्वरीः ॥ गोपीगणप्राणवल्लभाय भगवते नमः॥" । अथ पत्यादिपरित्यागेन त्वद्भजनेऽस्माकमधर्मो धर्मो वेति पश्चाद्विचारयिष्यते । अहो तवैव तावदस्मत्त्यागे धर्मदोषो दुष्परिहर इत्याह—मैवमिति । मेति निषेधस्यादौ प्रयोगः परमार्तिवैय्यग्र्येण । एवम् ईदृशम् । कथंचिदेतद्वचनसदृशमपि, किमुत वक्तव्यमेतादित्यर्थः । कुतः—नृशंसम्, वज्रसारवत्काठिन्येन हृदयविदारकमित्यर्थः । यद्वा—साक्षान्मारकम् 'नृशंसो घातुकः क्रूरः' इत्यमरः । गदितुं व्यक्तं वक्तुं किं वा गादितुमपि किमुत व्यवहर्तुमर्हति । तत्र च भवान्, प्रेमादिस्वभावतया प्रसिद्ध इत्यर्थः । तत्रापि विभो हे अस्मत्प्राणनाथ । अतोऽस्मान्प्रति मार्हत्येवेति भावः । अत्र 'संरंभगद्गद—'इत्युक्तत्वात् सर्वत्रशब्देन स्वरेण वा दैन्यादावपि प्रणयकोपो व्यंजनीयः । एवम् 'स्वागतं वो महाभागाः' इत्यादिकं भवता सादरं सन्यायं मृदूक्तमपि निवर्त्तनार्थमेवेति रसविघातकत्वादर्थतो विपरीतमेवेति भावः । अनेन स्वागतमित्याद्यपादस्योत्तरमूह्यम् । ननु भोः प्रियवादिन्यस्तर्हि किं कर्तुमर्हामीत्यपेक्षायामाहुः—अस्मान्भजस्व मनोरथपूरणेनानुवर्तस्व । कुतः—तव पादयोर्मूलतलं भक्ता इति । दैन्योक्तिः । अंगादिरूपकानुक्तिर्नृशंसेत्युक्त्या काठिन्याद्यभिप्रायेण । अनेन 'प्रियं किम्' इति पादस्योत्तरम् । ननु श्रीगोपगृहिण्यः सत्यमेव भजामि किन्तु भवत्पत्यादिहिताचरणमेव युक्तं नहीदृशमिति, तत्राहुः—संत्यज्येति । सर्वान् विषयानिंद्रियार्थान् पत्यादिरूपान्सम्यगपुनरंगीकारदार्ढ्येन त्यक्त्वा तेषां त्वद्भजनप्रातिकूल्यात् । अनेन 'व्रजस्यानामयम्' इत्यादिकस्य 'दुव्रत' इत्यंतस्य सर्वस्याप्युत्तरम् । तेषां सर्वेषां विषयांतःपातात् तत्त्यागेन देहेऽपि गलितप्रेमत्वात् तत्प्रेम विना 'रजन्येषा' इत्यादिवाक्यस्याप्यनुपादेयत्वात् । व्यतिरेकेणाहुः—हे दुरवग्रह । अस्माननन्यगतीर्मा त्यजेत्यर्थः । अन्यथैवं दोषः स्यादिति भावः । कथमित्याशंक्य धर्माधर्मातीतस्येश्वरस्यापीश्वरस्य तत्तद्धर्म

यत्पत्यपत्यसुहृदामनुवृत्तिरंग स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ॥ अस्त्वेवमेतदुपदेशपदे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बंधुरात्मा ॥ ३२ ॥

अपि च यदुक्तं पत्यपत्येत्यादि त्वया धर्मविदेति सोपहासमेवमेतदुपदेशानां पदे विषये त्वय्येवास्तु । उपदेशपदत्वे हेतुः ईश इति । विविदिषावाक्येन सर्वोपदेशानामीशपरत्वावगमादिति भावः । ईशत्वे हेतुः । आत्मा किल भवानिति । भोग्यस्य हि सर्वस्य भोक्ता आत्मैवेश इत्यतः प्रेष्ठो बंधुश्च भवानेवेति सर्वबंधुषु करणीयं त्वय्येवास्त्वित्यर्थः । अथ वा धर्मोपदेशानां पदे स्थाने धर्मोपदेष्टरि त्वयि सत्यस्मासु च धर्मं जिज्ञासमानासु सतीषु त्वया धर्मविदा यदुक्तमेवमेतदस्तु न तु त्वं धर्मोपदेष्टा किं तु भवानात्मेति । अथ वा । यदुक्तमेतदुपदेशपदे तद्गोचरे पुरुषेऽस्तु नाम त्वयि तु ईशे स्वामिनि सत्येवं काका नैवमित्यर्थः । यतस्तनुभृतां त्वमात्मा फलरूप इति । यद्वा यदुक्तं पत्यादिशुश्रूषणं धर्म इति एवमेतत्त्वय्येवास्तु । कुतः उपदेशपदे शुश्रूषणीयत्वेनोपदिश्यमानानां पत्यादीनां पदेऽधिष्ठाने । कुतः । ईशे न

पालनावश्यकतादर्शनादित्याहुः–देव इति । तत्रापि मुमुक्षूनपि किमुत तदेकेप्सून् मोक्षमप्यनिच्छून् । भक्त्यैकनिष्ठानित्यर्थः । यद्वा–मुमुक्षून् तस्मादन्यत्सर्वं त्यक्तुमिच्छून् । यथाऽसौ भजनमात्रापेक्षया सर्वानेव भजते स्वीकरोति तथा त्वमस्मान्भजस्वेति । 'भजतः' इति क्वचिद्द्वितीयान्तः पाठः । तत्र मुमुक्षूनित्यस्य विशेषणम् । तत्र साधनसाध्ययोर्द्वयोरप्यवस्थयोस्तेषामात्मसात्करणात्स कामान्व्यावर्तयति यथा तान्भजते न त्यजतीत्यर्थवशाद्भजस्वेत्यस्य विभक्तिं परिणमय्य व्याख्येयम् । तत्र श्रीगोपेंद्रनंदनत्वेनैव कृष्णे लब्धनिष्ठानामपि "यस्यास्ति भक्तिर्भगवत्यकिंचना सर्वैर्गुणैस्तत्र समासते सुराः" इत्युक्तत्वात् । "हरिभक्त्या महादेव्याः सर्वा मुक्त्या दिसिद्धयः । मुक्तयश्चाद्भुतास्तस्याश्चेटिकावदनुद्रुताः ॥" इति नारदपंचरात्रोक्तानुसाराच्चानादृतमपि सर्वं ज्ञानादिकं ताः परिचरति । तस्मात्केवलप्रेममयेपि वचसि पारमैश्वर्यज्ञानमयोप्ययमर्थस्तासामेव महिमसूचनार्थम्, ज्ञानादिकं भक्तिप्रेरिततया भक्तविशेषाणां चमत्काराय स्फुरति । अथ वा दैन्येन महिमस्फूर्तेरीश्वरत्वं संभाव्येदशं वचनम् । तथाहि–हे विभो बहिरंतर्व्यापक भवानस्माकं बहिरंतर्भावं सर्वं जानात्येवातस्तव पादमूलं भक्ता आश्रिता अस्मान्भजस्व, अन्यथा "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इत्यादि वचनानां वैयर्थ्यापत्तिः । ननु तत्त्वज्ञपूज्यपादाः कथं विषयसुखमिच्छथ ?, तत्राहुः–संत्यज्येति । अतो वयं परमार्थसुखमेवेच्छाम इति भावः । त्वया सह क्रीडाविशेषस्य तस्य प्रेमपरिपाकविलासरूपत्वेनाशेषपुरुषार्थसारसर्वात्मकत्वादिति 'ये यथा मां प्रपद्यन्ते' इत्येतन्निजवचनस्य सत्यतापेक्षया त्वमप्यस्मद्वदन्याऽशेषत्यागेनाऽस्मान्भोक्तुमर्हसीति गूढोऽभिप्रायः । हे दुरवग्रह स्वच्छन्द अस्मान्प्रपन्ना मा त्यज परमेश्वरत्वात्त्वामधर्मो न स्पृशत्येव, सत्यसंकल्पश्रुतिविरोधात्प्रतिज्ञाहानिस्तु परमाऽनुचितैवेति भावः । सर्वान्विषयान् साम्राज्यप्रभृति वैकुंठाधिपदानि संत्यज्यापि ते त्वाम् अमुमुक्षून्मोक्तुमनिच्छून् अशक्नुवतो जनानन्यानपि भज स्वीकुरु । द्वितीयायां षष्ठी, ते तुभ्यं त्वां प्राप्तुं मुमुक्षूनिति चतुर्थी वा । यतो देवो जगत्पूज्यस्त्वम्, अन्यथा देवत्वासिद्धिः । तत्रापि यथा यथावत्संपूर्णतयाऽऽदिपुरुषो भगवानिति । अत्र च्चाभिरपि यज्ञपत्न्युक्त्याद्यपद्यानुवादानुवादः आर्तिसाम्यांशेन ज्ञेयः । "आर्तावपि स्वभावेन वैदग्धीवलितात्मनाम् । प्रार्थेन गोपरामाणां निषेधार्थोऽपि वीक्ष्यते ॥" तथाहि–एवमीदृशं किंचित्प्रियं करवाणि मया सह किञ्चिद् ब्रूतेत्यादिकं नृशंसम् वक्तुं नार्हति । तत्र हेतुः–संत्यज्येति । याः सर्वविषयान्संत्यज्य तव पादमूलं भक्तास्ता एव दुरवग्रहं स्वच्छंदं यथा स्यात्तथा भजस्व, अस्मान् आ सर्वांशेनैव त्यज । प्रभवो भक्तजनानेव भजन्ते न त्वभक्तानित्यत्र दृष्टांतमाह–देव इति । अस्मिन्नर्थे वस्तुतस्तु सर्वमेतन्नर्मेवेति भाव एव व्यंजित इति ॥ ३१ ॥ 'शुश्रूषध्वं पतीन्सतीः' इति यदुक्तं तत्राहुः–अपि चेति । धर्मविदा स्त्रीधर्मशास्त्रविदा इति । सोपहासमिति–'आर्तत्राणं परो धर्मः' इति स्मृतेरस्मानार्तांस्त्यजतस्ते धर्मोपदेशो हासास्पदमेवेत्यर्थः । एवमेतत् यथोक्तमिदम् । उपदेशपदत्वे उपदेशविषये । इति भाव इति । "तमेतं वेदानुवचनेन यज्ञेन दानेन तपसा नाशकेन ब्राह्मणा विविदिषन्ति" इति श्रुत्या सर्वे वेदाभ्यासयज्ञदानाद्युपदेशाः

परमेशावाप्तय एवेति तात्पर्यम् । भोक्तैवेश इति । भोक्तारं विना भोग्यानां वैयर्थ्यात्, अनीशगृहवत् । यत आत्माऽत एव प्रेष्ठो बंधुः, निरतिशयप्रेमास्पदत्वात् । तथा च श्रुतिः--"तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽ
न्यस्मात्सर्वस्मादांतरं यदयमात्मा" इति । इत्यर्थ इति । सर्वात्मत्वादिति भावः । किञ्च, सत्युपदेष्टृपार्थक्ये उपदेशोऽन्याय्यो न त्वैक्यै इत्याहुः--अथ वेति । भंग्यंतरेणाहुः--अथ वेति । यदुक्तं धर्मशास्त्रेण एतद्वचस्तस्यो
पदेशस्य गोचरे पुरुषे प्राकृतजनेऽस्तु नाम भवतु, त्वयि स्वामिनि परमेशाने एवमुपदेशगोचरत्वमस्ति किम्, नास्तीत्यर्थः । पूर्वोक्तेरन्यथाकरणं काकुः "काकुः स्त्रियां विकारो हि शोकभीत्यादिभिर्ध्वनेः" इत्यमरः ।
ईशस्योपदेशविषयत्वं कुतो न तत्राह--यत इति । साधकस्यैवोपदेशविषयत्वेन साध्यस्योपदेशप्राप्यत्वमस्तीत्युक्तम्--फलरूप इति । यद्यपि त्वयाऽपत्यादिसेवा धर्मत्वेनोक्ता सापि 'यथा तरोर्मूलनिषेचनेन' इत्याद्युक्तरीत्याऽधिष्ठा
नेऽर्चितेऽधिष्ठेयाः स्वयमेवार्चिताः स्युरित्याहुः--यद्वेति । हेतुमाशंकते--कुत इति । आधिष्ठाने अधिकरणे । तत्रापि हेतुमाशंकते--कुत इति । अधिष्ठानाभावेऽधिष्ठेयानामभावात् । अन्यत् अवशिष्टम् । यद्वा—पत्यादीनाम
नुवृत्तौ रंगो रागो यासां स्त्रीणां तासामेव स्वधर्म इति । न त्वस्माकं त्वद्भक्तानामिति भावः।तेषामविधिगोचरत्वादिति भावः । ईशे वृंदावने ब्रह्मेंद्रादिभिरपि स्तूयमाने । यद्वा—बंधुराः प्रेमशृंखलाबन्धयुक्ता आत्मानो जीवा
यस्मिन्स तथा । यद्वा—तनुभृतामात्मा परमात्मैव बंधुर्न त्वन्येऽपत्यादयः 'बंधुर्गुरुरहं सखा' इत्युद्धवं प्रति वक्ष्यमाणत्वात्, 'आत्मैव ह्यात्मनो बंधुः' इत्याद्युक्तेश्च ॥*॥ अथ काश्चिन्मुखरास्तद्वचनेनैव तं पराजेतुकामा
आहुः—यदिति । पत्यादीनामनुवृत्तिः स्त्रीणां स्वधर्म इति यत्त्वयोक्तमेतदेवमस्तु अनेन प्रकारेण भवतु नात्र विवदामहे । एतदेवास्माभिः प्रतिक्षणं क्रियत इति भावः । ननु केन प्रकारेण, तत्राहुः—उपदेशस्य पदे आस्पदे
धर्मोपदेशकर्तरि त्वयि अनुवर्तिते सत्येव पत्यादीनामनुवृत्तिरुचितेत्यर्थः । 'प्रथमं धर्मोपदेष्टाऽऽचार्य उपसेव्यते पश्चात्तदुपदिष्ट आचरणीयो धर्मः' इति न्यायात् । आचार्यानुवृत्त्यैव निष्कपटया धर्मः सिध्येदिति च शास्त्रम् ।
तत्रापि ईशे परमेश्वरे यद्याचार्य एव परमेश्वरः स्यात्तर्हि किमुतेति । किञ्चेश्वरत्वादेव तनुभृतां त्वमात्मा, आत्मत्वादेव प्रेष्ठः, प्रेष्ठत्वादेव बन्धुरिति । अयमर्थः—पत्यादीनां परमात्मसहितानामेवानुवृत्तिः शास्त्रोक्ता, आ
त्मराहित्ये तु सति सद्य एव गृहान्निःसारितानां तेषां नद्यादेस्तटे मुखानि दह्यंते इति धर्मशास्त्रम् । अतो मूर्तस्यात्मनस्तवैवानुवृत्त्या पत्याद्यनुवृत्तिसिद्धिः, किमन्यैस्तत्प्रतिकूलत्वादेव निरात्मकैर्दग्धमुखैः
पत्यादिभिरिति । ननु पूर्णप्रेम्ण ऐश्वर्यज्ञानावरकत्वादासाञ्च संपूर्णप्रेमवत्त्वात्कथमेतादृशमैश्वर्यज्ञानं संभवेत्, उच्यते—नारदपंचरात्राद्युक्तलक्षणो भक्तिरसामृतादिषु व्याख्यातः प्रेमा ह्यनिशनैसर्गिकौष्ण्यशैत्यवान्
विरहसंयोगे रसानुभावकोपि "ब्रह्मानंदो भवेदेष चेत्परार्धगुणीकृतः । नैति भक्तिसुखांभोधेः परमाणुतुलामपि ॥" इति रसामृतोक्तेर्ब्रह्मानंदानुभवपरः परार्धाधिकोपि विरहे तीव्रांशुकोटेरप्यधिकं संतापयन्नैश्वर्यमाधुर्यसंबंधिनः
सर्वानेव भगवतो गुणान्प्रद्योतयत्येव, न तु कांश्चिदावृणोति विरहस्य सूर्यतुल्यत्वेन सर्वप्रद्योतकत्वात् । संयोगे तु सुधांशुकोटेरप्यधिकमाह्लादयन्माधुर्यमयानेव भगवतो गुणान्प्रद्योतयति, संयोगस्य शुद्धांशुतुल्यत्वेन सुधया
मादनोदैरैश्वर्यावरणात् । यत्र संयोगेप्यैश्वर्यं प्रद्योतते तत्र प्रेम्ण एवापूर्णत्वमवगन्तव्यम् । अत्र त्वासां भाविविरहभावनावतीनां विरह एवायम् माहात्म्यस्फूर्तिरपि प्रेमकृतैव, प्रेमा ह्यसदपि माहात्म्यं स्फोरयति किमुत सत् । अत
स्तदतिशयस्तु तदतिशयमेव । यथादिभरतचरिते—'किं वा अरे आचरितं तपस्तपस्विन्या यदियमवनिः' इत्यादीति**श्रीजीवगोस्वामि**चरणाः ॥ अत्र **तोषिणी**—ननूक्तः 'भर्तुः शुश्रूषणम्' इत्यादिना स्वधर्मः कथमति
क्रम्यत इति तस्य कर्ममीमांसामतमाशंक्य तदुपमर्दि ब्रह्ममीमांसामतमालब्य प्रतिभावनेन तस्मिन्नात्मत्वमारोपयंत्यस्तन्मतदूषणेन नास्माकं स्वधर्म इति प्रतिपादयंति—यत्पतीति । धर्मविदेति सोपहासमेव । "सर्वशास्त्रोपदेशानां
पदे शास्त्रयोनित्वात्तत्तु समन्वयात्" इति न्यायेन तत्तात्पर्यविषये तत एवेशे त्वय्येकस्मिन्नेव, एवं शुश्रूषणप्रकारेणैतदुपदेशवाक्यमस्तु । ननु तत्पदत्वमेव मयि कथं तत्र सच्छलमाहुः—किल वितर्के । भवानात्मा परमात्मा ।
कथं तादृशत्वमपि तत्राहुः—तनुभृतां सर्वेषामेव प्रेष्ठः, निरुपाधिप्रेमास्पदत्वं ह्यात्मत्वं तत्तस्मादात्मा तत्रापि सर्वेषां प्रेष्ठत्वात्परमात्मेति । तथा बंधुः सर्वेषां निरुपाधिहितकारी, परमात्मा च सर्वावभासकत्वेन तादृशः,
ततश्च भवानेव स इति । अनेनेशत्वमपि सिद्धम् । तस्मात्त्वमेव शुश्रूषणीय इति भावः । अथ वा ननु सदाचारवर्गपूज्या युष्माभिस्त्यज्यंतां नाम विषयाः, स्वधर्मस्त्ववश्यमपेक्ष्यस्तत्र सासूयमाहुः—यत्पतीति । एवमुपदेश
कर्तरि त्वय्येवैतदुपदेशास्पदत्वमस्तु । त्वमेव तद्योग्यो भवसीत्यर्थः । ननु कथमेतत्तत्राहुः—प्रेष्ठ इत्यादि । तनुभृतां प्राणिमात्राणां प्रेष्ठश्चित्ताकर्षकः । बंधुः सर्वाभिलषितकारी । अत एवात्मा स एव हृदया
धिष्ठाता तत्प्रेरयिता वा तस्मादस्माकं वा को दोषः, किन्तु भवत एवेति प्रत्युत भवानेव तादृशदोषपरित्याजनायोपदेश्य इत्यर्थः । अथ पूर्ववदैश्वर्यपक्षोऽपि युज्यते, स च तैर्व्याख्यात एव । तत्र विवर्तवादमवलम्ब्यार्थ

कुर्वंति हि त्वयि रतिं कुशलाः स्व आत्मन्नित्यप्रिये पतिसुतादिभिरार्तिदैः किम्॥ तन्नः प्रसीद परमेश्वर मा स्म छिंद्या आशां भृतां त्वयि चिरादरविंदनेत्र३३॥

हीश्वरमधिष्ठानं विना कोऽपि पतिपुत्रादिर्नामेति । अन्यत्समानम् । अलमतिविस्तरेण ॥ ३२ ॥ एतत्सदाचारेण द्रढयंत्यः प्रार्थयंते । कुर्वंतीति । कुशलाः शास्त्रनिपुणाः ।

द्वयम् अविशेषेणात्माद्युपगमात् । तथाऽप्यत्र भोक्तृत्वमीशितृत्वमेव ज्ञेयं राजनिर्देशभोक्तृत्ववत्, अन्यथा जीवत्वापाते विवक्षितत्वासिद्धेः । सामान्यतो निर्देशस्तु जीवस्य दृष्टांतत्वापेक्षया तस्य सर्वस्वरूपत्वस्थापनापेक्षया च । द्वितीये, न त्वित्यादिकं काकुगम्यं, तथा पर एवोपदेष्टा भवति न ह्यात्मन आत्मैवेत्यनुपदेष्टृत्वम् । तथा चास्माकमुपदेष्टृत्वाभावे साक्षात्कृतात्मत्वे च न पतिशुश्रूषणादिविधिगोचरमिति भावः । श्रीवैष्णवमते नान्य दर्थद्वयम् । अथ वा यदुक्तमिति । तत्र प्रथमार्थे स्वामिनि आश्रयत्वेन वृते इत्यर्थः । 'देवर्षिभूतात्पनृणां पितॄणाम्' इत्यादेः । तदेवं तदुपासनमहिमद्वारा धर्मं प्रत्याख्याय वस्तुविचारद्वाराऽपि प्रत्याख्यायते—यद्वेति । अधिष्ठानत्वं तत्तत्स्फूर्त्याश्रयत्वम् "यस्य भासा सर्वमिदं विभाति" इति श्रुतेः । अत्रैश्वर्यार्थेषु किलेति निश्चितम् । उपदेशपद इति । शास्त्रगुरूपदेश्यचरणारविंदे इत्यर्थः, इत्यपि व्याकुर्वन्ति । अत्र नर्मेदम्--तत्त्व ज्ञेवास्तु त्वमेव मोहिनीरूपेणाजितवत्स्त्री भूत्वा पत्यादिसेवाधर्ममाचरेत्यर्थः । कुतः उपदेशपदे गुरावित्यर्थः । अन्यथा गुर्वननुष्ठिते कर्मणि शिष्याणामप्रवृत्तिः स्यात् । तत्र च त्वमेव समर्थ इत्याहुः । ईशे सर्वकलास मर्थे न तु कृत्रिमस्त्रीत्वेन कोपि त्वयि प्रीतिं कुर्यादिति मन्तव्यम् । स्वभावत एव तव सर्वप्रेष्ठत्वादित्याहुः—प्रेष्ठ इति । बंधुरात्मा मनोहरस्वभावः । निषेधार्थश्चाप्यम्—अंग हे कृष्ण पत्यादीनामनुवृत्तिः स्त्रीणां स्वधर्मः सुष्ठु अधर्म इति । यद्धर्मविदापि त्वयोक्तम् । अन्यादृशयोजनया छलेन प्रतिपादितमित्यर्थः । अमायया यो भर्त्ता इत्याद्यभिप्रायात् । एवमेतत् । ईश एव सत्युपदेष्टारि सर्वं वक्तुं व्यवहर्तुं च समर्थ इत्यर्थः । तस्मि स्त्वय्येवास्तु तेन त्वमेवोपदेश्यो भवेत्यर्थः । कथम्, तत्राहुः—तनुभृतां श्रीवृन्दादिस्थितचतुर्विधप्राणिनामपि प्रेष्ठः प्रेमविषयः । बंधुः प्रेमकर्ता अत एवात्मा "साधवो हृदयं मह्यं साधूनां हृदयं त्वहम्" इतिवत् परस्पर हृदयाश्रय इत्यर्थः । तस्माद्यदि त्वमेव तेष्वनन्तेषु विरक्तः स्यास्तदा वयमपि स्वेषु स्वल्पप्रमाणेषु यथास्थितयोजनया धर्मप्राप्तेषु च स्यामेत्यर्थः । तत्र चास्मास्वेव विरक्तो भवेति नर्मतात्पर्यम् । यद्वा—यथा तथा वा योजना भवतु 'भर्तुः शुश्रूषणम्, इत्यादिना यत्पत्यादीनामनुवृत्तिः स्त्रीणां स्वीयो धर्म इत्युक्तम् एतदुपदेशकर्तरि त्वयीशे एवमस्तु । अनुज्ञायां लोट् । भवितुं योग्यमित्यर्थः । यतः प्रेष्ठ इत्यादिर्भर्तुर्विचारस्त्वस्माभिरेव ज्ञायत इति भावः ॥ ३२ ॥ एतत् पूर्वोक्तम्, तनुभृतामात्मैव बन्धुरित्येतत् । सदाचारेण सतां प्रवृत्त्या । शास्त्रनिपुणाः सारासारविवेकपटवः । आत्मन्निति सप्तम्यन्तम्, आर्षत्वान्ङिलोपः, परमेव्योमन्नितिवत् । स्वे आत्मनि अनिमित्तबंधौ, पत्यादयस्त्वनित्यप्रिया अत एवार्तिदा इति । अनित्यप्रियाणामार्तिदत्वम् "प्रियं त्वां रोत्स्यति" इति श्रुतिराह । प्रियम् अनित्यप्रियम् । वियोगि पुत्रधनादि । नित्यप्रियस्यात्मनो वियोगाभावाद्रतिविषयत्वमु चितमेव । अनेन 'क्रंदंति वत्सा बालाश्च' इति प्रत्युक्तम् । प्रजादित्यागे श्रुतिमाह—किं प्रजयेति । येषामस्माकमात्मालोक आत्मदर्शनं संसृतिहरं, न पुत्रादिरिति तदर्थः । अरविंदवद्रात्राव्रप्रकाशमाने नेत्रे यस्यातः परमसुंदरीष्वस्मासूपेक्षा युक्तैवेति संबुद्ध्या सूचितम् । आशाम् तद्रूपां लतां प्रेमजलसेचनार्हां वचनकुठारेण मा छिंद्या इति भावः । परमेश्वरेति । ईश्वरोऽप्याशां पूरयति राजादिः, किमुत परमेश्वरस्त्वम् । ततो नायं परमेशधर्मो यदाशाच्छेद इति संबुद्ध्याऽऽहुः । 'वरदेश्वर' इति पाठे 'मयेमा रंस्यथ क्षपाः' इति वरं दत्त्वाधुना वरखंडको जात इति पूर्ववदभिप्रायः संबुद्धेः । "भुंक्ते परत्र दुःखानि कल्प आशाऽपहारतः" इत्यादिवाक्यात्समर्थानामाशापूरणमेव धर्म इति बोध्यम् ॥ * ॥ काश्चित्तदनुवादिन्यस्तमेवोक्तमर्थं सदाचारेणापि द्रढयन्ति—कुर्वंतीति । कुशलाः "य एतस्मिन्महाभागे प्रीतिं कुर्वंति मानवाः । नारयोऽभिभवंत्येतान्विष्णु पक्षानिवासुराः ॥" इति गर्गोक्तिविश्वासाच्चतुराः । न च रतिं कुर्वंतीत्यपि वस्तुतो वाच्यं, यतस्त्वयि रतिः स्वभावत एव कुशलानामित्यर्थः । स्वे स्वीये इति त्वमेव तेषां ममतास्पदम् । आत्मनीति । त्वमेवाहंतास्पद त्वात एव नित्यप्रिये इति । प्रीतिरपि त्वयि नित्यैव, पतिसुतादिषु त्वौपाधिकी, अत एवानित्या । अस्माकं तेषु सापि नास्तीत्याहुः—आर्तिदैस्त्वदभिसारवारकत्वाद्दुःखदैः । तत्तस्मान्नोऽस्मभ्यम् अस्मान्, जीवयितुं प्रसीद । यदि वा अस्मानन्योढाः मा जीवय एताः अनूढास्तु किं रोदयसीत्याहुः—हे वरद 'संकल्पो विदितः साध्व्यः' इत्यादिना एताभ्यस्त्वं वरमदा एवेत्यर्थः । नन्वेतासु प्रसादे कात्यायन्यर्चनमेव कारणं, भवतीषु मत्प्रसादे

**चित्तं सुखेन भवताऽपहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये ॥ पादा पदं न चलतस्तव पादमूलाद्यामः कथं व्रजमथो करवाम किं वा ॥ ३४ ॥**

**तथा च शास्त्रम् । " किं प्रजया करिष्यामो येषां नोऽयमात्मा लोकः " इति ॥ ३३ ॥ किं च प्रतियातेति यदुक्तं तदशक्यं त्वयैव चित्तादीनामपहृतत्वादित्याहुः । चित्त**

किं कारणम्, तत्र निष्कारणमेव प्रसीदेति सकाकु प्रार्थयामासुः—हे ईश्वर स्वचिकीर्षिते स्वपरतंत्र ! चिरात् बाल्यमारभ्य त्वयि धृतामाशाम् आशाकल्पलतां संप्रति फलवतीं मा छिंद्याः । फलवती लता हि सत्पुरुषेण छेदं नार्हतीति चिरादिति छिंद्या इति पदाभ्यां द्योतितम् । एषा ह्याशालताप्यस्मन्मनःकेदारिकायां त्वयैवारोपितेत्याहुः—हे अरविंदनेत्र अस्मद्वयःसंस्कारस्ते प्रथमदर्शनसमयेऽरविंदतुल्याभ्यां नेत्राभ्यां त्वत्प्रेषिताभ्यामस्मन्नेत्ररंध्रेषु प्रविश्य हृदयक्षेत्रे भावाभिधानमाशालताबीजमाहितमिति ध्वनितम् । "चक्षूरागः प्रथमं चित्तासंगस्ततोऽथ संकल्पः " इति रसशास्त्रोक्तरीत्या । सैवाशालता गुणरूपश्रवणदर्शनादिना वर्द्धिता फलवती भुक्तभुज्यमानफलापि कठोरोक्तिकुठारिकया कथमद्य छिद्यते । " विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् " इति न्यायं जानास्येवेत्यनुध्वानितम् ॥ अत्र **तोषिणी**--एवं शास्त्रबलेन पत्यादौ शुश्रूषणं प्रत्याख्याय सदाचार बलेनापि प्रत्याचक्षाणाः ' मातरः पितरः पुत्राः ' इत्यादिना प्रपञ्चितं तत् स्नेहानिगडं विशेषतः परिहरंति—कुर्वंतीत्यर्द्धेन । हि प्रसिद्धौ । कुशलाः " य एतस्मिन्महाभागे प्रीतिं कुर्वन्ति नानवाः " इति गर्गवाक्यानुसारेण सारासारविवेकचतुरास्त्वयि नित्यप्रिये स्वाभाविकप्रेमास्पदरूपे रतिं प्रीतिं कुर्वंतीति । तस्य स्वस्मिन्परस्मिंश्च सुखमयस्फुरणमभिप्रेतम् । पत्यादीनां तद्वैपरीत्यमाहुः—स्वे आत्मीये आत्मन् आत्मनि चार्तिदैर्दुःखप्रदैः । तादृशभगवद्विमुखतापादकास्तन्निवारणतात्पर्यात् । अतस्तैः पत्यादिभिरस्माकं किं प्रयोजनम् । स्व इति सर्वनामत्वेपि पूर्वादित्वेन स्मिनो विकल्पात् । तदेवं प्रथमदिक्स्थिताः ' भक्ता भजस्व' इत्युपक्रमानुरूपं विवक्षितमुपसंहरति—तत्तस्मान्नोऽस्माकं संबंधेऽस्मान्प्रतीत्यर्थः । प्रसादमेवावश्यकार्यताभिप्रायेण व्यतिरेकमुखेनाभिव्यंजयन्ति—मा स्मेति । चिरात् अबोधोदयात् धृतां नैश्चल्येन कृतामिति पतिभिः सह तत्संबंधो निरस्तः । मा छिंद्याः किन्तु सफलयेत्यर्थः । अन्यथा तच्छब्देन तदेकालंबनजीवानामस्माकं सद्यो जीवनोच्छेदः स्यादिति भावः । आशामेव विशेषेण व्यंजयन्ति—हे वरद कुमारीषु 'संकल्पो विदितः' इत्यादिना दत्तवरविशेष । हे ईश्वर अन्येषां दुर्घटमनआदिघटनाविशेषसमर्थेति । चिराद्धृतामित्यत्र हेतुः—हे अरविंदनेत्रेति । ' शरदुदाशय—' इत्यादिवक्ष्यमाणात् । अरं चक्रप्रांतं तदिवारं तत्पत्राग्रभागः हृदयच्छेदकत्वेन तद्विन्दतीति तु संरंभस्यान्तःस्थितेः । श्लेषश्च-अरविंदवद्रात्रावप्रकाशमाने नेत्रे यस्येत्यतः परमसुंदरीष्वप्यस्मासु संप्रति तवोपेक्षा युक्तैवेति नर्मद्योतना च । किञ्चारविंदरूपकेण दृष्ट्यापि सर्वेषां तापहारित्वं ध्वनितम् । अतोऽस्मासु तद्वैपरीत्यमयुक्तमिति भावः । ऐश्वर्यार्थस्तु, हि शास्त्रप्रसिद्धौ । कुशलाः श्रीनारदादयः । रतिं भावं न तु श्रद्धामात्रम् । तच्च योग्यमित्याहुः—नित्यप्रिये । कुतो नित्यत्वं प्रियत्वञ्च तत्राहुः—स्वे आत्मन्यपि विषये । आत्मनि परमात्मनीत्यर्थः । "कृष्णमेनमवेहि त्वमात्मानमाखिलात्मनाम् " इत्युक्तेः । एतेन तस्य सुखरूपत्वं च ध्वनितम्, अन्यथा निरुपाधिप्रेमास्पदत्वं न स्यात् । अतोऽस्माकं पत्यादिभिः किम्, अपि तु न किञ्चित्प्रयोजनमित्यथः । ननु भवतीनां पत्यादयोऽपि मादृशा नित्यप्रिया एव, नेत्याहुः—आर्तिदैस्तादृशाकुशलवृंदाभिलषितास्मदीयभगवद्भजनविरोधिभिः । वरदेश्वरेति पाठे वरस्याव्यभिचारित्वं दर्शितमिति । एवमुत्तरत्राप्यूह्यम् । निषेधार्थश्चायम्—नन्वहं तनुभृतां प्रेष्ठश्चेत्तर्हि स्वस्वोचितप्रेमकर्तारस्ते इव भवत्योपि स्वोचितं रत्याख्यं भावमेव मयि कुर्वतामित्याशंक्याहुः—कुशला मंगलरूपाः, साध्व्य इति यावत् । आर्तिदैर्दुःखाखंडकैः पत्यादिभिर्हेतुभिः । स्वे गृहादौ आत्मनि च नित्यप्रिये सति किं त्वयि रतिं कुर्वन्ति अपि तु न, तत्र स्वादिनाशापत्तेः । तत्तस्मात् हे वरद वांछितप्रद ईश्वर गोकुलस्वामिन् नः प्रसीद । प्रसादमेवाहुः—चिराद्वयमत्र मा स्म न तिष्ठाम । अस्तेर्लुङि लङ्प्रयोग आर्षः । शीघ्रं गृहगमनायानुज्ञां देहीत्यर्थः । तथा त्वयि धृतामवस्थितामाशाञ्चास्मदंगसंगेच्छारूपां छिंद्याः छिंधि ' धृङ्—अवस्थाने ' इति । अत्र वरदेश्वरे । अत्र 'परमेश्वर ' इति पाठेपीश्वरवत्संगमनीयः । छिंद्या इत्यत्र छिंद्यादिति पाठे तु भवानित्यध्याहार्यम् ॥ ३३ ॥ निवृत्तौ प्रयोजनाभावपूर्वकं साधनाऽभावमाहुः—किञ्चेत्यादिना । गृहकृत्यनिष्पत्त्यर्थं सुखार्थं च गृहे वासो भवति तच्च सर्वं चेतसा भवति तत्तु त्वयाऽपहृतं तत्किं करिष्यामस्तत्र गत्वेति प्रयोजनाभावः । यद्वा—भवता येन संसारक्लेशेन हृतमपि याच्चित्तमिति योज्यम् । गृहे भवं गृह्यं तच्च तत्कृत्यमिति, तथा तस्मिन्मार्जनोपलेपनादिलक्षणे । कृत्यानां बहुत्वमपेक्ष्य चित्ते संतापो भवात न सुखमित्यरुच्या विशिनष्टि—सुखात्मना सुखरूपेण भवतेत्यस्य प्रतिपदं त्वयेति विशेष्यम् । पादयो

सिंचांग नस्त्वदधरामृतपूरकेण हासावलोककलगीतजहृच्छयाग्निम् ॥ नो चेद्वयं विरहजाग्न्युपयुक्तदेहा ध्यानेन याम पदयोः पदवीं सखे ते ॥ ३५ ॥

मिति । यदस्माकं चित्तमेतावंतं कालं सुखेन गृहेषु निर्विशति तत्त्वयाऽपहृतं करावपि यौ गृहकृत्ये निर्विशतस्तावपि । सुखात्मना त्वयेति वा ॥ ३४॥ अतः अंग हे कृष्ण नोऽस्माकं त्वदधरामृतपूरकेण तवैव हाससहितेनावलोकेन कलगीतेन च जातो यो हृच्छयाग्निः कामाग्निस्तं सिंच । नो चेदयं तावदेकोऽग्निस्तथा विरहाज्जनिष्यते योऽग्निस्तेन चोपरपि स्तंभो जात इत्याहुः—पादाविति । गतिसाधनाभावाद्गमनं कथं स्यादिति भावः । अत्रायमाशयः—त्वत्काठिन्येनात्र स्थातुमपि न युज्यते गन्तुं च न शक्यते, हा कष्टमधुना किं कार्यमिति ॥ * ॥ अन्यास्तु स्वीयं प्रेमाणं परमं द्योतयंत्यो भोश्चोर चक्रवर्तिन् न वयमन्यार्थमागताः किन्तु त्वया चोरितं स्वं धनमेव प्रतिजिघृक्षव इत्याहुः—चित्तं भवतापहृतं न च तत्रान्यचोरस्येव तव कोप्याधिकः प्रयत्नोभूदित्याहुः—सुखेनेति । वेणुरन्ध्रेषु फूत्कारमात्रेणैवेत्यर्थः । न च तच्चित्तधनमस्माकमल्पतरमित्याहुः—यच्चित्तं गृहेषु सर्वेष्वेव निः निःशेषेण विशाति अतस्तदपहारेण त्वयाऽस्माकं सर्वाण्येव गृहाणि लुंठितानीति ध्वनितम् । वस्तुतो गृहेष्वस्माकं चित्ताभावात्तानि ज्वलन्तु समृध्यंतु वा किमस्माकं तैरित्यनुध्वनितम् । अतिशयोक्त्या गृहेषु श्रोत्रादींद्रियार्थेषु तत्तत्साफल्यार्थं यन्निर्विशाति यद्विना सर्वेंद्रियाण्यपि विफलीभवंतीति भावः । अतश्चित्तापहारादेव सर्वेन्द्रियाण्यपि त्वयाऽपहृतानीत्याहुः—करावपि यौ गृहकृत्येषु निर्विशतः उतेति नेत्रे श्रोत्रे अपि । एतानि सर्वाण्यपहृतानीत्यर्थः । ननु भो अद्य तावद्गच्छत श्वः परश्वो वा विविच्य वश्चित्तं दास्यामीति तत्राहुः—पादावस्माकं पदमेकमपि न चलतः । यद्विनेत्यर्थः । अतश्चित्तं देहि तत एव याम इति भावः ॥ अत्र **तोषिणी**—ननु गृहवाससुखरक्षार्थमपि न पत्यादित्यागो विधेय इत्याशंक्य तत्रापि तस्यव दोषोट्टंकनपूर्वकमाहुः—चित्तमिति । सुखेन सुखरूपतया स्वदर्शकेनेति तदानीं गृहादीनां दुःखरूपतास्फूर्तिर्ध्वनिता । सुखेन सहितामिति वा । पादौ यौ गृहकृत्ये गमने वा निर्विशतस्तावप्यपहृता अतस्तव पादमूलात्पदमेकमपि न चलतः । गन्तुं न शक्नुत इत्यर्थः । करयोः पादयोश्चापहारस्तत्तादिंद्रियशक्त्यपहारात् । अत आगमनञ्च त्वद्गीताकर्षणमात्रेणेति भावः । अतोस्माद्धेतोः कथं व्रजं यामः । ननु अबलाः एवं चेन्मयैवाग्रे गच्छता सह गम्यतां, तत्राहुः—तत्र गत्वा किं वा करवामेति । वा शब्दः समुच्चये । यद्यपि चित्तापहारेण सर्वेन्द्रियापहारोऽप्यायाति तथापि विशेषतः करपादापहारोक्तिः पतिशुश्रूषणादिगृहकृत्यस्यान्यत्र निजगमनस्य च परिहाराय । अन्यत्तैः । यद्वा—यच्चित्तं सुखे निमित्ते सुखे विषये वा पूर्वं स्थितं तद्भवताऽपहृतं सत् उतापि न प्रविशत्यपि । कुतस्तस्मिन्कृत्ये करादिकं प्रवेशयेदित्यर्थः । ननु गृहेश्वर्यस्तथापि तद्विचारबलेन प्रवेश्यतां, तत्राहुः—करावप्यपहृतौ गृहसंबंधिकृत्ये न प्रविशतः । ननु तथाप्यत्र तु स्थातुमयुक्तमिति गच्छतैव, तत्राहुः—पादौ च भवतापहृतौ स्वाभिमुख्येनाकृष्टौ पदमपि न चलत इति । अन्यत्समानम् । अतस्त्वय्येव त्वदर्थकृत्ये एव करौ त्वत्स्थान एव पादौ प्रविशांति नान्यत्रेति सूचितम् । अत्र नर्मेदम्—वनेऽस्माकं प्रयोजनाभावात्त्वद्दर्शनार्थं नागताः स्मः चित्तवित्तस्य भवतापहरणात्तदुद्देशेनात्रागताश्चौरं भवन्तं प्राप्ता अपि ग्रहीतुं नेतुं च तथाऽऽक्रोशनार्थं कुत्रापि गन्तुमपि न शक्नुमो भवता करपादापहरणादतो हृतधनाः कथं व्रजं याम, किं वा करवाम, स्तंभनादिमहामंत्रज्ञचोरवरे कस्याप्युपायस्य प्रभुत्वासंचारादिति भावः । निषेधार्थश्चायम्—ननु वेणुगीतेन मया गृहादाकृष्टाः सुष्ठु श्रांताश्च कथं गन्तुं शक्नुथ तत्राहुः—गृहेषु भवता उद्भवता सुखेनापहृतं चित्तं यद्यस्माद्गृहकृत्ये निर्विशति । यद्वा—चित्तं सुखे एव न तु भवतापहृतम्, यद्यस्माद्गृहेषु निर्विशति एवं करावपि गृहकृत्ये निर्विशतः । परिश्रांतत्वमाशंक्याहुः—पादौ कथं पदमपि न चलतः अपि तु दूरमपि चलत एव । ततः कथं न याम अपि तु याम एव, अत्र च किं करवामेति ॥ ३४ ॥ स्वाभीष्टं निवेदयंत्य आहुः—सिंचेति । यतस्त्वया वयं सर्वव्यवहारसाधनापहारेणाऽसमर्थाः कृताः अतस्त्वमेव नः कामाग्निं निर्वापयेत्याहुः । कलगीतपदं पूर्वं व्याख्यातम् । यद्वा—कलगीतेन मधुरगानेन हृच्छय एव संतापजनकत्वसाम्यादग्निर्हृच्छयाग्निस्तम् । अधरनिष्ठामृतप्रवाहेण सिञ्च निर्वापय नो चेदन्यथा तावदधुना तेन द्वितीयेन च पदवीं सामीप्यम् “पदवी निकटे मार्गे विष्णौ च पादरक्षके” इति शाश्वतः । ‘अंते या मतिः सा गतिः’ इति न्यायेन वयं तु त्वां प्राप्स्याम एव । हस्तावेव मर्दयतस्तव शाठ्यमात्रं स्त्रीवधमात्रञ्चावशेक्ष्यतीति भावः । दृष्टान्तोऽत्र दीक्षितपत्नी ॥ * ॥ अहो संप्रयोगसमरान्यसमयेऽपि सुंदरीणां निर्वस्त्राः काया दिदृक्षिता ये आसंस्ते चीरहरणदिने दृष्टास्तथैव मधुपानान्यसमयेऽपि भाववतीनामासां निर्लज्जं वचनं शुश्रूषितमासीत्तदधुनापि श्रूयते । हंतहंत

वेणुनादेन काममयेन उन्मादिताः पुनश्च वाचःपेशैर्विह्वलीकृताः यच्चालंब्य विवेकलज्जाधर्मधैर्यादीनि तिष्ठंति तांश्चित्तमप्यपहृतं तदप्येताः प्रायः सलज्जमेव भाषन्ते न त्वाभ्यन्तरभावमधुना वाचा मय्यरावुद्घाटयं तीति मनसि परामृशति सति श्रीकृष्णे काश्चिन्मुख्यतमा उन्मादसंचारिप्राबल्येन विपर्यस्तीकृतप्रकृतय आहुः—सिञ्चेति । अत्र हासेत्यस्य संबंधिपदमर्थात्तवेत्येव लभ्यते । ततश्च अंग हे कृष्ण तव हाससहितेनाव लोकेन कलगीतेन च जातः प्रोद्बुद्धः प्रोद्दीप्तो यो हृच्छयः काम एवाग्निस्तं तवैवाधरामृतपूरकेण सिंच निर्वापय । स्वार्थे कः । येनैवाग्निः प्रोद्दीप्यते तेनैव प्राप्तविवेकेन यदि निर्वाप्यते तदैव तदपराधोपशमः । अन्यथाऽग्निदाता गृहादिदाहोत्थं पापं प्राप्नोत्येवेति भावः । अत्र काममित्यप्रयुज्य हृच्छयपदप्रयोगेणैवं ध्वन्यते—अस्माकं कामो हि हृदि शेत एव तञ्च त्वया विना कोऽपि प्रबोधयितुं न शक्नोति तं च वंशीनादेन सहास्मत्कर्णरन्ध्रद्वारा हृदयं प्रवेश्य तत्र शयानं कामाग्निं प्रबोध्य हासावलोकघृतमधुभ्यां कलगीतवातेन च प्रोद्दीप्य तत्रत्यानस्मत्प्राणान् दग्धुमुपक्रमसे, अतस्तद्दाहपापाच्चेद्बिभेषि, तं निर्वापय । न च तत्प्रोद्दीपनेन तन्निर्वापेन वा तवायासलेशोऽपि, यतस्ते हासावलोकस्तस्याग्नेरुद्दीपकः, अधरामृतं च तस्य निर्वापकमिति तद्वस्तुद्वयं तव मुखचंद्र एव वर्ततेऽतो दुर्ललराजपुत्रस्य तवाग्निज्वालननिर्वापणात्मिकैव खेला भूयसी भूरिशो दृष्टा न त्वग्निज्वालनमय्येव।एषा त्वय्यैव दृश्यत इति । नन्वेतानि मे साहजिकान्येव हासावलोककलगीतानि एतैर्यदि युवतयो ज्वलेयुस्तदा कुत्रकुत्र कतिशो वा मया स्वाधरामृतैश्चिकित्सा कर्तव्येति चेत्—सत्यम्, परःसहस्रस्त्रीवधे प्राप्त एव तव तदुद्भूता दनुतापादयं हठोऽपास्यतीत्याहुः—नो चेदिति । विरहाग्निना उपयुक्तदेहा दग्धशरीरा योगिन्य इव ध्यानेन तव पदयोः पदवीं याम अधुनैव प्राप्नुयाम । अयमर्थः—वयं पूर्वजन्मन्यकृततपस्कानेवात्मनो जानीमो यदेतज्ज न्मनि त्वं नांगीकुरुषे, तस्मादधुना तपश्चरणार्थं न बाह्यं लौकिकं वह्निं गृह्णीमः हृच्छयाग्नित्वद्विरहाग्न्योः स्वत एव सत्त्वात् । तत्रापि त्वद्विरहाग्निनाऽतिप्रबलीभविष्णुना हृच्छयाग्निरपि मंदीकरिष्यत एवातो विरहाग्नावेव प्राणेषु हूयमानेष्वस्माकं संकल्पश्चायम्—भो कृष्णविरहाग्ने कृष्णपादस्पर्शमाशास्यमाना वयं त्वयि स्वप्राणान् जुहुमस्तस्मात्कृष्णस्य पादयोः पदव्यामन्यजनैरलक्षिता अस्मांस्तथा स्थापय यथाऽस्मत्कुचयोरुपर्येव तत्पादौ पतेताम्, न तु भूमाविति । ततश्च त्वत्पादभारेणैवोपशांतहृच्छयाग्नयो वयं सिद्धमनोरथा एव भविष्यामः, त्वञ्चानिच्छन्नप्यस्मत्कुचस्पर्शसुखं प्राप्नुवन्नपि स्त्रीवधानुतापमेव भूयांसं प्राप्स्यसीति । सख इति—सख्यादेवैवं चिकीर्षामः । सखीरप्यस्मांस्त्वमेवं संतापयसि चेद्वयमपि त्वां सखायमेवं कथं नानुतापयाम इति ध्वनिः । किन्तु, प्रेम हतकं खलु तदपि त्वदनुतापदुःखं कोटिगुणीकृत्यास्मभ्यमेव दास्यत इति जानीमः । किं कुर्मोऽस्माकं दग्धललाटमेवं विधमेव विधात्रा सृष्टम् । तस्मादये परिणामदर्शिन् कृपासिंधो स्वानुतापवल्लीबीजं किमर्थं वपसि कथं वा तत्फलभागिनीरस्मांश्च करोषि, मुंच हठमस्मानंगीकुरु इति भूयांस एवानुध्वनयः ॥ अत्र **तोषिणी**—तदेवं द्वितीय दिक्स्थिता अपि पुनराशामेवोत्कंठस्फुटमेव वदंत्यस्तत्पूर्तेरप्यवश्यंभावितां प्रौढ्या निर्दिशंत्यस्तदापातप्रत्याख्यानेन त्वयि दोषमात्रं पर्यवस्यतीतिरीत्या विवक्षितमुपसंहरंति—सिंचेति । निर्वापयेत्यर्थः । आदौ क्रियानिर्देशः परमार्त्तिवैयग्र्येण । न इत्यस्य हृदयाग्निनैव संबंधः, तत्पुरुषस्योत्तरपदप्रधानत्वात् । हासस्य संबंधि पदं तवेत्येव लभ्यते प्रकरणबलात् । विनापि त्वच्छब्दमर्थबोधे सति तन्निर्देशस्त्वया जनिताग्नेस्त्वयैव निर्वापणं युक्तमिति विवक्षया । पूरशब्देनाग्नेर्महत्त्वमपि ध्वनितम् । स्वार्थे कः । हासावलोकगीतयोः क्रमेण घृतवातत्वं ध्वनितम् । हृदि शेते वसतीति हृच्छयः कामः । अतस्तन्निवर्त्तनौषधस्याभ्यंतःप्रवेशनाऽपेक्षयाऽधरामृतपूरस्य पानं तथाऽ नन्यप्रतिकार्यत्वं च सूचितम् । इदं च संभोगस्य साक्षात्प्रार्थनं तदीयवेणुतनुमाधुर्य्यमधुमत्तचित्तानां लोकोत्तरप्रौढानुरागार्तिनर्तितमहोत्कंठावगुंठितानां रसेनापि न विरुध्यते । निषेधाच्छन्नतयैवोक्तत्वात्तु नितरामिति । व्यतिरेकेण तदेव द्रढयति । नो चेद्यदि न सिंचासि तदापि ध्यानेनेति ‘मरणे या मतिः सा गतिः’ इत्यादिन्यायेन याम । संप्रत्येव प्राप्स्याम इत्यर्थः । प्राप्तकाले लोट् । तत्र च सखे इति संबोध्य स्वेषु स्नेहमुद्बोधयंति । तत्रान्वयक्रमेणाभिप्रायाश्चैते—ननु हासादिजहृच्छयाग्निसेके साधनं मम जलभाजनमत्र किमिव दृश्यते इति परिहासमाशंक्याहुः—अमृतेनैव तत्सिक्तं स्यान्न तु जलादिना, तत्रापि तस्य पूरेण न तु यत्किञ्चिन्मात्रेण । स्वार्थे कन् । ननु तदपि दुर्लभं कुत्र लप्स्ये, तत्रापि तस्य पूरस्यात्यंतासंभव इत्याशंक्य कथमिदं गोपयसीत्याहुः—त्वदधरेति । अहो नान्येनाऽमृतेन तच्छान्तिः स्यात् किं तु, त्वदधरसंबंधिनैव तत्रापि तस्याग्नेरत्यंतवृद्धेर्युवतीकोटिभिरप्ययपरिसमाप्येन तत्पूरेणैवेति महातृष्णा सूचिता । एवमग्रे वक्ष्यमाणस्यामृतस्य च परमवैलक्षण्यम् । ननु ध्यानेन यामेति झटिति

१—पूरकशब्दे ।

यर्ह्यंबुजाक्ष तव पादतलं रमाया दत्तक्षणं क्वचिदरण्यजनप्रियस्य ॥ अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमंग स्थातुं त्वयाभिरमिता बत पारयामः ॥३६॥

युक्तदेहा दग्धशरीरा योगिन इव ते पदवीमंतिकं ध्यानेन याम प्राप्नुयाम ॥ ३५ ॥ ननु स्वपतीनेवोपगच्छत त एनमग्निं सिंचेयुरिति चेत्तत्राहुः। यर्हीति। रमाया लक्ष्म्या दत्तक्षणं दत्तः क्षण उत्सवो येन तत् दत्तोत्सवं दत्तावसरं वा। तदपि क्वचिदेव न सर्वदा। अरण्यजनाः प्रिया यस्य तस्य तव अरण्यजनप्रियत्वादरण्ये क्वचिद्यर्ह्यस्प्राक्ष्म स्पृष्ट

देहत्यागं सूचयंतीनां भवतीनां तत्साधनं न दृश्यते, तत्राहुः—अये अन्या इव किं वयमनुरागहीनाः, येन बाह्यमग्न्यादिकं तत्साधनं मृगयामः किं त्वंतरेव स्वत एव तदुदेष्यतीति भावः। अन्यत्तैः। यद्वा—एवं विवक्षितमुपसंहरंत्यो ननु दुर्घटेऽस्मिन्नर्थे कथमतित्वरयथेत्याशंक्यातिदुःखाद्दुर्घटत्वमेव सत्यमित्याहुः—नो चेदिति। ध्यानेऽपि नैव याम, यतः विरहजाग्नेरेव उपयुक्ता उचिता देहा न तु संयोगामृतयोग्या यासां ताः। अधुना एतदसिद्ध्या कालांतरे जन्मांतरेऽपि विरहस्यैव निश्चितत्वादिति भावः। सखे इति तस्यापि तत्र भाविदुःखं दर्शयंति। यद्वा—झटिति तत्प्राप्त्यभावेन देहत्यागं सूचयंत्य आहुः—जन्मांतरे ध्यानेनापि ते पदयोरंतिकं मार्गमपि वा यामेति प्रार्थनम्। तत्र च सखीत्वेनैवेत्याशयेन संबोधयन्ति—सख इति। अनेन सुमध्यमा इत्यस्योत्तरम्। भवदाशयेदृशसद्गुणदेहोऽपि त्याज्यः, त्यक्तेऽपि तस्मिन्भवान्न त्याज्य इति श्लोकद्वयमिदमैश्वर्यमयार्थेऽपि प्रायः समानम्। निषेधार्थश्चायम्—तस्मात् अंग हे महालम्पट नोऽस्माकं हासावलोककलगीतेन सहजेन जातो यस्तव हृच्छयाग्निस्तं त्वदधरामृतपूरकेणैव सिंच। अस्माकं मध्ये सा काचिन्नास्त्येव यस्या अधरामृतेन स्वकाग्निं सेक्ष्यसीत्यर्थः। इति स्ववर्गीणां सर्वथा नैरपेक्ष्यं सूचितम्। अथ च स्वाभीष्टपरममधुरवस्तुनि दुर्लभे सति लुब्धैः स्वस्याधरपुटो लिह्यत इति नर्मभंगी व्यंग्या। नो चेद्यद्येवमश्रुत्वा पंथानमस्माकं निरुंधन् दुराग्रहान्न विरमसि तदा वयं स्वपतिविरहजाग्न्युपयुक्तदेहा भवेम। वयं म्रियेमहीत्यर्थः। तथापि ध्याने चिंतनेऽपि तव पादयोः पदवीमपि न याम न यास्यामः। सख इति। बाल्यक्रीडायां प्राप्तसख्यत्वे नास्मद्धर्मनिष्ठां जानास्यपीति भावः। यद्वा—चेदिति निश्चये। 'धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि' इतिवत्। ततश्च नैव विरहजाग्न्युपयुक्तदेहा वयं यतो ध्यानेपि नैव यामेति ॥ ३९ ॥ कामाग्निशमने तु युष्माकं पतय एव समर्था इत्याह—नन्विति। एनं कामजाग्निमित्युक्ते प्रत्युत्तरमाहुः—न केवलं रमाया एव दत्तोत्सवमस्माकं भक्तानामपि तथात्वादत आह—दत्तावसरम् दत्तावकाशं वेति। तदपि अवकाशदानमपि। अरण्यजनाः गोपाः 'वनशैलनिवासिनः' इत्युक्तेः। यर्हि यदा। तत्र च वने च। इत्यर्थ इति। न हि समुद्रतरणशीलस्य क्षुद्रखातकतरणेच्छा भवतीति भावः। यद्वा—अरण्यजनास्संन्यासिनः प्रिया यस्य स तथा। तथा च वयमपि सर्वोस्त्यक्त्वा वनमेवागतास्त्वत्प्रियार्थमिति हेतोरस्मान् गृहाणेति। यद्वा—रमत्यानंदयति त्वामिति रमा श्रीराधा तस्याः पादतलं तव दत्तक्षणम्, अतीव मृदुलसौभगवत्त्वेनेत्यर्थः। यर्हि अस्प्राक्ष्म तत्प्रभृति वयमप्यन्यसमक्षं स्थातुं न पारयामः, किमुत सेति। अनेन तवांगस्पर्शनानंतरमन्यांगस्पर्शशंका निरस्तेति ध्वनितम् ॥ * ॥ ननु तर्हि स्वस्वपतीनेवोपगच्छत त एवैनमग्निं सिंचेयुस्तत्राहुः—यर्हीति। हे अंबुजाक्षेति—त्वन्नयनदर्शनक्षणमारभ्यैव वयं भ्रमरीभूय स्थिताः स्म इति "चक्षूरागः प्रथमं चित्ताऽऽसंगस्ततोऽथ संकल्पः" इति रसशास्त्रोक्तं प्रथमं लोचनालोचननिदर्शनमेवास्माकं पूर्वरागप्रवर्तकमिति भावः। तत्रापि यर्हि यस्मिन्नेव क्षणे तव पादतलं क्वचिद्गोवर्धनादिकुंजप्रदेशेऽस्प्राक्ष्म कुचाभ्यां स्पृष्टवत्यो वयम्, कीदृशम्—रमाया दत्तक्षणम्, वैकुंठवासिन्या लक्ष्म्या नारायणप्रियाया अपि रमणाभिलाषमयोत्सवदायकम् 'यद्वांछया श्रीर्ललना चरत्तपः' इति नागपत्नीवचनाद्गर्गादिमुखश्रुताच्च। अतो वनवासिनीनां गोपस्त्रीणामस्माकं तत्राऽभिलाषे किमाश्चर्यमिति भावः। ननु लक्ष्म्या अप्यभिलषणीये वस्तुनि कुतो वः प्राप्तियोग्यतेत्यत आहुः—अरण्यजना गोपजातय एव प्रिया यस्य तस्य तव। तत्प्रभृति तं क्षणमारभ्य अन्येषां स्वस्वपतीनां समक्षं गोपस्त्रियो वयं स्थातुमपि न पारयामः तान् दृष्ट्वा मनसि घृणोत्पद्यत इति भावः। किञ्च, न केवलं वयमस्प्राक्ष्म एव अपि तु त्वयाऽभि सर्वतो भावेन रमिताः। यथेष्टं संयुज्य पुरुषवतीकृता अपीत्यर्थः। तेन संभुक्तपूर्वा अस्मानन्यत्र न प्रस्थापय पादयोस्ते पताम इति काकुर्ध्वनिता ॥ अत्र **तोषिणी**—ननु कथं निरपराधे मय्यपराधः कल्पते मदीयस्वाभाविकसौंदर्यादिदर्शनेन कामिनीनां वाश्चित्तादिकं क्षुभ्यति तत्राहं किं करवाणि, किं च यदि गृहकृत्येषु न भक्तिस्तथापि कुलवधूनां युष्माकं तत्रैवावस्थानं युक्तम्, तत्राहुः—यर्हीति। हे अंबुजाक्ष यर्हि यदाऽस्मदनिर्वचनीयपुण्योदयसमये क्वचिदपि दुर्लभदेशे

**श्रीर्यत्पदांबुजरजश्चकमे तुलस्या लब्ध्वाऽपि वक्षसि पदं किल भृत्यजुष्टम्॥यस्याः स्ववीक्षणकृतेऽन्यसुरप्रयासस्तद्वद्वयं च तव पादरजः प्रपन्नाः॥३७॥**

वत्यो वयं तत्र च त्वयाऽभिरमिता आनंदिताः सत्यस्तदारभ्यान्यसमक्षं स्थातुमपि न पारयामः । तुच्छास्ते न रोचंत इत्यर्थः ॥ ३६ ॥ त्वत्पादसौभाग्यं त्वतिचित्रमित्याहुः । श्रीरिति । वक्षस्यसापत्नं स्थानं लब्ध्वाऽपि तुलस्या सपत्न्या सह तव पदांबुजरजः कामयते स्म । भृत्यैः सर्वैर्जुष्टमिति सौभाग्यातिरेकोक्तिः । यस्याः स्ववीक्षण

त्वयाभिरमिता निजभावव्यंजनया नंदिताः सत्यस्तव पादतलमस्प्राक्ष्मेति सूचकेन वाक्येन " पुण्याः पुलिंद्य उरुगायपदाब्जरागश्रीकुंकुमेन दयितास्तनमंडितेन " इत्यत्र पूर्वकृतव्याख्यानुसारेण कयापि तया यथाकथंचिल्लब्धस्य पादतलस्पर्शस्य तद्गोष्ठीस्वेव प्रसिद्धेः । कृतकात्यायनीव्रतानां तु तत्स्पर्शस्यांगीकारमात्रतात्पर्याच्चाप्राप्तसंगा अपि प्राप्तसंगाभिरैक्यं प्रकल्प्य ताभिर्मिलित्वा प्रोचुरिति ज्ञेयम् । कीदृशं पादतलम्—रमाया दत्तक्षणम् । तस्यामपि नूनमर्पितमहोत्सवमित्यर्थः । ननु स्वप्न एवायं भवतीनाम्, अन्यथा नित्यमपि तथाद्यापि तत्स्यात्तत्राहुः—अरण्यजनेषु पुलिंदीहरिणादिष्वेवं संततनिजदर्शनादिदानेन प्रीतिं कर्तुं, न व्रजजनेषु । ततोऽस्माकं तु सुतरामेव दुर्लभस्येत्यर्थः । इति रमाया अस्माकं च योग्यानां परित्यागात्तादृशानाञ्च स्वीकारादुपालंभश्च सूचितः । तदेवं यदास्प्राक्ष्म तत्प्रभृति नान्येषां समक्षं स्थातुमूर्द्ध्वस्थानमपि कर्तुं पारयामः । अन्यदर्शनमस्मभ्यं न रोचत इत्यर्थः । अत एव कोप्युच्चाटनाविद्यामयः स्पर्शगुण इति भावः । ननु मिथ्यावादिन्यः सदा गोष्ठजनमध्ये वसथैव तत्राहुः—अंजः सुखेनानायासेन ततो बलादेव तत्र वसाम इति भावः । अथैश्वर्यपक्षे--क्वचित्स्पर्शने हेतुः—क्वचित्केषुचिदाविर्भावेषु रमाया दत्तक्षणं, स्वयं तु अरण्यजनप्रियस्य वृंदावनवासिनां श्रीगोपादीनां प्रेम्णा तदव्यभिचारिणः अहो अभाग्यं तथापि यर्हि कदाचिदेवास्प्राक्ष्म । अन्यत्समानम् । अत्र तेषां व्याख्यानेऽरण्येति तज्जनसंबंधेनैवेत्यपि दैन्यमेवेति । अनेनाथ वेत्यस्योत्तरम् । स्वाभाविकप्रेमविशेषेणैवागताः न त्वन्यजनवत्साधारणप्रेम्णेति । निषेधार्थश्चायम्—अये साधु स्मारितं सखे इत्यनेन, यतो बाल्यक्रीडासख्येन भवतीनां स्पर्शोऽपि जातोऽस्तीत्याशंक्याहुः—यर्हीति । यर्हि यदा तव बाल्ये वानरादिप्रियस्यैव सतः पादतलं रमाया रमण्या दत्तावसरं तदभिसारोन्मुखं बभूवेत्यर्थः । तत्प्रभृति तदपि नास्प्राक्ष्म किमुतान्यदंगम्, कथंभूता अपि त्वयाभिरमता बाल्ये कारितक्रीडा अपि अत एवान्येषां श्वश्र्वादीनामपि समक्षं स्थातुं पारयामः । अन्यथा तैरपि द्विष्येमहीति भावः ॥ ३६ ॥ सौभाग्यम् सौंदर्यम् । अतिचित्रम् निखिलदेवप्रसाद्यलक्ष्म्या कांक्षितधूलित्वादिति । श्रीयते सेव्यते निखिलैरिति श्रीर्लक्ष्मीः । असापत्न्यमेकाकिन्या लब्धत्वात् । भत्यैः ऐकांतिकभक्तैर्नारदादिभिः । भगवतो विश्वंभरत्वेन सर्वपालकत्वात्तदपेक्षया निखिलानां भृत्यत्वमेवेत्यभिप्रेत्य स्वामिचरणैर्भृत्यपदं सर्वार्थपरतया व्याख्यातम्—भृत्यैः सर्वैरिति । अतिरेकः आधिक्यम् । यस्याः लक्ष्म्याः । स्वान् आत्मनः प्रति वीक्षणं स्ववीक्षणम् । आत्मनोऽस्मान् प्रपन्नास्तव पादरजस्सेवनाय प्राप्ता इत्यर्थः ॥ * ॥ तदेवं त्वयैव वयं स्वप्रेयसीकृताः । किन्तु त्वच्चरणसेवामेव वयमाशास्महे इति सदृष्टांतमाहुः—श्रीर्लक्ष्मीर्यस्य नारायणस्य पदांबुजरजश्चकमे तद्वत्तत्तुल्यस्य तवापि वयं पदांबुजरजः प्रपन्नाः । ततश्च गर्गोक्तिगम्येन तव नारायणतुल्यत्वेनास्माकमपि श्रीतुल्यत्वं स्वत एवायातमिति भावः । किञ्च, वक्षसि सर्वोत्तमे स्थले पदमास्पदं लब्ध्वापि तुलस्या सपत्न्या पदमपि भृत्यैर्जुष्टं सेवितमिति पुरुषजनसंवद्दत्वदपि तस्य पादरजश्चकमे स्वाभाविकीं प्रेयसीभावसमुचितां लज्जामपि परित्यज्य स्वन्यूनतामप्यंगीकृत्य कामयते स्मेति तस्याः प्रेयसीभावादपि दासीभावो यथाऽभीप्सितस्तथैवास्माकमपीत्यतस्तव रक्तकपत्रकादिदासैः सहापि लज्जां परित्यज्य पादौ संवाहयितुमिच्छामः । तथा वृंदावनीयपुलिंदीनां कर्म तृणलग्नत्वच्चरणतलकुंकुमेन स्वीयभालप्रलेपनमपि स्वन्यूनतामप्यंगीकृत्य चिकीर्षामः । किञ्च, श्रीमन्नारायणदेवेन प्रतुष्यता नित्यं निवासार्थं स्ववक्ष एव दत्तम् । त्वया तु रसिकशेखरेणास्मभ्यं स्वपदतलनिकटप्रदेशेपि क्षणमपि स्थातुमपि न दीयते इत्यस्माकमेव दग्धललाटमिति ध्वनिः । स्वयशःप्रेप्सुर्गर्गोक्तिप्रामाण्येन यदि नारायणतुल्यो बुभूषसि तदाऽस्मान्वक्षसावहेल्यपि भावगांभीर्यस्पर्शी ध्वनिः । ननु सा लक्ष्मीर्यथा चंचला तथव यूयमपि पुण्यवतां जनानां गृहेगृहे चांचल्यधर्ममप्यंगीकुरुथेति नर्माशंका । केन मूर्खेणोच्यते श्रीश्चंचलेति, सा तु परमधीरैवेत्याहुः—यस्याः श्रियः स्वेषु वीक्षणकृते वात्सल्यरसमयकृपावलोकनप्राप्तिकृतेऽन्यसुराणां ब्रह्मादीनां तत्पुत्रतुल्यानां प्रयास एव, सा तु तदपि तानपि

**तन्नः प्रसीद वृजिनार्दन तेंऽघ्रिमूलं प्राप्ता विसृज्य वसतीस्त्वदुपासनाशाः ॥ त्वत्सुंदरस्मितनिरीक्षणतीव्रकामतप्तात्मनां पुरुषभूषण देहि दास्यम् ॥३८॥**

**कृते श्रीरात्मानं विलोकयत्वित्येतदर्थमन्येषां ब्रह्मादीनां तपाभः प्रयासः सा तद्रजस्तद्वद्वयमपि प्रपन्ना इति ॥ ३७ ॥ हे वृजिनार्दन दुःखहंतस्त्वदुपासने त्वद्भजन एवाशा यासां ता वयं वसतीर्गृहान्विसृज्य हित्वा योगिन इव प्राप्ताः । तत्कर्तृकसुंदरस्मितविलसितनिरीक्षणेन यस्तीव्रः कामस्तेन तप्तचित्तानां हे पुरुषरत्न दास्यं देहि ॥ ३८ ॥**

प्रायो नावलोकते किन्तु तच्छक्तिरेव काचित्तेभ्योऽभीप्सितां संपदं दत्ते इति ॥ अत्र **तोषिणी**—ननु मादृशतुल्यकुला एव यूयं ततो बत कथं पादतलमस्प्राक्ष्मेति वदथेत्याशंक्य निजाभीष्टोत्कंठावगुंठितयैवातिदैन्येनाहुः—श्रीरिति । यत् यस्य नारायणस्य वक्षसि पदं लब्ध्वापि पदांबुजरजः श्रीश्चकमे । प्रेयस्युचितं सेवाभिलाषविशेषं परित्यज्य दासोचितमेवेष्टवतीत्यर्थः । अत एव दासानां बहूनां तत्र संघट्टमप्यंगीचकारेति भावः । कीदृश्यपि सा, तत्राहुः—यस्या इति । तदेवं दृष्टांतमुक्त्वा दार्ष्टीतिकमाहुः—तद्वदिति । “ तस्मान्नंदात्मजोऽयं ते नारायणसमो गुणैः ” इत्युक्तत्वात्स नारायण इव यस्त्वं तस्य तव पादरजो वयं च सत्कुलादिसंपत्त्या प्रेयसीपदयोग्यतां लब्ध्वापि प्रपन्नाः । तस्य तव च गुणमहिमैवायं यत्तस्या अस्माकञ्च लब्धतादृशपदत्वेऽपि न्यूनताभिमानमेव कारयतीत्यर्थः । तत्र श्रीरंबुजसादृश्यमुपाधिमवलंबमाना तस्य पादांबुजरजश्चकमे । वयं तु तदुपाधिमनपेक्ष्यमाणास्तव पादरजः प्रपन्ना इति स्वेषां तत्पादस्य च वैशिष्ट्यमंबुजरूपकाभ्यां दर्शितम् । एवं क्षीरोदमथने यथान्यपरित्यागेन श्रियास्तदेकभजनं तथाऽस्माकमपि तदेकभजनमिति ज्ञापितम् । अथ वा--ननु नाहं स्वप्नेपि भवतीस्पर्शनं स्मरामि, भवतु वा तथाप्यविचारेण सकृत्स्खलनेऽपि न भूयः कर्तुमुचितम् । तच्चानौचित्यं भवतीनां साध्वीकुलाचारस्खलनेन मम च तादृशभवदाचारध्वंसनेनेत्यत्र साध्वीकुलशिरोमणिश्रियमेव दृष्टांतयंत्यः प्रत्युत्तरयंति—श्रीरिति । वक्षसि स्वभर्तुर्हृदये पदं स्थानं लब्ध्वापि श्रीः किल प्रसिद्धौ असमोर्द्ध्वमाधुरीभरमोहितत्वात्तथापि तवाङ्गसङ्गे निजायोग्यतामननाच्च । यदिति । यस्य वृंदावनसंबंधि पादरजो मात्रं यद्वचकमे तद्वत्तस्य तव पादरजो वयमपि प्रपन्ना इत्यन्वयः । ‘ यद्वांछया श्रीर्ललनाऽचरत्तपः ’ इति तादृशप्रसिद्धिश्रवणात् । वक्ष्यते च स्वयम् ‘ जयति तेऽधिकम् ’ इति । पादरजःशब्दस्य पुनरुक्तिरत्युत्कंठया ज्ञेया । तदुक्तं पक्षद्वये । रूपकाप्रयोगश्च पूर्ववदेव ज्ञेयः । सा च न केवला किन्तु तुलस्या लीलारूपया वृन्दयापि । सहसा च तुलसी तत्प्रेयस्यपि चकमे, पाद्मे कार्तिकमाहात्म्ये जालंधरोपाख्याने तस्या अपि तत्प्रेयसीत्वश्रवणात् । तथा च स्कांदे मथुरामाहात्म्ये—“वृंदावनं द्वादशमं वृंदादेवीसमाश्रितम् । हरिणाऽधिष्ठितं तच्च ब्रह्मरुद्रादिसेवितम् ॥ ” इति । वाराहे तन्माहात्म्ये च—“वृंदावनं द्वादशमं वृंदया परिरक्षितम् । मम चैव प्रियं भूमे सर्वपातकनाशनम् ॥ ” इति तदाश्रितश्रवणाच्च । कथंभूतमपि भृत्यजुष्टं त्वद्भृत्यगणसेवितावशिष्टमपि पुना रज एव च विशेषयितुं तस्या वैशिष्ट्यांतरमाहुः—यस्या इति । स्ववीक्षणे स्वपतिप्रेमपर्यंतसंपत्तिप्रदेऽन्यसुराः श्रीविष्वक्सेनगरुडादयस्तेषामपि प्रयासः यदि तस्यास्तस्याश्चाप्येवं तदास्माकमेव को दोष इति भावः । ऐश्वर्यपक्षेऽपि पूर्ववदेवार्थः, किन्तु पूर्वत्र प्रेमकृतोत्कर्षदृष्टिप्राप्तत्वेनोत्तरत्र तत्त्वज्ञानप्राप्तत्वेनेति भेदः । तदेवम् ‘ भर्तुः शुश्रूषणं स्त्रीणाम् ’ इत्यादेरुत्तरं ज्ञेयम् । निषेधार्थश्चायम्—ननु श्रीवृन्दे अपि स्वपतित्यागेन मदाशया मद्वने तिष्ठतः, का यूयमित्यत्राहुः—श्रीरिति । यत् या श्रीः तुलस्या श्रीवृंदया सहात्र वने स्थितं तव पादांबुजरजश्चकमे । तत्कामनयाऽत्र वासं कृतवतीत्यर्थः । तद्वत्सहैव वयञ्च तव पादरजः प्रपन्नाः । काका, नैवेत्यर्थः । चपलात्वेन ख्याताया लक्ष्म्या यच्चापलं तथा जलंधरभार्यात्वमपि लब्धाया वृंदाया यद्व्यभिचारित्वं तत् तद्युक्तमेव । नास्माकमेतादृशीनामिति भावः । तत्रापि भर्तुरित्यस्यैवोत्तरं ज्ञेयमिति ॥ ३७ ॥ यतस्तव पादरजः प्रपन्नास्तत्तस्मात् । यद्वा—त्वदुपासनं त्वत्समीप उपवेशनं तत्राशा यासामिति ताः । यद्वा—वसतिविशेषणम्--त्वदुपासस्य नाशो यासु ता विसृज्येत्यन्वयः । योगिनः संन्यासिनः । यद्वा—दुःखिताः आमंत्रयन्ति—पुरुषस्य जीवस्य भूः स्थानं हृदयमोषते पीडयतीति पुरुषभूषणेति । यद्वा—पुरुषभुवि वसतीति तथा, बहिरंतर्ज्ञस्यैतदुचितमिति भावः । दास्यम् दासीभावम् । अनेन संगादि लक्ष्यते ॥ * ॥ तस्माद्गृहकुटुंबादिकं परित्यज्य नारायणस्य भक्ता इव वयं तव दास्यमेव कामयामहे इति । यतस्त्वं नारायणतुल्यस्तस्मादस्मान्प्रसीद । ननु

**वीक्ष्यालकावृतमुखं तव कुंडलश्रीगंडस्थलाधरसुधं हसितावलोकम् ॥ दत्ताभयं च भुजदंडयुगं विलोक्य वक्षः श्रियैकरमणं च भवाम दास्यः ॥३९॥**

**ननु गृहस्वाम्यं विहाय दास्यं किमिति प्रार्थ्यतेऽत आहुः । वीक्ष्येति । अलकावृतमुखं केशांतरैरावृतं मुखं तथा कुंडलयोः श्रीर्ययोस्ते गंडस्थले यस्मिन् अधरे सुधा यस्मिंस्त**

मत्प्रसादप्रतिकूलं दुःखादष्टं भवतीनामस्तीत्यतः कथं प्रसादः, नारायणोऽपि किं सर्वत्रैव प्रसीदतीत्यत आहुः—हे वृजिनार्दन । तदपि दुःखं त्वमेवार्दय, नारायणो ह्यवश्यमेव प्रपद्यमानानां दुःखमर्दयति । वयं च तेंघ्रिमूलं प्राप्तास्तत्रापि कामनांतरराहित्येनैवेत्याहुः—विसृज्य वसतीरिति । ननु गार्हस्थ्यसुखं परित्यज्यापि मत्तः सुखं कश्चनावश्यमर्थयध्वे इति जानीमस्तत्राहुः—त्वदुपासनायामेवाशा न तूपासनायाः फले, कस्मिंश्च न सुखे त्वया दास्यमाने आशा यासां ताः । अयमर्थः—उपासनया त्वां सुखयाम इत्येवाभिप्रायेऽपि त्वन्मुखदर्शनोत्थं यदि नः सुखमाकस्मिकं भवेत्तर्हि को दोष इति । ननु कथमुक्तमस्माकं हृच्छयाग्निं सिंचेति—सत्यम्, तदग्निज्वालाया अपि त्वमेव कारणमित्याहुः—तव सुंदरस्मितानिरीक्षणेन यस्तीव्रकामस्तेन तप्त आत्मा यासां तासामस्माकं दास्यं दासीत्वमेव देहि, न तु पत्नीत्वम् ॥ अत्र **श्रीमद्वल्लभाचार्य**चरणानामपि व्याख्या—अतो दास्यार्थिन्य एव वयं न तु विहारार्थिन्यः । अत उपनयनाद्यपेक्षापि न लोकव्यवहारेणेत्येषा तस्मादस्माकं कन्यात्वे परोढत्वे वा न कापि क्षतिः, उभयीभावेऽपि त्वद्दास्यसंभवादिति भावः । प्रकृतवैष्णवतोषिण्यां **श्रीसनातनगोस्वामि**चरणानामपि विवाहे सति पत्नीत्वेन भजनादप्यौपपत्येन भजनं परममहासुखं तच्च श्रीभागवताऽमृते काव्यादौ च प्रसिद्धमेव । अत एवात्र दास्यविशेष एव प्रार्थितः । अधुना च प्रार्थ्यते दास्यो भवाम इत्येव । अयं भावः—काममहोदधित्वादेव स्त्रीलंपटस्य तवास्माभिर्युवतीभिरुपासना स्वांगैरेव त्वत्सुखोत्पादनलक्षणा खल्वेषैवेत्यतो हृच्छयाग्निसेकप्रार्थनापि त्वदुपासनैव । कामाग्निरप्यस्माकं त्वदुपासनोपकरणमेव मुख्यमित्यत एव समुचितमेव संबोधनपदम्—हेपुरुषरूपभूषण गौरांगीनामस्माकमिंद्रनीलमणिमयसर्वांगालंकारेति ॥ अत्र **तोषिणी**—तदेवं तृतीयदिक्स्थिता अपि विवक्षितमुपसंहरंति—तन्न इति । तत्तस्मात्पूर्वोक्ताद्धेतोरेव प्रसादं कुरु, तमेवाहुः—दास्यमेव देहीति । ननु यौवनोन्मत्ताः ! दास्यमपि तादृशं दुर्लभमिति चेत्कथं देयमित्यत्र सदैन्यमाहुः—प्राप्ता इति । अतः सर्वपरित्यागेन प्रपन्नानामाशामवश्यं पूरयितुमर्हसीति भावः । अन्यथा चास्माकं दुःखं स्यात्तच्च तवानुचितमेवेत्याहुः—हे वृजिनार्दनेति । तत्र च निजभावोच्छालतीचित्ताः सत्यो हे रसिकशेखर रसविशेषमयमेव दास्यं देयमित्याशयेनाहुः—तदिति । यद्वा—तत्तादृशनिरीक्षणतप्तात्मनामपि दास्यमेव देहीत्यर्थः । तत्तापहरणेप्याशा परित्यक्तेत्यर्थः । दास्यश्चोचितमेवेत्याहुः—हे पुरुषभूषणेति । सर्वत्रैवार्थे तवोपास उपास्तिस्तस्य नाशो यासु ता इति, श्लेषेण वसतिविशेषणं च । किं वा--हे सुंदरस्मितनिरीक्षण अतो धूर्ततयैवेदं वदसीत्यवहित्थया गृह्यमाणं भावं वाक्चातुर्यादिभिर्व्यंजयन्ति—त्वत्त्वत्तो यस्तीव्रः कामस्तेन तप्त आत्मा यासां तासां नः । अनेन 'दुःशीलः' इत्यस्योत्तरम् । त्वत्कामतप्तात्मनां तत्त्यागे कथं विचारो दोषो वा, न हि महाभुजंगग्रस्तानां तयोरेकतरोऽपि संभवतीति । निषेधार्थश्चायम्—तत्तस्मान्नोऽस्माकं संबंधे प्रसीद । आग्रहं त्यजेत्यर्थः । हे वृजिनार्देति छेदः । अतस्त्वदुपासनाशाः सत्यो वसतीर्विसृज्य तवांघ्रिमूलं न प्राप्ता वयं तस्मात् यास्त्वत्सुंदरेत्यादिलक्षणास्तासां ताः प्रति दास्यं देहि, अस्माकं तु न तेन प्रयोजनमित्यर्थः । तासामपि नात्यंततदंगीकारात्संप्रदानत्वाभाव इति षष्ठ्यभिप्रायः । पुरुषान्सखीनव तत्तदुत्कंठया तत्तद्गोकुलवधूवेशेन भूषयसि नाद्यापि ता इति तत्राप्यसंभावना दर्शिता । यद्वा—पुरुषभूस्तत्सत्ता पुरुषसामान्य इत्यर्थः । हे तस्य ऊषण पीडक तज्जातिमात्रकलंककारिन्निति सकोपसंबोधनम् । 'ऊष—रुजायाम्' इति ॥ ३८ ॥ अयोग्यार्हं दास्यं यूयं योग्याः किमर्थमिच्छथेत्याशंकते—नन्विति । 'अलकाश्चूर्णकुंतलाः' इत्यमरः । अतिसुभगत्वात्तव सर्वेश्वरस्य दास्यमेवोचितमिति भावः । केचित्त्वत्रालकावृतमुखस्य जालत्वं, कुंडलयोर्वेसिकात्वं, गंडस्थलस्य विशालभूमित्वम्, अधरसुधाया लोभकत्वं, हसितावलोकस्य मोहिनीत्वं, वेणुगीतस्य भैरवरागत्वं, गोपीजनानां वनचरत्वं, नेत्राणां खंजनत्वं कल्पयंतीति ॥ * ॥ यूयं यन्मम दास्यो भवथ तत्किं मया मूल्येन क्रीताः स्थ दत्तभृतयो वा, तत्र भवताऽस्मत्समुचितमूल्यात्कोटिकोटिगुणितेनास्मदद्दष्टाश्रुतचरेण महार्घ्येण हसितावलोकचिन्तारत्नेनास्मान् वयस्संध्यारंभ एव क्रीत्वा स्वीयकुंजमंदिरमानीय नीलनिधिपद्मनिधिजांबूनदमरकतयुगलचिंतामाणिमयस्थलीविलासास्पदनीलमणिमंदिराण्यलकादिव्याजेन स्वसंपत्तीर्दर्शयित्वा दारैरपि दुर्लभम

**का स्त्र्यंग तेकलपदायतमूर्छितेन संमोहिताऽर्यचरितान्न चलेत्रिलोक्याम्॥त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्॥४०॥**

**च तच्च तव मुखं वीक्ष्य दत्ताभयं भुजदंडयुग्मं वक्षश्च श्रिया एकमेव रमणं रतिजनकं वीक्ष्य दास्य एव भवामेति ॥ ३९ ॥ ननु जगुप्सितमौपपत्यमित्युक्तं तत्राहुः। का स्त्रीति।**

मृतं प्रतिदिनं भोजयसीत्याहुः—वीक्ष्येति । यदा शोणवक्रोष्णीषं शिरसि बध्नासि तदा दासीजनेन कंकतिकयोत्कृष्योत्कृष्योर्द्ध्वं नयनात् त्वया च स्वांगुल्यायत्तान्निरुध्योन्नीयोष्णीषांतःप्रवेशनाद् भालवामदक्षिण प्रान्तयोरेव दृश्यमानमूलभागैरलकैरावृतमनाक् छन्नं मुखं वीक्ष्य यदा च चूडां बध्नासि तदा भालाग्रवामदक्षिणभागेष्वपि कुञ्चितैरनतिदीर्घैरलकैरा ईषदावृतं. मुखं वीक्ष्याभ्यंगोद्वर्तनादिसमये संप्रयोगभरसमये चालकैरा सम्यक् प्रकारेणैवावृतमाच्छन्नं मुखं वीक्ष्य ईक्षणाभ्यामास्वाद्यमानमाधुर्य्यभरीकृत्य वयं दास्यो भवामः । मुखं कीदृशम्—कुंडलाभ्यां समयभेदेष्वलकैरनावृताभ्यामीषदावृताभ्यां संपूर्णाभ्यां चाचपलाभ्यामीषच्चपलाभ्या मतिचपलाभ्यां च श्रीः पृथक्पृथक् शोभा यत्र तत् । हसितप्रहसितसमये गंडयोरपि सृक्किण्योर्विततत्वात् गंडस्थलेऽपि अधरसुधाऽधरमाधुर्योच्छलनं यस्य तत् गंडस्थलाद्गंडस्थलमारुह्य गोपीनयनचकोरैः पीयमानाऽधरसुधा यस्य तत् । रहस्यसमयभेदे तु गोपीनां गंडस्थलेऽधरसुधा यस्य तत् गंडस्थलयोर्गोपीनामधरसुधा यस्य तत् । यद्वा—कुंडलयोः श्रीः प्रतिबिंबरूपशोभा ययोस्ते गंडस्थले यस्मिन्, अधरे सुधा यस्मिन् तच्च तच्च तदित्ये कपदम् । हसितयुक्तोऽवलोको यत्र तत् । हसितं प्रफुल्लता गोपीनां कुमुदानां चावलोकाद्यस्मादिति वा । ननु युष्मत्पतयः एतदसहिष्णवः फूत्कारेण कंसराजतो मम भवतीनां च भयमुत्पादयिष्यान्ति, तत्राहुः—दत्त मभयं महेंद्रदर्पकादिभ्योऽपि पर्वतधारणादिना येन तथाभूतं भुजदंडयुगमिति । तथा चेत्त्वद्भुजदंड एव कंसपशोः प्राणहारको भविष्यतीति भावः । एवं च व्यंजितेन वीररसेन शृंगाररसः पुष्टो भवति स्म । ननु परना रीरहं धर्मात्मा स्वदासीर्न करोमीति तर्जन्या केयमिति पृच्छंत्यः—सत्यं भो धार्मिकचूडामणे गोपानां नारीर्न दासी करोषि किन्तु नारायणस्य नारीं लक्ष्मीमपि वैकुंठाद्बलादानीय स्ववक्षसा वहसीत्याहुः—वक्ष इति । श्रिया लक्ष्म्या कर्त्र्या लज्जावशात्सुवर्णरेखारूपया एकं मुख्यं रमणं यत्र तत् तस्मादधुना ते कियद्वयो बभूव त्रिचतुर्दशभवनेषु मध्ये तदूर्ध्वलोकेष्वपि ब्रह्मांडाद्बहिर्महावैकुंठलोकस्थेष्वपि मध्ये कस्यापि कामपि सुंदरीं नारीं त्वं न त्यक्ष्यसीति जानीम इति व्यंजितं भवति ॥ अत्र **तोषिणी**—ननु भवत्यो न धनादिना मूल्येन क्रीता न वा दत्तभृतयश्च कुतो दास्यो भवेयुः, उच्यते—अन्यत्रैव खल्वसावन्योन्येन स व्यवहारः । भवति तु स्व मुखादिदर्शनादिदानमेव मूल्यं भृतिश्चेत्याहुः—वीक्ष्येति । विशेषेण दृष्ट्वा विशेषमेवाहुः—अलकाऽऽवृतेत्यादिविशेषणैः । तत्र चालकैर्ललाटोपरिविलसद्भिरावृतमित्यूर्द्ध्वभागस्य कुंडलश्रीरिति द्वयोः पार्श्वयोर्हसितेनावलोको यस्मि न्निति तलमध्यभागयोरित्येवं सर्वत्र शोभोक्ता । स्थलरूपकेण कुंडलयोर्विस्तीर्णत्वं कुंडलश्रीत्यनेन स्वच्छत्वं च ध्वनितम् । अधरे च सुधानुमानं दर्शनमात्राल्लोभविशेषोत्पत्तेः सौरभ्यविशेषानुभवाच्च । तथा दत्तमभयं भक्तानां दैत्यवधादिना येनेत्यादिबलिष्ठत्वादिगुणस्तेन चातुर्येण पत्यादिभ्यो भयं परिहृतम् । वस्तुतस्तु गाढाऽऽश्लेषेण कामादिभयहरत्वमभिप्रेतम् । दंडरूपकेण सुवृत्तपृथुदीर्घत्वाद्याकारसौष्ठवम् । तत्राप्येवं वैशिष्ट्यमुक्तम् । तथा श्रिया वामभागस्थस्वर्णवर्णलक्ष्मीरेखारूपया लक्ष्म्या कर्त्र्या एकं श्रेष्ठं रमणं यस्मिन्निति परमसौंदर्यादिसंपत्तिनिधानमुक्तम् । चकारद्वयं विलोक्येति पुनरुक्तिश्च निजवामभुजवक्षसोर्विशेषाश्रयताविवक्षया । तथोत्तरयोर्द्वयोरेका क्रिया चैकसंप्रयोजनजनकत्वात् । तादृशगंडाधरमंडिते श्रीमुखे हि चुंबनपाने भुजवक्षसोश्चालिंगनमात्रमभिलषितमिति । अत्रालकादीनामुक्तिक्रमेणेदं गम्यते—प्रथमतो मुखस्य तत्तत्सौंदर्यदर्शने जातेऽपि लज्जया न चांतरक्ष्येण दर्शनं किन्त्वत्युत्कंठया पश्चादेव, तत इच्छाविशेषेण येन भुजौ दृष्टौ. तस्य तु विश्रामो वक्षस्येवेति तथा क्रमो ज्ञेयः । एवं दासीत्वे हेतुः परममोहनतैवेति ध्वनितम् । किञ्च, भृतिर्मूल्यञ्च विषयदानमेव लोके दृश्यते तत्तु त्वयि तत्तद्रूपशोभावति मधुराधरसुधे लोभनीये भुजादिस्पर्शे पूर्णलक्ष्मीनिधानवक्षसि लब्धे स्वतः सिद्धमेवेति । तथा वीक्ष्येति स्वेषां नेत्रखंजनबंधो ध्वनितः । तत्रालकानां पाशत्वं, कुंडल योस्तदंतिमकुंडलिकारूपत्वम्, गंडयोस्तन्निधानस्थलत्वम्, अधरसुधाया लोभ्यत्वं, हसितावलोकस्य विश्वासजनकस्वपालितखंजनद्वयाविलासत्वम् । तत्र भुजदंडयुगस्य च दत्ताभयत्वमेव करपल्लवयुक्तत्वादिति भावः । तादृशवक्षसश्च सुखचारप्रदेशत्वमित्यपि ज्ञापितम् । अन्यत्तैः । यद्वा—कुंडलयोः श्रीः शोभा येन तन्मुखम् । केषांचिन्मते श्रीति दीर्घः पाठः । तथा च कुंडलयोः श्रीहेतुगंडस्थले चाधरसुधा च तासां द्वंद्वैक्यं हासितञ्चावलो कं च तत् तच्च वीक्ष्येति सर्वेषां प्राधान्यं द्योतितम्।विलोक्यं सादृश्यमिति।निषेधार्थस्तु—ननु यद्येवं तर्हि कथं ममांगान्येव मुहुर्वीक्ष्यमाणास्तिष्ठथ, तत्र साटोपमाहुः—वीक्ष्येति। तत्रापि काक्वैव निषेधो व्यंग्य इति॥३९॥पूर्वोक्तौपपत्ये

**व्यक्तं भवान्व्रजभयार्तिहरोऽभिजातो देवो यथादिपुरुषः सुरलोकगोप्ता॥तन्नो निधेहि करपंकजमार्तबंधो तप्तस्तनेषु च शिरस्सु च किंकरीणाम्॥४१॥**

**अंग हे कृष्ण कलानि पदानि यस्मिंस्तदायतं दीर्घं मूर्छितं स्वरालापभेदस्तेन।पाठांतरे कलपदामृतमयं यत् वेणुगीतं तेन संमोहिता का वा स्त्री आर्यचरितान्निजधर्मान्न चलेत्।यन्मोहिताःपुरुषा अपि चलिताःकिं चत्रैलोक्यसौभगमिति यद्यतःअबिभ्रन्नबिभरुः।त्वद्द्योतकशब्दश्रवणमात्रेणापि तावन्निजधर्मत्यागो युक्तः किं पुनस्त्वदनुभवेनेति भावः॥४०॥व्यक्तं**

जुगुप्सितत्वं परिहरंत्य आहुः—कलानि व्यक्तमधुराणि । निजधर्मात् पातिव्रत्यलक्षणात् । कलपदगानश्रवणजानंदमग्नानां धर्माऽधर्मस्मृतिरेव नोदेतीति भावः । गवादयोंतश्चेतनाः । येन वेणुनादेन मोहिताः पुरुषा अपि ' शक्रशर्वपरमेष्ठिपुरोगाः ' इत्युक्तेः शंकरप्रभृतयः स्त्रीवेशं कृत्वा गोपीवृंदे मिलिता अभूवन्निति । स्त्रीणां तु का वार्तेति भावः । न केवलं मनुष्याणामेव मोहोऽपि तु तदितरेषामपीत्याहुः—किं चेति । त्रैलोक्यस्य सौभगमलंकारमिदमस्मद्दृग्गोचरीभूतं रूपं सुंदरतरावयवोपक्लृप्तमाकारम् । इति भाव इति—त्वद्द्योतकशब्दस्य मधुसूदनमुरारिगोविन्देत्यादिशब्दस्य श्रवणमात्रेण विनष्टाखिलद्वंद्वानां विधिनिषेधकैंकर्याभावान्निजधर्मस्य वर्णक्रमादागतस्य त्यागो युक्त एव " यदनुचरितलीलाकर्णपीयूषविप्रुट्सकृददनविधूतद्वंद्वधर्मा विनष्टाः " इत्युक्तेः । " श्रवणवर्णनभावमथापि वा न हि भवामि यथा विधिकिंकरः" इति वक्ष्यंति स्वामिचरणाः । पुनस्त्वदनुभवेनाहं ब्रह्मास्मीति साक्षादात्मसाक्षात्कारेणेत्यपि तात्पर्यम् । यथाश्रुतन्तु त्वद्द्योतकशब्दे वेणुध्वनिरिमं कृष्णो वादयत्येवंरूप इति ॥ * ॥ ननु युष्माभिर्धर्माय जलांजलिर्दत्त एव तत्किमन्या अपि पतिव्रताः "विदूषयति निर्लज्जः स्वयं दुष्टः परानपि" इति न्यायेन दूषयथ । मद्वक्षस्यौत्पत्तिक्येवेयं लक्षणाविशेषरूपा सुवर्णरेखा भ्राजते, तां च दृष्ट्वा पतिव्रताशिरोमणिं लक्ष्मीमपि दूषयंत्यस्तस्यामप्यपराधिन्यः कथं भवथेति तत्र न कामपि दूषयामः किन्तु त्रिजगतामपि धर्मध्वंसनाय विधात्रा त्वं सृष्टोसीति सरोषचापलमाहुः—का स्त्री । अंग हे श्रीकृष्ण कलानि पदानि यत्र तदमृतरूपं यद्वेणुगीतं तेन 'कलपदायतमूर्छितेन' इति पाठे आयतं दीर्घं मूर्छितं स्वरालापभेदस्तेन संमोहितेति । न स्त्री दूष्यते किन्तु त्वत्कर्तृकं वेणुगीतमेवेति भावः । आर्य्यचरितात्पातिव्रत्यलक्षणनिजधर्मान्न चलेत् । अपि तु सर्वैव चलेदिति धर्मत्याजनलक्षणप्रत्यवायं त्वं प्राप्स्यस्येवेति भावः । न केवलं त्वद्गुणस्यैव धर्मध्वंसकताऽपि तु त्वद्रूपस्याऽपीत्याहुः—त्रैलोक्येति । ऊर्द्ध्वाधोमध्यदेशवर्तिषु प्राकृताप्राकृतलोकेष्वपि सौभगमेव यस्य तत् । न तु धर्मध्वंसकत्वहेतुकस्याप्यत्र द्वेष इति भावः । न च स्त्रीणां स्वाभाविकः कामोऽपि मोहे हेतुरस्तीति वाच्यम्, यतो जंगमस्थावराणां सर्वेषामपि वैवश्यप्रापकौ तवरूपगुणावित्याहुः—यद्यतो गीतरूपाभ्यामबिभ्रन् अबिभरुः तस्माद्धे राजन् किं बहुना 'शक्रशर्वपरमेष्ठिपुरोगाः कश्मलं ययुः' इति वेणुगीताध्यायात्परमतत्त्वविदामपि मोहः 'विस्मापनं स्वस्य' इति । तव:तस्यापि चमत्कारो दृष्ट इति श्रीशुकोक्तिरप्यासीदिति ज्ञेयम् ॥ अत्र **तोषिणी**—नन्वेवं पतिव्रताभिरुपहसनीया भविष्यथ तत्र स्फुटमेव सरोषदैन्यमाहुः—का स्त्रीति । त्रिलोक्यां वर्तमाना का स्त्री न चलेदपि तु सर्वैव चलेदित्यर्थः । तच्च ' देव्यो विमानगतयः' इत्यादिना सूचितम् । कलेति पूर्वं व्याख्यातम् । पदेति प्रतिपदमपि तादृशं बोधयंति । आयतेति तत्र श्रीकृष्णस्य निर्बन्धं बोधयंति, स्वेषां च धैर्येणापि तत्कालेक्षणं वारयंति । पाठांतरे तस्यालौकिकस्वादुत्वं व्यंजयन्ति । तत्रादर्शने । एवं वार्तादर्शनेऽपि तथैवेत्येवं सर्वतो मार एवेति सभयमिवेत्याहुः—त्रैलोक्येति । त्रैलोक्यस्योर्द्ध्वाधोमध्यवर्तमानयावल्लोकस्य सौभगं सौभाग्यं जनप्रियत्वं सौंदर्यं वा यस्मिन् । यदन्तर्भूतमित्यर्थः । तदिदं प्रत्यक्षवर्तमानमित्यन्यथात्वं निरस्तम् । यद्वा—इदमेतादृशधर्ममसाधारणमित्यर्थः । निरीक्ष्येति । यस्य श्रवणादिनाऽपि मोहस्स्यादिति कैमुत्यं बोधयंति—का स्त्रीति । यत्र पुरुषा अपि स्वयं भगवानपि मुह्येयुरिति भावः । ' शक्रशर्वपरमेष्ठिपुरोगाः ' इति वक्ष्यमाणात् । ' विस्मापनं स्वस्य च ' इति तृतीयोक्तेश्च । अहो अस्तु तावत्तादृशसारासारविदां तेषां वार्ता, यद्याभ्यां वेणुगीतरूपाभ्यां गवादयोऽपीति । अनेन ' लोकेप्सुभिः ' इत्यस्योत्तरम् । निषेधार्थश्चायम्—ननु यदि ममांगदर्शने युष्माकं न क्षोभस्तर्हि कथमितश्चलितुमिच्छथ, तत्राहुः—का स्त्रीति । का स्त्री तज्जातिमात्रं कलेत्यादिलक्षणापि आर्यचरितात्सदाचाराद्धेतोः ते त्वत्तः सकाशान्न चलेत् नापयायात् । तथा यद्यस्माद्गवादयोऽपि पुलकान्यबिभ्रन् तदिदं निरीक्ष्य च समवलोक्यापि तस्मादेव हेतोः का नापयायात् अपि तु सर्वैवापयायादित्यर्थः । सुंदरीणां सुंदरपुरुषनिकटस्थितिर्हि बाढं लोकविगानहेतुरिति । तदेवं यदपि न तत्संमोहिता नापि सम्यक् तद्वीक्षणकारिकास्तथाप्यपयास्याम इति भावः ॥ ४० ॥ सर्वस्वामित्वेन तवास्मद्भर्तृत्वात्समानकुलजातत्वेन संबंधयोग्यत्वादस्माकं

॥ श्रीशुक उवाच ॥ इति विक्लवितं तासां श्रुत्वा योगेश्वरेश्वरः ॥ प्रहस्य सदयं गोपीरात्मारामोऽप्यरीरमत् ॥ ४२ ॥

निश्चितम् ॥ ४१ ॥ विक्लवितं पारवश्यप्रलपितम् । गोपीररीरमद्रमयामास ॥ ४२ ॥

तव संगत्यौपपत्यदोषो नास्ति, कुतो निंद्यत्वमित्याभिप्रेत्याहुः—व्यक्तमिति । यथादिपुरुषः सुरलोकगोप्ता वामनो जातस्तथा स एवादिपुरुषो भवानधुना व्रजस्य सर्वभक्तसमुदायस्य । यद्वा—अस्माकं व्रजस्थानां भयं संसृतिजम्, आर्तिराध्यात्मिकादिरूपा त्रिविधा ते हरतीति तथा अभिजात इति । व्यक्तमसंदिग्धम् । "एष वः श्रेय आधास्यद्गोपगोकुलनंदनः । य एतस्मिन्महाभागाः प्रीतिं कुर्वन्तिमानवाः ॥ नारयोऽभिभवंत्येतान्" इत्यादिना श्रीगर्गाचार्योक्तेः । अरयः कामादयः । यत इत्थं तत्तस्मात्सहजशीतलत्वात्संतापहारित्वादानंदस्रावित्वात्कर एव पङ्कजस्तम् । यद्वा—पंकं क्लेशं जयतीति पंकजः कर एव पङ्कजस्तम् । तव करः पंकहरोऽस्ति' अन्यथार्तबंधुत्वहानिः स्यादिति संबुद्ध्यभिप्रायः । किंकरीणामिति सर्वत्राभयार्थं दासीत्वदार्ढ्यार्थमेवोक्तम् । यद्वा—किंकरीतापः स्वामिनैवापह्रियत इति, त्वं चास्माकं स्वामीति । अन्यथा 'हितान्न यः संशृणुते स किंप्रभुः' इति न्यायेन तव किंप्रभुत्वं च स्यादिति भावः ॥ * ॥ तस्मादलं चातुरीप्रपंचेन मुंचावहित्थामित्याहुः—व्यक्तमिति । न तु कुत्राप्येतदाख्यानं गुप्तमित्यर्थः । किं तत्—भवान् व्रजस्य यद्भयं दावानलादिभ्यः, आर्तिः पीडा च वर्षवातादिभ्यस्ते हरतीति सः । 'व्रजजनार्तिहरः' इत्यपि पाठः । अभि सर्वतोभावेन नंदगृहे जातो यथा नारायण इति सर्वलोकैरुद्घुष्यते, अद्य यदि शतकोटिसंघा एता गोप्यो मरिष्यन्ति तदा व्रजजनानामेतत्पित्रादीनामार्तिः, कथमेकदैव ता वनमध्ये मृता इति भयञ्च भविष्यतीति भावः । तर्हि किमभीप्सितं वस्तत्राहुः—तत्तस्मात् हे आर्तबंधो अस्माकं तप्तेषु स्तनेषु करपंकजमर्पय । ननु तर्हि मृदुलमेतन्मे ज्वलिष्यतीति तत्राहुः—किंकरीणां त्वत्परिचारिकाणामस्माकं तप्तावप्येतौ त्वत्परिचर्यासाधनावेव । पंकजस्यापि सूर्योदयतापो न तापकः प्रत्युत सुखद एवेति भावः । शिरस्सु चेत्यतः परं मत्त्यागभयं मास्त्विति ज्ञापयितुम् ॥ अत्र **तोषिणी**—एवं चतुर्थदिक्स्थिता अप्यात्मनि धर्मादिदोषं परिहृत्योपक्रमवदेव प्रत्युत तस्मिन्नेव धर्मदोषापत्तिमुपसंहरंत्यः पुनर्विवक्षितमेवाहुः । किञ्च, ननु भवतु तत्तत्सर्वं मम तु नारायणसमगुणत्वेन पूर्णकामत्वान्नान्यत्र प्रवृत्तिः स्यात्, किमुतेदृशे कर्मणीत्याशंक्याह--व्यक्तमिति । व्रजस्य यद्भयं पूतनादिभ्यो दावादिभ्यश्च तदर्थस्त्रास आर्तिश्च वर्षवातादिभ्यश्च पीडा तथा भयं त्वद्विरहशंकयार्तिस्त्वद्विरहेण तदुभयहरः सन् ते खंडयितुमित्यर्थः । "तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम् । गोपाये स्वात्मयोगेन सोऽयं मे व्रत आहितः ॥" इति स्वयमितीव विभाव्य पर्वतभारस्य ग्रहणात् । क्वाचित्के पाठान्तरे व्रजजनानामार्त्तिर्बाह्याभ्यंतराऽशेषबाधा । अभिजातः सत्कुलाज्जात इति । तत्रापि वैशिष्ट्यमतोऽस्माकं नाशे तत्रापि त्वदेकहेतुकनाशत्वे व्रतभंगापत्तितोप्यधिको धर्मदोषः स्यादिति भावः । ईश्वरस्य पूर्णकामस्यापि तादृशव्रतरक्षा तादृशकामना च दृश्यत एवेत्याहुः—देव इति । सर्वथा दीव्यति विराजत इति देवः आदिपुरुषः सर्वपुरुषेषु श्रेष्ठः सोपि यथा सुरलोकगोप्ता स्वेच्छया तज्जनमात्रस्य रक्षिता सन् अदित्यादावभिजातो भवति तत्तस्मात्करस्य पंकजत्वं तापहारितामात्रांशे निरूपितम् । वस्तुतस्तु पापस्य तदप्राप्तिमात्रनिदानत्वात्तदारंभ एवापगमः स्यादित्यभिप्रेत्यैव तप्तेष्वपि स्तनेषु परमस्निग्धाभिरपि ताभिस्तन्निधानप्रार्थनमिति ज्ञेयम् । पूर्ववत्सदैन्यमाहुः—शिरस्सु च किंकरीणामिति । अत ऊर्द्ध्वमस्मानात्मसात्कुर्विति विवक्षितम् । हे आर्तबन्धो इति--आर्तबन्धौ साक्षाद्विराजमाने त्वद्दासीनां तापोऽनुचित इति सूचितम् । तथा कामेन च मा निधेहि किं त्वार्तबन्धुत्वेनैव निधेहीति गूढोऽयमभिप्रायः । अवहित्थयाऽऽच्छाद्यमानो मनोभवोऽस्मदङ्गेषु हस्तार्पणेन स्वयमेवोद्भवितेति । निषेधार्थश्चायम्--तथापि तं बलादिव स्पृशन्तमाशङ्क्याहुः--व्यक्तमिति । तत्र पूर्वार्द्धेन ततो धर्मभयादितोऽपि रक्षा तवोचिता । न तु तन्नाश इति भावः । नो निधेहि मा निधेहि । आर्तबंधो इति स्वेषां धर्मभयादार्तिं व्यंजयंति । तत्तत्वे कामाग्निसंतापितहृदयकिंकरीणां स्वगृहदासीनामपि किमुत मादृशीनां तत्रापि शिरस्सु च मा निधेहि । किमुत स्तनेष्वित्यर्थः । तदेवं स्वागतमित्यादिप्रकरणं संलापाख्योऽनुभावो ज्ञेयः । " उक्तिप्रत्युक्तिमद्वाक्यं संलाप इति कीर्त्यते " इत्युक्तेरिति ॥ ४१ ॥ तासामार्तिश्रवणादुद्विग्नं राजानं प्रेक्ष्य तच्छांत्यै श्रीशुकः परसंतापापहारकारिण्या श्रिया सहितः परममुनिरुवाचेति । इति इत्थम् । तासाम् गोपीनाम् । योगिनः सनकाद्यास्तदीश्वराः शंकराद्यास्तेषामीश्वरः श्रीयशोदानंदनः । अनेन परमोत्कृष्टदयालुतोक्ता । दयालवो योगिनः, परमदयालवो

ताभिः समेताभिरुदारचेष्टितः प्रियेक्षणोत्फुल्लमुखीभिरच्युतः ॥ उदारहासद्विजकुंददीधितिर्व्यरोचतैणांक इवोडुभिर्वृतः ॥ ४३ ॥

प्रियस्येक्षणेनोत्फुल्लानि मुखानि यासां ताभिः । उदारहासश्च द्विजाश्च तेषु कुंदकुसुमवद्दीधितिर्यस्य सः । एणांकश्चंद्रः ॥ ४३ ॥

योगेश्वराः, परमोत्कृष्टदयालुः श्रीकृष्ण इति । सदयं स्वहस्तेन तासामश्रुमार्जनादिपूर्वम् । गोपीनामपि ' ता मन्मनस्का मत्प्राणाः ' इति भगवदुक्तेस्तद्रूपत्वान्नात्मारामत्वहानिरिति ध्येयं विद्वद्भिः । वक्ष्यत्यपि ' यथार्भकः स्वप्रतिबिंबविभ्रमः ' इति । पारवश्येन कामायत्तत्वेन प्रलपितं प्रपूर्वलपेरनर्थकवचःपरत्वम् ' प्रलापोऽनर्थकं वचः ' इत्यमरः । इत्युक्त्या स्वामिचरणैस्तासामपि वस्तुतोऽतथात्वं ध्वनितम् । अतथात्वं कामादि पीडाराहित्यम् ॥ * ॥ विक्लवितं वैक्लव्यव्यंजकं वाक्यं श्रुत्वा तच्छ्रवणेन स्वाभिलाषं पूरयित्वेत्यर्थः । प्रहस्य अहो भाववत्यो यूयं प्रतिदिनमेव मेलनसमये वाम्यमपारं कुरुध्वे, अहं त्वेकस्मिन्नेव दिनेऽद्यैवावहित्थया यत्किञ्चिद्वाम्यमकरवं तदपि दाक्षिण्यगर्भमेव, तेनाप्येतावद्वैक्लव्यवत्यो लज्जायाः श्राद्धं कृतवत्यो मां हासयध्वे, तस्माद्युष्मत्प्रात्यहिकावहित्थासिंधुचुलुकीकरणचंचुना मयैव जितास्स्थ, भो सुबुद्धिशेखरंमन्याः जितास्स्थ तत्स्वयमेवा गत्य प्रतिबंधकलज्जाधृत्याऽद्यभावान्मत्कंठकनकमणिमालायुता भूत्वा स्वाधरसुधाः पाययत, चिरादुद्भूतमहातृष्णोऽस्मीति परिहस्य । सन् अयः शुभावहो विधिर्यत्र तत् सस्नेहं वा यथा स्यात्तथा आत्मारामोऽपि ता गोपस्त्रीः रमयामास । इत्थंभूतप्रेमाणो गोपस्त्रिय इति ' आत्मारामाश्च मुनयः ' इति पद्ये ' इत्थंभूतगुणो हरिः ' इतिवद् गोपीनां तदीयस्वरूपभूतह्लादिनीशक्तिवृत्तित्वात् ' ता अथात्मानः ' इत्यात्मभूताभिस्ताभी रमणं संभवत्येव । यद्यपि तदपि " न च संकर्षणो न श्रीर्नैवात्मा च यथा भवान् " इति, " नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना " इत्यादिभगवदुक्तेस्तस्य स्वात्मतोऽपि भक्तानामानंदप्रदत्वाधिक्यावगमादासां च गोपीनां सर्वभक्तशिरोमणित्वादात्मारामस्यापि तस्यानंदाधिक्यार्थमेवैताभी रमणमिति ज्ञेयम् । ननु ' प्रमदाशतकोटिभिराकुलितः ' इति क्रमदीपिकाद्यागमदृष्ट्या शतकोटिसंख्याभिस्ताभिरेकत्रैवैकदैवैकस्य तस्य रमणं नोपपद्यते, तत्राह—योगिनः सौभर्यादयः, योगेश्वरा रुद्रादयस्तेषामपीश्वर इति । सौभर्यादयः कायव्यूहं कृत्वैव रमंते कृष्णस्त्वतर्क्याचरितस्तं विना । यद्वक्ष्यते--' चित्रं बतैतदेकेन वपुषा ' इत्यादीति ॥ अत्र **तोषिणी**--इति निजोक्तिवदुभयार्थस्पर्शात्मकमेतद्विक्लवितं प्रेमवैक्लव्यमयरोषदैन्योक्तं श्रुत्वा तच्छ्रवणेन स्वाभिलाषं पूरयित्वेत्यर्थः । ततः प्रहस्य परिहासेऽपि तासां वैक्लव्यविशेषोदयात्ततो निजाभीष्टश्रवणसिद्धेस्तत्रापि स्ववचनसदृशप्रतिवचनसौष्ठवात्ततोऽवहित्थापगमेन रत्याख्यभावोदयाच्च प्रकर्षेण चेतोविकाशिरूपतया रसशास्त्रप्रसिद्धं सुखप्रसादानुभावं भावविशेषं लब्ध्वेत्यर्थः । तदेव च सप्रेमदैन्यवचनं श्रुत्वा सदयं चित्तार्द्रतासहितं यथा स्यात्तथा गोपीररीरमत् रन्तुं स्वयमेव प्रयोजयामास । अत्याग्रहं चकारेत्यर्थः । एवं तस्यैव च तत्रेच्छावैशिष्ट्यं लक्ष्यते । समानमपि क्रीडत्सु बालेषु प्रयोजकस्येवेति भावः । अत एव परस्मैपदम् "अणावकर्मकाच्चित्तवत्कर्तृकात्" इति कर्त्रभिप्राये तद्विधानात् । ननु किमेतदाश्चर्यं नागरेषु ?, तत्राह--आत्मारामोऽपि । अहो आसां प्रेमगुणप्राबल्यं यतः 'आत्मारामाश्च मुनयः' इत्यादौ हरिगुणगणेनात्मारामगण इव तेन सोप्यात्मवशी चक्र इति भावः । अत एवापिशब्दः सार्थकः स्यादन्यथा तु प्रत्युत विरुद्ध एव । यद्यपि "नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना" इति सामान्यभक्तपरमव्याप्तिवचनं तथाप्यत्र वैशिष्ट्यविवक्षया तथोक्तमिति न पौनरुक्त्यं वैयर्थ्यम् । ननु कथमेकः सन्नसंख्या रमयामास, तत्राह--योगेश्वरेश्वर इति । योगेश्वरा अपि कायव्यूहादिकं विधाय युगपन्नानाकृत्यं विधातुं शक्नुवंति, स तु तेषामपीश्वरत्वेनाचिंत्यस्वाभाविकशक्तित्वात्तदादिकं विनापि शक्नोतीति वक्ष्यते च श्रीनारदेन--"चित्रं बतैतदेकेन वपुषा युगपत्पृथक् । गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत् ॥" इति भावः । गोपीशब्देन तत्तन्महामंत्रप्रसिद्धं तासां तदीयवल्लभात्वं स्मारयित्वा तत्रापि नात्याश्चर्यतां सूचयतीति ॥ ४२ ॥ मया शोभया सह वर्तमाना समा श्रीराधा तामिताभिः प्राप्ताभिः । उदाराण्यंगस्पर्शपुष्पाद्यर्पणकटाक्षपातरूपाणि चेष्टितानि यस्य सः । प्रियेक्षणेति मुखानां कमलवनत्वमीक्षणस्य च भास्करत्वं सूचितम् । तेषूदारहासयुक्तद्विजेषु दंतेषु । यद्वा--द्विजा एव कुंदा माघ्यपुष्पाणि द्विजकुंदाः, उदारहासेनोत्कृष्टहास्येन विवृतानां द्विजकुंदानां दीधिति मरीचिर्यस्य सः । ' भानुः करो मरीचिः स्त्री ' इत्यमरः । ' कुंदो माघ्येऽस्त्री मुकुंदभ्रमिनिध्यंतरेषु ना ' इति मेदिनी । 'एणः कुरंगो हरिणः' इति हलायुधः । एणोंकश्चिह्नं यस्य स तथा "कलंकांकौ लाञ्छनञ्च चिह्नं

उपगीयमान उद्गायन्वनिताशतयूथपः ॥ मालां बिभ्रद्वैजयंतीं व्यचरन्मंडयन्वनम् ॥ ४४ ॥

॥ ४४ ॥

लक्ष्म च लक्षणम्" इत्यमरः । एतेन हरेः कांत्या तासामाच्छादितकांतित्वमुक्तम् ॥ * ॥ उदारं तासां रतिसुखप्रदं भाविभक्तानां तच्छ्रवणाद्यैः प्रेमप्रदं च चेष्टितं लीला यस्य सः । अच्युतः युगपदेव तत्प्रत्येकरमणानिष्ठच्युतिरहितः । उदारैस्तासां सुखप्रदैर्महद्भिर्वा हासैर्द्विजानां दंतानां कुंदानामिव प्रकाशिता दीधितिर्यस्य सः॥अत्र **तोषिणी**–रमणप्रकारमेव ताभिरित्यादिश्चतुर्भिवर्णयंस्तत्प्रयोजककर्तृताञ्च दर्शयन्नादौ ताभिः सह प्रेमसंगमेन तस्यापि शोभाविशेषं सदृष्टान्तमाह–ताभिरिति । समेताभिः स्वयमेव श्रीकृष्णेन कर्त्रा समागताभिः अरीरमदित्युक्तेस्ततस्ताभिस्तादृशीभिर्वृतः परितो वेष्टितः सन् व्यरोचत विशेषेणा शोभत । तत्राप्यच्युतः सर्वाभिः प्रत्येकमपि संगमे च्युतिरहितः सन् । अत एवोदारचेष्टितः उदाराणि रसविशेषोद्दीपनविचित्रवैदग्ध्यादिमयत्वेन सर्वोत्कृष्टानि परमसुखप्रदानि वा स्पर्शनपुष्पाद्यर्पणकटाक्षादिरूपाणि यस्य सः । अत एव प्रियस्य वीक्षणं स्वकर्तृकं तत्कर्तृकं वा ज्ञेयम् । उत्फुल्लशब्देन मुखस्य कमलत्वं व्यञ्जितम् । तदीक्षणे तदंतःकरणतमोपगमने । तदीयदिवसताप्राप्तेरिति भावः । एवं तासां रसविशेष उक्तः । तस्यापि तमाह–उदारो हासो यशसा द्विजकुंददीधितिर्यस्य सः । श्रीमद्दन्तानां प्रकाशेन हासस्याधिकशोभोक्ता । स्वतः परमकष्ठाप्राप्तनित्यशोभामयस्यापि ताभिः शोभाविशेषं दृष्टान्तेन साधयति–एणांक इति । चंद्रस्य पूर्णत्व एणांकस्यैणाकारत्वेनोपलंभादेणांकः पूर्णचंद्रस्ताराभिः सर्वतो विराजमानाभिः सतीभिर्वृतः सन् यथा विरोचते तद्वदिति । एवं ताभिः सह तस्यान्योन्यत्वं शोभनत्वं प्रेष्ठत्वं नित्यसाहित्यं तासां ततस्तन्वीत्वं च सूचितम् ॥ ४३ ॥ उपगीयमानो गोपीभिः । स्वयञ्च चंद्रमसमुद्गायन्नधिकं वर्णयन् कृष्णः शरच्चंद्रमसं कौमुदीकुमुदाकरम् जगौ । गोपीजनस्त्वेवं कृष्णनाम पुनःपुनारिति टीकांतरोक्तेः । शतशब्दोऽनेकवाची । यूथस्तु–" अर्बुदं दशकोटीनामेकं भवति शैलजे । दशार्बुदं भवेद्यूथमिति संख्याविदो विदुः ॥ " इति तंत्रोक्तेः । वैजयंतीलक्षणं पूर्वमुक्तम् ॥ * ॥ ताभिरुपाधिक्येन गीयमानं रागस्वरतालाद्यैः । तत्र तालत्रयेण गीतं यथा--" वदनं मधुरिममदनं चलनं दलनं कवीन्द्रकीर्तीनाम् । हसितं सुदृगभिलषितं तव सवयः पातु मामनिशम् ॥ " इति । स्वयं च वनितानां शतयूथानि पांति यास्ता मुख्यतमाः श्रीराधाचंद्रावल्याद्यास्तदनुगानरीत्या तेनैव गीतेन प्रत्येकमुद्गायन् । क्वचिदेकस्वरपरिवर्तेन परस्परगानम् । उद्गीतं यथा--" त्वद्वदनं मदनं मधुरिम्णा तत्र च हन्त दृगन्तविलासाः । तेष्वसमां सुषमामुपजग्मुः सुंदरि कामकलाः सकलास्ताः ॥ " इति, " कान्ते त्वदास्यादयदत्तमिंदुर्मृगच्छला दुर्यश एव धत्ते । जनोपहासासहनोऽथ वा किं द्विजोऽपि मूढो गरलं जघास ॥ " इति।अत्र सुंदरीत्यत्र सुंदरेति, कांत इत्यत्र कांत इति प्रयुंजानः प्रेयसीजनोऽनुगायति स्मेति रीतिः । वैजयंतीम् पञ्चवर्णपुष्पग्रथिताम् 'पञ्चवर्णा वैजयंती' इति वचनात् ॥ अत्र **तोषिणी**–इत्थं शोभाविशेषोदयेन श्रीवृंदावनमपि शोभयन् गीतेन पुष्पादिप्रदर्शनेन च भावमुद्दीपयितुं रतियोग्यं यमुनापुलिनं गन्तुं च गमनक्रमेण बभ्रामेत्याह–उपगीयमान इति।उद्गायन् भावोद्दीपनं चंद्रादिकं हर्षेणोच्चैर्गायंस्ताभिश्चोपगयिमानः । उपगायनरीत्या तैरेव गीतैरनुक्रियमाणैर्वर्ण्यमानः,श्लेषेण तत्रैव संगमित्यर्थत्वात्। तच्चैवं ज्ञेयम्--यथा श्रीरसामृतसिंधौ "अखिलरसामृतमूर्तिः प्रसृमररुचिरुद्धतारकापालिः । कलितश्यामाललितो राधाप्रेयान् विधुर्जयति ॥" इति । क्वचिदेकद्व्यक्षरपरिवर्तनाच्च–"यामिनीकृतरुचिः शुचिकांतिश्चंद्रिकावलिविभाविकचश्रीः । षट्पदालिकालितैः कलगीतैः पश्य भाति कुमुदाकर एषः ॥ कामिनीकृतरुचिः शुचिकान्तिश्चन्द्रिकाबलिविभाविकचश्रीः।षट्पदालिकालितैः कलगीतैः पश्य भाति कुमुदाऽकर एषः ॥" इति । यथा तदीयस्वरतालादियुक्तेन तन्नाम्नैव तदुपगायन् तया गीयमानः मनसि तदेकाऽऽविष्टया वचसि तदेकस्फूर्तेः । यथोक्तं श्रीविष्णुपुराणे--"कृष्णः शरच्चंद्रमसः कौमुदीं कुमुदाऽऽकरम् । जगौ गोपजिनस्त्वेकं कृष्णनाम पुनःपुनः ॥" इति । तत्रार्थद्वयमपि रसनीयमिति । कृष्णश्च नाम च कृष्णनाम तदेवैकं केवलं जगाविति च व्याख्येयम् । "वनिता जनितात्यर्थानुरागाभ्याञ्च योषिति" इत्यमरः । तासां शतानि यूथानि पातीति तन्नायक इत्यर्थः । श्लेषेण तानि पिबति 'पिबंत इव चक्षुर्भ्याम्' इत्यादिवत् । आसक्तया सेवतेऽधरामृतपानादिना साक्षात्पिबति वेति तथा सः । तासां निजनिजभावसाजात्यानुसारेण वर्गशो यूथत्वम् । वैजयंतीं पञ्चवर्णपुष्पग्रथिताम् 'पञ्चवर्णा वैजयंती' इति

नद्याः पुलिनमाविश्य गोपीभिर्हिमवालुकम् ॥ रेमे तत्तरलानंदकुमुदामोदवायुना ॥ ४५ ॥ बाहुप्रसारपरिरंभकरालकोरुनीवीस्तनाऽऽलभननर्म नखाग्रपातैः ॥ क्ष्वेल्यावलोकहसितैर्व्रजसुंदरीणामुत्तंभयन्रतिपतिं रमयांचकार ॥ ४६ ॥ एवं भगवतः कृष्णाल्लब्धमाना महात्मनः ॥ आत्मानं मनिरे स्त्रीणां मानिन्योऽभ्यधिकं भुवि ॥ ४७॥

॥ ४५ ॥ बाहुप्रसारश्च परिरंभश्च कराभ्यामलकादीनामालभनं स्पर्शश्च नर्म परिहासश्च नखाग्रप्रपातश्च तैः क्ष्वेल्या क्रीडया अवलोकैश्च हसितैश्च कामं तासामुद्दीपयंस्ता रमयामास ॥ ४६ ॥ महात्मनो विमुक्तचित्तात् ॥ ४७ ॥

वचनात् । यद्यपि वलयानां नूपुराणामिति वक्ष्यमाणादन्यान्यपि भूषणानि विद्यन्ते तथापि तां बिभ्रदिति वनविहारयोग्यांगत्वेनोक्तम् । सा च ताभिरेवाशु निर्माय समर्पिता, तद्वनदेव्या वृंदयैव वा तदर्थे तत्रतत्र कुंजादौ स्थापितेति ज्ञेयम् । व्यचरत् परिबभ्राम ॥४४॥ नद्याः कालिंद्याः । हिमाः शीतलाः वालुकाः सिकता यत्र तत्तथा । तस्या नद्याः तरलैर्मंदकल्लोलैरानंदयितुं शीलमस्यास्तीति तत्तरलानंदी, कुमुदानामामोदो यत्र स वायुः कुमुदाऽऽमोदवायुः, तत्तरलानंदी चासौ कुमुदामोदवायुश्चेति तथा तेन । यद्वा–तया नद्या तरलानि नृत्यंतीव स्थितान्यानंदीन्युत्फुल्लानि कुमुदानि तत्तरलानंदिकुमुदानि तेषामामोदेन सौरभेण संपृक्तेन वायुना । एतेन मंद सुगंधिशीतलत्ववैशिष्ट्यं वायोर्ध्वनितम् । ननु तावति पुलिने शतकोटिस्त्रीभिः कथं विजहार ? दुर्घटघटनापटीयस्या भगवन्मायया सर्वस्यापि सुकरत्वात्, वृंदावनैकदेशे ब्रह्मणा कोटिशो ब्रह्मांडानां दृष्टत्वाच्च । तदुक्तम्– "स तु माथुरभूरूपः परिच्छिन्नोऽप्यथाद्भुतः । स्फारः संकुचितश्च स्यात्कृष्णलीलानुसारतः ॥ अत्रैवाजांडमालापि पर्याप्तिमुपगच्छति । वृंदावनप्रतीकेऽपि याऽनुभूतैव वेधसा ॥ इत्यतो रासलीलायां पुलिने तत्र यामुने । प्रमदाशतकोट्योऽपि ममुर्यत्ते किमद्भुतम् ॥" इति भागवतामृतादौ स्फुटम् ॥ * ॥ तस्या नद्यास्तरलैस्तरंगैरानंदीति शैत्यमांद्याभ्यामानंददायकश्च रात्रावपि प्रफुल्लानां कमलानामामोदो यतः स च तेन वायुना रेमे । 'जुष्टम्' इति पाठे रमयांचकारेत्युत्तरेणाऽन्वयः । कुमुदामोदेति तरलानन्देति च क्वचित् ॥ अत्र **तोषिणी**–ततः श्रीयमुनापुलिने ताः प्राप्य वैदग्धीविशेषेण रमयामासेत्याह–नद्य इति युग्मकेन । हिमवालुका कर्पूरस्तद्वालुका यत्र तत् । शाकपार्थिवादित्वात्साधुः।एवं पूर्वत्र वनमपि वृन्दावनमेव । तस्या नद्यास्तरलैस्तरंगैरानंदी सुखविहारी चासा कमलाऽऽमोदयुक्तवायुश्च तेन । निशायां कमलविकाशः श॰ दि मल्लिकाविकाश इव तदीयतादृशलीलारसमयप्रभा वेण।आनंदीति जुष्टमिति च मांद्यम्। सौरभ्यशैत्ये स्पष्टे। कुमुदेति आनंदेति च पाठे एकेषां जुष्टमित्यत्र।रेमे इति क्वचित् । अत एव पृथगंकः कृतः ॥४९॥ परिरंभः आलिंगनम्। करादीनां स्पर्शः कामशास्त्रविहितमोचनलक्षणो ज्ञेयः। यद्वा–क्ष्वेल्यावलोकहासितैः बालसिंहनादनिरीक्षणमंदहासैः । तदुक्तं माघे–"बाहुपीडनकुचग्रहणाद्यैराहितेन नखदंतनिखातैः । बोधितस्तनुशयस्तरुणीनामुन्मिमील शनकैरपि मारः॥" इति ॥ * ॥ बाहुप्रसरस्तासां स्वस्य वक्षसि स्वस्तिकीभूतानां भुजानां प्रसारणम्। स च परिरंभश्च करादीनामालभनं स्पर्शश्च नर्मपरिहासश्च नखाग्रपातश्च तैः क्ष्वेल्या क्रीडोक्त्याऽवलोकैश्च हसितैश्च रतिपतिं कामं तासां स्वस्य चोत्तंभयन्नुद्दीपयन् । ताव द्भिरेव स्वप्रकाशैः प्रत्येकं रमयांचकार । ननु च तावत्येव पुलिने बहुगोपीजनसंघट्टे निरावरणत्वात्सौरततल्पाद्यभावाच्च प्रत्येकं ताभिः शतकोटिप्रमदाभिः सह संप्रयोगलीला न संगच्छते, सत्यम्, भगवन्मूर्तेरिव श्रीवृंदा वनभूमेरपि विभुत्वात्तिलमात्रप्रदेशस्याप्यतिस्फारत्वं, सावरणविविधकुंजवत्त्वं, गंधमाल्यतांबूलादिसहितविचित्रसौरतपुष्पतल्पवत्त्वं च दुर्घटघटनापटीयस्या योगमाययैव प्रकाशितं, लीलांते पुनरावृतं चेति सुसंगतिकमेवैतत् ॥ अत्र **तोषिणी**–सहजलज्जादिनाच्छाद्यमानमपि रेतः कांतोचितप्रीतिलक्षणायाः पतिं तदुचितमहाभावाह्वयपरमप्रेमाणं वा बाहुप्रसारादिभिरुत्तंभयन् इति तस्य रत्यासक्तिर्वैदग्धी च परमा दर्शिता । तत्र बाहुप्रसारः परिरंभा रंभः । यद्वा–बाहुप्रसारेण परिरंभो गाढालिंगनमित्यर्थः । क्ष्वेलिः प्रस्तोभनादिरूपा । व्रजसुंदरीणामिति तद्योग्यं सौंदर्यमत्र विवक्षितम् । तेन च 'यत्राकृतिस्तत्र गुणा वसंति' इति न्यायात्तादृशं वैदग्ध्यमप्युपल क्ष्यते । रमणं च निजमोहनशक्तिविशेषेणाऽन्योन्यमलक्षितं ज्ञेयम् ॥ ४६ ॥ एवं बाहुप्रसारादिना । विमुक्तचित्तात् अनासक्तात्मनः । स्त्रीणाम् अभ्यधिकं भूलोकांतर्गतसुंदरीषु वयमभ्यधिकसुंदर्य इत्येवं मानिन्यो

**तासां तत्सौभगमदं वीक्ष्य मानं च केशवः ॥ प्रशमाय प्रसादाय तत्रैवांतरधीयत ॥ ४८ ॥ इति श्रीभागवते महापुराणे दशमस्कंधे पूर्वार्धे रासक्रीडायां कृष्णांतर्धानं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥**



तत्सौभगमदं तादृशं सौभगेन मदमस्वाधीनताम् । मानं गर्वम् । केशवः कश्च ईशश्च केशौ तौ वशयतीति तथा सः ॥ ४८ ॥ इति श्री०भ०दशमस्कंधे पूर्वार्धे टीकायामेकोनत्रिंशोऽध्यायः ॥ २९ ॥

रूपादिगर्वोत्सेकाः ॥ * ॥ अधुना "न विना विप्रलंभेन संभोगः पुष्टिमश्नुते । कषायिते हि वस्त्रादौ भूयान्रागोऽभिवर्धते ॥" इति भरतन्यायाद्रसपुष्ट्यर्थं लीलाशक्त्यैवाऽऽविर्भावितं विप्रलंभबीजमाह—एवमिति । महात्मनः दिव्यातिदिव्यनायकेभ्यः श्रेष्ठाद्भगवतस्तत्रापि कृष्णात्स्वयंरूपात् । लब्धमानाः प्राप्तादराः । श्रीकृष्णरमणप्राप्त्या भुवि भूतलस्थानामेव स्त्रीणां मध्ये आत्मानं प्रत्येकमेव स्वमभ्यधिकं मेनिरे । मानिन्यः प्रत्येकमहं सुभगेति मननान्मानवत्यः गर्ववत्यः ॥ अत्र **तोषिणी**—अधुना "न विना विप्रलंभेन संभोगः पुष्टिमश्नुते । कषायिते हि वस्त्रादौ भूयान्रागोऽभिवर्द्धते ॥" इति भरतन्यायात्प्रेमविशेषोद्रेकादग्रे क्रीडाविशेषवर्णनार्थं विप्रलंभरूपरसविशेषं वक्तुमारभते—एवमिति । महात्मनो दिव्यातिदिव्यसर्वनायकवृंदेभ्यः परमात् । तत्र हेतुः—भगवतः । स्वयं भगवत इत्यर्थः । कृष्णात्तथैव प्रसिद्धादित्यर्थः । एवं पूर्वोक्ततत्प्रेमवशताप्रकारेण लब्धो मानः सम्मानः सौभाग्यं याभिस्तथाभूता भूत्वा मानिन्यः लब्धप्रणयमानाः सत्यो भुवि अन्यत्र चात्र च याः स्त्रियस्तासां सर्वासां मध्ये प्रत्येकमात्मानमेवाधिकं मेनिरे, तं प्रति मानिन्यो बभूवुः । स्त्रियः प्रति गर्विताचित्ता बभूवुरित्यर्थः । तत्र मानः "दंपत्योर्भाव एकत्र सतोऽरप्यनुरक्तयोः । स्वाऽभीष्टाऽऽश्लेषवीक्षादिनिरोधी मान उच्यते ॥ अहेरिव गतिः प्रेम्णः स्वभावकुटिला भवेत् । अतो हेतोरहेतोश्च यूनोर्मान उदंचति ॥" इति रसशास्त्रानुसारात् । गर्वश्चान्यत्रत्यानां तादृशनायकालाभात् । तत्रत्यानां तल्लाभेऽपि स्वसदृशसौभाग्यलाभाऽमननात् । यथोक्तम्—"सौभाग्यरूपतारुण्यगुणसर्वोत्तमाश्रयैः । इष्टलाभादिना चान्याहेलनं गर्व उच्यते ॥" इति । एवम् "संचारयंति ये भावं ते तु संचारिणो मताः । उन्मज्जंति निमज्जंति स्थायिन्यंबुनिधाविव ॥" इति रसतंत्रात् । गर्वोपि तादृक्प्रेमविशेषस्य स्थायिनः संचारिभावत्वात्तन्मय एव ज्ञेयः । अस्य हि रसस्यैवमेव स्थितिरुत्कर्षश्चेति ॥ ४७ ॥ तासाम् गोपसुंदरीणाम् । केशव इत्युक्ते ब्रह्मशिवयोः सर्वेश्वरयोरपि वशकर्तारं को वशयेदिति ध्वनितम् । वयं श्रीराधासमा यतोऽस्मानपि तत्सदृशमेव मनुत इत्यतस्तासां सौभगमदं, समानविहारेण च राधाया मानं च वीक्ष्यान्यासां मानप्रशमनाय श्रीराधायाः प्रसादाय तत्रैव व्रजसुंदरीसमूहे कृष्णातटे वान्तरधीयत । तासां दृष्ट्याऽदृश्यो बभूवेत्यर्थः । अंतर्द्धानमपि संभोगसमृद्ध्यर्थमेव, तदुक्तम्—"न विना विप्रलंभेन संभोगः पुष्टिमश्नुते । अहेरिव गतिः प्रेम्णः स्वभावकुटिला भवेत् ॥" इति । अंतरधीयतेत्यत्रैकत्वेनाग्रिमाध्याये "कस्याः पदानि चैतानि याताया नंदसूनुना" इत्युक्तेर्द्वयोक्तिर्विरुद्धा नानुसंधेया प्रसादायेत्युक्तेः । प्रसादस्त्वेकांत एवोचितोऽतस्तया सहैवांतर्द्धानं बोध्यम् । यद्वा—द्वयोरैक्याभिप्रायेणैकत्वम् "राधा कृष्णात्मिका नित्यं कृष्णो राधात्मको ध्रुवम्" इति ब्रह्मांडोक्तेः । "तस्माज्ज्योतिरभूद्द्वेधा राधामाधवरूपकम्" इति संमोहनोक्तेश्च ॥ * ॥ ततश्च सर्वासु तासु भगवतः साधारण्येनैव रमणाद्या सर्वमुख्यतमा वृषभानुकुमारी सा सहसोद्भवदीर्ष्याकषायिताक्षी मानिनी बभूव, ततोऽन्यूना अन्याः सौभाग्यगर्ववत्यो बभूवुरित्युद्भूते वैमत्ये सति भगवतैव यत्तत्र समाहितं तदाह—तासामिति । ताश्च सा चेत्येकशेषेण तासां व्रजसुंदरीणां तस्या वृषभानुकुमार्याश्च क्रमेण तत् तं सौभगमदं मानञ्च वीक्ष्य, स चासौ सौभगमदश्चेति तमिति समासो वा । 'तं सौभगमदम्' इति वा पाठः । प्रशमाय तासां सौभगमदं प्रशमयितुं तां प्रसादयितुं च । केशवः कश्च ईशश्च तावपि वयते प्रशास्तीति । तस्य सौभगमदप्रशमने कः प्रयास इति भावः । केशान्वयते संस्करोतीति वा । केशप्रसाधनादिना तस्याः प्रसादनायां रसिकशेखरस्य चातुर्यमस्तीति भावः । अन्तरधीयतेत्यार्षम्, अंतरदधादित्यर्थः । 'धीङ्—अनादरे' इति दैवादिकस्य वा रूपम् । अत्राग्रिमग्रंथदृष्ट्या बलाद्गृहीत्वैवेति तत्रैव न त्वन्यत्र । गच्छंस्ताभिर्दृष्ट इत्यर्थः । तच्च तदिच्छायां जातायां योगमाययैव संपादितम् ॥ अत्र **तोषिणी**—तासाम् तादृशीनाम् । तदिति तं सौभगमदं सौभाग्यहेतुकं गर्वं तथा च विश्वः—"मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः" इति । तं

॥ श्रीशुक उवाच ॥ अंतर्हिते भगवति सहसैव व्रजांगनाः ॥ अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् ॥ १ ॥
गत्यानुरागस्मितविभ्रमेक्षितैर्मनोरमालापविहारविभ्रमैः ॥ आक्षिप्तचित्ताः प्रमदा रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिकाः ॥ २ ॥

त्रिंशे विरहसंतप्तगोपीभिः कृष्णमार्गणम् ॥ उन्मत्तवन्न नियतं भ्रमंतीभिर्वनेवने ॥ १ ॥ अचक्षाणा अपश्यंत्यः ॥ १ ॥ गत्या चानुरागस्मिताभ्यां विभ्रमेक्षितानि सविलासनिरीक्षणानि तैश्च मनोरमा आलापाश्च विहाराः क्रीडाश्च विभ्रमा अन्ये च विलासभेदास्तैश्च रमापतेर्गत्यादिभिरेतैराक्षिप्तान्याकृष्टानि

मानश्च वीक्ष्य विशेषेण दृष्ट्वा । तत्र गर्वपक्षे युक्त्यंतराऽसाध्यं मत्वा, मानपक्षे कृतैरप्यनुनयादिभिरसाध्यं दृष्ट्वेत्यर्थः । गर्वं प्रति प्रशमाय मानं तु प्रति प्रसादाय तत्रैवांतरधीयत अंतरदधात्। ‘ धीङ्–अनादरे’ दैवादिकः । न त्वन्यत्र गच्छन् दृष्ट इत्यर्थः । अत्र वक्ष्यमाणानुसारेण श्रीराधयैव सहांतर्धानं ज्ञेयम् । तच्च तस्य तदिच्छायां सत्यां योगमाययैव संपादितमिति । यद्यपि सहेतुकस्येर्ष्यामानस्यैव शांतये क्वचिन्नायकोपेक्षाऽपेक्षते “ हेतुजोऽपि शमं याति यथायोगं प्रकल्पितैः । सामभेदक्रियादानन्त्युपेक्षारसांतरैः ॥ ” इत्युक्तेः निर्हेतुकस्य प्रणयमानस्य विनैव प्रतिकारेण यत्किंचित्प्रतिकारेण वा, तथापि तच्छांत्यर्थमुपेक्षेयं परस्परगर्वसंबंधेन गाढतापत्तेः । तत उभयभावशांत्यर्थमेव सा प्रेमविपाकयोरपि तयोः शमनेच्छा च स्वेच्छामयलीलेच्छया युगपदेव सर्वा एव प्रति महारसदानमयरासेच्छया च । तया च विप्रलंभः परमप्रेमार्थमेव योक्ष्यत इति ॥ ४८ ॥ इति श्रीमद्भागवत भावार्थदीपिकाप्रकाशे दशमस्कन्धे पूर्वार्द्धे एकोनत्रिंशोऽध्यायः ॥ २९ ॥ कृष्णस्य मार्गणमन्वेषणम् । तच्च नियतं यथावन्न, कुतः–उन्मत्तवत् विरहाकुलतयोन्मत्ता इव संजाता इति ( १ ) । हरेरेव योगैश्वर्यं स्वाभाविकं नान्यस्येति ज्ञापनाय गोपीनां भक्त्यतिशयमाह–श्रीशुक इति । तम् श्रीकृष्णम् । करिण्यः इभ्यः ‘ करेणुरिभ्यां नेभे स्त्री ’ इत्यमरः । यूथपम् गजेंन्द्रम् ॥ * ॥ त्रिंशे तु विरहोन्मत्ताः कृष्णं पृष्ट्वा नगान् स्त्रियः । तल्लीलामनुचक्रुस्ताः संभुज्य स च तां जहौ ॥ अचक्षाणाः अपश्यंत्यः ॥ अत्र **तोषिणी**–तदंतर्द्धानकथनेन श्रीबादरायणेरप्यार्तिभरोदयात्कथाविच्छेदेनाऽध्यायापातः । तदेवं जातदुःखत्वेपि तासामेकां सर्वतः परमां यामादाय श्रीभगवानंतर्हितः तस्याः सौभाग्यं क्षणादनुसंधाय धैर्यमवलंबमान आह–अंतर्हित इति । सहसैवांतर्हित इत्यंतर्द्धानस्य प्रकाराद्यतर्कणात् ‘अतर्किते तु सहसा’ इत्यमरः । अयं तापाधिक्ये हेतुरूह्यः । व्रजस्यांगना इति–तासां तदेकप्रियत्वेन विरहतापस्यौचित्यमाधिक्यञ्चाभिप्रेतम् । यूथपम् मत्तगजेन्द्रम् । करिण्य इवेति तदेकालंबनत्वेन तासां तद्विच्छेदात्तापाधिक्ये दृष्टान्तः ॥ १ ॥ गत्या बालसिंहखेलनगमनेन । अनुरागस्मिताभ्याम् स्नेहमंदहासाभ्याम् । ‘विभ्रमः–सेवायां संशये भावे’ इति हैमः । “चित्तवृत्त्यनवस्थानं शृंगाराद्विभ्रमो मतः” इति हरिदीक्षितः । रमतेऽनयेति रमा राधा तस्याः पतेः राधासहायस्य । तास्ता इति द्विरुक्तिः संभ्रमात् । पूर्वं याया लीलाः कृतास्तास्ता इत्यर्थः । तच्छब्दस्य पूर्वपरामर्शित्वात् । तदनुकरणेन तत्तुल्यवेशादिकरणेन अनु पश्चात् पूर्वं दृष्ट्वा यत्ताद्रूप्येण क्रियते तदनुकरणम् । तद्वत्तन्नेत्यर्थः ॥ * ॥ ततस्तामितस्ततः कुंजे ष्वन्विष्यन्तीनां तमप्राप्तवतीनां प्रतिक्षणविवर्द्धमानविरहपीडया यः खलून्मादः संचारी प्राभूत्तस्य प्राकट्यप्रकारं वर्णयति–गत्येति द्वाभ्याम् । रमापतेः सर्वसौंदर्यसंपत्तिस्वामिनः कृष्णस्य गत्या स्वाभाविकेन पदविन्यासेन, प्रथमं स्वांतिकागमनम्, आगतानां यान्यनुरागयुक्तानि स्मितानि च, विशिष्टो भ्रमो भ्रमणं तारकायां यत्र तथाभूतानीक्षितानि च तैः । ततश्च मनोरम आलापः अयि स्थलकमलिनि अतितृष्णार्ताय मधुपाय स्वमकरंदं दास्यसि न वा, भो भ्रमर पद्मिन्याः पतिः सूर्य एव न तु भ्रमरस्तत्कथं त्वां स्वीयं मधु पाययिष्यति । भोः पद्मिनि पद्मिनीनां भवतीनां स्वभाव एवायं यत्ताः स्वपतिं सूर्यं स्वीयं मधु नैव पाययन्ति किंतूपपतिं भ्रमरमेवेति । ततस्तदालापेनैव पराजितया विहसन्त्या तया सहाधरमधुपानादिविहारः । एवं वा ‘ आं ’ जानामि मत्समीपस्थनीपतरुतलं गच्छंतीं त्वां महादर्पकः सर्पोऽदशत्, तद्विषं ते वक्षस्थलपर्यंतमुदसर्पत्, तदपि त्वं कुलवधूत्वादेव मां तदुपशमनं न पृच्छसि, तदहं दयालुत्वात्स्वयमेव त्वदंतिकमेत्य तद्विषोपशमकं मंत्रं पठन्करतलाभ्यां त्वदंगं संघट्टयामि । भोभो जांगलिक न मां सर्पोऽदशत्, यां सर्पो दशति स्म तद्गात्रमेव करतलाभ्यां संघट्टय । भो कुलांगने

**गतिस्मितप्रेक्षणभाषणादिषु प्रियाः प्रियस्य प्रतिरूढमूर्तयः ॥ असावहं त्वित्यबलास्तदात्मिका न्यवेदिषुः कृष्णविहारविभ्रमाः ॥**
**गायंत्य उच्चैरमुमेव संहता विचिक्युरुन्मत्तकवद्वनाद्वनम् ॥ पप्रच्छुराकाशवदंतरं बहिर्भूतेषु संतं पुरुषं वनस्पतीन् ॥ ४ ॥**

चित्तानि यासां ता अतस्तस्मिन्नेवात्मा यासां तास्तस्य विविधाश्चेष्टा जगृहुस्तदनुकरणेनाक्रीडन् ॥ २ ॥ अपि च गतिस्मितेति । प्रियस्य गत्यादिषु प्रतिरूढा आविष्टा मर्तयो यासां ताः । अतः कृष्णविहारविभ्रमाः कृष्णस्येव विहारविभ्रमाः क्रीडाविलासा यासां ताः । अहमेव कृष्ण इति परस्परं निवेदितवत्यः ॥ ३ ॥ किं च गायंत्य

त्वदीयगद्गदस्वरादेव विषज्वालाकुलत्वं तव ज्ञायते इति ज्ञात्वापि यद्यप्यहं त्वामुपेक्षे तदा मां स्त्रीवधदोषो लगिष्यतीत्यतस्तद्विषमुपशमयिष्याम्येवेत्युक्त्वा तस्या वक्षःस्थले नखरार्पणादिकं चकार। ततो विहारः संप्रयोगः, ततो विभ्रमः कामोन्मत्तता । तदुक्तम्–"चित्तवृत्त्यनवस्थानं शृंगाराद्विभ्रमो मतः" इति। तैर्विरहावस्थायामतिशयेन स्मृत्यारूढैराक्षिप्तानि–अरे किमिह कुरुथे बहिर्भूय प्राणप्रेष्ठमन्वेष्टुं गच्छतेति तिरस्कृत्य देहतो निःसारितानीव स्वचित्तानि याभिस्ताः। यतः प्रमदाः प्रकर्षेण माद्यंति ताः। ततश्चोन्मादं प्राप्य तदात्मिकास्तस्यैवात्मानो मनोबुद्ध्यादयो यासां ताः। अतस्तास्तास्तदीया विविधाश्चेष्टा जगृहुः। बुद्धिपूर्वकग्रहणादनुचक्रुरित्यर्थः॥अत्र **तोषिणी**–तापमेवाभिव्यंजयति–गत्येत्यादिना पद्याधिकाऽध्यायद्वयेन। गतिः सामान्यानुरागः स्वविषयकः कांतयोग्याभावः,स्मितं विभ्रमेक्षितानि च तैः। विभ्रमोऽत्र भ्रूप्रभृतीनां तत्तन्मधुरचेष्टा। विहारः शृंगारचेष्टा। उत्तरो विभ्रमः शृंगारभावविशेषः। तथा चोक्तम्–"चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो मतः" इति । तत्रानुरागचित्तवृत्त्यनवस्थाने मानसे, गतिस्मितविभ्रमयुक्तेक्षितविहाराः कायिकाः, आलापो वाचिक इति ज्ञेयम् । एतदुपलक्षणत्वेनान्येऽपि भावा ज्ञेयाः। अत्र गतेः सामान्यत्वेन पृथगुक्तिः।स्मितादिकयोरनुरागारंभमात्रज्ञायमानत्वेन तत्समुदितोक्तिः। आलापविहारयोर्विभ्रमजन्मनैव जायमानत्वेन तत्समुदितेति । तैर्गत्यादिभिः ताभिः समेताभिरित्यादिवर्णितैः पूर्वाचरितैराक्षिप्तचित्ताः। ततश्च तदात्मिकास्तन्मयास्सत्यः प्रमदास्तास्ता बाहुप्रसारेत्यादिभिः पूर्वोक्ताः सर्वा विविधाश्चेष्टा जगृहुः प्राप्ताः।तत्र प्रमदाः यौगिकार्थपुरस्कारेण जातित एव प्रकृष्टमदयुक्ताः । किं पुनस्तत्प्रेमवत्यस्ता इत्यर्थः।रमायाः सर्वरूपगुणमाधुर्यैश्वर्यसंपदधिष्ठातृशक्तेः पत्युरध्यक्षस्य इति सर्वातिशायिता सूचिता।यद्वा–रमा श्रीराधेति पूर्ववत्। इति वक्ष्यमाणं तत्साहित्यं सूचितम्॥२॥न केवलमनुकरणेनैवाक्रीडन्, किन्तु ताद्रूप्येणापीत्याह–अपि चेति। प्रियस्य श्रीकृष्णस्य । आविष्टाः तदाकारतां नीताः । यतस्तदाविष्टा अतो हृताः । हे अबलाः असौ कृष्णोऽहमेव । यद्वा–तदात्मिकास्ताद्रूप्यं प्राप्ता अबला इति संबंधः ॥ * ॥ तस्यैवोन्मादस्य प्रौढत्वे सति तासामवस्थामाह–गतीति । प्रियस्य गत्यादिषु पूर्वोक्तेषु प्रतिरूढा मूर्तयो देहा यासां ताः । आदौ प्रियस्य गतिस्मितादय आसां प्रत्येकमूर्तौ चेंद्रियादिमय्यामारूढास्ततस्तेषु गतिस्मितादिषु आसां मूर्तिश्च प्रत्यारूढा इत्यर्थः। ततश्चोन्मादादेकीभावे सति असौ कृष्ण एवाहं किं वाहमेव कृष्ण इत्यादिसावधारणां भावनां विहाय असावहं कृष्णोऽहमिति रसास्वादप्रौढिमयीमवस्थां प्राप्य तदात्मिकाः प्राप्तकृष्णतादात्म्याः, न तु अहंग्रहोपासनावशादेवेति ज्ञेयम् 'प्रियाः प्रियस्य' इत्युक्तेः । न्यवेदिषुः परस्परं निवेदितवत्यः । न तु वयं व्रजस्त्रियो मनागपि का अपि जानन्ति स्मेत्यर्थः । तत्र हेतुः–कृष्णविहारैः स्मर्यमाणैर्विभ्रमो यासां ताः ॥ अत्र **तोषिणी**–तत्र तदात्मिकत्वमेवाभिव्यंजयति–गतीति । प्रियस्य गत्यादिषूक्तेषु, आदिपदाद्विहारविभ्रमौ । उक्तानुवादत्वेन पूर्वोक्ततत्तद्विशेषणानि नोक्तानि । तेषु प्रतिरूढाः सदृशीभूता मूर्तय इन्द्रियादिसंघातात्मकदेहा यासां ताः, इत्यंतर्बहिस्तद्भावापत्तिरुक्ता । अबलाः स्त्रिय इति स्त्रीचेष्टानुकरणमेव युक्तं ध्वनितम् । तथापि तु एवं यत्र युष्माकमुत्कण्ठाऽहमेवासौ तत्तद्विहारनागर इति प्रत्येकं सर्वा मिथो न्यवेदयन्त । कीदृश्यः सत्यः–कृष्णवद्विहारे विभ्रमो विलासो यासां, कृष्णविहारस्य विभ्रमो भ्रांतिर्याभ्यो वा तादृश्यः । तन्मयत्वञ्च प्रेमलीलाभरस्वभावेनैव न त्वहंग्रहोपासनावेशेनेत्याह–प्रियाः प्रियस्येति । प्रियास्तस्मिन्स्वाभाविकप्रेमवत्यः, प्रियस्य स्वस्मिन्स्मर्यमाण तादृशप्रेमकस्येत्यर्थः । लीलाख्यश्चानुभावोऽयम् " प्रियानुकरणं लीला रम्यैर्वेशक्रियादिभिः " इत्युक्तेः । यथा च प्रयोगः–"मुहुरवलोकितमंडनलीला मधुरिपुरहमितिभावनशीलाः" इति ॥ ३ ॥ ताद्रूप्यं प्राप्ता अप्यन्यदपि किंचिचक्रुरित्याह–किञ्चेति । गायंत्य इति–तं प्रति दूरान्निजार्तिश्रावणार्थम् । यद्वा–गीतप्रियस्य तस्य तेनाकर्षणार्थम् । अमुं श्रीकृष्णमेव न त्वन्यत्किंचिदित्यर्थः । संहताः मिलिताः । सम्य

दृष्टो वः कच्चिदश्वत्थ प्लक्ष न्यग्रोध नो मनः ॥ नंदसूनुर्गतो हृत्वा प्रेमहासावलोकनैः ॥ ५ ॥

इति । वनाद्वनांतरं गच्छंत्यो विचिक्युरमृगयन् । उन्मत्तस्य तुल्यत्वमाह । वनस्पतीनिति । वनस्पतीन् पप्रच्छुः । भूतेष्वंतरं मध्ये संतं पुरुषं बहिश्च संतमिति ॥ ४ ॥

तत्प्रपंचयति नवभिः । तत्र महत्त्वादेते पश्येयुरित्याशयाश्वत्थादीन्पृच्छंति । दृष्ट इति । प्रेमहासविलसितैरवलोकनैरस्माकं मनो हृत्वा चोर इव गतो वो युष्माभिः किं दृष्ट

म्मार्गणार्थमन्योन्यार्त्युपशमार्थं वा । वनस्पतीन् पुष्पं विना फलधारिणः । सर्वव्यापिनः स्थानप्रश्नोऽत्युन्मत्ततामेवाह "यच्च किंचिज्जगद्वस्तु दृश्यते श्रूयतेऽपि वा । अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥" इति श्रुतेः ॥ * ॥ यदा च स तासामुन्मादः स्वप्रौढिमानं विहाय मंदीबभूव तदा ता अर्धबाह्यानुसंधानवत्यो यथा चेष्टन्ते स्म तद्वर्णयति—गायन्त्य इति । कान्तविच्छेदेन दुःखिन्यो वयं व्रजस्त्रियस्तमन्वेषयाम इति बाह्या नुसंधानम् । संहता मिलिता वनाद्वनं गच्छन्त्यः । उन्मत्तकवत् ईषदुन्मत्ता इव । अल्पार्थे कप्रत्ययः । पुरुषम् श्रीकृष्णम् । वनस्पतीन्पप्रच्छुरित्युन्मादलक्षणम् । ननु सर्वमुख्यया वृंदावनेश्वर्या सह कृष्णस्तदा सुखेन रमते एवेति जानीमः । किन्तु, तद्विरहोन्मत्तानामासां गोपीनामुन्मादप्रश्नादिकं स जानाति न वेत्यतो विशिनष्टि—भूतेषु सर्वेष्वन्तरं बहिश्चाकाशवद्व्याप्य स्थितम् । तेन कृष्णस्वरूपस्यापरिच्छिन्नत्वेऽपि सर्वगतत्वात्तासां प्रश्नादिकं तत्रतत्रैवाऽलक्ष्यमाणः शृणोत्येवेति द्योतितम् ॥ अत्र **तोषिणी**—ततश्चिरात्प्राप्तावधानानां तासां पुनरुन्मादाख्यामवस्थां वर्णयति—गायंत्य इति । गानमत्र गोकुले प्रसिद्धं पूतनावधादिमयम् । तच्च 'विषजला प्ययात्' इत्यादिवक्ष्यमाणरीत्या स्वरक्षणाभिप्रायेण । उच्चैर्गानं तु तं प्रति निजार्तिश्रावणार्थं, किं वा गीतप्रियस्य तस्य तेनाकर्षणार्थं, किं वार्तिभरस्वभावादेव । अमुमेवेति—यद्यपि त्यागेन परमदुःखदोऽसौ तथापि तमेवेत्यर्थः । 'गणयति गुणग्रामं भ्रामं भ्रमादपि नेहते' इत्यादिवत् । संहताः अन्योन्यं मिलिताः सत्यः सर्वत्र सम्यग्मार्गणार्थं किं वा सख्येनान्योन्यमार्त्युपशमनार्थं किं वार्तिविशेषस्वभावादेव गानान्वेषणयोर्यौग पद्यमिदम् । गायन्त्य एव भ्रमन्ति मध्येमध्ये तु पृच्छंतीत्यर्थः । वनस्पतीन् प्रति प्रश्ने हेतुः—उन्मत्तकवदिति । स्वार्थे कन् । तेन केशाद्यसंवरणं व्यज्यते । पुरुषम् सर्वांतर्यामिरूपमपि, अत एवाकाशवद्भूतेष्वन्तरं बहिश्च व्याप्य सन्तमपि पप्रच्छुः । निजप्रेमावलम्बनकेवलनरलीलारूपेणैव तस्य तत्प्रश्नविषयत्वादिति भावः । यद्वा—अहो बत तासामिदं सर्वमरण्यरुदितमेव जातम् ?, नेत्याह—आकाशेति । वक्ष्यते च स्वयम् 'मया परोक्षं भजता' इति । यद्वा--पुरुषं स्वनायकं पप्रच्छुः । तं च भूतेषु स्थावरजंगमेष्वाकाशवदंतरं बहिश्च सन्तं साक्षादिव सत्तया स्फुरन्तं पप्रच्छुः । तादृशज्ञानस्फूर्तिश्च तासां प्रेमविवर्तविशेषादेव । वनलता स्तरव आत्मनि 'व्यंजयंत इव पुष्पफलाढ्याः' इतिवत् । तत्र बहिः स्फुरंन्तं दूरतः, अन्तस्तु निकटात् । तत्र च सत्युन्मादे नैवातींद्रियेष्वपि वनस्पतिजातिषु प्रश्नो योग्य इति भावः ॥ ४ ॥ तत् प्रश्नवृत्तम् । तत्र वनस्पतिषु । एतेऽश्वत्थादयो महत्त्वादच्युतत्वाद्दूरदर्शिन इति । यद्वा--विष्णुब्रह्मरुद्राणां क्रमेणाधिष्ठानान्येतेऽतोऽपि महांत इति । अश्वत्थमुद्दिश्याहुः--न मया दृष्ट इति चलदलतया तच्चेष्टिताध्यवसानात्, श्वोऽपि न स्थास्यतीति निर्वेदाच्च । युक्तमुक्तम्, अक्षिरहितेनानेन कथं दृश्य इति परस्परमक्षिमंतमुद्दिश्याहुः--प्लक्षेति । प्रकृष्टे अक्षिणी यस्येत्यकारस्य पूर्वरूपत्वं शकंध्वादित्वात् । रलयो रैक्याच्च सिद्धम् । अथ पश्यन्नपि वागिंद्रियाऽभावाद्वक्तुं न शक्नोत्यतस्तद्वंतं वटमध्यवस्याहुः—नवपल्लवान्यस्य जिह्वातुल्यानीति ज्ञेयम् । मनसो रत्नत्वम् । हृत्वेति—न चोरं युष्मान्साधून् पृच्छामेति ॥ * ॥ प्रश्नं प्रपञ्चयति नवभिः । अत्रात्युच्चतरत्वादेते दूरवार्तिनमपि तमवश्यं पश्येयुरिति संभाव्य पृच्छंति—दृष्ट इति । प्लक्षः पीलुखल्विति ख्यातः । न्यग्रोधो वटः । किमर्थं पृच्छतेति तेषामपि प्रश्नमाशंक्याहुः—नंदस्य साधोस्सूनु रपि नोऽस्माकं स्त्रीजनानां मनो हृत्वा गतः । प्रेम्णा सर्वलोकोन्मादकमहामोहनौषधविशेषेण सहितैर्हासावलोकनैः प्रेषितैश्चोरैरस्माकं नेत्रद्वारतोंतःकरणमंतःपुरं प्रवेशितैर्मनोरत्नं चोरयित्वा पलायित इत्यर्थः । क्षणं स्थित्वा अहो किमेताभिः क्षुद्राभिरित्यस्मानवजानंतेऽमी, प्रत्युत्तरं न ददते तदलमेतः क्षुद्रफलैः परोपकारधर्मानभिज्ञैरप्रफुल्लैरशुद्धान्तःकरणैरिति तान्विहायान्यत्र गताः ॥ अत्र **तोषिणी**—वः युष्माभिः । प्रत्येकं संबोधनं श्रीकृष्ण प्रियत्वेनादरात् । ननु किमर्थमसौ युष्माभिः पृच्छ्यते, तत्राहुः--नो मनो हृत्वा गत इति । हृत्वेति मनसो रत्नत्वं व्यज्यत । अतो नष्टोद्देशित्वेनागतास्तं चौरं साधून् युष्मान्पृच्छाम इति भावः । नंदसूनुरिति स्वविश्वासहे

कच्चित्कुरबकाशोकनागपुन्नागचंपकाः ॥ रामानुजो मानिनीनामितो दर्पहरस्मितः ॥ ६ ॥
कच्चित्तुलसि कल्याणि गोविंदचरणप्रिये ॥ सह त्वालिकुलैर्बिभ्रद्दृष्टस्तेऽतिप्रियोऽच्युतः ॥ ७ ॥

**इति ॥ ५ ॥ महांतः स्वपुष्पैर्बहूपकारिणश्चेति कुरबकादीन्पृच्छंति । कच्चिदिति । हे करबकादयः दर्पहरं स्मितं यस्य सः इतो गतः कच्चिद्दृष्ट इति ॥ ६ ॥ अलिकुलैः**

तूपन्यासस्तथापीत्यर्थः । नंदेति । यौगिकवृत्त्या तस्य प्रत्युत सर्वत्रजानंदहेतुत्वमेव युज्यत इति भावः । अत एव दुःखेन साक्षात्तन्नामोक्तिरपि । साक्षाच्छ्रीकृष्णनामाऽनुक्तिस्त्वीर्षयापि । अपिशब्दोच्चारस्य नाम्नोऽग्राह्यत्वेन ' सूचकस्यापि तद्भवेत् ' इत्युक्तेः । कच्चित् प्रश्ने । भवद्भिर्दृष्टे सति चास्यामेव दिशि विहरतीति समाश्वासमासाद्यान्वेषयाम इति भावः ॥ ९ ॥ कौ खो यस्य स तथाऽनेनायं शब्दवान्वदिष्यतीत्याहुः--हे कुरबकेति । अन्या ऊचुः—अयं कु ईषद्रवो भ्रमराणां यत्रेति भ्रमरा अप्यत्र नो यान्ति । यद्वा—कुशब्दत्वाच्छोकवृद्धिकरोऽतोऽशोकं शोकनाशकं पृच्छत । नायं वक्तुं क्षमः, नाम त्वस्य जन्मशीलवर्करस्याज इव ज्ञेयम् । नागः नागकेसरः। केसरोपलक्षितपक्ष्मवत्त्वादयं सचक्षुरनेनावश्यं दृष्टः । अन्या ऊचुः—अयमस्मादपि तुंगः पुन्नागो दूरदर्शी वदिष्यत्ययम् । तदितरा ऊचुः—हसत्ययं पुष्पव्याजेन दृष्टोऽनेन युष्मच्चोर इति । रामो यथा मत्तस्तथा सोपी त्याह—रामानुज इति । मानिनीनां वयोरूपादिभिर्जातमानानामस्माकं तदैवाकस्मिकपवनेन चालिताग्रशाखांस्तानालक्ष्याहुः—अहो शिरोधूननेन वयं न जानीम इति ब्रुवत एते ॥ * ॥ पुष्पोद्यानं प्रविश्याहो सत्यमिमे एव शुद्धान्तःकरणाः प्रष्टव्याः । यदहो स्वमकरन्दैर्मधुव्रातानातिथीन्सेवन्त इति वृक्षनामान्याहुः—कच्चिदिति । कुरबकः शोणाम्लानः । नागो नागकेशरः । कच्चिद्गतः किं वा कच्चिदिहैव निहुत्य स्थितो वेति भावः । ननु किमर्थं पृच्छथेत्याशंक्याहुः—मानिनीनां मानधनानामस्माकं दर्पं मानं हरति स्मितं यस्येति । वयं निर्धनीकृता एवाभूमेति भावः । तदैवाकस्मिकेन पवनेन चालिताग्रशाखांस्तानालक्ष्याहो अहो शिरोधूननेन वयं न जानीम इति ब्रुवते, तदलममीभिः पुरुषजातिभिरित्यन्यतो जग्मुः ॥ अत्र **तोषिणी**—महत्तमत्वादतऽस्मान् क्षुद्राः प्रत्यवज्ञया नूनं न कथयेयुरिति मत्वान्यान्पृच्छंति—कच्चिदिति । कुरबकः शोणाम्लानः । नागो नागकेशरः । किमितो गतो यद्वात्रान्तर्हितो वर्तते पूर्वं दृष्ट इति पृष्टम् । ऽधुना त्वित इति दूरताऽपि दर्शनं संभवेत् । तथापि न सुलभः स्यादिति निकटगतस्य सतोऽत्रैव तत्पदानन्विष्य तैश्चैतमन्वेषयाम इति भावः । गत इति च पाठो बहुत्र तन्मते टीकायामित इत्यध्याहृत्य व्याख्यातम् । रामानुज इति नंदसूनुरितिवत् । ननु मानिनीनां युष्माकं कथं तेन मनो हृतं तत्राहुः—मानिनीनामिति । तासां दर्पहरं स्मितमपि यस्य तादृशोऽपीति तस्या विमृश्यकारित्वञ्च ध्वनितम् । दर्पो गर्वः । तदानीमेव तत्कृतेन कपटस्मितेन मानमयगर्वो हृतः । अत एवान्वेषयाम इति तथा तादृशमहामोहनस्य विच्छेदेन क्षणमपि जीवितुं न शक्नुम इत्यतः पृच्छाम इति भावः ॥ ॥ ६ ॥ हे सख्यः इयमस्यातिप्रिया तुलसी, तदेनां मिलित्वैवाग्रे गतोऽत इयं प्रष्टव्येति प्राहुः—तुलं तौल्यं स्यति दूरीकरोतीति तुलसी । यया तुल्याऽन्या नेति भावः । स्यतेरौणादिको डट् कल्प्यः । दर्शस्पर्शादि नैव सर्वकल्याणकरी त्वमसि, तत्र हेतुः—गोविंदचरणप्रियेति । यथाऽन्योऽपि गोविंदप्रियो दर्शनादिना लोकं पुनाति " मद्भक्तदर्शनात्स्पर्शाद्चर्चनाद्वंदनादपि । महापातकयुक्तोऽपि भवेत्कल्याणभाजनम् ॥ " इत्यादिपुराणात् । अच्युत इति । वस्तुतस्तस्य स्त्रीषु रागाभावमाहेति ॥ * ॥ एता अस्मत्पक्षग्राहिण्यः स्त्रीजातयः स्त्रीजनहृच्छयपीडाविदुष्यः कृपावत्यो भविष्यंति, तदिमाः पृच्छाम इत्यासाद्य तन्मध्ये परममुख्यतमां तुलसीं पप्रच्छुः—कच्चिदिति । हे कल्याणीति । वयमकल्याण्यः कृष्णविच्छेदात्, त्वमेव कुशलिनी, तत्र हेतुः—गोविन्देति । यद्वा—चरणशब्दोऽत्रादरमात्रव्यंजकः आर्यचरणा वदन्तीतिवत् । ननु यूयमपि तच्चरणप्रिया भवथैव, सत्यम्, तदपि साद्गुण्याधिक्यात्त्वमेव सौभाग्यवती विच्छेदाभावादित्याहुः—त्वा त्वां बिभ्रदेव गतः, तत्र तत्र सौरम्याधिक्यमेव कारणमिति व्यंजयामासुः । अलिकुलैः सहेति—परःसहस्रभ्रमरकृतोद्वेगमप्यगणयित्वा । त्वां बिभ्रदिति—सुगंधप्रियेण तेनास्माकमग्रहणमेतादृशसौरम्यभाववत्त्वाभावादेवेति निश्चिनुम इति भावः ॥ अत्र **तोषिणी**—एते पुरुषजातित्वेन प्रायः कृष्णपक्षग्राहिणोऽस्माकं मानं विज्ञायासूयया न किल कथयेयुरिति स्त्रीजातित्वेनात्मपक्षग्राहिणीं मन्यमानाः शश्वद्दृष्टतत्प्रीत्यनुमितसौभाग्यविशेषेण च तस्याः श्रीकृष्णदर्शनं संभाव्य श्रीतुलसीं पृच्छंति—कच्चिदिति । कल्याणि हे जगन्मंगलकारिणि परमसौभाग्यवतीति वा । अत्र हेतुः—गोवि

मालत्यदर्शि वः कच्चिन्मल्लिके जाति यूथिके ॥ प्रीतिं वो जनयन्यातः करस्पर्शेन माधवः ॥ ८ ॥ चूतप्रियालपनसाऽसनकोविदारजंब्वर्कबिल्वबकुला
म्रकदंबनीपाः ॥ येऽन्ये परार्थभवका यमुनोपकूलाः शंसंतु कृष्णपदवीं रहितात्मनां नः ॥ ९ ॥

सह त्वा त्वां बिभ्रत्तवातिप्रियस्त्वया किं दृष्टः इति ॥ ७ ॥ गुणातिरेकेऽपि नम्रत्वादिमाः पश्येयुरिति पृच्छंति । मालतीति । हे मालति मल्लिके जातियूथिके वो युष्मा
भिः किमदर्शि दृष्टः । करस्पर्शेन वः प्रीतिं जनयन् किं यात इति । अत्र मालतीजात्योरवांतरविशेषो द्रष्टव्यः ॥ ८ ॥ फलादिभिः सर्वप्राणिनां संतर्पका एते पश्येयुरिति

न्देति । गोविन्दो गोकुलेंद्रस्तच्चरणप्रिया त्वम् ‘ श्रीयेत्पदांबुजरजः ’ इत्यादिवत् । यद्वा—चरणपदमिहादरमात्रव्यंजकम् । आचार्यचरणा वदन्तीतिवत् । आदरश्चाधुना दैन्येन हे गोकुलेन्द्रप्रिये इत्यर्थः । इति तस्याऽऽग
मनावश्यकत्वं विवक्षितम् । तत्प्रियत्वे हेतुः—सहेति । न च तत्र तवानवधानं संभवेत्, यतस्तेऽतिप्रिय इति । श्लेषेणातिक्रांतः प्रियानस्मद्विधानित्यपि ध्वनितम् । अलिकुलैः सहेति तस्याः साद्गुण्यं दर्शितम्; अलीनाम
प्यनिवार्यत्वसूचनात् । यद्वा—अतिप्रियत्वमेव विवृतं, तत्प्रियत्वेनैव ते शिलीमुखा अपि न निवार्यन्त इति सूचनात् । तथा मत्तानां तेषाम् झंकारेण निह्नवाऽसंभवत्वं च सूचितम् । अतोऽवश्यं त्वदंतिकमागतस्त्वया
दृष्ट इति भावः । अच्युत इति श्लेषेण कदापि त्वत्तो न विच्युतो भविष्यतीति तदेव दृढीकृतम् ॥ ७ ॥ रूपधनविद्यावत्त्वे ये नम्रास्त एव भगवद्दर्शका नान्ये “ जन्मकर्मवयोरूपविद्यैश्वर्यधना
दिभिः । यद्यस्य न भवेत्स्तंभस्तत्रायं मदनुग्रहः ॥ ” इत्युक्तेरासु गुणातिरेकेऽपीति । माया राधाया रतिरस्यामिति मालती । रलयोरैक्यात् । बह्वादित्वान्ङीष् । अनेन तत्प्रियत्वात्तस्यापि प्रियैवे
यम् । मल्लः सर्वपुष्पाधिको गंधोऽस्या अस्तीति मल्लिका “ मल्लः पात्रे कपाले च मत्स्यभेदे बलीयसि ” इति मेदिनी । सर्वोत्कृष्टगंधवतीयमपि तस्य प्रिया । जातित्वत्सर्वप्रियत्वादियं जातीत्यु
च्यते । नायं क्लिन्तः किन्तु जातस्य जातमात्रस्येयं प्रिया जाती इदमर्थकाण्णतान्ङीप्, तत्संबुद्धौ । तथा ‘ जाती फले च मालत्याम् ’ इति मेदिनी । यूथं पुष्पसमूहरूपं गुच्छमस्या अस्तीति यूथिका शतपात्रिका
इति विजयध्वजः । प्रियार्थमस्याः पुष्पगुच्छं ग्रहीतुं प्रवृत्तोऽनयाऽवश्यं दृष्ट इति । मा परमरमा तस्या धवः कांतः माधवो वसंत इव प्रकाशकः दासीषु पुष्पिणीषु करस्पर्शेन नखक्षतादिसूचनेन सेर्ष्यं नर्म चेति सूचितम् ॥
॥ * ॥ अहो सौभाग्यगर्वेणोन्मत्तेयमस्मान्न पश्यति, तदेतादृशसौभाग्यरहिता एतत्सपत्नीर्मादृशीरिमाः पृच्छाम इत्यन्यतो गत्वाहुः—मालतीति । युष्मत्पुष्पावचयनार्थं यत्करेण स्पर्शस्तेन । वर्षाशरदतिप्रफुल्लत्वलिंगेन माल
तीजात्योरवाऽवांतरभेदो द्रष्टव्यः ॥ अत्र **तोषिणी**—तथापि तदाद्रियमाणत्वाभिमानादियं खलु न कथयेदिति नम्रीभूय पुष्पाऽर्पणेन नूनं श्रीकृष्णसेविका अपि निरभिमाना एता एव पृच्छन्ति—मालतीति । वैयग्र्येण
प्रत्येकं संबोधनम् । अतः किमिति तैर्व्याख्यातम् । तत्र किमिति कच्चिदित्यस्यैवानुवर्तमानस्यार्थः । दर्शनं तावज्जातमेव तत्र स्पर्शोपि किं जात इति विशेषमेव पृच्छाम इति भावः । यद्वा—तासां तद्दर्शनं संभावयंति—प्रीति
मिति । करस्पर्शचिह्नदर्शनादिति भावः । तत्र हेतुश्च—पुष्पप्रियत्वान्माधवो वसंत इव माधव इति । करस्पर्शेनेति—युष्मत्पुष्पाणामुत्कृष्टानां श्रीहस्तद्वारावचयेनेत्यर्थः । यात इति—समानदुःखत्वेनास्मभ्यं तत्कथयितुं योग्य
मेव चेति भावः । अतः दासीषु पुष्पिणीष्वपि नखक्षतादिसूचनेन सेर्ष्यं नर्म चाभिप्रेतम् ॥ ८ ॥ चूताम्रयोरम्लमधुरगुणभेदादवांतरजातिः, अम्लाम्रजातिर्मधुराम्रजातिश्च । नीपोऽल्पपुष्पः, कदंबो बहुपुष्पश्चेति । प्रियालो
राजादनः । पनसः कंटकिफलः । असनः पीतसारः । कोविदारः काञ्चनारकः । जंबूः कृष्णफला स्निग्धपत्रा । अर्कः प्रसिद्धः, बिल्वोपि । बकुलो ‘ मौलसरी ’ इति प्रसिद्धः । इत्यर्थ इति—तीर्थसेवारूपतपोबलेन
परतापनिवारणसमर्था इति भावः । रहितो विरहेण हत आत्मा ज्ञानं येषां गोपीजनानां तेषाम्, रहित आत्मा कृष्णो येषां श्रीकृष्णत्यक्तानामिति वाऽर्थः । एषूत्तमपुष्पफलरहितोप्यर्कः शिवप्रियत्वादुक्तः । यद्वा—श्रीवृंदाव
नीयत्वेन त्वमेव कथयसि चेत्तर्हि त्वामेव सर्वोपरितनत्वेन स्थापयाम इति । चूताम्रनीपकदंबानां पुनरुक्तिस्तु चेतोऽनवस्थानाद्वा बोध्या ॥ * ॥ अहो एताः स्वसपत्न्यास्तुलस्यास्तस्मात्कृष्णाच्च भीत्या जानत्योपि न ब्रुवते,
तदलमेताभिः परतंत्राभिरित्यन्यतो गत्वा—सत्यमिमे एव यमुनातीर्थवर्तिनो निस्पन्दत्वेनैवानुमीयमानाविष्णुस्मरणमग्ना भवंत्यतो न मृषा वदिष्यन्तीति विश्वस्याहुः—चूतेति । चूताम्रयोर्लतावृक्षजातित्वेन भेदः । नीपो धूलिक

किं ते कृतं क्षिति तपो बत केशवांघ्रिस्पर्शोत्सवोत्पुलकितांगरुहैर्विभासि ॥ अप्यंघ्रिसंभव उरुक्रमविक्रमाद्वा आहो वराहवपुषः परिरंभणेन ॥ १० ॥

पृच्छंति । चतेति । चूताम्रयोरवांतरजातिभेदः कदंबनीपयोश्च । हे चूतादयः येऽन्ये च परार्थभवकाः परार्थमेव भवो जन्म येषां ते । यमुनोपकूलास्तस्याः कूलसमीपे वर्तमानाः । तीर्थवासिन इत्यर्थः । ते भवंतो रहितात्मनां शून्यचेतसां नः कृष्णपदवीं कृष्णस्य मार्गं शंसंतु कथयंतु ॥ ९ ॥ हे क्षिति क्षिते त्वया किं तपः सुकृतं कृतं या त्वं केशवांघ्रिस्पर्शोत्सवा केशवस्यांघ्रिस्पर्शेनोत्सवो यस्याः सा । कतः । अंगरुहैरुत्पुलकिता रोमांचिता विभासि शोभसे । तत्र विशेषं पृच्छंति । अपि किमयमुत्सवोंघ्रिसंभवोऽ

दम्बो बृहत्पुष्पः । कदंबः क्षुद्रपुष्पोऽतिसुगंधः । प्रियालः शालभेदः । असनः पीतशालः । कोविदारः काञ्चनारभेदः । अर्को निकृष्टोपि गोपीश्वरप्रियत्वात् तदा समीपे सदा वर्तमानः । अन्ये नारिकेलगुवाकादयः । ते भवन्तः आत्मशून्यानां नः कृष्णमार्गं कथयन्तु । ननु कस्मै प्रयोजनाय कथयामस्तत्राहुः—परार्थमेव भविकमभ्युदयो येषां ते । यमुना उपकूले येषां ते इति गङ्गादिः ॥ अत्र **तोषिणी**—श्रीकृष्णदास्य एताः शंकया बत तं न कथयेयुरिति मुनिप्रायत्वेनातानन्यापृच्छंति—चूतेति । चूतो लताजातिः, आम्रो वृक्षजातिः । पूर्वत्रैव, न त्वाम्रे कविभिर्लतात्वं प्रयुज्यते मध्यदेशादौ लताकाराश्च ते दृश्यंते इति । 'नीपो धूलिकदम्बे स्यात्' इति विश्वप्रकाशात्परागप्रधानो महापुष्पोऽसौ ज्ञेयः । प्रियालः अस्यैव बीजं चारुबीजतया 'चिरौंजी' इत्याख्यातं भुज्यते । पनसः कण्टकिफलः । असनः पीतसालः । कोविदारो युगपत्रकः । 'कोयिलाष' इति विंध्याद्रौ प्रसिद्धः, कांचनारतुल्यः कांचनारभेदोऽयम् । अर्कोपि निकृष्टोऽपि पृष्ट इति तासामुत्कंठातिशयः स्पष्टीकृतः । ननु युष्मान्प्रति तत्कथनेन किमस्मत्प्रयोजनं, तत्राहुः—परेति । अत्र श्रीस्वामिपादमते भवका इति इकाररहितः पाठः । भवो जन्मेति व्याख्यानात् । बहुव्रीहौ कः । इकारयुक्तपाठस्तु सर्वत्र दृश्यते । ततश्च भविकं मंगलमभ्युदय इत्यर्थः । तथाप्यर्थः स एव । तथापि यमुनोपकूला इति तीर्थवासित्वेन सत्यवादित्वात्कृपालुत्वाच्च सत्यमेव शंसनीयम् । न तु वञ्चनीयमिति भावः । उप समीपे कूलं येषां ते उपकूलाः, यमुनाया उपकूला यमुनोपकूला इति तु विग्रहः । ननु स्वयमेव युष्माभिरन्विष्य गृह्यतामित्याशंक्य निजार्तिज्ञापनेन कृपां जनयंत्यः सकातर्यमाहुः—रहितात्मनाम्, विरहहतज्ञानानामित्यर्थः । अतो मृतप्रायाः स्वयमन्वेष्टुं न शक्नुम इति भावः । पूर्वं सर्वेषु प्रायो दर्शनं पृष्टम्, एषु तु पूर्वपूर्वेषु प्रत्युत्तराऽलाभेन चातुर्यान्निश्चित्यैव केवलं तद्वर्त्मोद्देशप्रार्थनम् ॥ ९ ॥ निजार्तिविज्ञापनाय विवशतया भूमौ निपत्योचुः—हे क्षितीति । गुणाभाव आर्षः । उत्सवः कथं ज्ञात इत्याशंकते—कुत इति । अंगरुहैः रोमभिः । तत्र उत्सवे । एकदेशे श्रीकृष्णांघ्रिस्पर्शेणोद्भूतः । अथ वार्थको यद्वेति द्वितीयो विकल्पः । आहोस्विदित्यर्थे तृतीयो विकल्पः । यद्वा—वरमाहवं सुरतसंग्रामं पुष्णातीति तस्मान्नंदकिशोरादेवेति । इह केशवेति प्रशस्तकेशं श्रीकृष्णमेव वक्ति गोपीनामर्थांतरस्यानभीष्टत्वादिति विजयध्वजः ॥ * ॥ अहो किमेत विष्णुसमाविमत्त्वादस्मत्प्रश्नं न शृण्वन्ति, किं वा तीर्थवासिनोऽप्यमी कठोरा एव, यतः किमपि न प्रतिवदन्ति, हंहो के जानंति के वा तं न जानन्तीत्यनिश्चितत्वात्तीर्थवासिनोऽमी कथं वृथा निन्द्यन्ते यो जनस्तमपश्यज्जानाम्येवेति निश्चिततत्त्वो भवति स पृच्छयतामिति कयाचिदुक्ते, प्रियसखि स एव जनः खलु कस्तं किं त्वं जानासीति सर्वाभिः पृष्टा सा तर्जन्या भूमिं दर्शयामास । ततश्च सत्यमेव त्वं ब्रूषे यत्र तत्र स वर्तते सा पृथिव्येवेति पृथिव्या अस्यास्तद्विच्छेदो नास्तीति कृष्णस्य पितृवर्गसखिवर्गप्रेयसीवर्गदासवर्गेभ्यो विरहदुःखाऽनभिज्ञत्वात्पृथिव्येव धन्येत्यतोऽस्याः पूर्वपूर्वेष्विव प्रश्नो न घटते, किं त्वस्याः प्राचीनं तप एव जिज्ञास्यं, यत्कृत्वा कृष्णविरहात्यंताभाववत्या वयमपि भवाम इति विमृश्य पृच्छंति—किमिति । हे क्षिति क्षिते त्वया किं तपः कृतम्, यतस्त्वं केशवस्यांघ्रिस्पर्शने उत्सवो यस्याः सा त्वं विभासि । यतोंगरुहैस्तृणांकुरैरुद्गच्छद्भिरुत्पुलकिता उत्कृष्टपुलकयुक्ता यत्र तत्र स वर्तते तत्रैव त्वामंघ्रिभ्यां स्पृष्ट्वैव तिष्ठतीति कृष्णांगसंगसुखं तव रात्रिंदिवं व्याप्यैव यतोभूत्तत्तपो

१ 'परार्थभविकाः' इति पाठाऽभिप्रायेणेदम् ।

**अप्येणपत्न्युपगतः प्रिययेह गात्रैस्तन्वन्दृशां सखि सुनिर्वृतिमच्युतो वः ॥ कांतांगसंगकुचकुंकुमरंजितायाः कुंदस्रजः कुलपतेरिह वाति गंधः॥११॥**

धुना तवैकदेशांघ्रिस्पर्शसंभवः । यद्वा नैतावत्किं तु उरुक्रमविक्रमात्पूर्वमेव त्रिविक्रमस्य पदा सर्वाक्रमणात् । अहो अथ वा नैतावदेवापि तु ततोऽपि पूर्वं वराहस्य वपुषः परिरंभणेनेति अतस्त्वया नूनं दृष्टस्तं दर्शयेति ॥ १० ॥ हरिण्या दृष्टिमत्यासत्त्या कृष्णदर्शनं संभाव्याहुः । अपीति । हे सखि एणपत्नि अपि किमुपगतः समीपं प्राप्तः ।

वक्तुमर्हसि । वयं विरहिण्यो दुर्भगास्तच्छ्रुत्वापि कृतार्थीभवाम इति भावः । तदब्रुवाणां तामभिलक्ष्य पुरावृत्तस्मरणात्स्वयमेवाभ्यूहंति—अपीति । उरुक्रमस्य त्रिविक्रमदेवस्य विक्रमात् योंघ्रिसंभवोंघ्रिप्राप्तिः 'भू—प्राप्तौ' संपूर्वः । तत्र तदीयमहामहाभारसहनलक्षणं यत्तपस्तदेव किमित्यर्थः । वै इति निश्चये, पादपूरणे वा । आहोस्वित् महावपुषः परिरंभणेन तदीयदृढपरिरंभोत्थपीडाप्राप्तिलक्षणं यत्तपस्तदेव किमित्यर्थः । अन्याभिर्दुर्लभं तवैतदुत्सवप्राप्तिसाधनं यत्तपस्तदपि स्त्रियास्तव पुरुषसंगलक्षणत्वात्सुखमयमेवेति नास्ति त्वत्तोन्या धन्येति भावः ॥ अत्र **तोषिणी**—एवं पदवीप्रार्थनेन पदवीस्मरणाद्भूमौ दृष्टिं निधाय तस्याः सर्वव्यापकत्वेनावश्यं तद्दर्शनं संभाव्य तस्याः स्निग्धदूर्वांकुराद्युद्गमं पुलकजातं मत्वा तच्च श्रीकृष्णपादाब्जस्य स्पर्शोत्सवेनैव संभाव्य तस्य सर्वोत्कृष्टतां सूचयंत्यस्तस्याः सौभाग्यमधिकं वर्णयन्ति—किन्त इति । तपोऽत्र पुण्यजनकं कर्म । अपीति—अंघ्रिसंभवोऽयमुत्सवः । अपि किम् "त्रेधा विष्णुर्विचक्रमे" इति श्रुतिवर्णितस्य त्रिविक्रमस्य लोकत्रयोपक्रमणार्थं प्रकटितैश्वर्यस्य श्रीविष्णोश्चरणविक्षेपेण सर्वाक्रमणाद्बभूव ? अपि तु नैव, तदानीमीदृशोत्सवशोभाविशेषासम्पत्तेः । अहो न भवतु वा पादस्पर्शमात्रात्तदुद्धारार्थं प्रकटितमहावराहमूर्तेर्भगवतः साक्षात्संभोगेऽपि न सिद्ध इत्याहुः—आहो इति । यद्वा—तप एव विकल्पयंति—केशवांघ्रिस्पर्शसंभव उत्सवस्त्रिविक्रमपादस्पर्शात्कारणात्किं वा वराहमूर्तिपरिरंभणेन कारणेन बभूव । तत्कथ्यतामिति शेषः । श्रीकृष्णस्य तंतमतिक्रम्य माहात्म्यविशेषः सूचितः । अतस्त्वद्विरहं कथं सहेमहीति । किं वा—त्वं परमसुभगा वयञ्च तद्रहिता दुर्भगा एवेति कृपया तत्पदवीं सम्यग्दर्शयेति भावः ॥ १० ॥ एणपत्नि मृगजाये कांताया अंग उरोवयवे संगो ययोस्तौ कुचौ तयोः कुंकुमेन रंजिताया अरुणीभूतायाः । यद्वा—कांतस्य हरेरंगसंगो यस्यास्तस्याः कुचौ तयोः कुंकुमेति पूर्ववत् । कांतायाः कमनीयाया वेति । कुलपतिर्गोपीसमूहनाथस्तस्य । गंधोऽस्यास्तीति गंधो गंधवान्वायुः । मत्वर्थीयोऽच् । गंध इह वाति स्वयं च न दृश्यते तत्सद्भावो विज्ञायत इति व्यंग्यालंकारोक्तिः ॥ * ॥ ततश्चाहो हंत तेन स्वकान्तेन ध्वजवज्रांकुशादिभिश्चिह्नैर्विचित्रितांगी विहरंती स्वाधीनभर्तृका महागर्वान्धा कथमस्मांस्तमेवाचक्षीतेत्यग्रतो गत्वा कामपि हरिणीमालक्ष्याहुः—अपीति । हे सखि एणपत्नि प्रियया त्वया किमुपगतः स्वसमीपे स प्राप्तः, संबोधनपदसाहचर्यादेवात्र त्वयेति लभ्यते । एणस्य पत्नी भवंत्यपि त्वमस्मत्तुल्या तस्यैव प्रिया तमेव प्रियं मन्यसे इति भावः । यतो गात्रैर्मुखबाह्वादिभिर्दृशां सुनिर्वृतिमत्यानंदं तन्वन् सन् इति । दृशामित्यादरे बहुत्वम् । अच्युत इति । स्वदृगानंदलाभात्त्वया तदनुगमनादेव हेतोस्त्वत्तः स न विच्युत इति भावः । ततश्चाग्रतः स्वभावादेव गच्छन्तीं तामालक्ष्य हंहो स दृष्ट इति किं ब्रवीमि तं वो दर्शयाम्येव मदनुपदमागच्छतेति ब्रुवाणेवाग्रत इयं गच्छंती ग्रीवां परावृत्य मुहुरस्मान्पश्यति, तदियमेवात्र निर्दये वृंदावने दयावतीति तदनु गच्छंत्यो दैवात्क्वापि गतां तामदृष्ट्वा हंहो कृष्णं दर्शयिष्यन्ती हरिणी किं न दृश्यते इति पृष्टाः काश्चिदाहुः । तर्हि कृष्णोऽत्रैव क्वापि वर्तते हरिणी तु कृष्णाद्बिभ्यती स्वीयसूचकत्वदोषापलापार्थं क्वापि निह्नुताऽभूदिति वितर्कयन्त्यो दैवादायातं सौरभ्यमनुभूयाहो सत्यंसत्यमेतदेव तत्त्वमिति सहर्षं मुहुराहुः—कान्ताया अंगसंगतस्तत्कुचकुंकुमेन रंजितायाः कुंदस्रजो गंधो वाति आगच्छतेति। अत्र कांतयागात्रद्वयस्य च कुचयोश्च कुंकुमस्य कुन्दस्य च गंधस्तासां नासाभ्यामेव निश्चीयते स्मेति भावः।कुलपतेर्गोपीकुलरमणस्येति कुलपतित्वनिष्ठां परित्यज्य संप्रत्येकया कयाचित्कांतया रममाणस्य तस्यान्यायं पश्यतेति भावः ॥ अत्र **तोषिणी**—अथात्रेति विचार्यते—कामप्यादाय श्रीभगवानन्तर्हित इति व्यक्तीभविष्यदपि पूर्वं यन्मुनीन्द्रः स्वयं न स्फुटमुक्तवांस्तस्यायमभिप्रायः—सत्स्वपि नानाभगवदाविर्भावेषु मम स्वयं भगवति श्रीकृष्णाख्य एव तस्मिन्नाग्रहविशेष इति, तथा सत्स्वपि नानातत्तत्परिकरेषु श्रीव्रजवासिष्वेव स इति, तथा सत्स्वपि तेषु श्रीव्रजदेवीष्वेव ततोप्यधिकतरः स इति रहस्यं सर्वेपि ज्ञातवन्त एव किन्तु तास्वपि सतीषु श्रीराधिकायामेवाधिकतमः स इति न ज्ञातवंतः, तदेतन्मदाग्रहतारतम्यं च तत्तदुष्कर्षतारतम्यादेव, अस्याः परमरहस्याय स्तदेत तु साक्षाज्ज्ञा

**बाहुं प्रियांस उपधाय गृहीतपद्मो रामानुजस्तुलसिकालिकुलैर्मदांधैः ॥ अन्वीयमान इह वस्तरवः प्रणामं किं वाऽभिनंदति चरन्प्रणयावलोकैः ॥१२॥**

**गात्रैः सुंदरैर्मुखबाह्वादिभिः । प्रियया सहेति यदुक्तं तत्र द्योतकम् । कांताया अंगसंगस्तेन तत्कुचकुंकुमेन रंजितायाः कुंदकुसुमस्रजो गंधः कुलपतेः श्रीकृष्णस्य वात्यागच्छति ॥ ११ ॥ फलभारेण नतांस्तरून्कृष्णं दृष्ट्वा प्रणता इति मत्वा प्रियया सह तस्य गतिविलासं संभावयंत्यः पृच्छंति । बाहुमिति । तुलसिकाया अलिकुलैरतस्तदामोद**

पयितुं संकुचति मच्चित्तं ज्ञानखलताभिया विज्ञापयितुमपीच्छति तस्मादस्याः सखीनां वचनात्तत्राप्रतीतौ च प्रतिपक्षाणामपि वचनाद्व्यंजनयैव वृत्त्या यथावसरं मध्येमध्ये प्रकटयिष्यामः । यदि च जातु स्वयमप्यावेशवशात्प्रकटयिष्यामस्तदा नाम तु तस्याः साक्षान्न वक्ष्यामः । एतस्यास्तत्पुनरास्तामन्यासामपि न, किञ्च व्यंजनावृत्तिरेव सैवत्र नानारसप्रकाशिनी, न तु मुख्या । सा च यदि प्रसंगेऽवधारिते विशेषव्यंजनार्थमभ्युदयते तदातीव चमत्कारिणी स्यादिति तदेतदाभिप्रेत्य प्रथमं सखीद्वारेदं ज्ञापयति । यदा तामादाय भगवानंतर्हितस्तदा तस्याः सख्यस्तु संशयाना एवासन् । किन्तु, केवलवलानुज्ञान्वेषणपराभिस्ताभिः सहचारित्वेऽपि किञ्चिदुन्मादधारित्वेऽपि तन्मिथुनान्वेषणव्यग्रतया पृथगवस्थितस्वयूथतया तदवधानदूरस्फुरदीहाः सख्यः पर्यटितवत्यो वक्ष्यमाणं तत्पादाचिह्नदर्शनं विनाऽपि क्वचित्किञ्चिदुपलब्धवत्यश्च । तथाहि तासां वाक्यम्—अप्येणपत्नीति । अत्राऽखंडस्य वाक्यस्य निखिलपदानामप्यनुमोदनव्यंजक एवार्थः प्रतिपाद्यते । ततः सख्यमेवासां तन्मिथुनमनुलक्ष्यते, तद्दर्शनोत्कंठा च तत्र वाक्यार्थः । अपीति संभावनायाम् । तदिदं संभावयाम इत्यर्थः । अथ वाऽपीति प्रश्ने । तदेतत्पृच्छाम इत्यर्थः । किम् ? तत्राहुः—हे सखि अच्युतो वो युष्माकमुपगतः समीपं प्राप्तः ? । ननु वनविहारिणस्तस्य वन्यानामस्माकं समीपप्राप्तौ किमाश्चर्यम् ? तत्राहुः—प्रियया सहेति । ननु ( तु ) तत्खल्वाश्चर्यमेव किन्तु यत्र तस्य दर्शनं तत्र तस्याः सहयोगेन किमाश्चर्यमधिकं सुखं नाम तत्राहुः—तयैव गात्रैस्तादृशानंदव्यंजकनानानुभावविचित्रैरंगैर्वो युष्माकं भवत्या भवत्संबंधिनीनां च दृशां सुनिर्वृतिं केवलस्य तस्य दर्शनादपि तत्साहित्यदर्शनेन परमानंदं तन्वन् विस्तारयन्निति । तदिदञ्च नास्मासु गोपयितुमर्हसि, वयं हि तदंतरंगधर्मविदस्सहचर्यः तद्गंधवातमात्रेणापि तदीयं सर्वं ज्ञातुं शक्नुम इत्याहुः—कान्तांगेति । प्रथमं तावत्कुलपतेस्तस्य, तत्र कान्तायास्तस्याः, तत्र तदंगसङ्गस्य, तत्र तत्कुचसंगिकुंकुमस्य, तत्र च तल्लिप्तकुंदस्रजः स एव गंधः स्फुटमत्रायाति । स चाभ्यस्तत्वादस्माभिरुपलभ्यत इत्यर्थः । अथ द्रष्टृदृष्टिदृश्यप्रशंसया तदनुमोदनव्यंजकपदानामर्थः—अत एव प्रथममपीति सकाकुसंभावनगिरा तत्रोत्कंठां व्यानंजुः—एणपत्नीति । जात्यैव दृष्टिप्रशंसा, एणपत्नीत्यनेन “ पत्युर्नो यज्ञसंयोगे ” इति पाणिनिस्मृतेरेणानां याज्ञिकत्वं तस्या यज्ञपत्नीत्वं व्यंजितमिति द्रष्टृप्रशंसा । उपगतः समीपप्राप्त इति तद्भाग्यप्रशंसा । तत्रापि प्रियेति द्रष्टृदृश्ययोर्द्वयोरपि प्रशंसातिशयः । गात्रैर्मिथः संगमेनासाधारणतां प्राप्तैरिति पूर्ववदेव । तन्वन् दृशां सखिषु सुनिर्वृतिमित्येभिर्दृष्टैश्च तददतिशयः । अच्युत इति प्रियया सह विचारराहित्येन पुनर्दृश्यप्रशंसा । व इति यत्र भवती भवतीदृशी तत्र भवत्संगिनीनामपीदृशत्वं युक्तमिति द्रष्टृप्रशंसा । अथ कान्तेति दृश्यायास्तस्याः, तदंगसंगेति लब्धदुर्लभस्य दृश्यस्य कान्तस्य, कुचकुंकुमेति तत्संयोगलब्धभाग्यस्य दृश्यस्य कुंकुमस्य, तद्रंजिताया इति तत्संबंधेन लब्धशोभातिशयाया दृश्यायाः कुंदस्रजः शुभतया तदुदयशोभायोग्यतायाः, स्वरूपेण च तस्या एव, कुलपतेरिति दृश्यस्य कान्तस्य, इहेति लब्धतद्गंधसौभाग्यस्य दृश्यस्य तत्स्थानस्य, वातीति वातमप्यात्मसात्कृत्य स्वयमेव सर्वतश्चलतीति गंधविलसितस्य गंध इति तत्तद्विशेषे योगात्तस्य च प्रशंसावगतेति ॥ ११ ॥ विटवृत्तिं श्रितवतो मालत्यादिसमीपे पुष्पजिघृक्षया जिगमिषासंभवे प्रश्नस्तान्प्रति कथंचिदुपयुज्यतेऽपि, अश्वत्थादिप्रश्नः कथमुपयुज्यतेऽतस्तत्संभवं दर्शयितुमाहुः—बाहुमिति । प्रणामप्रदक्षिणादिना संसारात्तारयंतीति तरवोऽश्वत्थादयस्तान्प्रत्याहुः—हे तरवः रामानुजो मदांधसंगी एकं बाहुं प्रियांसे निधाय परेण प्रियामुखपद्मलोभिभ्रमरनिवारणाय गृहीतपद्मः । यद्वा—हस्तेन गृहीतपद्मः वः प्रणामं चरन्कुर्वन् । यद्वा—वः प्रणामं प्रणयावलोकैरभिनंदति स्वीकरोति किं वेत्यनेन स्थावराणां भक्त्यतिशयो ध्वनितः ॥ * ॥ तस्य तत्रैव वर्तमानत्वेऽन्यदपि लक्षणं मिथो ज्ञापयंत्यस्तरून्फलपुष्पावनम्रान्प्रगतान्मत्वा सवितर्कमाहुः—बाहुमिति । हे तरव इह चरन् कृष्णः फलपुष्पादिकरप्रदायिनां वः प्रजापरूपाणां प्रणामं किं प्रणयपूर्वकावलोकैरभिनंदति नवा ? हंतहंत युष्मद्विधेषु सात्त्विकसाधुलोकेषु कुतस्तस्य

पृच्छतेमा लता बाहूनप्याश्लिष्टा वनस्पतेः ॥ नूनं तत्करजस्पृष्टा बिभ्रत्युत्पुलकान्यहो ॥ १३ ॥

**मदांधैरन्वीयमानोऽनुगम्यमान इह चरन्निति ॥१२॥ काश्चिदाहुः । हे सख्य इमा लताः कृष्णेन संगता नूनमत इमाः पृच्छत । ननु स्वपतिसंगतौ तत्संगतिर्दुर्घटा । न । वनस्पतेः पत्युर्बाहुनाऽऽश्लिष्टा अपि नूनं तत्करजस्पृष्टाः कृष्णकरनखस्पर्शं प्राप्ता अहो भाग्यं यत उत्पुलकानि बिभ्रति । न हि स्वपतिसंगतावीदृक्पुलकसंभव इति भावः ॥ १३ ॥**

प्रीत्यवलोकनावकाश इति सासूयमाहुः—रामानुजो मत्तस्तत्रापि प्रियाया अंसे बाहुं वामभुजमुपधायेति संप्रयोगप्रेमवशाच्छ्लथदुर्बलः प्रियास्कंधार्पितं स्वबाहुमेव कोमलमुपधानं कृत्वा तस्या मुखगंधेनोत्पतिष्णूनां भ्रमराणां विद्रावणार्थमेव दक्षिणपाणिगृहीतकमलोऽतः सैवैकतानमानसस्य तस्य नान्यत्र दृष्टिपातसंभव इति भावः । तुलसिकानां कोमलतुलसीकाननस्यालिकुलैरन्वीयमानः । तुलसिकाः परित्यज्य इहात्रैव सोन्विष्यत इत्यतः स क्वचिदत्रैव निह्नुतो विहरतीति भावः । ननु तर्हि अलिकुलानामेवानुपदं गच्छामस्तत्राहुः—मदांधैरिति । न हि मदांधानामनुगतिर्भव्यजनैः कर्तुमुचितेति भावः ॥ अत्र **तोषिणी**—अथ तस्या मौनमयविलोकनाभिनिवेशेनाशंकितान्निजविरहार्तिदृष्टार्तिभरोदयात्स्तब्धतां मत्वा तां विहाय फलपुष्पादिभरनम्रान्वृक्षान्वीक्ष्य प्रणयभरविनतान्मत्वा सर्वानेव तान्पृच्छंति--बाहुमिति । इहापि तत्तत्प्रशंसयानुमोदनं व्यंग्यं तत्र वाक्यार्थेन । यथा हे तरवो रामानुजो वो युष्माकं प्रणामं किं वा प्रणयावलोकैरभिनंदति ? इति स्नेहस्य तत्कृपायाश्च योग्यतास्पदतां सूचयित्वा तेषां द्रष्टॄणां गुणप्रशंसां कथं नाभिनंदेदित्याशंक्य तत्र तस्य तया सह मधुरविलासावेशकारणमाहुः । तज्ज्ञाने च कारणं गंधमात्रेण पूर्ववन्निजतदंतरंगधर्मविज्ञतामाहुः--बाहुमित्यादिना । तत्राभिनंदने सामान्यतः कारणं चरन्निति । तत्तत्क्रीडास्थानगमनव्यग्र इत्यर्थः । ननु सदा सर्वत्र भ्रमति पश्यति चास्मानद्य वा को विशेषस्तत्राहुः--बाहुं प्रियांस उपधायेति । प्रियायाः स्वस्मिन्परमस्निग्धाया अंसे स्कंधे उपधाय कोमलेयमिति यत्किञ्चिदाधायेति । ननु तामेवास्मान्दर्शयितुमागतः कथमस्मत्प्रणामं नाभिनंदेदित्याशंक्याहुः—तुलसिकालिकुलैरन्वीयमानः । गृहीतपद्मः प्रियायास्तान्निवारयितुं दक्षिणेन भुजेन लीलापद्मधूननासक्त इत्यर्थः । तर्हि कथमभिनंदेदिति भावः । अत्र तु तुलसिकालिकुलैरिति तत्क्रीडावनतुलसीनां सर्वसुगंधित उत्कर्ष एव द्योतितः, तथा वक्ष्यते च 'दिव्यगंधतुलसीमधुमत्तैः' इति । मदांधैः तद्रसपानमदेनांधैरप्यन्वीयमान इति प्रियांगसंघर्षेण परिमलविशेषो दर्शित इतीत्थमत्रापि पूर्ववत्तत्तत्प्रशंसा दर्शिता । अथ च 'मालां बिभ्रद्वैजयंतीम्' इति या वैजयंती प्रोक्ता मध्ये 'कच्चित्तुलसि' इत्यादौ त्वा बिभ्रदित्यनेन तत्प्राशस्त्यातिशयस्य प्रस्तुतत्वात् । या तु तुलसीमाला सूचिता पुनश्च 'कुंदस्रजः' इत्यनेन कुंदस्रक् च दर्शिता संप्रति तस्यास्तस्याः स्खलनहेतवो विहाराश्च व्यंजितास्तीदित्थं वाक्यार्थेन तत्तत्प्रशंसयानुमोदनमेव व्यंजितम् । अथ पदानामर्थैरपि पूर्ववदनुसंधेयम् । तदेवंवक्त्रीणां सख्यमेव लब्धम् 'तस्या अमूनि नः क्षोभम्' इत्यादौ विरोधमुखेन च तदेव हि निश्चेतव्यम् ॥ ॥१२॥ यतः कृष्णेन संगता अतो हेतोः । अत्राशंकते—नन्विति । तत्संगतिः कृष्णसंगतिः । दुर्घटा अशक्या नेत्याह—तन्नखैः कृष्णनखैः । स्पर्शः कथं ज्ञातस्तत्राहुः—यत इति । उत्फुल्लकान्यूर्ध्वरोमाणि । अन्यथा तदसंभवमाहुः—न हीति । इति भाव इति—यादृक्परपुरुषस्पर्शे स्त्रीणामानंदस्तादृक्स्वपतिसंगैर्नेति तात्पर्यम् ॥ * ॥ अन्यदपि लक्षणमन्या दर्शयंत्य आहुः—पृच्छतेति । हे सख्य इमा लता एव कृष्णसंगमलक्ष्मधारिणीः पृच्छत । न च स्वपतिसंगतौ तत्संगतिर्दुर्घटेति वाच्यम्, यतो वनस्पतेः पत्युर्बाहून्सम्यगाश्लिष्टा अपि अहो कामोद्रेकः नूनं तन्नखैः स्पृष्टा एवोत्पुलकानि बिभ्रति, न हि स्वपतिसंगतावीदृक्पुलकं स्यात् । अत एव तल्लक्षणस्यास्मद्दृश्यमानत्वात्पूर्वंपूर्वा इव न वयं तदद्राक्ष्मेति मिथ्या वक्तुं प्रभविष्यंतीति भावः ॥ अत्र **तोषिणी**—तदेतत्सर्वम् 'कस्याः पदानि चैतानि' इति या वक्ष्यंति तासामवधानास्पदमेव न बभूवेति लभ्यते संशयासंभवात् । काश्चित्तु किञ्चित्कृतावधाना अपि रागद्वेषाऽभावात्तदश्रुत्वैव स्वाभीष्टमेव दर्शयन्ति।मुनींद्रश्चात्र पूर्वाभ्यस्तासां वासनाभेददर्शनाय तदुदासीनतां व्यंजयति—पृच्छतेमा लता इति । वनस्पतिरूपस्य पत्युर्बाहूनप्याश्लिष्टा एता एव लताः पृच्छत । नन्वेवं चेत्तर्हि कथमासां तत्संगतिस्तर्क्यते ? तत्राहुः—नूनं वितर्के, तस्य श्रीकृष्णस्य करजैस्स्पृष्टा इति । ननु तदिदमपि कथं ज्ञातं, तत्राहुः—उदुच्चैः पुलकान्यंकुररूपाणि बिभ्रति बिभ्रत्य एवासते । अहो इत्य

**इत्युन्मत्तवचोगोप्यः कृष्णान्वेषणकातराः ॥ लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः ॥१४॥ कस्याश्चित्पूतनायंत्याः कृष्णायंत्यपिबत्स्तनम् ॥ तोकायित्वा रुदंत्यन्या पदाऽहञ्छकटायतीम् ॥१५॥ दैत्यायित्वा जहारान्यामेका कृष्णार्भभावनाम् ॥ रिंगयामास काऽप्यंघ्री कर्षंती घोषनिस्वनैः ॥१६॥**

उन्मत्तवत्पप्रच्छुरित्येतत्प्रपंचितमिदानीं ' रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिकाः ' इति यदुक्तं तत्प्रपंचयति । इतीति । उन्मत्तवचोगोप्यः उन्मत्तवचसश्च ता गोप्यश्च कृष्णस्यान्वेषणेन कातरा अतिविह्वलाः । अनुचक्रुरनुकृतवत्यः ॥ १४ ॥ कस्याश्चिदित्यादिभश्चतुर्भिरनुकरणं प्रपंच्यते ततश्चतुर्भिस्तन्मयत्वं पुनरेकेनानुकरणमिति विवेकः । पूतनायंत्याः पूतनावदाचरंत्याः कृष्णवदाचरंती गोपी स्तनमपिबत् । तोकायित्वा तोकवदात्मानं कृत्वा ॥ १५ ॥ दैत्यायित्वा दैत्यवत्तृणावर्तवदात्मानं कृत्वा एका कृष्णार्भभावनां

पूर्वतायाम्, न त्वेवं पुरेत्यर्थः ॥ १३ ॥ एकं प्रतिश्रुतं प्रपंच्य द्वितीयं प्रक्रमते–इति उक्तरीत्या। अनुकरणघृताभिवृद्धवह्निज्वालानां कथमात्माऽतिष्ठत्तत्राह–तदात्मिका इति ॥ * ॥ इमा आनंदजाड्यान्न किमपि ब्रुवते इत्येवमचेतनेष्वपि प्रश्नकामादिदर्शनाभ्यामुन्मत्तानां वचांसीव वचांसि यासां ताः । ततश्च तस्यान्वेषणेपि कातरास्तन्मध्ये काश्चिदेवं प्रत्येकं परामृशुः–संप्रत्यहमेव स्वरूपचेष्टाद्यनुकरणेनात्मानं कृष्णाकारं दर्शयित्वापि कातराणामासां स्वस्य च मौहूर्तिकीमपि निर्वृतिं निष्पादयामीति मनसि कृत्वा तस्य सर्वा एव लीलाः क्रमेण स्मृत्वा रूढीकृत्य पूतनावधादिलीलामनुचक्रुः । तस्मिन्नेवात्मानो यासां ताः । तत्र च प्रतिकूलानामनुकरणं योगमाययैव, तन्मध्य एव गोपीस्वरूपा भूत्वा तत्तल्लीलासिद्ध्यर्थं चकार । अनुकूलानुकरणं तु गोप्यश्चक्रुरिति ज्ञेयम् । "नो नः कथा वद सदास्विति तन्निषिद्धोऽप्यानंदनिघ्न इह ता यदवोचमेव । नामानि तु प्रथयितास्मि तदत्र नासामित्थं मुनिर्मनसि संप्रति निश्चिकाय ॥ " ॥ अत्र **तोषिणी**–इति पूर्वोक्तप्रकारेण उन्मत्तस्य वच इव वचो यासां तादृश्यो गोप्यः । कृष्णान्वेषणे कातराः, विरहदुःखेन तदपि कर्तुमसमर्था इत्यर्थः । तथा सत्यः 'गायंत्य उच्चैः' इत्याद्यनुसारेण गानानुवृत्तिप्राप्ता यायाः पूतनावधादिलीलास्तास्ता अपि मध्येमध्येऽनुचक्रुरित्यर्थः । तत्रहेतुः–तदात्मिकाः तस्मिन् कृष्ण एवात्मा चित्तं यासां ताः । गाढतदासक्ता इत्यर्थः । तत्र कृष्णानुकरणं स्फुटमेव तदात्मकतया तत्र च स्वभावापरित्यागेन नातितदभेदस्फूर्तिः ' यतंत्युन्निदधेंबरम् ' इत्यत्र यत्नकथनात् 'कृष्णोऽहं पश्यत गतिम्' इति स्वस्मिन्कृष्णत्वसाधनार्थं तच्छब्दप्रयोगाच्च । पूतनाद्यनुकरणं च कृष्णविषयकतद्धेतुकभयेनेति तदात्मकतयैव यथा स्वविषयकभयोन्मत्तस्य व्याघ्राद्यनुकरणम्, अतो न तदीयप्रेमविरुद्धभावयोगः । कस्याश्चिच्छ्रीयशोदानुकरणञ्च न स्वेन रत्याख्येन भावेन, तस्य बालभावतयावृतत्वात् । किन्तु, प्रीतिसामान्यातिशयाल्लब्धकृष्णभावत्वेन ततो भयादेव ततस्तस्याभावेन न मातृभावस्पर्शः किन्तु कृष्णभावनैवेति न मिथः स्पर्शानुचितयोर्भावयोर्युतिः । सर्वमेतत्तासु तदानीमुन्मादस्यानुगतत्वात्सहसैव समपद्यत नान्यदेवेति च ज्ञेयम् ॥ १४ ॥ पूतनेवाचरतीति पूतनायते, पूतनायत इति पूतनायंती " कर्तुः क्यङ् सलोपश्च " इति क्यङि पुनः तङन्ताच्छानचि प्राप्ते शतृप्रत्ययस्त्वार्षः, " श्यप्श्यनोर्नित्यम् " इति नुम् । तोक इवाचरतीति तोकायते तोकाय्यत, इति तोकायित्वा ' अव्ययकृतो भावे ' इति भावे क्त्वा । शकटायतीमिह नुमभावस्त्वार्षः ॥ * ॥ एवमनुकरणं चतुर्भिराह–पूतनायन्त्याः पूतनावदाचरंत्याः । कृष्णवदाचरन्ती स्तनमपिबत् पानमनुचक्रे । तोकायित्वा तोकवदात्मानं कृत्वा ॥ अत्र **तोषिणी**–तदात्मकत्वेनानुकरणस्य प्रपंचमाह–नवभिः । पूतनायंत्या इति–तथापि स्वभावस्थितत्वेन पूतनावदाचरंत्या एव न तु तत्तद्विरुद्धभावाया इत्यर्थः । कृष्णायंतीति तु 'कृष्णार्भभावनाम्' इति वक्ष्यमाणानुसारेण भावतोऽपि तदाचरंतीति लभ्यते । एवमुत्तरत्रापि स्तनमपिबदिति चानुकरणमात्रं तन्मात्रस्यापेक्षितत्वात् । शकटायतीम् शकटायमाणाम् । तादृशत्वं च हस्तपादाभ्यां भुवमवष्टभ्याधोमुखतयैवोच्चैरवस्थानम् ॥ १५ ॥ रिंगयामास हस्तजानुभ्यां चचाल । घोषनिस्वनैः मंजीरादिध्वनिभिः सह ॥ * ॥ दैत्यायित्वा तृणावर्तदैत्यवदाचरंती एका कृष्णस्य आर्भं बाल्यं भावयति या ताम् ॥ अत्र **तोषिणी**–कृष्णस्यार्भभावना बाल्यवासना सेव सा यस्यास्तां जहार । तद्भयावेशेन

कृष्णरामायिते द्वे तु गोपायंत्यश्च काश्चन ॥ वत्सायंतीं घ्नती चान्या तत्रैका तु बकायतीम् ॥ १७ ॥ आहूय दूरगा यद्वत्कृष्णस्तमनुवर्ततीम् ॥ वेणुं क्वणंतीं क्रीडंतीमन्याः शंसंति साध्विति ॥ १८ ॥ कस्यांचित्स्वभुजं न्यस्य चलंत्याऽऽहाऽपरा ननु ॥ कृष्णोऽहं पश्यत गतिं ललितामिति तन्मनाः ॥ १९ ॥ मा भैष्ट वातवर्षाभ्यां तत्त्राणं विहितं मया ॥ इत्युक्त्वैकेन हस्तेन यतंत्युन्निदधेंऽबरम् ॥ २० ॥ आरुह्यैका पदाक्रम्य शिरस्याऽऽहापरां नृप ॥ दुष्टाहे गच्छ जातोऽहं खलानां ननु दंडधृक् ॥ २१ ॥ तत्रैकोवाच हे गोपा दावाग्निं पश्यतोल्बणम् ॥ चक्षूंष्याऽऽश्वपिदध्वं वो विधास्ये क्षेममंजसा ॥ २२ ॥ बद्धाऽन्यया स्रजा काचित्तन्वी तत्र उलूखले ॥ भीता सुदृक्पिधायास्यं भेजे भीतिविडंबनम् ॥ २३ ॥

कृष्णस्यार्भं बाल्यं भावयति या तामन्यां जहार ॥ १६ ॥ १७ ॥ दूरगा दूरे वर्तमाना गाः यद्वद्यथा कृष्णस्तथाऽऽहूय तं कृष्णमनुवर्ततीमनुवर्तमानाम् । अनुकुर्वतीमिति वा पाठः ॥ १८ ॥ १९ ॥ यतंती प्रयत्नं कुर्वती अंबरमुत्तरीयं वस्त्रमुन्निदधे ऊर्ध्वं धृतवती ॥ २० ॥ २१ ॥ अपिदध्वं निमीलयत ॥ २२ ॥ सुदृक् सुनयनमास्यं तद्वरणमनुकृत्य दर्शितवतीत्यर्थः । घोषाः किंकिण्यस्तेषां निस्वनैः कृत्वा सहिता सेविता वा, तच्च साक्षादेव तासामपि पादेषु नूपुरसद्भावात् । एतच्च 'घोषप्रघोषरुचिरम्' इत्याद्युक्तरिंगणलीलानुकरणम् ॥ १६ ॥ कृष्णरामाविवाचरत इति कृष्णरामायेते, ततो भावे क्ते इटि च कृष्णरामायिते । तत्र तासु । अनु पश्चात् । एका कृष्णायंती ॥ * ॥ ० ॥ अत्र **तोषिणी**—द्वे चिक्रीडतुः । काश्चित्तत्र गोपायंत्यो गोपबालायंत्यश्चि क्रीडुः । तदानीं बालकैरेव वत्सचारणात्तस्यामेव सभायां लीलांतरमाह—वत्सेति । अन्या कृष्णायमाना । तत्र तस्मिन्सति । एका च कृष्णायमाना हंति हननानुकरणमनुकरोति । अहन्नित्यर्थः ॥ १७ ॥ अनुवर्तनं त्वनुकरणं विनापि स्यादत आह—अनुकुर्वतीमिति वेति ॥ * ॥ दूरगा दूरवार्तिनीर्गाः यद्वत्कृष्ण आह्वयति तद्वदेवाहूय तं कृष्णमनुवर्त्तन्तीम् । 'अनुकुर्वतीम्' इति च पाठः ॥ अत्र **तोषिणी**—तदेवमनुकरण मात्रमुक्तमधुना प्रलंबवधप्राक्तनग्रीष्मकृतविचित्रलीलानुकरणे शृंगारालंबनरूपतदीयकैशोराविर्भावात्पुनरपि प्रियानुकरणरूपं लीलाख्यमनुभावमाह—आहूयेति द्वाभ्याम् । दूरगा इति समासान्तविधेरनित्यत्वात् । दूरगवीरित्यर्थः । अन्याः गोपमन्याः ॥ १८ ॥ ललिताम् अतीवरम्याम् । तन्मनाः कृष्णचेता आहेति ॥ * ॥ ततश्चान्या अपि लीला अनुचिकीर्षितीनामपि तासां तद्ध्यानाधिक्याऽऽवेशेनोन्मादसंचारिप्राबल्येन चाऽऽत्मानुसंधानापगमा त्कृष्णतादात्म्यमाह—चतुर्भिः । कस्याश्चिदिति—अहं सुबलस्कंधार्पितभुजः कृष्णस्तस्मान्मम ललिताम् अतिरमणीयाम् । गतिम् नृत्यलीलाम् ॥ ० ॥ १९ ॥ ततो वातवर्षातत्त्राणं तत्त्राणमिति ॥ * ॥ यतंती प्रयत्नं कुर्वती । अंबरम् उत्तरीयवस्त्रम् । उन्निदधे ऊर्ध्वं धृतवती ॥ अत्र **तोषिणी**—वातवर्षाभ्यामिति । तत्तल्लीलावेशेन साक्षाद्वातादिस्फूर्तेः । एवमग्रे 'दावाग्निं पश्यत' इत्यपि । अत्र त्रासातिरेकेण शृंगाररससंकोचान्न लीलोदाहरणम् ॥ ॥ २० ॥ खलानाम् उच्छृंखलानाम् ॥ * ॥ दुष्टाहे कालिय ॥ अत्र **तोषिणी**—पदाक्रमणपूर्वकमारुह्येत्यर्थः । ननु निश्चये, संबोधने वा । 'नृप' इति पाठे आश्चर्येण संबोधनम् । दुष्टाहे इति कालियस्य न्यक्कारेण संबोधनम् । गच्छ इतो निस्सर अन्यथा दंडं करिष्य इत्याह—जात इति । ननु निश्चितं तल्लीलायामेतद्वाक्याभावेप्यनुकरणम्, तत्र तस्य वाक्यस्य शेषेण तात्पर्येण वा ॥ २१ ॥ तत्र तासु । वः युष्माकम् ॥ * ॥ ० ॥ अत्र **तोषिणी**—तत्र[1] चेति चकारेणान्वयः । कालियदमनलीलानुकरणे त्वित्यर्थः । 'तत्रैकोवाच हे गोपाः' इति च । बहुत्र रेशब्दस्त्वहृद्यत्वान्नाद्रियते । एवं कृष्णेनापि तत्र चक्षुःपिधानमादिष्टमिति गम्यते । दावाग्निं पश्यतोल्बणमिति तु तत्र हेतुवाक्यम् । उल्बणं चक्षुस्तेजोहरमित्यर्थः । तच्च निमीलनार्थव्याजादेव । एवं मुंजाटवीसंबंद्धापि संबंधनीयमिति पृथग्न वर्णितमिति ज्ञेयम् । अपिदध्वमिति "दधस्तथोश्च" इति स्मरणा दभ्यासस्य भष्भावप्राप्तेरपिधध्वमिति वक्तव्ये दध्वमिति पाठ आर्षो लेखकप्रमादजो वा । अंजसा अनायासेनैव ॥ २२ ॥ तत्र तासां मध्ये । संभवत्वात्त्रिया अपि विशेषणमित्याह—वराक्षीति ॥ * ॥ अतश्चाकस्मादु

[1] तत्र चोवाचेति पाठाभिप्रायेणैतत् ।

**एवं कृष्णं पृच्छमाना वृंदावनलतास्तरून् ॥ व्यचक्षत वनोद्देशे पदानि परमात्मनः ॥ २४ ॥**
**पदानि व्यक्तमेतानि नंदसूनोर्महात्मनः ॥ लक्ष्यंत हि ध्वजांभोजवज्रांकुशयवादिभिः ॥ २५ ॥**

पिधाय सुदृक् वराक्षीति वा । भीतिविडंबनं भयानुकरणम्॥ २३ ॥एवं पुनरपि वृंदावने लतास्तरूंश्च कृष्णं पच्छंत्यो वनोद्देशे वनप्रदेशे व्यचक्षतापश्यन् ॥ २४ ॥ २५ ॥

न्मादस्य प्राबल्ये शान्ते सति कृष्णतादात्म्यस्यापि शैथिल्यमभूत्, ततश्चाहं गोपीत्यात्मानमनुसंदधानां कांचिद्भांडस्फोटनहैयंगवमोषणलीलानुकरणोद्यतामालक्ष्य योगमायैव श्रीयशोदायमाना तदुचितं चकार—बद्धेति । हैयंगव मुष्णन्तं बध्नामीत्युक्त्वाऽन्यया काचित्स्रजा बद्धा सुदृक् आस्यमाच्छाद्य भीतिविडंबनं भयानुकरणं भेजे इत्यन्वयः ॥ अत्र **तोषिणी**—अन्यया पूर्वमुक्त्वैव व्रजेश्वरीचेष्टामात्रं कुर्वत्या । तन्वी विरहार्त्या सद्य एव कार्श्यं प्राप्ता । तत्र अनुकरणे । उलूखल इति । उलूखलानुकारिण्यां कस्यांश्चिदित्यर्थः । सुदृगिति—दृग्भ्यामपि चकितविलोकनादिना भयमनुचकारेत्यर्थः । मुखं पिधाय, हस्ताभ्यामिति शेषः । एष बालकभयस्वभावः । भीतिः कृष्णस्य भयकार्यं कंपादि, किंचिद्रोदनवाक्यादि च, तदनुकरणं भेजे । एवमन्यासामपि लीलानुकरणं यथार्हमूह्यम् ॥ २३ ॥ वनोद्देशे वनप्रदेशे ॥ * ॥ एवम् अनेन प्रकारेण । कृष्णं पृच्छमाना इति । अयमत्रप्रकारः—वैप्रलंभकस्योन्मादस्य प्रौढिमनि आत्मविस्मृतौ सत्यां स्वप्रेष्ठतादात्म्यमेव स्यात् । यदुक्तम्—'प्रियाः प्रियस्य प्रतिरूढमूर्तयः' इति, 'असावहं तु' इति, 'कृष्णोऽहं पश्यत गतिम्' इत्यादि तस्यैव मध्यत्वे यत्किंचिदात्मानुसंधानवत्त्वे सत्यनुकरणम् । यदुक्तं प्रह्लादचरिते—"क्वचित्तद्भावनायुक्तस्तन्मयोऽनुचकार ह" इति । अत्राप्युक्तम्—'कृष्णायंत्यपिबत्स्तनम्' इत्यादि । तस्यैव मांद्ये आत्मानुसंधानस्य प्रायिकत्वेऽचेतनेष्वपि तरुगुल्मादिषु प्रश्नः ॥०॥२४॥ व्यक्तम् स्फुटम् । परमात्मनः श्रीकृष्णस्य वैतानीति कथं ज्ञातं, तत्राह—ध्वजे तावत्पर्यंतं श्रीकृष्णेनैवांके निधाय तस्या नयनात् ॥*॥ तदेवं त्रिविधमुन्मादं निर्वर्ण्य तदंतरैवाकस्मात्कृष्णस्य पदचिह्नान्यालक्ष्य सानंदवितर्कमाहुः—पदानीति । ध्वजादीनां धारणस्थानं प्रयोजनं चोक्तं स्कांदे—"दाक्षिणस्य पदांगुष्ठमूले चक्रं बिभर्त्यजः ॥ तत्र भक्तजनस्यारिषड्वर्गच्छेदनाय सः ॥ ( १ ) ॥ मध्यमांगुलिमूले च धत्ते कमलमच्युतः ॥ ध्यातृचित्तद्विरेफाणां लोभनायातिशोभनम् ॥ ( २ ) ॥ पद्मस्याधो ध्वजं धत्ते सर्वानर्थजयध्वजम् ॥ कनिष्ठामूलतो वज्रं भक्तपापाद्रिभेदनम् ॥ ( ३ ) ॥ पार्ष्णिमध्येंऽकुशं भक्तचित्तेभवशकारिणम् ॥ भोगसंपन्मयं धत्ते यवमंगुष्ठपर्वणि ॥( ४ )॥ वज्रं वै दक्षिणे पार्श्वे अंकुशो वै तदग्रतः ॥" इति तत्रैव स्कांदे कृष्णमधिकृत्योक्तत्वात्कनिष्ठामूलेंऽकुशस्तत्तले वज्रमित्याहुः संप्रदायविदः । पार्ष्णावंकुशस्तु नारायणादेर्ज्ञेयः । तदेवं चक्रध्वजकमलवज्रांकुशयवा इति षट् ६ चिह्नानि कृष्णस्य दक्षिणे चरणे । अन्यान्यपि चिह्नानि वैष्णवतोषिणीदृष्ट्या लिख्यन्ते—अंगुष्ठतर्जनीसंधिमारभ्य यावदर्द्धचरणमूर्द्धरेखा ७, चक्रस्य तले छत्रम् ८, अर्धचरणतले चतुर्दिगवस्थितं स्वस्तिकचतुष्टयम् ९, स्वस्तिकचतुःसंधिषु जंबूफलचतुष्टयम् १०, स्वस्तिकमध्येऽष्टकोणमित्येकादश ११ चिह्नानि । "तथा वामपदांगुष्ठमूलतस्तन्मुखं दरम् । सर्वविद्याप्रकाशाय दधाति भगवानसौ ॥" इति १, मध्यमामूलेऽम्बरम् अंतर्बाह्यमंडलद्वयात्मकम् २, तदधः कार्मुकं विगतज्यम् ३, तदधो गोष्पदम् ४, तत्तले त्रिकोणं तदभितः कलशानां चतुष्टयम्, क्वचित्त्रितयं च दृष्टम् ५, त्रिकोणतलेऽर्द्धचंद्रः ६, अग्रद्वयस्पृष्टत्रिकोणकोणद्वयम् ७, तदधो मत्स्यः ८, इत्यष्टौ मिलित्वोनविंशतिः १९ ॥ अत्र **तोषिणी**—एवं तत्तल्लीलानां पुनःपुनर्गानानुकरणयोः प्रकारेण तत्प्रकारविशिष्टं प्रश्नं कुर्वाणा इत्यर्थः । परमात्मनः सर्वेषां मूलस्वरूपस्य पदानि वनोद्देशे व्यचक्षतेत्याश्चर्यम् । यस्य मुनयो वेदेऽपि यथाकथंचिदेव सूचकतया शब्दरूपाण्येव पदानि तर्कयन्तिमात्रं तस्यैव ताः स्वविहारवनोद्देशे पदानि व्यचक्षतेति अहो एतन्मात्रांशेऽपि वयं सर्वेऽपि मुनयो न तासां साम्यं प्राप्नुमः । किं पुनस्तादृशप्रेमविशेषासादितनित्यतदीयप्रेयसीत्वाद्यंश इति भावः । 'अन्तर्हिते' इत्यादिप्रकरणे तेषां व्याख्यायां प्रथमं तापत्रयम्, द्वितीयं गानसहितान्वेषणम्, तृतीयं पूतनावधाद्यनुकरणम्, चतुर्थं पुनरप्यन्वेषणम्, पञ्चमं पददर्शनमिति क्रमः । स्वव्याख्यायां प्रथमं तापमात्रम्, द्वितीयं 'बाहुप्रसार—' इत्याद्यनुकरणम्, तृतीयं गानसहितान्वेषणं; तत्रैव मध्येमध्ये पूतनाद्यनुकरणम्, चतुर्थं पददर्शनमिति विवेचयनीयम् । ततश्चान्योन्यमाहुः—पदानीति । पदचिह्नानि, व्यक्तं स्फुटमेवैतानि, नंदसूनोः पदानि लक्ष्यन्ते ध्वजादिभिः । हि प्रसिद्धौ । ध्वजादीनि तत्र प्रसिद्धान्येवेत्यर्थः । ध्वजादियोगे हेतुः—महात्म

**तैस्तैः पदैस्तत्पदवीमन्विच्छंत्योऽग्रतोऽबलाः ॥ वध्वाः पदः सुपृक्तान विलोक्याताः समब्रुवन् ॥ २६ ॥**

**सुपृक्तानि संमिश्राणि ॥ २६ ॥**

नः । परमपुरुषोत्तमस्येत्यर्थः । आदिपदादन्यान्यपि । तत्र पाद्मे ब्रह्मनारदसंवादे श्रीकृष्णमधिकृत्य "षोडशैव तु चिह्नानि मया दृष्टानि तत्पदे । दक्षिणे चाष्ट चिह्नानि इतरे सप्त एव च ॥ ध्वजा पद्मं तथा वज्रमंकुशो यव एवच । स्वस्तिकश्चोर्द्ध्वरेखाँ च अष्टकोणं तथैव च ॥ सप्तान्यानि प्रवक्ष्यामि सांप्रतं वैष्णवोत्तम । इन्द्रचापं त्रिकोणंञ्च कलशञ्चार्द्धचन्द्रकम् ॥ अंबरं मत्स्यचिह्नञ्च गोष्पदं सप्तमं स्मृतम् । षोडशञ्च तथा चिह्नं शृणु देवर्षिसत्तम ॥ जम्बूफलसमाकारं दृश्यते यत्र कुत्रचित् ।" इति । क्रमदीपिकायाम्—"मत्स्यांकुशारिदरकेतुयवाब्जवज्रैः" इति । श्रीगोपालतापन्याम्—"शंखध्वजातपत्रैश्च चिह्नितं चरणद्वयम्" इति । आदिवाराहे मथुरामाहात्म्ये—"यत्र कृष्णेन संकीर्णं क्रीडितञ्च यथासुखम् । चक्रांकितपदा तेन स्थाने ब्रह्ममये शुभे ॥" इति । एवं चक्रशंखातपत्रैरधिकैरूनविंशतिचिह्नानि । स्कांदे तु यच्चक्रादिषट्कमात्रमुक्तं तत्तु श्रीविष्ण्वादावेव । यत उक्तं षोडशचिह्नप्रसंग एव पाद्मे—"अंकान्येतानि भो विद्वन्दृश्यंते तु यदा कदा । कृष्णाख्यं तु परं ब्रह्म भुवि जातं न संशयः ॥ द्वयं वाथ त्रयं वाथ चत्वारि पंच एव च । दृश्यंते वैष्णवश्रेष्ठ अवतारे कथंचन ॥" इति । तेषां स्थाननियमो यथा तत्रैव—"मध्ये ध्वजा तु विज्ञेया पद्मं त्र्यंगुलमानतः । वज्रं वै दक्षिणे पार्श्वे अंकुशो वै तदग्रतः । यवोऽप्यंगुष्ठमूले स्यात्स्वस्तिकं यत्र कुत्रचित् ॥ आदिं चरणमारभ्य यावद्वै मध्यमा स्थिता । तावद्वै चोर्द्ध्वरेखा च कथिता पाद्मसंज्ञके ॥ चतुरंगुलमानेन त्वंगुलीनां समीपतः । इन्द्रचापं ततो विद्यादन्यत्र न भवेत्क्वचित् ॥ त्रिकोणं मध्यनिर्दिष्टं कलशो यत्र कुत्रचित् । अष्टांगुलप्रमाणेन तद्भवेदर्धचंद्रकम् ॥ बिन्दुर्वै मत्स्यचिह्नञ्च आद्यंते वै निरूपितम् । गोष्पदं द्विखुरं ज्ञेयमाद्याद्यंगुलिमानतः॥" इति । एतल्लक्षणं तत्रैव—"पद्माऽऽकारा ध्वजा प्रोक्ता प्रान्ते त्रैकोणिकान्यथा" इत्यादि । व्याख्यायते च त्र्यंगुलमानतः मध्यमांगुल्यग्रात्तावन्मानं परित्यज्येत्यर्थः । वक्ष्यमाणयुक्तेः, 'पद्मस्याधो ध्वजं धत्ते' इति स्कांदसंवादाच्च । यत्र कुत्रचिदिति यथाशोभं बहुत्रेत्यर्थः । आदिं चरणमंगुष्ठतर्जन्यंतरालम् । यावन्मध्यं मध्यदेशं तावद्व्याप्य स्थिता । तत्तस्याष्टकोणस्य मानमष्टांगुलैर्ज्ञेयम् । अग्रतोष्टांगुलीः परित्यज्येत्यर्थः । स्वरूपमाने स्थानासमावेशः । स च चरणस्य दैर्घ्ये चतुर्दशांगुलप्रमाणत्वं, विस्तारे षडंगुलप्रमाणत्वमिति हयशीर्षमात्स्यादिप्रसिद्धत्वात् । एतदनुसारेण त्र्यंगुलमानत इत्यादि व्याख्यातं, व्याख्यास्यते चान्यत्र । इंद्रचापं निर्गुणत्वात्तादृशवर्णमयत्वाच्च । चतुरंगुलमानेनेति तावन्मानपरित्यागत उक्तम् । मध्यमांगुल्यधःस्थितबिंदोरधः स्थितत्वात् । तथा दैर्घ्यतोऽपि ज्ञेयम् । शोभोपयोग्यत्वाद्बिंदुमध्यनिर्दिष्टं चरणमध्ये स्थितम् । अष्टांगुलप्रमाणेन त्रिकोणस्याध इत्यर्थः, तत्कोटिद्वयस्य किंचित्त्रिकोणग्रासित्वात् । बिंदुरंबरपर्यायः । अयं च बाह्याभ्यंतरमंडलद्वयात्मकः । 'द्विरेखासु समन्वितम्' इति तत्रैव तल्लक्षणोक्तेः सर्वाचिह्नानामुपरि बिंदुः, मत्स्यः सर्वचिह्नानामधः, द्विखुरं द्विशफमाद्याद्बिंदोर्द्व्यंगुलमानत इति इन्द्रचापादध इत्यर्थः । पद्माऽऽकारा वर्त्मतुल्या । प्रान्ते त्रैकोणिकं पताकास्थानीयं यस्यां सा । सप्तम्या अलुक् । एतच्च त्रैकोणिकं दक्षिणत एव ज्ञेयं वामत उर्द्ध्वरेखोपहतेः । षोडशं तु चिह्नं पादद्वय एव ज्ञेयम् अनियमेनोक्तत्वात् । जंबूफलतया निर्देशेन तद्वर्णतदाकारमयमेव तच्चिह्नं न तु रेखाऽऽकारम् । चक्रशंखौ तु "दक्षिणस्य पदांगुष्ठमूले चक्रं बिभर्त्यजः । तथा वामपदांगुष्ठमूलतस्तन्मुखं दरम् ॥" इति स्कांदाद्यनुसारेणैव ज्ञेयौ । छत्रं तु प्राधान्याद्दक्षिणचरण एव । तत्रापि चिह्नान्तरशून्यप्रदेशत्वाच्चक्राध एव ज्ञेयम् । तासां तद्दर्शनप्रकारश्चायं श्रीविष्णुपुराणे—"विलोक्यैका भुवं प्राह गोपी गोपवरांगना । पुलकाचितसर्वांगी विकाशिनयनोत्पला ॥ ध्वजवज्रांकुशाब्जांकरेखाकाराणि पश्यत । पदान्येतानि कृष्णस्य लीलाललितगामिनः ॥" इति ॥ २९ ॥ सर्वासां वाक्यम्—तैस्तैरिति । ध्वजाद्युपेतैरित्यर्थः । तस्य कृष्णस्य । पदवीं मार्गम् । अन्विच्छन्त्योऽन्वेषयंत्यः । वध्वा नार्याः । पदैः चरणनिक्षेपैः । ईर्ष्ययार्ताः ॥ * ॥ सुपृक्तानि मिश्रितानि ॥ अत्र **तोषिणी**—तैस्तैः ध्वजादिभिश्शोभितैः, वीप्सा मध्येमध्ये दूर्वादिमय्यादिभूमौ विच्छिन्नत्वात्स्थानबाहुल्यस्य विवक्षया । अग्रत इति—तावत्पर्यंतं कृष्णेनैवांके निधाय तस्या नयनात् । अबलाः विहारान्वेष

---

१ अराणि सन्त्यस्मिन्नित्यरि चक्रम् ।

**कस्याः पदानि चैतानि याताया नन्दसूनुना ॥ अंसन्यस्तप्रकोष्ठायाः करेणोः करिणा यथा ॥ २७ ॥ अनयाऽऽराधितो नूनं भगवान्हरिरीश्वरः ॥ यन्नो विहाय गोविंदः प्रीतो यामनयद्रहः ॥ २८ ॥ धन्या अहो अमी आल्यो गोविंदांघ्र्यब्जरेणवः ॥ यान्ब्रह्मेशो रमा देवी दधुर्मूर्ध्न्यघनुत्तये ॥ २९॥**

तेनांसे न्यस्तः प्रकोष्ठो यस्याः । करेणोर्हस्तिन्याः ॥ २७ ॥ रह एकांतस्थानम् ॥ २८ ॥ हे आल्यः सख्यः अहो धन्या अतिपुण्या गोविंदांघ्र्यब्जरेणाभ्यां बलहीना अपि तस्य कृष्णस्य पदवीं वर्त्मान्विच्छन्त्यो मृगयमाणाः । वध्वाः श्रीराधायास्तस्या एव परमसौभाग्यवतीत्वेन स्थापयिष्यमाणत्वात् ॥ २६ ॥ कस्याः सुभाग्यायाः । प्रकोष्ठः करतलमूलभागः ॥ * ॥ अंसन्यस्तेति । यस्याः स्कंधे नंदसूनुना वामप्रकोष्ठो न्यस्त इत्यर्थः ॥ अत्र **तोषिणी**–तत्र सर्वा एवाहुः–कस्या इति । अत्र स्त्रीत्वज्ञानं तत्पदानां लघुत्वात्, निम्नत्वतदुचितांगलक्षितत्वादिना चेति ज्ञेयम् । नंदसूनुनेति पूर्ववत् । एतानि कस्याः पदानि, परिचीयन्तामिति शेषः । श्रीभगवता स्वांसे तत्प्रकोष्ठन्यसनं च यद्यपि रसविशेषेणैव तथापि रात्रौ स्खलन्त्यास्तस्याः सुखगमनार्थं बलाद्दूरे नयनार्थं च भवति । अनेन तस्यामधिकप्रीतिः सूचिता । तामेव दृष्टान्तेनाहुः–करेणोरिति । तयोरपि काममदेन प्रील्या तथैव गमनात् ॥ २७॥ पदचिह्नैस्तां श्रीवृषभानुनंदिनीं ज्ञात्वा तस्याः सुहृदां वाक्यम् । यद्वा–अं वासुदेवं नयति चोरयतीत्यना । औणादिको डः । तया अस्माकं सर्वस्वं हरंत्या यत् यतः हरिरपि सर्वहरणोपीश्वरोऽपि राधितो वशीकृतः । गोविन्द इति भक्तिवात्सल्यमाह । भक्त्यृणापकरणाय गोचारणमप्यंगीकृतवान्यस्तस्यान्यदपि नाऽकार्यं किंचिदिति भावः ॥ * ॥ पदचिह्नैरेव तां वृषभानुनंदिनीं परिचित्यांतराश्वस्ता बहुविधगोपीजनसंघट्टे तत्र बहिरपरिचयमिवाभिनयंत्यस्तस्याः सुहृदस्तन्नामनिरुक्तिद्वारा तस्याः सौभाग्यं सहर्षमाहुः–अनयैव नूनं निश्चयेन हरिर्भक्तजनदुःखहर्ता भगवान्नारायग ईश्वरो भक्ताभीष्टदानसमर्थ आराधितः, न त्वस्माभिर्यतो नो विहायेत्यादि । ततश्च राधयत्याराधयतीति राधा इति नामव्यक्तिर्बभूव । " मुनिः प्रयत्नेन तदीयनामाप्यधात्परं किन्तु तदास्यचंद्रात् । स्वयं निरेति स्म कृपानु तस्याः सौभाग्यमेर्ष्या इव वादनार्थम् ॥ " यद्वा–हे अनयाः अतिमहीयस्या तया सह वृथैव साम्याहंकारादनीतिमत्यः, नूनं हरिरयं राधितः राधामितः प्राप्तः शकंध्वादित्वात्पररूपम् । भगवान्सुंदरः कामातुरः स्वकीर्तिप्रख्यापको वा " भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु " इत्यमरः । ईश्वरः युष्मान्वंचयितुं समर्थः । यदि नोऽस्मान् सुंदरीर्विहाय गोविंदो गास्तस्या इंद्रियाणि रमणार्थं विन्दति वेदयति वा सः । तस्याश्च पदचिह्नान्युज्ज्वलनीलमणिटीकां दृष्ट्वा लिख्यंते–वामचरणेऽङ्गुष्ठमूले यवः १, तत्तले चक्रम् २, तत्तले छत्रम् ३, तत्तले वलयम् ४, अंगुष्ठतर्जनीसंधिमारभ्य यावदर्द्धचरणमूर्द्ध्वरेखा ५, मध्यमातले कमलम् ६, तत्तले ध्वजं सपताकम् ७, तत्तले वल्ली ८, पुष्पञ्च ९, कनिष्ठातलेंकुशः १०, पार्ष्णावर्द्धचंद्रः ११, इत्येकादश । दक्षिणचरणेंगुष्ठमूले शंखः १, तत्तले गदा २, कनिष्ठातले वेदिः ३, तत्तले कुंडलम् ४, तत्तले शक्तिः ५, तर्जन्याद्यंगुलितले पर्वतः ६, तत्तले रथः ७, पार्ष्णौ मत्स्यः ८, इत्यष्टौ मिलित्वैकोनविंशतिः ॥ अत्र **तोषिणी**–तत्र सखीनामंतरंगत्वेन गांभीर्यात्प्रतिपक्षाणामापाततो दुःखव्याप्तत्वात्तटस्थानाञ्च तदनभिनिवेशात्प्रथमं तस्याः सुहृद एवाहुः–अनयेति । नूनं वितर्के, निश्चये वा । हरिः सर्वदुःखहर्ता भगवाञ्छ्रीनारायण ईश्वरो भक्तेष्टप्रदानसमर्थः स्वतंत्रो वाऽनयैव आराधितः आराध्य वशीकृतो न त्वस्माभिः । अनेन राधयंत्याराधयतीति राधेति नामकारणत्वं च दर्शितम् । तत्र हेतुः–गोविन्दः नोऽस्मान्विशेषेण हित्वा दूरतो निशि वनांतस्थत्वा तत्रापि रहः अस्मदगम्य एकान्तस्थाने यामनयत् । यद्वा–सवा अप्यस्मान् विहाय यन् गच्छन्नपि यामेव रहोऽनयदित्यर्थः ॥ २८ ॥ 'आलिः सत्रे सखीपंक्त्योः' इति यादवः । धन्या निरपेक्षाः स्वसंगि पुरुषाणां साधनांतरं विनैव पावनसमर्थाः "निरपेक्षो गुणैः पूर्णो धन्य इत्युच्यते बुधैः" इति यादवः । तत्र धन्यत्वे । इति भाव इति–मूर्ध्नि धृतकृष्णपादरेणुना हतसर्वपापानां शुद्धांतःकरणानां कृष्णप्राप्तिर्न दुर्घटेति तात्पर्यम् । इदं तटस्थानां वाक्यम् ॥ * ॥ तटस्थपक्षास्तु तत्रानवदधानाः कृष्णपदान्येवालक्ष्याहुः–धन्या इति । ब्रह्माद्या अघनुत्तये विच्छेददुःखापनयनाय यान्मूर्ध्ना दधुरित्यपराह्णे गोष्ठागमनसमये कृष्णसहचरबालकैः प्रत्यहं ते स्वर्गादवरुह्य कृष्णपादधूलिग्राहिणो दृश्यन्त एव, यद्वक्ष्यते–'वंद्यमानचरणः पथि वृद्धैः' इति, 'वंदिनस्तमुपदेवगणा ये' इति च । वयं तु लज्जयैव यद्धर्तुं न शक्नुमस्तेनैवैतावदघं प्राप्नुम इति भावः॥ अत्र **तोषिणी**–

तस्या अमूनि नः क्षोभं कुर्वंत्युच्चैः पदानि यत् ॥ यैकापहृत्य गोपीनां रहो भुंक्तेऽच्युताधरम् ॥ ३० ॥ न लक्ष्यंते पदान्यत्र तस्या नूनं तृणांकुरैः ॥ खिद्यत्सुजातांघ्रितलामुन्निन्ये प्रेयसीं प्रियः ॥ ३१ ॥ ( इमान्यधिकमग्नानि पदानि वहतो वधूम् ॥ गोप्यः पश्यत कृष्णस्य भाराक्रांतानि कामिनः ॥ १ ॥ अत्रावरोपिता कांता पुष्पहेतोर्महात्मना ॥ )

णवः । तत्र हेतुः । यानिति । अस्माभिरप्येतद्रेणवभिषेकेण तथैव कृष्णः प्राप्तुं शक्य इति भावः ॥ २९ ॥ अन्या आहुः । तस्या इति । गोपीनां सर्वस्वम् । अयं भावः । भवेदेवं यदि तस्याः पदानि संपृक्तानि न भवेयुस्तानि तु नो दुःखं कर्वंतीति ॥ ३० ॥ तदसंपृक्तान्केवलं कृष्णपादरेणूनेव विचिन्वत्यस्तान्दृष्ट्वा पुनरत्यंतं समतप्यंस्तदाह श्लोकत्रयेण । न लक्ष्यंत इति । खिद्यती सुजाते सुकुमारे अंघ्रितले यस्यास्तामुन्निन्ये स्कंधमारोपितवान् ॥ ३१ ॥

ततस्तटस्था आहुः—धन्या इति । अमी इमे । आल्य इति संबोधनं समदुःखत्वेन प्रायः सर्वासामेकभावात् । सर्वासामेव युगपत्संबोधनं चमत्कारातिशयात् । दधुरिति निर्देशो निश्चयज्ञापनार्थः । ब्रह्मादीनां यथोत्तरं श्रैष्ठ्यमूह्यम् । रमायास्तु विशेषणं तथापि श्रैष्ठ्यबोधनार्थम् । मूर्ध्नेति भक्तिभरं बोधयति । अघम् अपराधो विरहादिदुःखं वा । धन्यत्वे हेतुः—गोविंदांघ्र्यब्जेति । “ सुपां सुलुक्—” इति षष्ठीलुक्छांदसः । तत्संबंधेन धन्या इत्यर्थः । अत एव यानिति । अतो रेणवोऽपि तत्संबंधलाभेन धन्याः । वयं तदभावात्ततोपि तुच्छा इति भावः । इयं च तत्पादरेणूनां माहात्म्यभावना प्रेमकृतैव, प्रेमा ह्यसदपि माहात्म्यं स्फोरयति किमुत सत् । ततस्तदतिशयस्तु तदतिशयमेव, यथादिभरतचरिते—“किं वा अरे आचरितं तपस्तपस्विन्या यदियमवनिः” इत्यादिगद्ये । तेन स्वमृगपदस्पर्शेन पृथिव्या भाग्यं वर्णितम् ॥ २९ ॥ अन्याः प्रतिपक्षाः । ननु कृष्णरेणुं धृतवतीनां कुतः शोकस्तत्राहुः—तस्या इति । अयं भाव इति—भवेदेवम् शोकाभावो नापि स्यात्, सपत्न्याः सुखं दुस्सहमित्यथः । अच्युतं सततस्यंदमानामृतमधरमिति तस्याः संदश्याधरपातं संस्मृत्य नः क्षोभ इति ॥ * ॥ प्रतिपक्षसख्य आहुः—तस्या इति । उच्चैः कुर्वन्ति जनयन्ति । गोपीनां सर्वासामेवास्माकं भोग्याच्युताधरमेकैव रहश्चोरयित्वा भुंक्ते, तयैव कामिन्या केनापि कर्मणैनं वशीकृत्यास्मान्प्रेमवतीस्त्या जयित्वा कृष्ण एतावद्दूरमानीत इति भावः ॥ अत्र **तोषिणी**—प्रतिपक्षसख्य आहुः—तस्या इति । उच्चैः अधिकम् । क्षोभम् अतिदुःखम् । अपहृत्येति एकाकित्वेन रहसि भोगात् । यद्वा—चौर्येण तया मायाविन्या नीतत्वादेव सोऽस्मान्विहायाऽत्रागतः । अन्यथा कथमागच्छेदिति भावः । गोपीनां सामान्यतः सर्वासामस्माकमेव । ‘धनम्’ इति पाठः क्वचित्, स च प्रायः सर्वस्वमिति तेषां व्याख्यामभीक्ष्य । ‘ रहः ’ इति पाठस्तु सर्वत्र । अच्युतस्य तां त्यक्त्वाऽन्यत्र काप्यगच्छतोऽधरमिति ॥ ३० ॥ तदसंपृक्तान् तस्याः पादैरमिश्रितान् । तत् तापमाह । उद्धृत्य नयनेन भूसंबंधाभावात्पदादर्शनमपि । शोकस्त्वेतादृशप्रेमा नास्मास्विति हेतोः ॥ * ॥ भो मत्सरमहारोगग्रस्ताः मा खिद्यत नात्र तस्याः पदानि संतीति तस्याः प्रियसख्य आहुः—नेति । ताः प्रत्येव सहर्षापांगमन्याः सख्यो नीचैः सवितर्कमाहुः—नूनमिति । उन्निन्ये भुजाभ्यामुद्धृत्य स्ववक्ष आरोहयामासेत्यर्थः । यतः प्रेयसीम् अतिप्रीतिविषयत्वात्तच्चरणखेदस्यासह्यत्वात् । इह खलु तत्सखीनामुभयविधं सुखं तस्यास्तादृक्सौभाग्यदर्शनोत्थम्, विपक्षाणां तादृशदुःखदर्शनोत्थं चेति ज्ञेयम् ॥ अत्र **तोषिणी**—न लक्ष्यंत इति । मत्सरोक्तित्वात् स्कंधमारोपितवानिति तैर्व्याख्यातम् । अत्र तान्दृष्ट्वेति तदसंपृक्तान् दृष्ट्वेत्यर्थः । यद्वा—सख्योऽप्याहुः—सखीवाक्यत्वादेव खिद्यदित्यादि । प्रेयसीम् अतिशयेन तत्प्रीतिविषयामित्यर्थः । अत उन्निन्ये हस्ताभ्यामंके निधाय निन्य इत्यर्थः ॥ ३१ ॥ × (॥ ० ॥ * ॥ भो असमीक्ष्य भाषिण्यः मा खिद्यतेति किं ब्रूध्वे तत्पदानां दर्शनादप्यदर्शनमस्मत्प्राणानामदर्शनं संभावयतीति द्योतयंत्यः प्रतिपक्षा आहुः—इमानीति । वधूमित्यनुपनी

× इमानीत्यादिसार्द्धपद्यस्य बहुपुस्तकेष्वनुपलम्भाच्छ्रीधरस्वामिनाप्यधृतत्वान्मूले प्रक्षिप्तरूपेण निवेशः । तस्य च सतोषिणीकाविश्वनाथव्याख्यानमत्रैत ( ) चिह्नमध्ये बोध्यम् ।

अत्र प्रसूनावचयः प्रियार्थे प्रेयसा कृतः ॥ प्रपदाक्रमणे एते पश्यताऽसकले पदे ॥ ३२ ॥ केशप्रसाधनं त्वत्र कामिन्याः कामिना कृतम् ॥ तानि चूडयता कांतामुपविष्टमिह ध्रुवम् ॥ ३३ ॥ रेमे तया चात्मरत आत्मारामोप्यखंडितः ॥ कामिनां दर्शयन्दैन्यं स्त्रीणां चैव दुरात्मताम् ॥ ३४ ॥

प्रपदाभ्यामाक्रमणं क्षोणीमर्दनं ययोः। अत एवासकले पदे पश्यतेति॥ ३२॥ तस्याः कृष्णजान्वंतरुपविष्टायाश्चिह्नं दृष्ट्वाऽऽहुः। केशप्रसाधनमिति। कांतामधिकृत्य। तानि प्रसूनानि चूडयता चडानुकारणे बध्नता तेनेह ध्रुवमुपविष्टम्॥ ३३॥ रेमे इत्यादिः शुकोक्तिः। आत्मरतः स्वतस्तुष्टः। आत्मारामः स्वक्रीडः। अखंडितः स्त्रीविभ्रमैरनाकृष्टोऽपि तया रेमे। तथा चेत्कि

तेनापि कृष्णेन वनेऽत्र सा वधूरेव कृतेति भावः । तत्संकल्पेन तदैवागत्य ब्रह्मा तमुद्वाहं कारयित्वा तत्क्षणमेवांतर्दधाविति ग्रंथांतरतोऽवसेयम् । ईश्वरत्वादेव सर्वसंस्कारपूर्णत्वेनोपनयनातिक्रमोऽपि । "वधूभ्रातृदत्तलाजा जुहुयात्" इति कृतपाणिपीडनायामेव वधूशब्दस्य गृह्यसूत्रे प्रयुक्तत्वात्, अन्यथा स्त्रियमेवेति योगीन्द्रः प्रवदेदिति ध्येयं सुज्ञैः । ये वदन्ति श्रीराधा श्रीकृष्णेन नोढा तेप्यनेन परास्ता इति । अत एव भाराक्रांतस्य । गृहस्थाः खलु कलत्रभाराक्रांता इतस्ततो भ्रमंत्येवेति भावः । कामिनः न तु प्रेमिणः । प्रेमवतीनामप्यस्माकं त्यागादित्यत एव काम एव तं तां वाहयेदन्यथा व्रजेंद्रकुमारो ह्यतिसुकुमारो गोपालिकायाः कथं वाहको भवेदिति भावः ॥ अत्र **तोषिणी**–अथ प्रतिपक्षाः सासूयमाहुः–इमानीति । हे गोप्य इति विदग्धाभिर्युष्माभिरेतल्लक्ष्यत इति भावः । कामिनः केवलकामपरतंत्रस्य, न तु प्रेमरसाविदग्धस्येत्यर्थः ॥ ( १ ) ॥ पुनः सख्य आहुः–। अत्रेति । महात्मना विदग्धशिरोमणिनेत्यर्थः । यद्वा–महे तत्प्रधानोत्सवे आत्मा मनो यस्य तेन । पुष्पहेतोः पुष्पार्थमवरोपितेति, अशोकवृक्षोऽयमस्याः पादस्पर्शं प्राप्य सद्यः पुष्प्यतु यथाहमेतत्पुष्पैरिमां प्रसाधयेयमिति बुद्धेरित्यर्थः । अत एव महात्मना महाबुद्धिमता॥ अत्र **तोषिणी**–पुनः सख्य आहुः–अत्रेत्यर्धम् । महात्मना विदग्धशिरोमणिनेत्यर्थः । तदेतत्सार्द्धपद्यं क्वचिन्न दृश्यते च अतो नांकः कृतः ) ॥ ॥ इदमतिचित्रमित्याहुः–अत्र स्थले । अत एव प्रसूनावचयहेतोरेव । प्रपदयोः पादाग्रयोराक्रमणं ययोस्ते प्रपदाक्रमणे । पदे पदचिह्ने । उन्नतशाखापुष्पावचयार्थं दुःस्थत्वाद्यावत्पादप्रमाणरहिते असकले ॥ * ॥ अत्राशोकशाखायां प्रसूनानामवचय इत्यत एवात्र प्रसूनानि लसंतीति भावः । किंचिद्दूरशाखाया हस्ताऽप्राप्यायाः पुष्पावचयार्थं प्रपदाभ्यामाक्रमणं क्षोणीसंमर्दनं यतस्ते पदे । अत एव असकले, संपूर्णयोस्तयोर्भुवि चिह्नाऽदर्शनात् ॥ अत्र **तोषिणी**–अथास्याः सख्य आहुः–अत्र प्रसूनेति । प्रेयसा अतिशयेन प्रीतिकर्त्रा । पूर्वत्र लिंगमाहुः–प्रपदेत्यर्द्धेन । पद इति । प्रतिपुष्पवृक्षमिति शेषः । अत एव बहुत्वं श्रीविष्णुपुराणे "पुष्पावचयमत्रोच्चैश्चक्रे दामोदरो ध्रुवम् । येनाग्र्याक्रांतिमात्राणि पदान्यत्र महात्मनः ॥" इति ॥ ३२ ॥ केशमार्जन्या केशसंस्कारः केशप्रसाधनम् । अत्र स्थले । कामिन्याः अतीवकमनीयायाः । कामिना पूर्णानंदवतापि । ध्रुवम निश्चितम् । तत्स्थलमधुना 'शृंगारवट' इति प्रसिद्धम् । सखीवाक्यमिदम् ॥ * ॥ कृष्णजान्वन्तरुपविष्टायास्तस्याश्चिह्नं दृष्ट्वा पुनर्विपक्षा आहुः–केशानां प्रसाधनम् । अत्रत्यवनदेवतादत्तकंकतिकयेति बुध्यते । कामिन्याः न तु प्रेमवत्याः, स्वसखीरपि वंचयित्वा कामुकं नीत्वा रहोगतत्वात् । कामिना न तु प्रेमवता, प्रेमवतीनामप्यस्माकं विरहपीडाननुसंधानात् । ततश्च तानि–तैः, प्रसूनैः केशैर्वा कान्तां कामिनीं चूडयता नर्मणा पौरुषं व्यंजयितुं चूडावतीं कुर्वता इह ध्रुवमुपविष्टमिति । रहःकेलिर्वार्ताप्यभूदिति भावः । "विन्मतोर्लुक्" इति मतुपो लुक् ॥ अत्र **तोषिणी**–गर्भकाख्यमालाखंडपतनं दृष्ट्वा पुनर्विपक्षाः प्राहुः--केशेत्यर्द्धेन । तु शब्दो भिन्नोपक्रमे । हीति पाठे निश्चये । प्रसाधनप्रयोजनं सूचयति--कामिन्याः कामिनेति । कामक्रीडासुखार्थमित्यर्थः । तादृशोपवेशं दृष्ट्वा सख्यस्त्वाहुः--तानीत्यर्द्धेन । चूडयतेति--ज्ञानं तु स्वदेशे तादृशवेशस्य प्रायशो दृष्टत्वेति ज्ञेयम् ॥ ॥ ३३ ॥ तथा चेत् अनाकृष्टश्चेत् । तत्राशंकायाम् आह उत्तरं कामिनामिति । रेमे सुरतलीलामनुबभूव । आत्मनि स्वरूपानंदे रतः । आत्मन्यारामः क्रीडा यस्य सः । "आत्मरत आत्मक्रीडः" इति श्रुतेः । अनेन

१ पदानीति ।

विशेषणद्वयेन विटवृत्तिनिषेधोऽसूचि मुनिना । भगवत्प्रीतिसाधनभक्तिज्ञानादितारतम्यात्प्रीतितारतम्यं सूच्यतेऽत्र । तथा चान्या गोप्य इंद्रियवृत्तयः, कृष्गनीता तु भक्तिर्बुद्धिर्वा ज्ञेया । बुद्धिमता तत्पदानि तत्तदर्थबोध
कत्वेन योज्यानीति संतोष्टव्यम् । शोकादिकं च गुणनिमित्तमत एवाखंडित इत्युक्तम् ॥ * ॥ तदेवं गोपीनामुक्तिभिरेष तस्याः सौभाग्यातिशयं दर्शयित्वा स्वयमपि तमुपपादयति—रेम इति । आत्मारामोऽपि तया सह
रेमे, तत्र हेतुः—कामिनामिति । 'स्वात्मरतः' इति पाठे आत्मारामशब्देन पौनरुक्त्यापातादेवं व्याख्येयम्—च एवार्थे । तयैव सहात्मना यत्नेन रतं रमणं यस्य सः 'आत्मा यत्नो धृतिर्बुद्धिः' इत्यमरः । आत्माराम
तायां तादृशसुखलाभाभावादेव तावान्यत्न इति भावः । ननु तर्हि तस्याऽपूर्णत्वं प्रसक्तमतः अखंडितः, तदपि पूर्ण एव न तु खंडितः तस्याह्लादिनीशक्तित्वेन स्वरूपभूतत्वादिति भावः । ह्लादिनीशक्तित्वमपि
सर्वाह्लादसारो यः प्रेमा तस्यापि परमावधिर्यो महाभावस्तद्रूपत्वादेव हेतोर्भगवत आत्मारामत्वेन ह्लादमात्ररमणादपि ह्लादमहासारभूतया तया सह रमणस्याधिक्यमस्त्येव । तदुक्तं तत्र—"ह्लादिनी या महाशक्तिः सर्वश
क्तिवरीयसी । तत्सारभूता राधेयम्" इति, "महाभावस्वरूपेयं गुणैरतिवरीयसी" इति च।ततश्चात्मारामोऽपि तया सह स्वात्मरतःस्वात्मरतोऽप्यखण्डितः पूर्ण एव रेमे इत्यन्वयः।तेन च भगवत्तत्त्वानभिज्ञानां प्राकृतविवेकिनां
हितं च तेभ्यः स्वविलासतत्त्वस्य गोपनं च चकारेत्याह—कामिनामिति । कामवशैः स्त्रीवशैश्च न भाव्यमिति लोकाञ्शिक्षयामासेत्यर्थः । कामवशत्वे सति पुमांसो दीनाः स्युर्दैन्ये च सति स्त्रियो दुरात्मानः स्युरित्यर्थं
भगवान्भगवत्प्रेयसी च प्रमाणयति । यतस्ते इतस्ततो जल्पंत उज्ज्वलप्रेमरसतत्त्वगोपनस्य हेतवो बभूवुरिति भावः । तथा दर्शयन्नेव प्रेमरसतत्त्वं च गोपयन्निति चैवशब्दाभ्यामेव व्याख्येयम् । यद्वा—कामिनां संबन्धे दैन्यं
दर्शयन् 'आत्मवन्मन्यते सर्वम्' इति न्यायेन ये कामिनस्ते दीनमेवापश्यन्, याश्च स्त्रियः कामिन्यस्ता दुरात्मानमेवापश्यंस्तत्प्रयोजकीभवन्नित्यर्थः । यद्वा—कामिनां दैन्यं दर्शयन्निति—कामिभिः सुरतप्रार्थनादिना दीनैर्भवितव्यं
स्त्रीभिस्तत्रासंमत्या दुरात्मभिर्भवितव्यमिति दर्शयन् रसिकजनाञ्ज्ञापयन् । एवमेव रसपोषो नान्यथेति भावः ॥ अत्र **तोषिणी**—तदेवं गोपीजनमुखेनैव तया सह तल्लीलां प्रशंस्य स्वयमपि प्रशंसति—रेमे इति । स्वैः स्वांशरूपैर्वै
भवैर्वैकुंठीयलक्ष्म्यादिभिर्गोष्ठसंबंधिप्रेयस्यादिभिश्च हेतुभिरपरापेक्षारहितया तत्तदंशिन्यात्मनि स्वस्मिन्नेव रतः।स्वेनैव पूर्णकाम इत्यर्थः।तादृशोऽपि तथात्मारामः स्वरूपानंदावेशतत्पर इत्यर्थः।तादृशोपि तया हेतुना रेमे तत्तदनादृत्य नंदति
स्म, तत्र हेतुस्तयेत्यर्थः । तच्छब्दस्य वक्तृबुद्धिस्थवैलक्षण्यव्यंजकत्वात्सर्वाधिकतत्प्रेमाश्रयाविषयकरूपयेत्यर्थः । 'रेमे तया चात्मरतः' इति पाठे आत्मारामशब्देन पौनरुक्त्यापातात्तत्पूर्णकामत्वादेवात्मरत इति लभ्यते । च शब्दश्च यथा
तया तस्य रमणं ताभिर्वितर्कितं तथा रेमे चेति बोधयति । तदेवमपि पूर्वमेव विवक्षितम् । ननु ताभिर्लक्ष्म्यादिभिः प्रेयस्यादिभिरपि तस्य रमगं दृश्यते, तत्राह—अखंडितः । अनया हेतुना यथा ततस्ततः खंडितः स्यात्स्वपतेः
सकाशात्खंडितानायिकावन्मनसा विच्युतः स्यान्न तथास्याः सकाशादयं लक्ष्म्यादिभिर्हेतुभिर्न कदाचिदपीत्यर्थः । अतः प्रेमनिर्जितत्वादनेन तस्याः स्वं सर्वं समर्पितमिति भावः । तच्च प्रियजनप्रेमवशत्वं तस्य महानेव
गुण इति पूर्वं बहुशो लिखितं, श्रीभागवतामृते च विवृतम् । तदेवं तस्या एतादृशः प्रेमा येन तादृशोऽप्यसौ वशीचक्रे, तस्य चतादृशो येन तादृशात्मारामतापि तिरश्चक्रे।तदेवं तादृशालंबनत्वप्रेमवशत्वहीनाः कामिनः कामिन्यश्च स्वम
हिम्ना परास्ततया दर्शिता इत्याह—कामिनां दर्शयन्निति । अत्र कामिनामिति मलमूत्रदितया परिणामिभिरन्नजलादिभिस्तर्प्यमाणो यो देहस्तर्पणेच्छारूपकामस्वभावानां न तु सच्चिदानंदविग्रहतया स्वतस्तृप्तानां न तु वा प्रियजनतर्प
णमात्रस्वसुखलक्षणप्रेमस्वभावानामित्यर्थः । तेषां दैन्यं दुर्गतत्वं तथा स्त्रीणामपि मलमूत्रादिलक्षणानां न तु तस्यापि रमणहेतुभागवतसच्चिदानंदेत्यादिलक्षणानामित्यर्थः । तथा च तासां तद्विरोचनयोग्यता वक्ष्यते—'ताभिर्विधूत
शोकाभिः' इत्यादिना । तदन्यस्त्रीणां दुरात्मताम् । तादृशदुर्गतनायकं वशीकृत्य हर्षगर्वादिदुष्टस्वभावतामित्यर्थः । तदुक्तं श्रीरुक्मिणीदेव्या—'त्वक्श्मश्रुरोमनख—' इत्यादिना । अत्र श्रीकृष्णस्य तावद्वैलक्षण्यमुक्त
मेव । 'या ते पदाब्जम्' इत्यादौ तद्वैलक्षण्यानुभवयोग्याश्च काश्चिदेव तद्विलक्षणा एव भवंतीति ज्ञापितम् । तदेवं तेषां च दैन्यं तासां दुरात्मतां दर्शयन्निति "दर्शयद्विधुपराजयं रमावक्त्रमुल्लसति धृतलांछनम्"
इतिवत्, 'स[1]सिजोदयश्रीमुखम्' इतिवच्च वाग्भंग्या स्वतस्तत्तन्निष्कर्षातिशय एव प्रतिपादितः, न तु बुद्धिपूर्विका । तेन तद्दर्शनेऽसति स्वात्मरतत्वादेक कामिदैन्यादिदर्शनार्थमुपहासकजनवत्तदनुकरणमपि न घटते इति।अन्यथा

१ श्रीशुकः ।

इत्येवं दर्शयंत्यस्ताश्चेरुर्गोप्यो विचेतसः ॥ यां गोपीमनयत्कृष्णो विहायान्याः स्त्रियो वने ॥ ३५ ॥ सा च मेने तदात्मानं वरिष्ठं सर्वयोषिताम् ॥ हित्वा गोपीः कामयाना मामसौ भजते प्रियः ॥ ३६ ॥ ततो गत्वा वनोद्देशं दृप्ता केशवमब्रवीत् ॥ न पारयेऽहं चलितुं नय मां यत्र ते मनः ॥ ३७ ॥ एवमुक्तः प्रियामाह स्कंध अरुह्यतामिति ॥ ततश्चांतर्दधे कृष्णः सा वधूरन्वतप्यत ॥ ३८ ॥

मिति रेमेऽत आह । कामिनामिति ॥ ३४ ॥ ३५ ॥ स्त्रीणां दुरात्मतामाह सा चेति द्वाभ्याम् । कामो यानमागमनसाधनं यासां ता गोपीर्हित्वा मामेव भजत इति हेतोः सर्वयोषितां मध्ये आत्मानं वरिष्ठं मेने इति ॥ ३६ ॥ ३७ ॥ कामिनां दैन्यं दर्शयति । एवमुक्त इति । अखंडितत्वमाह । ततश्चेति । तस्यां स्कंधारोहोद्यतायामंतर्हित

तु न व्याख्यातम् । भक्तप्रेमवशता तु 'नाहमात्मानमाशासे' इत्यादिषु बहुषु संमतैव ॥ ३४ ॥ राक्षस्या बुद्धेः स्वभावमाह—। इत्येवम् पूर्वोक्तविधया ॥ * ॥ वृषभानुनंदिन्याः सर्वाधिकमुज्ज्वलरसस्य संभोगमंशं निर्वर्ण्य विप्रलंभमपि वर्णयितुं तद्बीजमुत्थापयति—यामिति ॥ अत्र **तोषिणी**—अत्र इत्येवमिति पद्यार्द्धद्वयं तेषामसंमतम् । पूर्वार्द्धे सति रेमे तयेत्यस्य शुकोक्तित्वासंगतेः, उत्तरार्द्धे सति सा चेति मात्रोत्थापनासंगतेः ॥ ॥ ३९ ॥ वरिष्ठम् सर्वोत्कृष्टम् ॥ * ॥ सा चेति । पूर्वं सर्वाः सौभाग्यमदयुक्ता आसन्नधुना सा च, तत्र हेतुः—हित्वेति । कामयानाः कामयमानाः । यद्वा—कामेन यानमागमनं यासां ताः । अत एवान्यगोपीसौभाग्यहेतुको यः पूर्वं मान उद्भूतः सोऽपि निश्शेषेणैव शांतः ॥ अत्र **तोषिणी**—तदेवं तयोस्तं प्रेमाणं प्रशंस्य प्रकृतं तादृशं तद्विलासमयं मानं तत्प्रसादनादिकमपि तत्पोषणार्थं वर्णयति—सा चेति सपादत्रयद्वाभ्याम् । सा च तदा मेने इत्यनेन पूर्वं तासु मध्ये वर्तमानाया अपि तादृशो मदो नासीदिदानीमेव जात इति लभ्यते । तच्चैवं तादृशभावे हि तासां द्विधा मानावस्था संभवति, कांतैकस्फुरणे हर्षादिप्रचुरस्थायिमयी कथंचिदन्यस्फुरणे गर्वादिप्रचुरस्थायिमयीति च । अतस्तस्या गाढानुरागप्राधान्येन तदेकस्फुरणमय्या बहुकालं व्याप्य हर्षादिमय्येव जाता, संप्रति कथंचिद्बाह्यज्ञाने तु परेति आत्मवरिष्ठत्वे हेतुः । गोपीः सर्वा एव तत्रापि कामयानाः कामयमाना अपि हित्वाऽसावनिर्वचनीयचरित्रमाहात्म्यः, परमस्वतंत्रोऽतिदुर्लभ इत्यर्थः । तत्रापि प्रियः यदेकप्रेमकर्ता सन्भजतेऽनुवर्तते । अत्रान्यस्फुरणेऽपि गोपीनामेव स्फूर्तिर्न तु पूर्वास्विव सामान्यस्त्रीणामित्येतद्देशेऽपि वैशिष्ट्यं दर्शितम् ॥ ३६ ॥ भक्त्या लभ्यो नान्यथेति भावं दर्शयति—तत इति । ततो वरिष्ठत्वमननात् दृप्ता । केशवम् सर्वेश्वरम् । न पारये न शक्नोमि । सर्वथाहं तवाधीनेत्याह—नयेति ॥ * ॥ वनस्योत्कृष्टप्रदेशं गत्वा केशवं केशान्वयमानं प्राक्कृतनर्मद्योतकचूडामुन्मोचयंत्यास्तस्या विचित्रवेणीत्वेन ग्रथ्नंतम् । अत एव दृप्ता, स्वाधीनकांताया दर्प एव रसमावहतीति भावः । चलितुं न पारये इति । बहुवनभ्रमणोत्थो मे श्रमोऽभूदिति भावः । ननु मुग्धे ताभ्यो दूरमग्रे ह्यं स्थानांतरं गंतव्यमिति चेत्तत्राह—नयेति । पूर्ववन्मां वहन्नित्यर्थः । ननु किमग्रिमप्रदेशे अन्यजनदुष्प्रवेशं कुंजांतर्गतं पुष्पतल्पं त्वां नयामि, किं वा पुष्पाभरणार्थं पुष्पोद्यानम्, तत्राह—यत्र ते मन इति ॥ अत्र **तोषिणी**—ततो वरिष्ठमननानंतरम् । वनप्रदेशविशेषं तेनैव सह गमनक्रमेणाग्रतो गत्वा दृप्ता गर्विता सती केशवं केशान् तदीयानेव वयते ग्रथ्नाति तमत एवाब्रवीत् । किम्, तदाह—न पारये इति । बहुविधभ्रमणेन परिश्रांतत्वादिति व्याजमयी हेतुव्यंजना । ननु ताभ्यो दूरमग्रे स्थानांतरं गंतव्यमिति चेत्, तत्राह—नयेति । पूर्ववदंके निधाय त्वमेव नयेत्यर्थः ॥ ३७ ॥ शुद्रबुद्धेः स्वभावं दर्शयितुमाह—सा वधूरिति । ततः स्कंधारोहानुज्ञानंतरम् । इत्यर्थ इति—निजस्वातंत्र्यं बोधितवांस्तस्या इति भावः ॥ * ॥ ततश्च कृष्णेन मनस्येवं विचारितम्—अहो अनया स्वाभाविकः स्वधर्मः परित्यक्त एव, न हि सन्नायिका पुष्पतल्पं प्रति स्वनयने वचसा नायकाय संमतिं दत्ते । यदि चानया वाम्यरूपस्वधर्मस्त्यक्तस्तदा मयापि नायकेन संमुक्तकांतानुवर्तित्वलक्षणो

१ गोपीभ्यः ।

## हा नाथ रमण प्रेष्ठ क्वासि क्वासि महाभुज ॥ दास्यास्ते कृपणाया मे सखे दर्शय सन्निधिम् ॥ ३९ ॥

**इत्यर्थः ॥ ३८ ॥ अनुतापमाह । हा नाथेति ॥ ३९ ॥**

दाक्षिण्यमयः स्वधर्मस्तत्क्तव्य एव, न हि द्वयोरेव दाक्षिण्ये वाम्ये वा रसः सुरसः स्यात् । न चात्र रसिकलोकैरहं दूषयणीयः, रसो हि नायिकाप्रक्रांतपरिपाटीक एव साधुर्भवेत् । किञ्च, महाप्रेमवत्या अस्या मद्विप्रलंभजनितदशाविशेषदिदृक्षा साक्षादेव वा चिरं मे वर्तते, साप्येतदवसरे पूर्णा भविष्यति । मत्संश्लेषजनितमस्याः सौभाग्याधिक्यं ताभिरनुभूतमेव मद्विश्लेषजनितामपि प्रेमोद्रेकपरमावधिव्यंजिकां दशामसाधारिणीं दृष्ट्वा ताः परमचमत्कारसिंधुनिमग्ना भवंतु । अस्या मद्विरहवाडवानलज्वालाया अग्रे तासां मद्विरहो दीपदहनायितो भवतु, ततश्चास्याः पूर्णतमाभ्यां संभोगविप्रलंभाभ्यां शृंगाररसोप्यद्य पूर्णतमत्वमापद्यताम् । अस्या अपि विरहे मत्संपादिते सर्वविरहोपशांत्यनंतरं सर्वासामैकमत्ये सति विधित्सितोऽद्य रासोऽपि सेत्स्यति । अन्यथात्वे तत्संगरंगिणा मया तासां मानोऽद्य सर्वथैव दुरुपशम इत्यादीनि बहूनि प्रयोजनानि पर्यालोचयन्सहसैवांतर्द्धेत्सु राह—स्कंध इति । अंतर्दधे तत्रैव स्थित्वा ताः पश्यन्नपि तन्नयनगोचरतां जहावित्यर्थः । तत्र ‘ नय मां यत्र ते मनः’ इति वदंत्या वृषभानुनंदिन्या मनस्येवं विचारितम्—विलासश्रमवनविहारश्रमखिन्नाया मम क्षणं सुषुप्सा वर्तते अस्यापि स्वापाभावेनैव सर्वरजनीयापनमकल्याणमसुखोदर्कमेव, अतः पुष्पतल्पं नयति चेन्नयतु आवां तत्र स्वप्स्याव इत्यतस्तत्रासंमतिर्न कृता । तत्र भगवतस्तदंतःकरणविज्ञता प्रेमरसमयलीलाशक्त्यैव तिरोधापिता तत्तल्लीलासिद्ध्यर्थामिति ज्ञेयम् । अन्वतप्यत मुहुर्विललाप ॥ अत्र **तोषिणी**—तदेवं तस्याः स्वाधीनभर्तृकत्वोचितं नर्मवचनं श्रुत्वा स्वयमपि सनर्मैवांतर्हित इत्याह—एवमिति पादत्रयेण । स्कंधे मदंसे आरुह्यतामित्याह । इदञ्च नर्मणैव प्रियामित्युक्तेः । तथाहि—“ योन्यमुखे दुर्वादः प्रियतमवदने स एव परिहासः । इतरेन्धनजो धूमः सोयमगुरुसंभवो धूपः ॥ ” इति । यद्वा—स्कन्धः “ स्कंधः प्रकाण्डे काये च बाहुमूलसमूहयोः ” इति विश्वप्रकाशात् कायः, स च युक्तत्वाद्वक्षोभागः, इदमपि नर्मैव । त्वर्थे चः, भिन्नोपक्रमे अंतर्दधे चेति समुच्चये वा । तस्याः सकाशादप्यंतर्द्धानेस्मिन्नीर्ष्यापगमात्सपत्नीनामैकमत्यमपि प्रयोजनं ज्ञेयम्, पूर्वान्तर्द्धानेऽपि तदेव चिकीर्षितमिति । एवमेकयैव क्रिययाऽनेकदुर्घटसंपादनेन परमचातुरी दर्शिता । अहो “ उपर्य्युपरि बुद्धीनां चरंतीश्वरबुद्धयः” इति भावः । तदेवं संभोगोचितां स्वाधीनभर्तृकात्वमयीं प्रेमपराकाष्ठां दर्शयित्वा सा नर्मण्यपि विप्रलंभपरमदैन्यमोहात्मिकां तत्पराकाष्ठां दर्शयंस्तत्प्राशस्त्यमेव सूचयति—सेति सपादेन । सा तद्दर्शनैकजीवना अन्वतप्यत मुहुर्विललाप॥३८॥हा विषण्णास्मि वने ‘हा विषादशुगार्तिषु’ इत्यमरः । नाथ आशाप्रद। रमण रतिप्रद। प्रेष्ठ अतीव प्रिय। महाभुज त्रस्तभयवारक । ते दास्याः शिक्षार्हायाः । कृपणायाः कृपार्हायाः । सख इति । नायं सखिधर्मो यो भयस्थाने सखीत्याग इत्याह ॥ * ॥ विलापमेवाह—हा नाथेति । त्वद्वियोगमहाग्निना दह्यमानादस्मद्देहान्मे प्राणाः संप्रति निःसृतप्राया यत्नेनापि मया रक्षितुं न शक्यन्ते, एषां तु त्वमेव नाथेति इतो दर्शनं दत्त्वा शीघ्रमेतान्रक्षेति भावः । न चैषां रक्षामहं स्वार्थमेव प्रार्थये किन्तु त्वदर्थमेवेत्याह—हे रमणेति । सर्वा अप्यन्या गोपीस्त्यक्त्वा रमणसुखविशेषार्थं यामेतावद्दूरं रहः समानैषीस्तस्यां मयि मृतायामेवं रतिसुखमन्यत्रालभमानो मां स्मरंस्त्वमपि दुःखेन विलपिष्यसीति भावः । नन्वस्तु मद्दुःखं तेन तव किम्, तत्राह—हे प्रेष्ठेति । तव मत्प्रेष्ठत्वात्त्वदीयं तद्दुःखं कोटिगुणीभूय मय्येव फलिष्यति, मत्प्राणकोटिनिर्मंछनीयपादाब्जनखरैकदेशस्य तव तद्दुःखमहं मृत्वापि सोढुं न पारयिष्यामि । अतः कृपया सन्निधाय तदेव दुःखं दूरीकुर्विति भावः । ननु यदि निःसृतप्राया एव प्राणास्तदा तानहमपि कथं विवर्तयितुं प्रभविष्यामि, तत्राह—हे महाभुजेति । त्वद्भुजस्य संजीवनौषधस्य स्पर्शनमात्रेणैव सुस्थसुशीतलीभूते देहेऽस्मिन्प्राणाः स्वयमेवागत्य स्थास्यंतीति भावः । ननु मां विना स्वस्य गतिमेवं जानासि चेन्महाराजकुमारमतिसुकुमारमादरणीयं माम् ‘नय मां यत्र ते मनः’ इत्यादिष्टवती किमकोपयस्तत्र सकाकुत्वैव्यग्र्यमाह—दास्यास्ते कृपणाया मे इति । तदानीं विलासश्रमनिद्रालस्याभिभूतयैव दीनया मया तथोक्तं क्षमस्व मा कुप्येति भावः । किञ्चायोग्ययापि मया सह त्वमेव दृढं यत्सख्यमकरोस्तेनैव तथाहमवोचमित्याह—हे सख इति । हे प्रिये तर्हि प्रसन्नोऽभूवं मत्समीपमेहीति चेत्संप्रत्यनुतापदुःखेनांधास्मि त्वं क्व वर्तस इति न पश्यामीत्याह—दर्शय सन्निधिमिति । एतावदेव विलप्य विरहाद् घूर्णनवशात्संमुह्य भुव्यपतदिति ज्ञेयम्, अग्रे मोहितामित्युक्तेः ॥ अत्र **तोषिणी**—

**श्रीशुक उवाच ॥ अन्विच्छंत्यो भगवतो मार्गं गोप्योविदूरतः ॥ ददृशुः प्रियविश्लेषमोहितां दुःखितां सखीम् ॥ ४० ॥**
**तया कथितमाकर्ण्य मानप्राप्तिं च माधवात् ॥ अवमानं च दौरात्म्याद्विस्मयं परमं ययुः ॥ ४१ ॥**

अन्विच्छंत्यो मृगयमाणाः । अविदूरतः समीपे ॥ ४० ॥ ४१ ॥

विलापमेवाह—हा नाथेति । हा खेदे, आर्तिसंबोधने वा । ततश्च सर्वत्रैव योज्यम् । नाथ स्वामितया पालक । रमण कान्तोचितप्रद । प्रेष्ठ मद्विषयकतदुचितप्रेमविस्तारक । क्वासि एवमेवं मयि स्निग्धोऽपि संप्रत्यप्रेक्षको क वर्तसे । हाहा तदज्ञानेन मम चित्तं क्षुभ्यतीति भावः । वीप्सातिवैयग्र्येण । पुनरालिंगनादिनिजसौभाग्यस्मारकेण निजरसोद्दीपकतदंगविशेषसौंदर्यस्मरणेन मुह्यंतीवाह—महाभुजेति । पुनरतिदैन्यमाह—दास्या इत्यादि । तत्रैव किं पुनरपि ममालिंगनादिलाभाय ममावासं मृगयसीत्याशंक्य नहिनहीत्याह । सखे दत्तनिजसाहचर्य सौभाग्यसन्निधिं निजसंनिधानमपि दर्शय प्रापय । गात्रसाहचर्यदानेन भवतैव जनितवासनानि, संप्रति तत्र मा गृह्णामि किंतु त्वमत्र विद्यस इति मनस्यपि निश्चयतः स्वस्था भवेयमिति भावः । तत्र हेतुः—दास्याः सख्यादावयोग्यायाः । किन्तु, तादृशतत्कृपयैव बलादुत्पादितत्वदेकसुखानुकूल्यतात्पर्याया इत्यर्थः । तत्रापि कृपणायाः तदिदं दुःखं सोढुमशक्तायाः, परिहर्तुं चाजानंत्या इत्यर्थः । अतो न मयि वंचना कार्या, नापि निजानुतापबीजं वक्तव्यमिति भावः । औदार्यनामा चानुभावोऽयम् । तदुक्तम्—"औदार्यं विनयं प्राहुः सर्वावस्थागतं बुधाः ॥ " इति ज्ञेयम्, अग्रे मोहितामित्युक्तेः ॥३९॥ गां दृष्टिं पांति रक्षन्ति दुर्विषयगमनराहित्येनेति गोप्य इन्द्रियवृत्तयः शास्त्रविषयाः । मुक्तेः पूर्वमपरोक्षबुद्धेराविर्भावतिरोभावौ कचित्स्यातामिति दर्शनाय—प्रियविश्लेषेति । दुःखितामिति—भूतललुठनलग्नधूलिकंटकक्षतरक्तस्वेदबहलाश्रुधाराभिर्दुःखिनीत्येवं ज्ञापिताम् ॥ * ॥ अन्विच्छन्त्यः अन्वेषयन्त्यः । दूरतोऽपि ददृशुरिति तस्या विद्युत्तुल्यकांतिमत्त्वात् । सखीमिति तस्यास्तादृशदशादर्शनेन विपक्षाणामपि तत्र स्नेहोदयात् । किञ्च, उज्ज्वलरसस्य स्वभाव एवायं यत्कान्तस्य कान्तामात्रवियुक्तत्वे ज्ञाते सति कान्तानामीर्ष्याद्वेषाद्यभावः परस्परस्नेहवत्त्वं च । तदुक्तम्—"अत एव हि विश्लेषे स्नेहस्तासां प्रकाशते" इति ॥ अत्र **तोषिणी**—अविदूरतो नातिदूर इत्यर्थः, अतिदूरे व्यवधानसद्भावात्, राकेशशोभाविजयिशोभाविशेषेण दूरेऽपि दर्शनसंभवात् । दुःखितामत एव मोहितां मूर्छितां समदुःखभावनयां विशेषतस्तस्या एकाकिन्या अपि परित्यागदर्शनेन सुतरामीर्ष्यापगमादैकमत्याच्च सखीमित्युक्तम्, किन्तु निजसखीनामत्र प्रेमावेशविशेषो ज्ञेयः ॥ ४० ॥ तया सख्या । मानप्राप्तिम् स्कन्धारोहलक्षणाम् । पक्षे, अपरोक्षलक्षणाम् । दौरात्म्यात् अभिमानात् । अवमानम् त्यागलक्षणम् ॥ * ॥ ततश्च सखीभिरत्युच्चरोदनेन व्यजनादिपरिचर्यया यत्नतस्तत्प्रबोधे संपादिते सति अयि प्रियसखि स्ववृत्तान्तं कथ्यतामिति ताभिः पृष्ट्या तया कथितम्—अयि प्रियसख्यः कथं भवतीभ्यो विच्छिन्नाहमभूवमिति मुग्धाहं परतंत्रा नाज्ञासिषं, किन्तु मानप्राप्तिरवमानश्च दौरात्म्यादेवेति निश्चिनोमि । युष्मान्वरःसहस्राः प्रेमवतीरवमत्य स्वविरहानलेन ज्वालयित्वा मह्यमेकस्यै यत्सौभाग्यं दत्तम् इदं तस्य दौरात्म्यम् । तं दुर्लीलमहाराजपुत्रं प्रति वराक्यपि मुग्धा 'न पारयेऽहं चलितुं नय माम्' इति यदवोचमेतत्तु ममैव दौरात्म्यम्, यत एतावानवमानः प्राप्त इत्युभयथापि मे महन्मनोदुःखमेवेति स्वकान्ते तासु स्वस्मिंश्च क्रमेणासूयाविनयदैन्यानि व्यंजितानि । अत्र श्रीमुनींद्रेण दौरात्म्यशब्दप्रयोगस्तु तस्या वचनानुसारादेव । वस्तुतस्तु—श्रीकृष्णाद्दूर आत्मा यस्याः, दूर आत्मा श्रीकृष्णो वा यस्याः सा दूरात्मा तस्या भावो दौरात्म्यं तस्मात् । विश्लेषादित्यर्थः । विस्मयं परमं ययुरिति—प्रियसखि भवत्याः सौभाग्यमुचितमेव नात्र तस्य दौरात्म्यं रतिश्रांतायाः स्वाधीनभर्तृकायास्तत्र कांतं प्रत्याज्ञापनमपि न दौरात्म्यं प्रत्युत रसावहमेव, किन्त्वनुकूलनायकेन संभुक्तकान्ताया यदाशोल्लंघनमेतादृशदुरवस्थाप्रापणं च एतदेव रसप्रतिकूलं दौरात्म्यव्यंजकम् । हन्तहन्त महारसिकशेखरस्य महाप्रेमवतो दयानिधेस्तस्य कथमेवं चिकीर्षितमभूदिति परमं विस्मयं प्रापुः ॥ अत्र **तोषिणी**—अत एव च तया कथितमाकर्ण्येति । रोदनसंज्ञाप्रापणप्रश्नांतरमिति ज्ञेयम् । कथितम् कथं भवतीभ्यो विच्छिन्नाहमिति नाज्ञासिषं, किं तु दूरत एवात्मानुसंधानमकार्षमित्यादिप्रकारकं सर्ववृत्तमाकर्ण्य तत्रापि माधवात् नूनं लक्ष्म्यापि रमणतया स्पृहणीयात्, सर्वगुणादिसंपत्तेः पत्युर्वा तस्मात्त्वत एव परमसौभाग्यलाभलक्षणां संमानप्राप्तिं चाकर्ण्य तत्रैव गर्वलक्षणान्निजदौरात्म्यात्परित्यागलक्षणमवमानं चाकर्ण्य विस्मयमित्यादि

ततोऽविशन्वनं चंद्रज्योत्स्ना यावद्विभाव्यते ॥ तमः प्रविष्टमालक्ष्य ततो निववृतुर्हरेः ॥ ४२ ॥
तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः ॥ तद्गुणानेव गायंत्यो नात्मागाराणि सस्मरुः ॥ ४३ ॥

**ततस्तयाऽपि सहिताः कृष्णान्वेषणाय वनमविशन् । ततो हरेरन्वेषणान्निवृत्ताः ॥ ४२ ॥ एवं तमप्राप्ता अपि स्वगृहान्नैव स्मृतवत्यः तदात्मिकाः स एवात्मा यासां ताः । तन्मय्य इत्यर्थः ॥ ४३ ॥**

कोऽन्वयः । अत्र तु दौरात्म्यशब्दस्तदैन्यवचनानुवादात् । वस्तुतस्तु, श्रीकृष्णाद्दूरे आत्मा देहो यस्याः, दूरे आत्मा श्रीकृष्णो वा यस्याः सा दूरात्मा तस्या भावो दौरात्म्यम्, तस्माद्दूरविश्लेषादित्यर्थः । परमं विस्मयमित्यादि कस्य कथितमित्यादित्रयेणाप्यन्वयश्च । तत्सहितांतर्द्धानादिसर्वतचरितस्य सहिततचरितादपि दुर्वितर्क्यत्वात् । तत्रापि तादृशमानप्राप्तेः स्वेषु परःकोटिष्विप्यदृष्टचरत्वात् । तत्र च सति तस्यामप्यवमानस्य परमासंभवादिति ॥ ४१ ॥ तम इति । पुनर्विरहवेदनया नेत्रेषु तमः प्रविष्टमाज्ञाय । यद्वा—तमसि सांधकारगह्वरवने प्रविष्टं श्रीकृष्णं ज्ञात्वेत्यर्थः । पौर्णमास्यां शशिनः सार्वरात्रिकत्वात्प्रसिद्धतमसोऽसंभवादिति भावः । शास्त्रविषयास्ता दुःशास्त्रान्निवृत्य सच्छास्त्राभ्यासाय यत्नं चक्रुरिति ध्वन्यते । वस्तुतस्तु, तमःशब्दोपलक्षितहृदयगुहाप्रविष्टम् “ यो वेद निहितं गुहायाम् ” इति श्रुतेः । आलक्ष्य ज्ञात्वा । हरेस्तदुपासनान्निववृतुः ताद्रूप्यमापुः “ भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम् ॥ ” इति स्मृतेः, ‘ यस्य देवे परा भक्तिः ’ इत्यादिश्रुतेः, “ भक्तिरेवैनं गमयति ” इति श्रुतेश्च । स्त्रिय इति । स्त्रीणामन्धकारावृतवनप्रवेशासामर्थ्यादिति भावः । हरेरिति पाठः स्वामिसम्मतः । तत इत्यस्य पुनरुक्तिसमाधानाय तत इत्यस्यैव हरेरन्वेषणादिति व्याख्यानात् । अन्यथा तत इत्यस्य प्राग्विशेषगायोग्यता स्यात्, हरेस्तत इत्यन्वयाद्यसौष्ठवं च ॥ * ॥ ततश्च वैयग्र्येण सखीदत्तहस्तावलंबनया तया सहैव तास्तमन्वेषयामासुरित्याह—तत इति । चंद्रज्योत्स्ना यावद्विभाव्यते लक्ष्यते इति । पूर्णिमारजन्यामपि निबिडवृक्षच्छायावशादेव तम इति । तदुक्तं विष्णुपुराणे—“ प्रविष्टो गहनं कृष्णः पदमत्र न दृश्यते । निवर्तध्वं शशांकस्य नैतद्दीधितिगोचरः ॥ ” इति । वस्तुतस्तु, हंहो खेदसिंधुनिमग्नाः सख्यः घनश्यामतमेऽस्मिंस्तमसि घनश्यामवपुषं तमस्मदवलोकनशंकयैव प्र (नि) लीनीभूय स्थितं मा संकोचयत, यत्रयत्र यूयं यास्यथ ततस्ततोऽन्यत्रैव स पलायिष्यत इत्यलमतिसुकुमारशरीरस्य तस्य श्रमोत्पादने व्यवसायेनेति विमृश्यैव निववृतुरिति ॥ अत्र **तोषिणी**—यावद्वनं व्याप्य ज्योत्स्ना लक्ष्यते तावद्वनमविशन् । प्रविश्य तमन्वेषयामासुरित्यर्थः । तमसि महागहनगते प्रविष्टं श्रीकृष्णं पदचिह्नादिना वितर्क्य ततस्तस्माद्वनान्निवृत्ताः ॥ ४२ ॥ इत्यर्थ इति । ध्यानेन तदात्मतां प्राप्ता इति तात्पर्यम् । सत्त्वबुद्धीनां स्वभावमाह—तन्मनस्का इति । तस्य आलापः कथनं यासां ताः । तद्गुणान्न तु दोषान् । गायंत्य इति—“मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद” इत्युक्तेर्भगवतो गीतप्रियत्वादिति । आत्मागाराणि देहगेहानि ॥*॥ तन्मनस्कत्वेनैव पूर्ववदुन्मादस्य मांद्ये तदालापाः ‘दृष्टो वः कश्चिदश्वत्थ’ इति तमालापन्त्यः।उन्मादस्य मध्यत्वे तद्विचेष्टाः ‘कृष्णायंत्यपिबत्स्तनम्’ इति वत्तच्चेष्टामनुकृतवत्यः । उन्मादस्य प्रौढत्वे तदात्मिकाः ‘कृष्णोऽहं पश्यत गतिम्’ इतिवदात्मविस्मृतौ तन्मयीभूताः। पूर्वसंस्कारवशादेव ‘गायन्त्य उच्चैरमुमेव’ इतिवत्तद्गुणानेवेति।।अत्र **तोषिणी**—ततश्च ततो निवृत्तास्तत्र प्रविष्टस्य तस्य ‘व्यथते न किंस्वित्कूर्पादिभिः’ इति वक्ष्माणरीत्या दुःखशंकया परमदुःखमग्ना बभूवुरित्याह—तदिति।तादृगवरोधस्थले प्रविष्टे तस्मिन्नेव मनो यसाम् ,ततस्तादृशे तस्मिन्नेव विषये आलापस्तद्दुःखस्मरणमयः संलापो यासाम्, ततस्तस्मिन्नेव निमित्ते विचेष्टा वर्त्मांतरेण तन्निष्क्रमणसंभावनया परितः परिभ्रमणरूपा यासाम् ,ततस्तस्मिन्नेवात्मा यत्नो यासां तथाभावाः सत्यस्तस्य निर्लीनताकारणतादृशापन्नया दूरस्ववशीभावमयक्ल

पुनः पुलिनमागत्य कालिंद्याः कृष्णभावनाः ॥ समवेता जगुः कृष्णं तदागमनकांक्षिताः ॥ ४४ ॥ इति श्रीभागवते महापुराणे दशमस्कंधे पूर्वार्धे रासक्रीडायां कृष्णान्वेषणं नाम त्रिंशत्तमोऽध्यायः ॥ ३० ॥ गोप्य ऊचुः ॥ जयति तेऽधिकं जन्मना व्रजः श्रयत इंदिरा शश्वदत्र हि ॥ दयित दृश्यतां दिक्षु तावकास्त्वयि धृतासवस्त्वां विचिन्वते ॥ १ ॥

किं तु पूर्वं यत्र श्रीकृष्णेन संगतिरासीत्तदेव कालिंद्याः पुलिनमागत्य कृष्णं भावयंति ध्यायंतीति तथा ताः कृष्णस्यागमनं कांक्षितं यासां ता मिलिताः सत्यः कृष्णमेव जगुरिति ॥४४॥ इति श्रीमद्भागवते म० दशमपूर्वार्धे टीकायां त्रिंशत्तमोऽध्यायः॥ ३०॥एकत्रिंशे निराशास्ताः पुनः पुलिनमागताः ॥ कृष्णमेवानुगायंत्यः प्रार्थयंते तदागमम् ॥ १ ॥ जयतीति । हे दयित ते जन्मना व्रजोऽधिकं यथा भवति तथा जयत्युत्कर्षेण वर्तते।यस्मात्त्वमत्र जातस्तस्मादिंदिरा लक्ष्मीरत्र हि श्रयते व्रजमलंकृत्य वर्तते । एवं व्रजे सर्व

पादिलक्षणान् गुणानेव केवलतया स्फुरितान्, न तु स्वपरित्यागादिदोषान्, गायन्त्यः गानेन तं श्रावयन्त्य आत्मानमपि न सस्मरुः । किमुतागाराणीत्यर्थः ॥ ४३ ॥ किमितस्ततो भ्रमंत्यो गानं चक्रुस्तत्राह–किं त्विति । यत्र पुलिने । यत्र त्यक्तास्तत्रैवास्मान् कृपया सांत्वयितुं नूनमागतः स्यादिति हेतोः पुनस्तत्रागत्येत्यर्थः । समवेताः 'दुःखं पंचभिः सह' इत्युक्तेरेकीभावं प्राप्ताः ॥ * ॥ हंतहंत यत्रयत्र तदन्वेषणार्थं यामस्ततस्ततः स पलायिष्यते तस्माद्वनपर्यटनकष्टं किं तस्योत्पादयिष्यामस्तदिच्छां विना स न लभ्यः, "यमेवैष वृणुते तेन लभ्यः" इति श्रुतिं प्रमाणीकुर्वत्य इव तद्दर्शने तत्कारुण्यमेव हेतुस्तत्कारुण्यस्य च तत्संकीर्तनमेव हेतुरिति सिद्धान्तं प्रकाशयंत्य इव पूर्वं यत्र तेन संगतिरासीत्तदेव स्थानमाजग्मुस्तमेव जगुरित्याह–पुनरिति ॥ अत्र **तोषिणी**–ततस्तत्रापि स्वैस्तस्यावरोधशंकया सर्वमपि तदन्वेषणमार्गं परित्यज्य सर्वासां समेतानामस्माकं निकट मिदं निर्व्यवधानतया दूरप्रसरवच्छब्दं तदेव लीलापुलिनं गतानां दैन्योपालंभादिमयमुच्चैर्गानमाकलय्य स्वयमेव करुणया श्रीकृष्णस्त्वरितमागमिष्यतीति तं भावयमानास्तथा चक्रुरित्याह–पुनरिति ॥ ४४ ॥ इति श्रीमद्भागवते भावार्थदीपिकाप्रकाशे दशमस्कन्धे पूर्वार्द्धे त्रिंशोध्यायः ॥ ३० ॥ निराशाः कृष्णोपलब्धौ । ताः गोप्यः । तदागमम् कृष्णागमनम् (१) । वेदांतानधिकारिणां साधनचतुष्टयसंपत्तिरहितानां हरिकीर्तनमेव तदुपासनं स्यात्तत्प्रसादजनकत्वेनेत्यतः स्त्रीभूतानां गोपीनामुपासनमाह । चित्ते सन्निहितत्वात्त इति । व्रजंति गोगोपा वासार्थमत्रेति व्रजो गोपावासस्थानम् । श्रयत आश्रयते । त्वयाऽविनाभूतत्वाच्छ्रिय इति भावः । अत्र व्रजे । यतस्त्वदर्थं धृतप्राणा अतो हेतोः । अन्यथा प्राणहानिः स्यादिति भावः । दयितविरहे दयिता न जीवेयुर्नाम, तत्राह–त्वयि धृतेति । युष्मान्विहायाहमन्येषां प्रत्यक्ष एवेति चेदत्राहुः–यद्वेति । कालांतरे दर्शनविषयी भवामि नाधुना, तत्राहुः–यद्वेति । एवमधुनैवैते गोपीजना मां विचिन्वते मृगयंत इति हेतोस्त्वया दृश्यतामिति संबंधः । कनकमंजरीवृत्तम् "कनकमंजरी नभ्र रौ लगौ" इति सूत्रात् ॥ * ॥ पूर्वं जगुरित्युक्तं तदेव किमित्यत आह–गोप्य ऊचुरिति । हे दयित ते जन्मना व्रजो जयति । संबंधिविशेषानुक्त्या सर्वेभ्य एव लोकेभ्य उत्कर्षेण वर्तत इत्यर्थः । वैकुंठलोकोऽपीदृश इति तद्व्यावृत्त्यर्थमाह–अधिकं यथा स्यात्तथेति। वैकुंठः सर्वोत्कृष्ट एव व्रजस्तु सर्वोत्कृष्टतम इत्यर्थः । तल्लिंगान्तरमाहुः–इन्दिरा महालक्ष्मीः शश्वत् श्रयते सेवते 'श्रिञ्–सेवायाम्' । वैकुंठे तु सैव सेव्यते इत्यतो वैकुंठादपि व्रजः सर्वसमृद्धिपूर्ण इति भावः । एवं तद्वेतुक महासुखपरिपूर्णे व्रजे त्वत्प्रेयस्यो वयमेव सर्वलोकादृष्टश्रुतचरपरमासह्यदुःखं यदनुभवामस्तस्मात्त्राणं त्वां न प्रार्थयामहे, किं त्वेकवारं दृष्ट्वा स्वनयने सफलयेत्याहुः–अत्र वृंदावने हि निश्चितमेव दृश्यताम् । किं द्रष्टव्यम्–तावका जनास्त्वां विचिन्वत इति । कथमेतावत्संतापवत्योऽपि एता न विपद्यंत इति मा संशयिष्ठा इत्याहुः–त्वयि धृता अर्पिता असवो यैस्ते, त्वय्येवोन्मादितैस्ते यद्यस्माकमसवोऽस्मास्वेवास्थास्यंस्तदा तेषु विरहानलदग्धेषु सत्सु वयमेतावत्क्षणे मृत्वा सुखिन्य एवाभविष्यामेति । त्वयि तु स्वनाथे महासुखिनि ते सुखेनैव वर्तंते इति कथमसूनां सुखे सति देहा विपद्यन्तामित्यतस्तवास्मद्दुःखदर्शनात्मकं सुखं शाश्वतिकमेवेति भावः । अत्र श्लोके प्रतिपादं द्वितीयाक्षरस्यैक्यं तथा प्रथमाक्षरसप्तमाक्षरयोश्च कुत्रचित् ॥ अत्र **तोषिणी**–कृष्णैकगम्यो वागर्थो यासां लेखितुमिष्यते ॥ गोप्यस्ताः करुणामय्यः स्वीकुर्वंतु मदाग्रहम् ॥ (१) । पीतश्रीगोपिकागीतसुधासाररसश्रियाम् ॥ श्रीधरस्वामिनां किंचिदवशिष्टं विचार्यते ॥ (२) । अधिकं सर्वतः व्रजे न तत्रतत्र ह्यालक्ष्यते, हि यतः अत्र व्रजे शश्वन्निरंतरं, यद्वा–अधिकमित्यस्यात्राप्यन्वयः । प्रति

शरदुदाशयेसाधुजातसत्सरसिजोदरश्रीमुषा दृशा ॥ सुरतनाथ तेऽशुल्कदासिका वरद निघ्नतो नेह किं वधः ॥ २ ॥

स्मिन्मोदमानेऽत्र तु तावकास्त्वदीया गोपीजनास्त्वयि त्वदर्थमेव कथंचिद्धृता असवो यैस्ते त्वां विचिन्वतेऽतस्त्वया दृश्यतां प्रत्यक्षीभूयतामिति। यद्वा अस्माभिर्भवान् दृश्यताम् यद्वा एवं त्वया दृश्यतामेते विचिन्वत इति॥ १ ॥अत्र स्वतंत्राणां बहूनां वक्तृत्वादपरा आहुरिति सर्वश्लोकेष्ववतारणास्ति। अथापि संगतिरुच्यते।तत्र विचिन्वंतु मम किमिति चेत्तत्राहुः शरदिति। शरदुदाशये शरत्कालीने सरसि साधु जातं सम्यग्जातं यत्सरसिजं सुविकसितं पद्मं तस्योदरे गर्भे या श्रीस्तां मुष्णाति हरतीति तथा तया दृशा नेत्रेण हे सुरतनाथ संभोगपते वरदाभीष्टप्रद अशुल्कदासिका अमूल्यदासीर्नो निघ्नतो मारयतस्ते तव त्वया क्रियमाण इह लोकेऽयं वधो न भवति किम्। शस्त्रेणैव वधो वधः किं

मुहुराधिवयेनेत्यर्थः। इंदिरेति संपत्तदधिष्ठात्र्योरभेदेन निर्देशः तदधिष्ठानेनैव तद्वृद्धेः। एवं तत्प्रभावेणात्रत्यानां सर्वेषामेव सर्वमंगलजातं, केवलं दैवहतानामस्माकमेव सद्यः दुःखं तत्राप्यधिकमिदं सर्वज्ञेन परमदयालुना स्मत्प्राणवल्लभेनापि न ज्ञायत इति तदधुनान्यत्तावदस्तु तद्दर्शनमात्रमपि जायतामिति व्यंजयितुं प्रार्थयन्ते—दयितेति।दृश्यताम् ज्ञायताम्। दुःखदर्शने सति परदुःखकातरोऽवश्यं साक्षाद्भवेदिति तु निगूढोऽभिप्रायः।किं तद्दुःखम्, तदाह—दिक्ष्विति। अनेन बहुलपरिश्रमादिकं परिभ्रमणं च सूचितम्।तावकास्त्वया स्वीकृतास्त्वदीयताभिमानवन्तो वा। अत एव विचिन्वते अन्वेषणेन बहुदुःखमनुभवंतीत्यर्थः।अतस्तावकत्वेनैव तद्दुःखमन्यथा तदनुपपत्तिरिति भावः।तत्र दयितेत्यनुकम्पां जनयन्ति 'दयतेऽनुकम्पते' इति निरुक्त्या। दैन्यात् दयते चित्तमादत्त इति क्षीरस्वामिनिरुक्त्यनुसारेण किंचिदुपालंभतोपि तामेव। ननु कैतवरहितं प्रेम न तिष्ठति मानुषे लोके, यदि भवति "कस्य विरहो विरहे भवति, को जीवति" इति न्यायेन दयितस्य विरहे दयिता न जीवेयुर्नाम, सत्यं, त्वत्त एव न म्रियन्ते इत्याहुः—त्वयि निमित्ते धृतासवः त्वत्प्राप्त्याशया जीवंतीत्यर्थः।यद्वा—त्वयि विषये प्राणा इंद्रियाणीति यावत्। त्वन्यस्तत्वेन पश्यन्तीत्यर्थः। एषु श्लोकेषु पदवर्णादिसाम्यापेक्षया प्रायः प्रतिपादं द्वितीयाक्षारस्यैक्यं तथा दलद्वये कुत्रचिदन्यत्रापि क्वचित्प्रथमाक्षरसप्तमाक्षरयोश्चेति कुत्रापि कथंचिद्विचार्यम्। तच्च मुक्ताफलटीकायां विवृतमस्ति। अत्र दृश्यतामित्यत्र स्वामिचरणानां प्रथमार्थः पचेर्विक्लित्तिविक्लेदनावद्दृशेरपि प्रकाशप्रकाशनार्थत्वात्समर्थनीय इति ॥ १ ॥ अवतारणा अवतरणिका। सङ्गतिः प्रसङ्गावसरादिरूपा। तत्र ताः। तत्र आक्षेपे। शरदुदाशय इत्यलुक्समासः। किं शस्त्रेण शतघ्न्यादिना। यतो दृशा भवत्येव वधोऽतः कारणात् त्वन्नेत्रहृतास्मत्प्राणप्रत्यर्पणार्थम्। इति भाव इति—दर्शनाभावेऽस्माकं प्राणा अस्माकं देहेषु नायास्यन्ति किन्तु गमिष्यंत्येवेत्याशयः। यथासंभवम् यथायोग्यम्। सर्ववाक्यस्य सर्वश्लोकस्य शेषः, अंते योज्यमित्यर्थः। दृशः परमतस्करत्वम् उत्तमकाले जलदुर्गे साधूनामुत्तमद्रव्यांतर्न्यस्तलक्ष्मीतुल्यमहाधनस्य प्राणस्य हरणात् ॥ * ॥ ननु किमहं युष्मभ्यं दुःखं दित्सामि यदेवं सूचयथेति तत्र त्वमस्मान् हंस्येवेत्याहुः—शरदिति। दृशैव सुरतं नाथसि याचसेऽथ च दृशैव वरद अभीष्टसुखं ददासि अथ च तयैव दृशा प्रेमानलपुंजप्रक्षेपिणो निघ्नतोऽशुल्कदासिका अस्मान्मारयतस्तव इह किं न वधः, किं शस्त्रेणैव वधो वधः दृशा वधो बधो न भवति, अपि तु भवत्येव, तस्मात् हे वरद अभीष्टं ददद्देव अभीष्टमैहिकं पारत्रिकं सुखं द्यसि खंडयसीत्यर्थः। किं चास्मासु ते स्वत्वं चेद्भवति तर्हि स्वधनं पालय ज्वालय वा न दोषः। वयं तु त्वया न शुल्केन क्रीता नापि परिणयेन गृहीताः किं त्वशुल्कदासिका वयं स्वयमेव मौग्ध्यादभूमेत्यर्थः। तत्र तस्य मोहनोन्मादनचौरचक्रवर्तित्वमेव हेतुं वदन्त्यो दृशं विशिषंति—शरत्कालसंबंधी य उदाशयः गंभीरस्वच्छजलपूर्णस्तडाग इत्यर्थः। साधु जातं साधुसमयप्रदेशप्रकारतो जातं सत् जात्याप्युत्तमं यत्सरसिजं विकसितपद्मं तस्योदरस्थां श्रियं शोभां संपत्तिं मुष्णाति चोरयतीति तयेति दृशः सौंदर्यसौरभ्यशैत्यसौकुमार्याण्यसाधारणान्युक्तानि। या खलु तादृशं जनदुर्गमप्युल्लंघ्य तादृशाभिजातस्य जनस्यान्तःपुरं प्रविश्य संपत्तिं चोरयति, सा तव दृक् चोरिका केनापि मोहनोन्मादनधूलिप्रक्षेपणोन्मादिताभिरस्माभिः स्वयमेव दत्तं सुरतधनं प्राणांश्च नीत्वा तुभ्यं ददावतः पूर्वमुक्तं त्वयि धृतासव इत्यतो वयं त्वया निर्धनीकृता हता एवेति परःसहस्रस्त्रीवधपातकं त्वया गृहीतमेवेति ध्वनिः। अतः पापाद्भीत्यापि दर्शनं देहीत्यनुध्वनिः ॥ अत्र **तोषिणी**—शरदुदाशय इति जन्मकालयोस्साद्गुण्यं दर्शितम्। साधुजातेति जन्मनः। सदिति जातेर्व्यक्तेश्च। उदरेति तत्रापि तदंतः कोशस्येति कमलस्य शोभा परम

विषजलाप्ययाद्व्यालराक्षसाद्वर्षमारुताद्वैद्युतानलात् ॥ वृषमयात्मजाद्विश्वतो भयादृषभ ते वयं रक्षिता मुहुः ॥ ३ ॥

दृशा वधो वधो न भवति किंतु भवत्येव । अतस्तव दृशाऽपहृतप्राणप्रत्यर्पणाय त्वया दृश्यतामिति भावः । त्वया दृश्यतामिति यथासंभवं सर्वत्र वाक्यशेषः ॥ २ ॥ किं च बहुभ्यो मृत्युभ्यः कृपया रक्षित्वा किमितीदानीं दृशा मन्मथं प्रेष्य घातयसीत्याहुः । विषेति । हे ऋषभ श्रेष्ठ विषमयाज्जलाद्योऽप्ययो नाशस्तस्मात्तथा व्यालराक्षसा दघासुराद्वर्षान्मारुताच्च वैद्युतानलादशनिपाताद्वृषोरिष्टस्तस्मान्मयात्मजाद्व्योमाद्विश्वतोऽन्यस्मादपि सर्वतो भयाच्च कालियदमनादिना रक्षिताः । किमिदानीमुपेक्षस इति

काष्ठा दर्शिता । तादृशतच्छ्रीमुषा स्वश्रिया तच्छ्रियं हरत्येवेत्यर्थः । यत्रयत्र सा स्फुरति तत्रतत्र तच्छ्रीर्न दृश्यते इति नवनवश्रीयुजाऽनया पुनः चोर्यत एव सेति भावः । दृशेत्येकवचनमेकयैव सूचनात् । एकयापि किमुत एताभ्यामिति श्लेषात् । दृशेति सुरतनाथेत्यत्राप्यन्वयः । हि दृशैव सुरतयाचकेति त्वयैवास्मासु तदिच्छा कारिता तत्र च वरदेति वरदानेन दृढीकृता चेति तत्रास्माकं न दोषः । अशुल्कदासिका इति–प्रत्युत गुण एव भवतस्तु सोपि दोषः, संप्रति तु महानेवेत्याहुः–निघ्नत इति । श्लेषेणापि तस्मिन्नेव दोषार्पणाय चौर्यक्रियाभिनिवेशो दर्शितः । स हि चौरेषु त्रिधा संभवति साधूनामपि संपत्त्यादाना दत्युत्कटदोषस्यागणनेन, अतिनिगूढपरवस्तुज्ञानेन, अतिदुर्लंघ्यलंघनेन च । तत्र प्रथमं सत्सरसिजेतिपर्यंतेनोक्तम् । शरदुदाशय इति स्वच्छतादिगुणयुक्तस्य जनयितुः, साधुजातेति जन्मनः, सदिति सद्रूपगुणस्य च प्रशंसनात् । द्वितीयं महाजलान्तः सरसिजोदरे विलीय स्थितत्वेन । तृतीयं च वर्षानंतरकालिकत्वादतिपूर्णस्योदाशयस्य दुरवगाहमध्यदेशत्वेन सहस्रपत्राख्यसत्सरसिजोदरस्य दृग्भिर्दुर्भेदत्वेन चेति । किं च, त्वद्भयादिव तथा निगूढापि श्रीनायिका मुष्टा ततः सरलानां व्रजवृंदावनयोर्निर्भयं भ्रमंतीनामस्माकं वा का वार्ता, भवत्वस्माकमपि तद्द्वारा मोषणं किं तु सा कृततादृशकौटिल्यापि स्वचक्षुषोरन्तरे रक्षिता वयं तु तादृशसरला अपि बलान्मोषणे प्रत्युताशुल्कदासिकास्तत्रेर्ष्यां त्यक्त्वा निरुपाधितया सेवमाना अपि तद्द्वारा पुनर्निहन्तुमारब्धा इति परमान्याय्यमित्याहुः–निघ्नत इति । नेह किं वध इति । चौर्याल्लोकेन न ज्ञायतां नाम हत्यापि किं न स्यादित्यर्थः । संबोधनद्वयेन चेदं ज्ञाप्यते–अहो जातं तत्सर्वं त्वयैतदर्थमेव मृषा प्रपंचितमिति । अन्यत्तैः । यद्वा–तादृशदृशैव शुल्कदासिकाः । तद्रूपेणैव शुल्केन दासिका इत्यर्थः । तादृशीरपि निघ्नतस्त्यागेन मारयतः । हे सुष्ठुरतानां जनानामुपतापक । नाथतेरुपतापार्थत्वात् । तथा हे निजवरच्छेदक अतो निजदोषपरिहारार्थमप्यागम्यतामिति भावः ॥ २ ॥ इतोप्यधिकमुपालंभमाहुः–किंचेति । प्रेष्य प्रेर्य । यद्वा–ऋषभेत्यवतारांतरनाम्ना संबोधयंति, ऋषभदेववत्समाधिनिष्ठत्वात्किन्नास्मान्पश्यसि । यद्वा--यथर्षभावतारेणार्त्ता वृष्टिभयात्प्रजा रक्षिताः पूर्वं स एव त्वं दीनदयालुरित्यभिप्रायः । यथर्षभो गवेन्द्रः परपीडां न वेत्ति तद्वत्किमधुना जातोसीति वा । यद्वा--किमिति रक्षिताः कुतोऽविता मारिताः स्याम चेत्तदैव भद्रमभविष्यदधुना स्वह स्तमारणायावशेषिताः स्त्रीवधोऽतिनिंद्यो भविष्यत्येवेत्यन्ये । इति भाव इति--''अंते रण्डाविवाहश्चेदादावेव कुतो न सः'' इति न्यायेन रक्षितोपेक्षा नोचितेत्यभिप्रायः ॥ * ॥ किञ्च जिवांसैव चेत्तव वर्तते तदा पूर्वपूर्वविपद्भ्यः किमिति रक्षिताः, रक्षित्वा वधः खल्वनुचित एवेत्याहुः–विषमयाजलाद्योऽप्ययस्तस्मात् । व्यालराक्षसात् अघासुरात् । वर्षात् इन्द्रकृतवृष्टेः, मारुतात् तृणावर्तात् । वैद्युतानलात् इन्द्रकृतवज्रक्षेपात् । वृषात् अरिष्टात्, मयात्मजात् व्योमासुरात् । विश्वतोऽन्यस्मादपि सर्वतोभयात्कालियदमनादिना । हे ऋषभ पुरुषश्रेष्ठ स्वरक्षणादेव त्वदेकप्राणा वयं रक्षिताः वर्षादिभ्यस्तु सर्वव्रजरक्षणादेव तदन्तःपातिन्यो वयमपि रक्षिताः । अत एव रक्षके त्वयि विश्वस्य पंचशरज्वालोपशमार्थं वयमागताः, त्वया तु ततोपि कोटिगुणितया स्वविरहानलज्वालया दंदह्यामह इति विश्वस्तघातादपि त्वं न बिभेषीति भावः । अरिष्टव्योमवधस्य भावित्वेपि गर्गभागुर्यादिमुखतः कृष्णजन्मपत्र्यां श्रवणस्य भूतत्वेनैव भूतनिर्देशः ॥ अत्र **तोषिणी**–एवं परंपरया सर्वसाधारणतया त्वया वयं सदा रक्षिताः स्म एवं तर्हि '' विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् '' इति नीतिः कथं न स्मर्यतामित्यभिप्रेत्याह–विषजलाप्ययादिति । विषजलं कालियह्रदजलं तेन पीतेनाप्ययात् गवां गोपानाञ्च मरणात् । व्यालराक्षसात् अघात् 'रक्षो विदित्वाखिलभूतहृत्स्थितः' इत्यनेन तस्यैव व्यालरूपस्य

**न खलु गोपिकानंदनो भवानखिलदेहिनामंतरात्मदृक् ॥ विखनसाऽर्थितो विश्वगुप्तये सख उदेयिवान्सात्वतां कुले ॥ ४ ॥**

**भावः ॥ ३ ॥ अपि च विश्वपालनायावतीर्णस्य तव भक्तोपेक्षाऽत्यंतमनुचितेत्याशयेनाहुः । न खल्विति । हे सखे भवान्खलु निश्चितं यशोदासुतो न भवति किं तु सर्व**

राक्षसत्वेन निर्देशः कृत इति । तस्माद्बालवत्सान् गिलितवतो वयं रक्षिता इति सर्वगोकुलजीवनरूपाणां तेषां रक्षणेन गोकुलस्य रक्षणाद्वयमपि रक्षिता इत्यर्थः, इति परंपरा दर्शिता । वर्षमारुताद्वर्ष मिश्रान्मारुतात् तत्रैव 'वज्राश्मपरुषानिलैः' इत्युक्त्या । वैद्युतानलाच्च श्रीगोवर्धनधारणेन त्वया रक्षिता इति सर्वसाधारणता दर्शिता । वृषमयात्मजात्समाहारः, वृषाद्वत्साकारत्वेनागतादपि परिणामे बृहत्त्वदर्शनात् । 'वराहतोको निरगात्' इतिवत् । सर्वं संगृह्याहुः—विश्वतो भयादिति । तत्रतत्र योग्यतामाहुः—हे ऋषभ सर्वश्रेष्ठेति ॥ ३ ॥ तत्तत्त्वमाहुः—अपि चेति । किन्तु अपि तु । बुद्धिसाक्षी चेत्कथं दृश्य इत्यभिप्रेत्याशंकते—नन्विति । तत्र दृश्यत्वे । विखन्यते मैथुनमृते उत्पद्यत इति विखनाः ब्रह्मा कमलजत्वात् । "यो जातः सर्वतः पूर्वं विना मैथुनमात्मनः । विखनाः स हि विज्ञेयः कुद्दालो विखनास्तथा ॥" इति निरुक्तात् । तेन तथा । यद्वा—श्रीयशोदानंदनो न भवान् तस्याः परमदयार्द्रायाः संबंधेनास्मासु दयोत्पत्तेः । अखिलदेहिनामंतरात्मदृगपि न तत्रास्मद्दुःखज्ञानसंभवात् । न च विश्वगुप्तये ब्रह्मणाऽर्थितः तत्रास्माकमपि रक्षायोग्यत्वाद्गोपीजनरक्षणे किं तेन शपथो दत्तः । भक्तानां कुले च नोदेयिवान् तत्र तत्संबंधेन निरुपाधिकृपालुतासंभवात् । किन्तु स भवान् खे आकाश एवोदेयिवान् इत्याकाशगुणत्वेनासंगौदासीनत्वोद्भवात् । यद्वा--नखान् लुनानीति नखलुः शस्त्रविशेषस्तद्वत्तीक्ष्णस्वभावो हि संसारस्तस्माद्गोपायति रक्षतीति नखलुः गोपिकाभक्तिस्तया नंदत्यानंदयाति वेति । संसृतिक्लेशरक्षकस्य तवानंगार्तिहरणं न दुर्घटमिति भावः । यद्वा—न खलु गोपिका वंशी तया नंदयतीति तथा । यद्वा—गोपिकानंदनो भवान्नेति न किं त्वस्त्येवेति काकुः । खलु प्रसिद्धम् । यद्वा—न खलु गोपिकानंदनोस्ति भवानिति दुःखितावाक्यम् ॥ * ॥ अयि शश्वदसमीक्ष्यभाषिण्यो गोप्यस्तिष्ठत सर्वानंदकंदो नंदनंदनोऽहं स्त्रीवधपातकी विश्वस्तघाती च निर्द्धारितस्तदितो निःसृत्य रहसि क्वचिदेवं स्थास्यामि यथा जन्ममध्ये सकृदपि मद्दर्शनं न प्राप्स्यंतीति तदीयभीषणोक्तिमाशंक्यानुतप्तास्तं प्रसादयितुं स्तुवन्ति—नेति । भवान् गोपिकानंदनः खलु न भवति किन्त्वखिलदेहिनामन्तरात्मा अंतःकरणप्रेरकः, दृक् द्रष्टा चेत्यंतर्यामी भवतीति भागुरिगार्गिपौर्णमास्यादिमुखादश्रौष्म इत्यतो यथास्मान्प्रेरयसि तथा ब्रूमहे इत्यतो मा कुप्य प्रसीद त्वदाविर्भावकारणं च श्रुतमित्याहुः—विखनसा ब्रह्मणा प्रार्थितः सन् सात्वतां यदूनां कुले उदेयिवान् श्रीयशोदागर्भोदय शैलादाविर्भूतः । नन्वेवं चेज्जानीथ तर्हि किमर्थं रूक्षं ब्रूध्वे, तत्राहुः—हे सख इति । त्वयैव रससिंधौ वयं निमज्जिता इति परामृश्य विश्वं पालयन् विश्वांतर्वर्तिनीरस्मानपि पालय कृपयैवेति भावः । यद्वा—स्वप्रेयसीनामेवं दुःखं द्रष्टुं नृदेवतिर्यगादिमध्ये कोऽपि न समर्थः । यथा त्वं दुःखं पश्यन्नपि सुखमास्से तस्मादेवं वितर्कयाम इत्याहुः—नेति । श्रीयशोदायाः परदुःखलवेऽपि द्रुतचित्तायाः कुक्षौ त्वं न जातोऽसि तत्कुक्षेरे कस्यापि लक्षणस्य त्वय्यनुपलंभादिति भावः । तर्हि कोऽहम् ! त्वं सर्वप्राणिनामंतर्यामीति वितर्क्यसे, स एव जीवानां दुःखं पश्यन्नपि तदंतः सुखं वसति । उदासीनशिरोमणेस्तवात्राविर्भावेऽपि । किं कारणं न जानीम इत्याहुः—विखनसा ब्रह्मणा स्वसृष्टिवृद्धिमभीप्सुना विश्वगुप्तये विश्वस्मिन् जगत्यत्र गुप्तये त्वं प्रार्थितः त्वद्भक्त्या जीवा मुच्यंत इत्यतस्त्वमवतीर्य गुप्तस्तिष्ठ यथा केऽपि त्वामीश्वरं न मन्यंते तदा च तवेश्वरत्वममन्यमानानामी श्वरानुवर्तिनामपि जरासंधादिवदसुरत्वमेव भविष्यति, तत एव मे सृष्टिवृद्धिर्भवित्रीति ब्रह्मवांछितसिद्ध्यर्थं परदारपरद्रव्यचौर्यमात्सर्यहिंसादंभादिकं स्वप्रतिकूलं धर्मं स्वगोपनार्थमंगीकरिष्यन् दुस्त्यजं स्वधर्ममौदासीन्यञ्चाजहदेव सात्वतां कुले उदेयिवान् । सख इति—परदारग्रहणादस्माकं सखाप्यभूदिति भावः ॥ अत्र **तोषिणी**—तदेवम्प्रभावत्वादिदमनुमिमीमहे इति स्तुत्यर्थमाहुः—नेति । श्रीगोपेश्वर्या अपि स्वकुलश्रेष्ठत्वेन स्वांतर्गणयित्वा स्वदै न्येन न्यूनतोक्तिर्न दोषाय । अतोस्माकमिदं हृत्तापं त्वं जानास्येव किं बहूक्त्येति भावः । अवतारकारणमनुमीयते—विखनसेति । अतः स्वभक्तवरप्रार्थनया भक्तकुलेऽस्मिन्नुदितमात्रत्वेनापि भवता भक्ता अनवसरेऽपि परि पाल्या एवेति त्वत्प्रियाणामस्माकमप्यपरापेक्षा न युक्ता । सोऽयं तु परम एवावसर इति भावः । ननु यूयं न मद्भक्ता इति चेत्तथापि परिपाल्या इत्याशयेनाहुः—सख इति । यद्वा—ऐश्वर्यज्ञानमिदं मुन्यादिमुखतस्तन्माहा

विरचिताभयं वृष्णिधुर्य ते चरणमीयुषां संसृतेर्भयात् ॥ करसरोरुहं कांत कामदं शिरसि धेहि नः श्रीकरग्रहम् ॥ ९ ॥

प्राणिनां बुद्धिसाक्षी । ननु स किं दृश्यो भवति तत्राहुः । विखनसा ब्रह्मणा विश्वपालनाय प्रार्थितः सन्सात्वतां कुले उदेयिवानुदित इति ॥ ४ ॥ तस्मात्त्वद्भक्तानामस्मा कमेतत्प्रार्थनाचतुष्टयं संपादयेत्याहुः विरचिताभयमित्यादिचतुर्भिः । हे वृष्णिधुर्य संसृतेर्भयात्ते चरणमीयुषां शरणं प्राप्तानां प्राणिनां विरचितं दत्तमभयं येन तत्तथा हे कांत

त्यश्रवणेन ततो निजभावानुरूप्येण श्रीगोपिकानंदनतामयकेवलमाधुर्य्यानुभवेऽपि तदेतदैश्वर्यं याचकरीत्या निजाभीष्टसाधनमात्राय प्रयोजितमिति ज्ञेयम् । एवमुत्तरत्रापि । अन्यत्तैः । यद्वा—खल्विति प्रतिषेधे खलूक्त्वेति वत् । अंतरात्मदृगपि भवान् गोपिकानंदनो न भवति खलु, अपि तु भवत्येवेत्यर्थः, तदाह—विखनसेति । अहो वयं पाल्या एवेति भावः । यद्वा—सेर्ष्यमाहुः—गोपिकायाः परमदयालुतयाऽस्मत्पालिकायाः श्रीव्रजेश्वर्या नंदनो भवान्न भवति किन्तु परमात्मैव स्वतस्सर्वत्रौदासीन्यात् । एवं नूनमपि ब्रह्मभक्तिवशीकृतत्वादेव भवानेतन्नंदनंदनताव्याजेन विश्वगुप्तये प्रकटोऽस्ति । तत्र च बाल्यक्रीडामयाद्यनुवृत्त्याऽस्माकं सखितां च प्राप्तोऽस्तीति भवता प्रतिपाल्या एव वयमित्याहुः—विखनसेति । अथ वा नञः प्राङ् निर्देशात्सर्वपदैरेवान्वयः । तेन हे असखे प्रतिकूल खलु वितर्के भवान्यशोदानंदनो न भवति, तत्र तत्संबंधेनास्माकमुपेक्षानुपपत्तेः । तथाऽखिलदेहि नामंतरात्मदृगपि न भवति, तत्रास्मद्दुःखज्ञानसंभवात् । न च ब्रह्मणा विश्वगुप्तयेऽर्थितः, तत्रास्माकमपि रक्षाया योग्यत्वात् । सात्वतां भक्तानां कुले च नोदेयिवान्, तत्र तत्संबंधेन निरुपाधिकपालुतासंभवादिति ॥ ४ ॥ एतत् वक्ष्यमाणम् । वृष्णीनां चंद्रवंश्यानां धुर्योऽग्रणीः 'वृष्णिः पांडवचंद्रयोः' इति मेदिनी । यद्वा—वृष्णिषु रेतःसेक्तृषु मुख्य रतिनिपुण । उभयथाऽस्माकमभीप्सितापादनमुचितमिति संबुद्ध्यभिप्रायः । काम्यत इति कांतश्चतुर्वर्गः, स एव कामोऽभिलषितस्तं ददातीति तथा, करचरणयोरुभयोर्विशेषणम् । हे कांतेति वा । श्रीकरग्रहमिति—अतस्तव हस्तसंबंधाद्वयमपि श्रीतुल्या भवेमेत्यभिप्रायः । त्यागानर्हत्वमेव श्रीसमानतेत्यर्थः ॥ * ॥ ननु भो प्रियभाषिण्यः युष्माकं प्रणयकोपोक्तिपीयूषपानार्थमेवांतर्हितं तदधुना लब्धाभीष्टोऽस्मि यथेष्टं वरं वृणुतेति तत्प्रसादोक्तिं संभाव्य साश्वासं पृथक्पृथक् स्वाभीष्टं प्रार्थयन्ते—विरचितेत्यादिचतुर्भिः । हे वृष्णिधुर्य निजकुलकमलप्रभाकर नः शिरसि करसरोरुहं धेहि अर्पय । किमर्थम्, तत्राहुः—कामदम्—यस्य शरप्रहारभयात्त्वां प्रपन्नास्तं कामं द्यति खंडयतीति, तच्छेषभंग्या कामं ददद्पि । न चात्र तस्याशक्तिरिति वाच्यम्, यतः संसृतेर्भयाच्चरणमीयुषां प्रपन्नानां जनानां विरचितमभयं येन तत् । येन संसारभयादपि रक्षितुं शक्यते तस्य कामभयाद्रक्षणे कः खल्वायास इति भावः । ननु तर्हि वो वक्षस्सु दधामि तत्रैव ममापि धित्सा वर्तते, तत्र नेत्याहुः—श्रीकरग्रहमिति । श्रिया लक्ष्म्या कराभ्यां ग्रहो ग्रहणं यद्वारणार्थं यस्य तद्वक्षसि करधित्सायां यथा लक्ष्म्या वार्यते तथैवास्माभिरपि तद्वारणीयमिति भावः ॥ अत्र **तोषिणी**--पूर्वानुसारेणैवैश्वर्यं संभा व्याहुः—विरचितेति मोक्षप्रदत्वमुक्तम् । कामदमिति धर्माद्यर्थिनां सर्वाभीष्टप्रदत्वं त्रिवर्गप्रदत्वं भक्तिप्रदत्वञ्च । श्रीकरग्रहमिति प्रेम्णा प्रियजनवश्यत्वं रसिकत्वं च । एषां यथोत्तरं श्रैष्ठ्यमुक्तम् । सरोरुहरूपकेण सहजशीतलमधुरत्वादिना स्वतः फलरूपकत्वं सूचितम् । तत्र मोक्षो नाम निर्विघ्नप्रेमसंपद्वृद्ध्ये विविधदुःखपरंपरानिवृत्तिरेव ज्ञेयः । त्रिवर्गोऽयं प्रेमसाधनोपयोग्येव, अन्यच्च भक्तानामनपेक्ष्यमेव । एतच्च सर्वं तद्गुणवर्णनं प्रेमोल्लासेनैव ज्ञेयम् । ननु तद्योग्या न यूय मिति चेत्-सत्यम, निजमाहात्म्यापेक्षया धेहीत्याहुः--वृष्णिधुर्य हे निजाशेषमाधुरीप्रकटनाय यदुविशेषकुलेऽवतीर्णेत्यर्थः । तच्च भावाविशेषेणैव तथा ध्येयमित्याशयेनाहुः--कांत हे प्रियेति । अन्यत्तैः । यद्वा—हे विरचितेत्यादिना संसारसंबंधि यावद्भयापहारित्वेन शौर्यमुक्तम्, कांतं च तत्कामदञ्चेति । स्वतः सुखदत्वेन सर्वाभीष्टप्रदत्वेन-च दातृत्वम् । वृष्णिधुर्य वृष्णिविशेष व्रजराजकुलतिलकेति, वयं स्वाभाविकत्वत्पाल्या नैवोपेक्ष्या इत्युभयथापि शिरसि धेहीति । तेनास्मान्बाढमं गीकुरुष्वेति तात्पर्यम् । श्रियः संपदधिष्ठात्र्याः स्वगोकुले वशीकारात्करमिव गृह्णाति यत्तदित्यनेन सर्वसंपदाश्रयत्वं, ततोऽस्माकं विरहभयनाशस्तद्रूपाभीष्टप्राप्तिस्तत्प्राप्त्यानुषंगिकसर्वसंपत्प्राप्तिश्च तेनैव सिध्येदिति भात्र इत्युक्तम् ॥ ९ ॥

## व्रजजनार्तिहन्वीरयोषितां निजजनस्मयध्वंसनस्मित ॥ भज़ सखे भवत्किंकरीः स्म नो जलरुहाननं चारु दर्शय ॥ ६ ॥

कामदं वरदं तथा श्रियः करं गृह्णातीति तथा तद्भवत्करसरोरुहं नः शिरसि धेहि ॥ ५ ॥ हे व्रजजनार्तिहन्हे वीर निजजनानां यः स्मयो गर्वस्तस्य ध्वंसनं नाशकं स्मितं यस्य तथाभूत हे सखे भवत्किंकरीर्नोऽस्मान् भज आश्रय । स्मेति निश्चितम् । प्रथमं तावज्जलरुहाननं चारु सुंदरं योषितां नोऽस्माकं दर्शय ॥ ६ ॥

हे व्रजजनार्तिहन् वयं किं व्रजजना न भवामेति संबुद्ध्याशयः । तथाभूत तादृश।अंतर्द्धानेनालं तव स्मितमेव स्त्रीमानदलनसमर्थमिति तात्पर्यम्। अभजनेऽस्माकं दुर्दशावत्पश्चात्त्वयापि दुःखमेव लब्धव्यं सख्येन तुल्यव्यथत्वात्। यद्वा—विश्वासघातदोषप्रसक्तेरित्याशयेनाहुः—हे सखे भजेति । कमलदर्शनेन भृंगवदस्मन्नेत्रभृंगाणां त्वन्मुखमेव कमलवत्प्रियमित्यभिप्रेत्याहुः—जलरुहेत्यादि । यद्वा—हे योषितां वीर स्त्रीवधे समर्थेति । स्त्रीवधेन शौर्यप्रकटनं सर्वथानुचितम् ‘ व्याधस्याप्यनुकंप्यानां स्त्रीणाम् ’ इत्युक्तेः । विशेषेणेरयति प्रेरयति प्रतिपक्षान्निजानामिति वीरः शूरः ‘ रसे शूरे सुते वीरः ’ इति धरणिः ॥ * ॥ अपरा आहुः—योषितां मध्ये ये व्रजजनास्तेषामार्त्तिं कंदर्पशरप्रहारजनितां हंतीति तथा । तेन देव्यादीनामप्यन्ययोषितां तां न हरसि, यद्वक्ष्यते—‘व्योमयानवनिताः, कश्मलं युयरपस्मृतनीव्यः’ इति । हे वीर दुर्वारमारसंप्रहारमहाजिष्णो । किञ्चास्माकं सौभाग्योत्थं गर्वे तदुत्थं वाम्यलक्षणं मानमपि न सहस इत्याहुः—निजजनानां स्मयध्वंसनं माननाशकं स्मितमपि यस्य । ननु वरं शीघ्रं वृणुत तत्राहुः—भवत्किंकरीरस्मान्भज परिचर । ननु यदि मम किंकर्य एव यूयं तदा मां स्वपरिचरणे किमित्याज्ञापयध्वे, तत्राहुः—हे सखे इति । तर्हि ब्रूत किं वः परिचरणं, तत्राहुः—जलरुहेत्यादि । तोषिण्यान्तु—भज अस्मःदुःखं प्रतिकुर्वन्निकटे तिष्ठ । अहो आस्तां तादृशोऽपि मनोरथः प्रथमं तावन्मनोहरं जलरुहतुल्यमाननमपि दर्शय । तत्र व्रजजनार्तिहन्निति भजनयोग्यत्वमुक्तं व्रजान्तःपातित्वादस्माकमन्यथाऽस्मदंत्यदशापत्याऽऽर्तिहननासिद्धिः स्यात् । वीरेत्युक्तेरदेयस्यापि दानसामर्थ्यमुक्तम् । निजजनो निजप्रियाजनः । स्मयो मानः । तव स्मितमात्रेणापि मानो निरस्यते तदर्थमंतर्द्धानेनालमिति भावः । अनेनैव मनोहरत्वमप्यभिप्रेतमतस्तदवश्यं द्रष्टुमपेक्ष्यत इति भावः । सख इति भजने प्रकारविशेषः सूचितः । यद्वा—अभजने चास्माकं दुर्दशाया पश्चात्त्वयापि किल दुःखं लब्धव्यं सख्येन तुल्यव्यथत्वात्, किं वा विश्वासघातदोषप्रसक्तेरिति भावः । अथ सख्ययोग्यस्यात्मनो विरहदैन्येनौद्धत्यमाशंक्याहुः—भवतः किंकरीरिति । योषितामिति—तत्र चास्माकं सामर्थ्याभावात्स्वयमेव दर्शयेति भावः । यद्वा—परमार्ताः प्रणयकोपेनाहुः—व्रजजनार्तिहन् । तथाभूतोऽपि योषितां वीर, योषिद्वधे समर्थेत्यर्थः । अतो वयं मृतप्राया एव वृत्तास्तथा निजजनसुखग्लापनकपटस्मित तदधुनाऽभवत्किंकरीरन्या अदासीरेव भज, चारु जलरुहाननं च नो दर्शय मरणस्यैव निश्चितत्वात् । यद्वा—व्रजजनार्तिहन् । इह हन् गत्यर्थो ध्येयः, अन्यथा कथमस्माकमियं दशा स्यादिति ॥ अत्र **तोषिणी**—एवं वैयग्र्येणादावंगीकारमात्रं प्रार्थ्य अभीष्टविशेषान्प्रार्थयन्ते—त्रिभिः । तत्र प्रथमेन सामान्यसंगं प्रार्थयन्ते—व्रजेति । भज अस्मद्दुःखं प्रतिकुर्वन्निकटे तिष्ठ । अहो आस्तां तादृशोऽपि मनोरथः प्रथमं तावच्चात्र मनोहरं जलरुहतुल्यमाननमपि दर्शय । तत्र व्रजजनार्तिहन्निति भजनस्य योग्यत्वमुक्तमन्यथाऽस्मदंत्यदशापत्या आर्तिहननासिद्धिः स्यादिति । वीरेत्यदेयस्यापि दानसामर्थ्यमुक्तम् । निजजनो निजप्रियाजनः, स्मयो मानः, तव स्मितमात्रेणापि मानो निरस्यते तदर्थमंतर्द्धानेनालमिति भावः । अनेनैव परममनोहरत्वमप्याभिप्रेतमतस्तदवश्यं द्रष्टुमपेक्ष्यत इति भावः । सख इति भजने प्रकारविशेषः सूचितः । यद्वा—भजने चास्माकं दुर्दशाया पश्चात्त्वयापि किल दुःखं लब्धव्यं सख्येन तुल्यव्यथत्वात् । किं वा विश्वासघातदोषप्रसक्तेरिति भावः । अथ सख्ययोग्यस्याप्यात्मनो विरहदैन्येनौद्धत्यमाशंक्याहुः—भवतः किंकरीरिति । योषितामिति—तत्रास्माकं सामर्थ्याभावात्स्वयमेव कृपया दर्शयेति भावः । अन्यत्तैः । यद्वा—योषितां मध्ये ये निजजनास्तत्परिग्रहास्तेषां स्मयध्वंसनस्मित, अत एव निजदासीरस्मान्भज, तत्प्रकारमेवाहुः—‘जलेत्यादिना—आप्याययस्व नः’ इत्यंतेन । यद्वा—परमार्त्या प्रणयकोपेनाहुः—व्रजजनार्तिहन् हे तथाभूतोऽपि योषितां वीर योषिद्वधे समर्थेत्यर्थः । अतो वयं मृतप्राया एव वृत्तास्तथा निजजनसुखग्लापनकपटस्मित तदधुना असंभवत्किंकरीरन्या अदासीरेव भज, चारु जल

**प्रणतदेहिनां पापकर्शनं तृणचरानुगं श्रीनिकेतनम् ॥ फणिफणार्पितं ते पदांबुजं कृणु कुचेषु नः कृंधि हृच्छयम् ॥ ७ ॥**
**मधुरया गिरा वल्गुवाक्यया बुधमनोज्ञया पुष्करेक्षण ॥ विधिकरीरिमा वीर मुह्यतीरधरशीधुनाऽऽप्याययस्व नः ॥ ८ ॥**

अविशेषेण प्रणताना देहिनां पापकर्शनं पापहंतृ तृणचरान्पशूनप्यनुगच्छति कृपयेति तथा सौभाग्येन श्रियो निकेतनं वीर्यातिरेकेण फणिनः फणास्वर्पितं ते पदांबुजं नः कुचेषु कृणु कुरु । किमर्थम् । हृच्छयं कामं कृंधि छिंधि ॥ ७ ॥ हे पुष्करेक्षण तवैव मधुरया गिरा वल्गूनि वाक्यानि यस्यां तया बुधानां मनोज्ञया हृद्यया गंभीरये

रुहाननं नो दर्शय मरणस्यैव निश्चितत्वात् । अन्यत्समानम् ॥ ६ ॥ न केवलं करनिधानेनैव कृतार्थाः किन्तु स्तनप्रदेशे चरणस्पर्शमपि इच्छाम इत्याहुः—प्रणतेति । वीर्यस्य अतिरेकेणाधिक्येन ॥ * ॥ अपरा आहुः—कुचेषु पदाम्बुजं कृणु अर्पय । किमर्थम्—हृच्छयं कामं कृन्धि छिंधि । अत्राभिस्समर्थरतिमत्त्वेन महाप्रेमवतीभिः स्वीयदुःखापायसुखप्राप्तिज्ञानरहिताभिः श्रीकृष्णसुखैकप्रयोजनककायिकवाचिकमानसव्यापाराभिस्त स्यैव सौरतसुखोद्दीपनार्थमेव स्वीयरूपयौवनकामपीडां विवृण्वतीभिः परमविदग्धाभिः प्रायः प्रेम्णो वाङ्निष्ठतालाघवं न क्रियते किन्तु कामस्यैव, यथा भोजनलंपटं कंचित्स्वमित्रं बुभुक्षुमभिलक्ष्य स्नेहेन तं भोजयितुकाम श्चतुर्विधमिष्टान्नसाधने प्रयतमानो जनस्तेन पृष्टोऽपि स्वार्थमेवाहं प्रयस्यामि न त्वदर्थमिति ब्रूते तदैव प्रेमा गुरुर्भवति यदि त्वेतावान्ममायासस्त्वत्सुखार्थमेव न तु स्वार्थं निष्कामत्वादिति ब्रूते तदा प्रेमा लघुर्भवति । तदुक्तं प्रेमसंपुटे—"प्रेमा द्वयो रसिकयोरयि दीप एव हृद्वेश्म भासयति निश्चलमेव भाति । द्वारादयं वदनतस्तु बहिष्कृतश्चेन्निर्याति शीघ्रमथ वा लघुतामुपैति ॥ " इति । तत्रासां स्वसुखतात्पर्याभावः 'न पारयेऽहम्' इति भगवद्वाक्यादेव स्ववशीकारव्यंजकादवसीयते । तस्य प्रेमैकवश्यत्वमेव सर्वशास्त्रेषु दृष्टं न तु कामैकवश्यत्वमिति ज्ञेयम् । ननु पापाद्बिभेमि, तत्राहुः—प्रणतानां देहिनां पापनाशकम् । तव कुतः पापशंकेति भावः । ननु कठोरेषु युष्मत्कुचेषु सुकुमारं मत्पदाम्बुजं व्यथिष्यते, तत्राहुः—तृणचरानुगम्, तृणचरा गावस्तासामप्यनुगच्छति । गावो हि कठोरस्थलेऽपि घासं चरन्ति यदि तत्रापि तव चरणस्य सहिष्णुता तर्हि किमुतास्म त्कुचेषु, कुचकाठिन्यं प्रत्युत तस्य सुखदमिति भावः । ननु नानालंकारमंडितानां युष्मत्कुचानामुपरि पादार्पणमनुचितं, तत्राहुः—श्रियः शोभाया निकेतनमिति । कुचानामलंकारवर्यमेवैतद्भविष्यतीति भावः । ननु युष्मत्पतिभ्यो बिभेमि, तत्राहुः—फणिनः फणेषु अर्पितम् । त्वं कालियनागादपि न बिभेषि किमुत तेभ्य इति भावः ॥ अत्र **तोषिणी**—अथ [1]द्वितीयेन हृदयान्तरङ्गतद्विरहतापशान्तये प्रलेपौषधमिव प्रथमं हृदयबहिरेव तदङ्गसंगं प्रार्थयमाना दैन्येन तच्चरणमात्रस्यैव संगं तद्गुणानुवादपूर्वकं प्रार्थयन्ते—प्रणतेति । चरणपंकजं ते तावकमसाधारणं किं वा त्वदीयानामस्माकम् । कुचेषु कृणु निधेहि । ननु निर्भयाः ! पापादहं बिभेमि, तत्रा हुः—प्रणतेति । सकृत्प्रणामकारिणामपि यथाकथंचिच्छरणागतानामपि नलकूबरकालियादीनां प्राणिनां पापहन्तुस्तव कुतः पापशंकेति । किं वा मदादिना सागस्सु युष्मासु तदाचरणमयुक्तमिति, तत्राहुः—प्रणतेति । कालियादिवत्त्वत्प्रणतानामस्माकमागो नश्यत्येव । ननु तथापि परमक्रूरेषु मृदुलतरं तत्कर्तुं न शक्यते, तत्राहुः—तृणेति । पशुसंगत्या वनेवने भ्रमणादितो नाधिकं दुःखमिति । यद्वा—अनभिज्ञाभिर्युष्माभिस्संगोऽनर्ह एव, तत्राहुः—तृणेति । तृणान्येव न त्वग्रतो न्यस्तानि शर्करादीनि चरंतीति परमाज्ञता सूचिता । पशव इव वयमनुकम्प्या इति भावः । ननु सुष्ठु शोभनेषु युष्माकं स्तनेषु कथं पदार्पणं कर्तुं युज्यते इत्यत आहुः—श्रीति । सर्वातिशयशोभास्पदत्वादलंकरणवर्यमेव भावीति भावः । भीरुस्वभावत्वाद्युष्मत्पतिभ्यो बिभेमि, तत्राहुः—फणीति । अनेन विषाद्यनर्थध्वंसहेतुत्वाद्विषोपमहृच्छयध्वंसनयोग्यताप्युक्ता । एवं चतुर्भिर्विशे षणैः पापहंतृत्वादिकमुक्तं तत्तदर्थमेवेष्यते, नेत्याहुः—हृच्छयं कृंधीति । अस्माकमेतदेव प्रयोजनमिति भावः ॥ ७ ॥ इत्यर्थ इति । मधुरा तु बालानामपि वागस्ति सा बुधमनोज्ञा न भवति, इयं तु बुधप्रिया

[1] पूर्वं ( ६ पद्यतोषिण्याम् ) मभिलाषविशेषान्प्रार्थयन्ते त्रिभिरित्युक्तं तत्र द्वितीयेन ।

तव कथाऽमृतं तप्तजीवनं कविभिरीडितं कल्मषापहम् ॥ श्रवणमंगलं श्रीमदाततं भुवि गृणंति ते भूरिदा जनाः ॥ ९ ॥

त्यर्थः । मुह्यतीरिमा नो विधिकरीः किंकरीरधरशीधुना आप्याययस्व संजीवयेति ॥ ८ ॥ किं च अस्माकं त्वद्विरहे प्राप्तमेव मरणं किं तु त्वत्कथामृतं पाययद्भिः सुकृतिभिर्वंचितमित्याहुः । तवेति । कथैवामृतम् । अत्र हेतुः । तप्तजीवनम् । प्रसिद्धामृतादुत्कर्षमाहुः । कविभिर्ब्रह्मविद्भिरपीडितं स्तुतम् देवभोग्यं त्वमृतं तैस्तुच्छीकृतम् । किं च कल्मषापहं कामकर्मनिरसनं तत्त्वमृतं नैवंभूतम् । किं च श्रवणमंगलं श्रवणमात्रेण मंगलप्रदम् । तत्त्वनुष्ठानापेक्षम् । किं च श्रीमत्सुशांतं तत्तु मादकम् । एवंभूतं त्वत्कथामतमाततं यथा भवति तथा ये भुवि गृणंति निरूपयंति ते जना भूरिदा बहुदातारः।जीवितं ददतीत्यर्थः । यद्वा एवंभूतं त्वत्कथामृतं ये भुवि गृणंति ते भूरिदाः पूर्वजन्मसु बहु

गंभीरार्थेति भावः । विधिं विधानं कुर्वंतीति विधिकर्यस्ताः " विधिर्ना नियतौ काले विधाने परमेष्ठिनि " इति मेदिनी । शेतेऽनेनेति शीधु मद्यममृतं वा ' शीधुपीयूषमद्ययोः ' इति धरणिः । अधरनिष्ठामृतेनेत्यर्थः । पुष्करेक्षणेत्याकाशवद्व्यापकदृष्टेस्तवास्माकं दर्शनं कथं नेत्यभिप्रायः ' पुष्करं सर्वतोमुखम् ' इत्यमरादयः ॥ * ॥ भोभो मत्प्राणैकवल्लभा रत्नवलयः जीवातुभूतासु भवतीषु नाहमुदासे, दासे मयि संततस्थे प्रेमहेमशृंखलानिबद्धे कथमविश्वस्ताः, विश्वस्ता भवत भावत्कं कंकणमिव हस्तांकगतमेव मां जानीतेति स्फूर्तिप्राप्तं तद्वाक्यमाकर्ण्यापरा आहुः—मधुरया माधुर्यव्यंजकवर्णघटितत्वात्सुश्रव्या । वल्गूनि मंजुलपदार्थवैचित्रीकाणि वाक्यानि यस्यां तया । बुधानां विदग्धानां मनोज्ञया मनो जानत्या गिरा विधिकरीः किंकरीर्न इमाः मुह्यतीस्तन्माधुर्यस्वादभरादानान्मोहं प्राप्नुवतीः पुनरधरशीधुना आप्यायस्व । यद्वा—मोहं प्राप्नुवतीर्नः अधरशीधुनाऽपि आययस्व पुनर्मोहं प्रापयस्वेत्यर्थः ॥ अत्र **तोषिणी**—अत्र तन्मुखसौरभनिभतद्भाषितविशेषजनिततत्पानेच्छात्मकस्य मोहपर्यंतदशागामिनस्तापस्य पुनरन्यदुश्चिकित्स्यतामाशंकमानास्तस्मिन्नेवांगसंगे पेयौषधमिवांतरं च संगमनीयम् । तन्मुखसुधाकरसुधारसमपि प्रार्थयन्ते—मधुरयेति । अधरशीधुनास्मानाप्यायस्व । अन्यथा सद्य एव म्रियेमहीति भावः। कुतः—तव गिरा स्मर्यमाणया 'स्वागतं वो महाभागाः' इत्यादिलक्षणया "कठोरा भव मृद्वी वा प्राणास्त्वमसि राधिके। अस्ति नान्या चकोरस्य चंद्रलेखां विना गतिः ॥" इत्यादिलक्षणया वा, यया कयाचिद्वा । मुह्यतीः अंत्यदशानुगं मोहं प्राप्तवतीः । कीदृश्या गिरा—मधुरया स्वरविशेषेण वर्णविन्यासविशेषेण प्रेममृदुतया प्राणिमात्राणां रुचिरया । तथा वल्गूनि आकांक्षायोग्यतासत्तिसौष्ठववंति वाक्यानि सुप्तिङन्तवर्गा यत्र तादृश्या । तथा बुधानामर्थज्ञानां मनोज्ञया—अभिधालक्षणाव्यंजनादिवृत्तिप्रतिपादितवस्तुरसभावालंकारार्थगांभीर्येणानंदप्रदया । इमा इति प्रत्यक्षत्वादिनाऽसंदिग्धत्वं तत्कालीनत्वं च मोहस्योक्तम् । कथमदेयं दातव्यं, तत्राहुः—हे वीर दयावीर, दानवीरेति वा । पुष्करेक्षणेति—उक्तावसरे सस्मितविलाससुंदरदृष्ट्यादिना गिर एवाधिकं विमोहनत्वमभिप्रेतम् । यदुक्तं कर्णामृते—"पर्याचितामृतरसानि पदार्थभंगी वल्गूनि वल्गितविशालविलोचनानि" इति । यद्वा—गिरा मुह्यतीः अत एव विधिकरीर्दासीत्वं गताः, मोहेनविवेकापगमात् । यद्वा—गिरैव विधिकरीः अधुना विरहार्ता इमा मुह्यतीरित्याह ॥ ८ ॥ अन्यदाहुः—किञ्चेति । वंचितम्—विश्वमिति शेषः, वैपरीत्यादित्यर्थः । अत्र अमृतत्वे । तप्तानां संसारतापसंतप्तानां जीवनम् जलवत्संतापहरम् । उत्कर्षम् आधिक्यम् । न केवलं स्तुतमेवापि तु क्लेशहरमित्याह—किञ्चेति । तत्तु प्रसिद्धं तु । नैवंभूतम् कामकर्मनिरासकम् । विशेषांतरमाह—किं चेति । अनुष्ठानापेक्षम् सेवनापेक्षम् । अन्यद्विशेषमाह—किं चेति । इत्यर्थ इति—न हि जीवदानात्परं दानमस्ति । हरिकथाश्रवणे मोक्षो भवतीत्यर्थः । 'जीवेत्स वै यस्य पुनर्न मृत्युः' इत्याद्युक्तेः । पूर्वपुण्यं विना निरूपणमपि कर्तुं न शक्यत इत्यभिप्रेत्याह—यद्वेति । इत्यर्थ इति—"तेपुस्तपो जुहुवुः सस्नुरार्या यज्जिह्वाग्रे वर्तते नाम विष्णोः" इत्याद्युक्तेः । यतस्ते दर्शनमतिधन्यतमत्वापादकमतो हेतोः । केचित्तु अरे परमव्यग्राः यावदाप्याययेयं तावत्क्षणं मद्वार्तया काले नीयतामिति चेत्, सत्रासमाहुः—श्रीकृष्णविरहिणीनां कथैव मृतं मरणं तप्ते मंडकपाकभाजने जीवनमिव 'जीवनं भुवनं वनम्' इति कोशात् । कविभिरीडितम् 'कवयः किं न जल्पंति' इति वर्णनस्वभावेन तस्यापि वर्णनात् । कल्मषापहम् येषां पापमस्ति ते शृण्वंतु नास्माकं प्रयोजनम् । श्रवणेनैव

प्रहसितं प्रिय प्रेमवीक्षणं विहरणं च ते ध्यानमंगलम् ॥ रहसि संविदो या हृदिस्पृशः कुहक नो मनः क्षोभयंति हि ॥ १० ॥

दत्तवंतः।सुकृतिन इत्यर्थः । एतदुक्तं भवति।ये केवलं कथामृतं गृणंति तेऽपि तावदतिधन्याः किं पुनर्ये त्वां पश्यंत्यतः प्रार्थयामहे त्वया दृश्यतामिति ॥९॥ ननु तर्हि मत्कथा मंगलं न तु प्रयोजनेन । श्रिया मदो येषां तेषु राजसु कविभिर्विस्तारितम् । ये भुवि गृणंति ते भूरिदा महाप्राणिघातकाः 'दो—अवखण्डने' अतोऽधुना त्वदाशया क्षणं जिजीविषूणां तेनालमिति वदंति तद्विगीत मित्राभात्यस्माकम् । यद्वा—भूरिदा हेमदाः—हेमदानस्याखिलाभीष्टप्रदत्वात्तत्र कथामृतवर्णनस्यापि तेनैव जातत्वात् । यथामृतं क्षुद्रोगादिहरं बलपुष्ट्यादिकरं मधुरमन्यविषयविस्मारकं तथा हरिकथापि संसाररोगहरा मधुरा सर्वविषयविस्मारिका, रोगादिनाशकत्वेन बलपुष्टिकर्यपीति ॥ * ॥ त्वत्कर्तृककथाया माधुर्यमहिमा कैश्चाच्यः, त्वत्संबंधिकथाऽन्यवक्तृकाप्यमृतद्वयात्स्वाद्वी श्रेष्ठा चेत्याहुः—तव कथैवामृतं केन साधर्म्येण तप्तान्महारोगादित प्तान्संसारतप्तांश्च जीवयतीति स्वर्गीयान्मोक्षरूपाच्चामृतादाधिक्यं च । कविभिः ध्रुवप्रह्लादादिभिर्वा 'या निर्वृतिस्तनुभृताम्' इत्यादिपद्यैरीडितम् । अन्यदमृतद्वयम् "सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्किं त्वंतका सिलुलितात्पततां विमानात्" इत्याद्युक्तिभिर्न रोचितम् । कल्मषाणि प्रारब्धपर्यंतानि पापानि अपहन्ति, स्वर्गीयामृतं तानि न हन्ति कामादिवर्द्धकत्वात्प्रत्युत तान्युत्पादयत्येव, मोक्षामृतमपि प्रारब्धपापं हंति । श्रवणे नैव स्वाद्यमानत्वादभीष्टसाधकत्वाच्च मंगलम्, तद्द्वयं तु नैवंभूतम् । श्रीमत् प्रेमपर्यंतसंपत्तिप्रदम् । आततम् प्रतिक्षणमेव वक्तृभिर्विस्तृतं, तदुभयं तु न तथा । ये गृणन्ति त एव भूरि बहुतरं ददति तेभ्यः सर्वस्वं ददाना अपि तत्परिशोधयितुं न क्षमन्त इति भावः । यद्वा—तव गीस्तु तदैव मधुरा यदि त्वद्दर्शनसहिता स्यादन्यथा तु महानर्थकरीत्याहुः—तव कथैव मृतं मरणकारणम् । कुतः—तप्तं जीवनं यतः । तप्ततैलादौ जलमिवेति श्लेषः । ननु तर्हि कथं पुराणादिषु श्लाघ्यते तत्राहुः—कविभिर्व्यासादिभिरीडितम् । कवीनां वर्णनमात्रस्वभावेन तस्यापि वर्णनादिति भावः । कल्मषापहमिति—दुःखभोगेन प्राचीनं कल्मषं नश्यत्येवेति भावः । लोककर्तृ कश्रवणेनैव मंगलं स्वस्त्ययनमविनाशो यस्य तत् । यदि जनाः सुधियस्तत्परिणामं दुःखं विचार्य न तत् श्रोष्यन्ति तदा तदपि नंक्ष्यत्येवेति भावः । श्रीमदैर्धनमदान्धैर्दुर्जनैरेव लोका म्रियन्तामित्यभिलब्धधनव्ययेनापि आततम् । देशेदेशे ग्रामेग्रामे पुराणवाचकान्संस्थाप्य विस्तारितम् । अत एव भूरि ये गृणन्ति ते भूरिदाः । भूरीन् श्रोतृलोकान् द्यन्ति खंडयन्ति मारयंति तस्मात्ते कथाजालं वितत्य सौम्या इवोपविष्टा मनुष्यमारकाद्व्याधादपि अधिका दूरत एव सुधीभिरुपेक्ष्या एवेति भावः । वक्ष्यति च 'यदनुचरितलीलाः' इत्यादि । वस्तुतः कथायाः कथकस्य च सर्वोत्कर्षव्यंजिकेयं व्याजस्तुतिः ॥ अत्र **तोषिणी**—अथ कथं तर्हि जीवथेत्याशंक्य प्रेममयस्वानुभवप्रमाणनिर्णीततत्तत्कथामहिम वर्णनेन, तत्र कारणमाहुः—तवेति । कथैवामृतममृतवस्त्वतःफलं फलांतरसाधनञ्च । तत्तद्रूपत्वं दर्शयति—तप्तान् त्वद्विरहतापखिन्नान् किमुत संसारतापखिन्नान् जीवयति मृत्युपर्यंतदुर्दशातोऽपि रक्षतीति, तत्पूर्वेषां जीवन रूपं चेति तथा । 'वंद्यमानचरणः पथि वृद्धैः' इत्यादेः, 'शक्रशर्वपरमेष्ठिपुरोगाः कश्मलं ययुः' इत्यादेश्च दर्शनात् । कविभिः ब्रह्मशिवचतुःसनादिभिरात्मारामैः किमुतान्यैः । ईडितम् वर्तमाने क्तः । अस्मद्व्रजवासि भिर्यद्वर्ण्यते तदेवानूद्य श्लाघ्यते । न तु स्वयं वर्णितुं शक्यत इत्यर्थः, रहस्याज्ञानात् । तथा कल्मषं सर्वरोचकत्वादिप्रभावमयत्वात्स्वांतरायमपि किमुत संसारहेतुपुण्यपापरूपं हंतीति तत् । एवमेवंभूतमपि श्रवणमात्रेणैव मंगलम् तत्तत्सर्वार्थसाधकम्, किमुतार्थविचारेण । अत एव श्रीमत् सर्वत उत्कर्षयुक्तम् । आततं सर्वव्यापकं च प्रसिद्धामृताद्वैलक्षण्यमप्युक्तम्, तदीदृशम् कथामृतं भुवि यत्र कुत्रापि ये गृणंति कथनरूपेण ददति ते भूरिदाः सर्वेभ्योऽपि सर्वार्थप्रदातारः, किमुत गोकुले तत्राप्यस्मासु तु त्वद्विरहतप्तासु जीवनमेव ददतीति भावः । ते चान्यत्र पूर्वोक्ता ब्रह्मादयः व्रजे सर्वे एवास्मासु तु विशेषतः सन्त्य इति ज्ञेयम् । यद्वा—अहो परमव्यग्रा यावदार्प्यायेयं तावत् क्षणं मिथो मद्वार्तया कालो नीयतामिति चेत्, तत्र सत्रासमाहुः—कथैव मृतं मृतिः । कथैव मारयति इत्यर्थः । कुतः—तप्तं जीवनं यस्मात् । तप्ते तैलादौ जलमिवेति श्लेषः । कविभिः स्तावकैः । कल्मषापहं यथा स्यात्तथेडितम् । तन्नाशकतया श्लाघितमित्यर्थः । किञ्च, श्रवणेनैव मंगलम् । मंगलमिति श्रूयते, न त्वनुभूयत इत्यर्थः । श्रीमदाततम् श्रिया सौंदर्यादिना तत्कृतेन मदेन निज जनानादरादिलक्षणेन चाततं—सर्वतः प्रसृतम् । अतो ये तद्गृणन्ति ते भूरिदा महाप्राणघातका इत्यर्थः । एषा परमार्त्युक्तिरेव । 'दो—अवखण्डने' अतोऽधुना त्वदाशया क्षणं जिजीविषूणामलं तेनेति भावः ॥ ९ ॥ कथाश्राविणां किं दर्शनेनेत्याशंकते--नन्विति । निर्वृताः जातानंदाः । तत्रापि कथाश्रुतावपि । "संविद्युद्धे प्रतिज्ञायां संकेताचारनामसु । संभाषणे क्रियाकारे विज्ञाने तोषणेऽपि च ॥" इति कोशात् । रहसि संविदः

चलसि यद्व्रजाच्चारयन्पशून्नलिनसुंदरं नाथ ते पदम् ॥ शिलतृणांकुरैः सीदतीति नः कलिलतां मनः कांत गच्छति ॥ ११ ॥

श्रवणेनैव निर्वृता भवत किं मद्दर्शनेन । न । त्वद्विलासक्षुभितचित्ता वयं तत्रापि शांतिं न विंदाम इत्याहुः । प्रहसितमिति । हे प्रिय हे कुहक कपट । संविदः संकेतनर्माणि ॥ १० ॥ किं च त्वयि वयमतिप्रेमार्द्रचित्तास्त्वं पुनरस्मासु केन हेतुना कपटमाचरसीत्याहुः श्लोकद्वयेन । चलसीति । हे नाथ हे कांत यद्यदा व्रजाच्चलसि पशूंश्चारयंस्तदा

सर्वोपेक्षया भवतीनामिष्टमवश्यं साधयिष्यामीत्येवंरूपाः । कुहकेति स्वोक्तस्यान्यथाकरणादस्मदुपेक्षया सर्वत्र कापट्यपर्यवसानाच्च ॥ * ॥ अस्माकं तु त्वद्दर्शनं विना त्वत्संबंधिवस्तुमात्रमतिदुःखदमित्याहुः--प्रहसितमिति । विहरणं संप्रयोगः । याश्च संविदः संलापनर्माणि । हृदिस्पृश इति--त्वं दुःखदत्वाद्विस्मर्तुमिष्टोऽपि विस्मर्तुं न शक्यस इति भावः । ध्यानेनापि मंगलं परमसुखदमिति चतुर्णामपि विशेषणम् । मनः क्षोभयन्ति व्याकुलयन्ति, एतानि मनसि प्रविश्य सद्यः सुखं दत्त्वा तद्द्वितीयक्षण एव महादुःखं ददत्यत एव हे कुहक! कुहकदत्तवटकान्यपि सद्यः स्वादून्यप्यायत्यां परमदाहकानि । प्राणवातकानीत्यर्थः ॥ अत्र **तोषिणी**—तत्र प्रथमेऽर्थे, ननु हे विचारलुब्धाः दुर्लभे मयि कथमेतावन्तमनुरागं कुरुथ, यदि कुरुत तदा मत्कथाश्रवणेनैव निर्वृता भवत इत्यादिकमाशंक्य तेनानिर्वृतौ तस्यैव पूर्वानुरागमयं चारितं सूचयंति—त्रिभिः । द्वितीयेऽर्थे, आशयापि चिरं जीवितुं न शक्नुम इत्याहुः—प्रहसितमिति । भावे क्तः । वीक्षितमित्यत्र ‘वीक्षण’ इत्यपि क्वचित्पाठः । प्रथमतः प्रहसितं तासां दर्शनमात्रेण भावोल्लासात्, प्रकृष्टं सहजस्मितात्किंचिदुद्भटम् । हसितं कीदृशम्—प्रेम्णा वीक्षितं यत्र तादृशम् । ततो विहरणम् सखिभिः सह क्रीडाविशेषः । तच्च कीदृशम्—ध्याने मंगलं—तदनु चिंतने आशाबंधकारकं निजभावाभिव्यंजनामयत्वात् । ततश्च रहसि संविदः दूरतः स्वयं निर्जने गत्वा वेण्वादिना नर्मोक्तयः । ताश्च कीदृश्यः—याः हृदिस्पृशः हृदयंगमा इति सर्वतोंतरंगत्वं दर्शितम् । यच्छब्दोऽत्र प्रकारविशेषार्थः । ततो लिंगविभक्तिपरिणामेन पूर्वपूर्वत्रानुषंजनीयम्, तेषु यथोत्तरं श्रैष्ठ्यात् । कुहकेति उदर्के दुःखमयत्वात् । तद्चतरः कुहकानामयमेवेति भावः । न इति तत्र बहूनामनुभवं प्रमाणयन्ति । हि निश्चितम् । क्षोभणे हेतुः—प्रिय । हे लोभनेत्यर्थः । एवं तदेकप्रियत्वेन वयं सदा मनःक्षोभदुःखं लभामहे, त्वं पुनरस्मान्वत वंचयसे इत्याशयेन संबोधयन्ति—हे कुहकेति ॥ १० ॥ उपालंभमाहुः—किं चेति । कः ककारोंते यस्य स कान्तः शुकः, स यथा फलादि गृहीत्वा क्षणेन नेत्रे परिवर्तयति त्वमपि तथाऽस्मान्वेणुध्वनिनाऽऽहूय दर्शनरसमापीय गतः । यद्वा—कांतो बकः, स यथा स्वकार्यकरणे साधुरिवास्ते तथा त्वमपि । यद्वा—कांतोंतकः, स यथा साधूनसाधूंश्च सर्वानविशेषेण मारयति तथा त्वमस्मानिति । यद्वा—कांतः काकः, स यथा योऽस्मायन्नार्पयति तस्यैवोपरि मलमुत्सृजति तथा वयं त्वया सहातिप्रीतिकरास्त्वमस्मानेवं रोदयसीति भावः । यद्वा—कांतः कंकः, स यथा मृतान्मारयति तथा त्वमस्माननंगमारिता मारयसीति । यद्वा—कांतश्चातकः, स यथा स्वात्यंबु पीत्वा पुनर्मेघं न सेवते तथा त्वं स्वकार्यं कृत्वास्मांस्त्यजसीति किं बहुना ॥ * ॥ किं च, त्वं केवलमधुनैव दुःखयस्यपि तु अन्यदापि स्वमपि दुःखयित्वाऽस्मभ्यं दुःखं दातुं यतस इत्याहुः—चलसीति । यद् यदा तदा नलिनादपि सुंदरं सुकुमारम् । शिलैः कणिशैस्तृणैरंकुरैश्च सीदति क्लिश्येदिति संभाव्य मनः कलिलतामस्वास्थ्यं प्राप्नोति । यद्वा--कलिं कलहं लाति गृह्णतीति कलिलं तद्भावः कलिलता ताम्, कलेः कलहस्य लतां प्रतानमिति वा । अस्माभिरेव सहास्मन्मनः कलहं करोतीत्यर्थः । स च कलिर्यथा--अरे मनः स यदि वने भ्रमणात्खिद्यति तदा व्रजान्निस्सृत्य नित्यमेव तत्रैव किं यात्यतस्त्वं किमिति वृथा खिद्यसि । अयि निर्बुद्धयो गोपालिकास्तस्य चरणद्वयं स्थलकमलादपि सुकुमारं भवत्येव वने च शिलतृणांकुरशर्कराः संत्येव कथं पीडा न स्यात् । अरे मुग्ध स सुकोमलवालुके पथिपथ्येव भ्रमति । अयि निर्विवेकाः गावः किं पथिपथ्येव घासं चरन्ति । अरे प्रेमांध स चक्षुष्मान् शिलतृणाद्युपरि कथं पादावर्पयेत् । अयि प्रेमगंधेनापि रहिता यद्यावेगवशाद्भ्रमाद्वा तदुपरि पादः पतेत्तदा किं स्यात् । भो भ्रातश्चेतः सत्यं ब्रूषे, एतावद्दुःखमनुभवितुमेव जीवंत्यो विधात्रा वयं सृष्टाः । भो दुःखिन्यः खलु जीवत यूयमहं तु युष्मत्प्राणैः सार्द्धं युष्मद्देहेभ्यो निःसृत्याधुनैव यामीति ॥ अत्र **तोषिणी**—तच्च भवता क्षोभदानं संयोगवियोगयोरविशेषमेव न तु कादाचित्कमित्याहु:--चलसीति द्वाभ्याम् । व्रजादिति--ततश्चलनमारभ्यागमनपर्यंतमेव कलिलता सूचिता । पशूंश्चारयन्निति--विविधानामनंतानां तेषां चारणार्थं वर्त्मपरित्यागेनेतस्ततो भ्रमणाच्छिलादिभिरवसादः संभावितः, तथा पशुतया निर्बुद्धित्वेन ते त्वत्पादाब्जदुर्गमपथेऽपि

दिनपरिक्षये नीलकुंतलैर्वनरुहाननं बिभ्रदावृतम् ॥ घनरजस्वलं दर्शयन्मुहुर्मनसि नः स्मरं वीर यच्छसि ॥ १२ ॥

तन्नलिनसुंदरं कोमलं ते पदं शिलैः कणिशैस्तृणैरंकुरैश्च सीदति क्लिश्येदिति नोऽस्माकं मनः कलिलतामस्वास्थ्यं गच्छति प्राप्नोति । एवंभूतास्त्वद्दुःखशंकितचित्ताः वयम् ॥ ११ ॥ त्वं तु दिनपरिक्षये सायंकाले नीलकुंतलैरावृतं घनरजस्वलं गोरजश्छुरितं वनरुहाननमलिमालाकुलपरागच्छुरितपद्मतुल्यमाननं बिभ्रत्सन् तच्च तादृशं मुहुर्मुहुर्दर्शयन्नो मनसि केवलं स्मरं यच्छस्यर्पयसि । न तु संगं ददासीति कपटस्त्वमसीति भावः ॥ १२ ॥

बत भ्रमंतीति श्लेषेण सूचितम् । शिलं पतितसस्यंगवन्यधान्यादिकम् 'अञ्छिलिकंटकवनम्' इत्यादिहारिवंशोक्तेः । सर्वत्र कंटकाभावात्तु न तदुल्लेखः । नाथ हे व्रजेश्वरेति, तत्तवायुक्तमिवेति । यद्वा--कलिलतागमने हेतुः--नाथ हे प्राणेश्वर इति । कांतेति--अस्मत्कोमलकरस्पृश्यमेव तदिति प्रेमतंत्रोत्रनद्वयं कलिलताया हेतुविशेषः । यद्वा--नाथत्वेन सर्वेषां व्रजजनानां, कान्तत्वेन च विशेषतोऽस्माकमिति भावः । यद्वा--नाथ एवं प्रियजनोपतापक । ननु विवेकिन्यस्तर्हि अवसादहेतुमद्विषयकचिंता त्यज्यतां, तत्राहुः--कांतेति, प्रियजनचिंताया विवेकेप्यपरिहार्य्यत्वात् । ननु "यावतः कुरुते जन्तुः सम्बंधान्मनसः प्रियान् । तावंतोऽस्य निखन्यन्ते हृदये शोकशंकवः ॥" इत्याद्युक्तेः प्रीतेर्दोषत्वप्रतिपादनात्प्रीतिरेव निरस्यतां, तत्राहुः--मनो गच्छतीति । संकल्पमात्रात्मकं तन्नास्माकं बुद्धिवृत्तिविवेकमपेक्षत इति भावः । ननु मनोऽपि युष्माकमेवेत्याशंक्य तस्यापि न दोष इत्याहुः--कांत हे मनोहर । अहो वनभ्रमणं विहायात्र द्रुतमेहीति भावः ॥ ११ ॥ तच्च आननम् । इति भाव इति--कुहकानामौपाधिकप्रेमा भवति न त्वांतर इत्यभिप्रायः । अत्रैव वीरत्वं नान्यत्रेत्यभिप्रायः ॥ * ॥ किं च त्वं संयोगेऽपि नैव सुखं दित्ससीत्याहुः--दिनपरिक्षये सायंकाले । नीलकुंतलैः कुटिलालकैर्मन्दमारुतलोलितैरावृतं, धनरजस्वलम् 'धनं गोधनवित्तयोः' इति विश्वप्रकाशाद्गोरजश्छुरितं वनरुहाननं लोलालिमालाललितपरागभवच्छुरितसरोरुहसदृशमाननं बिभ्रत् । तच्च मुहुः संदर्शयन् गोसंभालनप्रियसखान्वेषणमिषेणेतस्ततः परिवृत्यास्मन्नयनगोचरीभवन् स्वदर्शनस्य सर्वजनानन्दकं स्वभावं ज्ञात्वा एताः कष्टसिंधावेव निमज्जयामीति विमृश्य नोऽस्मभ्यं स्मरं यच्छसि । य एव कुलधर्मपदवीं विषज्वालामिवानुभाव्यास्मानुन्माद्य वनेष्वानीयैवं रोदयतीति भावः । हे वीर व्रजस्त्रीणां धर्मध्वंसनार्थमेव प्रवर्तितस्मरशरप्रहार ॥

अत्र **तोषिणी**--दिनस्य परितः क्षयेऽत्यंतप्राप्ते सतीति दुःखाधिक्यं सूचितम् । नीलाः कुंतला अलकास्तेषां ललाटोपरि श्रीमुखस्यावरणेन शोभाभरापादनात् । तैरावृतमिति सहजसौंदर्यमभिप्रेतम् । अत एव धनरजस्वलमिति पूर्ववत् । रजसा तदुल्लासोऽभिप्रेतः 'पंकांगरागरुचिरम्' इतिवत् । विशेषतस्तु गोपोचितवेषस्य तस्य गोपीजातिषु स्वेष्टोद्दीपनादनुवादः, तत्तच्च सामान्यतः स्मरार्पणे हेतुः । विशेषतस्तु दिनपरिक्षये नीलकुंतलैरिति दर्शयन्निति च पूर्वस्य कामोदयवेलात्वात्, उत्तरस्य च भावातिशयसूचकत्वात् । यदि चादर्शयन्स्वगृहान्तः प्रविशति तथापि तादृशं कामार्पणं न स्यादिति भावः । तत्रापि मुहुरिति गोसंभालनादिच्छलेन पुनःपुनः परितो बहुधा निरीक्षणेन स्मरार्पणस्यापि पौनःपुन्यं दर्शितम् । तत्र कथंचिद्विचारभरेण संवरीतुमिष्यमाणस्यापि तस्य मुहुरुद्रूढीकरणं मनसीति स्मरस्यात्यंतमनोव्यापकत्वमप्रतिकार्यत्वं च । श्लेषेण स्मरमिति, यः कान्तजनस्मरणमात्रेण क्षोभकस्तं साक्षाद्यच्छसीति तस्य महत्त्वं सूचितम् । तत्र सामर्थ्यं सूचयंति--हे वीरेति । तत्रैव तव वीरत्वं न त्वन्यत्रेति सप्रणयरोषनर्म ध्वनितम् । वस्तुतस्तु तादृशत्वस्वीयभावोद्दीपनमिति भावस्य भावनैव मुहुरनूद्यते । अहो व्रजांतस्तादृशवेशदर्शनोपि स्मरोऽभूत्, अधुना च वनांतार्निशि रत्यर्थनागरवेषेण तत्रापि विरहे स्मरणविशेषेणासौ वर्द्धतैवेति विलंबं मा कुर्वीति भावः । एवं श्लोकद्वयेऽस्मिन्निदमपि व्यज्यते--नित्यमेवास्मदभीष्टमपूरयित्वापि गच्छति त्वय्यस्माकं मनः स्नेहमेव वहति न तु तदभावेनौदासीन्यम् । यं स्मरं वहति तत्तु त्वत्प्रेरिततयैव न तु स्वतः, तथा त्वत्स्नेहमयतयैव न तु रूक्षतया, स्नेहस्य स्वभावजत्वात् । त्वं पुनरस्मासु संगेच्छया संगच्छमानासु स्मरमेव ददासि न तु मिथः स्नेहोचितं संगं, तस्मादस्माकं सर्वं स्नेहमयमेव भवतान्तु कपटमयमेवेति॥ १२॥

१ धनरजस्वलमित्येवमेव पाठमभिप्रैत्येदम् ।

प्रणतकामदं पद्मजार्चितं धरणिमंडनं ध्येयमापदि ॥ चरणपंकजं शंतमं च ते रमण नः स्तनेष्वर्पयाधिहन् ॥ १३ ॥
सुरतवर्धनं शोकनाशनं स्वरितवेणुना सुष्ठु चुंबितम् ॥ इतररागविस्मारणं नृणां वितर वीर नस्तेऽधरामृतम् ॥ १४ ॥

अतोऽधुना कपटं विहायैवं कुर्विति प्रार्थयंति श्लोकद्वयेन । प्रणतकामदमिति । हे आधिहन्हे रमण पद्मजेन ब्रह्मणाऽर्चितमापदि ध्येयं ध्यानमात्रेणापन्निवर्तकं शंतमं च सेवासमयेऽपि सुखतमं ते चरणपंकजं कामतापशांतये नः स्तनेष्वर्पयेति ॥ १३ ॥ अपि च हे वीर तेऽधरामृतं नोऽस्मभ्यं वितर देहि । स्वरितेन नादितेन वेणुना सुष्ठु चुंबितं यथेष्टमास्वादितमिति नादामृतवासितमिति भावः । इतररागविस्मारणं नृणामितरेषु सार्वभौमादिसुखेषु रागमिच्छां विस्मारयति विलापयतीति तथा तत् ॥ १४ ॥

तमनुपलभ्यैव बोधयंत्य आहुः—अत इति । यतो नः स्मरं यच्छसीत्यतो हेतोः ‘ पुंस्याधिर्मानसी व्यथा’ इत्यमरः । आधिः कामपीडा तां हन्तीति तथा । अन्यथा नामवैयर्थ्यं स्यादिति भावः । एतत्समर्थकसंबोधनांतरमाहुः—रमणेति । रमते निःशंकमिति रमणः । इह रात्रौ न कोप्यायास्यतीति भावः । प्रणतानां नागांगनादीनां वांछितदम् । वत्साहरणरूपापराधित्वेन वृंदावने नित्यमागत्य पद्मजेनार्चितम् । धरण्या भूमेर्मंडनं भूषणम् । चरणपंकजमित्युक्त्या तापहारित्वं ध्वनितम् ॥ * ॥ ननु यद्यहं सदा दुःखयाम्येवेति निश्चिनुथ्वे तर्ह्यलं मया युष्माकमिति तत्कोपमाशंक्य हंतहंत स्वकर्मदुःखांधाभिस्त्वय्यपि दोष आरोपित इत्यनुतप्य तं प्रसादयितुं सर्वसुखदत्वेन स्तुवत्यस्त्वयैवास्माकं प्रयोजनमिति द्योतयंत्यः स्वदुःखोपशमनं प्रार्थयन्ते—प्रणतेति द्वाभ्याम् । प्रणतानामपराधीभूयापि नम्राणां कालियतत्पत्न्यादीनां कामदम् । पद्म जेन ब्रह्मणा स्वापराधोपशमनार्थमर्चितमतोऽस्माकमपराधः क्षम्यतामिति भावः । धरणिमण्डनमिति—अस्मत्कुचानपि तेषु चरणार्पणेन मण्डयेति भावः । ध्येयमापदीति—“ अनेन सर्वदुर्गाणि यूयमंजस्तरिष्यथ ” इति गर्गोक्तेः । आपदोऽस्मांस्त्रायस्वेति भावः । सर्वत्र हेतुः—शंतमम् सर्वकल्याणरूपं सर्वसुखरूपञ्च । आधिहन् आधिं हन्तुमित्यर्थः । न च स्तनेषु चरणार्पणे तव कोऽपि श्रमः प्रत्युत सुखमेवेत्याहुः—हे रमण । रिरंसो स्तव तेनैवाभीष्टसिद्धिर्भाविनीति भावः ॥ अत्र **तोषिणी**—तदेवम् ‘प्रहसितम्—’ इत्यादिभिस्तासामेव प्रेमोक्तिद्वारा पूर्वमपिवर्णितः श्रीकृष्णस्य पूर्वरागः श्रीमुनींद्रेण स्पष्टीकृतः, तासु तदीयरागस्य ताभिरनुभूयमानतया वर्णने नैव रसावहत्वादिति ज्ञेयम् । एवं तदंगसंगानुरागे तस्यैव दोषं विन्यस्य तथैव तत्प्रार्थनद्वयमुपसंहरंत्यः स्वयं गीतेन जातस्मरक्षोभाः पुनः प्रार्थयन्ते—प्रणतेति द्वाभ्याम् । प्रणतानां नलकूबरनागतत्पत्न्यादीनामभीष्टदमिति सर्वार्थप्रदत्वमुक्तम् । अत एव बालवत्सान् हृत्वा ज्ञातत्वेन ‘ वंद्यमानचरणः पथि वृद्धैः ’ इत्यनुसारान्नित्यमेवागच्छता वा, ‘विखनसार्थितम्’ इति व्याख्यानुसारेण वा पद्मजेनार्चितामिति पारमैश्वर्यमुक्तम् । धरणिं भुवं सुंदरासाधारणैर्लक्षणैर्ध्वजादिभिर्मंडयतीति तथा तदिति सौंदर्यम् । कृपालुत्वञ्च ध्येयमापदीति । इंद्रकृतवृष्ट्यादावनुभवात्सर्वापन्निवारकत्वम् । एवं सर्वार्थसाधनत्वमुक्तम् । परमफलत्वमाहुः—शंतमं चेति । एवं दुःखहानिसुखावाप्तिहे तुत्वं यदुक्तं तत्तदनुसार्येव संबोधनद्वयं विवेचनीयम् । अतोस्माकं विरहादिव्यथां नाशय विचित्रक्रीडादिना सुखं च संपादयेति भावः ॥ १३ ॥ अन्यदाहुः—अपि चेति । हे वीर कामजयवीर । इति भाव इति—शंखक्षीरन्याये नातीवानंदजनकमित्यभिप्रायः । स्तनतटचरणार्पणोद्बुद्धकामाग्निज्वालाशामकमधरामृतं देयमेव । अन्यथा कामोऽस्मान्धक्ष्यतीत्यर्थः । सुरतवर्द्धनम्—निधुवनेऽधरामृतपानेऽतीवानंदो भवतीति भावः । आनंदजनकत्वाच्छोकं मन्मथतापं नाशयतीति तथा । “ विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ” इत्यमरः ॥ * ॥ किं च, भो धन्वंतरिप्रतिमभिषक्शिरोमणे कामरागमूर्च्छिताभ्योऽस्मभ्यं किमप्यौषधं देहीत्याहुः । सुरतवर्द्धनमिति पुष्टिकरत्वम् । शोकनाशनमिति पीडाहरत्वं तस्योक्तम् । न च तदपि महार्घ्यं मूल्यं विनैव कथं देयमिति वाच्यम्, दानवीरेण त्वया तदतिनिकृष्टाय निष्प्राणाय सप्राणीकर्तुं विनैव मूल्यं दीयते एवेत्याहुः—स्वरितेन नादितेन वेणुना कीचकेनापि सुष्ठु सम्यक्तया चुंबितं स्वादितम् । ननु धनजनकुटुंबाद्यासक्तिरेवात्र कुपथ्यं तद्वते जनायैतन्न दीयते, तत्राहुः—इतररागविस्मारणम् । इतरवस्तुष्वेतदेव रागमासक्तिं विस्मारयतीत्यद्भुतमौषधमिदम् । यत्कुप थ्यान्निवर्तयतीत्यस्माभिरनुभूयैव दृष्टमिति भावः । नृणां मनुष्यजातिस्त्रीणां वितर देहि । हे वीर दानवीर दयावीर वा ॥ अत्र **तोषिणी**—अधर एवामृतमधरामृतम् । सुरतं प्रेमविशेषमयं संभोगेच्छां वर्धयतीति तथा

अटति यद्भवानह्नि काननं त्रुटिर्युगायते त्वामपश्यताम् ॥ कुटिलकुंतलं श्रीमुखं च ते जड उदीक्षतां पक्ष्मकृद्दृशाम् ॥ १९ ॥

किं च क्षणमपि त्वददर्शने दुःखं दर्शने च सुखं दृष्ट्वा सर्वसंगपरित्यागेन यतय इव वयं त्वामुपागतास्त्वं तु कथमस्मांस्त्यक्तुमुत्सहसे इति सकरुणमूचुःअटती ति द्वयेन। यद्यदा भवान् काननं वृंदावनं प्रत्यटति गच्छति तदा त्वामपश्यतां प्राणिनां त्रुटिः क्षणार्धमपि युगवद्भवति एवमदर्शने दुःखमुक्तम् । पुनश्च कथंचिद्दिनांते सायंकाले ते तव श्रीमन्मुखं कुटिलाः कुंतलाः केशा यस्मिंस्तादृशमुदुच्चैरीक्षमाणानां तेषां दृशां पक्ष्मकृद्ब्रह्मा जडो मंद एव निमेषमात्रमप्यंतरमसह्यमिति दर्शने सुखमुक्तम् ॥ १५ ॥

तदिति मध्वादिवन्मादकत्वमुक्तम्, मुहुर्लब्धेऽपि तस्मिन्नतृप्तिः सूचिता, निजधाष्ट्र्यादिकं च परिहृतम् । शोकं त्वदप्राप्तिदुःखस्यानुभवमपि नाशयति विस्मारयतीति तथा तदिति चोक्तम् । इतररागविस्मारणम्–नृणामपि किमुत नारीणां तास्वस्माकं तु तद्विस्मारणमिति किं वाच्यम् । शाश्वतस्वस्पृहया तदत्यन्ताभावस्यापि संपादकमित्यर्थः । तदेव प्रमाणयंति–स्वरितेति । वेणोः पुंभावेन ख्यातत्वात्तेषां तत्प्राप्तिस्तांबूलचर्वितादि संबंधेन । तदीयरसे तदुपचारात्क्रमतन्त्रेयेण स्वेच्छावर्धनदुःखांतरस्फूर्तिनाशनविषयांतरविस्मारणान्युक्त्वा तस्य परमपुरुषार्थत्वं दर्शितम् । एवमर्थत्रयमेव पूर्वपद्येऽपि दर्शितमित्यैकार्थ्यं च ज्ञेयम् । न च तत्राऽदेयं किञ्चिदस्तीत्याशयेनाहुः–वीर हे दानशूरेति । अन्यत्तैः । तत्र नादामृतवासितमिति वेणुद्वारा सुष्टुगायकमित्यर्थः । इदञ्च लोभविशेषोत्पादकतागमकं सुगायनस्य श्रोतृषु सुखादिना स्पर्शादीच्छाजनकत्वात् । तत्र चामृतस्याप्यमृतवासितत्वं गंधयुक्तिन्यायेन परस्परकिंचिद्वैलक्षण्यादिति ज्ञेयम् । यद्वा–स्वरितेन संजातषड्जादिस्वरेण वेणुना चुंबितमिति तस्य मादकत्वमेव दर्शितम्, वेणोस्तु चुम्बनं गानपौनःपुन्येन वैजात्याभिव्यक्तेस्तत्संपर्कजस्वरेणापि जगतोप्युन्मादकत्वाभिव्यक्तेश्च ॥ १४ ॥ अन्यच्छृणु इत्याहुः–किं चेति । "त्रसरेणुत्रिकं भुंक्ते यः कालः स त्रुटिः स्मृतः" इत्युक्तेः । ईह विभक्तिलोपस्त्वार्षः । दुःखसमयस्य दुरतिक्रमत्वेन विवृद्धमिवाततत्वात् । युगायते युगवदाचरति, युगशब्दश्चतुर्युगपरत्वेन प्रयुक्तः । तेन दैवद्वादशसहस्रवर्षतुल्यो भवति "दिव्यैर्द्वादशभिर्वर्षैः सावधानं निरूपितम्" इत्युक्तेः । जडोऽनिमिषाकरणादिति शप्यते । यद्वा–चतुर्मुखेष्वष्टनेत्राणि स्वस्यानिमिषाणि कृत्वा स्थितोऽतः स एवाजडः परमविद्वान् उदीक्षतामुच्चैः पश्यत्विति ॥ * ॥ किं चास्माकं दुरदृष्टमेव दुःखप्रदं त्वं किं कुर्या इत्याहुः । यद् यदा भवान्काननं वृंदावनमटति गच्छति तदा त्वामपश्यतामस्माकं गोपीजनानां त्रुटिः क्षणस्य सप्तविंशतिशततमो भागः सोपि युगतुल्यो भवति । दिवसे त्रैयामिकमेव त्वद्विरहदुःखं सर्वेषां व्रजजनानाम् अस्माकं तु त एव त्रयो यामाः शतकोटियुगप्रमाणा भवन्ति । अत्र दुरदृष्टं विना किमन्यत्कारणं भवेदिति भावः । पुनश्च कथंचिद्दिनान्ते तव श्रीयुतं मुखमुत्कंठयेक्षमाणानां तेषामेव गोपीजनानां दृशां पक्ष्मस्रष्टा विधाता जडो निर्विवेकः । दुःखं करोतीति शेषः । एवं च त्वददर्शनेऽपार एव दुःखसिंधुः, दर्शने तु पक्ष्मोद्भवो निमेष एव यो दर्शनविरोधी सोऽपि नवशतत्रुटिप्रमाणो भवन्नवशतयुगायत इत्युभयथापि दुःखं दुरदृष्टवशादेवेति भावः । "त्रसरेणुत्रिकं भुंक्ते यः कालस्स त्रुटिः स्मृतः । शतभागस्तु वेधस्स्यात्तैस्त्रिभिस्तु लवः स्मृतः ॥ निमेषस्त्रिलवो ज्ञेय आम्नातस्ते त्रयः क्षणः ।" इति मैत्रेयः । यद्वा–'कृती–छेदने' दृशां स्वचक्षुषां पक्ष्मकृत् पक्ष्मछेत्ता । अजडश्चतुरो जनस्ते श्रीमुखमुदीक्षतामुत्कर्षेण पश्यतु न तु वयमचतुरा इति भावः ॥ अत्र **तोषिणी**–युगायते दुःखसमयस्य दुरतिक्रमत्वेनेति परमदुःखमतश्चिरदर्शनदुःखमसह्यमिति सत्वरं दर्शनं देहीति भावः । अपश्यतां सर्वेषामपि व्रजजनानां किमुतास्माकम् । कुटिलाः कुंतलाश्चूर्णकुंतला उपरिभागे यस्मिंस्तत् । स्वत एव श्रीयुक्तं मुखमुदीक्षतां चेति चकारान्वयः । भवत्वन्येषां पक्ष्मकृत् उदीक्ष्यमाणानामपीत्याक्षेपार्थः । अन्यत्तैः । यद्वा–दुर्वितर्क्यप्रकृतेः कदापि त्वत्तोऽस्माकं न किंचित्सुखं जातं प्रत्युतादर्शनकालेऽपि दुःखमेवेत्याहुः–अटतीति । पूर्वार्द्धेनाऽदर्शनकाले दुःखमुक्तं, दर्शनकालेऽपि दुःखमाहुः–कुटिलेति । जडोऽनभिज्ञः अपक्ष्मत्वाकरणात् । शपनीय इति शेषः । यद्वा–उदीक्षमा

१ त्रुटि युगायत इति पाठाभिप्रायेण ।

पतिसुतान्वयभ्रातृबांधवानतिविलंघ्य तेऽत्यच्युतागताः ॥ गतिविदस्तवोद्गीतमोहिताः कितव योषितः कस्त्यजेन्निशि ॥ १६ ॥
रहसि संविदं हृच्छयोदयं प्रहसिताननं प्रेमवीक्षणम् ॥ बृहदुरःश्रियो वीक्ष्य धाम ते मुहुरतिस्पृहा मुह्यते मनः ॥ १७ ॥

तस्मात् हे अच्युत पतीन्सुतानन्वयांस्तत्संबंधिनो भ्रातॄन्बांधवांश्चातिविलंघ्य ते अंति तव समीपमागता वयम् । कथंभूतस्य । गतिविदोऽस्मदागमनं जानतः सर्वस्वं विहाय यदर्थमागमनं तत्तात्पर्यं जानत इति भावः । गीतगतीर्वा जानतः । याभिर्वयं मोहितास्तादृशीः गतिविदो वयं वा तवोद्गीतेनोच्चैर्गीतेन मोहिताः हे कितव शठ एवंभूता योषितो निशि स्वयमागतास्त्वामृते कस्त्यजेन्न कोऽपीत्यर्थः ॥ १६ ॥ अतस्त्वया त्यक्तानामस्माकं प्राक्तनत्वद्दर्शननिदानस्य हृद्रोगस्य त्वत्संगत्यैव चिकित्सां कुर्वित्याशये नाहुर्द्वयेन । रहसीति । श्रियो धाम ते बृहद्विशालमुरश्च वीक्ष्यातिस्पृहा भवति तथा च मुहुर्मुहुर्मनो मुह्यति ॥ १७ ॥

णानां सतां पक्ष्मकृत् 'कृती—छेदने' यः पक्ष्माणि कृन्तति स एवाऽजडः रसज्ञो विद्वान्वा । यद्वा—स्वदृशां पक्ष्मच्छिदेवाजडः स एव चोदीक्षतामुच्चैः पश्यतु, वयं तु पक्ष्मच्छन्नदृशो जडाः साक्षादपि किं पश्यामेति भावः ॥ ॥ १५ ॥ यतस्तव वियोगोऽस्माकमसह्यस्तस्माद्धेतोः । अच्युतेति—त्वं वीर्यच्युतिरहितत्वेन क्लीबोऽसि किमिति संबुद्ध्याशयः । अस्मदागमनं सुरतार्थमेवेति जानतो विज्ञस्य । गीतगतीः आकर्षणसंमोहनादिरूपाः । अस्मदागमनं यदि दर्शनार्थं तदापि तत्र गानं तून्मादकमेवातो न वयं त्याज्याः, वयमपि गतिविदो गतानस्मान्न त्यक्ष्यतीति जानंत्य एवागताः । हे कितवेति--निजस्वभावान्यथाकरणात्तव धूर्तत्वं वयं विद्मः । तेनालम स्मासु धूर्ततयेति भावः । निशीत्युक्ते रात्रौ भीरूणां स्त्रीणां त्यागोऽनुचित इति । इत्यर्थ इति--स्वतः प्राप्तवस्तुनस्त्यागो मुक्तसंगस्याप्यन्याय्य एव " उद्यतस्य हि कामस्य प्रतिवादो न शस्यते । अपि निर्मुक्तसंगस्य कामरक्तस्य किं पुनः ॥ " इत्युक्तेः ॥ * ॥ याश्च वेणुवादनसमये पतिभिरंतर्गृहे निरुद्धा आसंस्ताः सेर्ष्यमाहुः--पतिसुतेति । गतिमंन्तिमां स्वस्य दशमीं दशां विदंतीति ताः वयम्, अंति त्वदंतिकमायाताः । हे अच्युत अत्रापि अच्युतोऽभूस्तत्किं विपरीतलक्षणयैव त्वमच्युतो नामेति भावः । तर्हि किमागता इति चेत्—उद्गीतेन मोहिता हतविवेकीकृताः । एवं चेत्तर्हि रे मूढाः सहध्वं वेदनामिति, तत्राहुः—हे कितव शठ एवंभूता योषितो निशि स्वयमागता भीरुं ( रूः ) त्वां निर्दयमृते कस्त्यजेन्न कोपीत्यर्थः । यद्वा—हे कितव हे मत्त निश्यायाताः युवतीः कः खलु युवा त्यजेत् । अतस्त्वं वंचकोऽपि वंचित एवाभूरिति भावः । "कितवस्तु पुमान्मत्ते वंचके कनकाह्वये" इति मेदिनी ॥ अत्र **तोषिणी**—एवं च सति तदेतदद्य कृतमत्यंतमयुक्तमित्याहुः—पतीति । बांधवा मातापित्रादयः । अति—तेषां वाक्यातिक्रमात्स्नेहादिपरित्यागाच्चातिशयेन विशेषेण च धर्माद्यनपेक्षया समूलत्वेन लंघयित्वातिक्रम्य । आगमने हेतुस्तवोद्गीतमोहिता हारिण्य इवेति भावः । न च, यादृच्छिकमुद्गीतमपि तु ज्ञानपूर्वकमेवेत्याहुः—गतिविद इति । अस्मदागमनं जानत इति भावः । यद्वा--ननु भवत्यः परमधीरा गीतमात्रेण कथं मोहितास्तत्राहुः--गीतगतिविशेषान् जानत इति । यैः शक्रशर्वपरमेष्ठिपुरोगा अपि मोहिता इति भावः । यद्वा--भवत्यो विदग्धा ममेदृक्स्वभावमपि जानंतीति कथं न सावधाना जातास्तत्राहुः--त्वत्स्वभावविदोऽपि वयमिति । मोहनमंत्रप्रायत्वात्त्वद्गानस्येति भावः । अहो तदप्यास्ताम्, स्वयमेव तथा नीता योषितः पुनर्निशि कस्त्य जेत् । संभावनायां लिङ् । न कोपीत्यर्थः । अत एव हे कितव वंचनशील । अनेनान्योऽपि कितवः कस्त्यजेत्सर्वस्यापि तस्य कैतवलब्धेनैवार्थेन स्वव्यवहारसाधकत्वं भवतु तस्यापि तिरस्कारित्वमिति तत्रापि विशेषः ।, अत एव हे अच्युत । स्वगुणादव्यभिचारिन्निति सान्त्वयैव तवैषा संज्ञेति भावः ॥ १६ ॥ यतो रात्रौ भीरुत्यागोऽनुचितोऽतो हेतोः । प्राक्तनं यत्त्वद्दर्शनं तदेव निदानमादिकारणं यस्य तस्य । हृद्रोगः कामव्यथा तस्य । चिकित्साम् अपाकरणम् । अतिस्पृहा अत्यभिलाषः । तया अतिस्पृहया । मुह्यति वैवश्यमेतीत्यर्थः ॥ * ॥ किं कर्तव्यं तव मोहनपंचकं कामशरपंचक

व्रजवनौकसां व्यक्तिरंग ते वृजिनहंत्र्यलं विश्वमंगलम् ॥ त्यज मनाक्च नस्त्वत्स्पृहात्मनां स्वजनहृद्रुजां यन्निषूदनम् ॥ १८ ॥

**तव च व्यक्तिरभिव्यक्तिर्व्रजवनौकसां सर्वेषामविशेषेण वृजिनहंत्री दुःखनिरसनीति । विश्वमंगलं सर्वमंगलरूपा चातस्त्वत्स्पृहात्मनां त्वत्स्पृहारूढमनसां नो मनागीषत्किमपि त्यज मुंच । कार्पण्यमकुर्वन्देहीत्यर्थः । किं तत् । स्वजनहृद्रोगाणां यदतिगोप्यं निषूदनं निवर्तकमौषधं तत्त्वमेव वेत्सीति गूढाभिप्रायम् ॥ १८ ॥**

मिवास्मन्नेत्ररंध्रेषु प्रविश्य हृदयं ज्वलयतीत्याहुः—रहसि संविदं रतिप्रार्थनव्यंजकसंभाषणं प्रथमम्, हृच्छयोदयमस्मदवलोकनहेतुकं कंदर्पभावोदयं द्वितीयम्, प्रकृष्टं हसितं यत्र तथाभूतमाननं तृतीयम्, प्रेमयुक्तमीक्षणं चतुर्थम्, श्रियो धाम शोभास्पदं बृहद्विस्तीर्णमुत्तुंगमुरो वक्षः पंचमं वीक्ष्य पुनःपुनर्विशेषतो दृष्ट्वा अतिस्पृहणमतिस्पृहा, भावक्विबन्तः । स्पृहितया मनो मुह्यते मुह्यति । औत्कंठ्यज्वालया मूर्च्छतीत्यर्थः ॥ अत्र **तोषिणी**—ते तव हृच्छयस्य कामस्योदयं वीक्ष्य । कीदृशम्—रहसि संवित् यत्र तम् । अलुक् समासः । तथा प्रकृष्टं हसितं यस्मिन्नानने तदाननं यत्र । तथा प्रेम्णा वीक्षणं यत्र तत्तादृशम् । तदनन्तरमुरश्च वीक्ष्य । तत्र बृहदिति गाढालिंगनेच्छाकारकः सौंदर्यविशेष उक्तः । श्रियः सर्वसंपन्निधेः स्वाभाविकपीतरेखारूपाया धामेति च वीक्ष्यास्माकमतिस्पृहेत्यस्मच्छब्दवाच्यकर्तृकवीक्षणस्पृहायाः क्रियाया वीक्षणस्य पूर्वकालत्वात्क्त्वा प्रत्ययः । स्वातंत्र्यापेक्षया स्पृहाया एव वा वीक्षणकर्तृकत्वोपचारः । अत्रोद्भवतीति शेषः । अतिस्पृहेति तृतीयान्तपदं वा । संपदादिवद्भावेऽपि क्विप् । अतिस्पृहया मनो मुह्यतीत्यर्थः । अतिस्पृहमिति चित्सुखः । अतिस्पृहा च तत्तदनुभवाय तत्संगममात्राय वा तया मनो मुह्यतीति स्पृहायाः परमौत्कंठ्यं द्योत्यते । यद्वा—वीक्ष्येति पूर्ववृत्तमिदं पूर्वमपि तथा तथैव भवेत्, अधुना तत्तदतिशयेन मरणमेवासन्नमिति भावः । एवं स्पृहाया दुर्निवारत्वादप्रतिकार्यत्वं तेन निजपरमदैन्यं चासूचि ॥ १७ ॥ व्रजवनौकसामित्युक्तेर्वयं किं तदंतर्गता नेत्युक्तम् । विश्वमंगलमित्युक्त्या वयं किं विश्वस्मिन्नेत्युक्तम्, यतो वयमपि तदंतस्था एवेति हेतोः, कार्पण्यं बद्धमुष्टित्वम् । इत्यर्थ इति—न ह्यशेषपालकस्य कार्पण्यं शोभत इति भावः । अज्ञात इव भगवान् पृच्छति—किं तदिति । अतिगोप्यम् प्रत्यक्षं वक्तुमशक्यम् । निजदर्शनोत्तरमंगसंगरूपमित्याशयः । स्वजनेति संबोधनं वा ॥ * ॥ किञ्च, कुलवधूनामस्माकं निरपराधानां त्वयैव संमोह्य रात्रौ वनमानीतानामौत्कंठ्याग्निना केवलं प्राणदाहनमेव न तत्राभिप्रेतं किं तु स्वांगसंगदानेन प्राणपालनमपीत्यत्र हेतुमाहुः—तव व्यक्तिरभिव्यक्तिर्व्रजजनौकसां सर्वेषामेवाविशेषेण विश्वमंगलम्—विश्वानि सर्वाणि मंगलानि यत्र तद्यथा स्यात्तथा । वृजिनहंत्री दुःखनिरसिनी । अतस्त्वत्स्पृहात्मनां त्वत्कर्तृका या स्पृहा अस्मद्दर्शनोत्था तस्यामेवात्मा तत्संपूरयितुकामं मनो यासां तासां नः । मनाक् ईषत् किमपि । त्यज मुंच । कार्पण्यमकुर्वन् देहीत्यर्थः । तदेव किम्, तत्राहुः—स्वजनहृद्रुजाम् युष्मज्जनकुचरोगाणाम् यन्निषूदनम् उपशामकमौषधम् । चरणकमलमित्यर्थः । तदेव यद्यस्माभिः कुचेष्वर्पयितुं प्राप्यते तदा तेनैव त्वत्स्पृहां पूरयित्वा स्वप्राणाः पाल्यंत इति भावः ॥ अत्र **तोषिणी**—तदेवं भवतैव निजहृच्छयोदयस्य व्यंजनयास्मासु तेते नाना भावा जन्यन्ते, हंतास्य हृच्छयतापः एवं शान्तः स्यादिति भावनया त्वद्भावभावितत्वेन तत्तद्वासनोदयात्, यतोऽस्माकं त्वयि स्नेहः स्वभावजत्वाद्बलवत्तर इति द्योतयंत्यस्तादृशस्नेहमयाभिलाषविस्फुटहृदयास्सदैन्यं निवेदयंति—व्रजेति द्वाभ्याम् । व्रजौकसां वनौकसां चेत्यर्थः । व्यक्तिः प्राकट्यम्, अतोंतर्द्धानमयुक्तमिति भावः । अंगेति प्रेमसंबोधनम् । न केवलं तेषां वृजिनहंत्री अशेषस्यापि मंगलरूपा वृजिनहंत्री । यद्वा—तेषामेव सर्वसुखदा च । अलमतिशयेनेत्यस्योभयतोऽप्यन्वयः । संबंधे दुःखशमकं किमपि देहि, ननु व्रजौकस्त्वेन भवतीनामपि तत्तदुत्पातजदुःखशांतिर्भविष्यत्येव किमन्यत्प्रार्थयध्वे, तत्राहुः—त्वयि त्वत्प्राप्त्यर्थमेव या स्पृहा तस्यामेवात्मा मनो यासां तासां नः । ननु व्रजवनौकसोऽपि मत्स्पृहास्ततः को विशेषः, तत्राहुः—स्वजनेति । तेष्वपि स्वजनाविशेषो योऽस्मद्विधस्तस्य हृद्रुजां यन्निषूदनमिति । मनागिति परमदौर्लभ्येन याचकरीत्या वा । वस्तुतस्तु हृद्रुजामिति बहुत्वे निशब्देन च तथा तद्विषयककामानाम

यत्ते सुजातचरणांबुरुहं स्तनेषु भीताः शनैः प्रिय दधीमहि कर्कशेषु ॥ तेनाटवीमटसि तद्व्यथते न किं स्वित्कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः ॥
॥ १९ ॥ इति श्रीभा० महापुराणे दशमस्कंधे पू० रासक्रीडायां गोपीगीतं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

अतिप्रेमधर्षिता रुदत्य आहुः । यदिति । हे प्रिय यत्ते तव सुकुमारं पदाब्जं कठिनेषु कुचेषु संमर्दनशंकिताः शनैःशनैर्दधीमहि धारयेम वयम् । त्वं तु तेनाटवीमटसि संचरसि । नयसीति पाठे पशून्वा कांचिदन्यां वा आत्मानमेव वा नयसि प्रापयसि । तत्ततः तत्पदांबुजं वा कूर्पादिभिः सूक्ष्मपाषाणादिभिः किंस्विन्न व्यथते कथं नु नाम न व्यथेतेति भवानेवायुर्जीवनं यासां तासां नो धीर्भ्रमति मुह्यतीति ॥ १९ ॥ इति श्रीभा०म०दशम० पूर्वार्धे टीकायामेकत्रिंशोऽध्यायः ॥ ३१ ॥

निवर्त्यत्वेन प्रत्युत सदा नवनवतया वर्धिष्णुत्वेनैव निरंतरतद्वैविध्यमभिप्रेतम् ॥ १८ ॥ धर्षिताः आकुलाः । संमर्दः संघर्षः । तेन पदाब्जेन । पशवस्तु पालमनुगच्छन्त्येवात आहुः—अन्याम् श्रीराधिकातोप्यलक्षिताम् । काञ्चिदिति गोपीभ्योऽप्यन्यां वा, राधिकातोऽपि प्रियाम् । कदाचिद्वाद्यन्वेषणार्थमात्मानमपीति वा । ततः वनप्राप्तेर्हेतोः । यद्वा—हेतुवाचकयत्पदस्य पूर्वमनुक्तेराह—तत्पदांबुजमिति । ‘ कूर्पं स्यात्सूक्ष्मपाषाणे ’ इति धरणिः । भवदायुष्ट्वाद्वयं जीवेमेत्यर्थः ॥ * ॥ ननु भो रसिका यत्प्रार्थयध्वे तन्मे चरणकमलं संप्रति वनभ्रमणसुखे निमज्जत्यतो युष्मत्कुचेषु स्थातुं नावकाशं लभते, तत्र सरोदनमाहुः—यत्ते इति । तव सुजातमतिसुकुमारं यच्चरणांबुरुहं स्तनेषु दधीमहि तेनापि भीता एव वयं तेन चरणांबुरुहेणाटवीमटसीति काकूक्त्या हंतहंत कीदृशमनर्थमयसाहसं करोषीति भावः । ननु कथं भीताः स्थ, तत्र विशिंषन्ति—कर्कशेष्विति । स्तनानां कठोरत्वमेव भयहेतुरित्यर्थः । किमिति तर्हि धध्वे, तत्राहुः—हे प्रियेति । त्वं तेष्वेव चरणार्पणे प्रीणासीति त्वत्सुखमालक्ष्यैवेति भावः । किञ्च, तदानीं चरणेन स्तनपीडने त्वत्सुखे साक्षाद्दृष्टेऽपि चरणसौकुमार्यदृष्ट्यैव व्यथावश्यं संभवेदेवेति शंकयाऽस्माकं खेदो जायत एवेत्याहुः—शनैर्दधीमहीति । त्वत्सुखेऽप्यार्तिशंकया खिन्नत्वमिति महाभावलक्षणमिदम् । तेन त्वत्संयोगेऽप्यस्माकं दुःखं विधात्रा ललाटे लिखितमेवेति ध्वनिः । किं कर्तव्यम्, तपोभिर्विधिं प्रति स्तनानां कोमलत्वे प्रार्थ्यमाने तव सुखं न स्यात्, कर्कशत्वे च त्वच्चरणानां व्यथेत्युभयथैव संकटमस्माकमित्यनुध्वनिः । भवत्वस्माकमेवं संयोगवियोगयोः कष्टं, त्वं तु स्वैरित्वेपि किं कष्टं सहसे यत्तेनाटवीमटसि । किं चरणांबुरुहमेतदटव्यटनयोग्यमित्युपालम्भो व्यंजितः । ननु यदा यन्मे मनस्यायाति तदा तदहं करोम्येवात्र भवतीनां किमित्याहुः—त्वच्चरणं न व्यथते किंस्वित्, अपि तु व्यथत एव । किन्तु त्वमस्मास्विव स्वांगेष्वपि निर्दय एव, किं वा—एता मद्दुखेनातिदुःखिन्यो भवंति तस्मादेता दुःखयितुं प्रवृत्तेन मया स्वदुःखमपि कर्तव्यं सोढव्यं चेत्याशयेन तां व्यथामपि सहसे, किं वा—अस्मद्दुःखदर्शन एव तव महासुखमतस्तां व्यथामपि त्वं सुखमेव मन्यसे, किं वा—‘ संसर्गजा दोषगुणा भवंति ’ इति न्यायेन यत्पूर्वं ते हृदयं कुसुमसुकुमारमासीत्तदेवास्मत्कठोरस्तनसंगेन संप्रति कठोरमभूद्यथा तथैव तव चरणमपि स्तनसंगेनैव कठोरमभूदतः कूर्पादिभिरपि न व्यथते, किं वा—त्वच्चरणस्पर्शमाहात्म्यात्कूर्पादयोऽपि कोमला एव भवन्ति, किं वा—धरण्यैवातिकारुण्यात्त्वन्माधुर्यास्वादलोभाद्वा त्वच्चरणविन्यासस्थले स्वजिह्वोपस्थाप्यते, किं वा—त्वमस्मत्तोऽपि प्रेमसिंधुर्दैववशादस्मद्विरहसंतप्तो भ्रमत्युन्माददशां प्राप्तः स्वचरणव्यथामपि नानुसंधत्से, इत्येवं नानाकारणानि परामृशंतीनामस्माकं धीर्भ्रमति । न तु क्वापि निश्चयं लभत इति भावः । नन्वेतत्कियत्स्वदुःखं व्यंजयथ, अहं तु तद्दुःखं दुःखं न मन्ये येन प्राणास्तिष्ठंतीति चेदत आहुः—भवदायुषामिति । भवति त्वय्येवायूंषि, भवानेव वाऽऽयूंषि यासां तासाम् । कल्याणवति त्वयि स्थिते त्वेतावद्भिरपि कष्टैरस्मदायुषां न नाश इत्यर्थः । अयं भावः—भवानिवास्मान्दुःखयितुं प्रवृत्तो विधिरेतद्विचारयति स्म—यद्यासामायूंषि संप्रत्यास्वेव स्थापयिष्यामि तदा मद्दत्तैरतिसंतापैर्दग्धायुष इमाः सद्यो मरिष्यंति, ततोहं पुनः काभ्यो दुःखं दास्यामि, तस्मादेतासामायूंषि मत्सधर्मिणि मद्बंधौ कृष्णे निधाय यथेष्टमिमा अम्रियमाणा अपारमेव दुःखं भोजयिष्यामीति, अत एव न म्रियामहे ।

॥ श्रीशुक उवाच ॥ ॥ इति गोप्यः प्रगायंत्यः प्रलपंत्यश्च चित्रधा ॥ रुरुदुः सुस्वरं राजन्कृष्णदर्शनलालसाः ॥ १ ॥
तासामाविरभूच्छौरिः स्मयमानमुखांबुजः ॥ पीतांबरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥ २ ॥

द्वात्रिंशे विरहालापविक्लिन्नहृदयो हरिः ॥ तत्राविर्भूय गोपीस्ताः सांत्वयामास मानयन् ॥ १ ॥ स्वप्रेमामृतकल्लोलविह्वलीकृतचेतसः ॥ सदयं नंदयन्गोपीरुद्गतो नंदनंदनः ॥ २ ॥ इति गोप्य इति । इत्येवंप्रभृति चित्रधा अनेकधा । सुस्वरमुच्चैः । कृष्णदर्शने लालसाऽतिस्पृहा यासां ताः ॥ १ ॥ साक्षान्मन्मथमन्मथो जगन्मोहनस्य कामस्यापि मनस्युद्भूतः कामः

यद्वा–एवं धीरेव तदनिश्चयाद्भ्रमति, प्राणास्त्वस्माकं निश्चयेन देहान्निर्गच्छंत्येवेति त्वं संप्रति पश्येति भावः। नन्वायुषि स्थिते कथं नाशस्तत्राहुः–भवदायुषां त्वत्समर्पितायुषां, स्वायूंषि तुभ्यमस्माभिः संप्रति दत्तानि तैश्चिरं त्वं व्रजे खेलेति भावः ॥ अत्र **तोषिणी**–ननु कास्ता हृद्रुजः किं वा तन्निषूदनमित्यपेक्षायां रुदत्य एवोद्दिशंति–यदिति । अंबुरुहरूपकेण सिद्धेऽपि सुकोमलत्वे सुजातेति विशेषणं ततोऽपि परमकोमलत्वविवक्षया । शनैरित्यत्र हेतुः–भीता इति । तत्र च हेतुः–कर्कशेष्विति । स्तनेषु दधीमहीत्यत्र हेतुः–हे प्रियेति । प्रियत्वेन हृद्येव तत्रापि स्तनेष्वेव धारणस्य योग्यत्वात् । तेनाटवीमटसि अधुना निशि वने भ्रमसीत्यर्थः । स एव चरणस्यैव धारणे पुनःपुनस्तदुल्लेखे च हेतुरुक्तः, अनिष्टाशंकया तत्रैव वर्द्धितस्नेहातिशायित्वात्, पूर्वं गोचारणाय परिभ्रमणात् प्रायिकत्वेन 'शिल–' इत्याद्युक्तेः । संप्रति कर्कशप्रायत्वेन दृश्यमाने पुलिनोपारितनयमुनातटे भ्रमणा त्कूर्पादिभिरिति । यद्यपि तदानीं श्रीवृंदादेव्यादिप्रियत्वेन श्रीवृंदावनस्य च स्वभावेन च तेषामपि तत्रतत्र शंका नास्ति तथापि ''अनिष्टाशंकीनि बंधुहृदयानि भवन्ति'' इत्यादिन्यायेन शंका तासां सा जायत एव । भ्रमति मुह्यति । अत्र हेतुः–भवदायुषामिति । इत्थमेवोपक्रान्तं त्वयि धृतासव इति । मध्ये चाभ्यस्तम् 'चलसि यद्व्रजात्' इति । अतस्तैर्या व्यथा साऽस्मज्जीवन एवोत्पद्यते, तदधुना प्राणान्धारयितुं कथंचिदपि न शक्नुम इति भावः । तदेवं तादृशशंका एव हृद्रुजस्तन्निषूदनं च स्वयमेव परमप्रियतमांगे सलालनसुखनिरासनमेवेति द्रुतमेव समागच्छेति भावः । 'नयसि' इति पाठे गच्छसीत्येवार्थः 'णय–गतौ' इति धातोः । तदेवं तासां सर्व स्यापि भावस्य प्रेमैकमयत्वे स्थिते श्रीभगवतोप्येवमेव ज्ञेयम् । हंतेमाः मयि प्रेमैकमय्य इत्याभ्यः परमसुखमयात्मदानमेवसमंजसम्, तच्च योग्यत्वादेवमेवमित्यालोच्य तादृशप्रेमविलासमयतत्तदिच्छा जायत इति । एवमन्यद प्यूह्यं सहृदयैस्तदेकरसिकैरिति ॥ १९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कंधे पूर्वार्द्धे एकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥ यथा गोपीनामुपासनयात्मानं प्रकाशितवांस्तथा साधनसामग्र्या ज्ञानिनामपीत्यर्थं दर्श यितुमग्रिमाध्यायारंभ इति । विक्लिन्नहृदयः द्रवद्हृदयः । तत्र गोपीसमाजे । ताः विरहतप्ताः । सान्त्वयामास प्रेमवाक्यैः प्रीणयामास ( १ ) । स्वप्रेमामृतकल्लोलैर्निजानुरागाम्बुमहदूर्मिभिर्विह्वलीकृतं विवशं चेतो यासां तास्तथा ताः । 'अथोर्मिषु महत्सूल्लोलकल्लोलौ' इत्यमरः । उद्गत आविर्बभूव ( २ ) । पूर्वं त्वनवकाशतया दूरे स्थिताः पश्चादसावधानानां मूर्छितानां कंठेषु मूर्तिमंतः स्वराः सप्त प्रविष्टा इत्याह–सुस्वरमिति ॥ * ॥ चित्रधा आश्चर्यतालतानादिप्रकारेण गायंत्यः अतिवैवश्योद्रेकात्प्रलपन्त्यश्च सुस्वरं रुरुदुः ॥ अत्र **तोषिणी**–इति शब्दः प्रकारवचनस्तस्मादेवम्प्रभृतीत्येवार्थः । प्रकर्षेण प्रेमोद्रेकादुच्चैर्गायन्त्यः, कदाचित्प्रकर्षेण लपन्त्यश्च विरहव्याकुलतया किञ्चिदनर्थकं जल्पन्त्यः । चित्रधेत्यस्य पूर्वेण परेणाप्यन्वयः । सुस्वरम्–करुणदीर्घस्वरेणेत्यर्थः । हे राजन्निति–तद्दर्शने लालसया तद्युक्तमेवेत्यार्तिसंबोधनम् ॥ १ ॥ तासां गोपीनां मध्ये । शूरवंशे जातः कर्कशस्तासां बहुदुःखदर्शनादप्येतावंतं कालमनाविर्भूत इत्याह–शौरिरिति । कामजयित्वाद्वा शौरिराविरासीदिति, तदेवाह–साक्षान्मन्मथेति । मनो मथ्नाति क्षोभयतीति मन्मथः । पृषोदरादित्वात्साधुः । शरीरं विना केवलमनस एव मंथकत्वेन मन्मथत्वम् । तदुक्तम्–''अपूर्वेयं धनुर्विद्या मन्मथस्य महात्मनः । शरीरमक्षतं कृत्वा भिनत्त्यंतर्गतं मनः ॥'' इति । इत्यर्थ इति–'मनोजये जितं सर्वम्' इत्युक्तेः कामस्य मनोवशीकरणशीलत्वेन तज्जेतृत्वमुपचर्यते, मनोजेता च सर्वजयी कामस्तस्यापि मनसो मोहकत्वेन भगवतो मन्मथमन्मथत्वम् । कोटिमन्मथलावण्यवद्भगवतो रूपदर्शनेन कामोऽपि मोहितोऽभूदित्याशयः ।

तं विलोक्यागतं प्रेष्ठं प्रीत्युत्फुल्लदृशोऽबलाः ॥ उत्तस्थुर्युगपत्सर्वास्तन्वः प्राणमिवागतम् ॥ ३ ॥

**साक्षात्तस्यापि मोहक इत्यर्थः ॥२॥ तन्वः करचरणादयः ॥ ३ ॥**

किं च, तासां गलदश्रुधारामार्जनार्थम्, यद्वा—अपराधक्षमापणार्थं हस्तबंधनाय पीतांबरधर इति । यद्वा—अपराधक्षमापणार्थं तृणवद्दन्ते हस्तेन वस्त्रांचलं गृहीत्वा वस्त्रमिव गले मालां च बद्ध्वेत्यर्थः ॥ ॥ * ॥ शौरिरिति—श्रीगोपीजनपक्ष्यस्य श्रीशुकदेवस्य कृष्णम्प्रत्यसूयोक्तिः । कुटिलांतःकरणक्षत्रजातिप्रादुर्भूतत्वादेव कृष्णः प्रेमवतीभ्य आभ्य एतावद्दुःखं दत्त्वा स्वशौर्यं प्रकटीचकार, यदि सरलान्तःकरणगोपीजातिजातोऽभविष्यत्तदा नैवमभविष्यदित्यर्थव्यंजिका । अत एव तासां दुःखेपि प्रफुल्लमुखः । वस्तुतस्तु, तासामानंदनार्थमेव प्रफुल्लीकृतं मुखांबुजमेव, हृदंबुजं तु संततमेव यस्य सः । पीतांबरः स्कंधाभ्यां पुरो लम्बीकृत्य हस्ताभ्यां धरतीति सः । अपराधं क्षमापयितुमिति भावः । स्रग्वीति—प्रेयस्यैव परिधापितां स्रजं तां दर्शयितुमिति भावः । साक्षान्मन्मथो यः समष्टिकामस्तस्यापि मनो मथ्नातीति सः । जगन्मोहनमपि कंदर्पं मोहयितुमायांतं स्त्रीभावं प्रापय्य तथा मोहयामास, यथा सोऽपि कृष्णसौंदर्यं दृष्ट्वा कंदर्पशरपीडितो मुमोहेत्यर्थः । तेन कृष्णस्तत्प्रेयस्यश्च स्वरूपभूतकंदर्पस्यैव शरपीडिता रमन्ते न तु प्राकृतजगन्मोहककंदर्पस्य, तस्य तत्रानधिकारादेवेति ज्ञेयम् । न हि तुच्छभृत्यस्य प्रबलतरस्वामिनि प्राबल्यमिति भावः । तदानीं साक्षान्मन्मथमन्मथत्वेन महामोहनस्वीयमाधुर्याविष्करणं तासां तादृशस्यापि विरहदुःखस्य निवारणार्थमिति ज्ञेयम् ॥ अत्र **तोषिणी**—तासां तथा रुदतीनामधुना मद्दुःखसंभावनया दैन्यविशेषेणासां रोदनात्प्राणा गतप्राया इति तेन वितर्क्यमाणानामित्यर्थः । एवमात्मानपेक्षया तदेकापेक्षयैव दैन्यविशेषेण तत्प्राप्तिरिति दर्शितम् । शौरिः शूरवंशाविर्भूतत्वेन प्रसिद्धत्वेऽपि तासामेवाविरभूत्सर्वतोऽप्यपूर्वादाविर्भावादित्यर्थः । तथा च वक्ष्यते—'त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत्' इति, "तत्रातिशुशुभे ताभिर्भगवान्देवकीसुतः" इति, "गोप्यस्तपः किमचरन्यदमुष्य रूपं लावण्यसारमसमोर्द्ध्वमनन्यसिद्धम् । दृग्भिः पिबन्त्यनुसवाभिनवं दुरापम्" इत्यादौ च । तथैव श्रीगोपीषु विशेषोक्तिः—'एताः परम्' इत्यादौ, 'वांछंति यद्भवभियो मुनयो वयं च' इति श्रीमदुद्धवसिद्धान्तानुसारेण सर्वाधिकप्रेमवतीषु तासु युक्तमेव च तादृशत्वम् 'प्रपद्यमानस्य यथाश्नतः स्युः' इत्यादिन्यायेन । तथैव दर्शयति—साक्षान्मन्मथमन्मथ इति । नाना वासुदेवादिचतुर्व्यूहेषु ये साक्षान्मन्मथाः स्वयं कामदेवा न तु तदीयशक्त्यंशावेशिप्रकृतमन्मथवदसाक्षाद्रूपास्तेषामपि मन्मथः मन्मथत्वप्रकाशकः "चक्षुषश्चक्षुः" इत्यादिवत् । येषां रूपगुणविशेषाणामंशेन तत्प्रकाशकोऽसौ तानखिलानेव प्रकाशयन्नित्यर्थः । अत एवास्य महामन्मथत्वेनैकाक्षरादिमंत्रा ध्यानानि च संति, किन्तु तस्मिन् ध्यानेऽन्याकारत्वं मन्मथत्वव्यंजनार्थमेव ज्ञेयम् । मन्मथपदस्य यौगिकवृत्त्या तेषामपि क्षोभकादिरूपः सन्निति ध्वनितम् । एवं तादृशरूपस्यादिरसे परमालंबनता भक्त्यन्तरागम्यता च दर्शिता । तदेवं स्वरूपाऽऽविर्भावस्यापूर्वतामुक्त्वा विलासवेशयोरप्याह—स्मयेत्यादिविशेषणत्रयेण । तत्र स्मयमानेति वर्तमानप्रयोगेण तात्कालिकत्वविवक्षया सहजस्मिताद्वैलक्षण्यप्रतीतेः । तथा पीतांबर इत्यनेनैव विवक्षिते सिद्धे धारणप्रयोगोऽतिरिक्त एवेति, तेन तदानीमन्यविशिष्टधारणबोधनात् । तथा स्रग्वीत्यत्रापि प्रशंसायां मत्वर्थीयविधानात् । किं च, स्मितेनात्मनः सुप्रसन्नत्वं त्यागस्य च परिहासमयत्वम्, पीतांबरधारणेन मूर्द्धपर्यंतावृततया स्वस्य तासां परित्यागतः संकुचितचित्तत्वम्, स्रग्वित्वेन केवलतत्संगितया तां विना स्वस्य संगांतरारोचकत्वं ज्ञापितम् । अथ च श्रोतृहृदयतत्प्रवेशाय तात्कालिकशोभावर्णनमिदम् ॥ २ ॥ तम् कृष्णम् । अवयवावयविनोरभेदोपचारात्तनूशब्दोत्रावयवपरः, शरीराणि वा । प्राणशब्द एकत्वं सामान्याभिप्रायम् ॥ * ॥ तन्वः करचरणादयः । आगतमिति पुनरुक्तिस्तासां मूर्च्छितानामुत्थानं तदागमनैकहेतुकमिति स्पष्टीकर्तुम् ॥ अत्र **तोषिणी**—आगतम्—आदौ समुत्कंठया सद्य एव दूरे प्रादुर्भूयागमनक्रमेण निजांतकं प्राप्तं सन्तम् । तथा च विष्णुपुराणे—"ततो ददृशुरायांतं विकाशिमुखपङ्कजम्" इति । अत एव विशेषेण लोकयित्वा दृष्ट्वेति रोदनवैवश्येनेषद्दर्शनेप्यनिश्चयात् । किं वा दृष्टेऽपि परमार्त्या विश्वासाभावात्सम्यङ् निरीक्ष्यैवेत्यर्थः । अबलाः विरहक्षामतयोत्थातुमप्यशक्ता अपि सर्वा युगपदुत्थिताः, तत्र हेतुः—प्रेष्ठेति । तदेकप्रेष्ठत्वेन मरणे जीवने च तदेकहेतुत्वात् । एतदेव दृष्टान्तेन साधयति—आगतामिति । पुनरुक्तिरुत्थाने आगमनैकहेतुतास्पष्टार्थं कृता । विलासाख्योऽ

काचित्करांबुजं शौरेर्जगृहेंजलिना मुदा ॥ काचिद्दधार तद्बाहुमंसे चंदनरूषितम् ॥ ४ ॥ काचिदंजलिनाऽगृह्णात्तन्वी तांबूलचर्वितम् ॥
एका तदंघ्रिकमलं संतप्ता स्तनयोरधात् ॥ ५ ॥ एका भ्रुकुटिमाबध्य प्रेमसंरंभविह्वला ॥ घ्नंतीवैक्षत्कटाक्षेपैः संदष्टदशनच्छदा ॥ ६ ॥

॥ ४ ॥ अंजलिना संहतहस्तद्वयेन ॥ ५ ॥ भ्रुकुटिं भ्रुवमाबध्य कुटिलीकृत्य प्रेमसंरंभेण प्रणयकोपावेशेन विह्वला विवशा दष्टाधरोष्ठा कटाः कटाक्षास्तैर्ये आक्षेपाः परिभवास्तै स्ताडयंतीवैक्षत ॥ ६ ॥

नुभावोयम् । तदुक्तम्—''गतिस्थानागमादीनां मुखनेत्रादिकर्मणाम् । तात्कालिकं तु वैशिष्टयं विलासः प्रियसंगतः ॥'' इति ॥ ३ ॥ काचित् अनिर्दिष्टाभिधा । करादिभिः करादिग्रहणं हरेर्भक्त्यैकलभ्यतामाह । चंदनेन रूषितम् भूषितम् 'रूष—भूषायाम्' धातुः सर्वगोपीषु मुख्यानां कासांचित्स्वस्वभावोचितप्रेमचेष्टितान्याह—काचिदिति पंचभिः । करांबुजं दक्षिणमेवेत्युत्तरार्द्धव्याख्यया व्यक्तीभावित्वात् । विनयमयमैत्र्यात् स्पर्शौत्सुक्याच्चेति भावः । इयमादरमयसंस्पर्शा तदीयतामयघृतस्नेहवती कांतपराधीना दक्षिणा च प्राथम्यात्सर्वज्येष्ठा । चंदनेन रूषितं भक्तिच्छेदेन लिप्तं बाहुं वाममेव, स्वकान्तवामभाग एव स्थित्यौचित्यात् । इयमादरगंधिना स्वकर्तृकालिंगनेन किञ्चिद्घृतस्नेहमिश्रमधुस्नेहवती व्यक्तसख्या किञ्चित्स्वाधीनकान्ता दक्षिणा च । अंजलिनागृह्णादितीयं दास्यप्रायमैत्र्या कान्ताधीना दक्षिणा च ॥ अत्र **तोषिणी**—पूर्वं विरहदैन्येन तुल्यवचनैः सर्वासामेव तुल्यप्रास्तिर्दर्शिता । अधुना प्राप्तनिजालंबत्वेन स्वस्वभावमनुसरन्तीनां मुख्यानां चेष्टितभेदैर्भावभेदानाह—करांबुजम् दक्षिणं जगृहे । वनभ्रमणश्रांततया मतस्य तस्य करावलंबनाय तथा व्यवहारस्यौचित्यात्स्पर्शौत्सुक्याच्च । करस्य दक्षिणत्वं च निजस्कन्धे तद्बाहुधारिण्या द्वितीयायाः कांतसमानस्थितत्वेन वामभागावस्थानौचित्यात्, दक्षिणस्यैव तथा ग्रहणौचित्याच्च । एवमुत्तरोत्तरं ज्ञेयम् । अंजलिनेति निर्देशादियं मृदुः सख्यप्रायदास्या कांतपराधीना दक्षिणा च । चंदनेन रूषितं भक्तिच्छेदलिप्तमिति । इयमाकृष्य धारणात्प्रखरा व्यक्तसख्या किञ्चित्पराधीनकांता दक्षिणा च ॥ ४ ॥ तांबूलस्य चर्वितं भक्षितोच्छिष्टं थूत्कृत्य त्यक्तं तज्जलं वा । संतप्तस्तनयोस्तापापनोदार्थमधाद्दधार ॥ * ॥ अंघ्रिकमलं दक्षिणमेव स्वहस्ताभ्यां गृहीत्वा भूमावुपविष्टा स्तनयोर्न्यधात् । ततश्च वामभुजेन कांतायाः स्कंधमालंब्य वामचरणेन भुवमवष्टभ्य कृष्णस्तस्थाविति ज्ञेयम् । इयं मैत्र्यप्रायदास्या कांताधीना दक्षिणा चेत्यत इमे तदीयतामयघृतस्नेहवत्यौ प्रथमायाः सख्यौ ॥ अत्र **तोषिणी**—तांबूलमत्र प्रतिकुंजं मालादिसाहित्येन वृंदादेव्या स्थापितं, योगमाययैव वा सिद्धम् । शौरेरिति प्रकरणलब्धम् । अंजलिना अगृह्णादिति पूर्ववत् । अत्रौत्सुक्यं त्वधरामृतार्थम् । इयं मृदुर्दास्यप्रायसख्या कांतपराधीना दक्षिणा च । अंघ्रिकमलं दक्षिणमेव स्तनयोर्न्यधात् वामभुजेन प्रियावलंबनेन वामचरणन्यस्तांगभारताप्राप्तेः । संप्रति स्थित एव चायम् उपवेशस्याग्रतो वक्ष्यमाणत्वात् । अत उपविष्टयैव तया चरणधारणं, तस्य तयोर्निधाने हेतुः—संतप्तेति । विरहमयरत्योत्थेन भावेनेति शेषः । 'हृदये' इति पाठे स एवार्थः । इयं प्रखरा दास्यप्रायसख्या कांताधीना दक्षिणा च ॥ ५ ॥ नामैकदेशग्रहणेन भीमपदेन भीमसेनवत्कटपदेन कटाक्षग्रहो ज्ञेयः । घ्नंतीवेति—अरे शठ मामपि त्यक्तवानित्याशयः । राधिकेयमिति प्रतीयत इति ॥ * ॥ भ्रुकुटिमाबध्य भ्रुवं कुटिलीकृत्य । सज्यं धनुः शरसंसक्तं प्रतान्यैवेत्यर्थः । प्रेमसंरंभेण प्रणयकोपावेशेन विह्वला विवशा । कटाः कटाक्षाः शरास्तेषां क्षेपणैः । कृष्णं लक्ष्यभूतं घ्नंतीव—भो कुहकशिरोमणे स्वप्रेमहालाहलं त्वया मयि प्रसृज्य सम्यक्तया सफलीकृतम्, देहान्निसृतप्रायान्प्राणान्दग्धुं किं पुनरपि प्रत्यासीदसि, त्वं साध्वेव परिचितोऽभूरिति व्यंजयंती प्रैक्षत । निर्दष्टदशनच्छदेत्यंगुलिनाऽऽवृतस्य स्वाधरस्य दंशः कोपानुभावः । इयं मदीयतामयमधुस्नेहोत्थमानकौटिल्यवती ॥ अत्र **तोषिणी**—प्रेमसंरंभविह्वला सती भ्रुकुटिमाबध्य निर्दष्टदशनच्छदा भूत्वा कटाक्षैर्घ्नन्तीवैक्षतेत्यन्वयः । कटाक्षेपैः कटाक्षविक्षेपैः । 'संदष्ट—' इति क्वचित्पाठः । शौरिमिति प्रकरणात् । घ्नंतीवेति तस्यापि क्षोभं व्यज्य ताभिर्गृहीतत्वेनैव दाक्षिण्यमात्रेणैव च स तत्र स्थित इति व्यज्यते । तथा वाम्येन दूरस्थिताया अपि तस्याः प्रेमसंरंभेत्यनेन परमसुखं दर्शितम् । यथा श्रीविष्णुपुराणे—'' काचिद् भ्रूभंगुरं कृत्वा ललाटफलकं हरिम् । विलोक्य नेत्रभृंगाभ्यां पपौ तन्मुखपंकजम् ॥ '' इति । अत्र विब्बोकोत्थानुभावो दर्शितः । यथोक्तम्—'' इष्टेऽपि गर्वमानाभ्यां विब्बोकः स्यादनादरः '' इति ।

**अपरानिमिषद्दृग्भ्यां जुषाणा तन्मुखांबुजम् ॥ आपीतमपि नातृप्यत्संतस्तच्चरणं यथा ॥ ७ ॥**
**तं काचिन्नेत्ररंध्रेण हृदिकृत्य निमील्य च ॥ पुलकांग्युपगूह्यास्ते योगीवानंदसंप्लुता ॥ ८ ॥**

**अनिमिषंतीभ्यामनिमीलंतीभ्यां दृग्भ्यामापीतमपि सम्यक्सादरं दृष्टमपि पुनःपुनर्जुषाणा नातृप्यत् ॥ ७ ॥ हृदिकृत्य हृदयं नीत्वेत्यर्थः ॥ ८ ॥**

तथा ललितोत्थोपि । यथोक्तम्–" विन्यासभंगिरंगाभ्यां भ्रूविलासमनोहरा । सुकुमारा भवेद्यत्र ललितं तदुदीरितम् ॥ " इति । इयं प्रखरा सुसख्या अत्यंताधीनकांता वामा च ॥ ६ ॥ अपरा गोपी । संतः सर्वदा तत्पराः ॥ * ॥ अनिमिषंतीभ्यामानंदजाड्यवशादनिमीलंतीभ्यां दृग्भ्यां भ्रमरीभ्यामिव तस्य मुखाम्बुजम् । यद्वा–तत्प्रसिद्धं पूर्वस्याः कटाक्षशरजर्जरितत्वात्समयचकितव्याकुलमनुतप्तम् । आपीतं सम्यगास्वादितमाधुर्यमपि पुनःपुनर्जुषमाणा आस्वादयंतीति । मुखांबुजस्य स्वभावेनैव माधुर्यमपरं तत्रापि स्वाभीष्टेन स्वयूथेश्वरीकटाक्षशरप्रहारेण संकोचत्रपाविषाददैन्यादिसंचारित्रिमिश्रणाबहुविधमतिवर्द्धमानं तदानी मभूदतस्तत्र तृष्णाधिक्यान्नातृप्यत् । संपूर्णांशेन दृष्टान्तादर्शनादेकांशेन दृष्टान्तमाह–सन्त इति । अत्र कटाक्षशरप्रहारिण्यामेव कृष्णस्य तदानीं संपूर्णा दृष्टिः संपूर्णं मनश्च न त्वन्यस्यां कस्यामप्येकांशेनापि, यत एव स्वस्मिं स्तस्यानवधानमालक्ष्य लज्जानुद्गमात् । दृग्भ्यामिति संपूर्णाभ्यामेव नेत्राभ्यां स्वच्छंदेनैव मुखमपश्यदतः सर्वतः सौभाग्यवती कटाक्षशरवर्षिण्येव ज्ञेया ॥ अत्र **तोषिणी**–जुषाणा स्वादयंती । आपीतं सम्यगास्वादितं माधुर्यमपि इति दृशो रसनात्वं मुखस्यांबुजतारूपकेण तत्सौंदर्यस्य मधुत्वं च रूपितम् । दृशो रसनात्वरूपकेण तु तन्माधुर्यासक्तिर्दर्शिता । शांत्यदास्यभक्तिनिष्ठा इति साक्षाद्दर्शनेऽपि तृप्त्यभावमात्रे दृष्टान्तः । वैशिष्ट्यं तु तत्त द्भावमाधुरीव्यंजकश्रीमुखालंबनतया विवृत एव । इयं सम्मुखदत्तदृष्टित्वात्प्रखरा स्वयमेवासौ मां मिलिष्यतीति स्वस्थान एव स्थितत्वात्सुसख्या स्वाधीनकान्ता वामा च ॥ ७ ॥ तम् श्रीकृष्णम् । हृदिकृत्य कारागारेऽपरा धिनमिव । इत्यर्थ इति–हृदयदेशे प्रापणमेव हृदिकरणपदार्थः । सर्वदा सतः करणासंभवादिति तात्पर्यम् । आनंदसंप्लुता परमानंदपूर्णा । पुंस्त्वपाठे तु योगिविशेषणम् । अत्र केचिदष्टसखीचेष्टितं कल्पयंति– 'काचित्करांबुजं शौरेः' इत्यारभ्य 'योगीवानंदसंप्लुता' इत्यन्तम् । तत्र संख्यापूर्त्यर्थम् "काचिदायांतमालोक्य गोविंदमतिहर्षिता । कृष्णकृष्णेति कृष्णेति प्राह नान्यदुवाच ह ॥" इत्यधिकं श्लोकं च पठंति । सख्यश्च–चंद्रावली १, श्यामला २, श्यामा ३, विशाखा ४, राधिका ५, ललिता ६, पद्मा ७, भद्रा ८ इत्याख्याः । ललिताविशाखाचंपकलताचित्रातुंगविद्येंदुलेखारंगदेवीसुदेव्य इत्थं केचित्सख्यष्टकं राधाभिन्नं वदन्ति ॥ * ॥ हृदिकृत्य हृदयं नीत्वेति । भाग्यान्मिलितोऽयं चंचलः कान्तः पुनर्मापसरत्विति च बुद्धेति भावः । निमील्य चेति–पुनर्नेत्ररंध्रेणैव न निःसरेदिति शंकयेवेति भावः । पुलकां गीति निर्विघ्नसंभोगप्राप्तिबुद्ध्या उपगूह्यास्त इति स्वकर्तृकोपगूहनं महाविरहोत्तरकालप्राप्त्या तृष्णाधिक्येन धैर्यापगमात्, तत्र द्रष्टृलोकाभावाल्लज्जानुत्पत्तेश्च । तिस्र एवैताः कांतपार्श्वे प्रत्यागमनाद्वामा अस्मानेवायमागम्य मिलतु न तु वयमिमं गत्वा कदाचिदपि मिलाम इति मदीयतामयमधुरस्नेहवत्त्वात्सुसख्याः स्ववशीकृतकांता ज्ञेयाः । तत्र तिसृषु मध्ये प्रथमा सर्वगोपीजनाधिका यूथेश्वरी, द्वितीयातृतीये तस्याः सख्यौ । एवं सप्त नामासां श्रीवैष्णवतोषिणीदृष्ट्यैव चंद्रावलीश्यामलाशैब्यापद्माश्रीराधाललिताविशाखा इति क्रमेण नामान्यवगतानि । अष्टमी तु "काचिदायांतमालोक्य गोविंदमतिहर्षिता । कृष्णकृष्णेति कृष्णेति प्राह नान्यत्तदैव यत् ॥" इति विष्णुपुराणदृष्ट्या भद्रानाम्नी ज्ञेया । श्रीवैष्णवतोषिणीधृतस्कांदप्रह्लादसंहिताद्वारकामहात्म्यविख्याताभिख्या एता अष्टावेव त्रिशतकोटिगोपीषु मुख्या ज्ञेयाः । आसु तारतम्यजिज्ञासा चेदुज्ज्वलनीलमणिर्द्रष्टव्यः । सर्वमुख्या तु राधैव "यथा राधा प्रिया विष्णोस्तस्याः कृष्णः प्रियस्तथा । सर्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभा ॥" इति पाद्मोक्तेः । "देवी कृष्णमयी प्रोक्ता राधिका परदेवता । सर्वलक्ष्मीमयी सर्वकांतिः संमोहिनी परा ॥" इति बृहद्गौतमीयोक्तेः । "राधया माधवो देवो माधवेनैव राधिका । विभ्राजते जनेष्वा–" इति ऋक्परिशिष्टोक्तेश्च ज्ञेया ॥ अत्र **तोषिणी**–तं नेत्ररंध्रेण हृदि कृत्येति । तस्या हृदये तस्य स्वच्छोपाधौ बिंबस्यैव परमासक्तिः सूचिता । ततः साक्षाद्भावाल्लब्धलज्जया नेत्रे निमील्य भावपारवश्येन पुलकांगी सती उपगूह्यालिंगनमनुकृत्यास्ते । चिरं तथैवासीदित्यर्थः । योगीवेत्यन्तःस्फूर्तौ दृष्टान्तः । यद्वा–योगि क्रियाविशेषणम् ।

संयोगि यथा स्यात्तदिवेत्यर्थः । इयं लज्जया मृद्वी पूर्वस्माद्धेतोः सुसख्या स्वाधीनकांता वामा च, एवं सप्तोक्ताः । अष्टमी तु श्रीविष्णुपुराणे—"काचिदायांतमालोक्य गोविंदमतिहर्षिता । कृष्णकृष्णेति कृष्णेति प्राह नान्यदुदैरयत् ॥" इति, प्रखरा सरला चेयम् । अत्रेदं विवेचनीयम्—रत्याख्यो भावस्तावदुभयविधः । एक आत्मनि तदीयताभावनामयत्वेन कांतपराधीनदाक्षिण्यादिमयः, अन्यः कांते मदीयताभावनामयत्वेन पराधीनकांतत्ववामत्वादिमयः । तदेवं भावद्वयमिश्रिततातारतम्येनान्येऽपि विविधा भावा विभाव्यन्ते । तत्तन्नानाभाववतीनां मध्ये सजातीयभावानां सख्यं, साक्षाद्रोचकत्वात् । विजातीयभावानां प्रतिपक्षता स्यात्, अरोचकत्वादेव । सजातीयभावानां सौहृद्यं स्यात्, यत्किंचिद्रोचकत्वेन हिताशंसनमात्रात् । अतिमिश्रत्वेनातिसूक्ष्मत्वेन वा नातिस्फुटसजातीयादिभेदभावानां ताटस्थ्यं स्यात्, व्यवधानहेतुत्वाभावात् । श्रीकृष्णविषयकनिजनिजभावमात्राभिरुचिमतीनां तासां सख्याद्युदयस्य तदेकमूल्यत्वमेवोचितामिति तत्र तदीयतामदीयतामययोर्मुख्ययोर्भावयोरुत्तरः श्रेयान् । ममताधिक्येन हि गंभीरप्रेमप्रवाहाधिक्यं भवति, तत एव तद्विवर्तरूपवाम्यापरपर्यायकौटिल्याभासो जायते "अहेरिव गतिः प्रेम्णः स्वभावकुटिला भवेत्" इति भरतन्यायात् । अत एव कांतोऽपि तद्वशः स्यात् । तथा च रुद्रः—"वामता दुर्लभत्वं च स्त्रीणां या च निवारणा । तदेव पंचबाणस्य मन्ये परममायुधम् ॥" इति । यथा हरिवंशे सत्यभामायां दृश्यते—"रूपयौवनसंपन्ना सौभाग्येन च गर्विता । अभिमानवती देवी श्रुत्वैवेर्ष्यावशं गता ॥" इति, "कुटुंबस्येश्वरी साऽऽसीद्रुक्मिणी भीष्मकात्मजा । सत्यभामोत्तमा स्त्रीणां सौभाग्ये चाधिका भवेत् ॥" इति च । अत एवार्द्धेनार्द्धेन पूर्वचतसृणां वर्णनमुत्तरतिसृणां त्वेकेनैकेनेति कवेरादरोपि दृश्यते । आसु तिसृषु च 'एका भ्रुकुटिमाबध्य' इत्यनेन या वर्णिता सैव श्रेष्ठा, भाववैशिष्ट्येन प्रथमत्वेन चोपन्यासात् । तादृशसर्वविलक्षणभावश्च तस्या एव स्वपरित्यागे स्यात्, यस्याः सर्वपरित्यागेन स्वसंगनीतायाः सौभाग्यदानेन सर्ववैलक्षण्यं श्रीभगवान्स्वयमाविष्कृतवान्, तस्मात्सैव सा भवेत् । अथ प्रथमचतसृणां प्रथमैव ज्येष्ठा श्रेष्ठा च । अग्रे स्थितत्वात्सर्वा अतिक्रम्य प्रथमत एव कांतस्पर्शात्, दक्षिणासु सुमधुरचेष्टत्वात् । एषा चोत्तरवर्गप्रवराया विजातीयभावेति प्रतिपक्षिणी ज्ञेया । अथानयोर्वर्गविचारः । तत्रोत्तरप्रथमायाः सख्यौ तदनंतरे द्वे, प्रथमप्रथमायास्त्वेकव्यवहिततृतीयादिके द्वे, भावसाम्यात्तत्तदनुगततया वामदक्षिणयोः स्थितेश्च । या तु प्रथमद्वितीया सा खलु प्रथमगणांतः प्रविश्य स्थितापि किंचिद्व्यवहितत्वात्तदतिक्रमिचारितत्वाच्च न प्रथमायाः सखी पराधीनकांतमन्यतया किंचित्तादृश्येनोत्तरायाश्च सुहृदिति ज्ञेयम् । अथ या विष्णुपुराणोक्ता सा तु नातिविस्पष्टभावत्वाद्वर्गद्वयाप्रवेशाच्छ्रीशुकेनावर्णनाच्च तटस्थैव ज्ञेया । अथ तासां नामविचारः । तत्र भविष्योत्तरे मल्लद्वादशीप्रसंगे श्रीकृष्णयुधिष्ठिरसंवादे तन्नामानि यथा—"गोपीनामानि राजेन्द्र प्राधान्येन निबोध मे । गोपाली पालिका धन्या विशाखा ध्याननिष्ठिका । राधानुराधा सोमाभा तारका दशमी तथा ॥" 'विशाखान्या धनिष्ठिका' इति क्वचित्पाठः । दशमीत्यपि नामैकं तच्चान्वर्थमिति सर्वांते पठितम् । यद्वा—तथेति दशम्यपि तारकानाम्न्येवेत्यर्थः । गोपाली चेयं नूनं पाद्मोक्तगायत्रीचरी भवेत् । तथा स्कांदप्रह्लादसंहितायां द्वारकामाहात्म्ये मायासरःप्रस्तावे पुनरुद्धवागमने प्रियप्राप्तिवत् प्रियदूतप्राप्तावपि स्वस्वभावाभिव्यक्तेस्तत्तद्भावोक्तिसहितान्येवाष्टौ नामान्युक्तानि । किं त्वत्यन्तदुःखमयोक्तित्वान्नैतादृशरसावसरे दृश्यानि । कदाचिद्विचारावसरे त्वपेक्ष्याणीत्यनन्यगतिकत्वेनैव लिख्यन्ते । यथा—

" तच्छ्रुत्वा वचनं तस्या ललिता क्रोधमूर्च्छिता । उद्धवं साश्रुनयना सोवाच रुदती तदा ॥ ललितोवाच ॥ असत्यो भिन्नमर्यादः शठः क्रूरजनप्रियः । मा कृथाः पुरतोऽस्माकं कथां तस्याकृतात्मनः ॥ श्रीश्यामलोवाच ॥ किं तस्य मंदभाग्यस्य ह्यल्पपुण्यस्य दुःखदाः । मा कथां कुरुत सख्यः कथाः कथयतापराः ॥ श्रीधन्योवाच ॥ केनायं हि समानीतो दूतो दुष्टजनस्य च । यातु तेन पथा पापो येन नायाति वै पुनः ॥ श्रीविशाखोवाच ॥ न शीलं न कुलं यस्य ज्ञायते कर्म जन्म च । हीनस्य पुरुषार्थेषु तेन संगो निरर्थकः ॥ श्रीराधोवाच ॥ पूतनाघातने यस्य नास्ति पापकृतं भयम् । तस्य स्त्रीहनने साध्व्यः शंका कापि न विद्यते ॥ ॥ श्रीशैब्योवाच ॥ सत्यं ब्रूहि महाभाग किं करोति यदूत्तमः । संवृतो नागरस्त्रीभिः कथास्माकं करोति किम् ॥ श्रीपद्मोवाच ॥ कदोद्धवो महाबाहुर्नागरीजनवल्लभः । समेष्यतीह दाशार्हः पद्मपत्रायतेक्षणः ॥ श्रीभद्रोवाच ॥ हा कृष्ण गोपप्रवर हा गोपीजनवल्लभ । समुद्धर महाबाहो गोपीः संसारसागरात् ॥ " इति । एके तु चंद्रावलीमेवाष्टानां मध्ये मन्यन्ते, न तु धन्यां तस्या लोकेतिप्रसिद्धेः । तत्र दशसंख्याकं मतं नात्रैकार्थ्यसमर्थयति संख्यावैषम्यात् । अष्टसंख्याकयोरपि मतयोर्धन्यापेक्षा न संघट्टयितुं शक्यते, तत्र तत्सहितत्वेन श्रीललितादीनां पंचानां वामप्रखरप्रायत्वात् । अत्र तु 'एका भ्रुकुटिमाबध्य' इति तिसृणामेवेति । चंद्रावलीपक्षस्तु संगम्यते तस्या दक्षिणवर्गाग्रिमत्वेन स्थापयिष्यमाणत्वाद्वामदक्षिणयोर्द्वयोरपि वर्गयोः त्रिसंख्याकत्वेन षट्त्वे द्वाभ्यां श्यामलाभद्राभ्यां चान्याभ्यामष्टतापर्याप्तौ सुघटता स्यादिति । तदेवं स्थिते या पुनरुत्तरवर्गप्रथमा

## सर्वास्ताः केशवालोकपरमोत्सवनिर्वृताः ॥ जहुर्विरहजं तापं प्राज्ञं प्राप्य यथा जनाः ॥ ९ ॥

**प्राज्ञमीश्वरं प्राप्य यथा मुमुक्षवो जनाः। यद्वा प्राज्ञं ब्रह्मज्ञं प्राप्य यथा संसारिणः। यद्वा प्राज्ञं सौषुप्तं प्राप्य यथा विश्वतैजसावस्था जीवाः ॥ ९ ॥**

'एका भ्रुकुटिम्' इत्यादिना वर्णिता सा परमभावसौभाग्योपरिकाष्ठापन्नत्वाच्छ्रीराधैव "यथा राधा प्रिया विष्णोस्तस्याः कृष्णस्तथा प्रियः । सर्वगोपीषु सैवैका विष्णोरत्यंतवल्लभा ॥" इति पाद्मोक्तेः, 'राधा वृंदावने वने' इति मात्स्यस्कांदादिभ्यः, "देवी कृष्णमयी प्रोक्ता राधिका परदेवता । सर्वलक्ष्मीमयी सर्वकांतिः संमोहिनी परा ॥" इति बृहद्गौतमीये च, "राधया माधवो देवो माधवेनैव राधिका । विभ्राजते जनेष्वा—" इति ऋक्परिशिष्टे वर्णिता च सा, तथैव श्रीजयदेवसहचरेण महाराजलक्ष्मणसेनमंत्रिणोमापतिधरेण—"भ्रूवल्लीवलनैः कयापि नयनोन्मेषैः कयापि स्मितज्योत्स्नाविच्छुरितैः कयापि निभृतं संभावितस्याध्वनि । गर्वोद्भेदकृतावहेलललितश्रीभाजि राधानने सातंकानुनयं जयंति पतिताः कंसद्विषो दृष्टयः ॥" इति । विवृतं चैतन्मदनुजवरैः श्रीरूपमहाभागवतैरुज्ज्वलनीलमणेः स्थायिभावविवरणे । अतो गांधर्वेति या गोपालतापिन्यां प्रसिद्धा सापि मुख्यत्वलिंगेनेयमेवेति मन्यन्ते । अस्यां प्रह्लादसंहितायां पूर्वपूर्वापेक्षया वचनकौशल्यान्मध्यात्वम् । अत्र च कोपावसरेऽपि लीलाविशेषमात्रव्यंजितप्रागल्भ्यतया बाहुधारिण्याद्यपेक्षया मध्यात्वमिति च समानम् । अथ या 'अपरानिमिषद्दृ—' इत्यादिना तत्सखी वर्णिता सा ललितेत्यवगम्यते वाम्यप्राखर्याभ्यां साम्यात्, संप्रति नातिवाम्यादिकं तु निजवरसखीनिशातदृक्पातवातजाततत्क्षोभदर्शनेनातिसंतोषात् । एषा च राधानुराधा इति या भविष्योत्तरे पठिता तदपरपर्यायैव वा । तत्र च पाठस्य नाम्नोश्च युग्मतामयतावगतेरत्रापि समवर्गप्राप्तसखीवृंदप्रथमोक्तेर्मुख्यताप्रातिसाम्यात् । अथ 'तं काचिन्नेत्ररंध्रेण' इत्यादिवर्णिता तत्सखी तु प्रायः श्रीविशाखैव वाम्यमार्दवाभ्यां साम्यात् । प्रह्लादसंहितायामपि—'न शीलम्' इत्यादिकं तद्वाक्यं तादृशमेव । अथ या प्रथमवर्गस्य प्रथमा सा श्रीचंद्रावल्येव, यतः श्रीराधया सह प्रतियोगितयैतद्धामस्था एव विराजते । तथा च श्रीबिल्वमंगलचरणाः—"राधामोहनमंदिरादुपगतश्चंद्रावलीमूचिवान्राधे क्षेममिहेति तस्य वचनं श्रुत्वाह चंद्रावली । कंसक्षेममये विमुग्धहृदये कंसः क दृष्टस्त्वया राधा क्वेति विलज्जितो नतमुखः स्मेरो हरिः पातु वः ॥" इति । अर्थसाम्यप्रायादियं भविष्योत्तरख्याता सोमाभैव वा स्यात् । अथ वा—तस्या द्वितीया 'काचिद्दधार' इत्यादिना श्रीराधासुहृद्वर्णिता सा श्यामला भवेत्, प्रह्लादसंहितायां ललितागणे प्रविश्य हितोपदेशदानेन तस्याः सौहृद्यलक्षणावगतेः । सखीनां समदुःखप्रलापिता भवति, किंचिद्व्यंतरितस्यैव तु हितोपदेशदातृता दृश्यत इति इयमेव श्रीमध्वाचारभारततात्पर्ये दर्शिता लीलाख्या भवेत् । अथ 'काचिदंजलिना' इति 'एका तदंघ्रिम्' इति वर्णिते ये चंद्रावलीसख्यौ तथा विष्णुपुराणे यास्तटस्था वर्णितास्ताः क्रमेण शैब्यापद्माभद्रास्स्युः, सेवकवद्दैन्येन, संजिगमिषया, नातिस्फुटभावविशेषत्वेन च साम्यादिति । "महानुभावसंमत्या युक्तिप्रायं व्यलेखि यत् । तत्र कृष्णस्तदीयाश्च ममानन्यगतेर्गतिः ॥ ताः सद्वर्ण्यरहोलीला नाम्ना संकोचमाप्नुयुः । मुनिनैवंकृताह्वानाः क्षमंतां मम चापलम् ॥" ॥ ८ ॥ ता यूथीभूताः । मुमुक्षूणामुपासनयेश्वरसाक्षात्कारेणैव संसारतापहानिः "मुमुक्षवो घोररूपान्हित्वा भूतपतीनथ" इत्याद्युक्तेः । "ज्ञानादेव तु कैवल्यम्" इति श्रुतेर्ज्ञानस्यैव संसृतिनाशकत्वाद्वेदांतिमतेन पूर्वोक्तार्थेऽस्वारस्यादर्थांतरमाह—यद्वेति । ब्रह्मज्ञम् ज्ञानिनम् । ज्ञान्यनवरतसंगेन तदुपदिष्टात्मतत्त्वसाक्षात्कारेणाज्ञाननिवृत्त्या परमानंदस्वरूपावाप्तेः संसारतापहानिः स्फुटैवेति सर्वानुभूतार्थपरित्यागेनाननुभूतार्थकथनमन्याय्यमिव मत्वा पुनरर्थांतरमाह—यद्वेति । सौषुप्तम् सुषुप्त्यवस्थासाक्षिणम् । विश्वतैजसावस्था जीवा जाग्रत्स्वप्नसाक्षिणः सुषुप्तौ जाग्रत्स्वप्नोभयकालिकदुःखानामननुभवात् "अन्धोऽनंधो दुःख्यदुःखी" इत्यादिश्रुतेः । केवलसुखमेव तत्रानुभूयते सुखमहमस्वाप्समिति तदुत्थितस्मृतेः ॥ * ॥ प्राज्ञम् परमभागवतम् । जनाः संसारतप्ताः । "गृहेषु तप्ता निर्विण्णा यथाच्युतजना—" इति प्रावृड्वर्णनोक्तेः । **संदर्भस्तु**—प्राज्ञं सुषुप्तिसाक्षिणमिव सुषुप्तावविद्यावत् पुनः परित्यागशंकाया निगूढस्थितेरित्याह ॥ अत्र **तोषिणी**—नन्वन्यासां का वार्ता तत्राह—सर्वा इति । "तासां तत्सौभगमदं वीक्ष्य मानं च केशवः" इत्यत्रैवात्र च केशवशब्दः परमतेजोनिधानतापरः । ततश्च तदानीं यथा तस्यांतर्द्धानं तासां तेजोंतर्द्धापनं तथा संप्रत्याविर्भावेन तदाविर्भावो जात इति भावः । तस्यालोक एव परमानंदप्रदत्वात्परमोत्सवस्तेन निर्वृताः प्राप्तदुःखनिवर्तकपरमसुखाः । तत्रानुरूपो दृष्टान्तः—प्राज्ञमिति । सुषुप्तावविद्याया इव पुनः परित्यागशंकाया

**ताभिर्विधूतशोकाभिर्भगवानच्युतो वृतः ॥ व्यरोचताधिकं तात पुरुषः शक्तिभिर्यथा ॥ १० ॥ ताः समादाय कालिंद्या निर्विश्य पुलिनं विभुः ॥ विकसत्कुंदमंदारसुरभ्यनिलषट्पदम् ॥ ११ ॥ शरच्चंद्रांशुसंदोहध्वस्तदोषातमः शिवम् ॥ कृष्णाया हस्ततरलाऽऽचितकोमलवालुकम् ॥ १२ ॥**

पुरुषः परमात्मा शक्तिभिः सत्त्वादिभिर्यथा । यद्वा उपासकः पुरुषो ज्ञानबलवीर्यादिभिः । यद्वा पुरुषोऽनुशायी प्रकृत्याद्युपाधिभिर्वृतो यथाऽधिकं विरोचते तद्वत् ॥ १० ॥ विकसत्कुंदमंदारैः सुरभिर्योऽनिलस्तस्मात्षट्पदा यस्मिंस्तत् पुलिनम् ॥ ११ ॥ शरच्चंद्रांशूनां संदोहैः समूहैर्ध्वस्तं दोषातमो रात्रि गतं तमोयस्मिंस्तत् अतः शिवं सुखकरम् ।

निगूढस्थितेरिति ॥ ९ ॥ ताभिः पूर्वमुदिष्टाभिः भगवद्दर्शनात्त्यक्तक्लेशाभिः । अच्युतोऽस्पृष्टशोकः । "पूर्वमेवाहमिहासम्" इति, "तत्पुरुषस्य पुरुषत्वम्" इति श्रुतेः । पुरुषः परमात्मा । सत्त्वादयो यद्यपि मायाकार्यत्वान्मायाशक्तयस्तथापि मायायाः 'मम माया दुरत्यया' इत्याद्युक्तेस्सापि तच्छक्तिरतस्तस्या याश्शक्तयस्ता अपि तस्यैव ह्युपकरणानां स्त्रीस्वामिवत् । एतदर्थस्य विज्ञेयत्वेन दुर्बोधत्वादर्थांतरमाह । "ज्ञेयो लोके स पुरुषो भजते यो हरिं सदा । तदन्यः खुरश्रृंगादिवर्जितो द्विपदः पशुः ॥" इत्युक्तेः । पुरुष उपासकः भगवद्भक्तः । भक्तेर्ज्ञानाद्युत्पादकत्वं प्रथितमेव । यद्वा–हरेर्भक्ताधीनत्वेन स्वातंत्र्याभावाद्भक्ताधिक्यमत्रोक्तम् । "प्रसिद्धमेतल्लोकेऽस्मिन्स्वामिनः सेवकोऽधिकः । सेतुं कृत्वाऽतरद्रामो वायुजोऽब्धिं तु कूर्दनात् ॥" इत्यभियुक्तोक्तेः । ननु पुरुषपदं जीवपरम् 'क्षेत्रज्ञ आत्मा पुरुषः' इत्युक्तेस्तत्कथमन्यपरतया व्याख्यातमितिचेत्, 'तुष्यतु दुर्जनः' इति न्यायेनाह–यद्वा पुरुषोऽनुशायीति । "अनुशायी जीवः भगवन्निरामनुशेते प्रलयावस्थायाम्" इति निरुक्तेः । "अग्रे गुणेभ्यो जगदात्मनीश्वरे निमीलितात्मन्निशि सुप्तशक्तिषु" इत्युक्तेः । प्रकृत्यादीत्यत्रादिना महदहंकारादिग्रहः । "यथा प्रकृतिभिर्गुप्तः पुमान्राजा च सप्तभिः" इत्याद्युक्तेः ॥ * ॥ शक्तिभिः सेंद्रियशक्तिभिः पुरुषो यथाधिकं विरोचते, तासां वैकल्ये सति तु नात्यन्तं रोचते, एवमेव कृष्णोप्यासां खिन्नत्वे खिन्नो नाधिकं रोचते, आसां विधूतशोकत्वेनाधिकरुचिसत्त्वे सोप्यधिकं रोचते । पुरुषस्य यथा स्वेंद्रियसुख एव सुखं स्वेंद्रियदुःखे दुःखमेवमेवं कृष्णस्यापि तासां सुखदुःखाभ्यामेव सुखदुःखे इति गोपीविषयकप्रेमवत्त्वं तासां स्वस्वरूपभूतत्वं ज्ञापितम् । स्कांदे प्रभासकांडे यथा–"षोडशैव सहस्राणि गोप्यस्तत्र समागताः । हंस एव मतः कृष्णः परमात्मा जनार्दनः ॥ तस्यैताः शक्तयो देवि षोडशैव प्रकीर्तिताः । चंद्ररूपी मतः कृष्णः कलारूपास्तु ताः स्मृताः ॥ संपूर्णमंडला तासां मालिनी षोडशी कला । षोडशैव कला यास्तु गोपीरूपा वराननाः ॥ एकैकशस्ताः संभिन्नाः सहस्रेण पृथक्पृथक् ।" इति । 'प्रमदाशतकोटिभिराकुलितः' इत्यागमोक्तेस्त्रिशतकोट्यो गोप्यस्तासां मध्ये द्वे राधाचंद्रावल्यौ मुख्यतमे, तयोरपि मध्ये श्रीराधा सर्वमुख्यतमेति भक्तिशास्त्रनिर्णयः ॥ अत्र **तोषिणी**–ततो मदमानौ परित्यज्य सर्वा मिलित्वैव तदनुगता बभूवुः, ताभिः श्रीभगवतोऽपि परमशोभाविर्भावो जात इत्याह–ताभिरिति त्रिकेण । भगवानिति–भगवान्सर्वसंपूर्णोपि अच्युतः । तत्र कथंचिच्च्युतिरहितोपि अधिकं पूर्वपूर्वतः प्रकृष्टं यथा स्यात्तथा ताभिर्विशेषेणारोचत । तादृशस्यापि ताभिस्तादृशत्वे तदाविर्भावविशेष एव दृष्टांत इत्याह–पुरुषः ईश्वरः । स यथा भगवद्रूपेण शक्तिभिरैश्वर्यादिमयस्वरूपशक्तिभिर्वृत एवाधिकं विरोचते न तु ब्रह्मरूपेण । ताभिरावृत इति तथा सोपि ताभिः प्रेमविशेषमयस्वरूपशक्तिभिर्वृत एवाधिकं व्यरोचतेत्यर्थः । तातेति संबोधनं परमानुकम्पायाम् 'तातोऽनुकम्पे पितरि' इति नानार्थात् । परमानुकम्प्यत्वादेव रहस्यमिदं त्वयि प्रकाशयामीति भावः ॥ १० ॥ समादाय सम्यग्घस्तधारणादिनाऽऽदाय । षट्पदा भ्रमराः ॥ किरणसंदोहस्य संमार्जनीत्वं ध्वनितम् । अतः तमोरहितत्वात् । यद्वा–कामजयस्फोरणार्थं शिवपदम् । कृष्णायाः कालिंद्याः । "अणुतरंगो लोलः स्यात्तरलः कुरुलस्तथा" इति गोपालः । 'आचितं छन्नसिक्तयोः' इति च । अतस्तरलैरणुतरंगैः निर्विश्य उपविश्य । तत्र पुलिने । आभिः गोपांगनाभिः ॥ * ॥ ततश्च ताः सम्यग्घास्यहस्तग्रहादिनाऽऽदाय निर्विश्य पुलिनं प्रविश्य च व्यरोचतेति पूर्वेणैवान्वयः । पुलिनं विशिनष्टि सार्धेन । विकसद्भिः कुंदैः मंदारैश्च सुरभिर्योऽनिलस्तस्मात्षट्पदा यस्मिंस्तत् । वायोः शैत्यं पुलिनसंबंधात्, मांद्यं षट्पदास्पदत्वात् । शरच्चंद्रांशूनां संदोहैर्ध्वस्तं दोषाया रात्रेस्तमो यत्र तत् । शिवमत एव सुखदम् । यमुनाया हस्तरूपैस्तरलैस्तरंगैराचिता आस्तृताः कोमला वालुका यस्मिंस्तत् ॥ अत्र **तोषिणी**–विशब्दोक्तस्य रोचने वैशिष्ट्य

**तद्दर्शनाह्लादविधूतहृद्रुजो मनोरथांतं श्रुतयो यथा ययुः ॥ स्वैरुत्तरीयैः कुचकुंकुमांकितैरचीक्लृपन्नासनमात्मबंधवे ॥ १३ ॥**

**हस्तरूपैस्तरलैस्तरंगैराचिता आस्तृताः कोमला वालुका यस्मिन् एवंभूतं पुलिनं ताः समादाय निविश्य तत्र ताभिर्वृतोऽधिकं व्यरोचतेति पूर्वेणान्वयः ॥ १२ ॥ ताश्च मनोरथानामंतं ययुः पूर्णकामा बभूवुरित्यर्थः । श्रुतयो यथेति । अयमर्थः । यथा कर्मकांडे श्रुतयः परमेश्वरमपश्यंत्यस्तत्तत्कामानुबंधैरपूर्णा इव भवंति ज्ञानकांडे तु परमेश्वरं दृष्ट्वा तदाह्लादपूर्णाः कामानुबंधं जहति तद्वदिति । आप्तकामा अपि प्रेम्णा तमभजन्नित्याह । स्वैरिति । अचीक्लृपन् रचयामासुः आत्मबंधवेंतर्यामिणे ॥ १३ ॥**

स्योपकरणांतरमपि दर्शयति–ता इति द्वाभ्याम् । सम्यक् प्रत्येकं सर्वासामेव हस्तधारणादिनाऽऽदाय रासयोग्यपुलिनांतरं गन्तुं पूर्वपुलिनतो गृहीत्वा । निविश्य मध्यमधिष्ठायेत्यर्थः । विभुर्व्यापक इत्येकस्यापि सर्वासां युगपत्सामदानादिसमावेशार्थमित्यर्थः । पुलिनस्य भावोद्दीपनसामग्र्या रासक्रीडायोग्यतां दर्शयंस्तद्विशिनष्टि–विकसदिति सार्धेन । वायोः शैत्यसौरभ्ये स्पष्टे, मांद्यञ्च षट्पदास्पदत्वात् । शरदिति चंद्रांशूनां सुप्रसन्नता, संदोहेति चंद्रस्य पूर्णता, ध्वस्तदोषेति दिनवत्प्रकाशश्च सूचितः । कृष्णायाः श्रीकृष्णस्य सनामत्वेन सवर्णत्वेन च सख्यं प्राप्तायाः, अत एव–हस्तेति । किं वा–विचित्रशोभादिना तस्यापि चित्ताकर्षकत्वेन तन्नाम्न्याः । 'वृंदावनं गोवर्धनम्' इत्यादिः । हस्तेति हस्तैरिवावचयनेन स्थलीवैषम्यं कठिनांशराहित्यादिकं च ध्वनितम् । यद्वा–ताः समादायेति ताभिः सह तदेव पुलिनं निविश्य मध्यप्रदेशं प्रविश्येत्यर्थः । विशेषेण भवतीति विभुः । बभूवेति शेषः । तच्च दर्शनेति द्वाभ्यां वक्ष्यते । अन्यत्समानम् ॥ ११ ॥ १२ ॥ ताः यूथीभूताः । पूर्णकामाः प्राप्ताभिलषितार्थाः । दृष्टांतसिद्धमर्थं स्फुटयति–अयमर्थ इति । कर्मकांडे पूर्वमीमांसायाम् । श्रुतयः तदभिमानिन्यो देवताः । परमेश्वरम् परमात्मानम् । "वर्ष्मोस्मि समानाम्" इत्यादिभिः, "आयंतु नः पितरः" इत्यादिभिश्च केवलकामानुबन्धिकर्मप्रतिपादनेनापश्यन्त्यो वर्णयन्त्यः तत्तत्कामानुबन्धैः सर्वाच्छादकत्वपित्रादिप्रीणनादिभिरपूर्णा । इवेतीवशब्देन कर्मणोऽप्यन्तःकरणशुद्धिद्वारा तद्दर्शनोपयोगित्वमुक्तम् । ज्ञानकाण्डे उत्तरमीमांसारूपे । परमेश्वरम् "सर्वं खल्विदं ब्रह्म" इति, "ब्रह्माहमस्मि" इत्येवं चराचरात्मसहितमात्मतत्त्वं दृष्ट्वानुभूय तदाह्लादपूर्णाः स्वात्मज्ञानानन्दपूर्णाः कामानुबन्धं तत्तत्कर्मजसुखेहां जहति, ब्रह्मानन्दे सर्वानन्दानामंतर्भूतत्वात्, "तस्य मात्रामुपजीवंत्यन्ये" इत्यादिश्रुतेः । तद्वदिति प्राप्तात्मानंदवत्कामानुबन्धं हित्वा तद्दर्शनाह्लादेन श्रीकृष्णदर्शनानंदेन विधूता नष्टा हृद्रुजोऽविषयीकरणलक्षणा यासां तास्तथा । आप्तकामाः श्रीकृष्णदर्शनेन पूर्णमनोरथा अपि । प्रेम्णा अनुरागेण । तम श्रीकृष्णम् । उत्तरीयैः प्रावरणवस्त्रैः। कुचकुंकुमांकितैरनेनैकैकवस्त्रा अप्यानंदविवशाः सत्यस्तैरेवासनं ददुरिति ध्वनितम् । आत्मबंधव इति–देहबंधुदर्शनेऽपीतिकर्तव्यताविस्मृतिर्भवति किमुतात्मबंधुदर्शन इत्याह ॥*॥ अत्र तासां सख्यसमुचितां प्रेमसेवामाह–तस्य श्रीकृष्णस्य दर्शनानंदेन खंडितसर्वमनोदुःखा व्रजसुंदर्यः स्वीयैरुत्तरीयैः कुचकंचुकोपरिस्थैरतिसूक्ष्मवस्त्रैरात्मबंधवे तस्मै आसनं तथाऽचीक्लृपन्नुपजह्रुर्यथा श्रुतयो महोपनिषदोऽपि मनोरथानामंतं परमकाष्ठां ययुः । यतोधिकोऽन्यो मनोरथो न संभवति तं प्रापुः । यद्दृष्ट्वा वयमपि व्रजे गोप्यो भूत्वा श्रीकृष्णेन सहैवं कुचकुंमस्तिमितवस्त्रार्पणादिना कदा विलसाम इत्युत्कण्ठिता बभूवुरित्यर्थः । अत एव श्रुतयो गोपीत्वप्राप्त्यर्थं तीव्रं तपश्चक्रुरिति बृहद्वामनीया कथा, "स्त्रिय उरगेंद्रभोगभुजदंडविषक्तधियो वयमपि ते समाः समदृशोंघ्रिसरोजसुधाः" इति तासामुक्तिश्च । तत्र पूर्वकल्पगतकृष्णावतारदर्शिन्यः श्रुतयो लब्धचरमनोरथा एतस्मिन्कल्पे गोप्यो बभूवुरेव, एतस्मिन्कल्पे तु लब्धमनोरथा एताः श्रुतयोऽग्रिमकल्पे गोप्यो भविष्यन्ति श्रुतीनामानंत्यादिति ज्ञेयम् ॥ अत्र **तोषिणी**–ततोऽतिहृष्टानां प्रेमसेवामाह–तदिति । तस्य क्रीडाविशेषोत्सुकस्य विभोर्दर्शनेन च य आह्लादस्तेन विशेषतो धुता नाशिता हृद्रुजः सर्वा आधयो यासां, तथाविधेन तेन सह तत्रागमनेन रासक्रीडामयचिरस्थितिर्निर्धारिता, पूर्वशंकापगमात् । न केवलं परमदुःखशांतिरेव अपि तु परमसुखप्राप्तिरपि जातेत्याह–मनोरथस्य वांछितस्यान्तं परां काष्ठां ययुरिति । तत्र दृष्टान्तः–श्रुतयो यथेति । श्रुतयोऽपि तादृशलीलाविशिष्टं तं प्रकाश्य निजनिजनानातात्पर्यदौस्थ्यं परित्यजंति परमतात्पर्यावसानञ्च प्राप्नुवंतीति । तदुक्तमेकादशे स्वयं श्रीभगवता–'यस्यां न मे पावनमंग कर्म' इत्यादि, द्वादशे च श्रीसूतेन–'स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावः' इत्यादि च । तत्राप्येषा परमप्रेममयरासलीलेति श्रुतयोऽप्यत्रैव

तत्रोपाविष्टो भगवान्स ईश्वरो योगेश्वरांतर्हृदि कल्पितासनः ॥ चकास गोपीपरिषद्गतोर्चितस्त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत् ॥ १४ ॥
सभाजयित्वा तमनंगदीपनं सहासलीलेक्षणविभ्रमभ्रुवा ॥ संस्पर्शनेनांककृतांघ्रिहस्तयोः संस्तुत्य ईषत्कुपिता बभाषिरे ॥ १५ ॥

**गोपीसभागतस्ताभिः संमानितः संश्चकास शुशुभे । त्रैलोक्ये या लक्ष्मीः शोभा तस्या एकमेव पदं स्थानं तद्वपुर्दधद्दर्शयन् ॥ १४ ॥ सहासलीलेक्षणेन विभ्रमो विलासो यस्यां तया भ्रुवोपलक्षिताः । संस्पर्शनेन शनैः संमर्दनेन ॥ १५ ॥**

कृतार्था जाता इत्यस्या लीलाया महिमापि दर्शितः । अतः सहोक्तिनामालंकारोऽयं व्यंजितः । ततश्च सुस्थिरचित्ताः सत्य आसनमचीक्लृपन् विचित्रचारुक्रमेण रचयामासुः । कैः—स्वैः स्वयंपरिहितै रुत्तरीयैः । सर्वांगीणवस्त्रस्यांतर्गतैः ' कुचपट्टिकां वा ' इति वक्ष्यमाणानुसारेण हृदयावरणरूपैः । विरहरोदनधारापातात्कुचकुंकुमेनांकितै रंजितैरित्यर्थः । ननु लज्जाशैथिल्यमिव ताभिरंगीकृतं स्वोपयुक्तै र्वस्त्रैरासनं च दत्तं तत्राह—आत्मनो बंधवे । आत्मीयत्वेन मित्रत्वेन च भावादित्यर्थः । आसनञ्चेदं सर्वासां सूक्ष्मवस्त्रमयविस्तीर्णमेकमेव वर्गशः पृथक्पृथगेव ज्ञेयम् ॥ १३ ॥ तत्र गोप्युत्तरीयासने । यो योगेश्वराणां सनकादिप्रभृतीनामंतर्हृदि हृदयपद्मकर्णिकायां विमलोत्कर्षिण्यादिशक्तिभिः कल्पितासनः स एवेश्वरो नंदनंदनरूपेण गोपीसभागत इति संबंधः । चकाश 'काशृ—दीप्तौ' । अर्चितः आसनतांबूलनर्मसस्मितापांगादिभिः संमानितः । धातूनामनेकार्थत्वादर्शनेऽपि दधातिरस्ति ॥ * ॥ तत्र प्रतिस्वयूथमेव पृथक्पृथगुपर्युपरिनिहितबहुवस्त्रासनेषु ताभिः क्लृप्तेषूपविष्टः । ननु तावत्संख्याऽऽसनेषु कथमेक उपविष्टस्तत्राह—ईश्वरः तत्तदलक्षिततावत्प्रकाशवान् । तत्र हेतुः—भगवान् कामवान् ' भगं श्रीकामामाहात्म्य—' इत्यमरः । तस्य तावत्सु सर्वेष्वेवासनेषूपवेष्टुं कामनामालक्ष्यैश्वर्येण शक्त्या योगमाया द्वारा तावन्तः प्रकाशास्तथा प्रकाशिता इत्यर्थः । किञ्च, स हि योगेश्वरैः शेषशंकराद्यैरन्तर्हृदि हृदयाभ्यन्तरे एव कल्पितं मनसैवानीतत्वात्त्रिजगद्दुर्लभमनुपहतमनर्घ्यमासनं यस्य सः । एताभिस्तु हृदयाद्बहिरेव स्वगात्रनिर्मा ल्यवस्त्रैः स्वोपभुक्तसुगंधैरासनं कल्पितं यत्तत्रैवोपविष्टश्चकाश दिदीपे । यः खलु स्वयं भगवान्ब्रह्मरुद्रादिपरिषदा क्षीरोदादितीरे स्तुत्यादिगम्य एव मनसि प्रादुर्भवन्परोक्ष एव क्षणमात्रमेव भवेत्, स एव गोपीपरिषदं स्वयं गतोऽच्युतश्चिरकालमभिव्याप्य च्युतिरहितः । 'अर्चितः' इति पाठे तांबूलनर्मस्मितापांगादिना संमानितः । किं कर्तुं गतः—प्राकृताऽप्राकृताधोमध्योर्द्ध्वलोके या लक्ष्मीस्तत्तदनंतस्वांशपर्यंतवस्तूनां नानाशोभादिसंप त्तिस्तस्या एकमनन्यत्पदमाश्रयभूतं यद्वपुस्तदपि दधत् । तासां गोपीनामंगकांतिस्मितकटाक्षादिमाधुर्यैः पुष्णन् । यद्वा—तत्रोपविष्ट एव तत्र तादृशोपवेशादिविशिष्ट एव योगेश्वरांतर्हृदि कल्पितासनः तत्क्षणमारभ्य महारुद्रादिभिर्योगेश्वरैर्गोपीपरिषन्मध्यगततादृशोपवेशतादृशशोभातत्तन्नर्मसंलापादिविशिष्ट एव कृष्णो ध्यानेन स्वहृदयमानिन्य इत्यर्थः ॥ अत्र **तोषिणी**—स प्रेमरसांबुधिवर्द्धनः श्रीकृष्णश्चंद्रः स्वयं भग वानैश्वर्यादिषड्गुणसंपन्नोऽपि तथा ईश्वरः नित्यमपूर्वापूर्वतत्प्रकाशनसमर्थोऽपि तत्र तास्मिन्नासन उपविष्टः संश्चकाश । तत्रासंभवशोभाविर्भाववान्बभूव । अन्यत्र पुनरसौ परमदुर्लभ एवेत्याह—योगेश्वरैः सिद्धसमाधिभिः श्रीरुद्रादिभिरपि अंतर्हृदि कल्पितं भावनामात्रेण स्थापितमासनं यस्य तादृशोऽपि । अलुक्समासः । अर्थात्तैरेव कल्पितमिति वा । तस्मा त्तासां संबन्धस्यैवैष महिमेति भावः । तत्र च वैशिष्ट्यमाह—गोपीति । यद्वा—तादृशेन गोपीपरिषद्गतत्वेनैव योगेश्वरांतर्हृदि कल्पितासन इति ज्ञेयम् । किञ्च, अर्चित आसनतांबूलनर्मस्मितापांगादिना संमानितः । किं कुर्वंश्चकाश—त्रैलोक्यस्य प्राकृताधोमध्योर्द्ध्वलोके परमव्योमाख्यमहावैकुंठपर्यन्ते या लक्ष्मीस्तत्तदनंतस्वाविर्भाववस्तूनां नानाशोभादिसंपत्तिस्तस्या एकमनन्यत्पदमाश्रयभूतं वपुःप्रकाशं बिभ्रत्, तासामग्रे धारयन्प्रकटयन्नित्यर्थः । तथा च वक्ष्यते—'गोप्यस्तपः किमचरन्यदमुष्य' इत्यादि ॥ १४ ॥ तम् कृष्णम् । सभाजयित्वा सत्कृत्य । अनङ्गदीपनम् कामोद्दीपकम् । अंके उत्संगे कृतयोरंघ्रिहस्तयोः संमर्दनेन । संस्तुत्य संश्लाघ्य । ईषत्कुपिताः प्रेम भरस्वभावत्वात्कोपालपत्वम् ॥ * ॥ ततश्च रिरंसवे तस्मै रतमदित्सूनां तासां चेष्टितमाह—सभाजयित्वेति । सहासलीलेक्षणेन विभ्रमो विलासो यस्यां तया भ्रुवा अनंगदीपनम् स्वीयं कामं द्योतयन्तं, तासां वा कामोद्दीपकं

**गोप्य ऊचुः ॥ भजतोऽनुभजंत्येक एक एतद्विपर्ययम् ॥ नोभयांश्च भजंत्यन्य एतन्नो ब्रूहि साधु भोः ॥ १६ ॥**

तत्र भगवतोऽकृतज्ञतां तद्वचनेनैवापादयितुकामा गूढाभिप्राया लोकवृत्तांतमिव पच्छंति । भजत इति । भजतः प्राणनः अन अनंतरम् । केचित्तद्भजनानुसारेण भजंति । केचिदेतद्विपर्ययं यथा भवति तथा । तद्भजनानपेक्षमभजतोऽपि भजंति । अन्ये तु नोभयानिति ॥ १६ ॥

तं सभाजयित्वा तदुचितैरेव भावैः संमान्य पूर्वं नः संत्यज्य गतः संप्रत्येवं चेष्टत इति प्रणयकोपगोपनार्थमंककृतयोस्तेनैव तासामंके न्यस्तयोस्ताभिरेव वा स्वांके कृतयोः अंघ्रिहस्तयोः संस्पर्शनेन संस्तुत्य—अहो ते करचरणयोरद्भुतं शैत्यं यत्संस्पर्शनेनैवास्मत्संतापो निर्वाणस्तस्मात्त्वं सत्यं संतापदुःखानभिज्ञः सदा सुखी विधुरेवासीति व्याजस्तुत्या स्तुत्वा ईषत्कुपितास्तद्दर्शनानंदस्वभावत एव विनष्टीभूतकोपस्य शेषभागवत्य इत्यर्थः ॥ अत्र **तोषिणी**—तत्र च प्रणयस्वभावेन तासां निगूढां कोपोत्पत्तिमाह—सभाजयित्वा पूर्वोक्तप्रकारेण संमान्य तं बभाषिरे पृष्टवत्यः, ता इति शेषः । कीदृश्यः सत्यस्तत्राह—ईषत्कुपिताः । ननु तादृक्सभाजितवत्यश्चेत्तर्हि कथमीषत्कोपस्याप्यवसरमर्हंति, तत्राह—अनंगदीपनमिति । तद्दीपनकृते नानाविलाससमभिव्यंजंतमित्यर्थः । पूर्वं परित्यज्य गतः संप्रत्यसावेवं चेष्टत इति प्रणयस्वभावविमर्शनेनेति भावः । ननु कुचकुंकुमाक्तवस्त्रोपवेशतया स्वेषामेव तदनंगदीपनत्वे प्रागेव जाते सति तस्य तद्दीपनं दृष्ट्वा सन्तमपि कोपं व्यक्तीकर्तुं कथमर्हन्ति, तत्राह—अंककृतांघ्रिहस्तयोः संस्पर्शनेन संस्तुत्येति । तादृशतया तत्तत्स्पर्शपूर्वकं नानागुणप्रशंसया संतोष्येत्यर्थः । तेन कोपं तु गोपितवत्य एवेति भावः । तर्हि कोप आसीदिति कथं ज्ञायते, तत्राह—सहासेति । उपलक्षणे तृतीया । स्वगिरैवायं व्यक्तदोषः स्यादिति मतिकौटिल्यव्यंजकेन तादृशभ्रूविलासेन व्यक्ततत्कौटिल्य इत्यर्थः । व्यक्तीभविष्यति च तत्कौटिल्यं प्रश्नपरिपाट्येति भावः । तदेवमवहित्था नाम संचारी व्यक्तः।तदुक्तम्—“अनुभावपिधानार्थोऽवहित्थं भाव उच्यते” इति।अवहित्थेति स्त्रीलिंगता च।तथा “ हेतुः कश्चिद्भवेत्कश्चिद्गोप्यः कश्चन गोपनः । इति भावत्रयस्यास्य विनियोगः समीक्ष्यते॥” इति च । यथाहेतुरत्र मतिकौटिल्यमेव गोप्योऽसूयामयोऽमर्षः गोपयन्त्यनेनेति गोपनः स चात्र तादृशतया तत्तत्स्पर्शसंभवाभ्यां प्रत्यायित,हर्षकौटिल्यं सहासादिकं च मतिकौटिल्यमयमपि तदेव प्रत्याययति । एवमत्रापि योगमायावैभवमेव दर्शितं, सर्वाभिर्युगपत्तथा व्यवहारात् । अंघ्रिहस्तयोरिति द्वित्वं प्रत्येकं जात्यपेक्षया ॥ १९ ॥ तत्र तदा । अकृतज्ञताम् कृतघ्नताम् । तद्वचनेन भगवद्वचनेन । गूढो गुप्तो भगवत्यकृतज्ञताद्योतनरूपोऽभिप्रायो यासां ताः । इवशब्देन भगवत्कर्मणामलौकिकत्वं सूचितम् । एके लौकिकाः । एके महात्मानः । अन्ये उभयविलक्षणाः । उभयान् भजतोऽभजतश्च । एतत्पक्षत्रयमस्ति यदत्र साधु निर्दोषपक्षस्तम् । भोः हे कृष्ण । नः अस्मभ्यम् ॥ * ॥ अत्र ताभिः प्रतिस्वं मनस्येवं विचारितम्—अद्य यदयं प्रेमिमुकुटमणिरप्यस्मानेवं दुरवस्थामलंभयत्तत्रायमेव प्रष्टव्यः—भोः कृष्ण तवास्मासु प्रीतिरौदासीन्यं द्रोहो वेति त्रयः पक्षाः संभाव्यमाना अपि विचारतो न घटंते । तत्र प्रीतिः सोपाधिर्निरुपाधिर्वा । नाद्या, सोपाधिप्रीतिमान् किल स्वकामसंपादकजनाननुरंजयत्येव न तु विरंजयति, त्वं त्वस्मानेव स्वविरहाग्नावधाक्षीरेव वधार्थम् । नापि परा, निशि घोरवनमध्य एवास्मत्त्यागादस्मत्कष्टद्रष्टुरपि तव क्रमानुत्पत्तेश्च । नाप्यौदासीन्यम्, अस्मत्सुखदुःखसाधकत्वदर्शनात् । नापि द्रोहः, स किं शाश्वतिकः प्रातिकूल्यनिबंधनो वा । नाद्यः, तथादर्शनाभावादेव । नापि द्वितीयः, अस्मासु तत्प्रातिकूल्याभावात् । किं त्वाश्वस्तपरिचारकजिघांसालक्षणविलक्षणो यः कश्चन द्रोहस्तस्यैवोदाहरणीभवता भवता भूयत इत्यादिकं स्वमुखेनास्माभिः स्फुटं न वाच्यं, किन्तु प्रहेलिकाभंग्या तथा किंचन प्रष्टव्यं यथायमेव यथार्थतया तत्प्रश्नोत्तरं ददान एतदादिकमर्थं व्याचक्षीतेति सहृदयत्वात्तुल्यमनोगतविमर्शास्ताः—भो महाप्राज्ञ कृष्ण एकामस्माकमर्थप्रहेलिकां व्याचक्ष्वेत्याहुः—भजतो जनाननुलक्षीकृत्यैव भजंति । एके जनाः सापेक्षं भजंतीत्यर्थः । अत्र सापेक्षवस्त्वलाभे सति नापि भजंतीति सोपाधिप्रीतिरायाता । एतद्विपर्ययं यथा स्यात्तथा भजन्ति । एकेऽभजतोऽपि भजन्ति निरपेक्षं भजन्तीत्यर्थः । अत्र स्वापेक्ष्यफलान्तरानुद्देशाद्भजनत्यागतो वा निरुपाधिप्रीतिरायाता । अन्ये तु नोभयान् भजंतीति नापि सापेक्षं नापि निरपेक्षं भजंतीत्यौदासीन्यमायातम् । द्वेषो द्रोहश्चाप्यभजनं भवेदिति तावप्यायाताविल्यत एतद्विवरणे एवमेव किञ्चित्किञ्चिदधिकमपि व्यक्तीकरिष्यते भगवता । एतन्नो ब्रूहीति एते खलु के एतद्भजनमभजनं वा किं तद् ब्रूहीत्यर्थः । एते च एतच्च एतदिति “ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ” इत्येकशेषैकत्वे ।

श्रीभगवानुवाच ॥ मिथो भजंति ये सख्यः स्वार्थैकांतोद्यमा हि ते ॥ न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा ॥ १७ ॥
भजंत्यभजतो ये वै करुणाः पितरो यथा ॥ धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः ॥ १८ ॥

विदिताभिप्रायो भगवानुत्तरमाह । मिथ इति । हे सख्यः उपकारप्रत्युपकारतया ये मिथो भजंति तेऽन्यं न भजंति किं त्वात्मानमेव । कुतः । हि यस्मात्स्वार्थ एवैकांतत उद्यमो येषां ते । तत्र च न सौहृदमतो न सुखं न च धर्मः किं त्वर्थ एव दृष्टोद्देशाद्गोमहिष्यादिभजनवदित्यर्थः ॥१७॥ ये त्वभजतो भजंति ते द्विविधाः करुणाः स्निग्धाश्च । तत्र तु यथाक्रमं धर्मकामौ भवत इत्याह । भजंत्यभजत इति ॥ १८ ॥

साधु यथार्थमेव ब्रूहि वैयधिकरण्यं मुंचन्नित्यर्थः ॥ अत्र **तोषिणी**—अथ सेयं परिपाटी स्वत्यागपरिहासार्थमेव ताभिः कृतेति बोधयन्नाह—गोप्य ऊचुरिति । तत्र चैतदिति उभयान् भजतश्चाभजतश्च न भजंतीत्यंतप्रश्नत्रयं साधु यथा स्यात्तथा ब्रूहीत्यर्थः । ते के, किं वा तेषां फलं तत्सर्वं विविच्य कथयेत्यर्थः । भो इति संबोधनेनावधापयंति । स्वस्मिन्दोषपर्यवसानशंकया तस्य मनोनभिनिवेशानुकरणात् ॥ १६ ॥ विदितो ज्ञातोऽभिप्रायस्स्वस्मिन्दोषारोपलक्षणो येन स तथा । स्वार्थे स्वप्रयोजन एव । एकांतः निश्चितः । उद्यमः उद्योगः । तत्र परस्परभजने । अतः सुहृत्ताभावान्न सुखं, धर्मस्तु दानार्चनादिरूपोऽदृष्टार्थः प्रायो भवति । दृष्टोद्देशाद्दुग्धादिनिमित्तं, यद्यपि गोभजनमदृष्टार्थमपि तथापि प्राकृतैस्तदचिंत्य दृष्टार्थमेव तत्क्रियतेऽतो गोपदोपादानमत्रेति । इत्यर्थ इति—अन्योन्यपशुकंडूतिवद्दृष्टार्थस्य न धर्मत्वमिति भावः ॥ * ॥ विदिताभिप्राय उत्तरमाह—मिथ इति । उपकारप्रत्युपकारापेक्षया ये मिथो भजन्ति ते स्वार्थे दृष्टाऽदृष्टे स्वीयफलार्थ एव एकांत उद्यमो येषां ते । हि निश्चितं स्वात्मानमेव भजंति नान्यं, तन्मिथो भजनं नान्यथा अन्यथा न स्यात् अतस्ते स्वार्थपराः सोपाधिप्रीतिमन्तः । कामिन एवेत्यर्थः । तत्र तेषु सौहृदं प्रेम नास्ति । धर्म इति उत्तरश्लोकार्थदृष्ट्या निरपवादो धर्मश्च नास्ति । 'स्वात्मार्थम्' इति पाठे तदित्यस्य विशेषणमेतत् ॥ अत्र **तोषिणी**—स्वार्थोऽत्र स्वीयं दृष्टमदृष्टं च फलम् "भजन्ति ये यथा देवान्देवा अपि तथैव तान्" इति न्यायेन यज्ञादिसन्तोषितदेवतादिभिरपि गोमहिष्यादिभिर्दुग्धादिकमिव स्वर्गादिकं दीयत इति तस्मिन्नेकान्तस्तन्मात्रनिष्ठ उद्यमो येषां न तत्र सौहृदम् । धर्म इति प्रसिद्धमपि तद्द्वयं वक्ष्यमाणरीत्या सापवादमेव मन्यामहे इत्यर्थः । धर्मस्य स्वातंत्र्येण पुरुषार्थत्वेप्यर्थकामाभ्यां परिवर्तनाय विनियोगापातात्, सौहृदस्य चैकतरमयत्वादिति भावः । हि निश्चये । अन्यथा उक्तादन्यप्रकारेण । तत् मिथो भजनं न स्यात् । यद्वा—तत्र मिथ्यात्वं नास्तीत्यर्थः । तत्रात्मनोऽपि तासु तादृशभजनशंकां सहजसख्योल्लेखेन परिहरन्संबोधयति—हे सख्य इति । अन्यत्तैः । अत्रातो न सुखमित्यर्थबलाद्व्याख्यातम् । यद्यपि तत्रापि दृष्टसुखं घटते तथापि सौहृदराहित्येनोत्तमानां सुखबुद्धिर्न जायत इति भावः । किन्तु पाठोऽयं कल्पित इव लक्ष्यते । उत्तरत्रैतत्प्रतियोगिवाक्येऽपि नापेक्षितव्य इति । स्वार्यार्थमिति पाठोऽपि चित्सुखादीनां बहूनां संमतः । तत्र तद्भजनमन्यार्थं प्रतीयमानमपि स्वप्रयोजनार्थमेवेत्यर्थः । स्पष्टमन्यत् ॥ १७ ॥ तत्र तु तयोस्तु । करुणाः आर्तदर्शनश्रवणादिना द्रवद्धृदयाः । अत्र अभजद्भजने । निरपवादो निर्दोषः । सौहृदं साधुत्वं च । "उपकारिषु यः साधुः साधुत्वे तस्य को गुणः । अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥" इति जैमिनीयोक्तेः । हे सुमध्यमा इत्यनेन यूयं सुष्ठु मध्ये चेतसि भवं मध्यमं धर्मं यासां तास्तथा । अभजंतमपि मां भजंत्यो धर्मशीलाः स्थेति ध्वनितम् ॥ * ॥ द्वितीयप्रश्नस्योत्तरमाह—अभजतो ये भजन्ति निरपेक्षं भजंतीत्यर्थः । ते निःसंबंधसंबंधभेदाद्द्विविधाः । करुणा यथा—पितरो यथेति । तत्र करुणाः शुद्धभक्तास्तेष्वेव प्रह्लादादिषु निरुपाधिकरुणस्योदयदर्शनादिति दृष्टान्तद्वैविध्यादुभयेऽपि प्रत्युपकारानपेक्षिणस्तद्दुःखसुखाभ्यांदुःखसुखवन्तो भजनं प्राणात्ययेऽपि न त्यजन्ति । पूर्वे श्रेष्ठाः, उत्तरे अवराः । अत्रैषूभयेष्वेव धर्मो निरपवादः फलाकांक्षाराहित्यादनश्वरः । सौहृदं प्रेम च निरपवादम् । हे सुमध्यमा इति—श्लेषेण शोभनमध्यम एव प्रश्नो यासां ताः । विगीतोदाहरणत्वादाद्यन्तौ प्रश्नौ

भजतोऽपि न वै केचिद्भजंत्यभजतः कुतः ॥ आत्मारामा ह्याप्तकामा अकृतज्ञा गुरुद्रुहः ॥ १९ ॥
नाहं तु सख्यो भजतोऽपि जंतून्भजाम्यमीषामनुवृत्तिवृत्तये ॥ यथाऽधनो लब्धधने विनष्टे तच्चिंतयाऽन्यन्निभृतो न वेद ॥ २० ॥

तृतीयप्रश्नोत्तरं भजतोऽपीति । अयमर्थः । ते त चतुर्विधाः । एके आत्मारामा अपराग्दृशः । केचिदाप्तकामा विषयदर्शिनोऽपि पूर्णकामत्वेन भोगेच्छारहिताः । अन्येऽकृतज्ञाः संमूढाः । अन्ये तु गुरुद्रुहोऽतिकठिनाः । ‘ स पिता यस्तु पोषकः ’ इति न्यायादुपकर्ता गुरुतल्यस्तस्मै द्रुह्यंतीति तथा ते ॥ १९ ॥ अत्र चरमकोटिगतमात्मानं मत्वाऽक्षिसंकोचैः परस्परं गूढस्मितमुखीस्ता दृष्ट्वाऽऽह । नाहं त्विति । हे सख्यः अहं तेषां मध्ये न कोपि किं तु परमकारुणिकः परमसुहृच्च । कथम् । अमीषां भजतामनुवृत्तिवृत्तये निरंतरध्यानप्रवृत्त्यर्थं तान्न भजामि । एतत्सदृष्टांतमाह । यथेति । तस्य धनस्यैव चिंतया निभृतः पूर्णो व्याप्त इति यावत् । अन्यत्क्षुत्पिपासाद्यपि न वेद ॥ २० ॥

विगीताविर्त्यर्थः । यद्वा—शोभनं मध्यममुत्तरं यास्वेवं मध्यमस्य प्रश्नोत्तरस्यास्य भवत्य एवोदाहरणानीत्यर्थः ॥ अत्र **तोषिणी**—वै प्रसिद्धौ । यथेत्युभयेषामुदाहरणार्थम् । पितरौ चेति चकारोऽध्याहार्यः । निरपवादो विप्रतिपत्तिराहित इत्यर्थः । सौहृदं च निरपवादम् । हे सुमध्यमा इति । सर्वसल्लक्षणोपलक्षणत्वेन तादृशगुणत्वं युष्मासु भात्येवेति भवत्य एव तत्र साक्षिण्य इति भावः । इदं च तासामात्मभजनार्थं चातुर्यम् । यद्वा—पूर्वं सोपाधि भजतामुद्दिष्टयोरपि सौहृदधर्मयोः सापवादत्वमुक्त्वा संप्रति निरुपाधि भजतामुद्दिष्टयोरपि तयोर्निरपवादत्वमाह । तत्राप्युदाहरणीकृतानां करुणानां पित्रोरप्यविशेषमाह—भजंत्यभजत इति । करुणेषु सौहृदस्यापि स्पष्टत्वात् । पित्रोः पुत्रादिपालनस्य गार्हस्थ्यधर्मसहायत्वाद्धर्मस्यापि सामान्यतः प्राप्तेः ॥१८॥ तृतीयप्रश्नस्य ‘ नोभयांश्च भजन्त्यन्ये’ इत्येवंरूपस्य उत्तरं प्रस्फोटयति—अयमर्थ इति । ते उभयभजनहीनाः । एके मुख्याः । न पराक् बहिर्विषयान्पश्यन्ति किं त्वात्मानमेव केवलं ये पश्यन्ति तेऽपराग्दृशः ज्ञानिनः । केचित् तद्विशेषाः । आप्तः कामो येषां ते “ आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् । तद्वत्कामा यं प्रविशन्ति सर्वे ” इत्यादिस्मृतेर्ज्ञानिनां कामनोदयाभावात् । अन्ये प्राकृताः । संमूढाः अतिमूढाः । अन्ये तदितरे । अतिकाठिन्यं विना गुरूणां हिताशंसिनां द्रोहो न भवतीत्यभिप्रेत्याह—गुरुद्रुहः अतिकठिनाः ॥ * ॥ तृतीयप्रश्नस्योत्तरमाह—भजतोऽपीति । ते यथोत्तरन्यूनाश्चतुर्विधाः । आत्मारामा अबहिर्दृशः एके । अन्ये आप्तकामाः, बहिर्दर्शित्वेऽपि स्वत एव पूर्णकामत्वेन न परतो भोगेच्छवः । अपरे अकृतज्ञाः, परतो भोगेच्छुत्वेऽपि परैः कृतमुपकारादिकं न जानन्ति । अन्ये गुरुद्रुहः, परैः कृतमुपकारादिकं न मंन्यतां प्रत्युत तेभ्यो गुरु अधिकं द्रुह्यन्ति ते निर्हेतुकद्रोहिणः, सहेतुकद्रोहिणस्त्वल्पद्रुहः कैमुत्यप्राप्तत्वेन तदंतर्भूता एव, तथापालकत्वाद्गुरवश्च ते द्रुहश्चेति गुरुद्रुहो विश्वस्तघातिनश्चेति त्रिविधद्रोहोप्यभजनमेव । ततश्च प्रथमप्रश्नोत्तरस्योदाहरणमेकमेव, द्वितीयप्रश्नोत्तरस्य द्वे, तृतीयप्रश्नोत्तरस्य षडित्येवं नव ॥ अत्र **तोषिणी**—वै एव, नैव भजन्ति । हि प्रसिद्धौ । एवमकृतज्ञानामज्ञत्वेनाभजनमभिप्रेतं ज्ञात्वापि ये न भजन्ति ते त्वशेषदोषयुक्ता इत्याह—गुर्विति । गुरूपेक्षका इत्यर्थः । प्राणदंडोचितविप्रादेरिव तादृशस्योपेक्षा एव द्रोह इति । अत्र तु पदार्थे तात्पर्यं नास्ति किन्तु गौण्या वृत्त्या कृतोपकारोपेक्षका गम्यन्ते । तेन च तेषामर्थधर्मसौहृददयापेक्षाराहित्यं व्यज्यत इति ज्ञेयम् ॥ १९ ॥ अत्र चतुर्षु । चरमकोटिगतम् अंत्यकक्षाप्रविष्टम् । आत्मानम् श्रीकृष्णम् । मत्वा ज्ञात्वा । अक्षिसंकोचैः ईषन्नेत्रचालनैः । परस्परगूढस्मितमुखीः अन्योन्यगुप्तेषद्धासास्याः । ताः गोपीः दृष्ट्वा श्रीकृष्णो वक्ति—नाहं त्विति । तेषाम् चतुर्णाम् । न कोपि अन्यतमोऽपि न । किन्तु अपि तु । परमकारुणिकत्वादिकं शंकते—कथमिति । तान् भजतः । एतत् वृत्तम् । अधनो दरिद्रः । मम सकृत्संभूय पुनरंतर्द्धानं स्वस्मिन्प्रीत्यतिशयार्थम् “ सकृद्यद्दर्शितं रूपमेतत्कामाय तेऽनघ । मत्कामः शनकैस्साधुः सर्वान्मुञ्चति हृच्छयान् ॥ ” इति नारदं प्रति मदुक्तेः । भक्तसंसृतिविनाशार्थमेव मम लीलेति भावः ॥ * ॥ तत्र प्रथमद्वितीयप्रश्नोत्तरोदाहरणेषु त्वं न वर्तसे

एवं मदर्थोज्झितलोकवेदस्वानां हि वो मय्यनुवृत्तयेऽबलाः ॥ मया परोक्षं भजता तिरोहितं माऽसूयितुं मार्हथ तत्प्रियं प्रियाः ॥ २१ ॥

एवं मदर्थोज्झितलोकवेदस्वानां मदर्थे उज्झितो लोको युक्तायुक्ताप्रतीक्षणात् वेदश्च धर्माधर्माप्रतीक्षणात् स्वा ज्ञातयश्च स्नेहत्यागात् याभिस्तासां वो युष्माकं परोक्षमदर्शनं यथा भवति तथा भजता युष्मत्प्रेमालापान् शृण्वतैव तिरोहितमंतर्धानेन स्थितम्।तत्तस्मात् हे अबला हे प्रिया मा मामसूयितुं दोषारोपेण द्रष्टुं यूयं माऽर्हथ न योग्याः स्थ॥२१॥

तृतीयप्रश्नोत्तरोदाहरणेषु मध्ये कतम इति चेत्—शृणुत, भो मन्मुखेनैव मत्पराजयं शुश्रूषवो मिथः स्मितविलसितकटाक्षनटनचातुरीधुरीणाः सख्यः शृणुत—नारायणत्वेनात्मारामः पूर्णकामश्च भवन्नपि नंदपुत्रत्वेनानात्मारामोऽपूर्णकामश्च, गोपबालत्वेनानधीतनीतिशास्त्रत्वादकृतज्ञो भवन्नपि नारायणत्वेन सार्वज्ञ्यात्कृतज्ञश्च, सविलासादिभिर्मुहुः प्रणीतानामपि युष्माकं सकृन्मात्रत्यागेन द्रोहाद्गुरुध्रुगपि भवन्पुनः स्वदर्शनानंददानान्न गुरुध्रुक् च। तर्हि निश्चयेन को भवति भवानिति चेत्, तत्राह—नाहमिति । तुर्भिन्नोपक्रमे । जंतून् जीवमात्राणि भजतोऽप्यहं न भजामि । तर्हि पूर्वतः को भेदस्तत्राह—अमीषां भजतामनुवृत्तिर्मद्भजनं तस्या वृत्तये जीविकायै । हे अबला मदभिप्रायं ज्ञातुमसमर्थाः हंतहंत यमेवोपायं करोमि स एव विफलीभवति तस्मान्मय्यपराधिन्यनुग्रहलेशोऽपि कृष्णस्य नास्ति धिङ् मामिति प्रतिक्षणं निर्वेददैन्यादिवृद्ध्या कामक्रोधाद्यनुपगमैर्भक्तिः प्रदीप्ताभवत्यज्ञातप्रेम्णाम्, जातप्रेम्णां तु अनुवृत्तिर्मदासक्तिस्तस्या जीविकार्थं न भजामि दर्शनं दत्त्वाप्यंतर्भवामि तत एवानुवृत्तिरासक्तिः प्रवृद्धीभवति । तत्र जातप्रेमस्वेव दृष्टान्तः—यथेति । तस्य धनस्यैव चिन्तया निभृतः पूर्णः, व्याप्त इति यावत्। अन्यत् क्षुत्पिपासाद्यपि न वेद अतो मां भजतां मदनुवृत्तिरेव वांछितं तस्या आधिक्येन संपादनादहंता न प्रकटमभजन्नप्यप्रकटमधिकमेव भजामीत्यहमपि वस्तुतः करुण एव, द्वितीयप्रश्नस्योदाहरणीभूतो यथा भवत्य इत्यतो मम स्वदर्शनदानादाने एव भजनाभजनेन व्याख्येये । "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति वस्तुप्रतिज्ञाया अन्यथा भावानर्ह्यादिति भावः ॥ अत्र **तोषिणी**—तदेवं तासां मते तदादिभिः सह विचित्र क्रीडया रममाणस्य तस्यात्मारामादिद्वयं न घटत एव विरहार्तिप्रदत्वेन । न च पूर्वोक्ते सापेक्षनिरपेक्षभजने तादृशोत्तरादिचातुर्येण विज्ञताभिव्यक्तेर्न चाकृतज्ञत्वं ततो गुरुध्रुक्त्वं निर्विशेषं काठिन्यमेव पर्य्यवसितामित्यभिप्रेत्य तैर्व्याख्यातम्—अत्र चरमेति । पूर्वं कृतज्ञतामात्रमापादयितुमपृच्छन्नधुना तु ततोऽपि दोषवैशिष्ट्यपर्यवसानेन संतुष्टा जाता इत्यभिप्रेत्य व्याख्यातमक्षिप्तं ( नि ) कोचौरीति । अथ वा काठिन्यापादनार्थमेवायं प्रश्नोद्यम इति व्याख्येयम् । अथाभजनेऽपि मम सर्वेभ्यो भजनकृद्भ्य उत्तमभजनत्वं, किमुत भजन इत्याह—नेति । तुशब्दो भिन्नोपक्रमे । आत्मारामादिचातुर्विध्यरहितोऽप्यहं भजतोऽपि जनान्न भजामि "नाहं वसामि वैकुंठे योगिनां हृदये न च । मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ॥" इत्यादिमदुक्तिभिस्तन्निकटस्थितमपि स्वं तेभ्यो न दर्शयामीत्यर्थः । नञः सर्वादौ प्रयोगः स्ववाक्येनैव स्वस्य यंत्रणापत्त्या परमवैयग्र्यात् । हे सख्य इति आत्मारामादिराहित्यमेव साधितम् । जंतूनित्यविशेषात्सर्वत्रैव ममेदृशो व्यवहारो न तु भवतीष्वेवेति नात्मनि ममौदासीन्यं शंकनीयमिति भावः । कथं न भजसि, तत्राह—अमीषामिति । अनुवृत्तीनां निरन्तरध्यानानां वृत्तिर्यस्मात्तस्मै । संततप्रेमप्रकर्षायेत्यर्थः । नन्वस्माकं त्वय्यनुवृत्तिवृत्तिः सदा वर्तत एवेति चेत्—सत्यम्, तथापि वैशिष्ट्यार्थमिति सदृष्टांतमाह—यथेति । विशेषतो नष्टे हारित इति वैयग्र्यविशेषो दर्शितः । अत एव तच्चिन्तया नितरां भृतो व्याप्तः । तदेवं रूपगुणादिना सर्ववरित्वात्सवार्थपूर्णत्वेन प्रेममात्रसापेक्षत्वेन च प्रत्युपकारानपेक्षतया साम्येऽपि करुणपितॄनप्यतिक्रम्य स्वस्य हितैषित्वं दर्शितम्, स्वादेयसर्ववशीकारसर्वपुरुषार्थशिरोमणिस्वप्रेमदानात् । तथा प्रियप्रेमरसास्वादाधिक्यं च बोधितं, संततत्तद्वर्धनलालसात् तदर्थं तद्विरहदुःखसहनाच्चेति ज्ञेयम् ॥ २० ॥ युक्ताऽयुक्ताऽप्रतीक्षणम् सदाचरणलोकापवादभीतित्यागरूपम् । धर्माऽधर्माऽप्रतीक्षणम् निजपतित्यागौपपत्यसेवनरूपम्। शृण्वतेत्युपलक्षणम्—प्रेमालापं शृण्वता, गुणगाथां गायता, भावविशेषं स्मरता केवलमंतर्द्धानेनात्रैव स्थितं, विश्वासाभावश्चेत्प्रष्टव्यं यमुनादिभ्यः ॥ * ॥ ननु जंतून्स्वभक्तानजातप्रेम्णो जातप्रेम्णश्च यदेवं भजसि तत्सम्यक्करोषि, किन्त्वस्मास्वपि तथैव तद्व्यवहरणाद्वयमपि जंतुमध्यगण्या अभूमेति तासां सानुशयं वाक्यमाशंक्य भो मत्प्राणपरार्द्धप्रियपदपयोजपांशुपरमाणवः सख्यो युष्मासु यदन्यसाधारण्येनाद्य व्यवहृतं तदेतन्मे दौरात्म्यं क्षमध्वमित्याह—एवम् 'व वा यथा तथैवैवम्' इत्यमरोक्तेस्तद्वदित्यर्थः । ततश्च मदर्थे उज्झितो लोकः युक्ताऽयुक्ताऽप्रतीक्षणात्, वेदश्च धर्माऽधर्माऽप्रतीक्षणात्, स्वान्यात्मात्मीयधनज्ञातयश्च

न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषापि वः ॥ यामाभजन्दुर्जरगेहशृंखलाः संवृश्च्य तद्वः प्रतियातु साधुना ॥ २२ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे द्वात्रिंशोऽध्यायः ॥ ३२ ॥

आस्तामिदं परमार्थं तु शृणुतेत्याह । नेति निरवद्यसंयुजां निरवद्या निर्दोषा निष्कपटा संयुक् संयोगो यासां तासां वो विबुधानामायुषाऽपि चिरकालेनापि स्वीयं साधुकृत्यं प्रत्युपकारं कर्तुं न पारये न शक्नोमि । कथंभूतानाम् । या भवत्यो दुर्जरा अजरा या गेहशृंखलास्ताः संवृश्च्य निःशेषं छित्त्वा मा मामभजन्मदेकनिष्ठचित्ता अभूवंस्तासाम् । मच्चित्तं तु बहुषु प्रेमयुक्ततया नैकनिष्ठम् । तस्माद्वो युष्माकमेव साधुना साधुकृत्येन तद्युष्मत्साधुकृत्यं प्रतियातु प्रतिकृतं भवतु । युष्मत्सौशील्येनैव ममानृण्यं न तु मत्कृतप्रत्युपकारेणेत्यर्थः ॥ २२ ॥ इति श्रीभा० म० दशम० पूर्वार्धे टीकायां द्वात्रिंशोऽध्यायः ॥ ३२ ॥

स्नेहत्यागात् याभिस्तासामपि वस्तद्वदनुवृत्तये उक्तलक्षणानामन्येषां भक्तानामिवानुवृत्तिवृद्ध्यै परोक्षमदर्शनं यथा स्यात्तथा भजतां युष्मत्प्रेमालापान् शृण्वता तिरोहितामिति काकुः । तस्मादतीवानौचित्यं हृतमित्यर्थः । न हि प्राचीना अर्वाचीना भाविनो वा भक्ताः संभवेयुः, न ह्येतावत्या अप्यनुवृत्तेरपरवृद्धिरास्ति, न हि परमाणुपरममहतोर्ह्रासवृद्धी केनाप्याशास्येते तस्मादन्यप्रेमिभक्तान्प्रति युष्मत्प्रेमवैप्रलंभिकप्रतापमहोत्कर्षजिज्ञापयिषामयी ममेयम समीक्ष्यकारिता क्षम्यतामिति भावः । यस्मादेवं तस्मान्मा मां प्रत्यसूयितुं दोषारोपेण द्रष्टुं नार्हत । तत्र प्रियमिति प्रिया इति च हेतू । प्रियस्य दोषं प्रियाः खलु न मनस्यानयंतीत्यर्थः ॥ अत्र **तोषिणी**—अद्यैव च भवतीनां निकट एव स्थितवानस्मीत्याह—एवम् 'दुह्यंत्योऽभियुः काश्चित्' इत्यादिप्रकारेण मदर्थेत्यादि । हे अबला इति तत्तत्परित्यागे दुष्करत्वं सूचयति । मा सूयितुमित्यत्र हेतुविशेषमप्याह—प्रियं प्रिया इति । हि निर्धारणे । यद्वा—एवम् 'यथाऽधनः' इत्यादिप्रकारेण । वो युष्माकं मय्यनुवृत्तिवृत्तये एव मया तिरोहितम्, "पदानि व्यक्तमेतानि नंदसूनोर्महात्मनः" इत्यादिभवद्वाक्यानुसारेणाग्रतः पार्श्वतः स्थित्वैव भवद्दृष्टिमात्रा गोचरीबभूवेत्यर्थः । किं कुर्वता—परोक्षं भजता प्रेमालापादिकमनुमोदमानेन । तथानुग्रहे हेतुः—मदर्थेति । अन्यत्तैः । यद्वा—माद्वयं निषेधे । तथापि प्रियं मल्लक्षणं मासूयितुं मार्हथ, अपि तु मद्दत्तदुःखा यूयमर्हथैवेत्यर्थः । कुतः—प्रियं प्रियाः प्रियस्य प्रियासु तथा कर्तुमयुक्तत्वादित्यर्थः । एतच्चानुनयचातुर्यम् ॥ २१ ॥ आस्ताम् स्थीयताम् । इदम् वृत्तम् । परमार्थम् सत्यभूतम् । नैकनिष्ठम् एकस्य बहुषु स्थानासंभवादित्यर्थः । इत्यर्थ इति—इत्थमतीव दुष्करप्रेमरूपद्रविणदातृत्वेनोत्तमर्णानां भवतीनां तत्प्रतीकारासमर्थस्य ममाधमर्ण्यमेव स्थास्यतीति तात्पर्यम् । विगतो बुधो गणनाभिज्ञो यस्मात्तेन स्वभावनित्येनाप्यायुषेति वा ॥ * ॥ मन्मनसि संततं यदुद्भवति तच्छृणुतेत्याह—नेति । निरवद्या कामकर्मलोकधर्मशास्त्रापेक्षाराहित्येन निरुपाधिसंयुक् संयोगो यासां तासां वः स्वेनैव यत्साधुकृत्यं न तु साधुत्वापादकेन केनचिद्वस्तुसंपर्केण साध्वित्यर्थः, तत् न पारये प्रतिकर्तुं न शक्नोमि । विबुधायुषापि देवानामायुः प्राप्यापीत्यर्थः । कृत्यमित्येकवचनेन युष्माकं क्षणिकमपि कृत्यमित्यर्थः । या मा माम् अभजन् । संवृश्च्य दुर्जरा अपि पतिश्वश्रूपिताभ्रात्रादिस्नेहशृंखलां निःशेषं छित्त्वैव, श्लेषेण अपक्वयोगिन इव संवृश्च्यापि ताः शृंखलामापुर्नैवाभजन्नित्यर्थः । अहं तु पित्रोर्भ्रातरि स्वेषु बंधुष्वपि स्निह्यामि च युष्मान्भजामि चेति ' ये यथा मां प्रपद्यन्ते ' इति स्वप्रतिज्ञातोपि च्युत इति मम प्रतिक्रियाया असंभवः, व्यज्यमानोऽयमर्थः श्लेषेणापि लभ्यते स यथा—संवृश्च्य या युष्मान् अहं मा अभजम् । परसवर्णेन नकारदुकारयोः संयोगः । तत्तस्माद्वः साधुत्वेनैव तद्युष्मत्साधुकृत्यं प्रतियातु प्रतिकृतं भवतु, युष्मत्सौशील्येनैव ममानृण्यं, वस्तुतस्तु ऋण्येव भवामि युष्माकमिति भावः । ततश्च ताभिः प्रातस्स्वमनस्येव विचारितं परमेश्वरत्वादेव सर्वगुणपरिपूर्णत्वेऽपि दोषगंधमात्रराहित्येऽप्यस्मत्प्रेमरसविज्ञत्वेप्यस्मान् प्रेमवत्वेनोत्कर्षयितुं स्वं चापकर्षयितुमस्मदृणी भवितुमेवास्मत्कर्मकोऽयमस्य त्यागस्तदिमं पराबुभूषुं जिगीषवो वयमेवाधन्या एवं भवितुमपारयंत्योऽनेन फलतः प्रेम्णा जिता एवाभूमेति ॥ इति भावार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । दशमे द्व्यधिकस्त्रिंशः संगतः

श्रीशुक उवाच ॥ इत्थं भगवतो गोप्यः श्रुत्वा वाचः सुपेशलाः ॥ जहुर्विरहजं तापं तदंगोपचिताशिषः ॥ १ ॥
तत्रारभत गोविंदो रासक्रीडामनुव्रतैः ॥ स्त्रीरत्नैरन्वितः प्रीतैरन्योन्याबद्धबाहुभिः ॥ २ ॥

त्रयस्त्रिंशे ततो गोपीमंडलीमध्यगो हरिः ॥ प्रियास्ता रमयामास ह्रदिनीवनकेलिभिः ॥ १ ॥ तत्तदा अंग हे राजन् । यद्वा तस्य भगवतोंगेन वपुषा करचरणाद्यवयवैर्वोपचिताः समृद्धा आशिषो यासां ताः ॥ १ ॥ रासक्रीडां रासो नाम बहुनर्तकीयुक्तो नृत्यविशेषस्तां क्रीडाम् । अन्योन्यमाबद्धाः संग्रथिता बाहवो यैस्तैः सह ॥ २ ॥

संमतः सताम्॥ अत्र **तोषिणी**—त्र इति संबंधमात्रे षष्ठी । युष्मान्प्रतीत्यर्थः । स्वसाधुकृत्यं स्वीयप्रत्युपकारकृत्यं न पारये प्रतिकर्तुं न शक्नोमि । यद्वा—वो युष्माकं यत्स्वीयमसाधारणं साधुकृत्यं तदहं न पारये तत्सदृशप्रत्युपकारे न समर्थोऽस्मीत्यर्थः । स्वसाधुकृत्यत्वमेव दर्शयति—निरवद्या काममयत्वेन प्रतीयमानत्वेऽपि वस्तुतो निर्मलप्रेमविशेषमयत्वेन निर्दोषा संयुक् सयोगः सम्यग्मद्विषयकचित्तैकाग्रता, स्वस्वपत्यादिस्पर्शाभावेन च निर्दोषा संयुक् संगमो यासाम् । किञ्च, या इति दुर्ज्जराकुलवधूत्वेन छेत्तुमशक्या अपि गेहशृंखला गृहसंबंधिन्य ऐहिकपारलौकिकसुखकरलोकधर्ममर्यादाः संवृश्च्य मा माम् अभजन् परमानुरागेण मय्यात्मनिवेदनं कृतवत्य इत्यर्थः । अतो ममान्यत्रापि प्रेमयुक्तत्वान्न पारय इत्यर्थः । अत्रोत्तरं—त्र इति पदमनपेक्ष्यैव या इति प्रयुज्यते पश्चादेव च तेन योज्यतेऽतः प्रथमपुरुषत्वम् । अन्यत्तैः । विगतो बुधो गणताभिज्ञो यस्मात्तेनानन्तेनायुषापीत्यर्थः । शृंखलामिति क्वचिदेकवचनान्तः पाठः॥निज शेषरसाशेषप्रदानेन सदानुगम्।मां पुष्टं पाति यस्तुष्टः स्वामिनं यामि तं गतिम्॥२२॥इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे पूर्वार्द्धे द्वात्रिंशोऽध्यायः॥३२॥ ततो गोपीश्लाघानंतरम् । ताः कालिंदीतीरस्थाः । ह्रदिनीकेलिर्जलक्रीडा, वनकेलिरित्युपलक्षणं स्थलक्रीडादीनामिति ( १ ) । तदा गोप्याश्वासनानंतरम् । क्लिष्टकल्पनापेक्षयाऽक्लिष्टमार्ग एव साधुरिति मत्वाह—यद्वेति । "अंग प्रतीकेऽवयवोपायदेशप्रियेषु च " इति धरणिः । यद्वा—भगवतो विशेषणम् । तत्र तासामंगेनेत्यादिसमासः ॥ * ॥ त्रयस्त्रिंशे रासलास्यविहारजलकेलयः ॥ प्रश्नोत्तराण्यप्युक्तानि परीक्षिच्छुकदेवयोः ॥ ( १ ) ॥ सुपेशलाः अतिमनोहराः । तस्यांगस्पर्शादिना उपचिता आशिषः कामा यासां ताः । भगवत एव वा विशेषणम् । गोपीगात्रस्पर्शजनितसुखस्येत्यर्थः । तेन च प्रश्नोत्तरसमाप्तौ मानशांत्या तदाऽऽलिंगनचुंबनादिविलासा आसन्निति द्योतितम्॥ अत्र **तोषिणी**—रासलीला जयत्येषा जगदेकमनोहरा ॥ यस्यां श्रीव्रजदेवीनां श्रीतोऽपि महिमा स्फुटः ॥ ( १ ) ॥ इत्थम् ईदृशीः । सुपेशला परममनोहराः । विरहो भूतो भावी च, तज्जं तापं जहुः, विरहेप्यपरित्यागश्रवणात्तथा विशेषतोऽपि निजऋणित्वादिप्रतिपादनेन च दैवात्पुनर्विच्छेदेऽप्यत्यन्तपरित्यागशंकापगमनाच्च । अतः पूर्वमुक्तस्याप्यत्र पुनरुक्तिरधुनैव सम्यक्परित्यागस्य विवक्षया । किं च, तदंगेत्यालिंगनकरग्रहणादिना संपन्नमनोरथाः सत्यः । यद्वा—भगवत एव विशेषणं—सुपेशलत्वाग्वेतुत्वेन तासां गोपीनामंगैरुपचिताशिष इति ॥ १ ॥ तत्र कालिंदीतटे । गोविन्द इति—गोपीनां श्रुत्यवतारत्वाद्वा वेदलक्षणा वाणीरूपा गोपीर्विंदति लभत इति गोविंदः, गोभिः श्रुतिरूपाभिर्गोपीभिर्लभ्यत्वाद्वा । रासक्रीडेति—भक्तिप्रसन्नभगवत्प्रीतिरेवानंदानुभवे कारणं नान्यत्साधनमिति दर्शयितुं रासक्रीडामाह—" जक्षन् क्रीडन्नममाणः " इति श्रुतेः । साक्षाद्रासलीलामेवाह श्रुतिः—"पद्या वस्ते पुरुरूपा वपूंष्यूर्द्ध्वा तस्थौ त्र्यविं रेरिहाणा ऋतस्य सद्म विचरामि विद्वान्महद्देवानामसुरत्वमेकम् " इति । अस्या अर्थः—पद्या योग्या कृष्णमूर्तिर्बहुरूपा वपूंषि बहूनि वस्ते परिधत्ते । तस्याप्यन्योर्द्ध्वा गोपी संगरहिता तस्थौ । मध्य इति शेषः । किंभूता—त्र्यविं त्रेधाभूतां दृष्टिं रेरिहाणा गिलंती । रासे हि एकैकस्या गोप्या उभयतः कृष्णद्वयं पुरस्तादेकः, सा मूर्तिर्ऋतस्य धर्मस्य सद्मभूता तामनुचिंत्य विचरामि त्वद्वियुक्ता सती विद्वान् जानती काप्यवदत् देवानां कृष्णेन वियोजयतामसुरत्वं निर्दयत्वमेकं मुख्यं महदिति कृष्णतिरोधाने ज्ञेयमिति भावः । रासलक्षणं तु—" एकस्य पुंसो बह्वीभिः स्त्रीभिः क्रीडा तु मंडलैः । हल्लीसकक्रीडनकं रासक्रीडां विदुर्बुधाः ॥ " इति । नारदपुराणे तु—"पृथुं सुवृत्तं मसृणं वितस्तिमात्रोन्नतं कौ विनिखन्य शंकुम् । आक्रम्य पद्भ्यामितरेतरं तु हस्तैर्भ्रमोयं खलु रासगोष्ठी ॥ " इत्युक्तम् । आगमे त्वस्येयं प्रक्रिया—पृथ्वीकीलकोपरि मणिहाटकसंबद्धं विशालं चक्रं, तदुपर्यष्टदलं तत्समानं कमलं चतुरंगुलोन्नतं, तदु

रासोत्सवः संप्रवृत्तो गोपीमंडलमंडितः ॥ योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः ॥ प्रविष्टेन गृहीतानां कंठे स्वनिकटं स्त्रियः ॥ ३ ॥

तत्साहित्यमभिनयेन दर्शयति रासोत्सव इत्यादिनाक्षरचतुष्टयाधिकेन सार्धेन । तासां मंडलरूपेणावस्थितानां द्वयोर्द्वयोर्मध्ये प्रविष्टेन तेनैव कंठे गृहीतानामुभयत आलिंगितानाम् । कथंभूतेन । यं सर्वाः स्त्रियः स्वस्वनिकटं मामेवाश्लिष्टवानिति मन्येरंस्तेन । एतदर्थं द्वयोर्द्वयोर्मध्ये प्रविष्टेनेत्यर्थः । नन्वेकस्य कथं तथा प्रवेशः । सर्वसन्निहितत्वे वा कुतः स्वैकनिकटत्वाभिमानस्तासामित्यत उक्तम् । योगेश्वरेणेति । अचिंत्यशक्तिनेत्यर्थः ॥ ३ ॥

पारि युगपदाक्रमणेन कर्णिकायां स्थितेन परितो बहुश्रीमंडले च सता श्रीकृष्णेन तद्वामगपूर्वकं समकालगानं विचित्रं नृत्यमनुष्ठितमिति । विजयध्वजस्तु—नृत्यादिषु भरतरीतिसंज्ञेषु गातुमुपक्रांतेषु योधिरसोल्लासो जायते स रसस्तत्संबंधी रसो रासस्तदुद्रेकेण क्रीडा नृत्यविशेष इत्याह ॥ * ॥ नृत्यगीतचुंबनाऽऽलिंगनादीनां रसानां समूहस्तन्मयी या क्रीडा तामनुवृत्तैस्तदानीं परस्परैकमत्येन स्वानुकूलैः अन्योऽन्यमाबद्धाः संग्रथिता बाहवो यैस्तैः सह ॥ अत्र **तोषिणी**—तत्रेति । तदेवं ताभिः सहात्मन ऐकमत्ये सतीत्यर्थः । रासक्रीडामारभत परमाभिलषितानां तासां लाभेन पूर्वमेव कर्तुमीप्सितां महोत्सवरूपां तत्क्रीडां कर्तुं प्रवृत्तः । गोविंद इति—श्रीगोकुलेंद्रतायां निजाशेषैश्वर्यमाधुर्यविशेषप्रकटनेन परमपुरुषोत्तमता । स्त्रीरत्नैरिति—तासां च सर्वस्त्रीवर्गश्रेष्ठता प्रोक्ता 'रत्नं स्वजातिश्रेष्ठेऽपि' इति नानार्थवर्गात् । इति रासक्रीडायां परमसामग्री दर्शिता । अत एव प्रीतैस्तत्प्रेमभरविशेषैः । अतोऽनुव्रतैस्तदेकाधीनैः । अत एवान्योन्यमाबद्धबाहुभिः, बाहवोऽत्र करा ज्ञेयाः । अन्योन्यत्वञ्च तासामेव न तु तेन सह, तद्बाहुभ्यां तासां प्रत्येकमुभयतः कंठग्रहणात् । एतद्धि रासक्रीडालक्षणम्—"नटैर्गृहीतकंठीनामन्योन्यात्तकरश्रियाम् । नर्तकीनां भवेद्रासो मंडलीभूय नर्तनम् ॥" इति । अयमस्मन्मंडलीमध्येऽत्रैवास्तां न निस्सरत्वित्याबद्धेत्याशब्दव्यंजितस्तासां गूढोऽभिप्रायः ॥ २ ॥ तस्य तासां वा साहित्यम् । अभिनयेन रचनया । एतदर्थम् स्वस्वोपकंठमननार्थम् । इत्यर्थ इति—अंतराप्रदेशं विना स्वस्वनिकटमननं न संभवतीत्याशयः । तदसंभवं मत्वा शंकते—नन्विति । इत्यर्थ इति—"न तदिहास्ति लोकेषु यद्योगेन न जायते" इत्युक्तेः । सर्ववस्तुसंपादनं तु योगिनापि क्रियते किमुत योगेश्वरश्रीकृष्णवैभवमिति तात्पर्यम् । गोपीमंडलेति—प्रियामंके निधाय वेणुं वादयन्सतडिन्मेघोपम एकः प्रकाशो मेढीभूतो मध्ये विराजते यमवेक्ष्य मंडलं स्यादिति ॥ * ॥ तत्साहित्यप्रकारं दर्शयति—रासोत्सव इति षडक्षरन्यूनसार्धेन । रास एवोत्सवः भक्तहृन्मनश्चातकेभ्य आनंदामृतप्रदायकः । सम्यगेव प्रवृत्तः । केन—तासां मंडलरूपेण व्यवस्थितानां गोपीनां द्वयोर्द्वयोर्मध्ये प्रविष्टेन कृष्णेन । अत्र संप्रवर्तित इत्यनुक्तेः स्वतंत्रकर्तृत्वं तस्मै रासाय ददता स्वयं च करणत्वं भजता श्रीकृष्णेन स्वस्मात्सर्वशक्तिभ्यः सर्वलीलाभ्यश्च रासस्यैव महोत्कर्षः स्वदत्तो व्यंजयामासे । अत एव लक्ष्मीप्रभृतयोऽपि तं लब्धुमुत्कंठंत एव, न तु लभंत इति ज्ञेयम् । कथंभूतानाम्—तेनैव कंठे गृहीतानाम् उभयत आलिंगितानाम् । अत्राग्रिमश्लोके "मध्ये मणीनां हैमानां महामारकतो यथा" इति मध्य इति पदेन मारकत इत्येकवचनेन चात्र च श्लोके सता मिथो इत्यनुक्त्वा प्रविष्टेनेति पदेन च प्रयुक्तेन गोपीमंडलमध्यकर्णिकाभूत एव कृष्णो मध्ये स्थितः सन्नेव तथा गतिलाघवं प्रकटयामास, यथा मंडलस्थानां गोपीनामपि द्वयोर्द्वयोर्मध्ये प्रविष्टो नृत्यति स्मेत्येकपरमाणुमात्रकाले नैव मध्यप्रदेशादागत्य मंडलस्थास्त्रिशतकोटिगोपीः सकृत्यं परिरभ्य पुनर्मध्यप्रदेशगत एव बभूवेत्यलातचक्रादपि तस्य गतिलाघवमधिकमभूदिति ज्ञेयम् । यतो मंडलकर्णिकागतत्वं मंडलस्थप्रत्येकगोपीमध्यगतत्वं तस्य तदानीं सर्वैर्दृष्टम् । एवमेव "अंगनामंगनामंतरा माधवो माधवंमाधवं चांतरेणांगनाः । इत्थमाकल्पिते मंडले मध्यगः संजगौ वेणुना देवकीनंदनः ॥" इति **श्रीबिल्वमङ्गलमहानुभाव**चरणैरुक्तम् । तत्र हेतुगर्भं विशिनष्टि—योगेश्वरेण निखिलकलानिधित्वात्तदुपायमहाविज्ञेन । "योगः सन्नहनोपायध्यानसंगतियुक्तिषु" इत्यमरः । यद्वा—योगो योगमाया दुर्घटघटनापटीयसी महाशक्तिस्तस्या ईश्वरेण युगपत्सर्वगोपीनामाश्लेषौत्सुक्यं

यं मन्येरन्नभस्तावद्विमानशतसंकुलम् ॥ दिवौकसां सदाराणामौत्सुक्यापहृतात्मनाम् ॥ ४ ॥
ततो दुंदुभयो नेदुर्निपेतुः पुष्पवृष्टयः ॥ जगुर्गंधर्वपतयः सस्त्रीकास्तद्यशोऽमलम् ॥ ५ ॥

तावत्तत्क्षणमेवौत्सुक्यव्याप्तमनसां सस्त्रीकाणां देवानां विमानशतैः संकुलं संकीर्णं नभो बभव ॥ ४ ॥ तत्तस्य भगवतः श्रीकृष्णस्यामलं निर्मलं यशो जगुरिति ॥ ५ ॥

तस्याभिज्ञाय सैव तावतः प्रकाशांस्तस्य प्रकटय्य समादधौ । अत्र द्वयोर्द्वयोर्मध्ये प्रविष्टेनेति वीप्सया एकैकगोपीमध्ये द्विद्विगोपीमध्ये प्रवेशः संगच्छते इति व्याचक्षते । तत्रैकैकगोपीमध्यप्रवेशे व्याख्याय माने योगमायापक्षे एकस्याः स्त्रियः स्कंधयोः कृष्णप्रकाशद्वयस्य भुजस्पर्शानौचित्यं नाशंकनीयम्, योगमाययैव तांतां प्रत्येकस्यैव प्रकाशस्य स्पर्शमानसमर्पणात् । द्विद्विगोपीव्याख्याने तु नैवासमंजसम् । यं श्रीकृष्णं स्त्रियः स्वनिकटं मन्येरन् असौ मयाश्लिष्यन्नेवात्रास्ति तदपि यत्सर्वत्रायं दृश्यते तदियं काचिदस्य नाट्यविद्येत्यमंसतेत्यर्थः । अत्र मध्यगो देवकीनंदनः श्रीवृंदावनेश्वर्या[1] सहित एवेत्याहुः, तस्या एव सर्वश्रैष्ठ्यात्, 'रासक्रीडादिकारणम्' इति तदीयशतनामस्तोत्रदृष्टेः । तावत् तत्क्षग एव विमानशतैर्व्याप्तं नभो बभूव । केषाम्—दिवौकसाम् ब्रह्मादीनाम् । अत्रौत्सुक्यादिति कृष्णनृत्यांश एव न तु रसस्य विलासे दासत्वेनानौचित्यात्, तद्दाराणां तु अनौचित्याभावात्सर्वत्रैव । अत एव रासे दिवि पुंसां कृष्णदर्शनमेव, न गोपीदर्शनं, योगमाययावरणादिति ज्ञेयम् ॥ अत्र **तोषिणी**—रासः परमरसकदंबमय इति यौगिकार्थः, स एवोत्सवः क्रीडाविशेषरूपं सुखमयं पर्व । कृष्णेन परमानंदमूर्तिना निमित्तेन सम्यक् प्रवृत्तः । सम्यक्त्वमेव दर्शयति—गोपीनां मंडलेन मंडितः । इत्येवं तासां शोभाहेतुत्वमाधिकं दर्शितम् । तत्प्रवर्तने तद्विशेषश्चोक्तः श्रीपराशरेण—"रासमंडलिबंधोऽपि कृष्णपार्श्वमनुज्झता । गोपीजनेन नैवाभूदेकस्थानस्थिरात्मना ॥ हस्ते प्रगृह्य चैकैकां गोपिकां रासमंडलीम् । चकार तत्करस्पर्शनिमीलितदृशं हरिः ॥ ततः प्रवर्तते रासश्चलद्वलयनिःस्वनः । अनुजातशरत्काव्यगेयगीतिरनुक्रमात् ॥" इति । किञ्च, तासामिति, द्वयोरित्युक्तेरेकत्रैव मध्ये स्थितिर्बोध्यते तन्निवारणार्थं वीप्सा । अत एव 'मध्ये मणीनाम्' इत्यत्र मध्य इति सामान्यतो वक्ष्यते । कृष्णस्याप्युभयतः स्थितत्वेन दोर्भ्यां गृहीतकंठ्य इति च । तथा चोक्तं बिल्वमंगलेन—'अंगनामंगनाम्' इत्यादि । व्यक्तीभविष्यति च क्रमदीपिकावचनेन—'सुदृशामुभयोः पृथगंतरम्' इत्यनेन । अत एव तत्तद्युग्मभुजैव तत्र विहिता न तु तत्तत्त्रिकभुजेति । स्त्रिय इति—स्त्रीषु परमानुरागेण युगपदात्मसंगममभिप्सुषु सत्पुरुषस्य तथैव कृत्यं व्यक्तमिति बोधयति । अन्यथा वैषम्येण दोषापत्तिः सुखभंगश्चेत्यर्थः । यं स्वनिकटमेव मन्येरन्नमंस्यतेति । अत्रेदं विवेचनीयम्—रासमहोत्सवोऽयं परस्परसुखार्थमेव श्रीकृष्णेन प्रारब्धस्तस्माद्रासस्य सर्वशोभादर्शनं श्रीगोपीनां सर्वासामेवावश्यापेक्ष्यमिति तासामिदमेव मानयोग्यं कयाचिन्नाट्यविद्ययैवासौ बहुत्र भाति, मयानुगृहीत एवान्यथा स्वनिकटमेवापश्यन्नित्युच्यते । किञ्च, ताभिः प्रियस्य स्वस्वनिकट एव स्थितिं मन्यमानाभिस्तस्य स्वपार्श्वद्वयेऽपि वर्तमानता तुल्यानंदग्रस्तबुद्धित्वेन न विवेक्तुं शक्तेति गम्यते । तस्मात्पूर्वत्र चात्र चानंदमोह एव मूलं कारणं ज्ञेयम् । अत्र चैकस्य तथा प्रवेशादिकं समादधदाह—योगो योगमायाऽचिंत्याद्भुतशक्तिविशेषस्तस्येश्वरेणेति । स्वाभाविकतच्छक्तित्वेनैव प्रेरणां विनापीच्छामात्रेण तत्तदुदय इति व्यंजितम् ॥ ३ ॥ नन्वेतादृशरासक्रीडा केन दृष्टेति चेदाह—नभः अंतरिक्षम् । द्यौः स्वर्ग ओको वासस्थानं येषां तेषाम् । औत्सुक्यम् उत्कंठा ॥ * ॥ द्यौराकाश ओको निवासो येषामिति स्वभावत एव व्योम्नि भ्रमतामकस्माद्रासक्रीडादर्शनात्संहतानामित्यर्थः । अत एव विमानशतसंकुलं नभो बभूव । चंद्रदिशं परित्यज्य चन्द्रोपर्येव वा ज्ञेयम् । दिवौकसां ब्रह्मरुद्रादीनामिति स्वर्गादावपि तादृशोत्सवाऽसद्भावः सूचितः । तत्रैवाप्यौत्सुक्येति । औत्सुक्यमत्र नृत्यांश एव न तु रहस्यविलासांशेपि, दासत्वेनायोग्यत्वात्, तत एवाधुनैवागतत्वात् । अत एव योगमायया तेषां रहस्यं प्रति दृष्ट्याच्छादनमपि ज्ञेयम् ॥ ० ॥ ॥ ४ ॥ ततः रासोत्सवोपक्रमानंतरम् । तद्यशः कृष्णस्य गोपीनां च यशः—अहो श्रीकृष्णवैभवमहो गोपीभाग्यमित्येवंरूपम् । पुष्पवृष्टिस्तु रंगस्थलीमार्दवार्थेति ॥ * ॥ ० ॥ अत्र **तोषिणी**—ततस्तेभ्यो दिवौकोभ्यः,

---

[1] वृंदावनेश्वर्या ।

वलयानां नूपुराणां किंकिणीनां च योषिताम् ॥ सप्रियाणामभूच्छब्दस्तुमुलो रासमंडले ॥ ६ ॥
तत्रातिशुशुभे ताभिर्भगवान्देवकीसुतः ॥ मध्ये मणीनां हैमानां महामरकतो यथा ॥ ७ ॥

सप्रियाणा कृष्णसहितानाम् । तुमुलः संकीर्णः ॥ ६ ॥ महामरकतो नीलमणिरिव हैमानां मणीनां मध्येमध्ये ताभिः स्वर्णवर्णाभिराश्लिष्टाभिः शुशुभे।गोपीदृष्ट्यभिप्रायेण वा विनैव मध्यपदावृत्तिमेकवचनम् ॥ ७ ॥

किं वा तदनंतरं स्वयमेव नेदुर्दिव्यत्वान्महामंगलोत्सवस्वभावाच्च । एवमग्रेपि । आदौ दुंदुभीनां नादो मंगलार्थः । स्वस्ववर्गसंमेलनार्थश्च नितरां पेतुः । निशब्देन वृष्ट्य इति बहुत्वेन च रंगस्थल्यां पुष्पास्तरणं किल जातमिति बोध्यते । स्त्रीभिरप्सरोभिः स्वपत्नीभिश्च सहिता इति सर्वेषामेव तदेकनिष्ठतोक्ता । न तिष्ठति मलो यस्मादित्यमलमिति तेषामपि तदानीं दुर्वासना निरस्ता ॥ ५ ॥ "वलयः कंठरोगे ना कंकणे पुंनपुंसकम्" इति मेदिनी । "नूपुरः पादभूषणे, किंकिणी क्षुद्रघंटिका" इति कोशः । 'तुमुलो रणसंकीर्णे' इति मेदिनी ॥ * ॥ सप्रियाणाम् सकृष्णानाम् । अत्र चकारेण तत्रानद्धसुषिरतुमुलान्यपि संगृहीतानि । एषां चकारेणोक्तत्वादप्राधान्याद्वलयादिवाद्यानाच्छादकत्वं ध्वनितम् ॥ अत्र **तोषिणी**—एवं देवकृतोत्सवमुक्त्वा रासयोग्यवाद्यगीतादि वक्तुमादौ वाद्यमाह—वलयानामिति । किंकिणीनाम् कांच्यादिवर्तिनीनाम् । योषितामिति योषित्त्वेन स्वभावत एव वलयादिसद्भावः सूचितः । सप्रियाणामिति तासां प्रीत्यर्थः तावत्तया प्रकाशमानस्य श्रीभगवतोऽपि तावद्वलयादिशब्दोऽभिप्रेतः । रासेन यन्मंडलं मंडलीबंधस्तस्मिन् ॥ ६ ॥ तत्र रासक्रीडायाम् । ताभिः गोपीभिः । देवकीसुतो यशोदानंदनः । हैमानाम् हेम्न इमे हैमाः । इदमणि टिलोपेन साधु । हेमकारेण रचिताः । यद्वा—हैमा हिमगिरिसंभूताः पीतमणयः । गोपीनां दृष्ट्यभिप्रायेण मध्ये इति पदमावर्तनीयं, गोपीभिर्बहुरूपदर्शनात् । सर्वमध्यकर्णिकास्थस्यैकत्वान्मध्यपदावृत्तिर्न कार्येत्याह—वा विनैवेति ॥ * ॥ देवकीसुतः क्षत्रियजातिरपि भगवान् षडैश्वर्यपूर्णोऽपि तत्र गोपजातिस्त्रीणां मध्येऽतिशुशुभे । इंद्रनीलमणिवर्णोऽपि कृष्णस्तासां गौरकांतिमिश्रणान्मरकतवर्णस्तत्रापि शोभावैलक्षण्यमालक्ष्य महच्छदः प्रयुक्त इत्येके । मरकतशब्दोऽयमिंद्रनीलमणिवाचीत्यपरे । 'महामारकतः' इत्यपि पाठः ॥ अत्र **तोषिणी**—देवकीसुतस्तत्तया भवतु विख्यातो भगवान्सर्वैश्वर्यशोभाभरसंपन्नोपि तत्र तु रासमंडले ताभिरत्यंतं शुशुभे । यद्वा—तत्र यशोदासुतत्वेऽत्यन्तं शुशुभे । तत्रापि ताभिरत्यन्तं शुशुभ इत्यर्थः । तादृशस्यापि ताभिः शोभातिशयं दृष्टांतेन साधयति—मध्ये इति । सामान्यविवक्षयैकत्वम्, सर्वेषु मध्येष्वित्यर्थः । अतो मंडलमध्यस्थोऽप्येकः प्रकाशो ज्ञेयः । स एव हि श्रीराधिकां संगे निधाय वेणुवादनपूर्वकं भ्रमन्सर्वं रासमंडलमत्यर्थं मंडयति । तच्च क्रमदीपिकाद्युक्तरासांतरानुसारेण ज्ञेयम्—"इतरेतरबद्धकरप्रमदागणकल्पितरासविहारविधौ । मणिशंकुगमप्यमुना वपुषा बहुधा विहितस्वकदिव्यतनुम् ॥ सदृशामुभयोः पृथगंतरगं तरुणीद्वितयम्" इति मणिशंकुगतत्वमुक्त्वा तदेव पुनर्विशेष्य वर्ण्यते—"मणिनिर्मितमध्यगशंकुलसद्विपुलारुणपङ्कजमध्यगतम्" इत्याद्यनंतरम् "तरुणीकुचयुगपरिरंभमिलद्घुसृणारुणवक्षसमुल्यगातिम्" इति । तथैवोक्तम्—'मंडले मध्यगः संजगौ वेणुना' इति । हैमानां हेमविकाराणां मणीनाम्, गोलोकतया मणिवन्निर्मितानाम् । महामारकत इत्यपि सामान्यतयैकवचनम् । 'मेवचक्रे' इति वक्ष्यमाणात् । यथा महामरकतमणेरपि हेममणिमध्यवर्तितयैव शोभाधिक्यं स्यात्तथा तस्यापि प्रियाजनाश्लेषेणैवाधिका शोभा स्यादित्यर्थः । अन्यत्तैः । तत्र महच्छब्दपूर्वः मरकतशब्द इंद्रनीलमणिवाची स्यादिति ज्ञेयम् । यद्वा—तासां सुहेमगौरीणां कांतिच्छटासंपर्कादनतिश्यामलमरकतमणिवद्गताप्राप्त्या

**पादन्यासैर्भुजविधुतिभिः सस्मितैर्भ्रूविलासैर्भज्यन्मध्यैश्चलकुचपटैः कुंडलैर्गंडलोलैः ॥ स्विद्यन्मुख्यः कबररशनाग्रंथयः कृष्णवध्वो गायंत्यस्तं तडित इव ता मेघचक्रे विरेजुः ॥ ८ ॥**

स यथा ताभिः शुशुभे तथा ता अपि तेन विरेजुरित्याह। पादन्यासैरिति । भुजविधुतिभिः करचालनैर्भज्यन्मध्यैर्भज्यमानैर्मध्यैश्चलद्भिः कुचैश्च पटैश्च गंडलोलैर्गंडेषु चंचलैः । स्विद्यन्मुख्यःस्विद्यंति स्वेदमुद्गिरंति मुखानि यासां ताः कबरेषु रशनासु च ग्रन्थयो दृढा यासां ताः कबरान्रशनाश्च शैथिल्यभिया दृढं बद्ध्वा नृत्यंत्य इत्यर्थः । यद्वा तेषु तासु चाग्रंथयः नृत्यवशाच्छिथिलग्रंथय इत्यर्थः । तत्र नानामूर्तिः कृष्णो मेघचक्रमिव तास्तु बहुविधास्तडित इव स्वेदस्तुषार इव गीतं गर्जितमिव चेति यथासंभवमूह्यम् ॥ ८ ॥

महामारकत इत्युक्तमिति । ततश्च नृत्यशक्तिविशेष एव न तु कोऽपि भगवत्ताविशेष इति ॥ ७ ॥ अन्योन्यशोभातिशयमाह–स यथेति । स कृष्णः । ताभिः गोपीभिः । ताः गोप्यः । तेन कृष्णेन । पादानां न्यासैर्वक्रस्थानादिविक्षेपविशेषैः । अतिपरिश्रमसाध्ये कर्मणि दृढग्रंथीनामपि विमोको भवतीत्यत आह–वद्धेति । इत्यर्थ इति–इह नञ्समासे नञप्राशस्त्ये बोध्यः । शिथिलग्रंथयोऽप्रशस्तग्रंथयोऽल्पग्रंथयो वा "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥" इति हरिभर्त्र्युक्तेः । 'कबरी केशविन्यासः' इत्यमरः । 'रशना कांचिजिह्वयोः' इति विश्वः । क्वचित् 'कबरं केशजूटायाम्' इत्यपि । तत्र दृष्टान्ते । मेघचक्रं मेघमंडलम् । ताः गोप्यः । यथासंभवं यथायथम् । कृष्णवध्व इत्यनेन कात्यायनीव्रतकर्त्र्यो गांधर्वविधिना विवाहिता एव । "परस्परानुरोधेन कन्यायाश्च वरस्य च । गांधर्व इति संप्रोक्तो विवाहः संगमे सति ॥" इति स्मृतेर्भगवति व्यभिचारदोषो नायाति, परकीयासंगतेरेव व्यभिचारत्वात् । कुत्रचित्तासां परकीयात्वेन कथनं तु शृंगारातिशयार्थम् । किञ्च, कांतिविशेषद्योतनायैव तडित इति दृष्टान्तो न तु पादन्यासादिविशेषद्योतनाय, तडितामचेतनत्वात् । यद्वा–तडितामिव पादन्यासादौ शैघ्र्यावर्तनादिप्रकाशाय । 'तड–आघाते' चौरादिकात् 'ताडेर्णिलुक्च' इत्यौणादिक इतिः । धातूनामनेकार्थत्वात् तटंति क्षिप्रं तिरोधानं गच्छन्तीति तडितः ॥ * ॥ यथा ताभिः स शुशुभे तथा तेन ता अपि शुशुभिर इत्याह–पादन्यासैरिति । पादानां न्यासा गीतरसतालानुसारिणः पुनःपुनर्व्यक्तीकृतविचित्रनृत्यगीतयस्तैः । भुजविधुतिभिः अन्योन्यबद्धानामपि भुजानां विचित्रैः कंपनैः । किञ्चान्योन्याबद्धभुजतां त्यक्त्वा कदाचिदतिलाघवतो हस्तकभेदेन करचालनैर्गीतपदार्थाभिनयैः । स्मितसहितैर्भ्रुवां विविधैर्भेदैर्भंगिभिः रसाभिनयार्थं स्वस्वकौशलावधापनार्थं च । तस्मान्मध्यैर्भज्यमानैः स्वभावतः कात्स्न्र्येन नृत्यविवर्त्तनादिना च भंगमिव गच्छद्भिर्मध्यभागैः । चलैः कुचपटैः कंचुकोपरितनवस्त्रैः, भगवदुत्थानानंतरं न पुनः संगृहीतैः । कृष्णस्य वध्वो भोग्याः स्त्रियः 'वधूर्जाया स्नुषा स्त्री च' इति नानार्थवर्गः । अत्र वधूशब्दस्य भार्यावाचकत्वे व्याख्यायमाने 'प्रकृतिमगन् किल यस्य गोपवध्वः' इति भीष्मोक्त्या विरुध्येत तेन न तथा व्याख्येयम् ॥ कृष्णस्य श्यामसुंदरस्य तदेकाश्लिष्टा गौरांग्यस्तदेकाश्रयतया तदेकभोग्यतया च वध्व इव वध्व इति प्रकृत**वैष्णवतोषिणी** ॥ अत्र **तोषिणी**–न केवलं ताभिः सोऽधिकं शुशुभे किन्तु तेन ताश्च तथा शुशुभिर इत्याह–पादेति । पादानां न्यासा नृत्यगतिभिर्भूम्याक्रमणभंग्यस्तैः । भुजानां हस्तानां विशेषेण धुतिभिर्हस्तकभेदेन चालनैः, यद्यप्यन्योन्यबद्धबाहुत्वेन भुजविधुतयो न संभवेयुस्तथापि कदाचित्तदर्थमाबद्धत्वपरित्यागेनैव । स्मितसहितैर्भ्रुवां विलासैः तत्तद्रसाभिव्यंजनचातुर्यैः । भज्यमानैः स्वभावतः कात्स्न्र्येन विशेषतश्च नृत्यार्थपरिवर्तनादिना भङ्गमिव गच्छद्भिर्मध्यभागैः । किं वा–भज्यमानता भंगः कौटिल्यमिति यावत् । कुटिलीभवन्मध्यभागैरित्यर्थः । सर्वत्र मुहुरिति मन्तव्यम् । कुचपटा भगवदुत्थाने सति पुनःपुनर्गृहीतानि निजनिजोत्तरीयाण्येव । अन्यत्तैः । तत्र ग्रंथय इत्येव पदच्छेदो योग्यो न त्वग्रंथय इति । कृष्णवध्व इत्यादिकं त्वेवं व्याख्येयम् । तं कृष्णं गायन्त्यस्ता दृष्टांतयितव्यवशात्कृष्णस्य तत्तत्प्रकाशचक्रे विरेजुः । कुत्र का इव–मेघचक्रे तडित इव । ननु 'मध्ये मणीनाम्' इत्यादिप्रोक्तदृष्टान्तो घटते अदांपत्येन तत्तदागन्तुकसंबंधात् न त्वयं स्वाभाविकसंबंधाभावात्तदेतदाशंक्यानंदवैचित्र्येण रहस्यमेव व्यनक्ति–कृष्णवध्व इति । तद्वदत्रापि स्वाभाविकादेव संबंधाद्दांपत्यमेवेति भावः । अत एव तासामभ्यासविशेषं विनापि तेषुतेषु गुणेषु परम एवोत्कर्षो

उच्चैर्जगुर्नृत्यमाना रक्तकंठ्यो रतिप्रियाः ॥ कृष्णाभिमर्शमुदिता यद्गीतेनेदमावृतम् ॥ ९ ॥ काचित्समं मुकुंदेन स्वरजातीरमिश्रिताः ॥
उन्निन्ये पूजिता तेन प्रीयता साधुसाध्विति ॥ तदेव ध्रुवमुन्निन्ये तस्यै मानं च बह्वदात् ॥ १० ॥

नृत्यमाना नृत्यंत्यः । रक्तकंठ्यो नानारागैरनुरंजितकंठ्यः । कृष्णस्याभिमर्शेन संस्पर्शेन मुदिताः । इदं विश्वम् ॥ ९ ॥ मुकुंदेन सह स्वरजातीः षड्जादिस्वरालापगतीः । अमिश्रिताः कृष्णोन्नीताभिरसंकीर्णाः । प्रीयमाणेन संमानिता तज्जात्युन्नयनमेव पुनर्ध्रुवं ध्रुवाख्यं तालविशेषं कृत्वा उन्निन्ये उन्नीतवती ॥ १० ॥

वर्तते ॥ ८ ॥ कामकलोद्बोधककरस्पर्शविशेषोऽभिमर्षः । यद्वा—नृत्ये मानं कृष्णकृतं संमानं यासां ताः । आवृतम् व्याप्तम्, देवसाक्षिकत्वात् । यद्गीतेन यासां गानेन । रतिप्रिया रमणानुरागाः ॥ * ॥ नृत्यमाना नृत्यंत्यः । यद्वा—नृत्येन मानः कृष्णकर्तृक आदरो यासां ताः । रक्तकंठ्यः नानारागैरनुरंजितकंठ्यः । रागाश्चोक्ताः संगीतसारे—"तावंत एव रागाः स्युर्यावत्यो जीवजातयः । तेषु षोडशसाहस्त्री पुरा गोपीकृता वरा ॥" इति । रतिः कृष्णकर्तृका प्रीतिरेव प्रिया यासां ताः । कृष्णस्याभिमर्शेन स्पर्शादिना मुदिताः, इति नृत्यादिश्रमानुद्गमः । यद्गीतेन यत्कर्त्रीकेण गीतेन तदानीमिदं जगद्ब्रह्मांडमावृतम्, व्याप्तमासीदित्यर्थः । यद्वा—यद्गीतेन यत्कर्मकेण गीतेनेति । अद्यापि जगद्वर्तिभिर्लोकैर्या गीयंत एवेत्यर्थः ॥ अत्र **तोषिणी**—ततश्च प्रहर्षोद्रेकेण तासां नृत्यस्य प्राधान्यं वर्णयित्वा गानस्याप्याह—उच्चैरिति । नृत्यमाना इति नर्तनेऽपि तादृश गानात्तत्कौशलविशेषो दर्शितः । गानादिप्रयोजनमाह—रतिः श्रीकृष्णकर्तृका प्रीतिः सैव प्रिया यासां ताः । न चोच्चैर्गानादिना तासां श्रमः शंकनीय इत्याह—कृष्णस्याभिमर्षेण मुदिता इति, अयमप्येको हेतुर्ज्ञेयः । गीतस्योच्चैस्त्वं दर्शयति—यासां गीतेनावृतं व्याप्तम् । यद्वा—यासां गीतेन स्वयमुत्प्रेक्षितेन रागसमूहेनेदं जगदावृतम् । तदनुसारिगानपरं जातमित्यर्थः । ताभिः कृताः षोडशसहस्रसंख्या रागा एव जगति विभक्ता इति संगीतशास्त्रप्रसिद्धेः । यथोक्तं संगीतसारे—"तावंत एव रागाः स्युर्यावत्यो जीवयोनयः । तेषु षोडशसाहस्त्री पुरा गोपीकृता वरा ॥" इति । अन्यत्तैः । यद्वा—नृत्येन मानः श्रीकृष्णकृतसंमानो यासां ताः । रक्तकंठ्यः प्रेमस्निग्धकंठ्यः, इति परममधुरत्वमुक्तम् । उच्चैर्गाने हेतुः—रतीति, कृष्णेति च । यद्वा—उच्चैः श्रीकृष्णगानादप्युच्चतया । तथा चोक्तं पराशरेण—"रासगेयं जगौ कृष्णो यावता व्यायतध्वनिः । साधु कृष्णेति कृष्णेति तावत्तं द्विगुणं जगुः ॥" इति । तत्र हेतुमाह—रक्तेत्यादिविशेषणैस्त्रिभिः । एषां यथेष्टं हेतुहेतुमत्त्वं ज्ञेयम् । एवम् 'तत्रापि शुशुभे ताभिः' इत्यत्र तासां शोभावद्गानादिगुणस्यापि परमोत्कर्षः सूचितः । उत्तरत्र तु स्पष्टमेव ॥ ९ ॥ अत्र समगानं तत्प्रशंसार्थम् । मुकुंदेन तद्गानानुसारेण गीतमिति ज्ञेयम् । अन्यथा मुकुंदगानसमगानज्ञस्त्रिलोक्यां कोऽपि नास्ति तद्विभूतिमंतरेणेति भावः । ध्रुवम् व्यक्तवर्णगानेन प्लावनं वा । सार्धे नान्वयोत्र ॥ * ॥ स्वरजातीरिति—स्वराः खलु—"षड्जर्षभौ च गांधारो मध्यमः पंचमस्तथा । धैवतश्च निषादश्च सर्वे स्युः श्रुतिसंभवाः ॥ मयूरचातकच्छागक्रौञ्चकोकिलदर्दुराः । मातंगश्च क्रमेणाह स्वरानेतान्सुदुर्गमान् ॥" तेषां जातीरष्टादश । यदुक्तम्—"रागश्च जायते यस्याः सा जातिरभिधीयते । शुद्धा च विकृता चेति सा द्विधा परिकीर्तिता ॥ शुद्धाः स्युर्जातयः सप्त ताः षड्जादिस्वराभिधाः । ता एव विकृताः सत्यो जाता विकृतसंज्ञया ॥ षाड्ज्यार्षभी च गांधारी मध्यमा पंचमी तथा । धैवती चाथ नैषादी शुद्धा एतास्तु जातयः ॥" इति । अमिश्रिताः कृष्णोन्नीताभिरसंकीर्णाः । यद्वा—शुद्धा अपि जात्यंतरास्पृष्टाः परमप्रावीण्येन केवलतरतद्गानात् । तत्रापि उत्कृष्टं निन्ये, अतः परमदुर्गेयाणामपि तासां तथा गानमालक्ष्य तेन कृष्णेन सा पूजिता स्वीयपीतोत्तरीयादिभिः संमानितेति । विशाखेयमिति प्राञ्चः । तज्जात्युन्नयनमेव ध्रुवं ध्रुवाख्यं तालविशेषं कृत्वा उन्निन्ये उन्नीतवती । तस्यै कृष्णो मानमादरं बहुरत्नमालापदकोर्मिकाद्यलंकारसमदात् । इयं पूर्वतोऽप्यधिकसाद्गुण्याविष्कारवती ललिता । ततश्च यथोत्तरोत्कृष्टतादृशगाने गोपीनामप्रवृत्तिमालक्ष्य श्रीराधा स्वयमगायन्ती स्वसख्यास्तस्या एव सर्वसाद्गुण्योत्कर्षं ज्ञापयामासेति ज्ञेयम् ॥ अत्र **तोषिणी**—अधुना पूर्ववत्तासु मुख्यानां प्रेमचेष्टितानि पृथक्त्वेनाह—काचिदिति सार्धपंचाभिः । मुकुन्देन सममिति तस्यापि तदनुगत्वं विवक्षितम् "सह युक्तेऽप्रधाने" इति स्मरणात् । उन्निन्ये उत्कृष्टं कल्पयामास । अमिश्रिताः संहत्य गानेऽपि विलक्षणत्वेन पृथगवगताः । ततश्च तेन मुकुंदेन पूजिता । कथं पूजिता तत्राह—साध्वि

काचिद्रासपरिश्रांता पार्श्वस्थस्य गदाभृतः ॥ जग्राह बाहुना स्कंधं श्लथद्वलयमल्लिका ॥ ११ ॥
तत्रैकांसगतं बाहुं कृष्णस्योत्पलसौरभम् ॥ चंदनालिप्तमाघ्राय हृष्टरोमा चुचुंब ह ॥ १२ ॥

एवं नृत्यगीतादिना श्रीकृष्णसंमानितानां तासामतिप्रीतिविलसितं वृत्तमाह । काचिदिति । श्लथंति वलयानि मल्लिकाश्च यस्याः सा ॥ ११ ॥ उत्पलस्य सौरभमिव ति । वीप्सा हर्षेण, साधुत्वदार्ढ्याय वा । वदतेति शेषः ॥ तदेवेत्यर्द्धकम् । तदेव तालानिबद्धं केवलरागमयमेव वा प्राथमिकत्वेन प्राप्तत्वादादितालमयमेव वा गीतं तत्क्षणादेव ध्रुवं यतिनिःसारसंज्ञताल्द्वयैकतरात्मकध्रु वाभोगाख्यावयवद्वयमात्रयुतगीतविशेषं रचयित्वा जगावित्यर्थः । तस्यै च मानमदात् । मुकुन्द इति शेषः । किन्तु पूर्वतो बहु यथा स्यात्तथेति । अन्यत्तैः । यद्वा—स्वरा मत्तमयूरादिकध्वनयः षड्जादयः सप्त । तदु क्तम्—"रंजकाः श्रोतृचित्तानां स्वराः सप्तविधा मताः । षड्जर्षभौ च गांधारो मध्यमः पंचमस्तथा । धैवतश्च निषादश्च सर्वे स्युः श्रुतिसंभवाः ॥ मयूरचातकच्छागक्रौंचकोकिलदर्दुराः । मातंगश्च क्रमेणाह स्वरानेतान्सु दुर्गमान् ॥" इति । अथ जातयस्तत्र रागोत्पत्तिहेतवः । तदुक्तम्—"रागश्च जायते यस्याः सा जातिरभिधीयते । शुद्धा च विकृता चेति सा द्विधा परिकीर्तिता ॥ शुद्धा सप्तविधा ज्ञेया तज्ज्ञैः षड्जादिभेदतः । षड्जकैशिक्यादिभेदादेकादशविधा परा ॥" इति । आदिग्रहणादार्षभीत्यादयः षट्, षड्जो दिव्यो वेत्यादयश्च दश ज्ञेयाः । ता अमिश्रिताः स्वरजात्यंतरास्पृष्टाः परमप्रावीण्येन केवलतत्तज्ज्ञानापि उत् उत्कृष्टं निन्ये गृही तवती, जगावित्यर्थः ॥ १० ॥ गदाभृत इति । ननु वनिताभिर्विलासावसरे गदाधारणस्य शृंगारापहारकत्वाद्वीररसत्वापत्तिर्जातेतीत्थं भ्रांतानां भ्रांत्यपनुत्त्यर्थमाह गदार्थं पार्वतीशिवसंवादेन । तथा हि—रासलीलां विलोक्यागत्य शिवेन सा लीला पार्वत्यै वर्णिता । तत्र प्रसंगेनोक्तम्—'पार्श्वस्थस्य गदाभृतः' इति । तत्र पार्वत्योक्तम्—गदाभृत इति कथम् ? तत्र शिवेनोक्तं गदाभृतो वेणुभृतः । तदा पार्वत्युवाच—"रणे संप्रे पिता शूरैः शत्रूंश्चूर्णयती भुवि । शास्त्रेण सा गदा प्रोक्ता कथं वेणुर्गदा प्रभो ॥ शिव उवाच ॥ कीचकेषु समुत्पन्ना बहुरंध्रविभूषिता । येन केन प्रकारेण माधवेनाधरे धृता ॥ वेणुः सपत्निभावेन गदत्येवमहर्नि शम् । अतो व्रजस्त्रियः सर्वाः संवदंति च तां गदाम् ॥" इति शिवकृतपंचाध्यायीव्याख्याने, तदैव गोपीश्वरो जात इति प्रसिद्धेः । केचित्तु नटवृंदाधिपोचिता गदाकृतिर्यष्टिस्ताम्, तदपि न शोभनं प्रतिभाति । मम तु गदति वर्णात्मकं शब्दं निगदतीति गदा वंशी तां बिभर्तीति तथा तस्य । 'गद—व्यक्तायां वाचि' इतीत्थं प्रतिभातीति । स्कंधम् भुजशिरः ॥ * ॥ साद्गुण्यप्राधान्येन सख्यौ वर्णयित्वा सौभाग्यप्राधान्येन सर्वमुख्यतमां वर्णयति—काचिदिति । गदाभृतः कृष्णस्य । पक्षे, गदनं गदा गीतवत्योः सख्योर्गुणतारतम्यज्ञानकथा, तां बिभर्ति धत्ते पुष्यति वा तस्य स्कन्धं बाहुना दक्षिणेन जग्राह आललंबे । श्लथन्तो वलयाः मल्लिकाश्च कबरस्था यस्याः सा । स्वाधीनकान्तत्वादियं वृषभानुकुमारी ॥ अत्र **तोषिणी**—एवं कासांचिद्गुणो त्कर्षप्राधान्येन तत्रापि तारतम्येन गानाद्यनुभावकं प्रेम वर्णयित्वा कासांचित्संभोगप्राधान्येन वर्णयति—काचिद्रासेत्यादिना । तत्रापि कस्याश्चित्सौभाग्यप्राधान्येनाह—काचिद्रासेति । पार्श्वस्थस्येति शीघ्रसुख ग्रहणं दर्शितम् । अन्यथा रासावेशेन स्खलनं संभवेत् । गदां नटवृंदाधिपत्युचितां गदाकृतिं यष्टिं बिभर्ति इति । यद्वा—गदति वर्णात्मकं शब्दं निगदतीति गदा वंशी तदुचितत्वेनापि बिभर्तीति गदाभृत्तस्य । अत एव मध्यस्थापि नटवृंदाधिपतिस्थानीयोऽयं प्रकाशः । परिश्रान्तिलक्षणम्—श्लथदिति । श्रमेण नवमालिकावद्विलुलिताङ्गरागं श्लथन्तः परस्परं विच्छिद्य संघट्टं कुर्वन्तो वलयास्तथा श्लथन्त्यो गलंत्यो मल्लिकाश्च कबरस्था यस्यां सा तथा । श्रीपराशरेणाप्युक्तम्—"परिवर्तश्रमेणैका चलद्वलयलापिनीम् । ददौ बाहुलतां स्कंधे गोपी मधुनिघातिनः ॥" इति । अत्र मल्लिकानां शिथिलता च ज्ञेया । शोभादिदशानां मध्ये सोऽयं माधुर्य नामाऽनुभावो ज्ञेयः । यथोक्तम्—"माधुर्यं नाम चेष्टानां सर्वावस्थासु चारुता" इति । एवमस्याः स्वाधीनभर्तृकात्वं च दर्शितम् । तस्माच्छ्रीराधिकैवेयम् । अतो निकटपठिते गानाद्विया तद्वयसुखकारिण्यौ तत्स ख्यौ श्रीललिताविशाखे भवेताम् । पूर्वस्यास्तादृशचेष्टत्वेन वर्णनं स्वतंत्रनायिकात्वव्यंजकमुत्तरयोर्गीतादिगुणत्वेन वर्णनं साहाय्यकव्यंजकमिति ॥ ११ ॥ तत्र रासे । उत्पलेन तन्मालया सुगंधितमिति वा ।

कस्याश्चिन्नाट्यविक्षिप्तकुंडलत्विषमंडितम् ॥ गंडं गंडे संदधत्या आदात्तांबूलचर्वितम् ॥ १३ ॥ नृत्यंती गायती काऽपि कूजन्नुपुरमेखला ॥ पार्श्व स्थाच्युतहस्ताब्जं श्रांताऽधात्स्तनयोः शिवम् ॥१४॥ गोप्यो लब्ध्वाऽच्युतं कांतं श्रिय एकांतवल्लभम् ॥ गृहीतकंठ्यस्तद्दोर्भ्यां गायन्त्यस्तं विजह्रिरे॥१५॥

सौरभं यस्य तं बाहुम् ॥ १२ ॥ नाट्येन नृत्येन विक्षिप्तयोश्चंचलयोः कुंडलयोस्त्विषेण त्विषा मंडितं गंडं कपोलं तथाभूते स्वगंडे संदधत्याः संयोजयंत्याः ॥ १३ ॥ कुजती नूपुरे मेखला च यस्याः सा ॥ १४ ॥ एवमन्या अपि गोप्यो यथायथं नानाविभ्रमैर्विजह्रुरित्याह । गोप्य इति ॥ १५ ॥

हृष्टरोमा जातसात्त्विकभावा । 'स्तंभः स्वेदोऽथ रोमाञ्चः' इत्याद्युक्तेः । चुचुंब हेति कामाकुलितत्वं सूचितम् ॥ * ॥ अंसगतम् स्वस्कंधे स्थितम् । चंदनालिप्तमपि उत्पलस्येव सौरभं यस्येति स्वाभाविकेन गात्रस्यो त्पलगंधेनात्यधिकेन चंदनगंधस्यावरणात् । पूर्वाध्यायोक्तक्रियातुल्यत्वादियं नूनं श्यामला ॥ अत्र **तोषिणी**—अथ प्राक्तनक्रियासादृश्येन श्रीश्यामलाविलासमाह—तत्रेति । एका गोपी । अंसगतम् स्वस्कंधगम् । स्वभावत एवोत्पलपुष्पतोऽप्यधिकं तज्जातीयं सौरभं यस्येत्यर्थः । विशेषतश्चंदनेन आ सम्यक् भक्तिच्छेदादिसाधुप्रकारेण लिप्तम् । ह स्पष्टम् । चुंबने हेतुः—हृष्टरोमेति । प्रेमवैवश्यादित्यर्थः । श्लेषेण रोमाण्यपि हृष्टानि, तस्याश्च हर्षः किं वक्तव्य इत्यर्थः । अयं प्रागल्भ्योत्थानुभावः । यथोक्तम्—“ निःशंकत्वं प्रयोगेषु बुधैरुक्ता प्रगल्भता ” इति ॥ १२ ॥ स्वगंडे निजकपोले “ गंडः स्यात्पुंसि खड्गिनि । ग्रहयोगप्रभेदे च वीथ्यंगे पिटकेऽपि च । चिह्नवीरकपोलेषु हयभूषणबुद्बुदे ॥ ” इति मेदिनी । आदादित्यनेन स्वस्मात्स्वानामभेदो दर्शितोऽस्ति, भेदे तत्र संगच्छत इति ॥ * ॥ नाट्येन विक्षिप्तयोश्चंचलयोः कुंडलयोस्त्विषा कांतिर्यत्र स चासावत एव मंडितश्च तस्मिन् गंडे कृष्णकपोले श्रमव्याजेन गंडं संदधत्यै कस्यैचित् तांबूलचर्वितं प्राऽदात् । तस्या मुखं स्वमुखं संमुखं कुर्वन्प्रकर्षेणाऽदादित्यर्थः । इयं पूर्वोक्तसाम्याच्छैब्या ॥ अत्र **तोषिणी**—श्रीशैब्याविलासमाह—कस्याश्चिदिति । स्वगंडं श्रीकृष्णगण्डे नाट्येतिश्रमव्याजेन संदधत्या इति भावः । प्रादात्तस्या मुखं स्वमुखसंमुखं कुर्वन् प्रकर्षेणादादित्यर्थः । अत्र दाने षष्ठी निर्गूढार्था, आर्षी वा । तांबूलचर्विताऽऽदानमास्येन पूर्ववत् ॥ १३ ॥ शिवम् सुखकरम् । अच्युतेति च्युतिराहित्यमाह ॥ * ॥ नृत्यन्ती गायंती । हस्ताब्जमधादित्येका चंद्रावली, हस्तग्रहणसाम्यात् । द्वितीया पद्मा तदानीं चरणाब्जं स्तनयोरधात्, इदानीं हस्ताब्जं स्तनयोर्धत्ते स्मेति स्तनताप निवृत्तेरुभयथापि सिद्धेः । अष्टमी भद्रा तु तत्रानुक्तापि पूर्ववदेव ज्ञेया ॥ अत्र **तोषिणी**—श्रीहस्तग्रहानुसारेण नूनं पूर्ववच्चंद्रावलीविलासमाह—नृत्यती नृत्यंती, गायती गायंती च । कूजदित्यत्र गानानुरूपतालयुक्तं कूजितं ज्ञेयम् । पार्श्वस्थस्याच्युतस्य निश्चयेन तत्पार्श्वे एव स्थितस्य भगवतो हस्त एवाब्जं तापहारित्वादिना तत् श्रांता सती श्रमनिवृत्त्यर्थमिवेत्यर्थः । शिवम् स्वतः सुखरूपम् । एवं मुख्याः षडुक्तास्तथैव सप्तमी पद्मापि ज्ञेया । सारल्येन लक्षिता पूर्ववद्विष्णुपुराणोक्ता भद्रा त्वियं स्फुटमष्टमी स्यात् । यथा—“ काचित्परिलसद्बाहुः परिरभ्य चुचुंब तम् । गोपीगीतस्तुतिव्याजनिपुणा मधुसूदनम् ॥ ” इति । श्रीजयदेवचरणास्त्विमामेव वर्णना विशेषेण सरसचरितां साधयित्वा व्यंजयामासुः—“ रासोल्लासभरेण विभ्रमभृतामाभीरवामभ्रुवाम् ” इत्यादिना ॥ १४ ॥ विभ्रमैः विलासैः । एकांतवल्लभम् निर्णीतनियतभर्तारम् । तद्दोर्भ्याम् कृष्णभुजाभ्याम् । तम् कृष्णम् । विजह्रिरे क्रीडां चक्रुः ॥ * ॥ एवमन्या अपि गोप्यः स्वस्वभावानुसारिण्यो विजह्रुरित्याह—गोप्य इति । अत्र 'यद्वाञ्छया श्रीर्ललनाऽचरत्तपः' इति नागपत्नीस्तुत्या, 'नायं श्रियोऽङ्ग उ नितांतरतेः प्रसादः' इत्युद्ध वोक्त्या, “ श्रीः प्रेक्ष्य कृष्णसौंदर्यं तत्र लुब्धाचरत्तपः ” इति भागवतामृतोत्थापितपौराणिककथया च नारायणकांतायाः श्रियः कृष्णसंगासंभवादेवं व्याख्येयम् । कान्तम् कमनीयमच्युतं कृष्णमेकान्तवल्लभं लब्ध्वा विजह्रिरे । तद्दोर्भ्यां कृष्णभुजाभ्यां गृहीताः कंठा यासां ताः । श्रियः श्रिय इवेत्यर्थः । सा यथा नारायणवक्षोगृहीतगात्री, एता गोप्योऽपि तथा कृष्णभुजगृहीतकंठ्य इत्यर्थः । यद्वा—नारायणेनैक्यात्कृष्णस्यापि श्रीवल्ल भता ॥ अत्र **तोषिणी**—अच्युतम् कस्माच्चिदपि रूपगुणादिमाहात्म्याच्च्युतिरहितम् । तस्य दुर्लभतामाह—श्रियोऽपि एकान्तं वैकुंठनाथादितोऽप्यतिशयान्नितान्तं वल्लभम् ' यद्वाञ्छया श्रीर्ललनाऽचरत्तपः ' इत्यनुसारेण

१ आदादिति पाठेनाऽऽदानार्था।

**कर्णोत्पलालकविटंककपोलघर्मवक्त्रश्रियो वलयनूपुरघोषवाद्यैः ॥ गोप्यः समं भगवता ननृतुः स्वकेशस्रस्तस्रजो भ्रमरगायकरासगोष्ठ्याम् ॥ १६ ॥**

**तत्र वादकेषु गायकेषु गंधर्वकिन्नरादिषु रसावेशेन मुह्यत्सु नृत्यत्सु चान्यामेव वाद्यादिसंपत्तिं दर्शयन्रासंसंभ्रममाह। कर्णोत्पलेति। कर्णोत्पलैश्चालकविटंकैरलकालंकृतैः कपोलैश्च घर्मैश्च वक्त्रेषु श्रीः शोभा यासां ताः । घोषाः किंकिण्यः । वलयनूपुरघोषैर्वाद्यैर्वादित्रैः । स्वकेशेभ्यः स्रस्ताः स्रजो यासां ताः । एतेन तालगतिसंतुष्टाः केशाः सशिरःकंपं पादेषु पुष्पवृष्टिमिवाकुर्वन्नित्युत्प्रेक्षितम् । भगवता सह ननृतुः । क्व । भ्रमरा एव गायका यस्यां रासंसभायाम् ॥ १६ ॥**

प्रेमविषयं न तु लब्धम् । तं कान्तं रमणं लब्ध्वा । यद्वा–श्रियः कान्तं कामनास्पदम् । एकांतवल्लभं स्वैकनिष्ठप्रियतमं लब्ध्वा न केवलं लाभः किन्तु स्वल्पमपि विश्लेषमसहमानेन तेन स्वदोर्भ्यां गृहीतः कंठो यासां तादृश्य इत्यर्थः । अत एवातिप्रेमानंदेन तमेव गायन्त्यो विजह्रिर इति । एवं श्रियोऽपि सकाशात्तासामतिमाहात्म्यमभिव्यक्तम् । तथैव गम्यते श्रीमदुद्धवेन–“नायं श्रियोंग उ नितांतरतेः प्रसादः स्वर्योषितां नलिनगंधरुचां कुतोन्याः । रासोत्सवेऽस्य भुजदंडगृहीतकंठलब्धाशिषां य उदगाद्व्रजवल्लवीनाम् ॥” इति ॥ १९ ॥ तत्र रासे । राससंभ्रमः रासावेशः । स्रजः पुष्पाणि तन्माला वा । ‘स्रग्मालापुष्परज्जुषु’ इति धरणिः। एतेन स्वकेशेत्याद्युक्तेन । उत्प्रेक्षितम् उत्प्रेक्षाविषयतां नीतम् । उत्प्रेक्षालक्षणं तु कुवलयानंदे–“संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना । उक्तानुक्तास्पदाद्या स्यात्सिद्धासिद्धास्पदे परे ॥” इति । अन्यधर्मसंबंधनिमित्तेनान्यस्यान्यात्मतासंभावनमुत्प्रेक्षा । सा त्रिधा–कस्यचिद्वस्तुनो वस्त्वंतरात्मना संभावनं वस्तूत्प्रेक्षा, सैव स्वरूपोत्प्रेक्षा, अहेतोर्हेतुतया सम्भावनं हेतूत्प्रेक्षा, अफलस्य फलतया संभावनं फलोत्प्रेक्षा । तत्राद्या वस्तूत्प्रेक्षा द्विधा–उक्तविषयाऽनुक्तविषया चेति । परे हेतुफलोत्प्रेक्षे अपि प्रत्येकं द्विविधे–सिद्धविषये असिद्धविषये च । तत्रोदाहरणं क्रमात्–“धूमस्तोमं तमः शंके कोकीविरहशुष्मणाम् । लिंपतीव तमोंगानि वर्षतीवांजनं नभः ॥” (१) । अथ प्रदोषे विसृत्वरतमसो नैल्यदृष्टिरोधकत्वादिधर्मसंबंधेन गम्यमानेन निमित्तेन सद्यः प्रियविघटितसर्वदेशस्थकोकांगनाहृद्गतप्रज्वलिष्यद्विरहानलधूमस्तोमत्वसंभावनं स्वरूपोत्प्रेक्षा, तमसो विषयस्योपादानादुक्तविषया । तमोव्यापनस्य रोदोगताखिलवस्तुसांद्रमालिनीकरणेन निमित्तेन तमःकर्तृकलेपनतादात्म्योत्प्रेक्षा । नभःकर्तृकाञ्जनवर्षणतादात्म्योत्प्रेक्षा चानुक्तविषया वस्तूत्प्रेक्षा । “रक्तं तवांघ्रियुगलं भुवि विक्षेपणाद् ध्रुवम् । त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते शशी ॥” ( २ ) । चरणयोस्सहजे रागे विक्षेपणमहेतुर्हेतुत्वेन संभावितं हेतूत्प्रेक्षा, विक्षेपणस्य च विषयस्य सत्त्वात्सिद्धविषया । चंद्रपद्मविरोधे सहजे कान्तामुखकान्तिकामनाहेतुरसती च हेतुत्वेन संभाविते त्यसिद्धविषया हेतूत्प्रेक्षा । “मध्यः किं कुचयोर्धृत्यै बद्धः कनकदामभिः । प्रायोऽब्जं त्वत्पदैक्यं प्राप्तुं तोये तपस्यति ॥” ( ३ ) । अत्र स्वाभाविक्या मध्यकर्तृककुचधृतेः कनकदामबद्धत्वेनाध्यवसितवलित्रयशालिता फलत्वोत्प्रेक्षणं सिद्धविषया फलोत्प्रेक्षा । जलजस्य जले निजावस्थितेरुदकवासतपस्त्वेनाध्यवसितायाः कान्तापदसायुज्यप्राप्तिर्न फलमिति खपुष्पायमाणायास्तस्याः फलत्वेनोत्प्रेक्षणमसिद्धविषया फलोत्प्रेक्षेति । तथा चेह वस्तूत्प्रेक्षोक्तविषया ज्ञेया, विषयाणां कर्णोत्पलादीनामुक्तत्वादिति । कर्णोत्पलानि सौवर्णानि गोपिकास्थानीयानि वर्णसाम्यात्, अलकाः श्यामाश्चूर्णकुंतलाः कृष्णस्थानीयाः, उभयोर्विटंकः परस्परावद्धकरानुकारः, कपोलेषु रंगस्थानीयेषु, घर्मश्च कालिंदीप्रवाहस्थानीयः, तेनतेन वक्त्राणां श्रीर्विलक्षणा रासमंडलशोभा यासां ता इति द्विविधा रासलीला संजातेति । भ्रमराणां गायकत्वं तु स्वयमेव लिखितम् । “विटंकः पक्षिवासार्थकल्पितेऽलंकृतौ तथा” इति कोशात् । ‘गोष्ठी सभासंलापयोः स्त्रियाम्’ इति मेदिनी ॥ * ॥ पृथक्पृथग्गाननृत्यादिसाद्गुण्यशोभामुक्त्वा समुदितनृत्यजनितवक्त्रादिशोभां विवृणोति–कर्णोत्पलेषु कर्णधृतोत्पलोपलक्षितचक्रिकाकुंडलेषु । अलकानामिति लौल्याद्विविधाष्टंका वेष्टनानि च कपोलेषु घर्मबिंदवश्च तैर्वक्त्रेषु श्रीः शोभा यासां ताः । ‘टकि–बन्धे’ । वलयनूपुराद्यलंकाराणां घोषस्तुल्यस्वरतया नादो येषु तैर्वाद्यैः । तत्रानद्धशुषिरैस्तैस्तत्तदधिष्ठातृदेवताभिरेव स्वसफलीकरणार्थमागत्य वादितैः । स्वकेशेभ्यः स्रस्ताः स्रजो यासां ताः । एतेन तालगतिसंतुष्टाः केशाः सशिरःकम्पाः पुष्पवृष्टिमिवाकुर्वन्निति स्वामिचरणाः। भ्रमरा अपि गायका यस्यां तस्यां रासगोष्ठ्यां रासंसभायाम् ॥ अत्र **तोषिणी**–तथैव तासां माहात्म्यं दर्शयति-कर्णेति द्वाभ्याम् । कर्णेति तासां रासेन श्रमेऽपि परमशोभा दर्शिता । तथापि नृत्ये हेतुमाह–भगवता निजाशेषमाधुर्यसारसर्वस्वं प्रकटयता । सममिति तत्साहित्यस्य परमोल्लासकत्वात् । यतो गोप्यस्तदेकप्रेमवश

**एवं परिष्वंगकराभिमर्शस्निग्धेक्षणोद्दामविलासहासैः ॥ रेमे रमेशो व्रजसुंदरीभिर्यथाऽर्भकः स्वप्रतिबिंबविभ्रमः ॥ १७ ॥**

**यथा गोप्यो नानाविभ्रमैर्भगवता सह विजह्रुरेवं भगवानपि स्वविलासैस्ताभिः सह रेम इत्याह । एवमिति । तद्विलासानभिभूतस्यैव रतौ दृष्टांतः । यथाऽर्भक इति । स्वप्रतिबिंबैर्विभ्रमः क्रीडा यस्य स इव । अनेनैतद्दर्शितम् । स्वीयमेव सर्वकलाकौशलं सौगंध्यलावण्यमाधुर्यादि च तासु संचार्य ताभिः सह रेमे यथाऽर्भकः स्वप्रतिबिंबैरिति ॥ १७॥**

त्वेन प्रसिद्धा इत्यर्थः । तेन सममित्यनेन तासां तत्सदृशवैदग्ध्यादिकमपि सूचितम् । तथा तासामिव तस्यापि कर्णोत्पलेत्यादिकं सर्वं बोध्यते । उत्पलधारणञ्च संप्रति श्रीकृष्णेनैव कारितमिति ज्ञेयम् । भ्रमरगायकेति तत्त दुचितगानसमर्थत्वात्तेषामसाधारणत्वं व्यंजितम् । अन्यत्तैः । तत्र वादकेष्विति दुंदुभिनादाभिप्रायेण । तद्धि नादादिकं तेषां तन्नृत्यानुकूलमेवासीदिति तत्संमतम् । किन्नरादिष्विति च दिवौकसामित्युक्तेस्तदन्तर्गतत्वसंभावनयेति । एवं तत्र तासां न काचिदन्यतो गीतादेरप्यपेक्षा, किन्तु स्वानंदेनैव तेषां मध्येमध्ये वादनादिचेष्टितेति ॥ १६ ॥ ताभिः गोपीभिः । तासां विलासास्तद्विलासास्तैरनभिभूतोऽतिरस्कृतः । विलासस्तु–" यान स्थानासनादीनां नेत्रवक्त्रादिकर्मणा । उत्पाद्यते विलासो यः स विलासः प्रकीर्तितः ॥ " इति भरतेनोक्तः । अनेन दृष्टान्तेन एतद्वृत्तं दर्शितम् । लावण्यं तु–" मुक्ताफलेषुच्छायायास्तरलत्वमिवांतरे । प्रतिभाति यदंगेषु तल्लावण्यमिहोच्यते ॥ " इति दर्शितम् । माधुर्यन्तु–" यतश्चेतो नापयाति तन्माधुर्यमितीरितम् " इति । आदिना सौस्वर्यग्रहः । तासु गोपीषु । संचार्य संप्रवेश्य । ताभिः गोपीभिः । अर्भको बालः । एतेनापि व्यभिचारदोषः परास्तः । प्रतिबिंबानां बिंबाधीनसत्ताकत्वेन वस्तुतस्तदविनाभावित्वात्तदभिन्नत्वमेव । तथा च गोपीनां भगवत्प्रतिबिंबत्वेनाभिन्नत्वाद्बाललीलावत्तल्लीलाप्यतर्क्यैवेति ॥ * ॥ एवं रासनृत्यांगैरेव कृष्णस्य संभोगाङ्गान्यपि निर्वृतानीत्याह । परिष्वङ्ग आलिंगनम्, एकैकया सह युग्मनृत्ये करेणाभिमर्शः स्पर्शः, स च नृत्यगतिसमाप्तौ स्वदक्षिणकरेण प्रियावामवक्षोजे तालन्यासरूपः, स्निग्धेक्षणम् रहस्यांगेषु सप्रेमावलोकनम्, उद्दामविलासः पारितोषिकप्रदानमिषाच्चुंबनादिः, हासस्तु तत्तत्प्राप्त्यनंतरं मुखोल्लासः परिहासो वा तैः । रमेशः रमायां लक्ष्म्यामैश्वर्यं प्रकटयन् व्रजसुंदरीभिः सह रेमे न तु रमयेत्यर्थः । यथार्भको मुग्धस्तथैव तासु प्रेमाधीनत्वान्मौग्ध्यमेव दधन्न तु रमायामिवैश्वर्यमित्यर्थः । ननु परःसहस्राभिस्ताभिः कथमेकः संरेमे, तत्राह–स्वस्य प्रतिबिम्बं प्रतिस्वरूपमेव विभ्रमो विलासो यस्य सः । "प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् । आदायांतरधाद्यस्तु स्वबिम्बं लोकलोचनम् ॥" इत्यत्र बिम्बशब्देन यथा स्वरूपमुच्यते तथैवात्रापि । एकैकया प्रियया सह एकैकस्वरूपो रेमे इत्यर्थः । तासां ह्लादिनीशक्तित्वेन स्वरूपभूतत्वात् । स्वप्रतिच्छवित्वानौचित्याद्व्याख्यांतरं नेष्टम् ॥ अत्र **तोषिणी**–एवमिति तैर्व्याख्यातम् । तत्रावतारिका दृष्टान्तबलादेव प्रतिपन्ना । यथार्भक इत्यादिका स इवेत्यंतव्याख्या चास्या एवानुगता, उभयत्रापि प्रतिबिम्बस्थानीयानां श्रीगोपीनामर्भकस्थानीयस्य श्रीभगवतश्च मुहुः परस्परमनुकरणात् । तत्र च श्रीभगवत एवार्भकस्येव विलासाय स्वयं प्रवृत्तिस्तत्प्रवर्तनं तदीयविलासविशेषश्च लभ्यते । ततस्तद्विलासानभिभूतस्यैव रतौ दृष्टान्त इतीदं त्वागन्तुकमिव लक्ष्यते । यत्त्वनेनैतद्दर्शितमित्यादिकं व्याख्यातम्, तत्र च ता एव तद्गुणप्रकाशिका इति प्रतिपद्यते । यथार्भकः प्रतिबिम्बद्वारत एव स्वीयमुखमाधुर्याद्यनुभवति न तु स्वतस्तथा श्रीभगवानपि तादृशनिजप्रेयसीद्वारत एवेति हि गम्यते, तासां प्रेममयमुदयं विना तदनुदयात् । यद्वा–रमाया ईशः प्रभुरपि व्रजसुंदरीभिरेव रेमे न तु तयेति ततोपि तासां प्रेमगुणसौंदर्यमधिकमभिप्रेतम् । यद्वा–रमाया ईशः प्रभुरेव न तु रमणः व्रजसुंदरीभिस्तु रेमे तथापि तथैवाभिप्रेतम् । तदपि रमणमसाधारणमेवेति सचमत्कारमाह–एवमिति । तत्र परिष्वंगस्तासामाश्लेषः, कराभिमर्शस्तासां करालभनम्, स्निग्धेक्षणम् तन्मुखादीनां सरसावलोकनम्, उद्दामविलासः स्तनस्पर्शनादिः, हासश्च भावोद्रेकविलसितास्मितम्, तैः । एवं तस्य तासामपि सर्वोपरिचरगुणत्वेन परस्परं साम्यमासक्तिञ्च दृष्टान्तेन व्यंजयति–यथेति । कश्चिदर्भकस्तद्वयःस्वभावेनात्यंतक्रीडासक्तः स्वप्रतिबिम्बे विभ्रमो विलासो यस्य तादृशश्च तथा स्वतुल्याभिस्ताभिस्स्वप्रतिमूर्तिभिर्भी रमते, तस्यासौ प्रेमवशता । स्वभावेन

१ श्रीधरस्वामिभिः ।

**तदंगसंगप्रमुदाकुलेंद्रियाः केशान्दुकूल कुचपट्टिकां वा ॥ नांजः प्रतिव्योढुमलं व्रजस्त्रियो विस्रस्तमालाभरणाः कुरूद्वह ॥ १८ ॥**
**कृष्णविक्रीडितं वीक्ष्य मुमुहुः खेचरस्त्रियः ॥ कामार्दिताः शशांकश्च सगणो विस्मितोऽभवत् ॥ १९ ॥**

तास्तु भगवद्विलासैराकुला बभूवुरित्याह । तदंगेति । तस्यांगसंगेन प्रकृष्टा मुत्प्रीतिस्तया आकुलान्यवशानींद्रियाणि यासां ताः । विश्लथबंधान्केशादीनंजसा प्रतिव्योढुं यथापूर्वं धर्तुं नालं न समर्था बभूवुः । विस्रस्ता माला आभरणानि च यासां ताः ॥ १८ ॥ न केवलं ता एवाकुलेंद्रियाः किं तु देव्योऽपीत्याह । कृष्णविक्रीडितमिति । किं च शशांकश्चेति । अनेनैतत्सूचितम् । शशांकेन विस्मितेन गतौविस्मृतायां ततः प्राक्तनाः सर्वेऽपि ग्रहास्तत्रतत्रैव तस्थुस्ततश्चातिदीर्घासु रात्रिषु यथासुखं विजह्रुरिति ॥ १९ ॥

तन्मयक्रीडासक्तः सन् स्वरूपशक्तित्वेन स्वप्रतिमूर्तित्वात् प्रतिबिम्बस्थानीयाभिस्ताभी रेमे । अत एव तत्सदृशत्वाभिप्रायेण पूर्वमपि गोपवध्व इत्यनुक्त्वा कृष्णवध्व इत्येवोक्तम् । तथा च ब्रह्मसंहितायाम्—“ आनंदचिन्मयरस प्रतिभाविताभिः स्वाभिर्य एव निजरूपतया कलाभिः । गोलोक एव निवसत्यखिलात्मभूतो गोविंदमादिपुरुषं तमहं भजामि ॥ ” इति । अत्र च यथार्भको यादृशं मुखचालनादिकं कुरुते तादृशं तत्प्रतिबिम्बमूर्तयोऽपि, यादृशं तास्तादृशमेव क्रीडाकौतुकित्वात्सोपि । एवं श्रीकृष्णश्च श्रीगोप्यश्च परस्परमासक्तत्वादनुचक्रुरिति ज्ञेयम् । अनेन तासामिव तस्याप्यत्र स्निग्धशब्दव्यंजितस्नेहविकारो दर्शितः । स च सात्त्विकोप्युक्तः श्रीपराशरेण—“ गोपीकपोलसंश्लेषमभिपत्य हरेर्भुजौ । पुलकोद्गमसस्याय स्वेदांबुघनतां गतौ ॥ ” इति ॥ १७ ॥ ताः गोप्यः । तस्य कृष्णस्य । अंगसंगेन शरीरसंपर्केण । तया मुदा । विस्रस्ताः विश्लथाः । कुरूद्वहेति संबुद्ध्या भक्त्या कृष्णो वशीभवतीति पश्य त्वमपि शुद्धकुरुवंशोद्भूतत्वाद्भक्तिं कृष्णमायत्तीकर्तुं कुर्वित्यभिमुखीकरोति । यद्वा—शुद्धवंशोद्भूतत्वात्तुभ्यमिमां रहस्यलीलां ब्रवीमीत्याशयः ॥ * ॥ ततश्च ता भगवद्विलासैरानंदविह्वला बभूवुरित्याह—तदङ्गेति । प्रकृष्टा मुत् आनंदस्तयाऽऽकुलेंद्रियाः । कुचपट्टिकाम् कंचुलिकाम् । प्रतिव्योढुम् व्योढुम् । नालम् न समर्थाः ॥ अत्र **तोषिणी**—ततश्च तासामत्यंतानंदवैवश्येन रासविरामोऽजनीत्याह—तदंगेति । तदंगसंगैः क्रमेण प्रकर्षं प्राप्ता या मुत् हर्षस्तयाऽऽकुलेंद्रियाः । व्याकुलेंद्रियताल्लक्षणमाह—केशानित्यादिना । दुकूलम् परिधानीयक्षौमवस्त्रम् । कुचपट्टिकाम् कंचुकस्थानीयमुत्तरीयम् ॥ १८ ॥ अथान्यदद्भुतमाह—न केवलमिति । ता एव गोप्य एव । किन्तु अपि तु । देव्यो देवांगना अपि । न केवलं देव्य एव किन्तु देवा अपीत्याह—किञ्चेति । शशोंकश्चिह्नं यस्य, वाहनत्वात् । सगणो रोहिण्यादिभगणसहितः । अनेन शशांकविस्मयकथनेन । एतत् वृत्तम् । गतौ नक्षत्रसंचाररूपायाम् । ततः शशांकात् । प्राक्तनाः प्राक्तनर्क्षराश्यादिषु वर्तमानाः । सर्वेऽपि ग्रहाः भौमादयः, तत्रतत्रैव यत्रयत्र राश्यादौ स्थिता इति । ततश्च ग्रहगतिविस्मृतेर्ग्रहाणां चलनाभावाद्रात्रीणां दीर्घत्वं, ग्रहगत्यैव रात्र्यादेः समाप्तिदर्शनात् ॥ * ॥ कामार्दिताः कृष्णविषयकेण कामेन पीडिताः । ‘ कामार्दितः ’ इति पाठे शशाङ्कोऽपि श्रीकृष्णमालोक्य स्त्रीभावं प्राप्तः कृष्णविषयकेण कामेन पीडितश्च । व्रजसुंदरीगात्राणां तद्विलासानाञ्च योगमाययैव पुरुषदृष्टीः प्रत्यावरणं पूर्वं व्याख्यातमेव ॥ अत्र **तोषिणी**—कृष्णस्य स्वयं भगवत्त्वेन माधुर्यादिभिः परमपरिपूर्णस्य विक्रीडितं पूर्वपूर्वतोऽपि वैशिष्ट्येन क्रीडां वीक्ष्य साक्षात्सेवादिमयप्रीतिवैशिष्ट्येन दृष्ट्वा खेचरा देवादयस्तेषां स्त्रियः सर्वा अपि कामेन श्रीभगवद्विषयकेण पीडिताः सत्यो व्यमुह्यन् । पूर्वं श्रीकृष्णप्राप्तौ निजायोग्यत्वादिविचाराराहित्येन पश्चाद्देहादेरपि विस्मरणेन मोहवैशिष्ट्यं प्रापुः । अन्यत्तैः । तत्रातिदीर्घास्विति—अन्यथा स्वच्छंदबहुलसुखक्रीडानामप्रसिद्धिः स्यात् । अत एवाग्रे वक्ष्यमाणस्य ‘ ब्रह्मरात्रे ’ इत्यस्यार्थं ब्रह्मणश्चतुर्युगसहस्रपरिमितायां रात्रौ गतायामिति केचिद्व्याचक्षते । तदपि संभवेदेव, भगवच्छक्त्याऽशेषविरुद्धस्य समाधेयत्वात् । विस्मयादिना गतिस्थगितत्वन्तूत्प्रेक्षामात्रं, तेषां ज्योतिश्चक्राधीनगतित्वात्स्वगतेरत्यल्पत्वात्प्रतिलोमत्वाच्च । वस्तुतस्तु, तल्लीलामाधुर्येण नदीप्रवाहस्येव ज्योतिश्चक्रस्य स्तब्धत्वं ज्ञेयम् । रात्रिष्विति बहुत्वं च ‘ता रात्रीः’ इत्युक्तस्य ‘निशाः’ इति वक्ष्यमाणस्य चानुसारेणेति । एवं रासक्रीडायाः श्रीकृष्णविषयकभावविशेषवर्द्धनेन परममोहनत्वं दर्शितम् । तत्र युक्तमेव

कृत्वा तावन्तमात्मानं यावतीर्गोपयोषितः ॥ रेमे स भगवांस्ताभिरात्मारामोऽपि लीलया ॥ २० ॥
तासां रतिविहारेण श्रांतानां वदनानि सः ॥ प्रामृजत्करुणः प्रेम्णा शंतमेनांग पाणिना ॥ २१ ॥

किं च कृत्वेति । अयं भावः । "कात्यायनि महामाये महायोगिन्यधीश्वरि ॥ नंदगोपसुतं देवि पतिं मे कुरु ते नमः ॥ " इति प्रत्येकं ताभिः प्रार्थनाद्भगवताऽपि 'याताबला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः' इति तथैव प्रतिश्रुतत्वात्तावंतमात्मानं कृत्वा रेमे इति । यावतीर्यावत्यः ॥ २० ॥ कृपातिशयमाह । तासामिति ॥ २१ ॥

तत्प्रकृत्यैव तत्संबंधिनृत्यंगीतादेस्तत्तद्भाववर्द्धनतातिशयात्, तत्रापि तस्य साक्षात्कर्तृकत्वात्, तत्रापि लक्ष्म्यादिदुर्लभताद्दशसौभाग्याभिस्ताभिः सहितत्वात्, तत्रापि ताद्दशपरिपाटीसंवलितत्वादिति । तत्र कामार्दित इत्येक वचनांतपाठस्तेषामसंमतः, किन्तु, देवादयोपीत्यनेन तासामेव कामार्दितत्वस्वीकारात् । किञ्च, शशांकश्चेति तदादेर्भिन्नवाक्यत्वांगीकाराच्च ॥ १९ ॥ अन्यदुपयोगमाह—किञ्चेति । लीलया योगमायया । अत्र लीला तात्पर्यमाह—अयं भाव इति । प्रत्येकम् पृथक्पृथक् । ताभिः गोपकन्याभिः । तथैव यथा ताभिर्वृतम् । प्रतिश्रुतत्वात् प्रतिज्ञातत्वात् ॥ * ॥ ततश्च ताभिः सह प्रत्येकं कुंजेषु रहस्यक्रीडाप्यभूदित्याह—कृत्वेति । यावती र्यावत्संख्याका गोपयोषितो गोपवध्वो गोपकन्याश्च तावंतमात्मानं तावत्संख्यमात्मप्रकाशं कृत्वा । आत्मारामोऽपीति व्याख्यातार्थः ॥ अत्र **तोषिणी**—अथ रासानंतरं विश्रम्य कृतं लीलाविशेषमाह—कृत्वेति द्वाभ्याम् । आत्मा नम् आत्मनः प्रकाशमित्यर्थः । 'न चांतर्न बहिर्यस्य' इति न्यायेन मध्यमत्वेऽपि तच्छ्रीविग्रहस्य विभुत्वात्, "चित्रं बतैकदैकेन वपुषा युगपत्पृथक् । गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत् ॥" इत्यैच्छिकप्रकाशाच्च । पौनरुक्त्यमिदं विश्रमसमय एकीभूतत्वात् । गोपयोषितो गोपजातीययोषितः । ततश्च काश्चिद्विवाहिताः काश्चित्कन्याश्चेति ज्ञेयम् । एकविंशद्वाविंशयोर्व्यूढकन्यानां पृथक्पूर्वानुरागवर्णनात्, "युवतीर्गोपकन्याश्च रात्रौ संकाल्य कालवित्" इति हरिवंशोक्तेश्च । एतच्च स्वरूपेण लिखिते उज्ज्वलनीलमण्यादौ व्यक्तम् । लीलया शृंगाररसलेखया । [1]रराम रेमे । भगवानिति तदेव भगवत्तासारमाधुर्यसर्वस्वप्रकटनमिति भावः । तस्यैव प्रेमरस परिपाकविलासविशेषात्मकत्वात्, तथा जगच्चित्ताकर्षकेण तेनैव स्वतः प्रेमविशेषविस्तारणात् । तच्चाग्रे व्यक्तं भावि, श्रीभागवतामृते च विवृतम् आत्मारामोपीत्युक्तार्थम् । तद्रमणञ्च पृथक्पृथक् तत्रैव निकटनिकुंजादि ष्विति ॥ २० ॥ तासाम् गोपीनाम् । वदनानि मुखानि । प्रामृजत् संमार्जितवान् । अंगेति संबुद्धिः । शंतमेन स्पर्शनादानंदजनकेन ॥ * ॥ तासां रतिविहारेण 'तासामतिविहारेण' इति च पाठः । श्रांतानामिति—तासां रतिश्रांतिमालक्ष्य करुणः रमणाद्विरतोऽभूदित्यर्थः । शंतमेन सुखमयेन । प्रामृजदित्युपलक्षणम् वीजनानुलेपनप्रत्यंगप्रसाधनवीटिकाप्रदानान्यपि चक्रे ॥ अत्र **तोषिणी**—रतिर्दंपत्योर्मिथोऽनुरागस्त न्मयो विहारो विविधविदग्धचेष्टा । अतिविहारेणेति पाठेऽपि स एवार्थः । तेन श्रान्तानां शंतमेन परमसुखात्मकेन पाणिना प्रकर्षेणामृजत् स्वेदबिंदूपसारेणालकसंवरणादिनोज्ज्वलयामास । यतः करुणः परमदुःखास हिष्णुस्वभावः । सत्यपि कारुण्येन साधारण्ये तासां तु तानि प्रेम्णा प्रामृजदिति परमवैशिष्ट्यं दर्शितम् । प्रेमा हि साद्गुण्यानुसंधानेनाहन्ताममतैकतरविषयत्वे च जाता चेतसि स्निग्धता, तत्रापीदृशभावमयीति परम एव विशिष्टः । स्वयं कारुण्यादिकमंतर्भावयति—शंतमेनेति । स्पर्शमात्रेणापि स्वभावतः परमसुखकरत्वं, तत्र च प्रमार्जनं, तत्रापि प्रेम्णा, तत्र च शंतमेनेति परमसंतोषणमुक्तम् । अंगेति प्रेमसंबोधनम् ॥ २१ ॥

---

१ रराम भगवानिति पा० ।

गोप्यः स्फुरत्पुरटकुंडलकुंतलत्विङ्गंडश्रिया सुधितहासनिरीक्षणेन ॥ मानं दधत्य ऋषभस्य जगुः कृतानि पुण्यानि तत्कररुहस्पर्शप्रमोदाः ॥ २२ ॥
ताभिर्युतः श्रममपोहितुमंगसंगघृष्टस्रजः स कुचकुंकुमरंजितायाः ॥ गंधर्वपालिभिरनुद्रुत आविशद्वाः श्रांतो गजीभिरिभराडिव भिन्नसेतुः ॥ २३ ॥

ततोऽतिहृष्टानां गोपीनां चरितमाह । गोप्य इति । स्फुरतां पुरटकुंडलानां स्वर्णकुंडलानां कुंतलानां च त्विषा गंडेषु या श्रीस्तया सुधितेनामृतायितेन हाससहितेन निरीक्षणेन च ऋषभस्य पत्युः कृष्णस्य मानं दधत्यः पूजां कुर्वत्यस्तस्य कृतानि कर्माणि जगुः । तस्य कररुहैर्नखैः स्पर्शेन प्रमोदो यासां ताः ॥ २२ ॥ अथ जलकेलिमाह । ताभिरिति । तासा मंगसंगेन घृष्टा संमर्दिता या स्रक् तस्या अत एव तासां कुचकुंकुमेन रंजितायाः संबंधिभिर्गंधर्वपालिभिर्गंधर्वपा गन्धर्वपतय इव गायंतो येऽलयस्तैरनुद्रुतोऽनुगतः स कृष्णो वाः उदकमाविशत् । भिन्नसेतुर्विदारितवप्रः । स्वयं चातिक्रांतलोकवेदमर्यादः ॥ २३ ॥

ततः भगवत्कृतस्वेदमार्जनाद्यनन्तरम् । स्फुरताम् देदीप्यमानानां चलतां वा । त्विषा दीप्त्या । तया श्रिया । अमृतायितेन अमृतवदाह्लादजनकेन । मानम् सत्कारम्—अहो भगवता कृतार्थीकृता स्मः इत्यादिकम् । दधत्यः कुर्वत्यः । तस्य कृष्णस्य । प्रमोदः प्रकृष्टाऽऽनंदः । नखक्षतस्यापि शृंगारांगतात्रोक्तेति ॥ * ॥ ततश्च ताः स्वाधीनकांताः कांतपरिधापितरत्नालंकाराः कुंजेभ्यो निष्क्रम्य मिलिता रासोत्सवसमाप्तिसूचकं मंगलं जगुरित्याह—गोप्य इति । स्फुरंत्या स्वर्णकुंडलानां कुंतलानां च त्विषा गंडेषु या श्रीस्तया सूचितेन अमृतायितेन हाससहितनिरीक्षणेन ऋषभस्य पुरुषश्रेष्ठस्य कृष्णस्य मानमादरं दधत्यः कृतानि तत्कर्माणि जगुः । पुण्यानि चारूणि । तस्य कररुहाणां नखानां स्पर्शेन प्रकृष्टो मोदो यासां ताः ॥ अत्र **तोषिणी**—ततः प्रहृष्टा निजदेहादिना त्रिधा तस्य प्रहर्षं संजनयामासुरित्याह—गोप्य इति । तत्र स्फुरदिति सौंदर्येण, सुधितेति भावेन, जगुरिति संकीर्तनेन । ऋषभस्येति तैर्व्याख्यातम् । अत्र ऋषभस्य पत्युः श्रीकृष्णस्येत्यत्रायमभिप्रायः—कृष्णवध्व इत्यस्मिन्स्वयमेव श्रीमुनींद्रेण व्यक्तीकृते वयं कथं गोपयामः, तस्मादस्माभिरव्याख्याता अपि दयितरमणादिशब्दाः केन वाऽन्यथा मंतव्या इति । तदा च परस्परमनन्यभावेनाव्यक्तेदांपत्यस्फूर्त्या तस्य मानं दधत्य उक्तप्रकारैः पूजां कुर्वत्यः । यद्वा—अहो मम धन्यता यस्येदृश्यो वध्व इत्येतादृशं तस्य गर्वमर्पयंत्यः । पुण्यानि पुण्यकराणि चारूणि च जगुः । ‘ पुण्यं तु चार्वपि ’ इत्यमरः । तस्यैकशेषत्वाद्गाने हेतुः । तस्य कररुहैः स्पर्शानुगाने गुणवत्योप्येताः कृतमौना इति प्रणयकोपेन तत्प्रवर्तनाय किंचिन्मोदनात् । प्रकृष्टो मोदः कासांचियासां ता इति । इत्यादिश्रांतानामपि गाने रसोल्लासो बोधितः । तासामित्यादिद्वये हेलानामायमनुभावः । यथा—“ चित्तस्याविकृतिः सत्त्वं विकृतेः कारणे सति । तत्राद्यविक्रियाभावो बीजस्यादिविकारवत् ॥ ग्रीवारेचकसंयुक्तो भ्रूनेत्रादिविकाशकृत् । भावादीषत्प्रकाशो यः स हाव इति कथ्यते ॥ हाव एव भवेद्धेला व्यक्तः शृंगारसूचकः ॥ ” इति ॥ २२ ॥ अथ स्थलक्रीडानंतरम् । जलकेलिः जलक्रीडा । ताभिः गोपीभिः । तासाम् गोपीनाम् । अत एव संमर्देनादेव । गंधर्वपेत्युपमेयोत्तरसमासः । गंधर्वपास्तुंबुर्वादय एव भगवल्लीलामन्वेष्टुमलिरूपेणागता इति ज्ञेयम् । श्रांत इति जलात्यंतावगाहात् । वप्रः तटः । यद्वा—शृ हिंसा तस्या अंतो यस्य स श्रंतस्स एव श्रान्तः नित्यनिरस्तमृत्युः । भिन्नसेतुर्विशेषितलोकमर्यादः ‘भिन्नो विशेषे दलने’ इति कोशात् । पृथक्पृथक्स्थापिततत्तत्सेतुरिति । एः कामस्य भं दीप्तिं राजति क्षिपतीतीभराट् । क्षेपेऽपि राज् धातुः । गोपीविषये गजीशब्दस्तु ‘गज्—शब्दे’ धातुः । गजीभिः शब्दं कुर्वतीभिः । भिन्नसेतुरिति गजस्य मदातिरेकसूचनेन कृष्णस्यापि तात्कालिकहर्षातिरेकमाह । भिन्नलोकवेदधर्ममर्याद इत्यर्थः । एतदर्थाऽऽश्रयणे तु “कृष्णे स्वधामोपगते धर्मः कं शरणं गतः” इत्युक्तिविरोधः स्यादिति ॥ * ॥ ततश्च रासोत्सवस्यावभृथस्नानमिव जलविहारमाह । ताभिर्युतः अपोहितुं दूरीकर्तुम् । ताभिः काभिः याः स्रक्कुचकुंकुमैरेव रमणव्यापारवशेन रंजिताः । अंगसंगेनैव घृष्टाः संमर्दिताः स्रजो यासां ताः । ‘स कुच—’ इति पाठे सः छृष्णः । “गंधर्वो मृगभेदे स्याद्गायने खेचरेऽपि च” इति विश्वप्रकाशाद्गंधर्वपा गायनश्रेष्ठा येऽलयस्तैरनुद्रुतः सन् । वाः जलमविशत् । भिन्नसेतुर्विदीर्णावरणः । कृष्णपक्षे, अतिक्रांतलोकमर्यादः ॥

**सोंभस्यलं युवतिभिः परिषिच्यमानः प्रेम्णेक्षितः प्रहसतीभिरितस्ततोंग ॥ वैमानिकः कुसुमवर्षिभिरीड्यमानो रेमे स्वयं स्वरतिरत्र गजेंद्रलीलः॥२४॥**

**स्वरतिरात्मारामोऽपि रेमे । अत्र गोपीमंडलेऽत्रांभसीति वा ॥ २४ ॥**

अत्र **तोषिणी**—ततः परमहृष्टस्य भगवतोऽपि प्रेमचेष्टितमाह—ताभिरिति त्रिभिः । श्रमं तासामपोहितुमपनेतुं तादृश प्रेममयमधुरनर्मलीलाविष्टत्वादात्मनश्चेत्यर्थः । अंगसंगेत्यनेन पद्मिनीस्त्रीपूज्यपादानां तासामंगतः स्वाभाविक परमामोदसंचारोऽभिप्रेतः । किञ्च, स्वकुचेति स्वशब्दोत्रासाधारणार्थः । अत एवानुद्रुतः । स्रक् कौन्दी ज्ञेया, परमशुभ्रत्वेन कुंकुमरंजितत्वसंपत्तेः । एवं जलक्रीडायां कामोद्दीपनसामग्री च दर्शिता । वाः यामुनमाविशत् आसक्त्या प्राविशत् । दृष्टान्तो गजेंद्रस्य बह्वीभिर्गजीभिः सह जलविहारासक्त्याद्यनुसारेण । अन्यत्तैः । यद्वा—गंधर्वेषा गायनश्रेष्ठाः "गंधर्वो मृगभेदे च गायने खेचरेऽपि च" इति विश्वः । त इव येऽलयश्च तैरिति जलक्रीडायोग्यमुत्तमगीतमुक्तम् । यद्वा—काभिः—भगवदंगसंगेन घृष्टस्रजो याः, याश्च निजकुचकुंकुमेन रंजिता स्यावेशेन सर्वांगेषु संपृक्तास्ताभिः । अत एव तासां श्रममपनेतुम् । न केवलं तासामेव स्वस्यापीत्याह—श्रांत इति । भिन्नेत्युपमानेऽपि श्रांतत्वे हेतुः । भिन्नसेतुरिव कृतलीलौद्धत्य इत्यर्थः । 'स कुच' इति स्वामिसंमतः पाठः 'सः श्रीकृष्णः' इति व्याख्यानात्स्वेत्यस्याव्याख्यानाच्च ॥ २३ ॥ परिषिच्यमान इति । नानाजलक्रीडाभेदैराद्रींक्रियमाणः । जलक्रीडाभेदास्तु कृष्णकर्णानंदे उक्ताः । तथाहि—करयोर्वामांगुष्ठमूलमापीड्य तर्जन्याद्यंगुलीभिर्मिथः संयोगरूपसंपुटेन क्षिप्तं जलं यदि लक्ष्यीकृतं न स्पृशेत्तर्हि पराजितः, स्पृशेच्चेज्जित इत्येको भेदः १ । गंडूषो यस्य लक्ष्यादर्वाक्पतेत्स पराजितः, लक्ष्यं स्पृशेच्चेज्जित इति द्वितीयो भेदः २ । यस्य स्तनोरोभ्यां जलताडनेऽल्पास्तरंगाः प्रादुर्भवेयुः स पराजितः, बहवश्चेज्जित इति तृतीयो भेदः ३ । इतरेतरसंगुलीभिर्गृहीतमणिबंधेन बाहुद्वये नालोडितजलोत्थफेनं यस्याचिरं लीयते स पराजितः, यस्य तु चिरेण स च जित इति चतुर्थो भेदः ४ । श्रोणिबिंबताडितपश्चाज्जलैर्यः पंक्तित्रुटितो भवेत्स पराजितः, अन्यस्तु जित इति पञ्चमो भेदः ५ । इत्येवमपरेऽपि नाना संतीति । इतस्ततः सर्वांगेषु । कुसुमवर्षिभिरिति—कृष्णभंगं क्रीडायां वितर्क्य बलवद्धर्षमिव जयजयेत्येवं स्तूयमानः । वैमानिकैरिति पुंस्त्वेन पुरुषैरेव स्त्रीणां तासां व्रजसुंदरीपक्षपातित्वेन कुसुमवर्षादावप्रवृत्तेः । व्रजसुंदरीविजये तु देवीभिरेव पुष्पवृष्टिर्जयजयेति शब्दश्च क्रियेत, न तु देवैरिति । गोपीमंडलस्य भेदाशंकयाह—अंभसि वेति । स्वरतिस्स्वस्मिस्त्वेन वा रतिर्न परत्र परेण वा यस्य स तथेति । अनेन तत्तत्कालेरमणकथनं विशेषस्मरणाय वा सुरजनमोहनायेति बोध्यम्, अन्यथा "आत्मक्रीड आत्मरतिः" इति श्रुतिर्व्याकुप्येतेति । गजेंद्र इव लीला यस्येति तथा । "गजो माने हस्तिनि च मुख्ये शब्दयुते तथा" इति निरुक्तेः । गजेन्द्राणां वेदशब्दयुतानां शिष्टानां लीला यस्य स तथेति । "यदायदा हि धर्मस्य ग्लानिर्भवति भारत" इत्यादिस्मृतेर्धर्मप्रवर्तक इत्यर्थः सम्यक् ॥ * ॥ प्रेम्णेक्षितः । 'प्रेम्णोक्षितः' इति च पाठः । स्वं धनं रतिः क्रीडैव यस्य सः ॥ अत्र **तोषिणी**—जलक्रीडामाह—स इति । स परमकौतुकी युवतिभिस्तादृशक्रीडारसमत्ताभिस्तादृशप्रवीणाभिस्ताभिरित्यर्थः । इतस्ततः सर्वासु दिक्षु स्थित्वांभसि जलेऽर्धादंमसैव सिच्यमानः । प्रेम्णे स्थितश्च प्रेम्णोक्षणेनांतरपि सिच्यमान इवेत्यर्थः । अत एव प्रेम्णोक्षित इत्यपि पाठः । न केवलं तेन बहिरेव सिक्तोऽपि तु प्रेम्णांतरप्युक्षितः सिक्त इत्यर्थः । इत्यंतर्बहिरपि तत्क्रीडासक्तं दर्शितम् । किं कुर्वतीभिः—परिहासरसात् प्रकर्षेण हसंतीभिः तादृशः सन् स्वयमपि रेमे । तथैवांतर्बहिरपि तेन ताः सिच्यन्ते स्मेत्यर्थः । कथंभूतोऽपि—स्वरतिरपि । तादृशोऽपि कथं भूतः सन्—गजेन्द्रस्य लीलेव परमासक्तिमयी लीला यस्य तादृशः सन् । पुनः कीदृशोऽपि सन्—वैमानिकैः कुसुमवर्षिभिरीड्यमानः । सदा सर्वत्र स्तूयमानतया प्रकटपरममहिमापि सन्नित्यर्थः । तेषां तादृशलीलापरिकरतायामयोग्यत्वान्नान्यथा तु व्याख्येयम् । अंगेति हर्षसंबोधने । अन्यत्तैः । यद्वा—स्वेषु निजजनेषु स्वासु तास्वेव वा रती रागो यस्य सः । अतः स्वस्य जयादपि तासां जयेन संतोष इति भावः । यद्वा—कृपया तज्जलक्रीडां विस्तार्य वर्णयेति

---

१ हसन् ।

ततश्च कृष्णोपवने जलस्थलप्रसूनगंधानिलजुष्टदिक्तटे ॥ चचार भृंगप्रमदागणावृतो यथा मदच्युद्द्विरदः करेणुभिः ॥ २५ ॥ एवं शशांकांशुविराजिता निशाः स सत्यकामोनुरताबलागणः ॥ सिषेव आत्मन्यवरुद्धसौरतः सर्वाः शरत्काव्यकथारसाश्रयाः ॥ २६ ॥

स्थलजलक्रीडे दर्शिते वनक्रीडां दर्शयति। ततश्चेति। कृष्णायाः यमुनाया उपवने जलस्थलप्रसूनानां गंधो यस्मिंस्तेनानिलेन जुष्टानि दिशां तटान्यंता यस्मिन्। यद्वा दिशश्च तटं स्थलं च यस्मिन्नुपवने। भृंगाणां प्रमदानां च गणैरावृतः करेणुभिर्गजीभिरावृतो मदस्रावी गजो यथा॥२५॥ रासक्रीडां निगमयति। एवमिति। स कृष्णः सत्यसंकल्पोऽनुरता बलागणः अनुरागिस्त्रीकदंबस्थ एवं सर्वा निशाः सेवितवान्। शरत्काव्यकथारसाश्रयाः शरदि भवाः काव्येषु कथ्यमाना ये रसास्तेषामाश्रयभूता निशाः। यद्वा निशा इति द्वितीयाऽत्यंतसंयोगे। शृंगाररसाश्रयाः शरदि प्रसिद्धाः काव्येषु याः कथास्ताः सिषेव इति। एवमप्यात्मन्येवावरुद्धः सौरतश्चरमधातुर्न तु स्खलितो यस्येति कामजयोक्तिः॥ २६॥

चेत्, तत्राह–स्वा असाधारणी रतिर्जलादिक्रीडा यस्य सः। अहो दृष्टान्ताद्यभावेन सा विस्तरेण वर्णयितुं न शक्यत इत्यर्थः ॥ २४ ॥ ततः स्थलजलक्रीडानंतरम्। जलप्रसूनानि कुमुदादीनि, स्थलप्रसूनानि सौगंधिककुंदादीनि। जुष्टानि परिमलितानि। तटशब्दस्यान्ते लक्षणातो मुख्यार्थश्रयगं न्याय्यमित्याह–यद्वेति। "तटं नपुंसकं क्षेत्रे प्रतीरे तु तटी त्रिषु" इति मेदिनी। भगवत्पक्षे मदच्युद् दुष्टगर्वहरः। द्वयोः पुण्य पापयो रदो लेखनं येन स द्विरदः, चित्रगुप्तेन पुण्यपापलेखनकर्त्रेत्यर्थः। कैः–करे हस्तविषयेऽणुभिः सूक्ष्माग्रलेखनीभिः। भृंगवद्गायमानप्रमदावृत इति वा ॥ * ॥ ततः जलविहारानंतरम्। चकारेणांगमार्जनवनदेवतानीत तादात्विकवस्त्रालंकारपरिधानानंतरं च। कृष्णाया यमुनाया उपवने परःसहस्रकुंजयुक्ते तत्र स्वापलीलार्थं चचार जगाम। कीदृशे–जलस्थलवर्तिप्रसूनानां गंधो यत्र तथाभूतैरनिलैर्जुष्टानि दिक्तटानि यस्य तस्मिन्। भृंगाणां प्रमदानां च गणैरावृतः। मदानां च्युत् च्योतनं क्षरणं यस्य सः ॥ अत्र **तोषिणी**–ततः जलक्रीडानंतरम्। पूर्वेनेपथ्यापगमे तदानीं वन्यनेपथ्यस्य रोचकत्वात्तत्प्रचुरक्रीडाविशेषेच्छयेत्यर्थः। त्वर्थे चकारो भिन्नोपक्रमे। चचार पुष्पावचयनिकुंजांतर्निलीनतादिविचित्रप्रकारेण क्रीडन्नितस्ततो बभ्राम। भृंगगणावृतत्वं पुष्पावचये तत्साहित्येनैवागमनात्, जलक्रीडायामंगेषु धौतेषु सहजमधुरसौरभ्यस्यातिप्रकाशाच्च। अत एव तेषां मुहुरुक्तिः। मदच्युदिति भृंगगणावृतत्वे हेतुता तथा द्विरदश्रेष्ठता स्वकान्तासक्तता च ॥ २५ ॥ उपसंहरति–एवमित्यनेन। रासक्रीडाया निगमनं बोधनम्। निशा नितरां शं सुखं यासु ताः। क्षणमपि रतिविरामो नासीदित्यन्वर्थता। अनुरतस्त्रीगणस्तदिच्छानुकूलरमितस्त्रीजनो वा। एतेन श्रीकृष्णस्य स्त्रीष्वनासक्तिर्द्योतिता। रसाः शृंगारहास्यादिरूपाः। निशानामचेतनत्वाद्रसाश्रयता न संपनीपद्यतेऽत आह–यद्वेति। चरमधातुरत्र रेतः। "रसाऽसृङ्मांसमेदोस्थिमज्जाशुक्राणि धातवः" इत्यत्र धातुगणनायां शार्ङ्गधरेण शुक्रस्य चरमत्वमुक्तम्। किञ्चोत्पत्तिक्रमेणापि शुक्रस्य चरमत्वमेव। तदुक्तं संहितायाम्–"रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते। मेदसोऽस्थि ततो मज्जा तस्माच्छुक्रस्य संभवः ॥" इति। रसादन्नादिरसादित्यर्थः। वीर्यं निरुध्य सुरतं करोतीति अयमेव कामजयः "स्त्रीसंगेऽपि न पतितं रेतो यस्य परेच्छया। स धन्यः पुरुषो लोके कामजेता स कथ्यते ॥" इति संहितोक्तेः ॥ * ॥ शरत्पौर्णमासीनर्त्तनीं रासक्रीडामुपसंहरन्नन्यास्वपि रात्रिषु विविधविचित्रापरिगण्यतादृशक्रीडा ताभिः सह बभूवेत्याह– एवं सर्वा एव योगमायायाः प्रभावाच्छशांकांशुविराजिता निशाः सिषेवे। स्वविलासैर्वृंदावनीयनिशासुखमास्वादयामासेत्यर्थः। षिवु धातोः कर्तृत्वेन क्रीडोपयोगिन्यस्ता निशाः परमादरणीयत्वेन भोग्याः किमुत तत्रत्याः कामविलासा इति द्योतितं, महाप्रसादान्नं सेवते भक्त इतिवत्। यतस्ते कामा विलासा न प्राकृता ज्ञेया इत्याह–सत्याः वास्तववस्तुरूपाः कामा विलासा यस्य सः। किञ्च, रमणस्य कर्तृत्वं स्वं गोपीश्च प्रापयामासेत्याह–अनु तद्रमणानंतरं रता रमणकर्तारोऽबलागणा अपि यस्य सः। अबलापदेन तत्र तासां प्रभविष्णुत्वाभावो व्यंजितः। तदा च भगवतो रात्रिंदिवं तत्केलिविलासैकतानमनस्त्वमभूदित्याह–आत्मनि मनसि। अवरुद्धा अवरुध्य स्थापिताः सौरताः सुरतसंबं

## राजोवाच ॥ संस्थापनाय धर्मस्य प्रशमायेतरस्य च ॥ अवतीर्णो हि भगवानेशन जगदीश्वरः ॥ २७ ॥

॥ २७ ॥

धिनो हावभावविव्वोककिलकिंचितादयः, वाम्यौत्सुक्यहर्षादयः, स्तंभस्वेदवैवर्ण्यादयः, दर्शनस्पर्शनश्लेषादयश्च येन सः । " एवं सौरतसंलापैर्भगवान्देवकीसुतः । स्वरतो रमयामास नरलोकं विडंबयन् ॥ " इत्यत्र विशेष विवक्षयैव संलापपदोपन्यासः । अत्रत्वविशेषेण सर्व एव ते संगच्छन्त इति ज्ञेयम् । सर्वा द्वादशमासिकीरेव निशाः सिषेवे । कीदृशीः—शरत्काव्यकथाश्रयाः 'हायनोऽस्त्री शरत्समाः' इत्यभिधानात् शरदि संवत्सरमध्य एव ऋत्वादिकमधिकृत्य ये काव्यकथारसाः संभवन्ति तेषामाश्रयाः या सांवत्सरिकनिशाः श्रीवृंदावनीयकृष्णक्रीडाधिकरणीभूतास्ता आश्रित्य सत्कवयः प्राचीनार्वाचीना व्यासपराशरजयदेवलीलाशुकगोवर्द्धनाचार्यश्रीरूपप्रभृतयः स्वस्वकृतेषु काव्येषु कथाः रसांश्च शृंगारप्रधानान्वर्णयित्वाऽपि न पारं प्राप्नुयुरित्यर्थः । अत एव मयापि सामस्त्येन वर्णयितुमशक्यत्वाद्दिग्वैषा दर्शितेति भावः ॥ अत्र **तोषिणी**—अथास्यां शरदि पूर्णिमायां कृतां रासक्रीडा मुपसंहरंस्तत्प्रकारतामन्यत्राप्युपदिशन्नन्यामन्यामपि क्रीडामुपलक्षयति—एवमिति । एवं पूर्वोक्तरासप्रकारेण शरत्काव्येति वक्ष्यमाणात् । प्रतिशरदशशांकांशुविराजिता निशाः सर्वा एव सिषेवे । परमादरेण परिचारितवा नित्यर्थः । अन्यथा ऋत्वंतरसंभवा ज्यौत्स्नीस्तामसीश्च रहस्तत्तद्गृहप्रवेशतस्तदभिसारेण कुंजशयनादिना कदाचिद्रासेन चेति भावः । उत्तरासां विशेषज्ञापिकाः पूर्वा एव विशिनष्टि—शरदि ये काव्यकथारसाः संभवन्ति तेषामाश्रयो यासु श्रीभगवत्कृतानंतलीलासु तादृशीर्निशा ·व्याप्येति । पक्षे, सर्वाः शरत्काव्यकथाः सर्वदेशकालकविभिर्यावत्यो वर्णयितुं शक्यन्ते तावतीस्ताः सिषेवे । किन्तु रसाश्रयाः रसेष्वाश्रयो यासां ता एव न तु कैश्चिद्विरसतया या ग्रथितास्ता अपीत्यर्थः । उपलक्षणं चैतदन्यासाम् । यद्वा—शशांकांशुविराजिताः वसंतादिसंबंधिन्योऽपि या निशास्ता एव रासप्रकारेण सिषेवे । तथा ऋतुषट्कात्मकस्य शरदाख्यस्य याः काव्यकथाः पूर्ववदनन्तास्ताश्च सर्वास्सिषेवे, किन्तु रसाश्रया एवेति । कीदृशः सन् सिषेवे, तत्राह—आत्मन्यंतर्मनसि अवरुद्धाः समंततः स्थापिताः सौरतास्तासां सुरतसंबंधिनो भावहावोदयो येन तादृशः सन्निति । ततस्ताः परित्यक्तुं न शक्तवानिति भावः । अत्र विशेषानिर्देशादखिला एव भावादयो गृहीताः । "एवं सौरतसंलापैर्भगवान्देवकीसुतः । स्वरतो रमया रेमे नरलोकं विडम्बयन् ॥" इत्यत्र तु विशेषार्थमेव हि संलापशब्दो दत्त इति । आत्मन्यवरुद्धसौरतत्वे हेतुः—अनुरताबलागणः निरंतरमनुरक्तोऽबलागणो यस्मिंस्तद्विधः । तेषां सौरतानामनुरागप्रभवत्वादनुराग एव तत्र कारणं, न तु कामिजनवत्काम इत्यर्थः । यतः सत्यकामः व्यभिचाररहिततादृशाभिलाष इति । एवमेवोक्तं श्रीपराशरवैशंपायनाभ्याम्—"एवं स कृष्णो गोपीनां चक्रे बालैरलंकृतः । शारदीषु सचंद्रासु निशासु मुमुदे सुखी ॥" इति । टीकायां त्वेवमपीत्यादिना स्मरपारवश्याभावमात्रप्रतिपादनाय सौरतशब्दस्य व्याख्यांतरमप्रसिद्धमपि कृतमिति ज्ञेयम् ॥ २६ ॥ ज्ञातशास्त्रतात्पर्योऽपि परीक्षित्स्वनाम्नोऽन्वर्थतां द्योतयंस्तथानभिज्ञश्रोतृसंदेहप्रहाणाय पृच्छति—राजेति । इतरस्य अधर्मस्य । प्रशमाय निवृत्तये । अंशेन बलदेवेन सह । "यदायदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥" इति श्रीमुखोक्तेः । यद्वा—यस्यांशेन जगत् स ईश्वरोऽवतीर्ण इत्यन्वयः । अंशेनश्चासौ जगदीश्वर इति वा ॥ * ॥ अथ परीक्षित्सभोपविष्टानां विविधवासनावतां कर्मिज्ञानिप्रभृतीनां हृदये संदेहं समुद्भूतमालक्ष्य तदुच्छेदार्थं पृच्छति—संस्थापनायेति । इतरस्य अधर्मस्य । यः खल्वंशेन जगदीश्वरो विष्णुर्भवति स स्वयं भगवानपीत्यर्थः । अंशेन बलदेवेन सह ॥ अत्र **तोषिणी**—"वंशीसंजल्पितमनुरतं राधयांतर्द्धिकेलिः प्रादुर्भूयासनमधिपरं प्रश्नकूटोत्तरं च । नृत्योल्लासः पुनरपि रहःक्रीडनं वारिखेला कृष्णारण्ये विहरणमिति श्रीमती रासलीला ॥"एवं सुखविशेषेणैव मुनींद्रेण प्रश्नस्य विस्तार्य च वर्णिताया रासक्रीडायाः श्रवणाद्राज्ञोऽपि तत्रतत्र सुखोद्बोध एव जात इति लभ्यते, न तु रोषदर्शनं वैरस्यापातात् । तस्मात्तत्रत्यानां केषांचित्संदेहं वितर्क्य तेषामेव हितार्थं तमुत्थाप्य स्वसंदेहव्याजेन पृच्छति—संस्थापनायेति त्रिभिः । तत्राद्यद्वयं युग्मकम् । संस्थापनाय लुप्तस्य प्रवर्तनाय, प्रवृत्तस्य च रक्षणायेत्यर्थः । न केवलं तदर्थमेव किं त्वितरस्याधर्मस्य प्रशमाय । सर्ववासनोन्मूलनायेत्यर्थः । अन्यथा धर्मसंस्थापनस्याप्यसिद्धिः स्यात् । हि प्रतिद्धम् । "धर्मसंस्थापनार्थाय संभवामि युगेयुगे" इत्यादिवचनेभ्यः । भगवानिति—तत एव भगवद्भावप्रकटनमपि स्यादिति भावः । अंशेन श्रीबलदेवेन सहेति तत्रतत्राग्रहो दर्शितः । यतो· जगतामीश्वरः प्रतिपालकः । अन्यथा जगन्नाशापत्तिरित्यर्थः । यद्वा—"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति न्यायेन यो जग

स कथं धर्मसेतूनां वक्ता कर्त्ताऽभिरक्षिता ॥ प्रतीपमाचरद्ब्रह्मन्परदाराभिमर्शनम् ॥ २८ ॥
आप्तकामो यदुपतिः कृतवान्वै जुगुप्सितम् ॥ किमभिप्राय एतं नः संशयं छिंधि सुव्रत ॥ २९ ॥

प्रतीपं प्रतिकूलमधर्ममित्यर्थः । आचरत्कृतवान् । न चेदमधर्ममात्रं कलंजभक्षणादिवत्किं तु महासाहसमित्याह । परदाराभिमर्शनमिति ॥ २८ ॥ आप्तकामस्य नायमधर्म इति चेत्तर्हि यद्येवं कामाभावान्निंदितं केनाभिप्रायेण कृतवानिति पृच्छति । आप्तकाम इति ॥ २९ ॥

दीश्वरः स्वयं तु पूर्णैश्वर्ययुक्त इत्यर्थः । तस्यान्यकामना न संभवतीति भावः ॥ २७ ॥ इत्यर्थ इति । धर्मापेक्षयाऽधर्म एव प्रतीप इति भावः । अत्राक्षिपति—न चेति । विषदिग्धबाणहतमृगमांसं कलंजम्[1] । किन्तु अपि तु । हेतुशून्यो धर्मव्यतिक्रमः साहसः । अभिमर्शनम् अविचार्यग्रहणम् । ब्रह्मन्निति वेदमूर्ते इत्यनेन संदेहहरणे सामर्थ्यं सचितम् ॥ * ॥ प्रतीपम् प्रतिकूलमधर्मम् । यदि च स्वैरलीलयैवाचरदित्युच्यते तदा ब्रह्मशापमंगीकृत्य तत्फलं च कदाचिदीश्वरत्वेऽप्यंगीकरोति यथा तथा पापमंगीकृत्य तत्फलमप्यवश्यमंगीकुर्यादित्याक्षेप इत्येकः प्रश्नः ॥ अत्र तोषिणी—स इति । पूर्वत्र यच्छब्दस्याध्याहारादन्वयः । धर्मा एव सेतवः लोकरक्षामर्यादाः । धर्मे वैदिकनिबंधा वा तेषां वक्तृत्वादेव कर्ता । अन्यथा वाक्यव्यवहारयोर्विसंवादेन लोकैरग्राह्यः स्यात् । किंच, अभितो रक्षिता तत्प्रतिरक्षत्वादिना बहुधा संवर्द्धनेन च पालकः । परदाराभिमर्शनरूपं प्रतीपं धर्मसेतूनामेव धर्मसंस्थापनादेर्वा प्रतिकूलम् । ब्रह्मन् हे साक्षाद्वेदमूर्ते प्रतीपाचरणेन वेदातिक्रमात् भवादृशविप्रकुलातिक्रमोऽपि स्यात् । तच्च ब्रह्मण्यदेवस्य तस्यायुक्तत्वमेवेति भावः । यद्वा—ननु तत्कारणं मया कथं ज्ञातुं शक्यमीश्वरचेष्टितत्वादित्याशंक्याह—हे सर्ववेदात्मक, सर्वज्ञत्वादित्यर्थः । अन्यत्तैः । यद्वा—प्रतीपमाचरदिति अधर्ममुक्तवान् कृतवान् अभिरक्षितवांश्चेत्यर्थः । तत्रोक्तिः—‘ मया परोक्षं भजता तिरोहितम् ’ इत्यादिना रहोऽपि परदारान् भजे इत्यनुवादात्, कृतिः—साक्षादेव रमणात्, अभिरक्षा—पुनःपुनराचरणात्, तेन लोके प्रवृत्तिसंभवाच्चेति । स्वयमधर्मकर्तृभ्योऽपि तस्य महानेव दोषबंध आयातः । यद्वा—धर्मं प्रकर्षेण नाशितवान्, अधर्मं च सम्यक् स्थापितवानिति श्लेषेण स्वयं सिद्धांतमप्याह—संस्थापनायेति । धर्मसंस्थापनं नाम सामान्यतः, संस्थापनं तु तत्रैव शुद्धभक्तियोगस्य सर्वातिक्रमितया स्थापनात् “ स्मर्तव्यः संततं विष्णुर्विस्मर्तव्यो न जातुचित् । सर्वे विधिनिषेधास्स्युरेतयोरेव किंकराः ॥ ” इति पाद्मादिशास्त्रेभ्यः । तदवतारस्य तन्मुख्यप्रयोजनत्वञ्चोक्तं कुंतीदेव्या—“ भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः ” इति, ‘ भक्तियोगविधानार्थम् त्वाम् ’ इति टीका च । तद्धि तत्र विनाप्यपदेशं तत्प्रतापेनैव भवति । तथेतरस्य तद्विरुद्धस्य च स्वत एव नाशो भवतीति स तथाभूतोऽसौ परदाराभिमर्षणरूपं कथमाचरत्, अपि तु नैवाचरदिति । कुतः—धर्मसेतूनां सर्वधर्माश्रयभूतानां भक्तियोगभेदानां वक्तृत्वादिहेतोरित्यर्थः । अतो द्विजावतारमुख्यप्रयोजनभक्तिविशेषफलप्रेमविशेषविस्तारणार्थं तासां पतिसेवादिधर्मत्याजने नान्यधर्माद्यनादरो युक्त एवेति भावः । स च ‘ तावत्कर्माणि कुर्वीत ’ इत्यादिवचनात्साधनदशायामपि युक्तः, किमुत तासामिति । यद्वा—स भगवान् जगदीश्वरश्चेत्येव वा प्रतीपत्वे हेतुः । सर्वाशितत्वादंतर्यामित्वाच्चेत्यर्थः । यद्वा—परे परमशक्तिरूपा ये दाराः स्वीयरमणात्तदभिमर्षणमपि कथं प्रतीपमाचरत्, अपि तु नैवेत्यर्थः । यतो भवद्भिरेवोक्तम्—‘ कृष्णवध्वः ’ इति ॥ २८ ॥ परिहरति—आप्तकामस्येति । यद्येवमाप्तकामत्वं तस्य तर्हि आप्तकामत्वे निंदिताचरणमनुचितमिति कोऽभिप्रायो यस्य स किमभिप्रायः । किमाशयवानित्यर्थः । एतम् आप्तकामत्वे निंदिताचरणरूपम् । न इति तत्रत्यसमाजापेक्षया बहुत्वम् । सुव्रतेति । ब्रह्मचर्यनिष्ठोऽपि मत्कृपया ब्रूहीति संबुद्ध्यभिप्रायः ॥ * ॥ परमेश्वरस्य नायमधर्म इति चेत्, निंदितमिदं केनाभिप्रायेण चकारेति पृच्छति—आप्तकाम इति । तेन स्वकामपूरणार्थमिदं कृतवानिति प्रत्युत्तरं न दातव्यमिति भावः । अवतारेस्मिन्नेतादृशं जुगुप्सितमेव कर्तव्यमिति चेदत आह—यदुपतिरिति । परमधार्मिकाणां यदूनां पतिस्तर्हि कथमभूदिति भावः । न इति—न तु केवलस्य ममात्र संशयोऽस्तीत्यर्थः । तस्याप्तकामत्वेऽप्या

---

१ एतत्कलंजभक्षणे विषदिग्धबाणहतत्वेनाऽधर्मैतरविकारस्यापि सम्भवोऽतो ‘न कलंजं भक्षयेत्’ इत्यत्रेवात्रापि तत्कन्दग्रहणमिति श्रीधराभिप्रायः प्रतिभाति ।

श्रीशुक उवाच ॥ धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ॥ तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥ ३० ॥
नैतत्समाचरेज्जातु मनसाऽपि ह्यनीश्वरः ॥ विनश्यत्याचरन्मौढ्याद्यथा रुद्रोऽब्धिजं विषम् ॥ ३१ ॥

परमेश्वरे कैमुतिकन्यायेन परिहर्तुं सामान्यतो महतां वृत्तमाह । धर्मव्यतिक्रम इति । साहसं च दृष्टं प्रजापतींद्रसोमविश्वामित्रादीनां तच्च तेषां तेजस्विनां दोषाय न भवतीति ॥ ३० ॥ तर्हि 'यद्यदाचरति श्रेष्ठः' इति न्यायेनान्योऽपि तत्कुर्यादित्याशंक्याह । नैतदिति । अनीश्वरो देहादिपरतंत्रः । यथा रुद्रव्यतिरिक्तो विषमाचरन् भक्षयन् ॥ ३१ ॥

त्मारामत्वेऽपि प्रेमाऽऽनन्दस्वरूपाभिस्ताभिः सोत्कण्ठं रमणं युज्यत एवेति ज्ञातप्रायरहस्यसिद्धान्तत्वादिति भावः । सुव्रतेति । सदाचारपरायणस्य तवाप्यस्यामेव लीलायामत्यावेशदर्शनादेते संशेरत इति भावः ॥ अत्र **तोषिणी**—यदुपतिरिति । कृततादृशाकर्तव्यश्चेत्परमधार्मिकाणां यदूनां पतिरपि न स्यात् । एतमिति । कुत्राप्यन्यः संशयो नास्तीत्यर्थः । न इति बहुत्वं संदेहे वर्गाभिप्रायेण । संशयम् प्रा (आ) प्तशिरोमुकुटाचरितत्वशास्त्रविरुद्धत्वाभ्यां चित्तदोलनम् । सुव्रत हे ब्रह्मचर्यादिनिष्ठ इति भवादृशामाचरितविरुद्धं तत्तु जुगुप्सितमेवेति । यद्वा—हे सदाचारनिविष्टेति । अन्यथा भवदादिसंमतसदाचारलोप इति भावः । श्लेषपक्षे, यदूनां भक्तानां पतिरिति भक्तकृपया कदाचिद्धर्मातिक्रमार्होऽपीत्यर्थः । जुगुप्सितं किं कृतवान् अपि तु नैव, किन्तु भक्तवर्गसंमतमेवाकरोदित्यर्थः । कुतः—आप्तः लब्धः कामो रासक्रीडादिना निजप्रेमभक्तिविस्तारणमनोरथो येन सः । सर्वसाध्यतमप्रेमभक्तिप्रवर्तनेन निंदितानाचरणात्, प्रत्युत तेन साधुवर्गसंतोषणादेरित्यर्थः । तथापि नः संशयमिति सांजलिकरचालनेन तत्रत्यसंदिहानवर्गाभिप्रायेण, तच्च विनयेन । प्राय इति तत्र केषांचिच्छास्त्रतत्त्वविदां भक्तिपराणां सद्रसाभिषिक्तानां प्रेमभक्तिरसमयतदीयरासक्रीडादौ संशयांतराभावात् । अतोऽनवहितानामेवात्रत्यानां केषांचिद्धितार्थमेव मया पृच्छयते, । न च निजसंदेहादिति भावः । तस्मादभि अभयं यथा स्यात्तेभ्यो भयमकृत्वा तेषां संशयशृंखलां छिन्द्धीत्यर्थः । सुव्रत हे भक्त्यैकनिष्ठ ॥ २९ ॥ साहसं परिहर्तुम अपाकर्तुम् । सामान्यतः साधारण्येन । ईश्वराणाम् योगैश्वर्यवताम् । साहसम् शास्त्रविरुद्धाचारः । प्रजापतेर्ब्रह्मणो दुहित्रनुगमनम्, इन्द्रस्याहल्यागमनम्, सोमस्य गुरुस्त्रीतारागमनम्, विश्वामित्रस्याभक्ष्यमांसाशनप्रवृत्तिः । आदिना सप्तर्षीणां शवभक्षणोद्योगः, अजीगर्तस्य पुत्रविक्रयः, पराशरस्य दासकन्यासंगश्च ग्राह्यः । तच्च साहसम् । तेषाम् प्रजापत्यादीनाम् । तेजीयसामिति हेतुगर्भितविशेषणम्—तपआदिप्रभावोद्भूततेजसा साहसस्य दग्धत्वाद्दोषाय पापाय नेति । "तेजो बले प्रभावे च ज्योतिष्यर्चिषि रेतसि । नवनीते नले दुर्गे" इति यादवः । तत्रोपयोगिदृष्टान्तमाह—वह्नेरिति । न हि गोब्राह्मणादिशरीरामेध्यदाहेनाग्नेर्ब्रह्महत्यादिदोषो भवति तेजस्वित्वादिति भावः ॥ * ॥ कृतस्याप्यधर्मस्य फलमीश्वराणामपि न भवेत्किमुत परमेश्वरस्य तस्येति प्रथमप्रश्नोत्तरमाह—धर्मेति षड्भिः । ईश्वराणां रुद्रादीनामपि धर्मव्यतिक्रमोऽधर्मो दृष्टः । साहसं साहसहेतुक इत्यर्थः । न दोषाय न प्रत्यवायाय, वह्नेर्यथा सर्वभुक्त्वं न दोषाय नापावित्र्याय तद्वदित्यर्थः ॥ अत्र **तोषिणी**—सहजकृपालुतया शिष्यस्नेहापेक्षया वा तदीयाक्षेपाभासपरिहारपूर्वकं श्लेषदर्शिततदीयसिद्धांतांतरमेव परिहरति—धर्मेति सप्तभिः । ईश्वराणाम् कर्मादिपारतंत्र्यरहितानाम् । तेषां धर्मव्यतिक्रमो यद्दृष्टः यथा ब्रह्मादीनां दुहितृकामनादौ, तथा साहसं निर्भयता च यद्दृष्टं तथा बृहस्पतेरुतथ्यपत्नीगमनादौ तत्तच्च तेजीयसां तेषां न दोषाय प्रत्यवायाय । तत्र दृष्टान्तः सर्वभुजो वह्नेर्यथा सर्वभुक्त्वं न दोषाय नापावित्र्याय तद्वदित्यर्थः ॥ ३० ॥ तत्राक्षिपति—तर्हीति । अन्यः अतेजीयान् । एतत् साहसम् । जातु मनसापि किमुत कायेन । विनश्यति समूलं छिन्नो भवति । मौढ्यात् अज्ञानात्क्रोधाद्युद्रेकतो वा । 'नश्यत्याश्वाचरन्' इति पाठस्तु विजयध्वजोक्तः । तत्राशु पानोत्तरक्षणमेव, न तु विलंबेनेत्यर्थः ॥ * ॥ तर्हि 'यद्यदाचरति श्रेष्ठः' इति न्यायेनान्योऽपि कुर्यादित्याशंक्याह—अनीश्वरः निकृष्टो यथा रुद्रव्यतिरिक्तः विषमाचरन् भुंजानः सद्यो विनश्यति । रुद्रस्तु—भुक्त्वा प्रत्युत नीलकंठत्वेन शोभते स्मेति भावः ॥ अत्र **तोषिणी**—तर्ह्यन्येषां का वार्ता तत्राह—नैतादिति । एतत् धर्मव्यतिक्रमादिसयमीश्वराचरितम् न सम्यगाचरेत् सम्यगित्यस्य निषेधे तात्पर्यात् । एकांशेनापि नाचरेदित्यर्थः । जातु कदाचिदपि । तत्र च न मनसापि किमुत

ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित ॥ तेषां यत्स्ववचोयुक्तं बुद्धिमांस्तत्समाचरेत् ॥ ३२ ॥
कुशलाचरितेनैषामिह स्वार्थो न विद्यते ॥ विपर्ययेण वाऽनर्थो निरहंकारिणां प्रभो ॥ ३३ ॥

**कथं तर्हि सदाचारस्य प्रामाण्यमत आह । ईश्वराणामिति । तेषां वचः सत्यमतस्तदुक्तमाचरेदेव आचरितं तु क्वचित्सत्यमतः स्ववचोयुक्तं तेषां वचसा यद्यद्युक्तमविरुद्धं तत्तदेवाचरेत् ॥ ३२ ॥ ननु तर्हि तेऽपि किमेवं साहसमाचरंति तत्राह । कुशलेति । प्रारब्धकर्मक्षपणमात्रमेव तेषां कृत्यं नान्यदित्यर्थः ॥ ३३ ॥**

वाचा कर्मणा वा । हि निश्चये । विशेषेण समूलतया लोकद्वयदुःखित्वादिप्रकारेण नश्यति । मौढ्यादीश्वराणामैश्वर्यमात्मनश्चासामर्थ्यं ज्ञात्वेत्यर्थः । इति भक्षणे मौढ्यमेव हेतुरुक्तः, अन्यथा भक्षणाप्रवृत्तिः स्यात् । अब्धिजम् कालकूटम्, अतिपरमतीक्ष्णतया सद्य एव विनाशोऽभिप्रेतः । ईश्वरस्तु न नश्येदेव, प्रत्युत ऐश्वर्यविशेषप्रकाशादिना शोभते, यथा नीलकंठत्वादिना शिव इति भावः ॥ ३१ ॥ पुनराक्षिपति—कथमिति । सदाचारस्य सद्भिराचरितस्य । अतोऽत्राक्षेपे । समाधानमाह—ईश्वराणामिति । सत्यम् परमार्थत्वेनाभीष्टदम् । अतः सत्यत्वात् । तदुक्तम् ईश्वरोक्तम् । वचस एव सत्यत्वे "कुर्याद्विद्वांस्तथा सक्तश्चिकीर्षुर्लोकसंग्रहम्" इति विधानस्य का गतिस्तत्राह—आचरितं तु क्वचिदिति । हास्यादिनिवृत्त्यर्थं क्वचिदिति । वैदिकमार्गप्रदर्शनार्थं यदाचरणं तत्सत्यमेव, अतः क्वचित्सत्यत्वादेव स्ववचो युक्तं स्वशब्देनेश्वरग्रहस्तथैव विगृह्णाति—तेषामीश्वराणां वचसा वचनेन वेदरूपेण यद्यदाचरणं युक्तमविरुद्धं तत्तदाचरणमीश्वराणामपि कुर्यादित्यर्थः । यद्वा—तेषामीश्वराणां यत्स्ववचः स्ववचनं युक्तं वेदाविरुद्धं, विद्वांस्तदा चरेत्तत्स्वीकुर्याद्वेदविरुद्धं तु भक्तपरतंत्रतयेश्वरस्यान्यथाचरणमपि कदाचिद्भवति तन्न ग्राह्यमिति भावः । अत एवोक्तं देवलबौधायनकौशिकैः—"कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा । नाचरेत्तानि कर्माणि श्रुत्वा वापि न कुत्सयेत् ॥ तदुक्तं तु सदा कार्यमाम्नायानुगतं यदि । स्मृतेर्वेदविरोधित्वे परित्यागो यथा भवेत् ॥ तथैव लौकिकं वाक्यं स्मृतेर्बाधात्परित्यजेत् । वैदिकस्य परित्यागात्प्रायश्चित्ती भवेन्नरः ॥ लौकिकं तु परित्याज्यमीश्वरोक्तं भवेद्यदि । यद्वेदेन विरुद्धं स्यान्न ततः किल्बिषी पुमान् ॥" इति निर्णयसुधाकरादौ बहुधा वर्णितमित्युपरम्यते । किञ्च—"अतर्क्याः खलु ये भावा न तांस्तर्केण योजयेत्" इति श्रुतेरपीश्वराणामचिन्त्यभावत्वात्तत्र तर्कोऽकिंचित्कर एवात ईश्वरे श्रुत्या तर्को निषिद्ध इति ॥ * ॥ कथं तर्हि सदाचारस्य प्रामाण्यमत आह—ईश्वराणामिति । सत्यम् सद्भ्यो हितम् । क्वचित् दशरथपुत्रत्वे सतीत्यर्थः । तस्मादियं व्यवस्थेत्याह—स्ववचोयुक्तम् अविरुद्धम् तदेवाचरेत् । बुद्धिमानिति—तत्रापि विचार्यैव "तदसौ वध्यतां पाप आततायात्मबंधुहा" इति भगवतो वचोप्यर्जुनेनाश्वत्थामवधविधायकं न पालितमिति ॥ अत्र **तोषिणी**—वच आज्ञा । सत्यम् प्रमाणत्वेन ग्राह्यं स्ववचनेनाविरुद्धमिति । तेषामेव तथा विचारादाज्ञाया बलवत्तरत्वं व्यंजितम् । बुद्धिमानिति—तत्तद्विचार्येत्यर्थः । अन्यथा निर्बुद्धिरेवेति भावः ॥ ३२ ॥ पुनरीश्वरेष्वाक्षिपति—नन्विति । तेऽपि ईश्वरा अपि । तत्र ईश्वरसाहसे । तेषाम् ईश्वराणाम् । ईश्वरशब्दार्थस्तूक्त एव । इत्यर्थ इति—प्रारब्धप्रतीक्षका एव विद्वांसो न तु कर्मासक्ताः किंचित्कुर्वंतीत्याशयः । श्लोकार्थस्तु—कुशलानां तपोदानयज्ञादीनामाचरितेन करणेनार्थः प्रयोजनं स्वर्गादिसुखं नास्ति । विपर्ययेण परस्त्रीसंगसुरापानादिनाऽनर्थो नरकादिलक्षणो न । निरहंकारिणामिति हेतुगर्भं विशेषणम्, निरहंकारित्वादित्यर्थः । अहंकारः कर्मस्वासक्तिः स एव बंधकारणम्, तेषामनासक्तत्वाद्बंधो नास्तीत्याशयः ॥ * ॥ ० ॥ अत्र **तोषिणी**—चेकारादमुत्रापि[1] । वाशब्दः समुच्चये । अनर्थोऽपि नास्ति । कुतः—निरहंकारिणाम् अहंकारिभ्यो व्यतिरिक्ता



---

१ इह चार्थो नेति पा० ।

**किमुताखिलसत्त्वानां तिर्यङ्मर्त्यदिवौकसाम् ॥ ईशितुश्चेशितव्यानां कुशलाकुशलान्वयः ॥३४॥ यत्पादपंकजपरागनिषेवतृप्ता योगप्रभावविधुता खिलकर्मबंधाः ॥ स्वैरं चरंति मुनयोऽपि न नह्यमानास्तस्येच्छयाऽऽत्तवपुषः कुत एव बंधः ॥३५॥ गोपीनां तत्पतीनां च सर्वेषामेव देहिनाम् ॥ योंतश्चरति सोऽध्यक्षः क्रीडनेनेह देहभाक् ॥ ३६ ॥**

प्रस्तुतमाह । किमुतेति । कुशलाकुशलान्वयो न विद्यत इति किं पुनर्वक्तव्यमित्यर्थः॥ ३४ ॥एतदेव स्फुटीकरोति । यस्य पादपंकजपरागस्य निषेवो निषेवणं तेन तृप्ताः।यद्वा। यस्य पादपंकजपरागे निषेवा नितरां सेवा येषां ते तथा ते च ते तृप्ताश्चेति भक्ता इत्यर्थः । तथा ज्ञानिनश्च न नह्यमाना बंधनमप्राप्तवंतः ॥ ३५ ॥ परदारत्वं गोपीनामंगी

नाम् । अहंकाराभावेन कर्मभिरलेपादित्यर्थः । प्रभो हे बोद्धुं समर्थ । यद्वा—तस्यापीश्वरत्वाभिप्रायेण संबोधयति—हे ईश्वरेति ॥ ३३ ॥ प्रस्तुतम् प्रकृतम् । तिर्यङ्मर्त्यदिवौकसाम् पशुपक्ष्यादिनरदेवानां सर्वेषा मीशितव्यानां नियम्यानाम् । ईशितुः नियामकस्य । कुशलाकुशलान्वयः पुण्यपापफललेपः । इत्यर्थ इति—यदि तत्कृपाकटाक्षावाप्तज्ञाननिर्गताहंकाराणां कुशलाकुशलफलसंबंधो न तर्हि सर्वनियन्तुर्भगवतः कथं स भवेदि त्यर्थः ॥ * ॥ प्रस्तुतमाह—किमुतेति ॥ अत्र **तोषिणी**—यद्येवमहो तेषां निरहंकारतामात्रेणैवानर्थाभावस्तर्हि तेषामपि हितार्थमवतीर्णस्य परमेश्वरस्य कुतोऽनर्थशंकापीति कैमुत्येनाह—किमुतेति । तिर्यगादयः क्रमेण तामसराजससात्त्विकाः । ईशितव्यानाम् स्वभावत एव नियम्यानाम्, इति मुक्तानामपि तदधीनता सूचिता । त्वर्थे चकारः । ईशितव्यानां कुशलाकुशलाभ्यां पुण्यपापाभ्यां योऽन्वयः संपर्कः स किमुत सुतरामेव न विद्यत इति पूर्वेणान्वयः । सर्वनियंतृत्वेन नियामकाभावात् । एतदेव हि परमेश्वरत्वं नामेति भावः । " बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे " इत्यमरः ॥ ३४ ॥ एतदेव कैमुत्यमेव । स्फुटीकरोति प्रकटयति । " तस्य ते पादसंस्पर्शो मम भूयादहर्निशम् " इत्याद्युक्तेर्भगवत्सेवायां पशुमृते तृप्तेरश्रवणादस्त्रारस्यादर्थांतरमाह—यद्वेति । ते च तृप्ता हरिसेवामृतेऽन्यविषयेषु प्राप्तालंबुद्धयः । इत्यर्थ इति—" अतृप्नुमः क्षुल्लसुखावहानामृते वयं कृष्णकथामृतौघात् " इत्याद्युक्तेरित्यर्थः । मुनयो मननशीला ज्ञानिनश्च । तथा भक्तवत् । बंधनम् पुत्रादिषु स्नेहादिरूपं कर्मजन्यं वा । स्वैरं निर्बंधाः । इच्छया निजया भक्तानां वा । स्वीकृतमूर्तेस्तस्य श्रीकृष्णस्य बंधहेत्वासत्त्यादेरभावाद्बंधशंकैव नोदेतीत्यर्थः ॥ * ॥ तद्भक्ता अपि धर्माधर्माभ्यां न बध्यन्तेऽतः—यदिति । निसेवो नितरां सेवनं, योगो भक्तियोगस्तत्प्रभावेण विधुतोऽखिलानां स्वद्रष्टॄणामपि कर्मबंधः किमुत स्वस्य, यैस्ते मुनयो मननशीला भक्ता अपि न नह्यमाना बंधनमप्राप्नुवंतः, तस्य तु निरंकुशाया स्वेच्छयाऽऽत्तानि स्वीकृतानि वपूंषि परस्त्रीशरीराणि येन तस्य ॥ अत्र **तोषिणी**—तदेव कैमुत्यान्तरेण स्फुटं दर्शयति—यदिति । यत्तदोरन्वयाद्योगप्रभावेत्यादेरपि तदंतःप्रवेशाद्यदिति यस्येत्यर्थः । सुब्लुक्छांदसः । यद्यस्य पादपंकजयोः परागाणां कांतिपरमाणूनां नितरां सेवनेन ध्यानरूपेणानुशीलनेन तृप्ता अन्यत्रालंबुद्धयः। तत्प्रेमपूर्णा इत्यर्थः । यस्यैव योगप्रभावेण भक्तियोगाख्यसाधनतेजसा विधुताखिलकर्मबंधा ये ते चापि मुनयः स्वैरं स्वच्छंदं यथा स्यात्तथा चरंति विहितमविहितमपि कुर्वन्ति, तत्र नह्यमानाश्च न भवन्ति तस्मात्तस्य कुत एव बन्धः । अपि तु नास्त्येव बंध इत्यर्थः । तदेवं कैमुत्येन दर्शयित्वा विशेषणविशेष्यादपि तस्य बंधाभावं दर्शयति—इच्छयेति । इच्छया इच्छामात्रेण न तु जीववत्कर्मपारवश्येनात्तं तद्भक्तिसंबंधात् प्रपञ्चेप्यानीतं वपुर्येन तस्येति । अतो भक्तविशेषानुग्रहाय दुर्वाससः पराभावनावत्क्वचिन्मर्यादामप्यसौ लंघयतीति भावः ॥ ३९ ॥ वस्तुतो गोपीनां परदारत्वं नास्ति गांधर्वविधानेन परिणीतत्वात्, तथापि निर्बंधेन तद्दृह्यमाणं प्रति 'तुष्यतु दुर्जनः' इति न्यायेन तदंगीकृत्य स्वीकृत्य परिहृतम्—'यत्पादपंकज' इत्यादिनोत्तरितम् । परमार्थविचारे भगवतः पारदार्यं नायातीत्याह—इदानीमिति । न काचित् न किंचिदिति । योंतर्यामी स कृष्ण एव । क्रीडनेन

**कृत्य परिहृतमिदानीं भगवतः सर्वांतर्यामिणः परदारसेवा नाम न काचिदित्याह । गोपीनामिति । योंतश्चरत्यध्यक्षो बुद्ध्यादिसाक्षी स एव क्रीडने न देहभाङ्न त्वस्मदादितुल्यो येन दोषः स्यादिति सर्वात्मनि स्वपरभेदो न संभवतीति भावः ॥ ३६ ॥**

लीलया हेतुना । इह जगति । देहभाक् आविष्कृतदेहः ॥ * ॥ तत्तद्दृष्ट्या तु सर्वांतर्यामिणो भगवतो न केऽपि परे इत्याह—गोपीनामिति । योन्तश्चरति तस्य बहिरालिंगने को दोष इति भावः । अध्यक्षो बुद्ध्यादिद्रष्टा । तस्य रहस्यबहिर्सान्त्रदर्शने को दोष इति भावः । इह व्रजमंडले । क्रीडनेन हेतुना । देहान् गोपीशरीराणि । भजते रतिश्रमप्रस्वेदाम्बुमार्जनादिना सेवते ॥ अत्र **तोषिणी**—तदेवं गोपीनां परदारत्वमंगीकृत्यापि दोषः परिहृतः । तत्र च सति कुलटात्वं जारत्वं नापयाति । तन्नाम खलु धिक्काराय परपर्य्यवस्यतीति तदसहमानस्तासां तत्परदारत्वमेव खंडयति—गोपीनामिति । तैर्व्याख्यातम् । तत्र बुद्ध्यादिसाक्षी परमात्मेत्यर्थः । अतो न तस्य परो नाम कश्चिदिति, के वा परदारा इति भावः । ननु स तु निराकार इति श्रूयते, तस्मादाकारवत्त्वादस्मदादितुल्य एवासौ न तत्राह—स एवेति । एव शब्दोयं चैवेत्यस्मादाकृष्टः । अत्र च शब्दः क्वचिन्नास्ति । क्रीडनेन स्वैरं तदिच्छयैव न तु कर्मवशत्वेन देहभाक् । तदुचिते देशे तदुचिते निजदेहे प्रवर्तक इत्यर्थः । अंतर्यामितायामकारापेक्षाया अभावादेव निराकारत्वं तत्रोच्यते, न वस्तुतः "केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्" इति द्वितीयस्कंधोक्तेरिति भावः । न त्विति—न त्वस्मदादिजीववत्परस्परमनात्मकर्मवशश्चेत्यर्थः । 'एष क्रीडनदेहभाक्' इति, 'क्रीडनेनेह देहभाक्' इति च पाठः । अथ वा—यो गोप्यादीनां सर्वेषामपि तत्तद्योग्यताप्रदेशेन परमात्मरूपेणांतश्चरति स एवाध्यक्षस्तदधिष्ठाता । 'गोप्यः किमाचरत्' इत्यादिना, 'कात्यायनि महामाये' इत्यादिना, 'अपि बत मधुपुर्याम्' इत्यादिना च व्यंजिततादृशममतामयभावविशेषाणां तासां तु पतिरूप एवाध्यक्ष इत्यर्थः । ननु कथं परमात्मरूपेण क्रीडति, कथं चानेन रूपेण क्रीडति, तत्राह— एष बहिः प्रकटरूप एव स श्रीकृष्णस्तादृशक्रीडासाधनं देहं भजते, नित्यमेवाश्रयति न त्वन्तस्थः परमात्मरूप इति । पाठांतरे इह बहिः प्रकटरूपत्व एवेत्यादि योज्यम् । एवमुत्तरत्रापि । तदेवमंतर्यामित्वपक्षे स्वदारत्वस्यातिव्याप्तिपरिहाराय किंचिदन्यदाहार्य्य व्याख्यातं, तथापि विण्मूत्रपरिपूरितदेहासु 'त्वक्श्मश्रुरोमकेश—' इत्यादिरुक्मिणीवाक्यानुसारेण विशुद्धसत्त्वव्यक्तविशेषमयपरमज्योतिर्देहस्य तस्य प्रवृत्तिस्तज्जुगुप्सितत्तामेवावगमयति, न तु "भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेत्" इत्यनुसारेण रोचमानताम् । अत एवांतर्गृहगतानां कासांचिदसिद्धदेहानां तद्देहपरित्याजनञ्च निर्दिश्यते । न च सैरंध्र्यादावपि तत्प्रवृत्तिदर्शनादन्यथा मन्तव्यम् । "मुकुन्ददर्शनात्सद्यो बभूव प्रमदोत्तमा" इति । तत्स्पर्शादिना स्पर्शमणिलोहवृत्तांतवद् ध्रुवदेहवच्च तद्योग्यदेहलक्षणप्रमदोत्तमात्वं प्राप्य तत्क्रीडनयोग्यता तत्र जातेति गम्यते । न चासामपि तादृशत्वं मंतव्यम् 'ताभिर्विधूत—' इत्यादौ 'ताभिरेव प्रत्युतासावधिकं व्यरोचत' इत्युक्तत्वात् । किञ्च, 'नायं श्रियोंग—' इत्यादौ श्रीतोपि स्वर्योषिद्भ्योऽपि पराभ्योऽपि सर्वांगनाभ्योऽर्हत्तमत्त्वं परत्वं चासां लभ्यते । यतः साधिक्षेपमुक्तम्—'कुतोन्याः' इति । तस्मादासां विलक्षणत्वावगमाद्विलक्षणत्वेनैव व्याख्यांतरं कर्तव्यम् । तथाहि—गोपीनां तद्विशेषाणामासां तथा तत्पतीनां संप्रति तासां पतित्वेन प्रतीतानां तथा सर्वेषामपि गोपगवादीनां देहिनाञ्च योंतर्मध्ये चरति 'जयति जननिवासः' इति दृष्ट्या, 'अहोभाग्यमहोभाग्यम्' इति रीत्या, "योऽसौ गोषु तिष्ठति योऽसौ गाःपालयति" इति तापनीश्रुत्या च तन्मध्ययोग्यक्रीडाभिर्नित्यमेव क्रीडति, स कृष्णोऽध्यक्षः प्रत्यक्षः प्रापञ्चिकानां प्रकटस्सन्नपि चरति तत्तद्योग्यमेव क्रीडति । उभयथापि क्रीडायां हेतुः—एष श्रीकृष्णः क्रीडाशीलः श्रीगोपालवपुः प्रकाशनशील इति । यद्वा—स एव प्रापञ्चिकप्रत्यक्षः सन्नपि क्रीडनदेहान्स्वक्रीडाहेतुविग्रहान् गोप्यादीनांस्तानेव भजन् क्रीडति । पाठांतरेपि क्रीडनेनोपलक्षितांस्तद्रूपान् देहानिति । तदेवं तथैव नित्यविहारात्तासां तन्नित्यप्रेयसीत्वम् । ततस्तत्पतिसदेहत्वं च दर्शितम् । तत्र परसंबंधवर्णनेन संदेहं प्रकटयंत्यां प्रकटलीलायामपि सुस्वावेशात्स्पष्टमेवोक्तं तासु तद्रूपत्वं स्वयं श्रीशुकदेवेन—'अधोक्षजप्रियाः' इति, 'भगवत्प्रियाः' इति 'कृष्णवध्वः' इति च । तापिन्यां दुर्वाससा ताः प्रत्येव च—"योऽसौ गोषु तिष्ठति" इत्यादौ 'स वो हि स्वामी भवति' इति परमसंबंधवर्णनेन संदेहरहितायामप्रकटलीलायां कैमुत्ये तदेव निर्णीतं श्रीमदष्टादशाक्षरपटले श्रीब्रह्मणा स्वसंहितायाम्—"आनंदचिन्मयरसप्रतिभाविताभिस्ताभिर्य एव निजरूपतया कलाभिः । गोलोक एव निवसत्यखिलात्मभूतो गोविंदमादिपुरुषं तमहं भजामि ॥" इत्यत्र कलात्वेन निजरूपत्वे प्राप्तेऽपि प्रकटलीलागतपरकीयत्वे संदेहनिरासार्थं निजरूपतयेति । एतदेव चोपक्रमोपसं

**अनुग्रहाय भूतानां मानुषं देहमास्थितः ॥ भजते तादृशीः क्रीडा याः स्मृत्वा तत्परो भवेत् ॥ ३७ ॥**

**नन्वेवं चेदाप्तकामस्य निंदिते कुतः प्रवृत्तिरित्यत आह । अनुग्रहायेति । तत्परो भवेत् भगवति तत्परचित्तो भवेत् । शृंगाररसाकृष्टचेतसोऽतिबहिर्मुखानपि स्वपरान्कर्तुं तादृशीः क्रीडा बभाजेति भावः ॥ ३७ ॥**

हारयोस्तासु लक्ष्मीत्वस्य तास्मिन्परमपुरुषत्वस्य निर्देशेन तथैव निर्धारितम् । तत्र 'चिन्तामणिप्रकरसद्मसु' इत्यादौ ' लक्ष्मीसहस्रशतसंभ्रमसेवमानम् ' इत्युपक्रमः । 'श्रियः कान्ताः कान्तः परमपुरुषः' इत्युपसंहारः । तत्र चान्यत्र च साक्षाद्गोपीशब्दप्रधानाः श्रीमदष्टादशाक्षरप्रमुखमंत्राश्च तथैव वदंत आसते । तथा च तत्तन्मंत्रव्याख्यायां गौतमीयतंत्रे तत्तन्मंत्रद्रष्टारः श्रीदेवर्षिचरणास्तत्प्रधानाः श्रीभगवतो नामधेयं बहिरंगदृष्टीनां प्रवृत्त्यर्थं रूढिमपि परित्यजन्तः सर्वेश्वरत्वं मायास्वरूपशक्त्योर्वैभवभेदेन द्विधा निरुच्य तद्ध्यानगततदंतरंगप्रेयसीभक्तानां प्रवृत्त्यर्थं श्रीगोपालमूर्तेस्तस्य श्रीगोपालीपतित्वमेवाश्रितरूढितया तत्राप्युत्तरपक्षतया पर्यवसायितवंतः । तत्र चैवकारेण प्रकटलीलाप्रसिद्धमौपपत्यं निराकृतवन्तः । यथा—"गोपीति प्रकृतिं विद्याज्जनस्तत्त्वसमूहकः । अनयोराश्रयत्वेन कारणत्वेन चेश्वरः ॥ सांद्रानंदपरं ज्योतिर्वल्लभेन च कथ्यते । अथ वा गोपीप्रकृतिर्जनस्तदंश मंडलम् ॥ अनयोर्वल्लभः स्वामी भवेत्कृष्णाख्य ईश्वरः । अनेकजन्मसिद्धानां गोपीनां पतिरेव वा । नंदनंदन इत्युक्तस्त्रैलोक्यानंदवर्धनः ॥ " इति । अत्रानेकजन्मसिद्धानामिति "बहूनि मे व्यतीतानि जन्मानि तव चार्जुन" इतिवत्तासामनादिकल्पपरंपराप्राप्तश्रुतिपुराणतंत्रादिप्रसिद्धावतारित्वमेव व्यनक्ति । तस्माद्वस्तुतः परदारत्वमेव नास्तिं किमुतायोग्यत्वमिति भावः॥३६॥अत्राशंकते—नन्विति । एवं चेत् निःस्पृहस्यापि स्वेच्छाविग्रहांगीकारेपि । निंदिते लीलातात्पर्यानभिज्ञपुरुषगर्हिते परदारविनोदे । इत्यत इत्यत्र ।तादृशीः शृंगारिजनानंददा रासादिरूपाः या लीलाः । स भगवानेव परः परायणं यस्य स तथा । इति भाव इति—भगवदवतारस्य सर्वलोकहितार्थत्वेन शृंगारिणोऽपि सर्वांतर्गता एव तदुद्धर्तुमेव भगवतः परिपूर्णकामस्य रासलीलादौ प्रवृत्तिः "भवेऽस्मिन्क्लिश्यमानानामविद्याकामकर्मभिः। श्रवणस्मरणार्हाणि करिष्यन् " इति प्रथमस्कंधोक्तेः ॥*॥ जुगुप्सितं किमभिप्रायं कृतवानिति प्रश्नस्योत्तरमाह—अन्विति।भक्तानामनुग्रहाय तादृशीः क्रीडा भजते, याः श्रुत्वा मानुषं देहमाश्रित्य जीवस्तत्परस्तद्विषयकश्रद्धावान्भवेदिति क्रीडांतरतो वैलक्षण्येन मधुररसमय्या अस्याः क्रीडायास्तादृशी मणिमंत्रमहौषधीनामिव का चिदतर्क्या शक्तिरस्तीत्यवगम्यते।तथैव मानुषदेहवत एव तद्भक्तावधिकारित्वं मुख्यमभिप्रेतम्॥अत्र **तोषिणी**—नन्वाप्तकामस्य कुतः क्रीडायां प्रवृत्तिः कुतस्तरां वा बहिर्दृष्ट्या लोकावगीते तस्मिन्नित्यत आह—अन्विति।भक्तानामनुग्रहाय " सद्भक्तानां विनोदार्थं करोमि विविधाः क्रियाः " इति पद्मपुराणीयभगवद्वचनात् । मानुषं नराकारमाश्रितः ब्रह्मरूपेण सर्वाश्रयोपि स्वयमाश्रयं कृतवानिति तस्य परब्रह्मस्वरूपस्य परमाश्रयत्वं च दर्शितम् । एतदुक्तम्—" दशमे दशमं लक्ष्यमाश्रिताश्रयविग्रहम् " इति । तथा च श्रीभगवदुपनिषदः—" ब्रह्मणो हि प्रतिष्ठाहम् " इति । आस्थित इति पाठेऽप्यादरविषयः कृत इति स एवार्थः । स्वेच्छया मानुषं देहमधुनैव विरचय्याश्रित इति व्याख्यातुं न घटते, परत्र तत्र लोकेऽधिष्ठातृत्वेन कृष्णाख्यनराकारपरब्रह्मणः श्रीगोपैरनुभूतत्वात् । एवं भक्तानुग्रहार्थं तत्क्रीडेत्यभिप्रेतम् । आप्तकामत्वेपि भक्तानुग्रहो युज्यते विशुद्धसत्वस्य तथा स्वभावात् । यद्वा वभाविते चान्यत्र दृश्यतेऽसौ तथा रहूगणानुग्राहके श्रीजडभरतचारिते यथा वा भवदनुग्राहके मयीति च, तत्र भक्तशब्देन व्रजदेव्यो व्रजजनाश्च सर्वे कालत्रयसंबंधिनोऽन्ये च वैष्णवा गृहीताः । व्रजदेवीनां पूर्वरागादिभिर्व्रजजनानां जन्मादिभिरन्येषां च तत्तद्दर्शनश्रवणादिभिरपूर्वत्वस्फुरणात् । अत एव तादृशभक्तप्रेमसंगेन तादृशीः सर्वचित्ताकर्षणीः क्रीडा भजते, याः साधारणीरपि श्रुत्वा भक्तेभ्योऽन्योपि जनस्तत्परो भवेत्, किमुत रासलीलारूपामिमां श्रुत्वेत्यर्थः । वक्ष्यते च—'विक्रीडितं व्रजवधूभिरिदं च विष्णोः' इत्यादि । यद्वा—मानुषं देहमाश्रितस्सर्वोपि जीवस्तत्परो भवेदिति मर्त्यलोके भगवदवतारात्तथा भजने मुख्यत्वाच्च मनुष्याणामेव सुखेन तच्छ्रवणादिसिद्धेः । 'भूतानाम्' इति पाठे निजावतारकारणभक्तसंबंधेन सर्वेषामेव जनानां विषयिणां मुमुक्षूणां मुक्तानां चेत्यर्थः । इति परमकारुण्यमेव कारणमुक्तं तथापि भजनसम्बन्धेनैव सर्वानुग्रहो ज्ञेयः । अन्यत्तैः । तत्र बहिर्मुखानपीति तत्पर्यंतत्वं विवक्षितम् । परमप्रेमपराकाष्ठामयतया श्रीशुकस्यापि तद्वर्णनातिशयप्रवृत्तेः । गोपीनामित्यस्यार्थांतरे त्वेवं व्याख्येयम्—नन्वेवमपि नित्यवद्भुतमेव तथा क्रीडतु किं

नासूयन्खलु कृष्णाय मोहितास्तस्य मायया ॥ मन्यमानाः स्वपार्श्वस्थान्स्वान्स्वान्दारान्व्रजौकसः ॥ ३८ ॥

नन्वन्येऽपि भिन्नाचाराः स्वचेष्टितमेवमेवेति वदंति तत्राह । नासूयन्निति । एवंभूतैश्वर्याभावे तथा कुर्वतः पापा ज्ञेया इति भावः ॥ ३८ ॥

प्रापञ्चिकेभ्यस्तत्प्रकटनेन, तत्राह—भक्तानाम् प्रपञ्चगतानामनुग्रहाय मानुषं देहं मर्त्यलोकरूपं विराड्देहांशमाश्रितः तत्र प्रकटोऽभूदित्यर्थः । "यस्य पृथिवी शरीरम्" इत्यादिश्रुतौ तत्रापि तच्छरीरप्रयोगान्मानुषशब्देन तल्लोकस्य लक्षितत्वाच्च । अन्यत्समानम् । अथ वा—'तत्परो भवेत्' इत्यत्र भक्तानां भूतानां बहुत्वान्न ते कर्तृत्वेन विपरिणामाद्यनुवर्तेरन् । व्याख्यांतरे चाध्याहारादिकष्टता पतेत् । भगवानिति तु तत्रतत्र व्याख्यानेऽपि प्रकरणादेव लभ्यते । तस्मात्तादृशीः क्रीडाः, असौ याः श्रुत्वापि स्वयमपि तत्परो भवेत् । यदायदा शृणोति तदातदा सक्तो भवतीति भावार्थः ॥ ३७ ॥ पुनराक्षिपति—भिन्नाचाराः दुराचाराः । स्वचेष्टितम् पारदार्यादि । एवमेव लोकानुग्रहार्थमेव । तत्र कथने । मायया मोहिता नासूयन्—इमाः स्वैरिण्यो गृहे न प्रवेश्याः, कृष्णोऽपि व्यभिचारित्वात्कुकर्मैवेत्येवं मनसि नाकुर्वन्नित्यर्थः । वस्तुतस्तु भगवदात्मकानां व्रजौकसां मायामोहाऽसम्भवात्तस्य मायया करुणया मा यथार्थमतिरूहिता विचारविषयं प्रापिता येषां ते तथा । कृष्णं स्वात्मानं पश्यंतस्तत्पार्श्वस्थान्स्वपार्श्वस्थानेव मन्यमाना नासूयन्निति । एवंभूतैश्वर्याभावे श्रीकृष्णसमसामर्थ्याऽसत्त्वे । तथा कुर्वतः तदनुकुर्वतः । इति भाव इति—तेजीयसां साम्यं कर्तुं प्रवृत्तोऽतेजीयान्नश्यत्येवेत्याशयः ॥ * ॥ नन्वेवं सर्वास्वेव निशासु गोपस्त्रीभिः सह विहरति भगवति तासां पतिश्वश्र्वादयः स्वस्वगृहेषु ताः स्ववधूर्दृष्ट्वा भगवते तस्मै कथं नाकुप्यंस्तत्राह—नेति । मायया योगमाययैव न तु बहिरंगमायया । भगवत्परिवारेषु तस्या अधिकाराभावात् । तन्मोहितानां च भगवद्वैमुख्यस्यावश्यं संभवात् । तेषां गोपानान्तु भगवद्वैमुख्यमात्राऽदर्शनात् । तथा मोहनं च गोपीषु कृष्णमभिसृतवतीषु तादृशीस्तावतीरेव गोपीस्सृष्ट्वा तान्दर्शयित्वैव । अतः स्वान्स्वान्दारान्स्वपार्श्वस्थानेव मन्यमानाः। यदुक्तमुज्ज्वलनीलमणौ—"मायाकल्पिततादृक्स्त्रीशीलनेनानसूयुभिः । न जातु व्रजदेवीनां पतिभिः सह संगमः॥" इति । ततश्च योगमायायाश्चिच्छक्तिवृत्तित्वात्तत्कार्याणामपि नित्यमत्यौचित्यात्सर्वमायिकप्रपंचनाशेपि तेषु स्वस्वभार्याभिमानस्य च नित्यंमन्यत्वमेव । मन्यमाना इत्यभिमानमात्रं न तु योगमायाकल्पितानामपि तासां पतिभिः सह संयोग इति तासां तदाकारतुल्याकाराणामन्यसंभुक्तस्यानौचित्यात्। अत एव स्वपार्श्वस्थानिति तु स्वतल्पस्थानित्युक्तम् । तच्च समाधानं योगमाययैव तत्पतीनां तासु कामभावानुत्पादनात्कृतमिति ज्ञेयम् । श्रीभगवत्पार्श्वात्स्वस्वगृहं प्रति गोपीनामागमनसमये मायिकगोपीनां माययैवांतर्द्धानमपि ज्ञेयम् ॥ अत्र **तोषिणी**—ननु भवतु परमात्मत्वेन वा नित्यमेव ताभिः प्रेयसीभिः सह विहारित्वेन वा तासु तत्परदारत्वस्य प्रत्याख्यानम्, तत्र प्रथमः पक्षस्त्वध्याहारादिना कथंचित्स्थापित एव, अथ नित्यप्रेयसीत्वेनोत्तरपक्षश्चेत्तर्हि हन्त कथं तासां परदारत्वं श्रूयते येन तासामन्यत्र विवाहोऽपि संप्रति लभ्यते । ततश्च तं प्रति जन्मांतरे विवाहप्राप्तत्वेन तासां तत्पत्नीत्वमेव स्यात् । ततश्च तत्परताकारणाय भक्तानामनुग्रहाय तादृशीः क्रीडा भजत इति चेत्तर्हि, तेषां दाराकर्षणेन तं प्रत्यसूयासंभवात्तेषु व्रजवासित्वात्परमभक्तेषु कथं वानुग्रहः सिध्येत्, कथं वा तासुतन्नित्यप्रेयसीषु तादृशादुरवस्थायास्तेषु परमभक्तेषु च तादृशतद्दर्णनस्य श्रवणेन परेषामपि भक्तानां तत्परता स्यात् । तत्र 'पाठक्रमादन्वयक्रमो बलीयान्' इति तत्क्रमेण सिद्धान्तयति—नासूयन्खलु कृष्णायेति । खलु निश्चये यस्माद्व्रजौकसस्तस्मात्कदाचिदपि नासूयन्नित्यर्थः । "यद्धामार्थसुहृत्प्रियात्मतनय—" इति तं प्रति ब्रह्मवचनात्, 'कृष्णेर्पितात्मसुहृदर्थकलत्रकामा' इति राजानं प्रति श्रीशुकवचनाच्च । ननु तथाप्यनुग्राह्यानां जानतामजानताञ्च स्वयं तथानिष्टकरणमसमंजसं, तत्रोच्यते—यदि तेषां विवाहतोऽपि तादारास्युस्तर्हि तथात्वमेव, यदि तेषां भ्रममात्रेण व्यूढतया प्रतीता वस्तुविचारेण तु तस्यैव दारास्तेन तदाकर्षणं च तैर्न ज्ञायते च तर्हि को दोष इत्याह—मोहितास्तस्य मायया । मन्यमानाः स्वपार्श्वस्थान्स्वान्स्वान्दारान् । अत्र तन्नित्यप्रेयसीत्वं तासां श्रुतमिति श्रुतार्थान्यथानुपपत्त्या 'दशापवित्रेण गृहं संमार्ष्टि' इत्यादिवदावृत्त्यान्वयः क्रियते। तत्र चायमर्थः—अस्य मायया प्रेमवैचित्रीरचनाय विचित्रलीलासमुल्लासिकया योगमायया मोहिताः संतस्तेनिस्य दारान्स्वान्स्वान्मन्यमानाः स्वस्य पार्श्वस्थाँश्च मन्यमाना इति तदेवं तस्येत्यस्य द्विधान्वय भेदो दर्शितः । तत्र पूर्वस्यान्वयाविभेदस्यायमभिप्रायः—योगमायाकल्पितानामन्यासामेव तैर्विवहनसंप्रवृत्तं न तु भगवन्नित्यप्रेयसीना

त तथा तासां तदानीं मायया गोपितानां मोहितानां च न तद्वृत्तं जातमासीदन्यतः श्रुतमपि तदनभीष्टमेवासीदिति तासु तेषां दार वस्य मननमात्रं न तु वास्तवत्वं, तथा तेषु तासां पतित्वं च मनसा त्यक्तमेव इत्येवं
[illegible] संबंधो न जात इति यतो नासूयन्नित्यनेन गुणेऽपि दोषारोपं नाकुर्वन्नित्येव मयोक्तं न तु नैर्षयान्निति । अथोत्तरस्यान्व विभिदस्यायमभिप्रायः—रासाद्यर्थं तेन तासां कर्षणे योगमायाकल्पितानां संज्ञाकल्पित
च्छायावत्तत्तत्प्रतिरूपाणामन्यासामनुभावेन तानेव ते स्वपार्श्वस्थान्मेनिरे, ततोऽपि न दोषप्रसंग इति । ननु श्रीभगवत्प्रेयसीनां तासां कदाचिदपि यदि बलात्तच्छय्यानिवेशः स्यात्तर्हि महानेव दोष इत्याशंक्य द्वितीयेनैवा
न्वयविभागार्थेन सिद्धांतं कृतवान् । स्वपार्श्वस्थांश्च मन्यमाना इति । विवाहवदेव तत्र मायया वंचितास्त इति भावः । एतदेवाह—ताः प्रति स्वयमेव श्रीभगवान् 'निरवद्यसंयुजम्'इति एतदेव च गर्गवाक्येन कैमुत्या
लभ्यते—''य एतस्मिन्महाभागे प्रीतिं कुर्वन्ति मानवाः । नारयोऽभिभवंत्येतान्विष्णुपक्षानिवासुराः ॥'' इति, तदेवमेव ब्रह्मणा—'श्रियः कांताः कान्तः परमपुरुषः' इति प्रोच्यान्यथात्वं मायिकमेवेति दृढीकृतमिति ।
अत्रेदमपि विचार्यते—'ता वार्यमाणा' इत्यादौ यत्तासां पतिम्मन्यादिभिर्निवारणं श्रूयते तत् किमुत कृष्णाकर्षणमज्ञात्वा ताभ्यो नासूयेयुर्नाम तदाकर्षणकर्तृकश्रीकृष्णायासूयेरन्नेवेति पूर्वपक्षः संगच्छते ।
तासां तत्तत्पार्श्वता तु सिद्धान्ताय न कल्पते, तस्मात्तदिदं वक्तव्यं—तदा श्रीकृष्णेन तासामाकर्षणं बुद्धिपूर्वकमिति तैर्नावगतम् । तथाहि—विद्याविशेषमयत्वात्खल्वसौ वंशीनादस्तासामेव कर्णे प्रविष्टो न पुनरन्यासाम्,
सर्वकर्णप्रवेशश्चेत्तर्हि शयनावसरप्राप्तं निजशयनगृहं हित्वा कथमसौ विदूरनिर्जनवनं गत इति वितर्क्य मातरः पित्रादयः सर्व एव महत्या शंकया तत्र गच्छेयुः । तस्मादौत्पत्तिकादेव माधुर्यान्मुहुः सर्वमेव कर्षत्यसा
वित्यनुभूय तासामपि तद्दर्शनार्थं गमनमाशंक्येत । किं त्वसमयत्वात्तैर्निवारितं तथापि यद्यखंडामपि रात्रिं तत्रामूः स्थिता इति ज्ञायेत तदा व्रजवासित्वात्तेषामसूयायास्तत्रासंभवेऽपि तदाभासः स्यादेव यथा सोयमस्माकं
जीवनादिमूलं स चायमखंडनिशि परवधूनां निजनिकटस्थितिमनुमोदमान आसीदिति तस्य लोकधर्ममर्यादामंगलातिक्रममनुमाय विस्मितानां तेषां तन्मंगलचिंतामय एवायं भावः कोपमय इवेति तदाभासत्वमेव तत्र
लभ्यते, येन ते वधूभ्यः कन्याभ्यश्चासूयेयुः तासां स्वपार्श्वस्थतया दर्शनात्तु सोऽपि नासीदिति कुतस्तरामसूयावकाश इति । एतदभिप्रेत्यैव युगांतरगतांस्तत्प्रेयसीनां तासां गोत्रप्रवर्तकान्गोपान्प्रति श्रीविष्णुना सोऽयं
वरो दत्तः । यथा पाद्मे सृष्टिखंडे—''यदा नंदप्रभृतयो ह्यवतारं धरातले । करिष्यंति तदा चाहं वसिष्ये तेषु मध्यतः ॥ युष्माकं कन्यकाः सर्वा रमिष्यंते मया सह । तत्र दोषो न भविता न रोषो न च मत्सरः॥ '' इति ।
किञ्च, स्वरूपेणैव यस्य पर्याप्तिर्न भवति तत्रोपाधिस्वीकारानर्थक्यमिति व्रजौकस्त्वेनैव श्रीकृष्णं प्रति तेषामसूयानुत्पत्तिर्व्याख्याता । मायामोहितत्वं तत्र हेतुर्विरुद्ध एव तन्मोहिता एव तं प्रत्यसूयां कुर्वन्ति न तु तदमोहिता
इति तस्मान्मोहिता इत्यादेरन्यभागेनैव संगतिः । तत्र प्रयोजनं च श्रीकृष्णस्य यदसमंजसत्वं कैश्चित्तर्क्यते तथा यस्तयोः श्रीकृष्णमंगलचिंतामयभाव एवासूयत्वेन प्रतीयते तयोर्निरसनमेव तत्र माययेति करणं चेत्तर्हि कर्त्रपेक्षया
तस्येत्यत्र तेनेत्येव प्रयुज्यते, यदि च हेतुत्वं तर्हि मोहिता इति न प्रयुज्येत ततः कर्तृरूपैव सेति लभ्यते, तस्यास्तद्रूपत्वेन निर्देशश्च प्रियजनप्रेममयलीलाविष्टस्य तस्य प्रेरणं विना सार्वभौमस्य परमदक्षप्रतिनिधिरिव ताम
न्तरान्तरलब्धां तल्लीलां पूर्वपूर्वतादृशतल्लीलाक्रममनुक्रम्य समुत्कर्षविलसद्रसतां नयतीति विवक्षया तदेवमेवच दर्शितम्—' योगमायामुपाश्रितः' इति, तदेवं तस्यास्तदीयत्वे प्रकरणेन लब्धे सति तस्येति पदस्य नातिप्रयोजक
त्वात्, श्रुतार्थान्यथानुपपन्नत्वाच्च तस्य दारान्स्वान्स्वान्स्वपार्श्वस्थांश्च मन्यमाना इति परेणापि योजयित्वा सार्थकत्वं समर्थयद्भिस्तासु श्रीकृष्णस्यौपपत्यं तासामन्यशय्यानिवेशश्रीकृष्णाय व्रजवासिनामसूयाभासस्तस्या
समंजसत्वञ्च परिहृतमिति । तत्र तस्य मायया ये स्वेस्वे दारास्तान्स्वपार्श्वस्थान्मन्यमाना भगवत्प्रेयस्यवस्थानानर्हसमये तदभेदेनानुभवंतः यतो मोहितास्तयैवेति च योजयंति । यतः पतिव्रता
नामपि न परात्परिभवः संभवति किमुत ' य एतस्मिन्महाभागे ' इति गर्गवचनानुसारेण श्रीभगवत्पराणां किमुत तत्प्रेयसीनामिति गम्यम् । अत्र कूर्मपुराणोत्तरविभागे द्वात्रिंशाध्या
यस्यांते तदिदमुपोद्बलकमस्ति यथा—'' पतिव्रता धर्मपरा रुद्राण्येव न संशयः । तासां पराभवं कर्तुं शक्नोतीह जनः क्वचित् ॥ यथा रामस्य सुभगा सीता त्रैलोक्यविश्रुता । पत्नी दाशरथेर्देवी
विजिग्ये राक्षसेश्वरम् ॥ रामस्य भार्यां विमलां रावणो राक्षसेश्वरः । सीतां विशालनयनां चकमे कालचोदितः ॥ गृहीत्वा मायया वेषं चरन्तीं विजने वने । समाहर्तुं मतिश्चक्रे तापसः किल भाविनीम् ॥ विज्ञाय
सा च तद्भावं स्मृत्वा दाशरथिं पतिम् । जगाम शरणं वह्निमावसथ्यं शुचिस्मिता ॥ उपतस्थे महायोगं सर्वदोषविनाशनम् । कृताञ्जली रामपत्नी साक्षात्पतिमिवाच्युतम् ॥ नमस्यामि महायोगं कृतांतं गहनं परम् ।

ब्रह्मरात्र उपावृत्ते वासुदेवानुमोदिताः ॥ अनिच्छंत्यो ययुर्गोप्यः स्वगृहान्भगवत्प्रियाः ॥ ३९ ॥

**ब्रह्मरात्रे ब्राह्मे मुहूर्तें उपावृत्ते प्राप्ते ॥ ३९ ॥**

दाहकं सर्वभूतानामीशानं कामरूपिणम् ॥'' इत्यादि । ''इति वह्निं पूज्य जप्त्वा रामपत्नी यशस्विनी । ध्यायन्ती मनसा तस्थौ राममुन्मीलितेक्षणा ॥ अथावसस्थाद्भगवान्हव्यवाहो महेश्वरः । आविरासीत्सुदीप्तात्मा तेजसैव दहन्निव ॥ सृष्ट्वा मायामयीं सीतां स रावणवधेप्सया । सीतामादाय धर्मिष्ठो पावकोंतरधीयत ॥ तां दृष्ट्वा तादृशीं सीतां रावणो राक्षसेश्वरः । समादाय ययौ लंकां सागरान्तरसंस्थिताम् ॥ कृत्वा च रावणवधं रामो लक्ष्मणसंयुतः । समादायाभवत्सीतां शंकाकुलितमानसः ॥ सा प्रत्ययाय भूतानां सीता मायामयी पुनः । विवेश पावकं दीप्तं ददाह ज्वलनोऽपि ताम् ॥ दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः । रामायाऽदर्शयत्सीतां पावकोभूत्सुरप्रियः ॥ प्रगृह्य भर्तुश्चरणौ कराभ्यां सा सुमध्यमा । चकार प्रणतिं भूमौ रामाय जनकात्मजाम् ॥ दृष्ट्वा हृष्टमना रामो विस्मयाकुललोचनः । ननाम वह्निं शिरसा तोषयामास राघवः ॥ उवाच वह्ने भगवन् किमेषा वरवर्णिनी । दग्धा भगवता पूर्वं दृष्टा मत्पार्श्वमागता ॥ तमाह देवो लोकानां दाहको हव्यवाहनः । यथावृत्तं दाशरथिं भूतानामेव सन्निधौ ॥ भर्तृशुश्रूषणोपेता सुशीलेयं पतिव्रता । भवानी पार्श्वमानीता माया रावणकामिता ॥ या नीता राक्षसेशेन सीता भगवता हृता । मया मायामयी सृष्टा रावणस्य वधाय सा ॥ यदर्थं भवता दुष्टो रावणो राक्षसेश्वरः । मयापसंहृतश्चैव हतो लोकविनाशनः ॥ गृहाण विमलामेतां जानकीं वचनान्मम । पश्यन्नारायणं देवं स्वात्मानं प्रभवाप्ययम् ॥ इत्युक्त्वा भगवांश्चण्डो विश्वार्चिर्विश्वतोमुखः । मानितो राघवेन्द्रेण भूतैश्चान्तरधीयत ॥'' इति । तस्मात्तदावसथ्याग्निवत्तल्लीलायामुपाश्रिता योगमायापि तत्र साहाय्यं कुर्यादेवेति गम्यते । ततः प्रस्तुतमेवानुसंधीयताम् ॥ ३८ ॥ केचित्तु ब्रह्मरात्रसमकाले समाप्ते सतीत्याहुः । तदपि भगवन्मायाया अघटितघटनापटीयस्यास्संगच्छत एव, मार्कंडेयस्य क्षण एव सप्तकल्पप्रदर्शनात् । वासुदेवेन सर्वत्र प्रकाशमानेनानुमोदिताः स्वगृहादावपि दत्तानंदा अनिच्छंत्यो भगवद्विरहमसहमानाः । एतदेवाह—भगवानेव प्रियो यासां न गृहादि, तास्तथा ॥ * ॥ ब्रह्मरात्र इति समासान्त आर्षः । ब्रह्मणो रात्रौ युगसहस्रप्रमाणायामुपावृत्ते उपाधिक्येनावृत्ते एकामावृत्तिं गते सति गोप्यः स्वगृहान्ययुः, एकस्यामेव रजन्यामेतावत्यो लीलाः कर्तव्या इति भगवतः सत्यसंकल्पत्वात् । नृत्यगीतादयो यावंतो विलासा मनस्यभीप्सितास्तावतां संपूर्त्तौ यावंतः समयास्संभवन्ति तावद्भिः समयैर्युगसहस्रं पूर्णं बभूव । तच्च युगसहस्रं प्रहरचतुष्टयात्मकरजनीमध्य एव रासस्थल्यां प्रविवेश । यथा पंचयोजनात्मकवृंदावनप्रदेशैकदेश एव पंचाशत्कोटियोजनप्रमाणानि ब्रह्माण्डानि प्रविष्टानि ब्रह्मणा दृष्टानि, यथा चातिस्तोकस्यैव भगवत उदरस्योपर्यपारिमितानि दामानि अंतरेव च ब्रह्माण्डमेव दृढमभूदित्यत्र नासंभावना कार्या । तदुक्तं भागवतामृते—''एवं प्रभोः प्रियाणाञ्च धाम्नश्च समयस्य च । अविचिन्त्यप्रभावत्वादत्र किंचिन्न दुर्घटम् ॥'' इति । कालप्रचलनलीला लोकेपि दुर्लक्ष्यैव, यतोष्टादशशातघट्यात्मकात्रिंशद्दंशाः सार्द्धत्रयादिघट्यात्मकमेषादिराशिषु व्यतीयन्ते । एतच्च ज्योतिःशास्त्रतो निश्चेयं भवतीति । वासुदेवानुमोदिताः—मम च भवतीनां च प्रतितादृशक्रीडासिद्ध्यर्थं प्रच्छन्नकामतैवाभीष्टेति कृष्णेन कृतानुमोदना इत्यर्थः । यद्वा—चित्ताधिष्ठात्रा वासुदेवेनैव गुरुलज्जाभयादिकमुद्भाव्य प्रेरिताः । अत एव प्रियविरहस्य दुःसहत्वादनिच्छन्त्यो ययुः ॥ अत्र **तोषिणी**—तदेवं प्रासंगिकं समाप्योपसंहरन्परमसुखामृतसिंधुमवगाढानामपि तासामतृप्तिमाह—अनिच्छन्त्योऽपि गोप्यः स्वगृहान्ययुः । तेन समं विहारेणैव व्रजं निकटप्रायमागत्य स्वस्वगृहवर्त्मानि जगृहुरित्यर्थः । तत्र हेतुः—ब्रह्मेति । तत्कालस्य गृहगमनायैव योग्यत्वादित्यर्थः । ननु तदर्थत्यक्तसर्वाणां तासां कथं तदपेक्षा तत्राह—वासुदेवोऽत्र प्राग्जन्मनि वसुषु विराजितत्वाद्व्रजेश्वर एव, गोकुललीलायां तदर्थस्तस्यैव सांनिध्यात् । ततश्चापत्यार्थेणि तेन तस्यापत्यतयापेक्षिततदनुस्मरणार्हप्रातःकालेनानुमोदिताः पुनरासु स्वसंगदानाद्यंगीकारस्तुत्यादिभिः कारितानुमोदना इत्यर्थः । श्लेषविशेषेण तत्तन्निकटे सर्व एव सत्यक्रीडता चानुमोदिता इति प्रत्येकमप्यनुनयो दर्शितः । ऐश्वर्यार्थत्वे तु तेनाप्यनुनयात्तासां माहात्म्यं

---

१ उत्तरान्वयि ।

विक्रीडितं व्रजवधूभिरिदं च विष्णोः श्रद्धान्वितोनुशृणुयादथ वर्णयेद्यः ॥ भक्तिं परां भगवति प्रतिलभ्य कामं हृद्रोगमाश्वपहिनोत्यचिरेण धीरः ॥ ४० ॥ इति श्रीभागवते महापुराणे दशमस्कंधे पूर्वार्धे रासक्रीडावर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

भगवतः कामविजयरूपरासक्रीडाश्रवणादेः कामविजयमेव फलमाह । विक्रीडितमिति । व्रजवधूभिः सह विष्णोर्विक्रीडितम् । अचिरेण धीरः सन्हृद्रोगं कामम् आशु अपहिनोति परित्यजतीति ॥ ४० ॥ सेयं श्रीपरमानंदसेविश्रीधरनिर्मिता ॥ श्रीभागवतभावार्थदीपिका दशमाश्रया ॥ १ ॥ इति श्रीमद्भागवते दशमस्कंधे पूर्वार्धे टीकायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

दार्शितम् । यद्वा—वसुदेवस्तासां शुद्धमंतःकरणम् 'सत्त्वं विशुद्धं वसुदेवशब्दितम्' इति श्रीशिवोक्तेः । प्रेम्णा तदधिष्ठात्रेति तत्र सत्त्वमुक्तम् । ननु ताभिर्लब्धदुर्लभसंगानंदस्य तस्य त्यागे तद्यत्नेनाप्यनुमोदनं कथमिव घटेत, प्रेमवश्यत्वपक्षेऽपि तत्संग एव प्रेमफलमिति । तद्ध्यानादावपि कथं तद्वशत्वं, तत्राह--भगवानेव प्रियो यासां ताः, भगवत्प्रेयस्यो वा । अतः स्वदुःखमपि ताः सहन्ते न तु तत्संकोचलेशमपीति भावः । सत्पुरुषाणां प्रेयसीवशत्वेऽपि लज्जामर्यादादाक्षिण्यादिभिस्तदेकसंगत्यागस्य दर्शनादिति च भावः ॥ ३९ ॥ भगवल्लीलायाः संसारनिवृत्तिहेतुत्वाच्छ्रवणं सदा कार्यम्, सा च कामजयपूर्विका कामिनां दौर्गत्यावगते रत्र लीलायां भगवतापि काम एव जितोऽत एतच्छ्रवणपरायणस्यापि स च जितो भवतीत्याशयेनाह—विक्रीडितमिति । विविधं जलस्थलवनादिभेदेन क्रीडितं विहरणम् । चेति पदं श्रद्धातिशयजननार्थकम् । यथा न्यानि विक्रीडितानि तथैवेदं च लीलातात्पर्यावगत्यावाप्तधैर्यः सन् । कामत्यागस्य भगवद्रूपतापादकत्वेन संसारनाशकत्वं स्फुटम् । "यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥" इति श्रुतेः । कामा वासनाः, मदनस्यापि वासनाजन्यत्वात्कामत्वम् ( ४० ) ॥ श्रीपरमानंदसेविना श्रीधरेण स्वामिना निर्मिता दशमाश्रया दशमस्कन्धांतर्गता श्रीभागवतभावार्थानां दीपिका या सा त्वियमेव, पदवाक्याद्यर्थानां प्रकाशिकास्त्वन्या बह्व्यः संतीत्यनेन निजानुत्कर्षः परोत्कर्षश्च सूचितः । वस्तुतस्तु श्रीपरमानंदं निजस्वरूपानंदं सेवितुं शीलमस्येति निजानंदसेवी स चासौ श्रीधरो राधिकेशस्तेन निर्मिता रचिता या श्रीरासलीला सा इयमेव पंचाध्यायनिरूपितैव । श्रिंभूता—श्रियो राधाया भागवतानामन्यासां गोपीनां यो भावो भक्तिरनुराग इति यावत्, स एवार्थः प्रयोजनं तस्य दीपिका भक्तिपारवश्यात्सर्वेश्वरेण हरिणा निषिद्धमपि स्त्रीभिर्नृत्यमंगीकृतमिति भावः । पुनर्दशमो लक्ष्मीभूतः श्रीकृष्ण एवाश्रयो यस्यास्सा तथा । कृष्णमाश्रित्य गोपीभिर्निजाभिमतं साधितमिति भावः ( १ ) ॥ * ॥ सर्वलीलाचूडामणे रासस्य श्रवणकीर्तनफलमपि सर्वफलचूडामणिभूतमेवेत्याह—विक्रीडितमिति । चकारादीदृशमन्यदप्यन्यकविवार्णितम् । ताभिः सह विक्रीडितं विष्णोरिति 'तासां मध्ये द्वयोर्द्वयोः' इत्युक्तव्यापकत्वाभिप्रायेण । नु निश्चितमनुदिनं वा शृणुयात् । अथ वर्णयेत् कीर्तयेत् । स्वकवितया काव्यरूपत्वेन निबध्नीतेति वा । परां प्रेमलक्षणां प्राप्येत्युक्त्वा प्रत्ययेन हृद्रोगवत्यप्यधिकारिणि प्रथमत एव प्रेम्णः प्रवेशः, तत्तत्प्रभावेणैवाचिरतो हृद्रोगनाश इति प्रेमायं ज्ञानयोग इव न दुर्बलः परतंत्रश्चेति भावः । हृद्रोगरूपं काममिति भगवद्विषयकः कामविशेषो व्यवच्छिन्नस्तस्य प्रेमामृतरूपेण तद्वैपरीत्यात् । धीरः पंडित इति । हृद्रोगे सत्यपि कथं प्रेमा भवेदिति नास्तिक्यलक्षणेन मूर्खत्वेन रहित इत्यर्थः । अत एव श्रद्धान्वित इति । शास्त्रविश्वासिनं नामापराधिनं प्रेमापि नांगीकरोतीति भावः ॥ श्रीकृष्णातिवशीकारचंचोर्जिष्णुशिरोमणेः । प्रेम्णा हास इवायं श्रीरासः श्रीरपि नापयम् ॥ शास्त्रबुद्धिविवेकाद्यैरपि दुर्गममीक्ष्यते । गोपीनां रसवर्त्मेदं तासामनुगतीर्विना ॥ पदवाक्यप्रकरणध्वनयोऽत्र सहस्रशः । सभ्यागम्याश्च गम्याश्च नोक्ता विस्तरभीतितः ॥ ॥ अत्र**तोषिणी**—

अथ तादृशलीलाश्रवणादेरपि प्राकृतकामविरोधित्वेन श्रीभगवत्प्रेमावहत्वेन च कैमुत्यात्तल्लीलायाः परमभक्तिफलरूपत्वं दर्शयित्वा पूर्वसिद्धांतमेवोत्कर्षयँस्तल्लीलावर्णनसमाप्तौ सुखावेशेनोत्तरकालभावितच्छ्रोतृवक्तृजनानाशि

श्रीशुक उवाच ॥ एकदा देवयात्रायां गोपाला जातकौतुकाः ॥ अनोभिरनडुद्युक्तैः प्रययुस्तेम्बिकावनम् ॥ १ ॥ तत्र स्नात्वा सरस्वत्यां देवं पशुपतिं विभुम् ॥ आनर्चुरर्हणैर्भक्त्या देवीं च नृपतेऽम्बिकाम् ॥ २ ॥ गावो हिरण्यं वासांसि मधु मध्वन्नमादृताः ॥ ब्राह्मणेभ्यो ददुः सर्वे देवो नः प्रीयतामिति ॥ ३ ॥ ऊषुः सरस्वतीतीरे जलं प्राश्य धृतव्रताः ॥ रजनीं तां महाभागा नंदसनंदकादयः ॥४॥ कश्चिन्महानहिस्तस्मिन्विपिनेऽतिबुभुक्षितः ॥ यदृच्छयाऽऽगतो नंदं शयानमुरगोऽग्रसीत् ॥ ५ ॥ स चुक्रोशाहिना ग्रस्तः कृष्णकृष्ण महानयम् ॥ सर्पो मां ग्रसते तात प्रपन्नं परिमोचय ॥ ६ ॥

चतुस्त्रिंशेऽहिना ग्रस्तं नंदं हरिरमूमुचत् ॥ विद्याध्रं चांगिरःशापाच्छंखचडं तथावधीत् ॥ १ ॥ रासापदेशतः कामं किंकरीकृत्य कामतः ॥ अनुगृह्णन्वशं निन्ये तथा विद्याधराधिपम् ॥ २ ॥ तदेवं कामानुग्रहमुखेन कामजयं प्रतिपाद्य तथैव विद्याधरजयं प्रतिपादयितुं तत्प्रसंगं दर्शयति । एकदेति ॥ १ ॥ २ ॥ गावो गाः । मधु मधुरम् । मध्वन्नं मधुना सहितमन्नम् ॥ ३ ॥ जलमात्रं प्राश्योपोषितास्तां निशां तत्र ऊषुर्न्यवसन् ॥ ४ ॥ महानहिरजगरः । उरगः उरसा गच्छन्नित्य

षयन्निव च स्वाभाविकतत्फलं कथयति–विक्रीडितमिति। विशिष्टाम् क्रीडाम्, चकारादीदृशमन्यदपि । विष्णोरिति 'तासांमध्ये द्वयोर्द्वयोः' इत्याद्युक्तव्यापकत्वाभिप्रायेण । श्रद्धया विश्वासेनान्वित इति तद्विपरीतावज्ञारूपापराध निवृत्त्यर्थश्च नैरन्तर्यार्थश्च । तच्च फलवैशिष्ट्यार्थम् । अत एव योऽनु निरंतरं शृणुयात्, अथानंतरं स्वयं वर्णयेच्च । उपलक्षणश्चैतत्स्मरेच्च । भक्तिं प्रेमलक्षणां परां श्रीगोपिकाप्रेमानुसारित्वात्सर्वोत्तमजातीयां प्रतिक्षणं नूतनत्वेन लब्ध्वा हृद्रोगरूपं काममिति भगवद्विषयकः कामविशेषो व्यवच्छिन्नः, तस्य परमप्रेमरूपत्वेन तद्वैपरीत्यात् । काममित्युपलक्षणमन्येषामपि हृद्रोगाणाम् । अन्यत्र श्रूयते–''ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ '' इति । अत्र तु हृद्रोगापहानात्पूर्वमेव परमभक्तिप्राप्तिः । तस्मात्परमबलवदेवेदं साधनमिति भावः । धीरः सन्निति–धैर्यश्च लभत इति । यद्वा–कामं यथेष्टम् आशु भक्तिं प्रतिलभ्य हृद्रोगमाधिं श्रीकृष्णा प्राप्त्यादिकृतमचिरेणापहिनोति तत्प्राप्तिरिति भावः । अन्यत्समानम् ॥ क्रीडता बहिरंतश्च जडोऽयं येन लभ्यते । तस्य चैतन्यरूपस्य प्रीत्यै भगवतोऽस्त्विदम् ॥ इति भावार्थ दार्शिन्यां हार्षिण्यां भक्तचेतसाम् । दशमस्य त्रयस्त्रिंशः संगतः सम्मतस्सताम् ॥ ४० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे पूर्वार्द्धे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ अहिना सर्पेण । अमूमुचत् मोचयामास । विद्यामन्तर्द्धानाविर्भावादिलक्षणां धरतीति तथा तम् । मूलविभुजादित्वाद्धरतेः कः । शंखचूडम् यक्षम् ( १ ) । रासापदेशतः रासलीलाछलेन । कामतः स्वेच्छया । विद्याधराधिपं कामं चानुगृह्णन्नित्यन्वयः (२) । तदेवमिह तच्छब्दो वाक्यालंकारे एव । कामस्यानुग्रहाय मुखं प्रारंभो यस्य वृत्तस्य तत्कामानुग्रहमुखं तेन ''येये हताश्चक्रधरेण विष्णुना त्रैलोक्यनाथेन जनार्दनेन । तेते गता विष्णुपुरीं नरेंद्राः क्रोधोऽपि देवस्य वरेण तुल्यः॥''इत्युक्तदिशा 'मोघा याच्ञा वरमधिगुणे' इत्युक्तदिशा च भगवत्कृतकामजयोऽपि कामानुग्रह एव। तथैव विद्याधरानुग्रहमुखेन तत्प्रसंगं विद्याधरमेलनम् । एकदा रासानंतरं फाल्गुनशिवरात्रौ । अनोभिः शकटैः । गोवर्द्धनमखवत्कृष्णकौतुकमूलत्वेन तीर्थे दानार्थं बहुलद्रव्यस्य नयनार्थम् अंबिकावनम् । मथुरादिग्विभागे वायव्ये सरस्वतीतीरस्थं शिवोमामूर्त्तिभूषितम् ॥ १ ॥ तत्र वने । पशूनां जीवानां पतिम् ''ब्रह्माद्याः स्थावरांताश्च देवदेवस्य शूलिनः । पशवः परिकीर्त्त्यंते संसारवशवर्त्तिनः। तेषां पतित्वाद्देवेशः शिवः पशुपतिः स्मृतः ॥ मलमायादिभिः पाशैः स बध्नाति पशून्पतिः । स एव मोचकस्तेषां भक्त्या सम्यगुपासितः ॥ ब्रह्मादिस्तंबपर्यंतान्पशून्बद्ध्वा महेश्वरः । पाशैरेतैः पतिर्देवः कार्यं कारयति स्वकम् ॥'' इति शैवोक्तेः । देवीम् अंबिकाम् ॥ २ ॥ देवः पार्वतीनाथः ॥ ३ ॥ तत्र सरस्वतीतीरे । ताम् यात्र गतानामागतेत्यर्थः । सनंदः श्रीनंदानुजः, संज्ञायां कन् । अतस्तदग्रजस्योपनंदस्य गोष्ठ एव स्थितिरवधार्य्यते, योग्यता च तस्य ज्ञानवयोधिक्यात् ॥ ४ ॥ कश्चित् अनिर्दिष्टनामा । यदृच्छया केनापि भाग्योदयेन । उरग इत्यलक्षितागमनः । यात्रिकलोकशून्यत्वाद्विपिन इति । किमर्थमागत्य जग्रास, तत्राह–बुभुक्षितं शयानम् स्वीकृतनिद्रम् । पूर्वस्यां रात्रौ जागरणोपवासादिना श्रांतनिर्भरनिद्राणमिति भावः ॥ ५ ॥ स नंदः । वीप्सा

तस्य चाक्रंदितं श्रुत्वा गोपालाः सहसोत्थिताः ॥ ग्रस्तं च दृष्ट्वा विभ्रांताः सर्पं विव्यधुरुल्मुकैः ॥ ७ ॥ अलातैर्दह्यमानोऽपि नामुंचत्तमुरंगमः ॥ तमस्पृशत्पदाऽभ्येत्य भगवान्सात्वतां पतिः ॥ ८ ॥ स वै भगवतः श्रीमत्पादस्पर्शहताशुभः ॥ भेजे सर्पवपुर्हित्वा रूपं विद्याधरार्चितम् ॥ ९ ॥ तमपृच्छद्धृषीकेशः प्रणतं समुपस्थितम् ॥ दीप्यमानेन वपुषा पुरुषं हेममालिनम् ॥ १० ॥ को भवान्परया लक्ष्म्या रोचतेऽद्भुतदर्शनः ॥ कथं जुगुप्सितामेतां गतिं वा प्रापितोऽवशः ॥ ११ ॥ सर्प उवाच ॥ अहं विद्याधरः कश्चित्सुदर्शन इति श्रुतः ॥ श्रिया स्वरूपसंपत्त्या विमानेनाचरं दिशः ॥ ॥१२॥ ऋषीन्विरूपानंगिरसः प्राहसं रूपदर्पितः ॥ तैरिमां प्रापितो योनिं प्रलब्धः स्वेन पाप्मना ॥ १३ ॥ शापो मेऽनुग्रहायैव कृतस्तैः करुणात्मभिः ॥ यदहं लोकगुरुणा पदा स्पृष्टो हताशुभः ॥१४॥ तं त्वाऽहं भवभीतानां प्रपन्नानां भयापहम् ॥ आपृच्छे शापनिर्मुक्तः पादस्पर्शादमीवहन्॥१५॥ प्रपन्नोऽस्मि महायोगिन्महापुरुष सत्पते ॥ अनुजानीहि मां देव सर्वलोकेश्वरेश्वर ॥१६॥ ब्रह्मदंडाद्विमुक्तोऽहं सद्यस्तेऽच्युतदर्शनात् ॥ यन्नाम गृह्णन्नखिलाञ्छ्रोतॄनात्मानमेव च ॥ सद्यः पुनाति किं भूयस्तस्य स्पृष्टः पदा हि ते ॥ १७ ॥

लक्षितत्वमुक्तम् । अग्रसीज्जग्रास ॥ ५ ॥ ६ ॥ विव्यधुस्ताडयामासुः । उल्मुकैर्ज्वलत्काष्ठैः ॥ ७ ॥ अलातैस्तैरेवोल्मुकैः । उरंगमोऽजगरः ॥ ८ ॥ विद्याधरैरर्चितं पूजितम् ॥ ९ ॥ गोपेष्वात्मन ऐश्वर्यं प्रकाशयितुमविद्वानिव तमपृच्छत् । दीप्यमानेन वपुषा समवस्थितम् ॥ १० ॥ यः परया शोभया रोचते प्रकाशते स भवान्क इति ॥ ११ ॥ १२ ॥ प्राह समुपहसितवानस्मि प्रलब्धैरुपहसितैः । मदीयेनैव पापेन निमित्तेन ॥ १३ ॥ यद्यतः शापात् ॥ १४ ॥ त्वा त्वाम् आपृच्छे स्वं लोकं गंतुमनुज्ञां

त्रासात् । कृष्ण क्लेशकर्षक । तातेति स्नेहात् । तथा मे मृतित्रासो नास्ति किं तु त्वद्वियोगादेव यथेति भावः । महानित्यप्रतिकार्यताबोधकः । प्रकर्षेणापन्नं विपद्ग्रस्तम्, वृद्धत्वेन पाल्यत्वात्, शरणागतम्वा॥६॥ तस्य नंदस्य । आक्रंदितम् आर्त्तिशब्दम् । सहसा शीघ्रम् ॥ ७॥ अलातैः उल्मुकैः, तेषामेव तिर्यग्योनिभीषणत्वात् । तम् नंदम् । तम् सर्पम् । अभ्येत्य आगत्य संकोचेन वृद्धसंगाद्दूरे वयस्यवर्गात्संभ्रमेण पितृसंन्निधौ प्राप्य पादस्पर्शमात्रेणैव नंदं सर्पाकारं चामुञ्चत् । भगवानचिंत्यशक्तिस्तयैव सर्वं कर्तुं समर्थः सैरंध्रीवायकादिषु दृष्टत्वात्, पादस्पर्शस्तु संभ्रमादेवेति ॥ ८ ॥ सः सर्पः ॥ ९ ॥ तम् त्यक्तसर्पवपुषं देवविशेषम् ॥ १० ॥ एताम् सर्परूपाम् । जुगुप्सिताम् गर्हिताम् । गतिम् दशाम् "गतिः स्त्री मार्गदशयोर्ज्ञाने यात्राभ्युपाययोः । नाडीव्रणसरण्योश्च" इति मेदिनी । वेति पक्षांतरे । अवशः कर्मवशतः ॥ ११ ॥ श्रुतः प्रसिद्धः । श्रिया दीप्त्या । स्वरूपसंपत्त्या स्वपूर्वदेहावाप्तिलक्षणया । अग्रिमेण प्राहसमितिक्रियापदेनान्वयः ॥ १२ ॥ तैः ऋषिभिः । विरूपान् सौन्दर्यरहितान् । अंगिरसः अंगिरसो वंश्यान् । "सौन्दर्ये च स्वभावे च रूपशब्दं प्रचक्षते" इति ॥ १३ ॥ तैः अंगिरोभिः ॥ १४ ॥ तम् त्रैलोक्यग्रहम् । 'अमीवं पापदुःखयोः' इति कोशात् ॥ १५ ॥ अनुजानीहि अनुज्ञां देहि ॥ १६ ॥ ब्रह्मदंडात् ब्रह्मशापात् । गृह्णन्नुचरन् । तस्य अखिलपावनकर्त्तुः ।

श्रीशुक उवाच ॥ इत्यनुज्ञाप्य दाशार्हं परिक्रम्याभिवंद्य च ॥ सुदर्शनो दिवं यातः कृच्छ्रान्नंदश्च मोचितः ॥ १८ ॥ निशाम्य कृष्णस्य तदात्मवैभवं व्रजौकसो विस्मितचेतसस्ततः ॥ समाप्य तस्मिन्नियमं पुनर्व्रजं नृपाऽऽययुस्तत्कथयंत आदृताः ॥ १९ ॥ कदाचिदथ गोविंदो रामश्चाद्भुतविक्रमः ॥ विजह्रतुर्वने रात्र्यां मध्यगौ व्रजयोषिताम् ॥ २० ॥ उपगीयमानौ ललितं स्त्रीजनैर्बद्धसौहृदैः ॥ स्वलंकृतानुलिप्तांगौ स्रग्विणौ विरजोंबरौ ॥ २१ ॥ निशामुखं मानयंतावुदितोडुपतारकम् ॥ मल्लिकागंधमत्तालिजुष्टं कुमुदवायुना ॥ २२ ॥ जगतुः सर्वभूतानां मनःश्रवणमंगलम् ॥ तौ कल्पयंतौ युगपत्स्वरमंडलमूर्च्छितम् ॥ २३ ॥ गोप्यस्तद्गीतमाकर्ण्य मूर्च्छिता नाविदन्नृप ॥ स्रंसद्दुकूलमात्मानं स्रस्तकेशस्रजं ततः ॥ २४ ॥ एवं विक्रीडतोः स्वैरं गायतोः संप्रमत्तवत् ॥ शंखचूड इति ख्यातो धनदानुचरोऽभ्यगात् ॥ २५ ॥ तयोर्निरीक्षतो राजंस्तन्नाथं प्रमदाजनम् ॥ क्रोशंतं कालयामास दिश्युदीच्यामशंकितः ॥ २६ ॥

याचे । हे अमीवहन्दुःखनाशन ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ अहिदेहं निहत्यैवं प्रागुन्मत्तं सुदर्शनम् ॥ तद्वदुन्मादिनं कृष्णः शंखचूडमताडयत ॥ १ ॥ तत्प्रसंगमाह । कदाचिदिति॥२०॥विरजोंबराविति । विरजसी निर्मले अंबरे ययोस्तौ॥२१॥किं च । निशाप्रवेशं सत्कुर्वंतौ उदित उडुपस्तारकाश्च यस्मिंस्तत मल्लिकागंधेन मत्ता अलयो यस्मिंस्तत् ॥२२॥ अनिबद्धत्वादन्यैर्युगपत्कल्पयितुमशक्यमपि तौ स्वरमंडलस्य मूर्छितं युगपत्कल्पयंतौ । मनःश्रवणयोर्मंगलं यथा भवति तथा जगतुरगायतामिति॥२३॥मूर्च्छितास्तद्गीतलीनचित्ताः श्लथद्भ्रश्यद्दुकूलं यस्मात्तमात्मानं देहम्। स्रस्ता केशेभ्यः स्रजो यस्य तं च ततो नाविदन्॥२४॥२५॥निरीक्षतोर्निरी

यदि पदा स्पृष्टः पूतो भवेत्तर्हि भूयः पुनः किं वक्तव्यमिति कैमुत्यं सूचितम् । सार्द्धेनान्वयः ॥ १७ ॥ इति इत्थं संश्लाघ्य । दाशार्हम् श्रीकृष्णम् ॥ १८ ॥ तत् विद्याधरवर्णितम् । आत्मनस्स्वस्य वैभवं स्वाभाविकैश्वर्यम् । तस्मिन् श्रीकृष्ण एव । नियमम् व्रतादि "नियमो मंत्रणायां च प्रतिज्ञानिश्चये व्रते" इति मेदिनी । समाप्य समर्प्य । एतस्मिन्नार्चिते सर्वेऽर्चिताः स्युस्सर्वमूलत्वात् । मूले सिक्ते शाखादिसेकवत् । विस्मितचेतस इति–अहो अयमेव साक्षात्परमेश्वरः, यथा गर्गमुखात्प्रथमं श्रुतं तथैव वरुणादपि तदेवाधुना विद्याधरेणाप्युक्तमतो वयमप्येतत्संबंधेन धन्या एवेति चिंतितवंतः । ततः अंबिकावनात् । तत् कृष्णवैभवम् ॥१९॥ कथांतरमाह–कदाचिदिति । अथ नंदमोचनोत्तरम् । कदाचित्[१]कालांतरे॥ २० ॥ उपगीयमानौ होलिकोचितगीतिभिर्वर्ण्यमानौ । तत्र हेतुः–बद्धं सौहृदं यैरिति । एतेन रामस्यापि पृथक्प्रेयसीगणो लक्ष्यते तद्व्यञ्जितम् "गोप्योन्तरेण भुजयोरपि यत्स्पृहा श्रीः" इति । सर्वमेलस्तु होलिकावसरसङ्कर्षादेवेति ज्ञेयम्। ललितम् चेतोहरम् ॥ २१ ॥ कुमुदवायुना जुष्टमित्यन्वयस्तु " विप्रकीर्णजटाच्छन्नं रौरवेणाजिनेन च" इतिवदवसेयः ॥ २२ ॥ अनिबद्धत्वात् अन्योन्यं भिन्नत्वात् "क्रमयुक्ताः स्वरा यत्र मूर्च्छना साभिधीयते" इति संगीतरत्नाकरोक्तेः । अन्यैः रामकृष्णेतरैः । स्वराणां निषादादीनां सप्तानां मंडलस्यैकीभावस्य वा वृत्तिलक्षणस्य मूर्च्छितं मूर्च्छनामेकविंशतिधम् । कदा एकस्मिन् क्षणे । तथा च भरतः–"सप्तस्वरास्त्रयो ग्रामा मूर्च्छना एकविंशतिः" इति, "क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम्।मूर्च्छनेत्युच्यते ग्रामत्रये ता एकविंशतिः॥" इति संगीतसारोक्तेश्च॥२३॥ तद्गीतम् ताभ्यां रामकृष्णाभ्यां गीतम् युगपन्मूर्च्छितम् । ततो गानश्रवणात् ॥ २४ ॥ एवम् उक्तविधया हे राम कृष्ण अस्मांस्त्रायस्वेति वदन्तं नित्यात्मीयत्वेन स्वीकृतत्वात्। धनदानुचरः कुबेरभृत्यः ॥२५॥ तयोः रामकृष्णयोः।

१ होलिकापूर्णिमायाम् ।

क्रोशंतं कृष्ण रामेति विलोक्य स्वपरिग्रहम् ॥ यथा गा दस्युना ग्रस्ता भ्रातरावन्वधावताम् ॥ २७ ॥ मा भैष्टेत्यभयाऽऽरावौ शालहस्तौ तरस्विनौ ॥ आसेदतुस्तं तरसा त्वरितं गुह्यकाधमम् ॥ २८ ॥ स वीक्ष्य तावनुप्राप्तौ कालमृत्यू इवोद्विजन् ॥ विसृज्य स्त्रीजनं मूढः प्राद्रवज्जीवितेच्छया ॥ २९ ॥ तमन्वधावद्गोविंदो यत्रयत्र स धावति ॥ जिहीर्षुस्तच्छिरोरत्नं तस्थौ रक्षन्स्त्रियो बलः ॥ ३० ॥ अविदूर इवाभ्येत्य शिरस्तस्य दुरात्मनः ॥ जहार मुष्टिनैवांग सहचूडामणिं विभुः ॥ ३१ ॥ शंखचूडं निहत्यैवं मणिमादाय भास्वरम् ॥ अग्रजायाददत्प्रीत्या पश्यंतीनां च योषिताम् ॥ ३२ ॥ इति श्रीभागवते महापुराणे दशमस्कंधे पूर्वार्धे शंखचूडवधो नाम चतुस्त्रिंशोऽध्यायः ॥३४॥ श्रीशुक उवाच ॥ गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः ॥ कृष्णलीलाः प्रगायंत्यो निन्युर्दुःखेन वासरान् ॥ १ ॥

क्षमाणयोः । तौ नाथौ यस्य तं प्रमदाजनं कालयामास हठात्प्रेरयामास ॥ २६ ॥ दस्युना व्याघ्रेण ॥ :२७ ॥ मा भैष्ट भयं मा प्राप्नुतेत्यभयवाचौ ॥ २८ ॥ २९ ॥ ३० ॥ अविदूरे समीपत इवाभ्येत्य शिरसा सह चूडामणिं जहारेत्यर्थः ॥ ३१ ॥ ३२ ॥ इति श्रीमद्भागवते म० दशमस्कंधे पूर्वार्धे टीकायां चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ पंचत्रिंशे वनं याते कृष्णे गोकुलयोषितः ॥ युग्मश्लोकानुगीतेन निन्युर्दुःखेन वासरान् ॥ १ ॥ एवं रात्रिषु कृष्णेन स्वैरम

क्रोशंतम् त्राहित्राहीत्युक्त्वा रुदंतम्। उदीच्याम् निजेशदिशि। कालयामास निजयष्टिघूर्णनेन माययित्वोदीचीं दिशं प्रति विद्रावयामासेत्यर्थः। तेन स्पर्शस्तासां नाभूदिति ज्ञेयम् 'यथा गाः' इत्यग्रिमोक्तेः। अशंकितो निर्भयः ॥ २६ ॥ यथा दस्युना ग्रस्ता गास्तथा क्रोशतमाह्वयंतम्। स्वपरिग्रहम् निजस्त्रीजनम् 'दस्यू तस्करशार्दूलौ' इति यादवः ॥ २७ ॥ माप्नुत भीता मा भवंत्वित्यर्थः । शालो वृक्षविशेषः । 'तालहस्तौ' इति पाठे तु तालो गीतांगवाद्यविशेषस्तृणराजो वा हस्तयोर्ययोस्तौ तथा । मनस्विनौ अभीतौ "मनस्वी निर्भयोदारस्थिरधीयोगिराजसु" इति निरुक्तिः । तरसा शीघ्रं बलेन बलेन वा 'तरसी बलरंहसी' इति विश्वः । त्वरितम् धावंतम्। गुह्यकेषु यक्षेष्वधमं परदारग्राहित्वात् ॥ २८ ॥ सः शंखचूडः । तौ रामकृष्णौ । कालो मृतिसमयाभिमानी देवस्तन्नामातिबलोऽसुरो वा । मृत्युर्यमः । उद्विजन् बिभ्यत् ॥ २९ ॥ तम् गुह्यकम्। तस्य शंखचूडस्य। शिरोरत्नं चूडामणिम् । चूडामणिहरणान्तमेव तज्जीवनमिति जानन्नेव तं जहारेति तत्त्वम् ॥३०॥ अविदूरे समीपे । इवशब्देन किञ्चिद्दूरम्। तस्य यक्षस्य मुष्टिना 'मुष्टिर्द्वयोः पले बद्धपाणौ त्सरौ च' इति मेदिनी । ( इत्यर्थ इति । सहादियोगे तृतीयया भाव्यमतः शिर इति तृतीयार्थे द्वितीया बोध्यार्षत्वात् ) ॥ ३१ ॥ एवम् उक्तप्रकारेण । भास्वरम् देदीप्यमानम् । पश्यन्तीनामिति—मह्यमेषोतिसुभगायै दास्यतीत्येवं प्रत्येकं चिंतयंतीनां तासां मत्सराभावार्थं कस्यैचिदप्यदत्त्वा श्रीरामे स्वरक्षणात्प्रेमाणञ्च ज्ञात्वा श्रीरामायैवादात् । स च सर्वज्ञत्वाच्छ्रीकृष्णाभीप्सितदेश एव तं न्यधादिति ज्ञेयम् ॥ ३२ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे पूर्वार्द्धे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ दुःखेन कृच्छ्रेण । निन्युः व्यतीयुः ( १ ) । एवम् रासादिना । दिवा दिने । तद्विरहितानाम् कृष्णविरहयुतानाम् । अनुगीतेन मुहुर्मुहुर्गानेन । गोप्य इति—तम् श्रीकृष्णम् । अनु पश्चात् । द्रुतं गतं चेतो यासां ताः । प्रगायंत्यः प्रकृष्टं

**गोप्य ऊचुः ॥ वामबाहुकृतवामकपोलो वल्गितभ्रुरधरार्पितवेणुम् ॥ कोमलांगुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुंदः ॥ २ ॥**
**व्योमयानवनिताः सह सिद्धैर्विस्मितास्तदुपधार्य सलज्जाः ॥ काममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः ॥ ३ ॥**

भिरमितानां दिवा तद्विरहितानामनुगीतेन दिनिस्तारप्रकारमाह । गोप्य इति । दुःखेन कृच्छ्रेण ॥ १ ॥ वामबाहुकृतवामकपोल इत्यादीनि द्वादशयुगलानि । हे गोप्यो वामे बाहौ तन्मूले कृतोऽर्पितो वामकपोलो येन सः वल्गिते नर्तिते भ्रुवौ येन स वल्गितभ्रूर्मुकुंदः । अधरे आर्पितं वेणुं कोमलाभिरंगुलिभिराश्रिता मार्गाः सप्तस्वरच्छिद्राणि यस्य तं यत्र यदा ईरयति वादयति ॥ २ ॥ तदा व्योमयानानां सिद्धानां वनिताः सिद्धैः स्वपतिभिः सह वर्तमाना अपि तद्वेण्वीरणमुपधार्याकर्ण्य प्रथमं विस्मितास्ततः काममार्गणेभ्यः समर्पितानि चित्तानि याभिस्तास्तत्परवशा इत्यर्थः । सलज्जाः सत्यः कश्मलं मोहं ययुः । अत्र लिंगम् । अपस्मृता विस्मृता नीव्यो याभिरिति । अत एवंभूतस्य कृष्णस्य विरहं कथं सहामहे इति सर्वत्र वाक्यशेषः ॥ ३ ॥

गानं भक्तिलक्षणमिति ध्येयम् ॥ × * ॥ अथ वेणुगीताध्यायः ॥ पंचत्रिंशे वेणुगीतं द्वादशश्लोकयुग्मतः ॥ वर्ण्यते यत्प्रियाः पीत्वा विरहिण्योऽनयन्दिनम् ॥ ( १ ) ॥ संभोगशैत्यं ज्यौत्स्नीषु विच्छेदौष्ण्यं दिनेष्वदात् ॥ प्रेमा ताभ्यः स्वपुष्ट्यर्थं स्वयं तद्धितयात्मकः ॥ ( २ ) ॥ एवं रात्रिषु गोप्यः स्वकान्तेन सह लब्धांगसंगाः सनृत्यगीतनर्माधरामृतादिकं पिबंत्यः संभोगरसनिमग्ना बभूवुरित्युक्तम् । इदानीं दिनेषु तेन सह लब्धमनोमात्रसंगास्तद्वेणुगानामृतमात्रं पिबंत्यो विप्रलंभरसनिमग्ना बभूवुरित्याह–तं वनं गच्छंतमनुलक्ष्यीकृत्य द्रुतानि वेगेन सह चलितानि चेतांसि यासां ताः ॥ १ ॥ एकैकया द्वौद्वौ श्लोकावन्याः प्रति गीताविति द्वादश युगलानि चतुर्विंशतिश्लोकाः । हे गोप्य इति–शृणुतेति शेषः । मुकुंद इति भक्तेर्मोक्षदत्वं सूचयंत्य आहुः ॥ ( २ ) ॥ पूर्वश्लोके यदेत्युक्तेस्तदेति लभ्यते । व्योमयानं विमानं तत्रस्था वनिता व्योमयान वनिताः । व्योम्नि नभसि यानं गतिर्येषां ते व्योमयाना देवास्तेषां वा । सिद्धो देवयोनिविशेषः । ' गुह्यकः सिद्धो भूतोऽमी देवयोनयः ' इत्यमरः । ततः विस्मयानंतरम् । काममार्गणेभ्यः स्मरबाणेभ्यः । ' मार्गणो याचके शरे ' इति मेदिनी । इत्यर्थ इति–कामपारवश्यात्तेन स्वाधीनवस्तुग्रहणवत्तासां चित्तानि गृहीतानीति भावः । अत्र मोहे । लिंगम् ज्ञापकम् । नीवी कटिवस्त्रग्रंथिः । मुच्यमानवस्त्रग्रंथिस्मरणरहिता इत्यर्थः । यत एतादृशः कृष्णोऽतो हेतोः । एवंभूतस्य वेणुवादनमोहितदेवांगनस्य । सर्वत्र युगलेषु ॥ * ॥ वृंदावने गाः संचार्य तत्रत्यतरुवल्लीमृगखगादीन्नक्तंतनस्वविरहखिन्नानाश्वासयन्स्वागमनमावेदयितुं यदा वेणुना कृष्णः संजगौ तदा तदाकर्णनेनोद्दीप्तभावा गोप्यः स्वस्वयूथस्थाः सखीः प्रत्याहुः–वामेत्यादिद्वादशयुगलानि । हे गोप्यः वामबाहुमूले कृतोऽर्पितो वामकपोलो येन सः । गीतस्यारोहावरोहयोर्गमकमयीकरणं तेनैव प्रकारेण संभवेत् । तथैव वामजंघोपरि दक्षिणजंघाधस्तटन्यासोऽपि ज्ञेयः । तेन त्रिभंगललितस्तिर्यग्ग्रीवस्त्रैलोक्यमोहन इति नामत्रयं प्रकटीबभूवेति भावः । वल्गिते नर्तिते भ्रुवौ येनेति सुबलादीन्पुरस्थितान् गानसौष्ठवेऽवधापयितुमिति भावः । ह्रस्वत्वमार्षम् । अधरेऽर्पितो न्यस्तो दत्तो वा यो वेणुस्तम् । यत्र यदेरयति । कीदृशम्–कोमलाभिरन्यजनांगापेक्षया सुकुमाराभिः ' अकर्मकठिनौ हस्तौ ' इति सामुद्रिकात्स्वांगापेक्षया त्वीषत्कठिनाभिरंगुलीभिराश्रिता मार्गाः सप्तस्वरच्छिद्राणि यस्य तम् ॥ तदा व्योमयानानां सिद्धानां वनिताः सिद्धैः स्वपतिभिः

× एतस्मिन्नध्याये ( * ) एतच्चिह्नतोऽग्रे सतोषिणी विश्वनाथव्याख्या प्रतिपद्यमवधेया ।

सहिता अपि प्रथमं तद्वेण्वीरणमवधार्याकर्ण्य विस्मिताः—अहो वेणुनादस्यैतावन्मोहनत्वमननुभूतचरं, यतोऽस्मान्साध्वीरपि मोहयति, अस्मान्पुरुषानपि स्त्रीभावयुक्तीकृत्य मोहयतीति प्रथमं विस्मययुक्तास्ततश्च सिद्धैः सहैव सलज्जाः—अस्मद्व्यभिचारमस्मत्पतयो वितर्केयुरिति तथैवास्मत्पुंस्त्वविपर्ययमस्मत्पत्न्यो वितर्केयुरिति स्वस्वपतिभ्यः सकाशात्स्वस्वपत्नीभ्यश्च सकाशाल्लज्जायुक्ता अभूवन् । ततश्च सिद्धैः सहैव कामस्य मार्गणेभ्यः समर्पितानि दत्तानि चित्तानि याभिस्ताः । आयातान् श्रीकृष्णविषयककामशरानालक्ष्य—भोः श्रीकृष्णकामशराः युष्मभ्यमेतान्यस्मच्चित्तानि दत्तानि, एतानि शीघ्रं विद्धीकुरुत अस्माभिः पातिव्रत्याय जलांजलिर्दत्तः, कृष्णोऽस्माभिः सह कृपया रमतामिति । तथास्माभिरपि स्वपुंस्त्वं देवत्वं च त्यक्तं कृष्णोऽस्मान्सद्य एव स्वयोगबलेन गोपस्त्रीकृत्यास्माभिस्सह रमतामिति समर्पितपदव्यंग्यं ज्ञेयम् । ततश्च सिद्धैः सहैव कश्मलं कामशरपीडया मोहं मूर्छां ययुः प्रापुः । कश्मलस्यानुभावमाह—अपस्मृता न स्मृताः स्खलिता अपि नीव्यो याभिस्ताः । सिद्धैस्तु सहैव शिथिलवस्त्रबंधकेशबंधादिका बभूवुरित्यर्थः । समासांताभाव आर्षः । अकस्माद्देवीनां देवानां च यद्येतादृशावस्थास्तर्हि वयं मानुष्यस्तत्रापि गोप्यस्तत्राप्येकनगरस्थास्तत्रापि लब्धांगसंगाः कथं तं विना स्थास्यामस्तदुत्तिष्ठत सख्य एतान्दग्धमुखान्पश्यतोऽपि पतिश्वशुरादींस्तिरस्कृत्य केनचिन्मिषेण वृन्दावनं प्रविश्य प्राणप्रेष्ठेन सार्द्धं विलसाम इति ध्वनिः प्रतियुगलांतमेवानुवर्तनीयः ॥ अत्र **तोषिणी**—जयति व्रजदेवीनामपूर्वा महिमावली ॥ पदालंबलवादेव तद्गीतं व्याचिकीर्षति ॥ ( १ ) ॥ अथ परःकोटीनां यूथशः एकैकशश्च भिन्नानुभवभावानामेकस्यां सभायां दुर्घटयुगपत्सर्वसमावेशानामत एव व्रजदेव्य इति तव सुतः सतीति नानासंबोधनीयजनानां प्रतिदिनलीलासामान्यवर्णनपराणां संक्षेपेण वाक्यसंग्रहोऽयमध्याय इति । यद्यपि न मिथो वाक्यसंगतेरपेक्षा तथापि श्रीमता कवींद्रेण प्रातरादितत्तल्लीलाक्रमत एव तत्तत्संग्रहः कृत इति क्वचिद्द्वित्रादिकमपि युगलमेकसमागतमिति च संगतिः कर्तव्या । तत्र प्रतिनियतयुगलतया वर्णनं प्रतियुगलं लीलातत्प्रयोजनयोः पूर्वापरीभावेनेत्यत्रैवमभिप्रयंति । यद्यपि श्रीकृष्णलीलैव केवलपुरुषार्थस्तत्पोष्यजनस्तु तदनुगततयैव तथापि तद्युगलतां विना न सुखलाभ इत्यहो कष्टमस्माकमेव तादृश्यां लीलायां प्रवेशो नास्तीति तदेवं गृहान्निस्सरणमारभ्य तत्रागमनावधि श्रीभगवतो वन्यक्रीडाः कदाचित्काश्चन काश्चिदनुभूय यथास्वं यथानुभवं गायंत्यस्तत्र चादौ प्रातर्बहिर्भूय वनवर्त्मनि तेन वेणावीरिते सति सिद्धवनितानां सायं गृहं प्रविष्टं तमपश्यंतीनां तद्दिदृक्षया नक्तं व्योम्नि स्थितानां तद्वाद्यस्य तद्वादनमुद्रया तदीयसौंदर्यलीलाविशेषस्य च तासां व्योमयानत्वादनावृतत्वेन प्रागेवानुभवात्, श्रीभगवतश्च वामबाहुकृतवामकपोलत्वेन प्रायो वक्रोर्द्ध्वदृष्टिभंगितया स्वविषयकतदृष्टिमननाच्च प्राधान्यतस्तासामेव प्रेममोहमाहुः—वामेति युगलेन । वामशब्दस्यार्थांतरेण मनोहरताव्यंजनात्स एव प्रयुक्तो न सव्यादिशब्दः । वामबाहुकृतवामकपोलत्वेन श्रीग्रीवाया ईषत्परिवर्तनं तिर्यक्त्वं च तया वक्रोर्द्ध्वावलोकनं तथा वेणुवादनेऽभिनिवेशस्तथा सुप्रसिद्धत्रिभंगानुसारेण श्रीवामजंघोपरि श्रीदक्षिणजंघा तस्य न्यासश्च ज्ञेयः । वलितभ्रुरिति ह्रस्वत्वमार्षम् । दीर्घांतोऽपि पाठः क्वचित् । अधरेऽर्पितो यो वेणुस्तम् । यद्वाअधरेऽर्पितो न्यस्तो यस्मिन्दत्तो वा यस्मै स चासौ वेणुश्चेति विग्रहस्तम् । सदा तस्य संयोगाभिप्रायेण । इदञ्च निष्ठायाः पूर्वनिपाताभावार्थमाहिताग्न्यादौ पठनीयम् । बिम्बादिरूपकाप्रयोग आरुण्यमाधुर्यगुणस्फूर्तावपि तत्संबंधमात्रेणैव वेणुवाद्यस्य मोहनत्वबोधनाय, किं वा—सदा वेणुसंसर्गेण तस्मिन्नीर्ष्योदयात् । “ अकर्मकठिनौ हस्तौ पादौ चाध्वनि कोमलौ ” इति महापुरुषलक्षणत्वेऽपि कोमलेति प्रयोगः स्नेहेन, अन्यांगापेक्षिककाठिन्यांशमपेक्ष्य वस्त्वंतरापेक्षिककोमलांशस्फूर्तेः । तथा मात्सर्येण तस्यातिकठिनमुरलीस्पर्शानौचित्याभिप्रायात् । अतोऽस्मासु कोमलांगीष्वेव तत्स्पर्शोऽपि युक्त इति गूढोऽभिप्रायः । एवं सहजमहासौंदर्यमयस्यापि तस्य वेणुवादनमुद्राविशेषेण सौंदर्यविशेषो दर्शितः । तेन च वेणुवाद्यस्य महामोहनत्वमेवाभिप्रेतम् । हे गोप्य इति—परमविदग्धाभिरतत्तत्त्वं युष्माभिरेव बोद्धुं शक्यते न त्वन्यैर्जनैरिति भावः । यत्र यदेति वक्ष्यमाणमोहप्राप्तौ तत्कालजातत्वं तस्यां वेण्वीरणैकहेतुत्वञ्चावश्यकत्वादिकमप्यभिप्रेतम् । एवमग्रेऽपि ॥ व्योमयानं विमानं तद्वनिता देव्यः । सिद्धैस्तद्यानैर्देवैरित्यर्थः । अपूर्वत्वात्तैरपि सह विस्मिता बभूवुः । अतस्तैः स्वपतिभिर्भमहद्भिश्च सह वर्तमाना अपि काममार्गणैः कर्तृभिः समर्पितं चित्तमर्थात्कृष्णाय यासां तथा भूता बभूवुः, ततः सलज्जा बभूवुः । एवं लज्जावत्योऽपि तन्मार्गणेन मोहपर्यंतां दशां प्रापुः । यद्वा—अपस्मृताः स्खलिता अतिविस्मृता नीव्यो याभिस्तादृश्यो बभूवुः । अन्यत्तैः । यद्वा--विस्मयानंतरं स्त्रीस्वभावेन कामोदयात्सलज्जा बभूवुः । ततश्च काममार्गणैः समर्पितं बलादाच्छिद्य श्रीकृष्णायार्पितं चित्तं यासां तथाभूताः सत्यो मोहं ययुः । तत्रास्तां ताव

---

१ अपस्मृतनीव्य इत्यत्र ‘नद्यृतश्च’ इति कबभाव इत्याशयः ।

हंतचित्रमबलाः शृणुतेदं हारहास उरसि स्थिरविद्युत् ॥ नंदसूनुरयमार्तजनानां नर्मदो यर्हि कूजितवेणुः ॥ ४ ॥
वृंदशो व्रजवृषा मृगगावो वेणुवाद्यहृतचेतस आरात् ॥ दंतदष्टकवला धृतकर्णा निद्रिता लिखितचित्रमिवासन् ॥ ५ ॥

हंत हे अबला इदं चित्रं शृणुत । हारहासो हारवद्विशदो हासो यस्य सः । यद्वा वेणुवादनेनाधोवदनेन हसतो हारेषु स्फुरन्हासो यस्य सः । यद्वा हारवद्वक्षसि शोभमानो हासो यस्य सः । यद्वा हाराणां हास इव विशदा स्फूर्तिर्यस्मिन्नुरसीति । तस्मिन् उरसि स्थिरा विद्युदिव लक्ष्मीर्यस्य सः । यर्हि यदा कूजितवेणुर्नादितवेणुर्भवति ॥ ४ ॥ तदा व्रजे वृषा मृगा गावश्च वेणुवाद्येन हृतानि चेतांसि येषां ते । आराद्दूरादेव दंतैर्दष्टाः कवला ग्रासा यैस्ते धृता उत्तंभिताः कर्णा यैस्ते निद्रिता इव लिखितचित्रमिव चासन् । अविदुषां तिरश्चामिदमतिचित्रमित्यर्थः ॥ ५ ॥

न्मानसविकारमात्रे लज्जा यतस्तेषामग्रतोऽपस्मृतनीवीकाश्च बभूवुरित्यर्थः । अतो यत्र देव्योऽपि मुह्यंति तत्र का वयमिति भावः ॥ २ ॥ ३ ॥ ( यु० १ ) ॥ हंतेति हर्षे । हारवन्मुक्तावलिवद्विशदः श्वेतो हासो यस्य स तथा ' हारो मुक्तावलौ युधि ' इति मेदिनी । ' विशदश्वेतपांडुराः ' इत्यमरः । हासस्य वस्तुतोऽमूर्तत्वात्तत्र विशदत्वारोपणमनुचितमिव मत्वाह--यद्वेति । कदाचिन्मुक्तावल्यसत्त्वे विशेषणवैय्यर्थ्यं मत्वाह--वक्षसि । हास्यावसरे दंतदीधितिपुञ्ज एव हारवद्भातीत्यर्थः । संभवत्वादुरोविशेषणं शोभनमिदमिति मत्वाऽऽह--यद्वेति । हाराणां हास इवेत्युत्प्रेक्षैव हारदीप्तेर्हासत्वेनोत्प्रेक्षणात् । एवमेव विद्युतो लक्ष्मीत्वेनोत्प्रेक्षणमेव । अयमित्युक्तिर्बुद्धिसन्निहितत्वात् । आत्मविरहार्तानां नर्मदः परिहासदः । आनंदजनक इत्यर्थः । " द्रवकेलिपरीहासाः क्रीडा खेला च नर्म च " इत्यमरः ॥ ( ४ ) ॥ वृंदंवृंदमिति वृंदशः । इह " संख्यैकवचनाच्च वीप्सायाम् " इति शस् । एकैकवृंदेन पृथक्पृथक् स्थिता इत्यर्थः । अविदुषामल्पज्ञानवतामित्यर्थः । इहाल्पार्थेन नञा समासो न त्वभावार्थकेन तेषामप्याहारमैथुनादिज्ञानदर्शनात् । इदम् ग्रासस्थितिपूर्वकं वेणुनादश्रवणम् । इत्यर्थ इति--किंचिज्ज्ञानवतां यदीयं दशा तर्हि किमस्माकं विशेषज्ञानवतीनामनवधाने वक्तव्यमिति भावः ॥ * ॥ देववनितानां विदग्धप्रवराणां का वार्ता मूढजनानामपि मोहं शृणुतेत्यन्या आहुः--हंत चित्रमित्यद्भुतादप्यद्भुतमित्यर्थः । हे अबला इति--स्त्रीणां युष्माकं पातिव्रत्यबलं कृष्णेन प्रथमत एवापहृतमिति भावः । हाराणां बलाकानामिव हासः प्रकाशो यत्र तथाभूत । उरसि मेघोपमा स्थिरा विद्युत्तत्रत्यलक्ष्मी रेखैव यस्य सः । तेन बलाकाविद्युद्भूषितकृष्णवक्षोमेघेनैव भवतीनां पातिव्रत्यनिदाघो ध्वंसित इति भावः । अत एवायमार्तजनानां युष्माकं नर्म सर्वलोककर्तृकमुपहासं ददातीति सः । कदा यर्हि कूजितवेणुर्भवति तदेत्यर्थः । वेणुनादमात्रेण शिथिलनीवीकबरीकाः प्राप्तोन्मादाः सर्वलोकहासास्पदीभूता भवत्यो भवंतीति भावः ॥ युष्माकं मानुषीणां का वार्ता तिर्यग्जातयोऽपि वेणुनादेन मूर्छिताः क्रियंत इत्याहुः--वृंदश इति । प्रतियूथमित्यर्थः । व्रजस्था वृषा व्रजस्था मृगा गावश्च दंतैर्दष्टाः कवलास्तृणग्रासा यैस्त इति तृणेषु दंतैर्दष्टेषु सत्सु तन्निगलनात्पूर्वमेवारब्धेन वेणुनादेनैव बलात्कर्णमार्गैरेव देहांतः प्रविष्टं न तु मुखमार्गेण तृणग्रासा देहांतःप्रविष्टाः । अत एव धृता उत्तंभिताः कर्णा यैस्ते । ततश्च तेन हृतानि चित्तानि येषां त इत्यत एव सर्वेंद्रियव्यापाराभावान्निद्रिता इव, तत एव तृणग्रासास्ते दन्तदष्टत्वस्थानपगमाद्भुव्यपि नो पतिता इति भावः । ततश्च प्रबलीभूतेन जाड्यसंचारिणा जनिते तस्यातिशये सति मूर्छायां च सत्यां श्वासस्यापि प्रायस्तब्धीभावाल्लिखितचित्रमिवेत्युपमान्तरं दत्तम् । तत्रापि लिखितेत्युत्कीर्णचित्रादपि लिखितचित्रस्य चमत्कारित्वातिशयविवक्षयोक्तम् । केनाप्यद्भुतचित्रकारेणाकाशपट्टे लिखितानि चित्राणीति विस्मयरसो ध्वनितः ॥ अत्र **तोषिणी**--ततो वनांतिकं गच्छन्सर्वगोगोपालसंकलनाय वन्यमृगादिहर्षणाय स्वानुव्रज्याकरश्रीगोपादीनां ससांत्वनगृहनिवर्तनाय च वेणुमेवावादयत् तत्रास्तामन्येषां वार्ता तस्योभयतो वनव्रजयोःस्थिताःपशवोऽपि मुमुहुरित्याहुः--हंतेति । हृदयस्थविस्मयचमत्कारद्योतकं तथैव साक्षाद्वदंति--चित्रमद्भुतम् । हे अबला इति--तच्छ्रवणेन प्रेमाविह्वल

बर्हिणस्तबकधातुपलाशैर्बद्धमल्लपरिबर्हविडंबः ॥ कर्हिचित्सबल आलि स गोपैर्गाः समाह्वयति यत्र मुकुंदः ॥ ६ ॥
तर्हि भग्नगतयः सरितो वै तत्पदांबुजरजोऽनिलनीतम् ॥ स्पृहयतीर्वयमिवाऽबहुपुण्याः प्रेमवेपितभुजाः स्तिमितापः ॥ ७ ॥

किं च अचेतनासु सरित्सु तदतीव चित्रमित्याहुः । हे आलि सखि बर्हिणस्य मयूरस्य स्तबका मयूरपिच्छा धातवो गैरिकादयश्च पलाशानि पल्लवाश्च तैर्बद्धश्चासौ मल्लानां परिबर्हः परिकरस्तं विडंबयत्यनुकरोतीति तथा स मुकुंदो गोपैः सह । वेणुनेत्युपरितनमत्रापि ज्ञातव्यम् । यत्र यदा गाः सम्यगाह्वयति ॥ ६ ॥ तर्हि तदा । तद्ध्वनिश्रवणात् अनिलेनानीतं तस्य पदांबुजरजः स्पृहयंत्य इव भग्नगतयः सरितो वै निश्चितं वयमिव ता अप्यबहुपुण्या यतो न प्राप्नुवंति।केवलं प्रेम्णा वेपिताः कंपिता भुजास्तरंगा यासां ताः । स्तिमिता निश्चला आपो यासां ताः।गोप्योऽपि लोचनयोः स्तिमितजला भवंतीति ॥ ७ ॥

तयेन्द्रियादिशक्तिराहित्याभिप्रायेण । अत एव श्रृणुतेत्यवधापयंति । स्थिरविद्युदिति—वक्षस्थां रेखारूपां लक्ष्मीमेवोत्प्रेक्षंते प्रसिद्धत्वात्तु नानुवदंति । तत्र स्थिरेति चित्रत्वे कारणं, विद्युत्त्वेनोरसश्च घनत्वं व्यंजयंति । तस्याश्च नायिकात्व माशंक्य तत्रापि स्थिरत्वं विभाव्य मात्सर्यं, तथापि विद्युद्घनसहयोगेन हारहासयोर्बलाकात्वं तादृशघनत्वेन तापहारित्वं च । अत एव नंदयति जगदिति नंदस्तस्य सूनुरिति स्वभावेनानंदकत्वमुक्तम् । अत एवार्तजनानां गवादीनां मृगादीनां चानंददाता । अयमित्यधुनैव यो गृहान्निर्गतः स इत्यर्थः । साक्षात्सर्वैरनुभूयमान इति वा । कूजितेत्यादि कर्मणि क्तः । अन्यत्तैः । यद्वा—हारो मनोहरो हासो यस्य सः । यद्वा—यस्मिन्नुरसि । अन्यत्समानम् ॥ व्रजे ये निरुद्धा पाल्यमानाः शकटवाहो वृषास्ते, मृगाः कृष्णसाराः तत्संबंधेन गावो वनगामिन्यस्तदुपलक्षणत्वेनान्येऽपि तत्तज्जातयो दंतैर्दष्टा एव हृतचेतस्त्वेन न गीर्णा न चर्विता नापि त्यक्ताः कवला स्तृणग्रासा यैः । अत एव हृतचेतस्त्वेनेत्यत्र तस्या मुरल्याः शब्दांतरोत्थानभयं नेत्युत्प्रेक्ष्य दंतैस्तृणधारणे मोहभयान्मा गायेति तन्निवेदनव्यंजना च । निद्रितानामपि किंचिच्चलनादिकमप्यस्तीति तत्परिहारार्थं दृष्टांतं तरमाहुः—लिखितेति । पद्वादौ लिखितं वृषादीनां चित्रमिव लिखितग्रहणं लिखितचित्रस्योत्कीर्णचित्राच्चमत्कारकरत्वापेक्षया । एकत्वं संघट्टेनैकतामिव गता इत्यपेक्षया ॥ ४ ॥ ५ ॥ ( २ )॥ इतोऽप्यधिकमाहुः—किञ्चेति ! तत् वेणुनादाकर्णनम् । उपरितनं श्लोकेऽत्रापठितमप्यष्टमश्लोके पठितम् । अत्रापि षष्ठश्लोकेऽपि । सबलो बलदेवसहितः ॥ ( ६ ) ॥ यतः अबहुपुण्यत्वात् । सरंति चलंतीति सरित इति सारिच्छब्दार्थहानिः स्तिमिताप इत्यनेनोक्ताऽत्र ॥ * ॥ वृषमृगादीनां चेतनानां का वार्ता अचेतनानामपि वेणुश्रवणहेतुकं स्तंभं श्रृणुतेत्यन्या आहुः—बर्हिणस्य मयूरस्य स्तबकाः पिच्छानि । यद्वा—बर्हिणशब्देनैव बर्हिणपिच्छानि लक्षितानि च, स्तबकाः पुष्पगुच्छाश्च । धातवो गैरिकादयश्च, पलाशानि पल्लवाश्च, तैर्बद्धो यो मल्लानां परिबर्हः परिकरस्तं विडंबयत्यनुकरोति स्वभावत उपहसति वा सः । बलदेवसहितः स मुकुंदो गोपैर्युक्तः गाः हिहीं कालिंदि गंगे सरस्वतीति तासां नामभिर्यत्र यदाह्वयति ॥ तर्हि सरितो यमुनामानसगंगासरस्वत्याद्याः सरितोऽन्याश्च व्रजस्था अचेतना अपि चेतनां प्राप्य हन्तहन्ताहो अस्माकं भाग्यं यतस्स्नानावगाहनाद्यर्थमस्मानाह्वयति तदिदं स्वतीक्ष्णप्रवाहेण तटं भित्त्वा याम इति कृष्णपार्श्वं यियासवोऽपि भग्नगतयोऽत्यानंदजाड्येन स्वाभाविकगतेरपि स्तंभाद्विगतप्रवाहा एव भवंतीति शेषः । श्लेषेण कृष्णांगसंगसुखप्राप्त्यभावादन्यनदीकृतोपहासाच्च ऐहिकी गतिर्भग्ना, पातिव्रत्यलोपात्पारलौकिकी च गतिर्नष्टा । अहो तासामभाग्यमिति भावः । किंचिद्वाग्यं चाहुः—तस्य पदांबुजरजः अनिलनीतमनुकूलवातानीतं स्पृहयंत्यः प्राप्यापि तृप्त्यभावादेव पुनःपुनरिच्छन्तीत्यर्थः । अतो वयमिव कृष्णसंगाद्यप्राप्तिप्राप्तिभ्यामबहुपुण्या नाप्यपुण्या, अल्पपुण्या इत्यर्थः । प्रेम्णा वेपिता भुजास्तरंगा यासां ताः । अस्माकमपि भुजाः प्रेम्णा कंपंते स्तिमिता जाड्येन कठिनीभूयापि पुनरार्द्रीभूता आपो यासां ताः । वयमपि नेत्रयोस्तिमितजला जलैस्तिमिता भवामः । आहिताग्न्यादिः । समासांताभाव आर्षः । एवं वयमपि पतिभ्रात्रादिभिः कृष्णाभिसारवारणाद्भग्नगतयः लोकोपहासात्पातिव्रत्यलोपाच्चैहिकपारलौकिक

अनुचरैः समनुवर्णितवीर्य आदिपूरुष इवाचलभूतिः ॥ वनचरो गिरितटेषु चरंतीर्वेणुनाऽऽह्वयति गाः स यदा हि ॥ ८ ॥
वनलतास्तरव आत्मनि विष्णुं व्यंजयंत्य इव पुष्पफलाढ्याः ॥ प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनवः ससृजुः स्म ॥ ९ ॥

स्थावरेष्वप्यतिचित्रं दृश्यत इत्याहुः । अनुचरैर्गोपैर्देवादिभिर्वा । मुग्धानां वाक्यमादिपुरुष इवेति । अचलभूतिर्निश्चलश्रीः । वेणुना तत्तन्नाम्ना गानेन ॥ ८ ॥ तदा प्रणता भारेण विटपाः शाखा यासां ता वनगता लताः स्वस्मिन्विष्णुं प्रकाशमानं सूचयंत्य इव मधुधारा ववृषुः । स्मेति विस्मये । तरवश्च तथा तत्पतीनामपि तथैवानंद इति विस्मय इति भावः । एतानि विष्णुव्यक्तिलक्षणानि ॥ ९ ॥

गतिरहिताश्च तदंगसौरभ्यस्पृहावत्यश्च ॥ अत्र **तोषिणी**—ततो वनांतः प्रविष्टस्य मल्लवेशोचितवन्यभूषणैर्भूषितस्य गवादिजलपानाद्यपेक्षया विदूरनदीकसरोवरमयदेशगतस्य गोसमाश्वासनार्थवेणुवाद्यविशेषान्नदीनामपि भावविशेषोदयेन मोहं संभावयंति—बर्हिण इति । स वेणुवाद्यविशारदो मुकुंदः कर्हिचिद्गवां प्रथमं पानसमये यत्र यदा सम्यक्प्रीतिपूर्वकतत्तद्विचित्रनामभिराह्वयति । अप्रधान एव सहार्थे तृतीयाविधानात् । श्रीकृष्णनादपोषणार्थ एव श्रीबलादीनां नादो बोध्यते, तेन च सरितां श्रीकृष्णनिष्ठ एव भावोद्बोधो व्यज्यते । संहतो नादश्च तासां सर्वासामेव दूरगत्वात् । अत एव गा इति बहुत्वम् । ततो दूरश्रवणात्सरित इति च वक्ष्यते । आलि हे सखींति सरितां तादृशभावो विश्वासार्थम् । यद्वा—सख्येनैव स्वसादृश्यं तत्कथ्यत इति भावः । अन्यत्तैः । अथ वा—बर्हिणशब्देन कथंचिद्बर्हमेवोच्यते। स्तबकाः पुष्पगुच्छाः, पलाशाः कोमलपत्राणि । यदा हे गंगे हे यमुने हे सरस्वतीति गंगादिनाम्नीर्गाः समाह्वयतीति । मधुरतमस्वकंठेनैवाह्वयतीति विशेषो ज्ञेयः ॥ तदा सरितो माथुर्यो मानसगंगायमुनासरस्वत्याद्याः प्रकारांतरप्राप्तायोग्यतामननेनानिलमात्रप्रापितं रज एकमपि स्पृहयंत्यो लक्ष्यंते "स्पृहेरीप्सितः" इति संप्रदानत्वेऽपि रजसः कर्मत्वम् "कर्तुरीप्सिततमं कर्म" इति स्मरणादीप्सिततमत्वविवक्षया । यतस्तत्स्पृहाहेतोः स्तब्धप्रवाहतया भग्नगतयो लक्ष्यंते । सरित इत्यन्वर्थतया सततप्रवाहवत्योऽपीत्यर्थः । भग्नगतय इति श्लेषेण निजपतिसमुद्रानुसरणभंगेन लोकद्वयोपेक्षोक्ता । अतस्तादृश्योऽपि तदप्राप्त्या वयमिवा बहुपुण्या अप्रचुरशुभा दृष्टा एव लक्ष्यंते । अस्माकमिवासामपि श्रीकृष्णक्रीडाश्रयसजातीयविजातीयगणभेदासंख्यत्वेन विरलावसरत्वादिति भावः । किन्तु प्रथमतः केवलं तद्रजःप्राप्तीच्छया वेपितभुजाः प्रसारितकरा इव तरंगा यासां तादृश्यो लक्ष्यंते, पश्चात्स्तिमितापो निस्तरंगतया स्तब्धसर्वचेष्टाश्च लक्ष्यंते इत्यर्थः । अन्यत्तैः । तत्र गोपीनां लोचनयोः स्तिमितजलत्वं सदा सार्द्रत्वात् । यद्वा—सरित्स्वपामंगत्वात्स्वपक्षे स्तिमितांगा इत्यर्थः । तदेतावानुत्प्रेक्षाक्रमः, वस्तुक्रमस्तु—प्रथमं तादृशशब्दस्पर्शस्ततः प्रवाहस्तंभस्ततस्तंरगमात्रावशेषचलनत्वं ततस्तद्राहित्यमपीति । किं चोत्प्रेक्षाक्रम एवं ज्ञेयः—प्रथमं तच्छ्रवणं ततो गतिभंगस्ततस्तद्वादकालिंगनेच्छया भुजकंपस्ततस्तदप्रातिदुःखेन स्तंभस्ततस्तादृशरजोमात्रस्पृहेति । तदेवं तथातथा भूता अपि तन्मात्रं स्पृहयंत्य एव लक्ष्यंते न तु प्राप्तवत्यः, आनिलानुकूल्यात्सुलभत्वात् । यतो वयमिवाबहुपुण्या इत्यन्वयो ज्ञेयः । तदेवमचेतनानामप्येवं वार्ता को वा नामास्माकं दोष इति भावः ॥ ६ ॥ ७ ॥ ( ३ ) ॥ मुग्धानां मूढानां साक्षादादिपुरुषत्वात्तस्यात्रेवशब्दप्रयोगोऽयुक्त एवेति भावः । केचित्तु अनुचरैः सनकाद्यैः । अचलभूतिः स्थिरश्रीः 'भूतिः श्रीजन्मभस्मसु' इति यादवः । वनचरो जलशायी । गिरिर्वायुस्तस्य तटवद्विशदे मुखे वर्तमाना गा वेदवाणीराह्वयति । तथा च—सनकादिस्तुतजलशायी आदिपुरुषो यथा श्रुतीराह्वयति वायुमुखेन तथा कृष्णोऽपीति पक्षः सुबोध एव । तत्र चरंतीस्तृणं भक्षंतीः ॥ ( ८ ) ॥ तथा मधुधारा ववृषुः स्म । तत्पतीनाम् लतापतीनाम् वृक्षाणामपि । तथैव लतावत् । इति भाव इति—पत्नीनामानंदं दृष्ट्वा स्वयमप्यानंदिता बभूवुरित्याशयः । एतानि प्रणति रोमांचानंदाश्रुपातादीनि । "कथं विना रोमहर्षं द्रवता चेतसा विना । विनानंदाश्रुकलया शुद्ध्येद्भक्त्या विनाशयः ॥" इत्याद्युक्तेः । पक्षे, तरवः संसारतरणशीलास्तीर्णसंसारा मुमुक्षवो मुक्ता वा । आत्मनि हृदये स्थितं

विष्णुं व्यंजयंतो अपरोक्षीकुर्वंत इव ज्ञानपुष्पेण जीवन्मुंक्त्यवस्थाफलेनाढ्याः । प्रणतस्य भारो भरणं येषां ते विटपा भुजा येषां ते, मूर्ध्नि धृतांजलिपुटा इत्यर्थः । अत एव भक्त्युद्रेकेण रोमांचितगात्राः वनेऽरण्ये रता निवृत्तिधर्ममनुतिष्ठंतः । यद्वा—वने भासि—ग्रीष्मे पंचाग्निज्वालासेवायां, वर्षर्तौ वने कानने, हिमर्तौ वने कंठदघ्नजले वसंतः । 'वनं भास्यप्सु कानने' इति यादवः । मधुधारा आनंदांबुसंततीः ससृजुः, तत्स्वभावा बभूवुरि त्यर्थः । "धारास्त्याग्रेंबुसंतत्यां सैन्याग्रेऽश्वगतिष्वपि" इति यादवः । 'सर्गः स्वभावनिर्मोक्ष—' इत्यमरः । इह वनचरशब्दसामर्थ्यान्मत्स्यकूर्मवराहादिविषयेऽप्येतौ श्लोकौ शब्दशक्तिविशारदैर्ज्ञेयौ । ग्रंथविस्तरभियोपरम्यत इति ॥ * ॥ नदीनामनादिसिद्धानामचेतनत्वेऽपि देवतारूपाणां का वार्ता, श्वःपरश्वोदृष्टजन्मनामतिनिकृष्टानामपि जडानां रसिकतां वेणुश्रवणहेतुकां पश्यतेत्यन्या आहुः—अनुचरैर्गोपैः । आदिपुरुषो नारायण इव निश्चलश्रीः तदपि वनचरः वन्यजीवेष्वनुरागादिति भावः ॥ तदा गृहस्थवैष्णवाः सस्त्रीकाः संकीर्तनश्रवणेन यथा भाववंतो भूत्वा प्रणमंति तथैव वनलताः स्त्रियस्तरवस्तत्पतय आत्मनि मनसि स्फुरंतं विष्णुं व्यंजयंत्यो ज्ञापयंत्य इवाश्रुतुल्या मधुनो मकरंदस्य धाराः ससृजुर्मुमुचुः । 'ववृषुः' इति पाठेऽश्रूणामाधिक्यम् । पुष्पेण हर्षसंचारिणा फलेन रतिस्थायिना च विराजमानाः, प्रणता भारेण विटपाः शाखा यासामित्यनुभावः प्रणामः । प्रेम्णा हृष्टा रोमहर्षयुक्तास्तनवो येषां ते इति रोमांचः ॥ अत्र **तोषिणी**—ततो गाः पाययित्वा स्वयमपि पीत्वा ताभिः सह तरुच्छायां पर्वतभूमिमवगाह्य दरस्वाच्छंद्यास्ताश्चारयंस्तत्रतत्र निजचरितमयं सखिगीतं शृण्वन्न वधानेन दूरगतास्ताः स्वयमेव वेणुनाजुहाव । यत्र च तत्रास्तां स्वस्वाधिष्ठातृरूपेण परमदेवीनां नदीनां वार्ता, तथान्येषां तत्रत्यानां जंगमजातीनाम् । अहो स्थावरजातीनामप्येतादृशत्वमित्याहुः—अन्विति । अनुचरैः सदा संगिभिर्गोपैरिति प्रणयविशेषो दर्शितः । तत एव सामिति सम्यक्तया सर्वांशतः प्रेमविशेषतश्चोत्तमप्रकारेणेत्यर्थः । अन्विति—अनुक्रमेण व्यंजितमातापित्रादिस्नेहानुबंधेन जन्मादिलीलाप्रबंधेनेत्यर्थः । यद्वा—सह भावेन सर्वैर्मिलित्वेत्यर्थः । यद्वा—तत्समीपवर्तित्वेन प्रत्येकस्वस्ववैदग्धीज्ञापनपूर्वकत्वेनेत्यर्थः । तादृशतया वर्णितं सकौतुकं रसभावालंकारगानतालाभिनयादिप्राचुर्येण प्रस्तुतं वीर्यं तत्तत्प्रभावमयं चरितं यस्य सः । असा धारण एव चासावित्याहुः—आदीति । यद्वा—आदिपुरुष आदिनारायणो यथा तथैवाचलश्रीरपि वनचर इत्यादिनान्वयः । तेन च परमविनोदित्वादिकमुक्तं, दृष्टांतश्च तादृशत्वनिश्चयार्थः । सर्वोत्तमायामपि तस्यैवादि पुरुषतायामिवशब्दप्रयोगश्चासां तादृशकेवलतन्माधुर्यमयभावविशेषस्वभावेनाननुसंधानात् । अचलश्रीत्वनिर्देशस्तु तस्य च्युतिरहितोदित्वरासमोर्द्ध्वतत्तत्संपदनुभवात् । एतदचलभूतित्वमेवोत्तरं दर्शयिष्यते । वनचरः वनेषु चरन्नित्यर्थः । इति गवामदृश्यता सूचिता । वस्तुतस्तु नित्यवृंदावनविहार्येव सन्नचलविभूतिरित्यर्थः । गिरितटेषु विषमप्रदेशेषु चरंतीरिति परिश्रांतिः सूचिता । अत एव वेणुनादेनैव समाह्वयति । स गोपचूडामणिर्विचित्रतदाह्वानचतुर इत्यर्थः । हि एव यदैव । वनेति सप्तम्या लुक्छांदसः ॥ तदा वने यावत्यो लतास्ताः सर्वा अपीत्यर्थः । श्लेषेण वन्यत्वात्तत्रापि लतात्वाद्वैदग्ध्यादिरहिता अपीत्युक्तं, तथा वने यावंतस्तरवस्तावंतश्च तत्र लिंगव्यत्ययेन व्यंजयंत इति बोद्धव्यम् । लतानामादौ निर्देशः स्त्रीत्वेन स्वतुल्यभावप्राधान्यविवक्षया । विष्णुमिति—सर्वत्र स्फुरद्रूपत्वाद्व्यापकत्वेन प्रवेशशीलत्वेन वा वर्तमानतया श्रीकृष्णमित्यर्थः । तमात्मनि स्फुरंतं व्यंजयंत्य इवेति भावपरवशचेष्टयैव व्यंजनेन स्वयमेव दृष्टांतगर्भश्लेषेण विष्णुं श्रीनारायणमिव तमित्यर्थः । दृष्टांतव्यंजना च आदिपुरुष इत्युक्तेः स्पष्टीकरणाय । तत्र दृष्टांतपक्षे लतातरवः स्त्रीपुरुषजातयः पुष्पफलाढ्याः 'यस्यास्ति भक्तिर्भगवत्यकिंचने' इति, "सर्वं मद्भक्तियोगेन मद्भक्तो लभतेंजसा" इति प्रमाणेन सर्वसाध्यसाधनसंपन्नास्तथापि प्रणतभारविटपाः 'नेमुर्निरीक्ष्य परितृप्तदृशो मुदा कैः' इति चतु: सनादिवन्नम्राः । मधुधारा अश्रूणि । दार्ष्टांतिकपक्षे लतातरुत्वादिमिषेण तत्तद्रूपा इत्यर्थः । तत्रांकुरोद्भेदमिषेण हृष्टतनवः । तत्तच्च "अस्पंदनं गतिमतां पुलकस्तरूणाम्" इत्यादिभिः श्रीगोकुले प्रसिद्धमेव । प्रेमबाष्पेति पक्षद्वयेऽपि सर्वत्र संबंधनीयम्, समासप्रविष्टस्यापि वा प्रेमशब्दस्यार्थवशादन्यत्र संबंधः । ववृषुर्निरंतरं बहुशोऽमुंचन् । ससृजुरिति सार्वत्रिकमूलपाठेऽपूर्वत्वेन प्रवर्तयामासुः । यद्वा—मधुनो धारा यासु तथाभूताः सत्यः

दर्शनीयतिलको वनमालादिव्यगंधतुलसीमधुमत्तैः ॥ अलिकुलैरलघु गीतमभीष्टमाद्रियन्यर्हि संधितवेणुः ॥ १० ॥
सरसि सारसहंसविहंगाश्चारुगीतहृतचेतस एत्य ॥ हरिमुपासत ते यतचित्ता हंत मीलितदृशो धृतमौनाः ॥ ११ ॥

किं च सरसि कमलवनेषु विहरतां पक्षिणामपि मनआकर्षणं तद्गीतं किं पुनरन्येषामित्याहुः । दर्शनीयतिलक इति । दर्शनीयस्तिलको यस्य । दर्शनीयानां सुंदराणां मध्ये मुख्य इति वा । वनमालासु या दिव्यगंधा तुलसी तस्या मधुना मत्तैरलिकुलैरलघु उच्चैरभीष्टमनुकूलं गीतमाद्रियन्नादरेण गृह्णन् यर्ह्यधरे संधितवेणुर्भवति ॥ १० ॥ तर्हि ये सरसि सारसा हंसा अन्ये च विहंगास्ते चारुणा गीतेन हृतचेतस एत्य तत आगत्य हरिमुपासताभजन् । तत्समीपे उपविविशुर्वा । हंतेति विषादे ॥ ११ ॥

प्रेम ससृजुः । सार्वदिकेषु च लोकेषु स्ववृत्तांतेन श्रीकृष्णप्रेम विस्तारयामासुरित्यर्थः । तदेवमुभयत्र विष्णुत्वं तद्व्यक्तिचिह्नानि च व्याख्यातानि ॥ ८ ॥ ९ ॥ ( ४ ) ॥ अन्यदद्भुतमाहुः—किं चेति । तद्गीतम् कृष्णवेणुगीतम् । तिलको भल्लाकृतिपुंड्रविशेषः । तदुक्तम्—" नासाग्रात्केशपर्यंतमूर्द्ध्वपुण्ड्रमुदाहृतम् । अधो भल्लाकृतियुतं कृष्णधार्यमतिस्फुटम् ॥ " इति वैष्णवशास्त्रे । दर्शनीयतिलकास्त्वन्येऽपि सन्तीत्यरुच्याह—दर्शनीयानामिति । " तिलको द्रुमभेदाश्वरोगेषु तिलकालके । सौवर्चले प्रधाने च विवरणे च विशेषके ॥ " इति हलधरः ॥ ( १० ) ॥ अन्ये च चक्रवाकप्लवकारंडवादयः । हृतचेतस आकृष्टबुद्धयः । यतचित्ता एकाग्रमनसः । मीलितदृशोऽर्द्धोन्मीलितनेत्राः । धृतमौनास्त्यक्तनिजनिजारावाः । ततः सरसः । उपासनपदस्योभयार्थत्वादाह—तत्समीप इति ॥ * ॥ गृहारामाणामिव तरुलतानां वैष्णवतामुक्त्वा आत्मारामाणामिव हंससारसादीनां वेणुश्रवणहेतुकां विष्णूपासनामाहुः—दर्शनीयं द्रष्टुमर्हं तिलकं गैरिकादिमयं यस्य सः । दर्शनीयेष्वतिसुंदरेषु मध्ये तिलकतुल्य इति वा । वनमालासु पंचवर्णपुष्पपत्रमयीषु दिव्यगंधा या तुलसी तस्या मधुना मत्तैरलिकुलैः, मत्तत्वादेवासंकुचद्भिः । अलघु गीतम् उच्चैर्गीतम् । ननु च कमलमालतीनागकेशरादिपुष्पाण्येव लोकाः सुसौरभत्वेन ख्यापयंति, न तु सर्वतो माहात्म्येनाधिकामपि तुलसीम्, उच्यते—तुलस्या गंधः कश्चित्प्राकृतलोकैर्ग्राह्योऽप्यल्पतर एव, अप्राकृतलोकैस्तु ततोऽधिकः, भगवन्मालाधिकारिभृंगैस्तु ततोऽप्यधिकोऽप्यसाधारणः, सर्वाधिकतमस्तु भगवन्नासिकैकमात्रवेद्य एव अन्यत्र योगमाययावरणात् । तदुक्तं वैकुंठवर्णने—" गंधेऽर्चिते तुलसिकाभरणेन तस्या यस्मिंस्तपः सुमनसो बहु मानयंति " इति । अभीष्टमिति—वेणुगानारंभे केन स्वरेण गेयमिति सति तदैव मिलितानां भ्रमराणां हुंकारे वृत्ते साधुसाधु भ्रमर एष एव स्वरो गृह्यत इत्याद्रियन्सम्मानयन्यर्हि अधरे संधितवेणुः सम्यग्धृतवेणुर्भवति, संधानं संधा सा जाता अस्येति संधित इतच्प्रत्ययांतः ॥ तदा हरिमेत्य सरसः सकाशात् हरिसमीपमागत्य तमुपासत दर्शनश्रवणमननैरभजन् । मीलितदृश इति दृङ्मीलनं रसास्वादानुभावः ॥ अत्र **तोषिणी**—तदेवं मल्लवेषं प्राप्तत्वेन पूर्वं मल्ललीला सूचिता । ततश्च गानश्रवणेन भ्रमणं, संप्रति तु वेषांतरादिवर्णनेनेदं लभ्यते । ततः परिश्रांत आसन्ने मध्याह्ने क्वचिन्महासरसि स्नात्वा द्रुतरचिततिलकवनमालामात्रस्वल्पवन्यवेषपूर्वकं तैः सह तत्कालोपयुक्तवन्यभोजनपूर्वकं च प्रथितोच्चदेशे महातरुतलशिलायामुपविश्य गोसंभालनाय प्रस्थापितेषु सखिषु नूतनवनमालाकृष्टभ्रमरमात्रपरिवारतया कृततदवधानः सन्नेवं वेणुवाद्यविनोदेनारमत इति वर्णयंत्यः—तत्र चास्तां सर्वत्र विश्वस्तानां स्थावराणां वार्ता, तद्विपरीतानां पक्षिणामपि श्रूयतामित्याहुः—दर्शनीयः सर्वदैव द्रष्टुं योग्यः सततमनोहरो गैरिकादिमयस्तिलको यस्य सः। दिव्यातिदिव्यपुष्पगणवनमालायामपि दिव्यः सर्वोत्तमो गंधो यस्याः सा तुलसीत्यलिकुलानामाकर्षणे हेतुः । अत एव तन्मधुनोऽपि तादृशत्वं दर्शितं, मदस्य चालिकुलैरित्यत्यंतसंकीर्णताशंकापरिहाराय पर्यायेणैव तत्सान्निध्यं बोद्धव्यं बलिभिर्दुर्बलानामपसारणात् । मत्तत्वादेवालघु तस्मादेव वैशिष्ट्यं च ज्ञेयम्—अभीष्टमिति । स्वजात्यनुसारेण ते यद्यद्गायंति तदेव तस्य परमकौतुकत्वादनुकूलमित्यर्थः । यद्वा—तेषां श्रीवृंदावनसंबंधिनामलौकिकत्वात्तस्य यदायदा यद्यदभीष्टं तदातदा तत्तदेव विचित्ररागेण गायंतीति तथोक्तम् । अत्र चाभीष्टमिति सप्रणयेर्ष्यम्—संत्येव विचित्राणि तदभीष्टानि किं त्वस्मत्संबंधं विनेति भावः । अभीष्टत्वादेवा

सहबलः स्रगवतंसविलासः सानुषु क्षितिभृतो व्रजदेव्यः ॥ हर्षयन्यर्हि वेणुरवेण जातहर्ष उपरंभति विश्वम् ॥ १२ ॥
महदतिक्रमणशंकितचेता मंदमंदमनुगर्जति मेघः ॥ सुहृदमभ्यवर्षत्सुमनोभिश्छायया च विदधत्प्रतपत्रम् ॥ १३ ॥

मेघोऽपि हरिं सेवत इत्याहुः । सहबल इति । भो व्रजदेव्यो गोप्यः सहबलः सरामः कृष्णः स्रग्भिर्निर्मिताभ्यामवतंसाभ्यां कर्णभूषणाभ्यां विलासो यस्य । यद्वा मुक्ताफलस्र गापीडेन विलासो यस्येति । क्षितिभृतः सानुषु गिरेस्तटेषु वर्तमानः स्वयं जातहर्षो विश्वं हर्षयन्यदावेणुर वेणोपरंभति निनादयति । नादेन पूरयतीत्यर्थः ॥१२॥ तदा मेघो महतः कृष्णस्यातिक्रमणे शंकितं चेतो यस्य स न पुरतो याति न पुनरुपरि अतियाति न चोच्चैर्गर्जति ।किं तु तत्रैव स्थितः सन्वेणुरवमनु मंदंमंद गर्ज्जति । किं च सुहृदं विश्वार्तिहरणादिसाम्यात्सुहृत्सखा कृष्णस्तं सुमनोभिरभ्यवर्षत् । अदृश्यैर्देवैः क्रियमाणं कुसुमवर्षं मेघे कल्पयित्वोक्तम् । तुषारो वा कुसुमतया कल्पितः स एव वा देवतारूपो ऽभ्यवर्षदिति । प्रतपादातपात्त्रायत इति प्रतपत्रं छत्रं तच्छायया कुर्वन्निति ॥ १३ ॥

द्रियन् यर्हि संधितवेणुरिति यदा तदयिस्वरोचिततद्गानारंभमात्रमित्यर्थः ॥ तदैव सरसि तस्मिन् स्थिता ये ते सर्वेऽपीत्यर्थः । विहंगाश्चक्रवाकादयः । एत्य तद्गीताभिमुखमागत्य । हरिं मनोहरस्वभावतया तथा प्रसिद्धं श्रीकृष्णमुपलक्ष्यीकृत्याऽऽसत, तेऽनंताः सुखविहारपरा अपि । यद्वा–परमभागधेयाः । तत्र तेषामानंदमूर्च्छामाहुः–यतचित्ता इत्यादिना । हंत खेदे । तथा निजाभीष्टलाभाद्विस्मये वा । हारिमिति पूर्ववद्दृष्टां तगर्भः श्लेषः । ततः पक्षे हरिं विष्णुमुपासताभजंत । उपासनालक्षणं–यतेत्यादि ॥ १० ॥ ११ ॥ ( ९ ) ॥ अन्यदाहुः–मेघ इति । स्रग्भिः पुष्पैः । अप्राप्तरत्नैर्विशेषतः पुष्पालंकारा ध्रियंते कृष्णस्तु न तादृश इत्याह–यद्वेति । मुक्ताफलानां स्रग्भिः पंक्तिभिः कृतेनापीडेन मुकुटेन विलासो लीला यस्येति " स्रक्पुष्पे पुष्पमालायां रज्वालिरचनासु च " इति निरुक्तेः । "अवतंसो न स्त्रियां स्यात्कर्णपूरे च शेखरे " इति मेदिनी । " विलासो हारभेदे स्याल्लीलायामपि पुंस्ययम् " इति मेदिनी । स्वयं जातहर्षः स्वाभाविकानंदवान्, न तु भूषणवस्त्रादिधारणजानंद इत्यर्थः । उपाद्रम्भतेः परस्मैपदमार्षम् । इत्यर्थ इति–धातूनामनेकार्थत्वान्निनादेऽपीति भावः ॥ ( १२ ) ॥ पुरतोऽग्रे । किं तु अपि तु । तत्रैव यत्र कृष्ण इत्यर्थः । न केवलं स्थित इत्याह–किंचेति । मेघो हि वर्षणेन तापदुर्भिक्षादिनाशकरत्वाज्जगदार्तिहरः, श्रीकृष्णस्तु दुष्टनाशकत्वेन तथेति साम्यम् । कुसुमतया स्पर्शसाम्येन कल्पितः । स एव मेघ एव, कामरूपत्वान्मेघानाम् " जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः " इति कालिदासोक्तेः । ' विपूर्वो धा करोत्यर्थे ' इति व्याडयुक्तेर्विदधत्कुर्वन्नित्यर्थः ॥ * ॥ भूमिष्ठानामानंदमनुवर्ण्याकाशस्थानां जडानामपि वेणुनादहेतुकं तं वर्णयति–सहबलः सहचरसैन्यसहितः । स्रग्भिश्चूडावक्षःस्थलव र्तिनीभिः, अवतंसाभ्यां कर्णवर्तिनीभ्यां च विलासः शोभा यस्य सः । सानुषु गिरेर्नितंबेषु स्थितः स्वयं वेणुरवेण जातहर्षो विश्वं यर्हेषन् हर्षयितुं यदा उपरंभति । रलयोरैक्यादंतर्भावितण्यर्थत्वाच्च वेणुरवमुपलंभयत्यास्वाद यतीत्यर्थः । अत्र कृष्णस्य गिरिनितंबवर्तिमेघत्वे स्रगवतंसानां बलाकात्वं, पीतांबरस्य विद्युत्त्वं, वेणुरवस्य वृष्यमाणसुधारसासारत्वं गम्यम् ॥ तदा मेघ आकाशस्थो महदतिक्रमेण महतः सतः सकाशादतिश्रेष्ठस्य कृष्णमेघ स्यातिक्रमणशंकितचित्तः मंदंमंदमनुगर्जति, वेणुरवस्यानुकूल्येनैव प्रतिकूलो नेत्यर्थः । सुहृदम् विश्वार्तिहरणकर्मवर्णसाम्यात्सखायम् । सुमनोभिः सूक्ष्मपुष्पतुल्यैर्हिमकणैः, अभि परितः सूर्यातपनिवृत्त्यर्थमवर्षत् ॥ अत्र **तोषिणी**–ततश्च मध्याह्ने सखिभिरानीतैः स्रगवतंसादिविचित्रवेशैर्विलसन्, गवामनुरोधेन निश्छायेष्वपि गिरेः समभूभागे भ्रमन्, मेघच्छायेच्छया मल्लाररागं गायन्, श्रीबलादिसखिभिः प्रतिध्वनिभृद्गिरिसानुभिस्तत्तत्प्रतिध्वनि भृद्विश्वेन च कृतानुगानस्तादृशतदिच्छया स्वल्पाकर्षणप्रयोगात्तावन्मात्रमेघागमनेन मंदमात्रगर्जनजनितवाद्यस्ततुमुलशब्देन स्वयमपि हृष्टो विश्वमपि हर्षयन्, अतएव मेघाऽऽच्छन्नदेवादिभिः कृतपुष्पवृष्टिस्तच्छायायां विक्रीडति स्म । तदेत

विविधगोपचरणेषु विदग्धो वेणुवाद्य उरुधा निजशिक्षः ॥ तव सुतः सति यदाऽधरबिंबे दत्तवेणुरनयत्स्वरजातीः ॥ १४ ॥
सवनशस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः ॥ कवय आनतकंधरचित्ताः कश्मलं ययुरनिश्चिततत्त्वाः ॥ १५ ॥

अपि च महदेतदाश्चर्यमित्याहुः । विविधेति । हे सति यशोदे तव सुतो नानागोपक्रीडासु विदग्धो निपुणो वेणुवाद्ये विषये निजैव शिक्षा यासु ताः । स्वोत्प्रेक्षिता न त्वन्यतः श्रुता इत्यर्थः । स्वरजातीर्निषादऋषभादिस्वरालापभेदाननयदुन्नीतवान् ॥ १४ ॥ तत्ताः स्वरजातीः सवनशो मंद्रमध्यमतारभेदेन यतो गीतध्वनिरागतस्ततश्चानता कंधरा चित्तं च येषां ते उपधार्य समाकर्ण्य कवयः कोविदा अपि न निश्चितं तत्त्वं तद्भेदो यैस्ते कश्मलं मोहं ययुरिति ॥ १५ ॥

ह्लीलास्फूर्तियुक्तानां तासामभिप्रायेणावतारिकेयम्—अहो आस्तां पृथक्पृथक्तदुल्लेखः विश्वस्याप्यानंदो दृश्यतां तत्र चान्येषां का वार्ता दूरस्था चेतनाचलस्वभावस्यापीति वर्णयंत्यस्तद्रूपगुणचेष्टाभिः श्रीकृष्णेन सौहृद्यमेव संभावयंति—सहबल इति । श्रीबलभद्रेण सहित इत्युपलक्षणं सख्यंतराणाम् । सखिसैन्येन सहित इति वा । विलासो विनोदः । क्षितिभृतः प्राधान्येन श्रीगोवर्धनस्य कदाचिदन्यस्यापि सानुषु समभूभागेषु, तत्र यौगिकार्थस्तु तत्तत्प्रशंसासूचकः । अस्यैव क्षितिभृत्त्वं युक्तमिति भावः । हे व्रजदेव्यः परमदिव्यगणस्पृहणीयसौभाग्यस्य व्रजजनस्यापि मध्ये देव्यो दिव्यत्वेनाभिमता इत्यर्थः । अतः परमवैदग्धी च सूचिता । अतस्तद्वेणुगानतत्त्वं युष्माभिरेवावधार्यत इति भावः ॥ तदेवं सपरिकरस्य तस्य विश्वस्यापि परमहर्षे सति नूनं मेघोऽपि प्रहर्षेणोच्चैर्गर्जितुमिच्छन्नपि महतः श्रीकृष्णस्यातिक्रमेण निजोच्चशब्देन तद्वेणुरवाच्छादनापराधस्तस्मिन्शंकितचेताः सन्ननुकूलतया तद्गानपोषणायेत्यर्थः । मंदंमंदं गर्जति परिश्रांतं च मत्वा तमप्याप्याययतीत्याहुः—सुहृदं तद्वर्णाद्यनुकारात्सखायं श्रीकृष्णम् अभिलक्ष्यीकृत्य सुमनोभिः करणभूतैरभ्यवर्षत् । अभ्य पिबादित्यर्थो वा । गर्जनस्य वर्तमानप्रयोगेण पौनःपुन्यं, वृष्टेरतीतप्रयोगेण सुवृत्तत्वं बोध्यते । किं कुर्वन्—छायया तदुपरि छत्रं विदधत् । छायां कुर्वता स्ववपुषेत्यर्थः । अन्यत्तैः । तत्र स्रग्भिरिति प्रथमार्थे, खंडितनाना वर्णपुष्पदलरचितांतरंतःसूक्ष्मसूक्ष्मतरसूक्ष्मतममंडलमयीभिः श्रेणिभिरित्यर्थः । निनादयतीति शब्दार्थाय रमेरंतर्भूतण्यर्थतांगीकारः । परस्मैपदं नुम् चार्षम् । यद्वा—स्रग्भिरवतंसाभ्यां च विलासो यस्य । यद्वा—स्रग्भिरवतंसो मौलिर्विलासश्च विविधा क्रीडा यस्य सः । उपरंभति 'रम—राभस्ये' इत्यस्मात् । कौतुकीभवतीत्यर्थः । मंदमंदामित्यस्यावर्षदित्यनेनाप्यन्वयः । श्लेषेण सुमनोभिरिति शोभनमनोवृत्तिभिः छायया च निजदेहेन मंदमंदगर्जनाद्वाचापीत्येव त्रिधा सेवाप्युत्प्रेक्ष्या ॥ १२ ॥ १३ ॥ ( ६ ) ॥ अपि च अन्यच्च । स्वेनैवोत्प्रेक्षिताः कल्पिताः । इत्यर्थ इति—एतस्यैव सर्वशास्त्रयोनित्वम् । "शास्त्रयोनित्वात्" इति न्यायात् । यद्वा—विविधानां गवां गीतशब्दानां पतयो गंधर्वास्तेषां चरणेषु गीतगतिषु विदग्धः समर्थः । यद्वा—विविधानां स्वस्वजातिस्वभावचेष्टासु नानाविधानां गोपानां चरणेषु कर्मसु विदग्धः कुशलः । यद्वा—विविधो गोपो रक्षणं तस्य चरणेषु तत्तदापद्रक्षणविधिषु विदग्ध इत्यर्थः ॥ ( १४ ) ॥ मंद्रो गंभीरः । "मंद्रस्तु गंभीरे तारोऽत्युच्चैस्त्रयस्त्रिषु" इत्यमरः । यतो यत्र । ततस्तत्र । कोविदा अपि गानपारज्ञा अपि । तद्भेदो गानभेदः । कस्मिन्स्वरे को रागो भैरवश्रीरागहिंदोलमालकौशिकमेघमल्लारदीपकादिष्वन्यतमः । का वा शाबरीगुर्जरीललितटोडीगन्धाविलावलसिंधुजयवंतीगौरी कल्याणकर्णाटपर्जदेशसोरठशोणोविहागादिष्वन्यतमा गीयत इति । तत्तत्त्वं न विदुः अपूर्वगानश्रवणात्तन्निश्चयं कर्तुं न शेकुरिति भावः ॥ * ॥ अथापराह्णे काश्चन गोप्य आगमिष्यतः स्वप्रेयसश्चिरदर्शनासिद्ध्यर्थं विचारितयुक्तयः केनाचिन्निमिषेण व्रजेश्वरीसदनं गतास्तत्र च विविधवृद्धायुवतिबालिकाभिः संभूय विस्तार्यमाणाः स्वसुतगुणकर्मप्रभावकथाः शृण्वंतीं स्वयञ्च कथयंतीं सुतविरहविह्वलां तां स्वस्वमनश्च समाश्वासयितुं तां संबोध्य वेणुगानगुणप्रभावं वर्णयंति—विविधेति । हे सति श्रीयशोदे विविधं गोपानां चरणान्याचरणानि गवां कालतो दोहनवशीकरणादीनि तेषु विदग्धस्तव सुतः अधरबिंबे दत्तवेणुः सन् यदा स्वराणां षड्जादीनां जातीरष्टादशमुख्याः अन्याः सहस्रशो वा नयत् उन्नीतवान् । कीदृशः—वेणुवाद्यविषये उरुधा बहुप्रकारा निजात्स्वस्मादेव न तु परस्मात्कस्माच्चिदपि शिक्षा यासु ताः ॥ सवनशः समयेसमये तत्स्वरजात्युन्नयनमुपधार्य

**निजपदाब्जदलैर्ध्वजवज्रनीरजांकुशविचित्रललामैः ॥ व्रजभुवः शमयन्खुरतोदं वर्ष्मधुर्यगतिरीडितवेणुः ॥ १६ ॥**
**व्रजति तेन वयं सविलासवीक्षणार्पितमनोभववेगाः ॥ कुजगतिं गमिता न विदामः कश्मलेन कबरं वसनं वा ॥ १७ ॥**

अस्माकं तु मोहं किं ब्रूम इत्याहुः । निजपदाब्जदलैरिति । ध्वजादीनि विचित्राणि ललामानि चिह्नानि येषां तैर्निजानि पदान्येवाब्जदलानि तैर्व्रजभुवः खुरतोदं खुराक्रमणव्यथां शमयन्वर्ष्मणा देहेन धुर्यो गजस्तद्वद्गतिर्यस्य स कृष्णो वादितवेणुः सन्यद्व्रजति ॥ १६ ॥ तेन निमित्तेन सविलासवीक्षणेनार्पितो मनोभववेगो यासु ता वयम् । कुजा वृक्षास्तेषां गतिं गमिताः सत्यो मोहेन न विदामः कबरं वा वसनं वेति ॥ १७ ॥

शक्रशर्वपरमेष्ठिनः पुरोगा मुख्या येषां ते शक्रोपेंद्राग्नियमादयः शर्वकात्यायनस्किंदगणेशादयः ब्रह्मचतुःसननारदादयश्च कवयो गानतालादिसृष्टिकर्तारोऽपि आनता कंधराश्चित्तानि च येषामिति गानमाधुर्यस्वादानुभावः । न निश्चितं रागस्य तालस्य तानस्वरादीनां च तत्त्वं स्वरूपं यैस्ते । ततश्चाज्ञानाद्वेणुमाधुर्याच्च मोहं प्रापुः । अहो जगदीश्वरा यत्र मुमुहुस्तत्र जगदीशितव्यानामन्येषां मोहे को विचार इति । आर्ये जगन्मोहनोऽयं तव सुतोऽभूदिति भावः ॥ अत्र **तोषिणी**–एवमेकांतगोष्ठीः संगृह्य श्रीगोष्ठेश्वरीगोष्ठीगतापि गोष्ठी तल्लीलाक्रमप्राप्ततया संगृह्यते । तत्रापि विविधप्रकारविशेषेण तत्कथामेव तां कुर्वंतीति विवक्षया तत्रोत्क्रांते मध्याह्ने स्वपुत्रागमनविलंबाशंकया तां खिद्यमानां तद्विलंबहेतूपन्यासपूर्वकमगोपनीयरसनिबंधेन निखिलपरमाश्चर्यवैदग्धीमयतत्क्रीडाभिनिवेशवर्णनेन प्रोत्साहयंत्यः सांत्वयंति, निगूढं तु स्वेषामपि झटिति तदागमनेच्छया तद्वारा तदभिनिवेशं वारयितुमभिप्रयंति, साधारणजनवत्स्पष्टतद्वार्ताकथनेन निजभावगूहनमपि कुर्वंति–विविधेति । विविधगोपाचरणेषु विदग्ध इति सामान्यतस्तैरेव सर्वमनोहर इत्यर्थः । तत्र चाधरबिंबे दत्तवेणुस्तेनातिविराजमानः सन्नित्यर्थः । यदा विश्वहर्षणादिसमये स्वरजातीरुत्थापितवाँस्तत्रापि वेण्वित्यादिलक्षणा उरुधा निजैव शिक्षा यासु ताः तादृशीश्च ताः । वेणुवाद्य इति पाक्षिकोऽन्वयः । अन्योन्यस्वरादावपि निजशिक्षामयत्वे वेणुवाद्यत्वाधिक्यमिति दर्शितम् । यद्वा–स्वरजातीः कथंभूताः--निजशिक्षाः, पुनः कथं० वेणुवाद्ये उरुधा, तत्र तु नानाप्रकाराः, तत्रापि पूर्ववत् । हे सति जगत्पूज्ये, अतस्त्वत्सुतस्यापि तादृशत्वं युक्तमेवेति भावः ॥ उपधार्य श्रुत्वेति स्वस्वस्थानादेव श्रवणं लभ्यते, ततश्च तस्य फलरूपत्वेऽपि सर्वव्यापकत्वं बोधितम्, तथैव निजशिक्षाविशेषात्सुरेशा गंधर्वादिद्वारा गीतादिश्रवगसंप्राप्तिमंतोऽपि स्वयं कवयोऽपि शक्रपुरोगास्तत्सहितलोकपालादयो देवजातयः, शर्वपुरोगास्तत्सहितदेवीस्किंदगणेशास्तद्गणाः, परमेष्ठिपुरोगास्तत्सहितचतुःसननारदसप्तर्षिप्रजापतिगगादयः । क्रमस्तु शक्रादीनां बहिरिंद्रियेग प्रथमत एव तच्छ्रवणात्, शर्वस्य कैलासस्थत्वेऽप्यंतर्निष्ठत्वेन तदंतरमेव, परमेष्ठिनस्तु दविष्ठत्वेन तदनंतरमेवेति । चित्तस्यानतत्वं तच्छ्रवणत्वमेव । कस्य स्वरस्य प्रभेदो गीयते इति निश्चयाभावात्, वेगुनादमाधुर्याच्च कश्मलं ययुः । अन्यत्तैः । अथवा–स्वराज्जातीश्च सवनशोऽनुकालं वारंवारमपि श्रुत्वेत्यर्थः । यद्वा--न निश्चितं तत्त्वं किमद्भुतमाधुरीमयमिदं सुषिरगीतम्, किं वान्यः परमचमत्कारकारी तावदपूर्वः कर्णग्राह्यः कोऽपि विषयः, किं वा महामोहनः कोऽप्येष मंत्र उल्लसतीति वेणुगीतस्य याथार्थ्यं यैस्तथाभूताः संतः पश्चात्कश्मलं प्रापुस्तदेकलीनचित्तत्वात्सर्वं विसस्मरुरित्यर्थः । अन्यत्समानम् ॥ १४ ॥ १५ ॥ ( ७ ) ॥ पुनराह–अस्माकमिति । " ललामोऽस्त्री ध्वजे श्रेष्ठे भूषायां पुंड्रचिह्नयोः " इति यादवः । यद्वा–निजानि नित्यानि पदानि पादांका एवाब्जानि तेषां दलैरितस्ततस्यापनैः ॥ ( १६ ) ॥ तेन निमित्तेन वर्ष्मधुर्यवद्गमनरूपेण हेतुना सविलासवीक्षणेन विभ्रमोपेतदृष्ट्या वेग उद्रेकलक्षणसंस्कारः कौ भूमौ जायते इति कुजो वृक्षः । 'व्रजगातिम्' इति पाठे तु ब्राह्मे मुहूर्ते रासांते कृष्णेन प्रापिता इत्यर्थः । मोहेन मनोऽनवस्थालक्षणेन कबरं स्रस्तं केशपाशं वसनं कट्यादिधृतम् ॥ * ॥ अथान्ययूथस्थाः स्वसखीः प्रति वेणुहेतुकं स्वमोहमेवाहुः–निजपदान्येवाब्जदलानि तैः । कीदृशैः–ध्वजादीनि विचित्राणि

मणिधरः क्वचिदागणयन्गा मालया दयितगंधतुलस्याः ॥ प्रणयिनोऽनुचरस्य कदांसे प्रक्षिपन्भुजमगायत यत्र ॥ १८ ॥
क्वणितवेणुरववंचितचित्ताः कृष्णमन्वसत कृष्णगृहिण्यः ॥ गुणगणार्णमनुगत्य हरिण्यो गोपिका इव विमुक्तगृहाशाः ॥ १९ ॥

किं च । मणिधरो मणीन् ग्रथितान्गोगणनार्थं धरतीति मणिधरः क्वचिद्देशे एतैर्मणिभिर्गा आसमंतादगणयन् । तथा दयितगंधा या तुलसी तस्या मालया सह वर्तमानः प्रणयिनः प्रियस्यानुचरस्यांसे भुजं प्रक्षिपन् यत्र यदा कदाचिदगायत ॥ १८ ॥ तदा क्वणितवेणुरवेण वंचितान्यपहृतानि चित्तानि यासां ताः कृष्णस्य हरिणस्य गृहिण्यो भार्या गुणगणार्णं गुणगणसमुद्रं कृष्णमनुगत्य प्राप्य ताः कृष्णमेवान्वसतान्वासत न न्यवर्ततेत्यर्थः । कुतः । यतो विमुक्ता गृहाशा

ललामानि चिह्नानि येषां तैः । गोष्ठगमनसमयेऽग्रतो गतानां गवां खुरतोदं खुराक्रमगव्यथां व्रजभुवः शमयँस्तदुपारि स्वचरणाब्जन्यासेन शमयितुं यदा वर्ष्मगा देहेन धुर्यो गजस्तद्वद्गतिर्यस्य स कृष्णो व्रजति ॥ तदा तेन कृष्णेन सविलासवीक्षणेनैवार्पितो मनोभववेगो यासु ता वयं कुजा वृक्षास्तेषामिव गतिं गमिताः प्रापिताः सत्यो मोहेन कबरं वसनं वा न विदामस्तयोः स्खलनं न जानीम इत्यर्थः । तेन व्रजभुवः चरणां बुजन्यासेन शमयामास, व्रजसुभ्रुवां तु मनसिजतोदं नयनांबुजन्यासेनोत्पादयामासेत्येवमेवास्माकं ललाटमिति द्योतितम् ॥ अत्र **तोषिणी**—अथ तदनंतरजातर्लीलामयीगोपनीयरसानिबद्धा पुनरेका काचिदेकांतगोष्ठीं संगृह्यते । तत्र तादृशनानाकथाश्रयेण लंघितेऽपि तृतीये यामे नागते श्रीभगवति काश्चिदुत्कंठितचित्ता गोपिकाः गोपावृत्तिसमये तदन्वेषणार्थं पुष्पावचयादिमिषेण कदाचिद्गच्छंति च वनमध्यम्, तत्र दृष्टं दिनांतरे प्रस्तुवंति च । तदेवमवतारिका—अहो प्राणसख्यस्तत्रतत्र चान्येषामस्तु मोहकथा स्फुटमस्माकमेव श्रूयतामिति भाववैवश्येनाहुः—निजेति । निजशब्देनासाधारणत्वं व्यज्यते। बहुत्वं गौरवेण, प्रतिन्यासपूर्वरूपत्वविवक्षया वा । निजत्वादेव ध्वजादीनि विचित्राण्यद्भुतानि ललामानि येषु तैः । यद्वा--ध्वजादिभिर्विचित्रैर्ललामैश्च सुंदरैः । उपलक्षणानि चैतानि प्रसिद्धानां चक्रादीनामप्रसिद्धानामष्टकोणादीनाम् । व्रजभुवः व्रजसंबंधीगोप्रचारभूमेः । लक्षणया तद्गततृणादीनामित्यर्थः । गवादिखुराक्रमणव्यथां शमयन्निति—गवां पश्चात्पश्चाद्गच्छतो भगवतः पादाब्जस्पर्शस्वभावत एव सद्यस्तृणां कुरोत्पत्तेः । अत एवासंख्यधेनुवृंदनित्यचारणसमावेशः स्यात् । तत्र विलासमाहुः—वर्ष्मधुर्यगतिः गजेंद्रवच्छनैःशनैश्चलन्नित्यर्थः । यत ईरितवेणुः शीघ्रगमने सम्यग्वेणुवादनमस्पष्टमिति । यद्यपि स्वाभाविकमेव तत्तस्य तथापि विलासविशेषेण विस्पष्टमपि स्यादिति तथोक्तम् । ततोऽस्मद्दृष्टिविषये त्वधिकमेव तथाचरितमिति व्यञ्जितम् ॥ व्रजति इतस्ततो भ्रमतीत्यर्थः । तेन कारणभूतेन यत्सविलासं सलीलं वीक्षणम् अस्मासु तत्रतत्र च तेनार्पितोऽन्तर्निहितो मनोभवस्य वेगो यासु ता इति स्वतोऽप्रतिकार्यत्वमुक्तम् । कुजगतिम् स्थावरत्वम्, जाड्यमित्यर्थः । गमिताः प्रापिताः । यद्वा—तेनेति कुजगतिगमितत्वे सविलासे सति न विदाम इत्यत्र हेतुर्विवेचनीयः । तस्य व्रजजनेनास्माकमगत्वं वैदग्ध्या च मुग्धत्वमिति कारणवैपरीत्येनाद्भुतत्वं ततस्तस्य परममोहनत्वं स्वेषां दैन्यं च दार्शितम् । कबरं वसनं वा न विद्मः, स्खलितमिति शेषः । तदनुक्तिर्लज्जया । कबरमिति कियत् वसनमपीत्यर्थः । वा समुच्चये टीकायामपि तथैव ॥ १६ ॥ १७ ॥ (८) ॥ अन्यदाहुः—किंचेति । तथा विशेषगांतरमाह—अंसे भुजशिरसि । प्रक्षिपन्निदधानः । यद्वा—मणिधरः कौस्तुभधरः “ मणिः स्त्रीपुंसयो रत्नजातौ मुक्तादिकेषु च । कंठदेशस्तनेऽजाया लिंगाग्रेऽलिंजरेऽपि च॥”इति मेदिनी ॥ (१८)॥ अन्वसतेह दीर्घाभावस्त्वार्षः । इत्यर्थ इति—किंचिद्गुणवानपि लोके न त्यज्यते किमुत गुणगणाब्धिरित्याशयः । तत्र हेतुमाशंक्य समादधिरे—कुत इति । यतो हेतोर्गृहाशा त्यक्ताऽतो हेतोः कृष्णमुपासत, त्यक्तसर्वपरिग्रहैरेव कृष्ण उपास्यत इति भावः ॥ * ॥ गोष्ठस्थानां स्वेषां मोहनमिव वनस्थानां मृगीणां वेणुहेतुकं मोहनमाहुः—मणिधरः गोगणसंख्यानमाणि मालाधरः । शुक्लरक्तश्यामपीतानां चतुर्णां वर्णानां प्रत्येकं पंचविंशतिप्रभेदैः शतं वर्णा भवंति । तथैव चित्रितत्वचंदनतिलकत्वादिवर्णैर्मृदंगमुखत्वाद्याकारैश्चान्येऽप्यष्ट प्रभेदा भवंति । ततश्च तत्तद्वर्णाकारैरष्टोत्तरशतमाणि

कुंददामकृतकौतुकवेषो गोपगोधनवृतो यमुनायाम् ॥ नंदसूनुरनघे तव वत्सो नर्मदः प्रणयिनां विजहार ॥ २० ॥
मंदवायुरुपवात्यनुकूलं मानयन्मलयजस्पर्शेन ॥ बंदिनस्तमुपदेवगणा ये वाद्यगीतबलिभिः परिवव्रुः ॥ २१ ॥

याभिस्ता गोपिका इव ता अपि ह्येवमेवान्वासतेति ॥ १९ ॥ तदेवं वृंदावनप्रदेशेषु क्रीडित्वा सयाह्ने गोधनानि परावर्त्य यमुनाया क्रीडतस्तस्य सौभाग्यमनुवर्णयंति । कुंद दामकृतकौतुकवेष इति। गोपीनामुत्सवाय कुंददामभिः कृतः कौतुकेनोत्सवेन वेषोऽलंकारो येन सः । हे अनघे यशोदे तव वत्सः पुत्रो नंदसूनुः कृष्णः । यद्वा सहैव बह्वयः कथयंत्यः काश्चित्तव वत्स इति काश्चिन्नंदसूनुरिति चाहुः । नर्मदो हर्षदः सन्यदा विजहार क्रीडति स्म ॥ २० ॥ तदा मलयजस्पर्शेन मलयजस्य चंदनस्येव सुरभिः शीतश्च यः स्पर्शस्तेन तं कृष्णं मानयन्ननुकूलं यथा तथोपवाति वीजयति । यद्वा मलयजो दक्षिणो वायुः । यद्वा मलयजस्य कृष्णेन स्वांगेऽनुलिप्तस्य चंदनस्य स्पर्शेन मानयन्निति । किं च बंदिन इव स्तावकाः संतो गंधर्वादिगणा वाद्यगीतपुष्पवर्षादिभिः परिवव्रुः परित उपासत ॥ २१ ॥

गोलकैर्गोगणनार्थं श्रीकृष्णेन गोजपमालैका कृतास्ति, तां मालां गृहीत्वैवासंख्यानामपि गवामष्टोत्तरशतं यूथान् पृथक्पृथग्वर्णान् गणयति । तथाहि–हिंही धवरीत्याह्वानेन धवलीयूथो यथा तथैव हंसी चंदनी गंगे मुक्ते इत्याह्वानेन तत्प्रभेदाश्चतुर्विंशतिरन्येऽपि यूथा आयान्ति।एवमरुणी कुंकुमी सरस्वतीत्यादिसंज्ञा,श्यामला धूमला यमुनेत्यादिसंज्ञा, पीता पिंगला हारिता लिकेत्यादिसंज्ञा,चित्रिता चित्रतिलका दीर्घतिलका तिर्यक्तिलकेत्या दिसंज्ञा, मृदंगमुखी सिंहमुखीत्यादिसंज्ञाश्च स्वस्वनामभिराहूता आयांत्यतो वनाद्गोष्ठगमनसमये काश्चनापि गावो विस्मृता भवेयुरित्येकैकमगिगोलकावर्तनेन गा गणयन् दयितगंधा तुलसी तस्या मालया सह वर्तमानः प्रणयिनः प्रियस्यानुचरस्य स्कंधे भुजं प्रक्षिपन् यदाऽगायत ॥ तदा वेणो रवेण वंचितान्यपहृतानि चित्तानि यासां ताः, कृष्णस्य गृहिण्यो हारिण्यः कृष्णमन्वसत अन्वासत । अन्ववर्ततेत्यर्थः । यतो गुणगणार्णं गुणसमुद्रं कृष्णमनुगत्य प्राप्य तद्गुणानास्वाद्येत्यर्थः । विमुक्ता गृहाशा याभिस्ताः गोपिका इव वयमप्येवंवृत्ता भवामः ॥ अत्र **तोषिणी–**अथापराह्णे स्वीकृतवेषांतरो गृहागमनाय मुहुर्वेणुगानेन गाः समाहरति गणयति च। अहो बत तत्र मृग्योऽप्याक्रियंते किमुत वयं गोप्य इत्याहुः–मणीति । मणिमालाधारी गा आगणयन् जगौ क्रमशस्तत्तद्यूथमुख्यमुख्याया नाम वेणुना गायति स्म । तास्तथैव स्वस्वयूथेनागतास्तत्तद्वर्णादिसंकेतांकिततत्तन्मणि मालया गणयति स्म चेत्यर्थः । यद्यपि कृष्णवत्सैरसंख्यातैरिति पूर्वोक्तं तथापि यूथेशादिगणनाभिप्रायेणैवेदमुक्तं, तद्बुद्धिप्रावीण्याभिप्रायेण वा । “ उपर्युपरि बुद्धीनां भवंतीश्वरबुद्धयः ” इति न्यायेन दयितगंधत्वेन तुलस्या मालया पत्रादिमालया सदा विशिष्ट इत्यर्थः। यद्वा–भ्रमरगानं मालायां प्रकल्प्य सापत्न्येन सेर्ष्यमाहुः । तया सहागायतेति तस्या धाष्ट्र्यं व्यंजितम् । किं कुर्वन्नगायत--किंचिन्नीचभूमिकास्थितस्यानुचरस्यांसे भुजं वामे दक्षिणमेव वा कूर्परोर्ध्वभागं प्रक्षिपन् लीलया विन्यसन् । अतः स एव प्रेमयुक्तसौभाग्यवान्न तु वयमिति भावः । क्वणितवेणुरवेति वक्ष्यमाणत्वाद्वेणुनैवागायदिति सिद्धम्॥ क्वणितेति विशेषणेन वादितो यो वेणुस्तस्य रवेण वंचितानि प्रलंभितानि तत्पूर्वकमपहृतानि चित्तानि यासां ताः । कृष्णगृहिण्यः कृष्णेति देशपावनपतिका अपीत्यर्थः । गृहिण्य इति मानुषजातित्वत्पत्युः परमप्रेयस्योऽपीत्यर्थः । कृष्णमन्वसत तत्परित्यागेन कृष्णमेव श्रिता इत्यर्थः । तत्र हेतुः–गुणगणा र्णमिति। कृष्णगृहिण्य इति श्लेषेणापि कृष्णभार्यात्वं प्राप्ता इति नर्म । विमुक्तेति तैर्व्याख्यातम् । यद्वा–विमुक्ता गृहा आशाश्चाशनं च याभिस्ताः, गृहं पत्यादिपरिकरः । वयमित्यनुक्त्वा गोपिका इत्युक्तं गोपिकाजातित्वेनैव तदके स्वभावासिद्धेस्तदभावेऽपि तासामित्यभिप्रायेण । यद्वा–वयमित्युक्तेरपि गोपिका इति रसविशेषपोषकत्वं परोक्षवचनात् ॥ १८ ॥ १९ ॥ (९) ॥ तदेवम् तदेत्थम् । केचित्तु विवाहे यद्वरकरे पूगपीतसर्षपादियुतं सूत्रं बध्यते तत्कौतुकं, तत्संबंधी वेषो वैवाह्यवेषो यस्य स तथा । “ कौतुकं त्वभिलाषे स्यादुत्सवे नर्महर्षयोः । तथा परंपरायातमंगले च कुतूहल ॥ विवाहसूत्रगीतादिभोगयोरपि न द्वयोः ” इति मेदिनी । तव वत्स इत्यनेनैव सुतत्वसिद्धौ नंदसूनुरिति महामुनेः कथनं वसुदेवात्मजत्वभ्रांतिवारणायैव, नंदाद्यशोदायां साक्षाज्जात इति तत्त्वावबोधाय चेति । नेयमेकोक्तिः पुनरुक्तिदोषाद्वदंत्या भ्रांतिसंभावनाकल्पनाच्चात आह--यद्वेति ।

हर्षदः लीलावचनेनानंददः ॥ ( २० ) ॥ उपमानगर्भसमासापेक्षया तद्राहित एव स साधुः । " अर्क्के चेन्मधु विंदेत किमर्थं पर्वतं व्रजेत् " इति न्यायेनात आह--यद्वेति । मलयसंबंधी वायुःस्वभावत एव सुगंधिशीतो भवतीति पुनरुक्तिदोषवायुद्वयसंबंधकल्पनाचास्वारस्यप्रतीतेरर्थांतरमाह--यद्वेति । न केवलं वायुरेवोपास्त किं त्वन्येऽपीत्याह--किञ्चेति । स्तावका मंगलपाठकाः । गंधर्वादीहादिना चारणविद्याधरादयो ग्राह्याः । पुष्पादीत्यत्रोक्तादिनाभिनयादिग्रहः । तम् कृष्णम् । परिरत्रोपार्थे उपसर्गाणामप्यनेकार्थत्वात् ॥ * ॥ अथ व्रजेश्वरीसदनं गता गोप्यस्तमपराह्णे स्वपुत्रागमनविलंबेन विक्षुभ्यन्तीं तद्विलंबकारणोक्त्या सांत्वयंति- कुंददामेति युगलत्रयेण । वैष्णवतोषणी--यमुनायां पर्यटन् श्रमोपशांत्यर्थं तत्र स्नात्वा तत्तट उपविश्य कौतुकव्यंजकं वेशं परमोत्कंठया मेलिष्यतः स्वबंधून्सुखायितुं कृत्वा यदा विजहार पादविहरणं चकार तदा मंदवायुरुपवातीत्यन्वयः । प्रणयिनां वयस्यानां नर्मदः परस्परं हासोपहासं द्यति खंडयति ददाति चेत्यर्थः । अनघ इति--तव प्राक्तनमर्वाचीनं वा किमप्यघं नास्ति यतः पुत्रानिष्टं स्यात्तत् किमिति किंचिद्विलंबमात्रेणैवासुरादिहेतुकं । तदनिष्टं शंकस इति भावः । यतो नंदस्य पुण्यवच्छिरोमाणित्वेन प्रसिद्धस्य सूनुः, तव च महापुण्ययशस्वित्वेनैव यशोदाया वत्सो महावात्सल्यपात्रीभूतः पुत्रः, लोके हि मातापित्रोरभाग्येनैव बालस्यानिष्टं भवेदतो न कृष्णस्य किमप्यनिष्टमिति भावः ॥ तद्विलंबस्य कारणं वयं बालकानां मुखेभ्य एव श्रुत्वा जानीमस्तच्छृण्वित्याह--मंदेति । मलयजस्य मलयपर्वतोत्पन्नचंदनवृक्षस्य स्पर्शेन सौगंध्यं शैत्यं च गृहीत्वा तयोर्भारेण द्रुतं चलितुमसमर्थो वायुः कृष्णं मानयन्ननुकूलं यथा स्यात्तथोपवाति । बंदिनस्तावका ये उपदेवगणा गंधर्वादयस्तेऽपि स्वस्वगुणान् दर्शयंतो वाद्यादिभिः परिवव्रुरावृण्वन् । अत एव तत्तदनुमोदनहेतुको विलंबो जायते एव ' गुणिनि गुणज्ञो रमते ' इति न्यायात् । न चात्र खेदः समुचितः । त्वत्पुत्रं ते यदेवं संमानयंति तत्तवैव भाग्यमिति भावः ॥ अत्र **तोषिणी**--अथ पुनर्व्रजेश्वरीसभागतं पूर्वोक्तगोसमाहरणादिसामयिकलीलानंतरलीलावर्णनं संगृह्यते । तच्च समाहरणं द्वितीयजलपानसमय एव स्यादिति व्यज्यते । तत्र तादृशीं च लीलां स्वयमनुभूय कालातिक्रमेणार्तां तन्मातरं तदागमनवार्तया सुखयितुमभिगम्य पूर्ववदेवाहुः--कुंदेति युग्मत्रयेण । कुंदेति मंदेति च कार्तिकमासोऽयमिति लभ्यते वसंते कुंदानर्हत्वात्, हेमंतशिशिरयोर्वायोर्द्वेषाच्च । तत्र च तदीयेन सर्वसुखदलीलत्वेन सर्वसुखसेवापात्रत्वेन च तां स्वस्थयंति, विलंबे कारणमपि निवेदयंति । यमुनायां विजहार--तस्या जले स्नानकेलिं विधाय तीरे सविलासं चिक्रीडेत्यर्थः । कीदृशः सन् विजहार, तत्राहुः--कुंददामेति । समस्तदिनभ्रमणश्रांत्या स्नानस्यापेक्षत्वात्कुंददाम्नां जलक्लिन्नतायामरुचिप्रदत्वेन तत्पश्चाद्धावयोग्यत्वाच्च । तत्र सर्वसुखदलीलत्वादिकं वदंत्यो विलंबे कारणमपि सूचयंति--गोपेत्यादिभिः । तस्य च तादृशत्वं युवयोः पुत्रत्वादनुरूपमेवेत्यर्थः । सर्वानंदकतया तन्नाम्ना प्रसिद्धस्य सूनुः । न विद्यतेऽघं दुःखं सर्वेषां यतः हे तथाभूत इति । तथैव सर्वानंदिन्यास्तव च वत्स इत्यर्थः । तत्र वत्स इति धेनूनां वत्स इव परमस्नेहाविषय इत्यर्थः । अतस्तव त्वत्यर्थं वैयग्र्यं युक्तमेवेति भावः । गोपेति--जलादितृप्ततया स्थगितगमनैर्गोपैर्गोधनैश्चावृत इत्यर्थः । तत्रापि प्रणयः सख्यमयस्नेहस्तद्वतां नर्मदः सपरिहासकेलिभिः सुखद इत्यर्थः । कौतुकं क्रीडोत्सवो हर्षो वा । वेशोऽवतंसाद्यलङ्कारः । एवं पूर्ववेशपरित्यागेन वेशांतरं ज्ञेयम् ॥ अनुकूलम् प्रियम् । यद्वा--पृष्ठवायुत्वेन गमनानुकूलं यथा स्यादिति सोऽपि तत्स्वैरचारितायां सहाय इति भावः । अतो मंदपदं श्लिष्टमपि ज्ञेयं तामिति कर्मसंबंधात् । उपवाति वीजयतीत्यर्थः । यद्वा--उप समीपे वाति यत्रासौ तत्रैव तादृशो नान्यत्रेत्यर्थः । मानयन् पूजयन् । मलयजेति तैर्व्याख्यातम् । अत्र मलयजो दक्षिणो वायुरिति पक्षे वैकल्पिको विसर्गलोपः । शरदि तस्य च सद्भावात् तादृशानुकूल्याय तु सुतराम् । पृष्ठवायुत्वपक्षे सोऽप्यनुकूलं यथा स्यात्तथैवोपवातीत्यर्थः । उपदेवा गंधर्वादयो ये ते सर्वेऽपीत्यर्थः, बंदिन इति । गीतेति च गीतद्वारा स्तुतिर्बोध्यते । बलिवाद्ययोस्तु तदनुगतत्वम् । बलिरत्र दिव्यवस्त्रालंकारभोगादिसामग्रीमयो ज्ञेयः । अतो गीतप्राधान्याद्गन्धर्वादिगणा इति तैरप्युक्तम् । परिवव्रुरिति--तेऽपि तदागमनविलंबं चक्रुरित्यर्थः । किन्तु वायोरेषां च प्रस्थानमांगलिकत्वाच्छीघ्रसुखागमनं भवेदेवेति

वत्सलो व्रजगवां यदगध्रो वंद्यमानचरणः पथि वृद्धैः ॥ कृत्स्नगोधनमुपोह्य दिनांते गीतवेणुरनुगेडितकीर्तिः ॥ २२ ॥
उत्सवं श्रमरुचाऽपि दृशीनामुन्नयन्खुररजश्छुरितस्रक् ॥ दित्सयैति सुहृदाशिष एष देवकीजठरभूरुडुराजः ॥ २३ ॥

आयांतमालोक्य हृष्यंत्यः परस्परमूचुः ।वत्सल इति । व्रजस्य गवां च । यद्वा व्रजे निबद्धानां गवामनुकंप्यानामस्माकमित्यर्थः।वत्सलो हितकृत् ।कुतः । यद्यस्मादगध्रः अगं धरतीति गोवर्धनोद्धरणः।बहुशो रक्षण स्योपलक्षणमेतत् । वृद्धैर्ब्रह्मादिभिः पथि वंद्यमानचरण इति । ते सेर्ष्यं सायं शीघ्रमागंतु न ददति हि ।सर्वैर्वन्द्यमानचरण इत्यर्थः। उपोह्य एकीकृत्य गीतयुक्तो वेणुर्यस्य सः ॥ २२॥श्रमयुक्तयाऽपि कांत्या नेत्राणां हर्षमुन्नयन्नुच्चैः प्रापयन् । खुररजोभिश्छुरिता व्याप्ताः स्रजो यस्य । सुहृदामस्माकमाशिषो मनोरथस्य दित्सया

भावः ॥ २० ॥ २१ ॥ ( १० ) ॥ व्रजशब्देन गोपा ग्राह्याः 'तास्थ्यात्ताच्छब्द्यम्' इति न्यायेन । ते च तत्पार्श्वे एव संति तथा गावोऽपि तद्वात्सल्यार्थन्नायान्तीति शोभनं न प्रतिभातीत्यत आह--यद्वेति । व्रजे गोकुले निबद्धानां बद्धवद्गृहे स्थितानाम् । गोशब्दोऽत्रानुकंप्ये । यथा गावोऽनुकंपार्हास्तथा वयमपीत्यभिप्रेत्योक्तमस्माकमित्यर्थ इत्याशयोऽत्र ध्येयः । वत्सलत्वे हेतुमाशंक्य समादधते—कुत इत्यादिना । बहुश इति--बहुवारमित्यर्थः । तेन दावाग्निपूतनादिभ्योऽपि रक्षणमुपलक्ष्यत इति । ते च ब्रह्मादयः । इत्यर्थ इति--तत्कृतपूजनेन विलंबत्वादित्यभिप्रायः ॥ ( २२ ) ॥ सुहृदाम् अनिमित्तबंधूनाम् । सः चंद्रः । एषः कृष्णः । उडुराज इहोडुराज इवेति लुप्तोपमा बोध्या । उडुराजोऽपि व्रजगवामध्वपशूनां पथिकानां च वत्सलः--वत्सं वर्षं सामर्थ्यात्कामोद्रेकं लाति ददातीति तथा । "वत्सः पुत्रादिवर्षयोः । तर्णके नोरसि क्लीबम्" इति मेदिनी । 'गोष्ठाध्वनिवहा व्रजाः' इत्यमरः । अगेनोदयाचलेन ध्रियते इत्यगध्रः, अगान्वृक्षान्धरति पुष्णातीति वाऽगध्रः । वृद्धैः सप्तर्षिभिः । पथि व्योममार्गे । दिनांते रात्रौ । कृत्स्नगोधनं समस्तकलासमेधितचंद्रिकाख्यमुपोह्य परिपूर्य गतिवेणुः कविभिर्वर्णितवंशः वेणुशब्दः त्वक्सारपरोऽपि लक्षितलक्षणयाऽन्वयमाह । अनुगै रोहिण्यादिनक्षत्रैरीडितकीर्तिः परिकृतगणनः । श्रमं रविकिरणजं लुंचति छिनत्तीति श्रमलुक् तेन रलयोरैक्यमत्र । तृतीया हेतौ । 'लुञ्च—अपनयने' इत्थं सुधीभिर्ज्ञेयम् ॥ * ॥ ननु तर्हि कौतुकलोलुपो मत्पुत्रो विलंबमानः संध्यासमाप्तावपि नैष्यति ततश्चाहं मरिष्याम्येवेति तत्र तदीयशीघ्रगमने हेतुमुपन्यस्य तामाश्वासयंत्य आहुः--वत्सल इति । व्रजगवां व्रजे निबद्धानां वृषाणां वत्सलस्तेषां स्वविरहदुःखमनुस्मृत्य गंधर्वादीनप्यवमत्य शीघ्रमायास्यत्येवेत्यर्थः । टजभाव आर्षः । न च गोचारकस्य तस्य गवां दर्शनस्पर्शनगात्रकंडूयनघासप्रदानादिकौतुकात्स्वतोऽतिनिकृष्टगायकगंधर्वादिगानकौतुकं चित्ताकर्षकं वाच्यमित्याहुः—यद्यस्मादगध्रः येषां गवां रक्षणार्थमगं गोवर्धनमपि धृतवान् । अतस्तेषु महान्स्वाभाविक एव स्नेहः, गंधर्वादिषु तु गुणोपाधिकोऽपि प्रीतिलेशो न तस्यास्तीति भावः । ननु यद्येवमभविष्यत्तदैतावत्क्षणपर्यंतं गृहमागमिष्यदेवेति तत्र विलंबे पुनरपि हेतुमुपन्यस्यंति—वृद्धैर्ब्रह्मरुद्रादिभिः पथिपथि वंद्यमानौ चरणौ यस्य सः । वेणुगानाकृष्टैः स्वस्वभवनादागत्य निकटे नभसि स्थितैः सर्वमेव दिनं कृष्णं दृष्ट्वा लब्धानंदैः संप्रति गोष्ठागमनसमये स्वस्वभवनगमनोन्मुखैर्नभसो भुवमवतीर्य ब्रह्मरुद्रेंद्रादिभिः प्रत्येकमेव त्वत्पुत्रानुग्रहमर्थयितुं चरणौ वंद्येते तेनात्र किं कर्तव्यमिति तेषामनुरोध एव विलंबाधिक्ये हेतुरिति ध्वनिः । त्वत्पुत्रस्य चरणौ ब्रह्मादयोऽपि वंदंत इति स्वभाग्यं किं न पश्यसि, किमिति खिद्यसीत्यनुध्वनिः । तर्हि भो व्रजबालिकाः शीघ्रमट्टालिकापृष्ठमारुह्य पश्यत कियद्दूरे वत्स आयातीति तया साश्रुगद्गदमुक्ताः सर्वोर्द्ध्ववलभीं शीघ्रमारुह्योच्चैराहुः—कृत्स्नेति । एष कृष्णः सुहृदां स्वबंधूनामाशिषो मनोरथस्य दित्सया एतीत्यन्वयः । उपोह्यैकीकृत्य । गीतयुक्तो वेणुर्यस्य सः ॥ श्रमेण या रुक् शोभा तयापि दृशीनामुत्सवमानंदमुन्नयन्नुच्चैः प्रापयन् । खुररजश्छुरिता व्याप्ता स्रग्यस्येति स्वसंगिनीः सखीः प्रत्यपांगभङ्ग्या श्रीयशोदाद्यलक्षितं किमप्युक्तम् । अत्र स्रज्येव खुररजोनिर्देशादन्यत्र रजो नास्तीति

मदविघूर्णितलोचन ईषन्मानदः स्वसुहृदां वनमाली ॥ बदरपांडुवदनो मृदुगंडं मंडयन्कनककुण्डललक्ष्म्या ॥ २४ ॥
यदुपतिर्द्विरदराजविहारो यामिनीपतिरिवैष दिनांते ॥ मुदितवक्त्र उपयाति दुरंतं मोचयन्व्रजगवां दिनतापम् ॥ २५ ॥

दातुमिच्छया देवक्या जठरे भवतीति तथा स एवोडुराजश्चंद्रो निर्वृतिहेतुत्वेन स एष एतीति॥ २३ ॥अतिसंभ्रमेण काश्चित्समीपमायांतं कथयंति। मदेति। ईषन्मदेन विघूर्णिते विह्वलिते लोचने यस्य सः । बदरपांडुवदनः ईषत्पक्वबदरवत्पांडुरं वदनं यस्य सः । अत्र हेतुः । कनककुंडलयोर्लक्ष्म्या कांत्या मृदू कोमलौ गंडौ यस्मिंस्तद्वदनं मंडयन्निति कोमलगंडस्थलं वा शोभयन्निति ॥ २४ ॥ यदुपतिरिति देवकीजठरभूरिति च ' प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः ' इत्यादिगर्गवाक्यप्रसिद्ध्योक्तम् । यद्वा ' सख उदेयिवान्सात्वतां कुले ' इतिवज्ज्ञात्वा काश्चिद्वदंतीति । गजेंद्रस्येव गतिर्यस्य चंद्र इव प्रसन्नवक्त्रो व्रजगवामस्माकमनंतं दिनतापं च शमयन्नुपयातीति एष समीपमाया

लभ्यते । तच्च सखिभिर्मुहुर्निजोत्तरीयेण रजसोऽपसारितत्वात्स्रजि तु रजस्थस्य प्रविश्य स्थितत्वादपसारणयत्ने दलभंगः स्यात् । मणिनापीयं माला यत्न दूरीक्रियते दामधृतवस्त्रसंपुटस्था नवीनाप्यन्या यत्न परिधीयते तस्मादियं माला यया प्रियया स्वहस्तेन संग्रथ्य सखीद्वारा दत्ता तां प्रियामेव स्वकंठधृतामेनां दर्शयितुं कृष्णस्य यत्न इति । देवकी यशोदा तस्या जठरमेव क्षीरधिस्तास्मिन् भवतीति सः । ''द्वे नाम्नी नंदभार्याया यशोदा देवकीति च'' इति पणोद्देशदीपिकाधृतादिपुराणवाक्यात् । उडुराजश्चंद्रः ॥ अत्र **तोषिणी**—ततश्चोत्कंठाभिरट्टालिकादिकमारुह्य तदेव दर्शयंति—वत्सल इति । तत्र च आगमनं वर्णयितुं प्रथमं परमोल्लासेनासाधारणीं तत्कृपामेव तत्र हेतुं व्यंजयंति--वत्सलो व्रजगवामिति । तत्रोदाहरणमाहुः—यदिति । यद्यस्मात्परमकोमलोऽप्यसौ तदर्थं पर्वतमपि धरतीत्यर्थः । अत्र वर्तमानप्रयोगश्चात्यंतकृतज्ञतया कृतः तदातनत्वेनैव तत्स्फूर्तेः । यदेवं तद्विरहेऽपि तद्वदेव निजामार्तिं रक्षाञ्च व्यंजयंति । अथागमनं वर्णयंति—वन्द्यमानचरण इति । व्रजांतःप्रवेशे तेषां तदप्राप्यत्वात् । अत एव वंद्यमानेति वर्तमाननिर्देशेन वंदनादनिवृत्तिर्बोध्यते । अतः संकोचेन तदनिच्छायामपि तैस्तत् क्रियते इति व्यक्तम् । अहो एतादृशगुणज्यायस्त्वमिति भावः । गोधनोपवहनार्थं व्रजवर्तिषु निजागमनमंगलविज्ञापनार्थञ्च गीतवेणुः । तदीयरागतालानुसारेण तद्गानसंबंधिषु तदीयानुगानभंग्यैवानुगैर्गोपैरीरिता कीर्तिः पूतनामोक्षादिरूपा एतद्दिनक्रीडात्मिका वा यस्य सः ॥ श्रमः तज्जनितप्रस्वेदादिस्तदाश्रययापि सहजशोभयेत्यर्थः । यद्वा—श्रमेण या रुक् शोभा तयापि । दर्शीनां दृङ्मात्राणां किमुतास्मदीयानामित्यर्थः । तत्र तादृशशोभानिदर्शनं गवां खुररजोभिः परागैरिव छुरिता कर्बुरिता स्रक् माला यस्य सः । स्रज्येव रजोनिर्देशादन्यत्र रजो नास्तीति लभ्यते । तच्च सखिभिर्मुहुर्मुहुरंगतो निजोत्तरीयेण रजस्यपसारितेऽपि तस्यां तस्य प्रविश्य स्थितत्वात् । परमांतरंगप्रियजनदत्तायास्तस्या दलादिभंगशंकया तेनैव तन्निवारितत्वाद्वा, दूरतोऽपि रजआदीनां निर्देशस्त्वनुमानेन प्रेमबलतो निकटवत्स्फुरणेन वा । पूर्वव्यंजितमागमने कृपाया एव कारणत्वं साक्षादप्याहुः—दित्सयेति । अन्यथा श्रीवृंदावने पूर्वपूर्ववर्णितानुसारेण किं वा सुखं तस्य नास्तीति भावः । सुहृदामिति सामान्योक्तिर्दर्शीनामितिवत् । एष इत्यंगुल्या निर्दिशंति । देवकीशब्देनात्र श्रीयशोदैव सादरं प्रस्तूयते । व्रजराजत्वाच्च एव देवकः श्रीनंदस्तस्य पत्नी देवकीति । 'देवो राज्ञि सुरे हरौ' इति कोशात् । तस्या एव सांत्वनायां प्रवृत्तेर्मातृतया मतत्वात् 'तव सुतः सति' इति, 'नंदसूनुरयमार्तजनानाम्' इति पूर्वसंवादाच्च । मात्रंतरसूचने तु प्रत्युत तद्विरोधापत्तेः, मतांतरवाक्येऽप्यौदासीन्यापत्तेश्च । अतस्तस्य तदप्येकं नामेति लभ्यते । 'नाभेरसावृषभ आस सुदेविसूनुः' इत्यत्र मेरुदेव्या एव सुदेवीतिसंज्ञावत् । उक्तं च—" द्वे नाम्नी नंदभार्याया यशोदा देवकीति च " इति । उडुराजः दिनतापहरणादिसाम्यात् । उडुस्थानीयाश्चात्र सखायो ज्ञेयाः । श्रीकृष्णजन्मस्थानत्वेन देवकीजठरस्य शुद्धसत्त्वमयत्वेन परमशुद्धत्वात्क्षीरसमुद्रत्वं ध्वनितम् ॥ २२ ॥ २३ ॥ ( ११ ) अतिसंभ्रमेण सहसा । अत्र पांडुरत्वे । गंडौ कपोलौ । इंद्रनीलमणिदर्पणसदृशयोः कनककुंडलप्रभान्वयेन बदर इव वदनं

श्रीशुक उवाच ॥ एवं व्रजस्त्रियो राजन्कृष्णलीलानुगायतीः ॥ रेमिरेऽहस्सु तच्चित्तास्तन्मनस्का महोदयाः ॥ २६ ॥
इति श्रीभागवते म० द० पू० वृंदावनक्रीडायां गोपिकायुगलगीतं नाम पंचत्रिंशोऽध्यायः ॥ ३५ ॥

तीति ॥ २५ ॥ एवं विरहदुःखेनापि तु अहो कृष्णलीला एव गायंत्यस्तास्मिंश्चित्तं चेतना जीवितं यासां तास्तस्मिन्नेव मनः संकल्परूपं यासां ता अतो महानुदय उत्सवो यासां ता अहःस्वपि रेमिरे ॥ २६ ॥ इति श्रीमद्भागवते० म० दशमस्कंधे पूर्वार्धे टीकायां पंचत्रिंशोऽध्यायः ॥ ३५ ॥

यस्य भातीति भावः । समासापेक्षया भिन्नंभिन्नं पदं शोभनं, झटित्यर्थावबोधकत्वादत आह—कोमलेति ॥ ( २४ ) ॥ यद्वा अथ वा । वस्तुतस्तु पूर्वोक्तरीत्या गोपानां यदुत्वं यशोदाया देवकीत्वं च साधितमेव । विजयध्वजेन पाठांतरं कल्पयित्वा बलदेवपक्षे योजना कृता, सा च ‘ कृष्णलीलानुगायतीः ’ इत्यनेन विरोत्स्यतीति । चंद्रपक्षे मदे आनंदकरे विघूर्णित इतस्ततः प्रसृतः लोचनः प्रकाशो यस्य स तथा । ‘लुच—प्रकाशेऽपि’ स्वसुहृदां स्त्रीणां मानदो अभिमानखंडनः । वनानां भासां दीप्तीनां माला अस्यास्तीति वनमाली । बदरो बृहस्पतिः, पांडुः शुक्रस्तयोरिव वदनं वचनं यस्य स तथा । व्रजगवामिति व्याख्या तम् ॥ * ॥ इदानीं नगरप्रांतपर्यंतमागतस्तत्रापि किंचिद्विलंबस्य कारणं शृण्वित्याहुः--मदेति । मदेन पित्रादिदर्शनोत्थेनानंदेन प्रेयसीजनदर्शनोत्थकाममत्ततया च विघूर्णिते विह्वले लोचने यस्य सः । प्रथमार्थो वात्सल्यरसपरिकरैर्द्वितीयार्थो मधुररसपरिकरैस्तत्रत्यैर्बुध्यत इत्येवमग्रेऽपि ज्ञेयम् । स्वसुहृदां पुरोहितादिमातुलादिभ्रात्रादिदासादितांबूलिकादीनां यथोचितमाशीर्वादादिकृतामीषन्मानदः राजपुत्रत्वादल्पवयस्त्वेनानधिगतनीतिशास्त्रत्वाच्च ईषन्मात्रं यथोचितं शिरोनमनादिकं मानं ददातीति सः । इत्ययमपि विलंबहेतुरिति भावः । पक्षे, स्वसुहृदां प्रेयसीनां चंद्रशालिकाद्यारुह्य हसितापांगनीलोत्पलैः पूजयंतीनामीषदन्यजनाऽलक्षितं मानमभीष्टदानव्यञ्जकैः कटाक्षैर्ददातीति सः । वनपर्यटनश्रमेण क्षुत्पिपासाभ्यां च ईषत्पक्वबदरवत्पांडु वदनं यस्य सः । पक्षे, स्वाभीष्टप्रेयसीविरहानुभावोऽयं वदने पांडिमा । मृदुगंडं मृदू गंडौ कनककुंडलयोश्चलयोर्लक्ष्म्या कांत्या मंडयन् ॥ यदुपतिरिति—गोपानां यादवत्वस्य पूर्वं प्रतिपादितत्वात् । द्विरदराजविहारो गजेंद्रतुल्यमंदगमनः । मुदितवक्त्रः प्रफुल्लितमुखः । उपयाति निकटमायाति । व्रजगवां व्रजस्थजननेत्राणाम् ॥ अत्र **तोषिणी**—ईषदित्यस्य विशुद्धसत्त्वमयत्वेन विघूर्णितेत्यनेन संबंधः । मदो हर्षकृतचित्तविकारः । स च स्वभावत एव, विशेषतश्च नवयौवनात्, ततोऽपि विशेषतः प्रेयसीजनदर्शनाद्विज्ञेयः । एवं बहुष्वपि व्यंगेषु तत्सभायां तत्तदुपलब्धिस्तु स्वस्ववासनानुसारेणैवेति न रससांकर्यदोषः । तेन मदेन मनाक् विविधतया घूर्णिते लोचने यस्येति श्रीनेत्रयोर्विलासविशेष उक्तः । व्रजप्रवेशसमयेऽभिगच्छतां स्वसुहृदां तेभ्यो मानं प्रणामालिंगनसास्मितसंभाषणप्रणयावलोकनर्मविलोककृपावलोकादिलक्षणं यथोचितं ददातीति सः । वनमालीति पूर्वोक्तकुंददामानुसारेण कुंदैरेवापादलंबिकात्वेन रचितया मालया युक्त इति ज्ञेयम् । मृद्विति कैशोरस्वभावेन सुकोमलकांतित्वात् । मंडयन्निति स्वभावत एव कुंडलयोर्गंडाभ्यां संयोगात् । विशेषतश्च गजेंद्रगत्या मंदमंदचलनेन मुहुरुपसर्पणापसर्पणाभ्यां शोभाविशेषात् ॥ यदुपतिरिति—पूर्वदर्शितस्कांदोक्तानुसाराद्यादवेष्वपि सर्वेषु भवंतो मम वल्लभा इति यदुपुराद्व्रजमागतस्य रामस्य गोपान्प्रति श्रीहरिवंशप्रसिद्धवचने निर्धारणसप्तमीनिर्देशाच्च यदूनां गोपानां पतिरिति सर्वस्यापि गोकुलस्य परमाश्रयत्वेन परमप्रेमास्पदत्वं दर्शितं मुदितवक्त्र इति । उपयातीति दुरंतमपरिच्छिन्नमपि तदनिष्टाशंकाहेतुकं तद्विच्छेदहेतुकं च व्रजगवां तापं विमोचयँस्तत एव परमानंदं च ददातीति ज्ञेयम् । अन्यतैः । तत्र व्रजगवामस्माकमिति व्रजस्यास्माद्विशिष्टस्य सज्जनस्य गवां च शकटादीनां व्रजस्थानामित्यस्मत्संवलितत्वादस्माकमेवेत्यर्थः । यद्वा—व्रजस्य गवां नेत्राणाम् । “स्वर्गेषु पशुवाग्वज्रादिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्योः स्त्रियां पुंसि गौः” इति नानार्थवर्गात् । बदरवत्पांडुवदन इति निजभावानुसारेण तस्यापि स्वविरहदुःखनिश्चयात्तथा दृष्टेः, भावांतरवर्जने तु श्रमवैवर्ण्यव्यंजनात् । यामिनीपतिश्चंद्रो यथा दिनांते उदेति तथेति । युग्मकानि पूर्णानि ॥ २४ ॥ ॥ २९ ॥ ( १२ ) ॥ चित्यते संज्ञायते इंद्रियप्रवर्तकत्वेनेति चित्तम् ‘चिती—संज्ञाने’ अतः क्तप्रत्यये इडभावः ईदित्त्वात् । तस्मिन् श्रीकृष्णे । अतो भगवन्मनस्त्वादेव । महान् वक्तुमशक्यः । अहस्स्वपीहापिना

श्रीशुक उवाच ॥ अथ तर्ह्यागतो गोष्ठमरिष्टो वृषभासुरः ॥ महीं महाककुत्कायः कंपयन्खुरविक्षताम् ॥ १ ॥ रंभमाणः खरतरं पदा च विलिखन्महीम् ॥ उद्यम्य पुच्छं वप्राणि विषाणाग्रेण चोद्धरन् ॥ २ ॥ किंचित्किंचिच्छकृन्मुञ्चन्मूत्रयन्स्तब्धलोचनः ॥ यस्य निर्ह्रादितेनांग निष्ठुरेण गवां नृणाम् ॥ ३ ॥ पतंत्यकालतो गर्भाः स्रवंति स्म भयेन वै ॥ निर्विशंति घना यस्य ककुद्यचलशंकया ॥ ४ ॥

षट्त्रिंशे तु हतेऽरिष्टे नारदोक्त्या बलाच्युतौ ॥ वसुदेवसुतौ ज्ञात्वा कंसोऽक्रूरं समादिशत् ॥ १ ॥ गोपीरासांतरायातं शंखचूडं निहत्य सः ॥ अहन् गोपीमहानंदासहं दुष्टमरिष्टकम् ॥ २ ॥ एवं देवगंधर्वादिगीतनृत्यवाद्यकुसुमवर्षादिभिः कृष्णं प्राप्तं दृष्ट्वा व्रजस्य परमोत्सवे वर्तमाने तद्विरुद्धार्थोतराधिकारार्थमथशब्दः । तर्हि तदा । वृषभाकृतिरसुरः । तं वर्णयति सार्धत्रयेण । महांतौ ककुत्कायौ यस्य सः । खुरैर्विदारितां महीं कंपयन् ॥ १ ॥ रंभमाणो वृषभजातिशब्दं कुर्वन् । विलिखन् विदारयन् । उद्यम्योर्ध्वं कृत्वा । वप्राणि तटान्युत्क्षिपन् ॥ २ ॥ किंचित्किंचिच्छकृन्मध्येमध्ये ईषदीषत्पुरीषं मुंचन् । तथा मूत्रयन्मूत्रमुत्सृजन् । स्तब्धलोचनोऽनिमिषलोचनः । यस्य ध्वनिना गवां नारीणां च ॥ ३ ॥ तत्र "आ चतुर्थाद्भवेत्स्रावः पातः पंचमषष्ठयोः । अत ऊर्ध्वं तु नारीणां प्रसवः परिकीर्तितः ॥" इति विभागः । ककुदि गलपृष्ठमांसपिण्डेऽचलोऽयमिति भ्रांत्या वर्षं

रात्रिक्रीडापि बोधितेति ॥ * ॥ नु भो राजन् । गायतीर्गायंत्यः । तस्मिन् श्रीकृष्ण एव चित्तं यासां ताः । तस्य श्रीकृष्णस्यापि मनो यासु ता इत्यतः श्रीकृष्णतात्प्रियाणां परस्परविषयाश्रयत्वात्परस्परमनोग्रहणम् अतः प्रतिक्षणमानेशस्मरणात् । रेमिर इति विप्रलंभप्रेम्णो दुःखमयत्वेन तदाविष्टजनप्रतीतत्वेऽपि परमसुखमयत्वं प्रेक्षावत्प्रतीतमस्त्यतः प्रेम्णः पुरुषार्थचूडामणित्वं व्यंजितम् ॥ अत्र **तोषिणी**—उपसंहरति—एवमिति । व्रजस्थिता अपि स्त्रियः । हे राजन्निति तासां विरहगीतप्रेम्णा मुहुस्तं राजानं स्वस्थयति । अहस्सु तद्विरहमयेष्वपि रेमिरे जातनिर्वृतिप्राया बभूवुः । अत्र हेतवस्तच्चित्ताद्याः । तस्य परमानंदस्वभावत्वादिति भावः । अन्यत्तैः । यद्वा—एवमुक्तप्रकारेणेति । तत्रेदशलीलांतरे गानमपि बोध्यते । तच्चित्ततन्मनस्कत्वतज्ज्ञानैस्तदेकगतज्ञानेच्छाप्रयत्नत्वमुक्तम् । महान् तदाविर्भावरूपत्वात्, महान्सर्वतोऽप्युत्कृष्ट उदयः सत्कर्मसिद्धिर्यासां ताः । तदेवमुत्तरोत्तरमाविर्भवविवैशिष्ट्येन रमणस्यापि वैशिष्ट्यं ज्ञेयम् । तत्र वत्सल इत्यादिषु साक्षादाविर्भावात्साक्षादेव रमण तत्राप्युत्तरोत्तरतारतम्यं, पूर्वत्र तु विरहेऽपि रमणं निजालंबनस्य मनःस्फुरितत्वादंशेन भवत्येवेति सर्वत्र रेमिर इति विश्लिष्टमेव ॥ २६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे पूर्वार्द्धे पंचत्रिंशोऽध्यायः ॥ ३५ ॥ अरिष्टे वृषाकृतिदैत्ये ( १ ) । रासस्यांतरे मध्य आयातम् । स कृष्णः । गोपीनां महांतमानंदं न सहत इति तथाभूतम् ( २ ) । एवम् उक्तरीत्या । तद्विरुद्ध उत्सवविरुद्धोऽर्थांतराधिकारो गोगोपगोपीनां भयजनकारिष्टागमनरूपस्तदर्थम् । तम् दैत्यम् । ककुत्कायौ स्कंधोऽर्द्ध्वभागदेहौ ॥ [1] * ॥ तर्हीत्यस्य यत्पदसापेक्षत्वात्प्रदोषे यदा कृष्णो रासार्थमुद्यतोऽभूदिति विष्णुपुराणदृष्ट्या शेषो देयः । तद्वाक्यम्—"प्रदोषाऽर्द्धे कदाचित्तु रासासक्ते जनार्दने । त्रासयन्भयदो गोष्ठमरिष्टः समुपागतः ॥" इति । महदुच्चं ककुत् पृष्ठाग्रशिखा यत्र तथाभूतः कायो यस्य सः ॥ १ ॥ खरतरम् अतितीक्ष्णम् ॥ * ॥ ० ॥ २ ॥ यस्य अरिष्टस्य । निर्ह्रादितेन गर्जितेन । निष्ठुरेण कठोरेण ॥ * ॥ भीतामिव राजानमालक्ष्याश्वासयति—हे अंगेति । श्रीकृष्णस्तं मारयिष्यतीति मा त्रस्तो भवेति भावः ॥ ३ ॥ तत्र पातस्रावयोः । आ चतुर्थाच्चतुर्थमासपर्यंतं गर्भपातस्य स्रावसंज्ञा । अतः षष्ठमासादूर्ध्वम् । यस्य अरिष्टस्य । अचलो नगः ॥ * ॥ निर्वि

१ इतोऽग्रे षष्टितमाध्यायपर्यन्तमेतच्चिह्नतोऽग्रे तोषिणीविश्वनाथाद्यनुसारिव्याख्यानं प्रतिपद्यवमधेयम् ।

तं तीक्ष्णशृंगमुद्वीक्ष्य गोप्यो गोपाश्च तत्रसुः ॥ पशवो दुद्रुवुर्भीता राजन्संत्यज्य गोकुलम् ॥५॥ कृष्णकृष्णेति ते सर्वे गोविंदं शरणं ययुः ॥ भगवानपि तद्वीक्ष्य गोकुलं भयविद्रुतम् ॥ ६ ॥ मा भैष्टेति गिराऽऽश्वास्य वृषासुरमुपाह्वयत् ॥ गोपालैः पशुभिर्मंद त्रासितैः किमसत्तम ॥ ७ ॥ बलदर्पहाऽहं दुष्टानां त्वद्विधानां दुरात्मनाम् ॥ इत्यास्फोट्याच्युतोऽरिष्टं तलशब्देन कोपयन् ॥८॥ सख्युरंसे भुजाभोगं प्रसार्यावस्थितो हरिः ॥ सोऽप्येवं कोपितोऽरिष्टः खुरेणावनिमुल्लिखन् ॥ उद्यत्पुच्छभ्रमन्मेघः क्रुद्धः कृष्णमुपाद्रवत् ॥ ९ ॥ अग्रन्यस्तविषाणाग्रः स्तब्धासृग्लोचनोऽच्युतम् ॥ कटाक्षिप्याऽद्रवत्तूर्णमिंद्रमुक्तोऽशनिर्यथा ॥ १० ॥

तीत्यर्थः । घनो हि प्रायेण गिरौ वर्षति ॥ ४ ॥ तीक्ष्णे शृंगाग्रे यस्य तं वीक्ष्य ॥ ५ ॥ कृष्णकृष्ण रक्षेति ॥ ६ ॥ ७ ॥ इत्येवं वदन् । आस्फोट्य करतलेन बाहुमाहत्य तेन तलशब्देन कोपयन् ॥ ८ ॥ भुजाभोगं भुजा भुजः स एव भोगः सर्पदेहस्तं सर्पदेहाकारं भुजमित्यर्थः । स्वयमच्युतः अन्यान्दुष्टान्हरतीति हरिः । उद्यता ऊर्ध्वं गच्छता पुच्छेन भ्रमंतो मेघा यस्मात्सः ॥९॥ अग्रे न्यस्ते विषाणाग्रे येन सः । स्तब्धे असृक्तुल्ये लोचने यस्य सः । कटाक्षिप्य कटाक्षेण तिर्यङ् निरीक्ष्येत्यर्थः ॥ १० ॥

शंति घना इति कूलं पिपतीषतीतिवदचेतनेऽपि निर्देशसंभवात् । यद्वा—मेघाश्चेतना एव देवतारूपेण "इंद्रः प्राचोदयत्क्रुद्धो मेघानां चांतकारिणां गणम्" इत्युक्तेः । "मेघा नद्योऽथ गिरयोऽचेतनाश्चेतना अपि । द्विरूपा एव वर्तंते सत्यमेतद्द्विजोत्तमाः ॥ श्रूयंते सर्वशास्त्रेषु वर्ण्यमाना महर्षिभिः" इति संहितोक्तेश्च ॥ ४ ॥ तम् अरिष्टम् । तत्रसुर्भीता आसन् ॥ * ॥ पुनरपि तथैव हे राजन्निति । भगवत्प्रभावज्ञानेन राजमानस्त्वं कुतो गोकुलवासिजनभयं शंकस इति भावः ॥ ५ ॥ ते गोकुलवासिनः । कृष्णकृष्णेति संबोध्य संभ्रमत्वाद्रक्षेति क्रियाविस्मृतिः, तत्तस्माद्गोकुलमित्यन्वयः ॥ * ॥ हे कृष्णेति भक्तक्लेशकर्षकत्वान्नः क्लेशमपाकुर्विति भावः । वीप्सा तु संभ्रमे । गोविंदं गोकुलेंद्रतयाभिषिक्तम् । सर्वे इत्युक्तेः पशवोऽपि कृष्णकृष्णेति प्रोचुः । उक्तञ्च सुरभिगमने—'स्वसंतानैरुपामंत्र्य' इति । गोवर्धनरासस्थलात्कोलाहलश्रवणेनाभिमुखमायांतं शरणं ययुरित्यर्थः ॥ ६ ॥ आश्वास्य सांत्वय्य । हे मंद किं प्रयोजनम् ॥ * ॥ मंद अल्पमते । पशूनां त्रासनात् त्रासितैः किं फलं न किमपीति भावः । यतोऽहमेव दुष्टानां दुष्कर्मणां शास्ताऽतो मयि सति तैः किं प्रयोजनमिति भावः । ननु वृषभोऽहं कथं शासनीयस्तत्राह—हे असत्तमेति । कृत्रिममेव तव वृषत्वं तत्त्वतो दुष्टदैत्य एवेति भावः ॥ ७ ॥ त्वद्विधानाम् त्वत्समानाम् ॥ * ॥ त्वद्विधानां त्वत्सदृशानां, किमुत तवेति भावः । अच्युतस्तत्स्थानादचलितः । 'न चचाल ततः स्थानात्' इति पराशरोक्तेः ॥ ८ ॥ इत्यर्थ इति--सर्पदेहवत्स्निग्धं पुष्टं वक्रीभवनशीलमित्याभिप्रायः । अच्युतः सर्वदैकस्वभावः । एवं तलशब्दास्फोटनादिना ॥ * ॥ सख्युः सुबलस्य । श्रीदाम्न इति **तोषिणी** । सख्युरंसे भुजस्थापनेन सावज्ञत्वं दर्शितम् ॥ ९ ॥ न्यस्ते कृते । विषाणाग्रे शृंगाग्रभागे । स्तब्धे स्तिमिते । कटशब्दोऽत्रैकदेशन्यायेन कटाक्षपरः । कटेन कटाक्षेणाक्षिप्य ।

१ अयमेवमेव पाठमुरीकरोतीति भाति ।

गृहीत्वा शृंगयोस्तं वा अष्टादश पदानि सः ॥ प्रत्यपोवाह भगवान्गजः प्रतिगजं यथा ॥ ११ ॥ सोऽपविद्धो भगवता पुनरुत्थाय सत्वरः ॥ आपतत्स्विन्नसर्वांगो निःश्वसन्क्रोधमूर्छितः ॥ १२ ॥ तमापतंतं स निगृह्य शृंगयोः पदा समाक्रम्य निपात्य भूतले ॥ निष्पीडयामास यथाऽर्द्रमंबरं कृत्वा विषाणेन जघान सोऽपतत् ॥ १३ ॥ असृग्वमन्मूत्रशकृत्समुत्सृजन्क्षिपंश्च पादाननवस्थितेक्षणः ॥ जगाम कृच्छ्रं निर्ऋतेरथ क्षयं पुष्पैः किरन्तो हरिमीडिरे सुराः ॥ १४ ॥ एवं ककुद्मिनं हत्वा स्तूयमानः स्वजातिभिः ॥ विवेश गोष्ठं सबलो गोपीनां नयनोत्सवः ॥ १५ ॥

प्रत्यपोवाह प्रतिलोमं व्यनुदत्॥ ११ ॥ अपविद्धोऽपक्षिप्तः । आपतदाद्रवत् । स्विन्नानि स्वेदयुक्तानि सर्वांगानि यस्य सः । क्रोधमूर्छितः क्रोधेन व्याप्तः॥ १२ ॥ कृत्वा उत्कृत्य विषाणमुत्पाट्य तेनैव जघान स चापतत् ॥ १३ ॥ मूत्रं च शकृच्च मूत्रशकृत् । एकवद्भावः । तदुभयं समुत्सृजन्नित्यर्थः । पादांश्च क्षिपन्नितस्ततश्चालयन् अनवस्थितेक्षणः प्रचलितनेत्रः । कृच्छ्रं कष्टं जगाम । अथ निर्ऋतेर्मृत्योः क्षयं निवासं जगाम । कृच्छं यथा भवति तथा मृत इति वा ॥ १४ ॥ नयनोत्सवो नयनानांमूर्तिमानुत्सवः ॥ १५ ॥

इह समासस्त्वार्षः । आक्षिप्येत्यनेन तिर्यङ्निरीक्षणं लक्ष्यते । अशनिर्वज्रम् ॥ * ॥ कटाशब्देन कटाक्ष एव बोध्य एकदेशन्यायेन ॥ १० ॥ स कृष्णः । तम् अरिष्टम् । प्रतिलोमम् पृष्ठतः । व्यनुदत् पातयामास ॥ ॥ * ॥ ० ॥ ११ ॥ सः असुरः ॥ * ॥ ० ॥ १२ ॥ तम् असुरम् । सः कृष्णः । अम्बरम् वस्त्रम् । कृत्वा 'कृती–छेदने' । विषाणमिति शेषः । सः आसुरः ॥ * ॥ ० ॥ १३ ॥ इत्यर्थ इति–अतिपीडितस्य मलमूत्रे निःसृते इति तात्पर्यम् । निर्गता ऋतिः कल्याणं निंदा वा यस्मात्स निर्ऋतिः "ऋतिः कल्याणवर्त्मनोः । जुगुप्सास्पर्धयोः स्त्री स्यात्" इति मेदिनी । " निर्ऋतिः स्यादलक्ष्म्यां स्त्री दिगीशोऽदयमृत्युषु" इति धरणिः । "क्षयो रोगांतरे वेश्मकल्पान्तापचयेषु च" इति मेदिनी । कर्मद्वयापेक्षया क्रियाविशेषणे लाघवं मत्वाह–कृच्छ्रं यथेति ॥ * ॥ निर्ऋतेः क्षयं जगामेति मुनींद्रस्य कोपोक्तिरेव । वस्तुतस्तु–'ये च प्रलंबखरदर्दुरकेश्यरिष्ट–' इत्यादावस्यापि मोक्षश्रवणान्निर्ऋतेर्मृत्योर्हेतोः क्षयं भगवन्निवासं गत इत्येवार्थः । **विश्वनाथस्तु**–निर्ऋतेर्मृत्योः सकाशात् क्षयं वधं जगाम । निर्ऋतिरेवागत्य तं जघान न तु कृष्ण इत्युत्प्रेक्षते । स तु सद्यो मुक्तिमापेत्याह ॥ १४ ॥ एवम् शृंगताडनादिना । ककुद्मिनम् वृषासुरम् । निपातनात्ककुदो ग्मिनिप्रत्ययः । स्वजातिभिर्देवैर्गोपैर्वा ॥ * ॥ जातिभिर्गोपैस्तेषामेवांतरंगत्वात् । सबल इत्यरिष्टवधेऽनुजस्नेहेन स्वक्रीडातस्तस्याप्यागमनात् । अत्र यद्धरिवंशे–"स चोपेंद्रो वृषं हत्वा कांतचंद्रे निशामुखे । अरविंदाभनयनः पुनरेव रराम ह ॥" इति । तत्र गोष्ठप्रवेशानंतरं पुनर्निर्गम्येति ज्ञेयमिति भगवतस्तत्र रागविशेषो दर्शितः । यच्चोक्तमादिवाराहे श्रीगोवर्द्धनपरिक्रमे–"गंगायाश्चोत्तरं गत्वा देवदेवस्य चाक्रिणः । अरिष्टेन समं यत्र महद्युद्धं प्रवर्तितम् ॥ घातयित्वा ततस्तस्मिन्नरिष्टं वृषरूपिणम् । कोपेन पाणिघातेन महास्तीर्थं प्रकल्पितम् ॥ वृषभस्य वधो ज्ञेय आत्मनः शुद्धिमिच्छता । स्नातस्तत्र तदा कृष्णो वृषं हत्वा सगोपकः ॥ राधां विपाप्मा प्रोवाच कथं भद्रे भविष्यसि । वृषो हतो मया चायमरिष्टः पापसूचकः ॥ तत्र राधा समाश्लिष्य कृष्णमक्लिष्टकारिणम् । स्वनाम्ना विदितं कुंडं कृतं तीर्थमदूरतः ॥ राधाकुंडमिति ख्यातं सर्वपापहरं शुभम् । अरिष्टराधाकुंडाभ्यां स्नानात्फलमवाप्नुते ॥ राजसूयाश्वमेधाभ्यां नात्र कार्या विचारणा । गोहत्या ब्रह्महत्या च पापं क्षिप्रं प्रणश्यति ॥" तत्र–गंगायाः मानसगंगायाः, चक्रिणः करचरणादिगतचक्रादिमहाभगवल्लक्षणस्य देवदेवस्य दिव्यातिदिव्यमहैश्वर्यमाधुर्यस्य श्रीकृष्णस्येत्यर्थः । यत्र महद्युद्धं प्रवर्तितं प्रवृत्तम् । घातयित्वा कोपेन गोष्ठोपद्रवहेतुककोपविशेषेण यः पार्ष्णिघातस्तेन । पृथिव्याः तद्युद्धप्रपंचशुश्रूषामाशंक्याह–वृषभस्येति । मम तल्लीलाकथनावेशे सति तीर्थमाहात्म्यकथनं न स्यादिति भावः । वृषानुकर्तृवधात् शुद्धिं तदनुकरणमिच्छता इच्छन्नित्यर्थः ।

महातीर्थमिदं पातालात्समुत्थितमिति व्याजेन स्वतीर्थमहिमदर्शनाय तत्र स्नातस्य । तदेवं स्नानानंतरं मूलानुसारेण गोष्ठं प्रविश्य द्वित्रिदंडान्स्थित्वा श्रीहरिवंशानुसारेण पुनरपि रासाय वेणुवाद्यादिसंकेतेन राधादिभिः सह हतारिष्टे रासवर्त्मनि तत्र सर्वाभ्यः पृथग्गतस्य तां प्रति स नर्मवचनमाह—विपाप्मेति । तत्परिहासाशंकया विपाप्मत्वं व्यंजयन्नित्यर्थः । मम तावत्पापं नोत्पन्नमेव प्रत्युत तीर्थनिर्माणपुण्येन कृतकृत्यः सिद्धसर्वार्थोऽभूवमेतादृशतीर्थनिर्माणाभावात्त्वं कथं भद्रे पुण्यविषये भविष्यसीत्यर्थः । विपाप्मत्वमेव व्यंजयति—वृषो वृषाकारमात्रोऽरिष्टनामा पापसूचकः सुदुश्चारित्रेण निजपापत्वेनासुरत्वेमव यो व्यंजयतीत्यर्थः । लब्धचिंतायाः श्रीराधायास्तु तन्मेलने स्नेह एवोदितवानित्याह—तत्रेति । तत्प्रसंगे समाश्लिष्य स्वाभाविकीं लज्जामपि त्यजंती सम्यगालिंग्य ततस्तत्सौहार्देन स्वयमपि तत्र कुण्डं कृतवतीत्याह—स्वनाम्नेति।राधेति राधयेत्यर्थः । स्वयमिति ज्ञेयम।स्वयं कर्त्रीकत्वेनैव तत्कुंडतुल्यताप्राप्तेः सखीलक्षसहायत्वात्कुंडस्य स्वल्पप्रमाणत्वाच्च । अत एव समाश्लिष्य कृतमिति तदैव करणं बोध्यते। तच्चारिष्टखुरचूर्णितबहलमृदपसारणया प्रथममीषदेव पश्चात्तु विशालतेति ज्ञेयम् । अदूरतस्तत्कुण्डयुग्मतयेत्यर्थः । अधुनापि तथा श्रीगोवर्धनेशानकोणांते दृश्यत इति । अत्र **विश्वनाथः**—अरिष्टवधांते राधाकृष्णयोर्नर्मसंलापमर्या तत्कुण्डद्वयोत्पत्तिकथा पौराणिकी श्लोकविंशत्या निबध्यते । तथा—मास्मान्स्पृशाद्य (घ-) वृषभार्दन हंत मुग्धा घोरोऽसुरो यमपि कृष्ण तदप्यं गौः ॥ वृत्रो यथा द्विज इहास्त्ययि ( पि ) निष्कृतिः किं शुद्धो भवांस्त्रिभुवनस्थिततीर्थकृच्चेत् ॥ ( १ ) ॥ किं पर्यटामि भुवनान्यधुनैव सर्वा आनीय तीर्थविततीः करवाणि तासु ॥ स्नानं विलोकयत तावदिदं मुकुंदः प्रोवाच तत्र कृतवान्बत पार्ष्णिवातम् ॥ ( २ ) ॥ पातालतो जलमिदं किल भोगवत्या आयातमत्र निखिला अपि तीर्थसंघाः॥आगच्छतेति भगवद्वचसा त एत्य तत्रैव रेजुरथ कृष्ण उवाच गोपीः॥(३) ॥ तीर्थानि पश्यत हरेर्वचसा तदैवं नैव प्रतीम इति ता अथ तीर्थवर्याः ॥ प्रोचुः कृताञ्जलिपुटा लवणाब्धिरस्मि क्षीराब्धिरस्मि शृणुताऽमरदीर्घिकास्मि ॥ ( ४ ) ॥ शोणोऽस्मि सिन्धुरहमस्मि भवामि ताम्रपर्णी च पुष्करमहं च सरस्वती च ॥ गोदावरी रविसुता सरयूः प्रयागो रेवास्मि पश्यत जलं कुरुत प्रतीतिम् ॥ ( ५ ) ॥ स्नात्वा ततो हरिरतिप्रजगल्भ एव शुद्धः सरोऽप्यकरवं स्थितमर्कतीर्थम् ॥ युष्माभिरात्मजनुषीह कृतो न धर्मः कोऽपि क्षितावथ सखीर्निजगाद राधा ॥ ( ६ ) ॥ कार्यं मयाप्यतिमनोहरकुण्डमेकं तस्माद्यतध्वमिति तद्वचनेन ताभिः ॥ श्रीकृष्णकुण्डतटपश्चिमदिश्यमंदो गर्तः कृतो वृषभदैत्यखुरैर्व्यलोकि ॥ ( ७ ) ॥ तत्रार्द्रमृन्मृदुलगोलततीः प्रतिस्वहस्तोद्धृता अनतिदूरगता विधाय ॥ दिव्यं सरः प्रकटितं घटिकाद्वयेन ताभिर्विलोक्य सरसं स्मरते स्म कृष्णः ॥ ( ८ ) ॥ प्रोचे च तीर्थसलिलैः परिपूरयैतन्मत्कुण्डतः सरसिजाक्षि सहालिभिस्त्वम् ॥ राधा तदा ननननेति जगाद यस्मात्त्वत्कुण्डतीरमुरुगोवधपातकाक्तम् ॥ ( ९ ) ॥ प्राहृत्य पुण्यसलिलं शतकोटिकुंभैः सख्यर्बुदेन सहमानसजाह्नवीतः ॥ एतत्सरः स्वमधुना परिपूरयामि तेनैव कीर्तिमतुलां तनवानि लोके ॥ ( १० ) ॥ कृष्णेंगितेन सहसेत्य समस्ततीर्थसंघस्तदीयसरसो धृतदिव्यमूर्तिः ॥ तुष्टाव तत्र वृषभानुसुतां प्रणम्य भक्त्या कृताञ्जलिपुटः स्रवदस्रधारः ॥ ( ११ ) ॥ देवि त्वदीयमहिमानमवैति सर्वशास्त्रार्थविन्न च विधिर्न हरो न लक्ष्मीः ॥ किं त्वेक एव पुरुषार्थशिरोमणिस्त्वत्प्रस्वेदमार्जनपरः स्वयमेव कृष्णः ॥ ( १२ ) ॥ यश्चारुयावकरसेन भवत्पदाब्जमारज्य नूपुरस्हो निदधाति नित्यम् ॥ प्राप्य त्वदीयनयनाब्जतटप्रसादं स्वं मन्यते परमधन्यतमं प्रहृष्यन् ॥ ( १३ ) ॥ तस्याज्ञयैव सहसा वयमाजगाम तत्पार्ष्णिघातकृतकुण्डवरे वसामः ॥ त्वं चेत्प्रसीदसि करोषि कृपाकटाक्षं तर्ह्येव तर्षविटपी फलितो भवेन्नः ॥ ( १४ ) ॥ श्रुत्वा स्तुतिं निखिलतीर्थगणस्य तुष्टा प्राह स्म तर्षमपि वेदयतेति राधा ॥याम त्वदीयसरसीं सफला भवाम इत्येव नो वर इति प्रकटं तदोचुः ॥ ( १५ ) ॥ आगच्छतेति वृषभानुसुता स्मितास्या प्रोवाच कांतवदनाब्जधृताक्षिकोणा ॥ सख्योऽपि तत्र कृतसम्मतयः सुखाब्धौ मग्ना विरेजुरखिलाः स्थिरजंगमाश्च ॥ ( १६ ) ॥ प्राप्य प्रसादमथ ते वृषभानुजायाः श्रीकृष्णकुंडगततीर्थवराः प्रसह्य ॥भित्त्वव भित्तिमतिवेगत एव राधाकुण्डं व्यधुः स्वसलिलैः परिपूर्णमेव ॥ ( १७ ) ॥ प्रोचे हरिः प्रियतमे तव कुण्डमेतन्मत्कुण्डतोऽपि महिमाधिकमत्र लोके ॥ अत्रैव मे सलिलकेलिरिहैव नित्यं स्नानं यया त्वमासि तद्वदिदं सरो मे ॥ ( १८ ) ॥ राधाऽब्रवीदहमपि स्वसखीभिरेत्य स्नास्याम्यरिष्टशतमर्दनमस्तु तस्य ॥ योऽरिष्टमर्दनसरस्युरुभक्तिरत्र स्नायाद्वसेन्मम स एव महाप्रियोस्तु ॥ १९ ) ॥ रासोत्सवं प्रकुरुते स्म च तत्र रात्रौ कृष्णांबुदः कृतमहारसहर्षवर्षः ॥ श्रीराधिकाप्रवरविद्युदलंकृतश्रीस्त्रैलोक्यमध्यविततीकृतदि

अरिष्टे निहते दैत्ये कृष्णेनाद्भुतकर्मणा ॥ कंसायाथाह भगवान्नारदो देवदर्शनः ॥ १६ ॥ यशोदायाः सुतां कन्यां देवक्याः कृष्णमेव च ॥ रामं च रोहिणीपुत्रं वसुदेवेन बिभ्यता ॥ १७ ॥ न्यस्तौ स्वमित्रे नंदे वै याभ्यां ते पुरुषा हताः ॥ निशम्य तद्भोजपतिः कोपात्प्रचलितेंद्रियः ॥ १८ ॥ निशातमसिमादत्त वसुदेवजिघांसया ॥ निवारितो नारदेन तत्सुतौ मृत्युमात्मनः ॥ ज्ञात्वा लोहमयैः पाशैर्बबंध सह भार्यया ॥ १९ ॥

कामं व्रजे वसंतं तं कृष्णं तेन तु विस्मृतम् । नारदः स्मारयामास कंसं दूतगिरेव तु ॥ १ ॥ तदाह । अरिष्ट इति । देवदर्शनो देवर्षिः । यद्वा एवं कथिते एवं भविष्यतीति साक्षाद्देववद्दर्शनं ज्ञानं यस्य सः ॥ १६ ॥ आप्तेनेव नारदेनोक्तमाह । यशोदाया इति । देवक्याः अष्टमगर्भत्वेन प्रसिद्धां कन्यां यशोदायाः सुतामाह । यशोदायाः सुतत्वेन प्रसिद्धं कृष्णं देवक्याः सुतमाह । रोहिणीपुत्रं रामं च देवक्याः सप्तमं सुतमाह । यद्वा नंदसुतत्वेन प्रसिद्धं रामं च वसुदेवभार्याया रोहिण्याः पुत्रमाह । तौ वसुदेवसुतौ चेत्कथं व्रजं गतौ तत्राह । वसुदेवेनेति । ते तव पुरुषाः सेवकाः ॥ १७ ॥ १८ ॥ निवारित इति । हते वसुदेवे तौ पलायेतामतो व्यकीर्तिः ॥ ( २० ) ॥ १९ ॥ कामम् स्वेच्छया । यद्वा—कस्य कंसस्यामं रोगवत्तन्नाशकम् । तेन कंसेन । दूतस्य गिरेव न तु स दूत इतीवेन ज्ञायते । 'कृतांतोऽनंतमस्मृतिम्' इति पाठे कृतांतः कालोऽप्यूनो हीनो यस्मात्तम् । पाठा० अनंतभियत्ताशून्यम् । किं भूतं कंसम्—न स्मृतिर्व्यवहाराकुलत्वाद्यस्य स तथा तमित्यर्थः ( १ ) । कथांतरद्योतनायायं श्लोकः । तत् नारदवृत्तम् । अथ अरिष्टहननोत्तरम् । पश्यति सर्वमिति दर्शनः, देवश्चासौ दर्शनश्चेति देवदर्शन इत्यभिप्रेत्यैव स्वामिचरणैरुक्तम्—देवर्षिरिति । देवर्षित्वे तु कर्दमादिवत्तपोज्ञानादिनिष्ठत्वमेवायाति न तु देवकार्यसधाकत्वमत आह—यद्वेति । देवानामिंद्रादीनामिव दर्शनमतींद्रियं ज्ञानं यस्येति । यद्वा—देवस्य हरेर्दर्शनं यस्य । देवं हरिं दर्शयतीति वा । देवानां दर्शनं मतं यस्येति वा । एतेन नारदस्य देवकार्यसाधकत्वं ज्ञायते, न त्वसुरकार्यकर्तृत्वमिति ॥ * ॥ अरिष्ट इति । निहत इत्यतीतनिर्देशादत्र चिरादिति ज्ञेयम् । गोवर्धनगतरासस्य वसंतमध्योद्भवत्वेन कंसवधस्य तु शिवरात्रिचतुर्दशीगतत्वेन प्रसिद्धेः । गोष्ठे विषयेऽद्भुतकर्मणेति पूतनावधाद्यरिष्टवधांताद्भुतकर्मणा कंसं प्रति श्रीनारदेन कथनस्याभिप्रायेण देवदर्शन इति तैर्व्याख्यातम् । अत्र प्रथमेऽर्थे पश्यतीति दर्शनो मंत्रदर्शीति ऋषित्वाचिता, द्वितीये प्रतिकल्पमेव गोकुले प्रकटलीलेयं यादवपांडवादिभक्तगणरक्षानुरोधेनैव तावदेव नरलीलेन भगवता क्रियते नाधिकेति सा समाप्तैव। संप्रति यादवाः परमदुःखिनो देवाश्चोद्विग्ना अतः श्रीभगवता कंसवधस्याविलंबकार्यत्वं ज्ञातं, तस्मादवसरोऽयमिति तथा कथयामि यथा कंसस्तमत्रानयेत् । अत्र **विश्वनाथः**—देवः परमेश्वर इव पश्यति कृष्णलीलातत्त्वं जानातीति सः । व्रजलीलासमाप्तिमवधार्य माथुरीं लीलामाविर्भावयितुं कंसद्वारैव कृष्णं मथुरामानेतुं युक्त्युत्थापनविचक्षण इत्याह ॥ १६ ॥ आप्तेन यथार्थवक्त्रा । अप्रसिद्धेः क्लिष्टकल्पनां मत्वाह—यद्वा । वसुदेवसुतत्वे आक्षिपति—वसुदेवेति । तत्राक्षेप उत्तरमाह । त्वत्त इति शेषः ॥ * ॥ ततश्चैनं स्वयमेवासौ हनिष्यतीति श्रीकृष्णलीलाशैलीं देववद्ब्रह्मादिवज्जानान्निति रामं रोहिण्याः पुत्रमपि देवक्या एवेति गर्भसंकर्षणमपि कथयामासेति ज्ञेयम् । बिभ्यता त्वत्त इति । भीरुत्वान्न तव वध्य इति भावः ॥ १७ ॥ स्वस्य मित्रे विश्वसनीये सुहृदि । याभ्याम् रामकृष्णाभ्याम् । ते तव । पुरुषा नियोगकारिणस्तृणावर्तादयः । तत् नारदोक्तम् । निशम्य श्रुत्वा । निशातम् तेजितम् ॥ * ॥ स्वो ज्ञातिश्चासौ मित्रं चेति । वै प्रसिद्धमेतत् । केवलं त्वमेव मूढो न जानासीति भावः । पुरुषा आप्तजनाः ॥ ॥ १८ ॥ तौ रामकृष्णौ । अतो हेतोः । पलायनाभावार्थमित्यर्थः । तत्सुतौ वसुदेवसुदेवसुतौ । भार्यया देवक्या वसुदेवमिति शेषः ॥ * ॥ निवारित इति । हते पितरि तन्निर्वेशायावसरप्रतीक्षामपि कुर्वीयातां बद्धयोस्तु पित्रोर्मोचनार्थमयश्वो वाऽऽगच्छेतां, किञ्चाधुनातनीं जिघांसां तयोर्वसुदेवो न ज्ञापनीयस्तथा सति स्वमित्रं नंदं प्रति तेनोक्तेः स सपुत्र एव पलायिष्यत इत्यतो वसुदेवदेवक्योर्बंधनमेवाधुना कृत्वा केनापि मिषेण

प्रतियाते तु देवर्षौ कंस आभाष्य केशिनम् ॥ प्रेषयामास हन्येतां भवता रामकेशवौ ॥ २० ॥ ततो मुष्टिकचाणूरशलतोशलकादिकान् ॥ अमात्यान्हस्तिपांश्चैव समाहूयाह भोजराट् ॥ २१ ॥ भोभो निशम्यतामेतद्वीर चाणूरमुष्टिकौ ॥ नंदव्रजे किलासाते सुतावानकदुंदुभेः ॥ २२ ॥ रामकृष्णौ ततो मह्यं मृत्युः किल निदर्शितः ॥ भवद्भ्यामिह संप्राप्तौ हन्येतां मल्ललीलया ॥ २३ ॥ मंचाः क्रियंतां विविधा मल्लरंगपरिश्रुताः ॥ पौरा जानपदाः सर्वे पश्यंतु स्वैरसंयुगम् ॥ २४ ॥ महामात्र त्वया भद्र रंगद्वार्युपनीयताम् ॥ द्विपः कुवलयापीडो जहि तेन ममाहितौ ॥ २५ ॥ आरभ्यतां धनुर्यागश्चतुर्दश्यां यथाविधि ॥ विशसंतु पशून्मेध्यान्भूतराजाय मीढुषे ॥ २६ ॥ इत्याज्ञाप्यार्थतंत्रज्ञ आहूय यदुपुंगवम् ॥ गृहीत्वा पाणिना पाणिं ततोऽक्रूरमुवाच ह ॥ २७ ॥

बध्यतामिति मंत्रं वदता नारदेन निवारित इति ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ मह्यं मम निदर्शितौ विधात्रा नारदेन वा । व्रजं गंतुमुद्यतौ । तावाह । भवद्भ्यामिति ॥ २३ ॥ मंचा उत्तुंगस्तंभादिरचितस्थानानि ॥ २४ ॥ अहितौ शत्रू ॥ २५ ॥ मीढुषे वरदाय ॥ २६ ॥ अर्थतंत्रज्ञोऽर्थसिद्धांतमेव जानातीत्यर्थः ॥ २७ ॥

रामकृष्णौ मथुरामानीयेतामिति मंत्रं ददतेति ज्ञेयम् । न च वसुदेवदेवक्यौ बंधयता नारदेन तयोर्विप्रियं कृतमिति वाच्यम्, प्रत्युत प्रियमेव कृतं परमोत्कंठाभ्यां ताभ्यामायत्यां स्वपुत्रमुखदर्शनलाभेन स मुनिराशीः शतसंप्रदानपात्रीकरिष्यत एवेति मुनेस्तद्विषयकापराधो नाभूदिति ॥ १९ ॥ आभाष्य बहुधोक्त्वा । भवता मद्भृत्येषु पूज्येन यद्यप्यत्रभवत्तत्रभवच्छब्दावेव पूज्येऽर्थे स्तस्तथापि क्वचित्केवलोऽपि प्रयुज्यते 'सर्वे सर्वार्थवाचका' इति न्यायमाश्रित्येति ध्येयम् ॥ * ॥ ० ॥ २० ॥ ततः केशिप्रेषणोत्तरम् । मुष्टिकादिनाम्नो मल्लान् । हस्तिपानाधोरणिकान् ॥ * ॥ ० ॥ २१ ॥ एतत् वक्ष्यमाणम् । आसाते तिष्ठतः ॥ ॥ * ॥ आनकदुन्दुभेरिति--तज्जन्मवृत्तान्तेन नारदोक्तिरेव प्रमाणितेति भावः । नारदोक्तिस्तु--'इमौ त्वां वधिष्यतः'[1] इतिलक्षणा ॥ २२ ॥ ततस्ताभ्याम् । विधातृदर्शितमृत्युज्ञानं तु योगिनामेवात आह--नारदेन वेति । यद्यपि कंसेन वीरपदेनान्येऽप्यामन्त्रितास्तथापि द्वयोर्नामग्रहणात्तौ चाणूरमुष्टिकौ गोकुलं गन्तुं सज्जौ दृष्ट्वा कंसो वक्ति--इह मथुरायाम् ॥ * ॥ निदर्शितः कथितः । संप्राप्ताविति तत्र तस्य "स्थानं प्रधानं न बलं प्रधानं स्थाने स्थितः कापुरुषोऽपि शूरः । जानामि नागेन्द्र तव प्रभावं कण्ठे स्थितो गर्जसि शङ्करस्य ॥" इत्युक्तेः स्वस्थानस्थितत्वेन नाशासम्भवोऽपीतीह प्राप्तौ हन्येताम् । गमिते, प्राप्येतामिति तत्र नीयतामित्यर्थः ॥ २३ ॥ मल्लरङ्गस्य मल्लायोधनस्थानस्य परितः सर्वासु दिक्षु श्रिताः स्थिताः । स्वैरसंयुगं योद्धाकांक्षापूरकं युद्धम् ॥ * ॥ मल्लरङ्गो मल्लक्रीडास्थानं तस्य परितः श्रिताश्चतुर्दिक्षु वेष्टनरूपेण स्थिता इत्यर्थः । वस्तुतस्तु तयोः पलायननिरोधार्थमेव मञ्चवृतिः कृता तेनेति ॥ २४ ॥ महामात्र हस्तिप "महामात्रोऽतिविस्तारे हस्तिपे चावनौ स्त्रियाम्" इति निरुक्तिकोशे । "रङ्गोक्तीरागनृत्यायोधनभूमित्रपुष्वथ" इति कोशात् । कुवलयं भूमण्डलमापीडयतीति । यद्वा--कुवलयं कैरववनं, वा कुवलयं कैरवमापीडे शेखरे यस्य स तथा ॥ * ॥ हे भद्रेति । त्वं चतुरशिरोमाणिरसीति प्रोत्साहनाय सम्बुद्धिरियम् । ममाहिताविति--ननु तौ तु त्वद्भागिनेयावेवेति चेत्तत्र तं हरिवंशीयवृत्तान्तेन नारदाच्छ्रुतेन हस्तिपं कंसो बोधयामास । तच्च सौभपतिद्रुमिलदानवादुग्रसेनरूपधरात्तत्पत्न्यां मज्जन्मेति नारदेन मह्यमुक्तमिति । अतस्तौ शत्रू मे, नाहं यादवः किन्तु दानव एव, तौ च दानवारी एवेति तत्त्वम् ॥ २५ ॥ धनुर्यागो धनुषोऽर्चाबलिदानादिरूपः । भूतराजाय भैरवविग्रहधारिणे रुद्राय । मीढुषे समर्थायाभीष्टदात्रे वा ॥ * ॥ न केवलं लौकिक एवोपायः कार्यः किन्तु दैवोऽपीत्याह--आरभ्यतामिति । भूतराजाय भूतेश्वराय मथुरापालाय तस्य धनुषोऽपि दैवताय श्रीरुद्राय । मेहति सिंचति वरदानेन तर्पयति निजार्चकमिति तस्मै ॥ २६ ॥ अर्थसिद्धांतमेवेत्यत्रै

[1] तदाकाराऽलङ्कारः ।

भोभो दानपते मह्यं क्रियतां मैत्रमादृतः ॥ नान्यस्त्वत्तो हिततमो विद्यते भोजवृष्णिषु ॥ २८॥ अतस्त्वामाश्रितः सौम्य कार्यगौरवसाधनम् ॥ यथेंद्रो विष्णुमाश्रित्य स्वार्थमध्यगमद्विभुः ॥ २९ ॥ गच्छ नंदव्रजं तत्र सुतावानकदुंदुभेः ॥ आसाते ताविहानेन रथेनानय मा चिरम् ॥ ३० ॥ निसृष्टः किल मे मृत्युर्देवैर्वैकुंठसंश्रयैः ॥ तावानय समं गोपैर्नंदाद्यैः साभ्युपायनैः ॥ ३१ ॥

हे दानपते अक्रूर मैत्रं मित्रकृत्यं त्वया क्रियताम् । त्वत्तोऽन्य आदृतः सादरो हिततमश्च न विद्यत इति ॥ २८ ॥ २९ ॥ ३० ॥ तौ मे मृत्युर्नितरां सृष्टः । वैकुंठसं

वकारेण धर्मादिज्ञानराहित्यमुक्तम् । "तंत्रं कुंटुंबकृत्ये स्यात्सिद्धांते चौषधोत्तमे । प्रधाने तंतुवाये च शास्त्रभेदे परिच्छदे ॥ श्रुतिशाखांतरे हेतावुभयार्थप्रयोजके । इतिकर्तव्यतायां च" इति मेदिनी । ततः पाणिग्रहणानंतरम् ॥ * ॥ अर्थो द्वितीयपुरुषार्थस्तस्यैव तंत्रं सिद्धांतं जानाति न तु धर्ममोक्षयोरित्यसूच्यनेन । यदुपुंगवमिति—सर्वेषां यदूनामास्थास्पदमतोऽस्यैव योग्यता न तु केवलं मदीयानामिति । वस्तुतस्तु यदूनामेव हितकरः न तु तस्य, स्वस्य दानवमननादिति भावः । पाणिग्रहणं तु केवलस्नेहप्रदर्शनार्थं निजोक्तिपालनार्थमेवेति ॥ २७ ॥ दानपते अक्रूरहस्ते काचिद्दानपतित्वसंपादिका रेखास्ति, तेन भाविदानपतित्वमालक्ष्याऽऽमंत्रित इति प्रतीयते । यद्वा—कंसस्य दानाध्यक्ष एव स इति ज्ञेयम् । यद्वा—दानमस्ति येषां ते दाना उदाराः । मत्वर्थीयोऽच् । तेषां पते ॥ * ॥ भोभो इत्यादरे वीप्सा । दानपते हे वदान्यवरेत्यर्थः । अतो मदर्थितमपि त्वयाऽवश्यं संपाद्यमिति भावः । ननु भोजराज कुतो मामेव प्रेरयासि सर्वे यादवास्त्वदाज्ञाकारिणस्तत्राह—आदृत इत्यादि । त्वत्तोऽन्यो नैपुण्येन कार्यसाधको न कोऽप्यस्तीत्यर्थः ॥ २८ ॥ यतस्त्वादृशो मद्धितकरो नास्ति अतो हेतोः । हे सौम्य प्रियदर्शन । मित्रत्वद्योतनायेयं संबुद्धिः । "सौम्यो विप्रे सोमजीवसुन्दरे सोमदैवते" इति यादवः । कार्येषु यद्गौरवं महत्तत्साधयतीति तथाभूतं त्वामिति सम्बन्धः । विष्णुम् वामनम् । स्वार्थम् स्वर्गावाप्तिरूपम् । विभुः समर्थः । एतेन समर्थेनापि कंचिद्द्वारीकृत्यैव कार्यं साध्यते इति सूचितम् ॥ * ॥ हे सोम्येति प्रोत्साहयति । निजामित्रत्वेन सहजशान्तत्वेन वाश्रितः शरणं गतः । किमर्थम्—कार्यस्य गौरवं गुरुत्वं तत्साधनं गुरुप्रयोजनं साधयितुमित्यर्थः । ननु त्वमेव स्वयं सर्वार्थे शक्तः किं मयेति चेत् सत्यम्, समर्थस्यापि साहाय्येनैव कार्यं किल संसिद्ध्येदित्यत्र दृष्टान्तः—यथेति । विभुः समर्थोऽपि । द्वेषादिंद्रादपि विष्णोर्न्यूनत्वं सूचितम् ॥ २९ ॥ तत्र नन्दगोकुले । तौ वसुदेवसुतौ । इह मथुरायाम् ॥ * ॥ तत्रैवासाते न तु पलायिताविति वक्तव्यमिति भावः । अनेनेति तर्जन्याह—अधुनैवालंकृत्य स्थापितेनेत्यर्थः । निजयानदानेनानुग्रहविशेषो दर्शितः । सुन्दराभिनवपरिष्कृतं सुरथं दृष्ट्वा बालकौ तौ सुखं स्वयमेवारोक्ष्येते इति भावः । कंसोपभुक्तो रथो भगवदारोहणानर्ह इत्यन्यो रथः श्रीभगवदिच्छयैव तेनाज्ञप्त इति ॥ ३० ॥ तौ वासुदेवौ । वैकुंठसंश्रयैर्विष्ण्वाश्रितैः । समं सार्धम् । अभ्युपायनमुपाहारः "स्यादभ्युपायनं सैन्य उपहारे स्फुटाध्वनि" इति निरुक्तिः ॥ * ॥ वैकुण्ठसंश्रयैरिति । तैर्निसृष्टेन तेन मम किं स्यादिति भावः । ताविति—एकप्रयत्नत्वात्तयोरिति भावः । नंदाद्यैरिति—अन्यथा शंकया तौ नागमिष्यत इति भावः । तेषामप्यानिष्टमत्र

घातयिष्य इहानीतौ कालकल्पेन हस्तिना ॥ यदि मुक्तौ ततो मल्लैर्घातये वैद्युतोपमैः ॥ ३२ ॥ तयोर्निहतयोस्तप्तान्वसुदेवपुरोगमान् ॥ तद्बंधूंन्निह निष्यामि वृष्णिभोजदशार्हकान् ॥ ३३ ॥ उग्रसेनं च पितरं स्थावरं राज्यकामुकम् ॥ तद्भ्रातरं देवकं च ये चान्ये विद्विषो मम ॥ ३४ ॥ ततश्चैषा मही मित्र भवित्री नष्टकंटका ॥ जरासंधो मम गुरुर्द्विविदो दयितः सखा ॥ ३५ ॥ शंबरो नरको बाणो मय्येव कृतसौहृदाः ॥ तैरहं सुरपक्षीयान्हत्वा भोक्ष्ये महीं नृपान् ॥ ३६ ॥ एतज्ज्ञात्वाऽऽनय क्षिप्रं रामकृष्णाविहार्भकौ ॥ धनुर्मखनिरीक्षार्थं द्रष्टुं यदुपुरश्रियम् ॥ ३७॥ अक्रूर उवाच ॥ राजन्मनीषितं सध्र्यक्त्व स्वावद्यमार्जनम् ॥ सिद्ध्यसिद्ध्योः समं कुर्याद्दैवं हि फलसाधनम् ॥ ३८ ॥

श्रयैर्विष्णुसंश्रयैर्दैवैः ॥ ३१ ॥ किं ततस्तत्राह । घातयिष्य इति । कालकल्पेन । मृत्युतुल्येन । वैद्युतोपमैरशनितुल्यैः ॥ ३२ ॥ ३३ ॥ ३४ ॥ नष्टकंटका नष्टशत्रुः । ननु कतिपयसुहृद्वधेन नष्टकंटका कथं स्यादिति तत्राह । जरासंध इति ॥ ३५ ॥ ३६ ॥ यदुपुराश्रियं द्रष्टुं चेति ॥ ३७ ॥ तत्र स्वमनीषितं विचारितम् । सध्र्यक्

कारिष्यामीति गूढोऽभिप्रायः । साभ्युपायनैरिति–घृतदध्यादिसहितैः । एतच्च धनुर्यागसत्यताबोधनार्थम् ॥ ३१ ॥ आक्षिपति–किमिति । ततस्तदानयनात्। किं स्यादिति । तत्र आक्षेपे । इह पुरे । ततो हस्तितः ॥ * ॥ वाग्देवीमते तु–यदीह मधुपुर्यामानीतौ भवतस्तदा स्वपराजयेन तयोर्द्वारांतःप्रवेशोत्साहवर्द्धनाद्धस्तिनैव द्वारभूतेन घातयिष्ये रंगांतः प्रापयिष्यामि अतः कालकल्पेन मल्लानां मम चेत्यर्थात् । ततस्तदनतरं मुक्तौ स्वमुक्तिनिमित्तं पूर्ववन्मल्लैरेव द्वारभूतैर्घातये स्वसमीपमपि प्रापयिष्यामि । अतो मम मुक्तिहेतुत्वाद्वैद्युतोपमैः क्रममुक्तिमार्गनेतृभगवत्संबंधिदिव्यपुरुषोपमैरिति ॥ ३२ ॥ तयो रामकृष्णयोः । तद्बंधूंस्तयोर्ज्ञातीन् ॥ * ॥ ननु तद्बंधुभ्यस्त्वानिष्टाच्छङ्के, तत्राह--तद्बंधूनिति द्वाभ्याम् । ननु तयोः पूर्वमेव कथं न हनिष्यसि, तत्राह–तयोर्निहतयोः सतोरनुतापतप्तानेव सत इति कोपातिशयो दर्शितः । वाङ्मते तु--मुक्तौ तयोः प्राप्तयोः सतोस्तद्बंधूनपि प्राप्स्यामि । अव्यभिचारादिति भावः ॥ ३३ ॥ तद्भ्रातरम् पितुः सहोदरम् । अन्ये यादवाः ॥ * ॥ ० ॥ ३४ ॥ ततः ससुहृद्रामकृष्णादिमरणोत्तरम । मित्र अक्रूर । एषा या बहुराजास्तीत्यर्थः । अत्राशंकते–नन्विति । जरासंधादिसत्त्वे एषां वधेनापि नष्टकंटका भूर्न भविष्यतीत्याशंकाशयः । तत्र आशंकायाम् । गुरुः असुर एव, तस्याहं पुत्रतोऽपि प्रिय इति भावः । दयितोऽतिप्रियः ॥ * ॥ नन्वहमपि भोजेषु किं तद्बंधुर्नेत्याह–हे मित्रेति । त्वं तु मम हितकारी अतस्त्वां प्रति पृथ्वीमपि विभजेऽहमिति भावः ॥ ३५ ॥ तैः जरासन्धादिभिः । सुरपक्षीयान् कौरवादिवंश्यान् ॥ * ॥ सुरपक्षीयान्नृपान् कौरवादीन् । वाङ्मते तु–महीं भोक्ष्ये मुक्तौ सर्वानंदान्तर्भावात् ॥ ३६ ॥ एतत् मम वृत्तम् । तौ कथमानयिष्य इति चेत्तत्राह–धनुरिति । यदुपुरस्य मधुपुरस्य श्रियं छविं वा द्रष्टुमिति वेति शेषः । तत्पार्श्वे धनुरुत्सवमथुरासौंदर्यवर्णने स्वयमेवागमिष्यत इति भावः ॥ * ॥ अर्भकाविति–त्वया प्रतार्य तावानेतुं शक्याविति भावः । तत्प्रकारं शिक्षयति–धनुरिति । अन्येभ्यस्तत्राप्यर्भकेभ्यो यज्ञोत्सवपुरीशोभादर्शनं नितरां रोचेतेति भावः । तथा च श्रीहरिवंशे–"वाच्यश्च नंदगोपो वै करमादाय वार्षिकम् । शीघ्रमागच्छ नगरं गोपैः सर्वैः समन्वितः॥कृष्णसंकर्षणौ चैव वसुदेवसुतावुभौ । द्रष्टुमिच्छति कंसो वै सभृत्यः सपुरोहितः ॥ एतौ युद्धविदौ रंगे कालनिर्वाणयोधिनौ । दृढौ च कृतिनौ चैव श्रृणोम्यव्याहतोद्यमौ॥पितृष्वसुः सुतौ मुख्यौ व्रजवासौ वनेचरौ । अस्माकमपि मल्लौ द्वौ सज्जौ युद्धकृतोद्यमौ॥ताभ्यां सह नियोत्स्येऽहं तौ युद्धकुशलावुभौ । द्रष्टव्यौ च मयावश्यं बालौ तावमरोपमौ ॥ वक्तव्यं च व्रजे तस्मिन्समीपे व्रजवासिनाम् । राज्ञा धनुर्मखं नाम कारयिष्यति वै सुखी ॥" इति॥ ३७॥तव मनीषितामित्यन्वयः । स्वस्यावद्यं स्वावद्यं न वदति यत्र तदवद्यम् । 'अवद्यं मृत्युपापेयाः' इति व्यक्तिकारः । यद्यपि मृत्युर्वारणी

१ अन्तर्भावितण्यर्थोऽयम् ।

मनोरथान्करोत्युच्चैर्जनो दैवहतानपि ॥ युज्यते हर्षशोकाभ्यां तथाप्याज्ञां करोमि ते ॥ ३९ ॥ एवमादिश्य चाक्रूर मंत्रिणश्च विसृज्य सः ॥ प्रविवेश गृहं कंसस्तथाक्रूरः स्वमालयम् ॥ ४० ॥ इति श्रीभा० म० द० पू० अक्रूरसंप्रेषणं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥ श्रीशुक उवाच ॥ केशी तु कंसप्रहितः खुरैर्महीं महाहयो निर्जरयन्मनोजवः ॥ सटावधूताऽभ्रविमानसंकुलं कुर्वन्नभो हेषितभीषिताखिलः ॥ १ ॥

सम्यक् स्वावद्यं मरणं तन्मार्जनम् । तथाप्येतावानभिनिवेशो न कार्य इति भविष्यत्सूचयन्नाह । सिद्ध्यसिद्ध्योरिति ॥ ३८ ॥ पुरुषकारस्य व्यभिचारमाह । मनोरथानिति ॥ ३९. ॥ ४० ॥ इति श्रीभा० म० दशमस्कंधे पूर्वार्धे टीकायां षट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥ सप्तत्रिंशे हते केशिन्यच्युतो भाविकर्मभिः ॥ नारदेन स्तुतः क्रीडन्व्योमासुरमथावधीत् ॥ १ ॥ वृषवेषासुरं यद्वत्केशिनं हयवेषिणम् ॥ कंसप्राणसखं हत्वा कंसं व्यसुमिवाकरोत् ॥ २ ॥ केशी त्विति । प्रथमश्लोकेन य एव

यस्तथाप्यहमवश्यमेतेन विधिना वारयिष्याम्येव कालमेतावानियान्हठो न कार्य इति भविष्यत्तन्मरणम् । समं चेतः कुर्यादिति चेत इति शेषः । फलं साधयतीति तथा । दैवं पूर्वादृष्टमेव । यथादृष्टं फलं स्यादित्यर्थः ॥ * ॥ तच्छ्रुत्वा स्वीयभगवद्दर्शनतद्वारा तन्मारणलक्षणदीर्घस्वाभीष्टयुगलसिद्ध्याशया तत्तदर्थमेव स्वीयतदात्मीयतां प्रख्यापयितुमिच्छया च तद्वाक्यं श्लाघते—राजन्निति द्वयेन । सम्यगिह हेतुः।हे राजन्निति—राज्ञस्तव दंडनीतिशास्त्रानुगामित्वादिति भावः । ननु धार्मिकोऽयं कथं केवलां दंडनीतिमनुमोदते, तस्येदं वाक्यं कूटमेवेत्याशंक्य स्वाशयं गोपयँस्तदनुवादेनापि श्लाघते—कुर्यादिति । विधिलिङा धर्मशास्त्रमतेऽप्येतादृशसंकटप्रतीकारादौ प्रयतेतैवेत्यर्थः । तदुपेक्षायामात्महत्यादिपापोपपत्तेः । किन्तु मनीषितस्य सिद्ध्यासिद्ध्योः समो हर्षदुःखरहित एव सन् कुर्यादिति विशेषः । 'समम्' इति पाठे क्रियाविशेषणत्वं भावमिति शेषं वा । हि यतो दैवमदृष्टमेव फलं भद्रमभद्रं वा भावयति करोतीति तत् ॥ ३८ ॥ पुरुषकारस्य पुरुषार्थस्य । व्यभिचारमनियतफलत्वम् । मनोरथसिद्धौ हर्षस्तदभावे शोको विषादः । यद्यपि सिद्धिरसिद्धिर्वा दैवाधीना तथापीति ॥ * ॥ निवृत्तिधर्मपराणामस्माकं तु तदपि न कर्तव्यं किं तु सर्वदेवमयस्य राज्ञस्तवाज्ञैव क्रियत इति प्रकारांतरेणापि स्वाशयं गोपयितुं तस्मिन्स्वभक्तिं दर्शयितुं चाह—मनोरथेति । अपिशब्दात् किमुत दैवोपकृतात्, तस्मात्कृतेऽपि साम्यभावेन यथावसरं हर्षशोकाभ्यां युज्यत एव, न तु निवृत्तिवदधिकृतं सुखमित्यर्थः । यद्यप्येवं तथापि ते तवाज्ञां करोमि करवाणीत्यर्थः । भाविसूचना चेयम् । स्वावद्यमार्जनमसुरत्वखंडनं मुक्तिप्राप्तेः । कुर्याद्भवानिति शेषः । हि यस्माद्दैवं श्रीकृष्णलक्षण ईश्वर एवात्र फलदात्, न तत्र भवत्स्वाधीनत्वमिति भावः । जनो भवादृशः । यद्यप्येवमीश्वर एवात्र स्वयं कर्ता न मादृशस्यात्र किञ्चित्करत्वं तथापि त्वदानुकूल्यरूपेण तदुक्तजनव्यवहारेणैव करोमीति । अत्रारिष्टवधानन्तरम् । कंसस्य यादवान्प्रति सकपटप्रोत्साहनवाक्यं, वसुदेवं प्रति च निंदनं, तथा कंसं प्रति धिक्कारः । अन्धकस्य वाक्यजातमिति हरिवंशमतम् । अत्र **विश्वनाथः**—जंतुर्निकृष्टलोको न तु भवानिति प्रकटोऽर्थः । वस्तुतस्तु त्वं जंतुरेव पशुनिर्विशेष इत्यर्थः । दैवहतानपिकाराद्दैवपालितान्मनोरथान्करोति । तत्र दैवपालितेषु मनोरथेषु हर्षः दैवहतेषु शोकः ताभ्यां जंतुर्युज्यते युक्तो भवति तथापि एवमपि तवाज्ञां करोमि यतो भवांस्तु भाग्यवान्हर्षमेव प्राप्स्यतीति प्रकटो भावः । वस्तुतस्तु अथापि यद्यपि जंतोर्मुमूर्षोस्तवाज्ञा कर्तुं न युज्यते तदपि करोमि, तव राजत्वान्मम तु त्वत्प्रजात्वादिति भावः । यद्वा—अथापि तव मनोरथसिद्धावपि मम तु मनोरथं सेत्स्यत्येवेत्याज्ञां करोमीति ॥ ३९ ॥ एवम् उक्तप्रकारेण । सः कंसः । श्रुतावपि वृषासुरवधस्तथाहि— "प्रनेमास्मिन्ददृशे सोमो अंतर्गोपा नेममाविरस्था कृणोति स तिग्मश्रृंगं वृषभं युयुत्सन्द्रुहस्तस्थौ बहुले बद्धो अंतः" इति । एतदर्थस्तु—अंतर्गोपाः अंतः स्थित्वा गोपायन्नंतर्यामि नेमस्मिन्नर्धप्रपंचे स्थावरे सोमः सोमादिरूपः ददृशे प्रकर्षेण दृष्टः । नेममर्द्धप्रपंचम् । अस्थाः अस्थिरं जंगममाविः कृणोति प्रकटी करोति । स तिग्मश्रृंगं वृषभं युयुत्सन् योद्धुमिच्छन् । दृङ्मात्रेण भस्मीकर्तुं शक्तोऽपि लीलया तेन सह युयुत्सन् द्रुहः द्रोहं कृतवांस्तं ततवानित्यर्थः । ततश्च बहुले व्रजे । अंतः रासमंडलमध्ये बद्धः भक्तजनेन प्रेमपाशेन बद्धः संस्तस्थौ । क्रीडितुमिति शेषः ॥ * ॥ ० ॥ ४० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कंधे पूर्वार्द्धे षट्त्रिंशोऽध्यायः ॥ ३६ ॥ भाविकर्मभिरग्रे करिष्यमाणकर्मभिः । अथ केशिवधानंतरम् ( १ ) । यद्वद्यथा वृषासुरं तद्वद्धयवेषिणमित्यन्वयः । व्यसुमिव मृतकसमम् ( २ ) । अनूद्य वर्णयित्वा । इत्यर्थ इति—यद्यपि निरुपपदो जॄधातुः समृद्ध्यर्थेऽस्ति 'निर्जरा

( विशालनेत्रो विकटास्यकोटरो बृहद्गलो नीलमहाम्बुदोपमः ॥ दुराशयः कंसहितं चिकीर्षुर्व्रजं स नंदस्य जगाम कंपयन् ॥ १ ॥ ) तं त्रासयंतंभगवान्स्वगोकुलं तद्धेषितैर्बालविघूर्णितांबुदम् ॥ आत्मानमाजौ मृगयंतमग्रणीरुपाह्वयत्स व्यनदन्मृगेंद्रवत् ॥ २ ॥ स तं निशाम्याभिमुखो मुखेन खं पिबन्निवाभ्यद्रवदत्यमर्षणः ॥ जघान पद्भ्यामरविंदलोचनं दुरासदश्चंडजवो दुरत्ययः ॥ ३ ॥ तद्वंचयित्वा तमधोक्षजो रुषा प्रगृह्य दोर्भ्यां परिविध्य पादयोः ॥ सावज्ञमुत्सृज्य धनुःशतांतरे यथोरगं तार्क्ष्यसुतो व्यवस्थितः ॥ ४ ॥

म्भूतः केशीत्यनूद्य तं भगवानुपाह्वयदिति द्वितीयेनान्वयः। महाहयः सन्महीं निर्जरयन् श्लथयन्विदारयन्नित्यर्थः। सटाभिः केसरैरवधूतानीतस्ततः क्षिप्तान्यभ्राणि विमानानि च तैः संकीर्णं नभः कुर्वन्। हेषितैरश्वजातिशब्दैर्भीषितमखिलं विश्वं येन तम् ॥ १ ॥ तद्धेषितैस्तैरतिनिष्ठुरैर्हेषितैः वालैः पुच्छलोमभिर्विघूर्णिताः परिभ्रामिता अंबुदा येन तम्। आजौ संग्रामार्थम्। आत्मानं कृष्णम्। अग्रणीः पुरतो निर्गतः सन्नुपाह्वयत्स्वसमीपमाजुहाव। स च केशी तन्निशम्य मृगेंद्रवद्व्यनदत्सिंहनादमकरोदित्यर्थः ॥ २ ॥ ततः केशी तं कृष्णं निशाम्य दृष्ट्वा मुखेन खं पिबन्निव मुखं विवृत्याभिमुखः सन्नभिजगाम। किं च। अत्यमर्षणोऽतिकुपितोऽत्यंतमसहमानो वा प्रत्यक्पद्भ्यां जघान। दुरासदोऽन्यैरभिभवितुमशक्यः। दुरत्यय उद्यतः सन् दुरतिक्रमः। अत्र हेतुः। चंडजवश्चंडस्तीव्रो जवो वेगो धावनं यस्य ॥ ३ ॥ तद्धननं वंचयित्वा तं च हननाय प्रसा

देवाः' इत्यादिवत्तथाप्यनेकार्थत्वाद्विदारणेऽपीत्याशयः। 'हेषा ह्रेषाऽश्वशब्दे द्वे' इति नामरत्नाकरे ॥ * ॥ केशिसंज्ञान्वर्थतामाह—सटेत्यादि ॥ १ ॥ तम् केशिनम्। अग्रणीः कृष्णो ज्ञेयः ॥ * ॥ स्वगोकुलं निजव्रजम्। तत्र श्रीवैशंपायनेनोक्तम्—"नृशब्दानुसरः क्रुद्धः स कदाचिद्दिनागमे। जगाम घोषसंवासं नोदितः कालधर्मणा ॥ तं दृष्ट्वा दुद्रुवुर्गोपाः स्त्रियश्च शिशुभिः सह।" इत्यादि। किंभूतं स्वगोकुलम्—तत् अनिर्वचनीयप्रेमास्पदमित्यर्थः। यद्वा—तस्य केशिन इव हेषितैरिति समस्तमेव। तत्राग्रणीरिति भीतान् गोष्ठजनान् पृष्ठीकृत्य यमुनामार्गे निर्गतः सन्स्वसमीपं प्रत्याजुहावेत्यर्थः। श्रीगोविंदस्थानमुत्तरेण यमुनावद्विशेषस्य केशिवत्तीर्थत्वेन प्रसिद्धेः। तथा च वाराहे—"गंगाशतगुणं पुण्या यत्र केशी निपातितः" इति। अत्र विवरणं श्रीविष्णुपुराणे—"त्राहित्राहीति गोविंदस्तेषां श्रुत्वा तदा वचः। सतोयजलदध्वानगंभीरमिदमुक्तवान् ॥ अलं त्रासेन गोपालाः केशिनः किं भयातुरैः। भवद्भिर्गोपजातीयैर्वीरवीर्यं विलोप्यते ॥ किमनेनाल्पसारेण हेषिताटोपकारिणा। दैतेयबलवाह्येन बलिना दुष्टवाजिना ॥" इति। श्रीहरिवंशे च—"तमापतंतं संप्रेक्ष्य केशिनं हयदानवम्। प्रत्युज्जगाम गोविंदस्तोयदः शशिनं यथा ॥ केशिनस्तु तमभ्यासे दृष्ट्वा कृष्णमवस्थितम्। मनुष्यबुद्धयो गोपाः कृष्णमूचुर्हितैषिणः ॥ कृष्ण तात न खल्वेष सहसा ते हयाधमः। उपसर्प्यो भवान्बालः पापश्चैष दुरासदः ॥ एष कंसस्य सहजः प्राणस्तात बहिश्चरः। उत्तमश्च हयेंद्राणां दानवोऽप्रतिमो युधि ॥ त्रासनः सर्वदेवानां तुरंगाणां महाबलः। अवध्यः सर्वभूतानां प्रथमः पापकर्मणाम् ॥" इति। तत्र शशिनामित्युक्तेः केशिनः शुक्लपक्ष एव वधो ज्ञेयः ॥ २ ॥ ततो नादानंतरम्। न केवलमभ्याजगामेवेत्याह—किंचेति। निर्बलस्यातिकोपेन किमित्याह—अत्यंतेपि। प्रत्यक्पद्भ्यां पश्चिमपद्भ्याम्। अत्र दुरत्ययत्वे ॥ * ॥ अरविंदलोचनमिति। प्रफुल्लपद्माभस्मेरनेत्रोन्मीलनेन वीक्षणादिति सावज्ञत्वमुक्तम्। यद्वा—श्रीबादरायणेस्तान्निंदोक्तिरियम्। तादृशसुन्दरसुकुमारांगे दृष्टेऽपि तद्दुष्टभावानपगमात् ॥ ३ ॥ तम् असुरम्। सावज्ञं सावमानं क्रियाविशेषणम् वा। तथैव यथापूर्वम् ॥ * ॥ अधोक्षज इंद्रियज्ञानाविषयो यः स कथं तत्पादघाताविषयः

स लब्धसंज्ञः पुनरुत्थितो रुषा व्यादाय केशी तरसाऽपतद्धरिम् ॥ सोऽप्यस्य वक्त्रे भुजमुत्तरं स्मयन्प्रवेशयामास यथोरगं बिले ॥ ५ ॥ दंता निपेतुर्भगवद्भुजस्पृशस्ते केशिनस्तप्तमयःस्पृशो यथा ॥ बाहुश्च तद्देहगतो महात्मनो यथाऽऽमयः संववृधे उपेक्षितः ॥ ६ ॥ समेधमानेन स कृष्णबाहुना निरुद्धवायुश्चरणांश्च विक्षिपन् ॥ प्रस्विन्नगात्रः परिवृत्तलोचनः पपात लेंडं व्यसृजत्क्षितौ व्यसुः ॥ ७ ॥ तद्देहतः कर्कटिकाफलोपमाद्व्यसोरपाकृष्य भुजं महाभुजः ॥ अविस्मितोऽयत्नहतारिरुत्स्मयैः प्रसूनवर्षैर्दिविषद्भिरीडितः ॥ ८ ॥

रितयोः प्रत्यक्पादयोर्हस्ताभ्यां गृहीत्वा । परिविध्य भ्रामयित्वा । व्यवस्थितस्तथैव स्थितो बभूव ॥ ४ ॥ व्यादाय मुखं प्रसार्य वेगेन हरिं पुनरापतत् प्रत्याद्रवत । सोऽपि हरिर्हसन्नुत्तरं सव्यं भुजम् । निर्भयत्वे दृष्टांतः । यथोरगं बिल इति ॥ ५ ॥ ततः किं तदाह । दंता इति । चर्वणाय भगवद्भुजं स्पृशंतीति तथा ते व्यादानेन ये विवृताः । अयो लोहं स्पृशंतीति स्पृशः । यद्वा तप्तमयमतितप्तं लोहादि स्पृशंतो यथेति । आमयो जलोदराख्यो रोगः ॥ ६ ॥ लेंडं पुरीषमुत्सृजन् ॥ ७ ॥ कर्कटिकाफलं हि पक्वं

स्यादित्यहो तस्य मूढतेति भावः । रुषा स्वगोकुलत्रासनजक्रुधा । यद्वा—अरुषा लीलयैव ॥ ४ ॥ सोऽसुरः । सव्यं वामम् । बिले छिद्रे ॥ * ॥ संज्ञा चेतना । स हारिरपि । स्मयमान इति—किमरे ग्रसितुमायासि ग्रसेति वामांगुष्ठं दर्शयित्वा । उत्तरं वामं भुजम् । यथेति—मूषिकं घातयितुं मूषिकाबिले यथा कश्चिदुरगं प्रवेशयति तथैव केशिप्राणघातार्थं तस्य वक्त्रे इति । उरगश्च सस्पृहमकष्टमेव तत्र प्रविशति तथैव भुजोऽपि प्रविवेश ॥ ९ ॥ ततो भुजप्रवेशात् । किं किं जातम् । तदाह—यज्जातं तदुक्ति—व्यादानेन प्रसारणेन ये दंता विवृत्ताः प्रकटितास्ते । तप्तमयस्स्पृश इति त्रिपदं भिन्नं क्लिष्टान्वयं विसृज्यार्थांतरमाह—यद्वेति । अत्र मयडंतः पाठो न तु सान्तः । तद्देहगतोऽसुरदेहप्रविष्टः । जलोदरग्रहणमुदरवृद्धिद्योतनाय ॥ * ॥ हंतहंत दंष्ट्राकराले तस्य वक्त्रविवरे नीलोत्पलमृणालसुकुमारस्तस्य भुजः कथं प्रविवेशेति शंकाकुलं राजानं तत्त्वमाह—दंता इति । चवर्णाय भगवद्भुजं स्पृशतीति तथा ते दंता निपेतुः निर्मूलतया पेतुः । 'दशनैर्मूलनिर्मुक्तैः' इति हरिवंशोक्तेः । तप्तम् अयः लोहं स्पृशंतीति स्पृशः पदार्था यथा । अय इति कर्मणि षष्ठ्यभावः 'अधायि रामोदमुत्तमम्' ? इतिवत् "तदहम्" इति निर्देशात् । नीलोत्पलसुकुमारशीतलमपि तद्भुजमतिसन्तप्तवज्रनिर्मितमिव केशी स्वदंतैः स्पृष्ट्वाऽमन्यतेति भावः । 'पित्तेन दूने रसने सितापि तिक्तायते' इति न्यायात् । ववृधेऽवासुरवद्वृद्धिर्ज्ञेया ॥ ६ ॥ स दैत्यः । विक्षिपन्नितस्ततश्चालयन् । परिवृत्ते बहिर्निर्गते लोचने यस्य स तथा । 'लेंडं बद्धपुरीषे स्यात्' इति धरणिः । क्वचित् 'लम्बम्' इति पाठः । "तुरगस्य शकृल्लुंत्र लंबा प्राकारकोशयोः" इति हलायुधोक्तेः । सोऽपि सम्यक् ॥ * ॥ यावता तद्देहो विदारितः स्यात्तावद्ववृध इत्युक्तं—समेधमानेनेति । तद्देहविदारणेनैव तन्मृत्योर्विहितत्वात् । "यत्त्वया पाटितं देहं भुजेनानतपर्वणा । एषोऽस्य मृत्युरह्नाय विहितो विश्वयोनिना ॥" इति हरिवंशे नारदोक्तेः ॥ ७ ॥ कर्कव्येव कर्कटिका कर्कधूलता कर्कटी, भाषायाम् 'ककडी' इति प्रसिद्धा तत्फलसदृशात् । यद्वा—कर्कटी मत्स्यजातिभेदस्त्री तस्याः फलं गर्भस्तत्सदृशात् । सा प्रसवे यथा स्वयं म्रियते जठरस्फुटनात्तथा भुजापकर्षणात्सोऽसुरो मृत इत्यर्थः । "कर्कटो विहगे राशौ कुलीरे शाल्मलीफले" इति कोशाच्छाल्मलीफलोपमाद्वा । शाल्मलीफलमपि पक्वं सत् विदीर्यत इति । तद्देहतोऽसुरशरीरात् । उत्स्मयैर्विस्मितैः । दिविषदो देवाः । 'आदितेया दिविषदः' इत्यमरः । केशीवधमाह श्रुतिः—"न ता अर्वा रेणुककाटो अश्नुते । न संस्कृतत्रमुपयंति ता अभि । उरुगायमुभयं तस्य ता अनु । गावो मर्त्यस्य विचरंति यज्वनः" इति । अर्थस्तु—ता गा अर्वा अश्वरूप्यसुरः । रेणुककटति अतिशयेन वर्षति तेन वाऽऽवृणोति विश्वमिति रेणुककाटः 'कटे—वर्षावरणयोः' इत्यस्माद्यङ्लुकि घञ् । नाश्नुते न व्याप्नोति । संस्कृतः संस्कारो दाहच्छेदनौषधपानादिस्तेन त्रायते इति संस्कृतत्रो वैद्यस्तं प्रत्यपि ताः गावः नाभ्युपयंति निर्बाधितत्वात् ।

देवर्षिरुपसंगम्य भागवतप्रवरो नृप ॥ कृष्णमक्लिष्टकर्माणं रहस्येतदभाषत ॥ ९ ॥
कृष्णकृष्णाप्रमेयात्मन्योगेश जगदीश्वर ॥ वासुदेवाखिलावास सात्वतां प्रवर प्रभो ॥ १० ॥

सत्साद्यंतं विदीर्णं भवति तद्वद्विदीर्णात्तस्य देहात् । व्यसोर्विगतप्राणात् । अविस्मितो गर्वराहितः । अयत्नेन हतोऽरिर्येन सः ॥ ८ ॥ कंसाय कृष्णमादिश्य तद्रहस्यादिपै शुनैः ॥ कंसघातादि कृष्णस्य कार्यमावेदयन्मुनिः ॥ १ ॥ तदाह देवर्षिरित्यादिना । न चायं सूचकः किं तु सर्वसुहृदित्याह । भागवतप्रवर इति ॥ ९ ॥ अस्मद्रहस्यं

यतस्ता गावः मर्त्यस्य यज्वनः नंदादेः संबंधिन्योऽभयं उरुगायं महाकीर्तिमनुलक्ष्यीकृत्य चरंतीति मंत्रार्थः ॥ * ॥ कर्कटिकाफलोपमादित्यत्र विशेषः श्रीविष्णुपुराणे—"द्विपादपृष्ठपृष्ठार्धश्रवणैकाक्षिनासिके । केशिनस्ते द्विधाभूते शकले च विरेजतुः ॥" इति । अयत्नहतारिकोऽप्यविस्मितः अहमेवं कर्तेति विस्मयात्मकगर्वरहितः । यद्वा—तादृशदुष्टमहाभीषणवधेऽप्यविगतस्मितः अश्रमेणैव लीलयैव मारणात् । तदुक्तं श्रीपराशरेण—"अनायस्ततनुः स्वस्थो हसंस्तत्रैव संस्थितः" इति । 'हतारिरुत्स्मयैः' इति पाठे सुरैरित्यध्याहार्यम् । एतदनंतरं श्रीपराशरः—"ततो गोपाश्च गोप्यश्च हते केशिनि विस्मिताः । तुष्टुवुः पुंडरीकाक्षमनुरागमनोरमम् ॥" इति । वैशंपायनश्च—"तं हतं केशिनं दृष्ट्वा गोपा गोपस्त्रियस्तथा । बभूवुर्मुदिताः सर्वे हतविघ्ना हतक्लमाः ॥ दामोदरं तु श्रीमंतं यथास्थानं यथावयः । अभ्यनंदन्प्रियैर्वाक्यैः पूजयन्तः पुनःपुनः ॥" इति ॥ ८॥ वृत्तांतांतरसूचनाय श्लोकमाह—तस्य कृष्णस्य रहस्यादीनां गोपनादीनां पैशुनैः सूचनैः 'यशोदायाः सुतां कन्याम्' इत्याद्युक्तलक्षणैः । कृष्णं तन्मृत्युमादिश्य पुनः कृष्णस्य कृष्णाय ( १ ) । तद् वृत्तम् । सूचकः पिशुनः । किन्तु अपि तु । भागवतेषु प्रवरो मुख्यः ॥ * ॥ व्रजलीलां समाप्य स्वां लीलां दर्शय माथुरीम् ॥ इत्यावेदयितुं तत्र देवर्षिस्तुष्टुवे प्रभुम् ॥ ( १ ) ॥ भागवतानां प्रकृष्टो वरो मनोरथसिद्धिर्यस्मात्सः । अक्लिष्टेनाक्लेशेन कर्म केशिवधादिकं यस्य तम् ॥ **तोषिणी**—सर्वसुहृदिति व्रजेऽपि ससैन्यकंसजरासंधाद्यागमनभयनिवर्त्तनाय । तथा च रणात्कंसादेरपि मुक्तिपर्यवसायकत्वात् । यद्वा—दिव्यज्ञानत्वादेवश्वासावृषिश्चेति श्रीगोपालमंत्रगणद्रष्टा च इति परमांतरत्वं सूचितम् । भागवतप्रवर इति—भगवतो लीलाधिकारनियुक्तभक्तेषु श्रेष्ठः । ततस्तत्संपादनार्थं तस्य तथा चेष्टा रहस्यागत्य निवेदनं च युज्यत एवेति भावः ॥ ९ ॥ कृष्णकृष्णेत्यादिना कथं शंकावारणं स्यादत आह—अयं भाव इति,—अयमत्राभिप्रायः । यतो दैत्यसंहारायावतीर्णोऽतो हेतोः । तदनुरूपाचरणेन यथा भूभारापहारस्तदनुकूलव्यापारेण । तत्र भूभारसंहारे । भयं तु परिच्छिन्नदेहादेरेव न त्वात्मन इत्यर्थः । सर्वभूतेष्वखिलजीवेषु । सात्वतानां यदूनाम् । केचित्तु—अप्रमेयात्मन्नित्युक्तेः "अंगुष्ठमात्रः पुरुषः" इति श्रुतेः का गतिस्तत्राह—योगेशेति । योगिनां योगविषयत्वेन स्वेच्छाविग्रहग्रहणेन तदुपपत्तेः । योगस्य वायुविषयत्वमिति मंदाशंकां निरस्यन्नाह—जगदीश्वरेति । "आत्मन एष प्राणः श्रद्धा खं वायुः" इत्यादिश्रुतेर्वायोर्जगदन्तःपातित्वेन तदीशत्वं न पृथगवक्तव्यमित्यर्थः । कृष्णशब्दस्यापि बह्वर्थत्वात्को ग्राह्यस्तत्राह—वासुदेवेति । वासुदेवोऽपि बहुवाची तत्राह—अखिलावासेति । तथाप्यखिलावासत्वमाकाशादीनामपि तत्राह—सात्वतामिति । सात्वतप्रवरा अप्यनेकेऽक्रूरादयः संतीति चेत्तत्राह—प्रभो सर्वाधिप सर्वसमर्थेति च 'समर्थोऽधिपतौ प्रभुः' इति यादवः ॥ * ॥ मया यत्कंसं प्रति सूचितं तद्भवदीयतादृशलीलावसरं ज्ञात्वैव । यतो भवत्प्रसादेन भवतस्तत्त्वं लीलानुक्रमं च जानामीति ज्ञापयन्नाह—कृष्णकृष्णेत्येकादशभिः । कृष्णकृष्णेत्यानंदेन । भगवंस्तव नामसंकीर्तनकृद्भक्ताभासो नारदोऽस्मीत्यात्मानं स्मारयति । निजक्लेशकर्षकत्वात्त्वमेव सर्वसुखं दातुं समर्थ इति भावः । वीप्सा परमादरे । अप्रमेयः प्रमातुमशक्यः आत्मा मनो यस्येत्यतः परं व्रज एव विराजमानो व्रजस्थान्पित्रादीनानंदयिष्यसि मथुरां यास्यंस्तत्रत्यानेवेत्यतः कस्त्वन्मनो वेदयितुं क्षमत इति भावः । किञ्च—योगेश योगमायाधीश्वरत्वादुभयत्रापि विराजस्वेति भावः । जगदीश्वरेति—जगत्कार्यं भारावतारणमपि कर्तव्यमिति भावः । वासुदेवेति--नंदस्य पुत्रत्वेन प्रसिद्धिमकार्षीरेव, इदानीं वसुदेवस्यापि तद्भाग्यं प्रकटयेति

त्वमात्मा सर्वभूतानामेको ज्योतिरिवैधसाम् ॥ गूढो गुहाशयः साक्षी महापुरुष ईश्वरः ॥ ११ ॥ आत्मनाऽऽत्माश्रयः पूर्वं मायया ससृजे गुणान् ॥ तैरिदं सत्यसंकल्पः सृजस्यत्स्यवसीश्वरः ॥ १२ ॥ स त्वं भूधरभूतानां दैत्यप्रमथरक्षसाम् ॥ अवतीर्णो विनाशायसे तूनां रक्षणाय च ॥ १३ ॥

वैरिणि कंसे सूचितवानिति मा शंकीरित्याह कृष्णकृष्णेत्यादिना । अयं भावः । त्वमीश्वरो भूभारदैत्यसंहारायावतीर्णोऽस्यतस्तदनुरूपाचरणेन विश्वं परिपालयेति । तत्र त्वयि तावद्भयशंकैव नास्तीत्याह । अप्रमेयात्मन्नपरिच्छिन्नस्वरूप । योगेशाचिंत्यप्रभाव । जगदीश्वर विश्वनियंतः । वासुदेव सर्वभूतेषु वर्तमान । अखिलावास सर्वस्याश्रय । संप्रति सात्वतां प्रवर श्रेष्ठ । प्रभो सर्वशक्ते ॥ १० ॥ कथमेवंरूपोऽहमिति चेदत आह । त्वमात्मेति । न हि त्वं जीववत्परिच्छिन्नः किं तु सर्वभूतानामांतर एकोऽनुस्यूत आत्मा । अंतरनुस्यूतत्वे दृष्टांतः । एधसां काष्ठानामंतर्ज्योतिरिवेति । भूतेषु स्थितोऽपि तैर्न दृश्यस इत्याह । गूढ इति । अत्र हेतवः । गुहाशयो बुद्धेरप्यांतरः । किं च साक्षी न हि साक्षी दृश्यत इत्यर्थः । अपि च महापुरुषः अतः परिच्छिन्नमतिभिर्न ज्ञायस इत्यर्थः।तर्हि सर्वांतरत्वे किं प्रमाणमत आह । ईश्वर इति । न हीश्वरं विना परतंत्राणां जीवानां प्रवृत्तिर्घटत इत्यर्थः ॥ ११ ॥ अहमीश्वरोऽन्यत्सर्वमीशितव्यमित्येतदेव कत इत्यत आह । आत्मनेति । साधनांतरनिरपेक्ष एवात्माश्रयः स्वतंत्रः मायया शक्त्या भवान् गुणान्ससृजे सृष्टवान् । तैः सृष्टैर्गुणैरिदं विश्वं सृजसि अत्सि संहरस्यवसि पालयासि । ननु सृष्ट्यादिक्रिया षट्कारकसाध्यैव दृष्टेत्याह । सत्यसंकल्प इति । न हि संकल्पैकसाध्ये बहिःसाधनापेक्षेति भावः । अतस्त्वमीश्वर इत्युपसंहारः॥ १२॥प्रस्तुतमाह । स त्वमिति। भूधरभूतानां भुवं धरंतीति भूधरा राजानस्तद्रूपाणाम्॥ १३॥

भावः । अत एवाखिलावासेति,–अखिलांस्त्वद्भक्तान्कंसभयविच्युतानानीय मथुरायां वासयेति भावः । यस्त्वं सात्वतां यादवानां प्रवरः । यद्वा–प्रकृष्टो वरो मनोरथो यस्य, सिद्धिस्वरूपोऽसि । प्रभो त्वं सकलं कर्तुं शक्नोषि ॥ १० ॥ भगवत आक्षेपमाशंक्य समाधत्ते–कथमित्यादिना । परिच्छिन्नो मितदेशवर्ती । अपि तु आंतरोंतस्थः । तैर्भूतैः । अत्र गूढत्वे । अन्यदाह–किञ्चेति । इत्यर्थ इति–साक्षिणोऽदृश्यत्वे साक्षित्वमेव व्यापद्येत 'साक्षाद्द्रष्टेति साक्षी' इति निरुक्तेः, "साक्षाद्द्रष्टरि संज्ञायाम् " इति पाणिन्युक्तेश्च । न केवलं साक्षित्वादेव गूढ इत्याह–अपि चेति । अतो महापुरुषः सर्वाधिष्ठानम् । अतो महापुरुषत्वादेव । परिच्छिन्नमतिभिरल्पबुद्धिभिः । इत्यर्थ इति–पुरुषस्यैव दुर्ज्ञेयत्वान्महापुरुषज्ञानं तु दूरापास्तामित्यर्थः । तर्हि ज्ञानाविषयत्वे । ईश्वरं नियंतारम् । इत्यर्थ इति–"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि" इत्यादिस्मृतेः, "केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि " इति स्मृतेश्च ॥ * ॥ ननु मे यथेच्छा तथा करोमि करिष्यामि च तत्र त्वं किमेवं विशेषं निवेदयसि, तत्राह–त्वमात्मा ममांतर्यामी, त्वमेव मां निवेदयितुं प्रेरयसि । तत्राहं किं करोमीति भावः । न केवलं ममैव अपि तु सर्वभूतानामंताश्चित्ते तिष्ठसि । एधसां काष्ठानामंतर्ज्योतिरिव गूढः । किञ्च, गुहाशयः यथा नंदपुत्ररूपेण गोवर्धनगुहायां शेषे तथैवांतर्यामिरूपेणांतःकरणगुहायां शेषे । साक्षी–तत्र शयानोऽपि सर्वं साक्षात्पश्यसि । तत्र हेतुः–महापुरुषोऽप्रतिहतयोगबल इत्यर्थः । किन्तु महापुरुषा ईशितव्या अपि भवंति त्वन्त्वीश्वरः सर्वनियन्ता ॥ ११ ॥ पुनर्भगवदाक्षेपं समाधत्ते–अहमित्यादिना । पुनराशंकते–नन्विति । षट्कारकसाध्या कर्तृकर्मकरणसंप्रदानापादानाधिकरणरूपषट्कारकानिष्पाद्यैव । इति भाव इति–साधनापेक्षत्वे जीवत्वं स्यादित्याशयः । अतः सत्यसंकल्पत्वादेव । इत्युपसंहार इति पर्यवसानम् ॥ * ॥ यदि त्वमस्मानस्मद्बुद्ध्यादिकं च नास्रक्ष्यस्तदाहमप्येवं नावेदयिष्यमित्याह–आत्मनेति । गुणान्महदादीन् यदि त्वं सृष्टवानेव तदान्ये जनास्त्वत्प्रेरिता एव स्वस्वकृत्यं कर्तुं चेष्टंते तथैवाहमप्यद्य त्वामेतन्निवेदयितुं चेष्ट इति भावः ॥ १२ ॥ प्रस्तुतं प्रकृतम् । प्रमथा रुद्रगणास्तेषामपि बाणासुरयुद्धे नाशनात् । 'प्रमथाः स्युः पारिषदाः' इत्यमरः ॥ * ॥

दिष्ट्या ते निहतो दैत्यो लीलयायं हयाकृतिः ॥ यस्य हेषितसंत्रस्तास्त्यजंत्यनिमिषा दिवम् ॥ १४ ॥ चाणूरं मुष्टिकं चैव मल्लानन्यांश्च हस्तिनम्॥ कंसं च निहतं द्रक्ष्ये परश्वोऽहनि ते विभो ॥ १५ ॥ तस्यानु शंखयवनमुराणां नरकस्य च ॥ पारिजातापहरणमिंद्रस्य च पराजयम् ॥ १६ ॥ उद्वाहं वीरकन्यानां वीर्यशुल्कादिलक्षणम् ॥ नृगस्य मोक्षणं पापाद्द्वारकायां जगत्पते ॥ १७ ॥ स्यमंतकस्य च मणेरादानं सह भार्यया ॥ मृतपुत्रप्रदानं च ब्राह्मणस्य स्वधामतः ॥ १८ ॥ पौंड्रकस्य वधं पश्चात्काशिपुर्याश्च दीपनम् ॥ दंतवक्रस्य निधनं चैद्यस्य च महाक्रतौ ॥ १९ ॥

॥ १४ ॥ परश्वोऽहनीति । अद्यैवाक्रूर एष्यति श्वो मथुरां गंताऽसि परश्वश्चाणूरादींश्च ते त्वया निहतान् द्रक्ष्यामीति सिद्धवन्निर्देशो विज्ञापनप्रकारविशेषः ॥ १५ ॥ तस्यानु तदनंतरम् । शंखादीनाम् । शंखः पंचजनः । वधं द्रक्ष्यामीति शेषः । भाविनिर्देशमात्रमेतन्न त्वानंतर्यं विवक्षितम् ॥ १६ ॥ १७ ॥ भार्यया

अधुना लीलामनुक्रामन्नवतारे कारणमाह–स त्वमिति । दैत्यानां स्वभक्तिविरुद्धानाम् । साधूनां स्वभक्तिप्रवर्तकानाम् । पाठांतरे सेतूनां स्वभक्तिमर्यादानाम् । प्रमथा राजरूपाः काशिराजादय एव । यद्वा–बाणासुरसहाय्यार्थमागतरुद्रेण युद्धे साक्षादेव प्रमथा रुद्रपार्षदा ग्राह्याः ॥ १३ ॥ अयं केशी । लीलयाश्रमेणैव । यस्य केशिनः । अनिमिषा देवाः 'सुरमत्स्यावनिमिषौ' इति यादवः ॥ * ॥ तत्र पूतनादयो ये हतास्तेऽपि दुष्टा एव किं त्वयं परमदुर्मार इत्याह–दिष्ट्येति । अयमधुना साक्षादेवेत्यर्थः । अतस्त्वं केशवनामा भविष्यसीति शेषः । " यस्मात्त्वयैष दुष्टात्मा हतः केशी जनार्दन । तस्मात्केशवनामा त्वं लोके गेयो भविष्यसि ॥ " इति विष्णुपुराणोक्तेः ॥ १४ ॥ योगबलेन भाविनोऽर्थान्वक्ति–चाणूरमित्यादि । ते त्वया निहतान् । सिद्धवत्संजातवत् । निर्देशः कथनम् । कर्तुरुत्साहवर्धकत्वने बोधननैपुण्यमित्यर्थः ॥ * ॥ स्वस्य तल्लीलाभिज्ञतां विवृण्वन्भाविष्यं विवृणोति–चाणूरमित्यादि । अप्यर्थे चकाराः सर्वैः सह योज्याः, तैश्च चाणूरादीनामवश्यवध्यत्वं सूचितम् । मल्लानन्यान्कंकन्यग्रोधादींश्च । हे विभो प्रभो त्वं सर्वं कर्तुं समर्थोऽसीति भावः । विभुप्रभू च पर्यायौ ॥ १५ ॥ आनंतर्यं क्रमो नात्र हनने ज्ञेयमिति ॥ * ॥ ० ॥ १६ ॥ वीर्यशुल्कादीत्यत्रादिना लक्ष्यवेधादिग्रहः । लक्षणं चिह्नम् 'लक्षणं नाम्नि चिह्ने च' इति मेदिनी । पापादज्ञातविप्रधनापहारलक्षणात् ॥ * ॥ वीराः क्षत्रियास्तेषां कन्यानाम् । यद्वा–हे वीरेति । त्वं वीरत्वात्सर्वं करिष्यसीति भावः । वीर्यं पराक्रमः तदेव शुल्कं मूल्यम्, आदिपदात्कन्यानां भक्त्यादिकं च लक्षणं प्रकारो यस्योद्वाहस्य तम् । तत्र काचित्समुदितं काचित्तु केवलभक्तिरेव यथा कालिंद्यादेरिति ज्ञेयम् । पापात् विप्रगोहरणजात् । द्वारकायामित्युक्तेर्द्वारकानिर्माणप्रयाणमपि सूचितम् । तत्र कर्तव्यं च यथार्हं पूर्वत्र परत्र च योज्यम् । जगत्पते इति–तत्रेंद्राद्यागमनेन गरुडारोहणादिना तादृशैश्वर्यप्रकाशनादिति भावः ॥ १७ ॥ ब्राह्मणस्य द्वारकावासिनः । यद्वा–अवंतीवासिनो गुरोः सांदीपनेः । तत्र स्वशब्दः स्वीयपरः, स्वीयस्य यमस्य धामतः । ब्राह्मणस्येति चतुर्थ्यर्थे षष्ठी ॥ * ॥ ब्राह्मणस्येह संप्रदानाभावस्तु तस्यैव स्वत्वात् । स्वधामत इति–अनावृत्तिस्थानादपीति परमस्वातंत्र्यं दर्शितम् ॥ १८ ॥ पौंड्रकस्य मिथ्यावासुदेवस्य । महाक्रतौ युधिष्ठिरराजसूये ॥ * ॥ पश्चात् पौण्ड्रकवधा

यानि चान्यानि वीर्याणि द्वारकामावसन्भवान् ॥ कर्ता द्रक्ष्याम्यहं तानि गेयानि कविभिर्भुवि॥२०॥अथ ते कालरूपस्य क्षपयिष्णोरमुष्य वै ॥ अक्षौहिणीनां निधनं द्रक्ष्याम्यर्जुनसारथेः ॥ २१ ॥ विशुद्धविज्ञानघनं स्वसंस्थया समाप्तसर्वार्थममोघवांछितम् ॥ स्वतेजसा नित्यनिवृत्तमायया गुणप्रवाहं भगवंतमीमहि ॥ २२ ॥ त्वामीश्वरं स्वाश्रयमात्ममायया विनिर्मिताशेषविशेषकल्पनम् ॥ क्रीडार्थमद्याऽऽत्तमनुष्यविग्रहं नतोऽस्मि धुर्यं यदुवृष्णिसात्वताम्॥२३॥श्रीशुक उवाच ॥ एवं यदुपतिं कृष्णं भागवतप्रवरो मुनिः ॥ प्रणिपत्याभ्यनुज्ञातो ययौ तद्दर्शनोत्सवः॥२४॥भगवानपि गोविंदो हत्वा केशिनमाहवे ॥ पशूनपालयत्पालैः प्रीतैर्व्रजसुखावहः ॥२५॥ एकदा ते पशून्पालाश्चारयंतोऽद्रिसानुषु ॥ चक्रुर्निलायनक्रीडाश्चोरपालापदेशतः ॥२६॥

जांबवत्या सह । स्वधामतो महाकालपुरात् ॥ १८ ॥ १९ ॥ द्वारकामावसन् द्वारकायां वसन् । कर्ता करिष्यति ॥ २० ॥ अमुष्य विश्वस्य भूभारस्य वा ॥ २१ ॥ एवं विज्ञाप्य कृताभिनंदनं भगवंतं नमस्यति द्वयेन । विशुद्धविज्ञानघनमिति । केवलं ज्ञानैकमूर्तिमित्यर्थः । अत एव स्वसंस्थया स्वरूपसम्यक्स्थित्यैव परमानंदरूपया सम्यगाप्ताः सर्वेऽर्था येन तम् । आप्तकामतोक्त्वा सत्यसंकल्पतामाह । अमोघवांछितमिति । ननु वांछा चेदस्ति तर्हि दुर्निवारा संसृतिरत आह । स्वतेजसेति । चिच्छक्त्या नित्यनिवृत्तो मायाकार्यरूपो गुणप्रवाहो यस्मात्तम् । अतो भगवंतं निरतिशयैश्वर्यमीमहि शरणं व्रजेमेति ॥ २२ ॥ ननु त्रिकालज्ञस्त्वं कथं मत्प्रपंचं न जानासि जानासि चेत्कथमगुणप्रवाहं ब्रवीषि तत्राह । त्वामिति । ईश्वरमन्यस्य वशयितारं स्वाश्रयमन्यस्यावशमत आत्ममायया आत्माधीनया मायया विनिर्मिता अशेषविशेषा महदाद्या यादवादिरूपा वा कल्पना येन तं धुर्यं श्रेष्ठं नतोऽस्मीति ॥ २३ ॥ २४ ॥२५॥ ननु नारदेन व्योमवधो न दृष्टस्तत्कथं व्योमवधप्रसक्तिरिति तत्रोच्यते । प्रातरेव केशिवधानंतरं नारदेनोक्तमंगीकृत्य पुनस्तथैव पशूंश्चारयता व्योमो हतः । यद्वा व्योमवधः पूर्वमेव वृत्तोऽपि वेषधारिवधप्रसंगादत्रोच्यत इति द्रष्टव्यम् । केचित्तुनः शंखचूडवधात्पूनंतरम् ॥ १९ ॥ भुवि गेयानीत्युक्त्या वीर्याणां संसारनिवृत्त्यर्थमेव कृतत्वं सूचयति ॥ * ॥ यानि एकेनैव युगपद्बह्वीनां बहुधा विवाहादीनि श्रीदामानुग्रहादीनि तानि चाहं द्रक्ष्यामि । अत एवैकादशे—“ गोविंदभुजगुप्तायां द्वारकायां कुरूद्वह । अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालसः ॥” इति । अहो भाग्यमाहात्म्यं मम, अहो कारुण्यमाहात्म्यं तवेति भावः ॥ २० ॥ प्रकृतत्वाद्भूभारस्य चेति । अक्षौहिणीनामष्टादशानाम् । अर्जुनसारथेरित्यनेन भारतयुद्ध इति ध्वनितम् ॥ * ॥ अमुष्येति षष्ठी आर्षी । निधनं निधनरूपं चारितमिति शेषः ॥ २१ ॥ एवमुक्तरीत्या । अत एव ज्ञानमूर्तित्वादेव । अर्थाः प्राप्तव्याः । आप्तकामता श्रुत्युक्ता । योगिजीवसाम्यतामादायाशंकते—नन्विति । अतोऽत्र । अतो निवृत्तगुणप्रवाहत्वात् । यद्वा—स्वतेजसा स्वप्रभावेण, योगिजीवादीनां तु भगवत्प्रसादावाप्तयोगादिभिः संसृत्यभावो न तु स्वप्रभावेणेति विशेषः । चिच्छक्त्या सदा ब्रह्माहमस्मीति निष्ठयेति बोध्यम् । स्वामिव्याख्याने 'तेजो बले प्रभावे च' इति यादवः ॥ * ॥ ० ॥ २२ ॥ ईमहि न तु जानीम इत्यत्राशंकते—नन्विति । मत्प्रपञ्चं भगवन्मायाप्रभावम् । अगुणप्रवाहं गुणप्रवाहस्य दृष्टत्वात् । तत्र ज्ञानाज्ञाने । अतोऽनन्याधीनत्वात् । अशेषाः सर्वे । विशेषा भेदाः । 'धुर्यौ मुख्ये बलीवर्दे समर्थे ' इति धरणिः ॥ * ॥ ० ॥ २३ ॥ एवमित्थम् । यदुपतिं गोपेशम् । तस्य कृष्णस्य दर्शनेनोत्सवो यस्य सः ॥ * ॥ ० ॥ २४ ॥ भगवानपीत्यत्रापिना तद्दर्शनोत्सवो नारददर्शनोत्सव एव तस्याद्भुतश्रावकत्वादिति भावः । पालैर्गोपैः ॥ * ॥ ० ॥ २९ ॥ पुनस्तद्दिन एव । तथैव पूर्ववत् । ननु व्योम

तत्रासन्कतिचिच्चोराः पालाश्च कतिचिन्नृप ॥ मेषायिताश्च तत्रैके विजह्रुरकुतोभयाः ॥ २७ ॥ मयपुत्रो महामायो व्योमो गोपालवेषधृक् ॥ मेषायितानपोवाह प्रायश्चोरायितो बहून् ॥ २८ ॥ गिरिदर्यां विनिक्षिप्य नीतंनीतं महासुरः ॥ शिलया पिदधे द्वारं चतुःपंचावशेषिताः ॥ ॥ २९ ॥ तस्य तत्कर्म विज्ञाय कृष्णः शरणदः सताम् ॥ गोपान्नयंतं जग्राह वृकं हरिरिवौजसा ॥ ३० ॥ स निजं रूपमास्थाय गिरींद्रसदृशं बली ॥ इच्छन्विमोक्तुमात्मानं नाशक्नोद् ग्रहणातुरः ॥ ३१ ॥ तं निगृह्याच्युतो दोर्भ्यां पातयित्वा महीतले ॥ पश्यतां दिवि देवानां पशुमारममारयत् ॥ ३२॥ गुहापिधानं निर्भिद्य गोपान्निःसार्य कृच्छ्रतः ॥ स्तूयमानः सुरैर्गोपैः प्रविवेश स्वगोकुलम् ॥ ३३ ॥ इति श्रीभागवते म० द० पू० केशिव्योमासुरवधो नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ श्रीशुक उवाच ॥ अक्रूरोऽपि च तां रात्रिं मधुपुर्यां महामतिः ॥ उषित्वा रथमास्थाय प्रययौ नंदगोकुलम् ॥ १ ॥

र्वैमेव पठंति च । तमाह । एकदेति ॥ २६ ॥ २७ ॥ मेषायितान्मेषवदाचरितान्स्वयं चोरवदाचरितः सन्नपोवाहापकृष्य निनाय ॥ २८ ॥ पिदधे छादितवान् ॥ २९ ॥ शरणद आश्रयप्रदः । हरिः सिंह इव ॥ ३० ॥ ३१ ॥ पशुमारं पशुमारो यथा भवति तथा । अनिःश्वासमित्यर्थः ॥ ३२ ॥ भुवि गोपैः स्तूयमान उपरि वैमानिकैर्देवैरिति ॥ ३३ ॥ इति श्री०म०दशमे पू० सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ अष्टत्रिंशे यथा ध्यायन्नक्रूरो गोकुलं गतः ॥ तथैव रामकृष्णाभ्यां गृहं नीत्वा सुसत्कृतः ॥ १ ॥ प्रातः केशिवधे वृत्ते द्वादश्यां निर्गते मुनौ ॥ ततो व्योमे हतेऽक्रूरः सायं गोकुलमागमत् ॥ २ ॥ तदेवं नारदेन कंसवधादिकार्यै विज्ञापिते श्रीकृष्णो मथुरां गंतुमुद्यतो

प्रेषगाद्यश्रुतेरत्र तद्वधः प्रकृतासंगत इव भातीत्यत आह–यद्वेति । द्रष्टव्यं ज्ञेयम् । केचितु पूर्वे रासलीलोत्तरामित्यर्थः । तं व्योमवधम् । ते गोपाः । अद्रिसानुषु गोवर्धनप्रस्थेषु । चोरपालापदेशतः वयं पशूंश्चोरयिष्यामो वयं पालयिष्याम इत्यपदेशेन छन्नमनसा । व्याजेनेति यावत् । "अपदेशः पुमाल्लँक्ष्ये निमित्तव्याजयोरपि" इति मेदिनी । निलायनं निलीनकर्म ॥ * ॥ व्योमवधस्य श्रीनारदानुक्तत्वात्तद्दिने तद्वधे एकदेत्युक्तेरसंगतत्वात्तादृशलीलायाः कौमारान्त एव योग्यत्वाच्च । अतः 'वृषमयात्मजात्' इति गोपिकावाक्यञ्च संगच्छते । वृषात्मजो वत्सो मयात्मजो व्योमासुर इति पूर्वव्याख्यानात् । निलायनं नाम चोरितस्य तिरोधापनं, तद्रूपां क्रीडाम् ॥ २६ ॥ तत्र क्रीडायाम् । मेषायिता मेषवद्वर्तमानाः ॥ * ॥ अकुतोभया इति–चोरयितव्याश्चोरयितारः पालकाश्चैतत्त्रयं वयं सखाय एवेति विश्वासात् ॥ ॥ २७ ॥ अपकृष्य बलात्कारेण गृहीत्वा ॥ * ॥ अपोवाह चोरयामास ॥ २८ ॥ गिरिदर्यां पर्वतगुहायाम् ॥ * ॥ विनिक्षिप्य विशेषेण दूरतोंतःप्रदेशप्रवेशनेन नितरां क्षिप्त्वा ॥ २९ ॥ तस्य व्योमस्य । तत्कर्म बालनयनतत्पिधानरूपं कर्म । वृकम् ईहामृगम् 'कोकस्त्वीहामृगो वृकः' इत्यमरात् ॥ * ॥ सतां भक्तमात्राणाम् । शरणदः शरणरूपमात्मानं दाता किमुत तत्तत्सत्तमगणदुर्लभभागधेयानां तेषामित्यर्थः ॥ ॥ ३० ॥ सः व्योमः । ग्रहणेन कृष्णकरपीडनेनातुरः ॥ * ॥ बल्यपि आत्मानं मोक्तुमिच्छन्नपि निजं रूपमास्थायापि नाशक्नोत् ॥ ३१ ॥ तं व्योमम् । इत्यर्थ इति--यज्ञे हि पशुः 'अथ हृदयमवद्यति' इत्यादिमंत्रैर्हृदयादिषु निष्पीड्य निःश्वासरहित एव मार्यत इति भावः ॥ * । पश्यतां हर्षेण पश्यत्सु दिवीति तदानीमप्याशंकया स्थित्वेत्यर्थः । पशुमारममारयत् यज्ञियं पशुमिव श्वासरोधेनामारयत् । "उपमाने कर्मणि च" इति णमुल् । ण्यन्तस्य म्रियतेरनुप्रयोगश्च । इदमप्यनुरूपमेव तस्यां क्रीडायां चोरदंडस्यापि क्षणिकतदनुकरणरूपत्वात्तेनापि गोपानां श्वासरोधनाच्च । अच्युत इति तादृशसमुचितलीलातोऽचलनाभिप्रायेण ॥ ३२ ॥ स्वगोकुलमित्यनेन स्वीयत्वेन गृहीतं गोकुलं, गोकुलोपलक्षितं वृंदावनम् । प्रविवेश बहिर्लीलामाच्छाद्य नित्यलीलां स्वीचकारेति । अतः परं नंदनंदनलीला वृंदावननिकुंजादिषु रहस्या भविष्यति प्रत्यक्षांतर्द्धास्यतीति ध्वनितामिति ज्ञेयं श्रीहरिप्रियैः ॥ * ॥ कृच्छ्रतो गुहारूपात्कृच्छ्रस्थानान्निःसार्य, अत एव गोपैर्देवैश्च स्तूयमानः, अत एव प्रकर्षेण । 'विवेश स्वस्य गोकुलम्' इत्यागामिलीलास्मरणशंकया स्वचित्तं समादधाति--नात्यंतीनस्तत्परित्यागो भविष्यतीत्यभिप्रायात ॥ ३३ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे पूर्वार्धे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ सुसत्कृतो मानितः ( १ ) । वृत्ते जाते । मुनौ नारदे । ततो

गच्छन्पथि महाभागो भगवत्यंबुजेक्षणे ॥ भक्तिं परामुपगत एवमेतदचिंतयत् ॥ २ ॥ किं मयाचरितं भद्रं किं तप्तं परमं तपः ॥ किं वाऽथाऽप्यर्हते दत्तं यद्द्रक्ष्याम्यद्य केशवम् ॥ ३ ॥ ममैतद्दुर्लभं मन्य उत्तमश्लोकदर्शनम् ॥ विषयात्मनो यथा ब्रह्मकीर्तनं शूद्रजन्मनः ॥ ४ ॥ मैवं ममाधमस्यापि स्या देवाच्युतदर्शनम् ॥ ह्रियमाणः कालनद्या क्वचित्तरति कश्चन ॥ ५ ॥

वर्तते तदाऽक्रूरोऽपि गोकुलमागमदित्याह । अक्रूरोऽपीति ॥ १ ॥ २ ॥ अपिः संभावनायाम् । वा अथ वा अर्हते योग्याय ॥ ३ ॥ स्वस्य कृष्णस्य दर्शनेऽसंभवमाशंक्य पुनस्तत्संभावयति ममैतादिति द्वयेन । विषयात्मनो विषयाविष्टचित्तस्य मम । शूद्राज्जन्म यस्य तस्य ब्रह्मकीर्तनं वेदोच्चारणं यथेति ॥ ४ ॥ यद्वा मैवं किं त्वधमस्य नीच स्यापि मम स्यादेव । कुत इत्यत आह । ह्रियमाणः कालनद्येति । अयं भावः । यथा नद्या ह्रियमाणानां तृणादीनां मध्ये किंचित्कदाचित्तरति कूलं प्राप्नोति तथा कर्मवशेन

नारदगमनोत्तरम् ( २ ) । तदेवं वाक्यालंकारेऽव्ययद्वयम्, निदर्शने वा । तदा कृष्णगोद्युतिसमये । उद्यत उत्कंठितः । तां यस्यां रात्रौ न्ययुंक्त तामित्यर्थः ॥ * ॥ अक्रूरोऽपीति अपिशब्दः समुच्चये । समुच्चयश्च श्रीकृष्णस्य मथुरागमनोद्यमेनेति । यद्वा—अपिचशब्दः केशिगमनसमुच्चये उभयोः कंसादिष्टत्वात् । यस्यां रात्र्यां कंसेनादिष्टस्ताम् । तथा श्रीहरिवंशे--"निशि स्तिमितमूकायां मथुरायां जनाधिपः" इति । अत एवात्रापि पूर्वमुक्तम्—'प्रविवेश गृहं कंसः' इत्यादि । यच्च तत्रैवोक्तम्—"तस्मिन्नेव मुहूर्ते तु मथुरायास्स निर्ययौ । प्रीतिमान्पुंडरीकाक्षं द्रष्टुं दानपतिः स्वयम् ॥" इति तत्कल्पभेदाद्भिन्नम् । यद्वा—यादवैः सह कंसस्य बहुलसंकथया प्रायो रात्रिशेष एवोपसन्नेऽक्रूरं प्रति तस्य प्रेरणया तथैव पर्यवस्यतीति । महती भक्तिरूपा मतिर्यस्य सः । तथा चैकादशीं रात्रीं भगवदर्चनकथाकीर्तनादिभिर्जागरणेनैवोषित्वा पारणमकृत्वैव ययाविति विश्वनाथः । श्रीगोकुलजनवैक्लव्यहेतुकं तद्गमनवर्णनमनिच्छुरपि केवलं तद्भक्तिभागास्वादनमवलंब्यैव मुनींद्रोऽवर्णयत् । ज्ञातत्वेऽपि पुनर्नंदेति विशेषणं स्वस्य तद्विशिष्टतयैव स्फूर्तेः ॥ १ ॥ महामतित्वमाह--गच्छन्निति । महाभाग इति--बहुषु सत्सु कृष्णानयनार्थं तस्यैवाज्ञप्तत्वात् । परां प्रेमरूपाम् । एतद्वक्ष्यमाणम् । एवम् इत्थम् ॥ * ॥ ० ॥ २॥ स्वभाग्यमभिनंदन्नाह--किमिति । भद्रमिति सामान्योक्तं विशिनष्टि--किं तप्तमित्यादिना । योग्याय विष्णुभक्त्यादिगुणसंपन्नाय । यत् यतः ॥ * ॥ भद्रकर्मणां मध्ये किं मया भद्रं कृतं यद्यतः केशवं ब्रह्मरुद्राभ्यामपि दुर्दर्शम् ॥ ३ ॥ एतत् किं यदुत्तमश्लोकदर्शनमिति । शूद्रजन्मन इति— अश्रौतजन्मत्वाच्छूद्रस्य । "गायत्र्या ब्राह्मणमसृजत्त्रिष्टुभा राजन्यं जगत्या वैश्यं न केनचिच्छूद्रम्".इति श्रुतेः श्रुतिजन्मनामेव श्रुत्युच्चारणेऽधिकार इति । शूद्रस्तु–" वेदाक्षरोच्चारणाच्च शूद्रश्चांडालतां व्रजेत् " इति स्मृतेः शूद्रत्वादपि पपती त्याशयः ॥ * ॥ एतत् ईदृशं तत्तद्भद्राचरणादिसाध्यम् । यद्वा--आधुनिकमुत्तमश्लोकदर्शनम् । यद्वा--स्वानुभवमात्रवेद्यमाहात्म्यताविवक्षयादावेतदित्युक्तम् । उत्तमः संसाराख्यतमोनिरसनः श्लोकः यशो यस्य तस्य दर्शनं मम मत्संबंधे दुर्लभम् । साधनबाहुल्यं यदि स्यात्तदापि जन्मांतर एव लभ्यं मन्ये । कुतः—विषयात्मनः प्रारब्धवशेन विषयतादात्म्यं प्राप्तस्य । अनुरूपो दृष्टांतो यथेति । शूद्रजन्मन इति--साधनबाहुल्ये सति विप्रजन्मन्येव तत्स्यात् । कर्मशूद्रस्य तु प्रायश्चित्तविशेषेणेह जन्मन्यपि स्यादिति ॥ ४ ॥ पक्षांतरमाह--यद्वेति । मैवं, कृष्णदर्शनं मम भविष्यत्येवेत्याह--किंत्विति । हेतुमाशंकते--कुत इति । इत्यत इत्यत्र । अत्राशयमाह--अयं भाव इति । किंचित्तृणादि तरति तटे लगति । कदाचिद्वाय्वादिविवर्त्तनादिनेत्यर्थः । कश्चिद्भगवदनुगृहीतः ॥ * ॥ मतिधृतिभ्यामाह--मैवमिति । अधमस्येति तत्संदर्शनाऽखिलसाधनराहित्यं तद्वैपरीत्यं चोक्तम् । तथाप्यच्युतस्य सद्भजनाभावेऽपि कृपालुतादिमाहात्म्याच्च्युतिरहितस्य श्रीकृष्णस्य दर्शनं तन्माहात्म्यबलात्स्यादेवेत्यर्थः । संभावनायां लिङ् । अत्र निदर्शनम्--तत्तत्कर्मभोगकालप्रवाहेण संसार्यमाणेऽपि क्वचित्सांकेत्य नामादिनिमित्ते सति कश्चनाजामिलादिसदृशस्तरति तत्कूलायमानं भगवंतं प्राप्नोति । यथाकथंचित्तदभिगमनादौ सति पूतनादिसदृशो वा नदीरूपकेण यथा तद्ध्रियमाणस्तृणादिरनुकूलवातादिनिमित्ते सति तरति

**ममाद्यामंगलं नष्टं फलवांश्चैव मे भवः ॥ यन्नमस्ये भगवतो योगिध्येयांघ्रिपंकजम् ॥ ६ ॥ कंसो बताद्याऽकृत मेऽत्यनुग्रहं द्रक्ष्येंऽघ्रिपद्मं प्रहितोऽमुना हरेः ॥ कृतावतारस्य दुरत्ययं तमः पूर्वेऽतरन्यन्नखमंडलत्विषा ॥ ७ ॥ यदर्चितं ब्रह्मभवादिभिः सुरैः श्रिया च देव्या मुनिभिः ससात्वतैः ॥ गोचारणायानुचरैश्चरद्वने यद्गोपिकानां कुचकुंकुमांकितम् ॥ ८ ॥**

कालेन ह्रियमाणानां जीवानामपि मध्ये कश्चित्तरेदिति संभवतीति ॥ ५ ॥ अतोऽनया प्रवृत्त्यैव ममामंगलं ध्रुवं नष्टमेवेति ज्ञायते । भवो जन्म च सफलं जातमिति । यद्यतो नमस्करिष्यामि ॥ ६ ॥ अमंगलनाशे सूचकांतरमाह । कंस इति । बतेत्याश्चर्ये । अतिखलः कंसोऽपि ममात्यंतमनुग्रहं कृतवान् । यतोऽमुना कंसेन प्रहितो हरेरंघ्रिपद्मं द्रक्ष्ये द्रक्ष्यामीति । पूर्वेंबरीषादयस्तमः संसारमतरंस्तीर्णास्तत् ॥ ७ ॥ अंघ्रिपद्मं विभावयति । यदिति । ब्रह्मादिभिरर्चितमिति परमैश्वर्यमाह । श्रिया चेति सौभाग्यातिशयम् ।

तद्वदिति व्यंजितम् ॥ ५ ॥ अतः कालवशेन तरणसंभवात् । अमंगलं पापम् ॥ * ॥ अमंगलं सर्वोऽप्यंतरायः । योगिभिरपि यद्ध्येयमेव तन्नमस्ये साक्षात्कृत्य नमस्यामीत्यर्थः ॥ ६ ॥ अमंगलनाशे संदेहाभावमाह--यतोऽनुग्रहात् । प्रहितः प्रेषितः । द्रक्ष्य इत्यात्मनेपदमार्षम् । संसारं संसारहेतुमविद्याम् । यस्यांघ्रिपद्मस्य नखमंडलत्विषा नखसमूहतेजसा । तेजसा तमस्तरणस्य नियतत्वादिति भावः ॥ * ॥ संभावितश्रीभगवत्कारुण्यस्यैव लक्षणं सविस्मयमाह—कंस इति । अनुग्रहं ममाभीष्टसाचिव्यम् । यन्नखमंडलत्विषा तत्कांत्या तत्स्फूर्तिमात्रेणैवातरन्, आस्तां तद्भक्तिवार्तेति भावः । एतेन नराकृतिविग्रहस्य सनातनत्वं विग्रहांतराणां तदंतरर्भावश्च लभ्यते ॥ ७ ॥ विभावयति चिंतयति । यदंघ्रिपद्मं सर्वजगत्स्कर्तुः पूज्यगत्वेन परमैश्वर्यम् । अतिसुन्दरता लक्ष्मीतोऽधिका न कुत्राप्यस्ति तत्पूज्यत्वेन सौभाग्यस्याधिक्यं स्फुटमेव । मुनिभिमर्नननिष्ठैर्जीवन्मुक्तैर्मुमुक्षुसहितैः तैः स्वर्गादिवदनुपेक्ष्यत्वात्परमपुरुषार्थता । कृपावशेन गवां तृणाद्यशनार्थं तदनुचरत् जातिवर्गाश्रमधर्माद्यपोहेनापि गोपिकाभिः केवलं प्रेम्णैव तत्स्पर्शानंदोऽनुभूयत इत्यर्थः ॥ * ॥ यदिति--अत्र यच्छब्दस्य वाक्यांतिमत्वात्तच्छब्दानपेक्षयैव योजना स्यादिति पूर्वेण युग्मकं न कृतम् । तदुक्तं काव्यप्रकाशे—“ यच्छब्दस्तूत्तरवाक्यपदार्थगतत्वेनोपपत्तेः सामर्थ्यात्पूर्ववाक्यार्थगतस्य तच्छब्दस्योपादानं नापेक्षते ” इति । ततश्च प्रपंचाधिकारिभिर्यदंघ्रिपद्ममर्चितम् । “ मतिबुद्धिपूजार्थेभ्यश्च ” इति वर्तमाने क्तः । “ क्तस्य च वर्तमाने ” इति षष्ठ्यभावस्त्वार्षः । तैरागमोक्तमार्गेण सदोपास्यमानमिति । एतदेव द्रढयितुं क्रमेण तच्छिरस्पदैस्तदधस्पदैरप्युपास्यत्वमाह । श्रियेति वैकुंठपरिकराणामुपलक्षणम् । मुनिभिरिति प्रपंचस्थसर्वभक्तग्राहकम् । तत्र मुनिभिः श्रुतिपुराणाद्यनुसारिभिः । सिद्धैः साधकैश्च ससात्वतैः पाञ्चरात्रिकसहितैः । तत्साहित्यमत्र तस्यावश्यकत्वाभिप्रायेण । तदेवं यस्योत्कर्षप्रतिपादनाय तदिदं त्रयमुक्तं तस्य गोकुलस्य परमोत्कर्षं दर्शयति—गोचारणायेत्यर्धेन । यत्तेषामागममार्गेण ध्यात्वार्चितं तदेव स्वयं गोचारणायानुचरैश्चरद्भवति । तदप्यास्तां गोपिकानां कुचनिर्माल्यरूपैः कुंकुमैरंकितं भवतीत्यहो परमाश्चर्यमिति भावः । ‘आचितम्’ इति पाठे व्याप्तमित्यर्थः । तदेवं प्रायो देवर्षिमुखाद्रासश्रवणेन केवलं तत्प्रेम सुलभमेव चिंतितं न तु रतिकेलिमयविशेषमिति तद्दास्यभावेऽस्मिन्न रसाभासत्वं, किं वा गोपिकानां तमतिबालं वात्सल्याद्वक्षसि लालयंतीनां ज्यायसीनां कासांचिदित्यर्थः । गोपिका अप्यत्रोपलक्षणमेव गोपालादीनामिति ज्ञेयम् । सेयमस्य गोकुलमहिमस्फूर्तिस्तदाभिमुख्यप्रभावेणैवेति ध्येयम् । **विश्वनाथस्तु**--यस्यानुचरा ब्रह्मादयस्तदंघ्रिपद्मं गवामनुचरम्, यस्यार्चका ब्रह्मभवादयस्तद्गोपिकानां तु कुचोच्छिष्टकुंकुमास्वादकमित्युत्कर्षपरमावधिः । न चाक्रूरेण दासेन स्वप्रभोरुज्ज्वलरसास्वादनं रसाभासत्वादनुचितमिति वाच्यम्, वाक्यस्यास्य स्वगतत्वात् । स्वगतोक्त्या हि पित्रादयोऽपि हर्षात्पुत्रादीनां शृंगाररसमनुमोदयंतो दृष्टाः । यथा

द्रक्ष्यामि नूनं सुकपोलनासिकं स्मितावलोकारुणकंजलोचनम् ॥ मुखं मुकुंदस्य गुडालकावृतं प्रदक्षिणं मे प्रचरंति वै मृगाः ॥९॥ अप्यद्य विष्णोर्मनुजत्वमीयुषो भारावताराय भुवो निजेच्छया ॥ लावण्यधाम्नो भवितोपलंभनं मह्यं न न स्यात्फलमंजसा दृशः ॥ १० ॥ य ईक्षिताऽहं रहितोऽप्यसत्सतोः स्वतेजसापास्ततमोभिदाभ्रमः ॥ स्वमाययाऽऽत्मन्रचितैस्तदीक्षया प्राणाक्षधीभिः सदनेष्वभीयते ॥ ११ ॥

मुनिभिर्भक्तसहितैरिति परमपुरुषार्थत्वम् । गोचारणायेति कृपालुत्वम् । यद्गोपिकानामिति प्रेममात्रसुलभत्वम् ॥ ८ ॥ मनोरथांतरं करोति । द्रक्ष्यामीति । शोभमानौ कपोलौ नासिका च यस्मिंस्तत् । स्मितसहितोऽवलोको यस्मिन् अरुणकंजवल्लोचने यस्मिन् तच्च तच्च मुखम् । गुडालकावृतं वक्रकेशावृतम् । तदानीमेव शुभसूचकं दृष्ट्वातिहृष्यन्नाह । प्रदक्षिणमिति ॥ ९ ॥ पुनरप्यन्यच्चिंतयति । अप्यद्येति । ईयुषः प्राप्तवतः लावण्यस्य धामाऽऽश्रयस्तस्य विष्णोः । यद्वा विष्णोर्लावण्ययुक्तं यद्धाम वपुस्तस्य उपलंभनं दर्शनं भविता भविष्यति अपि यद्येवं स्यात्तर्हि मह्यं मम दृशो लोचनस्य फलं न स्यादिति न अपि तु स्यादेवेत्यर्थः ॥ १० ॥ य ईक्षितेत्यादि चतुर्भिः कालापकम् । तत्रैवं शंका । नन्वस्मदादिवदेव भोक्तृत्वकर्तृत्वादिधर्मैस्तत्रतत्र प्रतीयमानस्य कथं विष्णुत्वमितीमां शंकां श्लोकत्रयेणापाकुर्वेश्चतुर्थेन तमहं द्रक्ष्यामीति मनोरथं करोति । तथाहि य ईक्षितेति । असत्सतोः कार्यकारणयोरीक्षितापि ईक्षणमात्रेण कर्ताऽप्यहंरहितोऽहंकारहीनः । तथाऽपास्ततमोभिदाभ्रमः तमः स्वाज्ञानं

मनुना–“अन्विच्छति पतिं युक्तं वयःशीलगुणादिभिः । यदा तु भवतः शीलश्रुतरूपवयोगुणान् ॥ अश्रृणोन्नारदादेषा त्वय्यासीत्कृतनिश्चया ।” इति कर्दमोपाख्याने पुत्र्या अपि शृंगाररसानुमोदनात् ॥ ८ ॥ इतोऽप्यधिकं मनोरथं करोतीत्याह--मनोरथांतरमिति । गुडा निबिडा अलकाः कुंतलास्तैरावृतम् । यद्वा--गुडा अंगुलिकास्तद्वद्वक्राः । यद्वा--गुड इक्षुविकारस्तद्वत्स्निग्धाः । “गुडः पिंडेक्षुविकृतौ स्नुह्यंगुलिकयोर्गुडा” इति यादवः । वै-शब्दादन्येऽपि शुभसूचका भारद्वाजादयो ग्राह्याः । तदुक्तम्--“भारद्वाजो मयूरश्च शुकश्च गरुडस्तथा । एतेषां दर्शनं पुण्यं गतौ वामे विशेषतः ॥” इति ज्योतिषे ॥ * ॥ इत्थं सहजदास्येनादौ पादाब्जदर्शनं विभाव्य तत एव प्रेमोद्रेकेण लोभाच्छ्रीमुखदर्शनेऽपि मनोरथं करोति–द्रक्ष्यामीति । अत्र मृगा इति अयुग्मवैशिष्ट्यार्थम् । कृष्णमृगसहिताश्चेति ज्ञेयम् । तदुक्तं शकुनतंत्रे–“पुण्येन गत्या गवया अयुग्माः प्रदक्षिणं गौरमृगाश्चरन्ति । समा न शस्ता न च वामयाताः कृष्णैर्विमिश्रा न भवन्ति दुष्टाः ॥” इति ॥ ९ ॥ इदानीमन्यत्ततोऽप्यधिकं स्मरतीत्याह–पुनरिति । लावण्याधिकरणत्वोक्तिः शरीरे संगच्छते न त्वात्मनीत्यस्वारस्यादाह–यद्वेति । यद्येवं स्याद् यदि दर्शनं स्यात् । इत्यर्थ इति–‘द्वौ नञौ प्रकृतार्थं गमयतः’ इति वामनोक्तेः । लुनाति छिनत्ति द्रष्टॄणां चेतो हरतीति लवणं सौंदर्यं तदेवाधिकं लावण्यमिति “लावण्यं त्वतिसौंदर्ये छेदे मधुवने तथा” इति निरुक्तेः ॥ * ॥ ननु तद्दर्शनमसुरा अपि लभंत एव तत्र तवैव का भाग्यश्लाघेत्यत आह–अप्यद्येति । अद्य निजेच्छयैव मनुजत्वमस्मद्वैवस्वतवंशप्रादुर्भूतत्वं गतवतो विष्णोर्लावण्यधाम्नः किमुपलंभनं यथार्थानुभवितेत्यसुराणां दर्शनमात्रं न तु लावण्योपलंभ इति भावः । फलं सार्थकत्वम् “अक्षण्वतां फलमिदं न परं विदामः सख्यः पशूननुविवेश यतो वयस्यैः । वक्रं व्रजेशसुतयोरनुवेणुजुष्टं यैर्वै निपीतमनुरक्तकटाक्षमोक्षम् ॥” इत्युक्तेः । अंजसा साक्षादेव न तु छायादिव्यवधानेनेति भावः । यद्वा–उपलंभनं समीपप्राप्तिः । दृशः फलं दर्शनमंजसाऽनानायासेन चक्षुरुन्मीलनमात्रेणैव न तु योगादिसाधनबाहुल्येनेति भावः ॥१०॥ कालापकमिति–“ श्लोक एकेन युग्मं हि द्वाभ्यां वैशेषिकं त्रिभिः । कालापकं चतुर्भिः स्यात्कुलकं तु ततः परैः ॥ ” इति साहित्यसंदर्भोक्तेः । तत्र भगवति । एवं वक्ष्यमाणरीत्या । शंकाक्षेपोऽस्तीत्याह–नन्विति । तत्रतत्र युद्धादौ स्त्र्यादिग्रहणे च । अपाकुर्वन्निरस्यन् । तथाहि दर्शयति । तमआद्यपास्तौ हेतुमाशंक्य समाधत्ते–कुत इति । एतत् तमआदिनिरसनम् । तत्र आक्षेपे । यद्यपि स्वरूपसाक्षात्कारवान्सदैवास्ते तथापि

**यस्याखिलाऽमीवहभिः सुमंगलैर्वाचो विमिश्रा गुणकर्मजन्मभिः ॥ प्राणंति शुंभंति पुनंति वै जगद्यास्तद्विरक्ताः शवशोभना मताः ॥ १२ ॥**

ततो भिदा भेदस्ततो भ्रमोऽभिनिवेशादिः अपास्ता अपाकृतास्तमआदयो यस्मिन्सः । कुत एतत्तत्राह । स्वतेजसा चिच्छक्त्या नित्यस्वरूपसाक्षात्कारेण । तथापि स्वमायया स्वाधीनया मायया तदीक्षया तस्यैवेक्षया प्राणाक्षधीभिः सहितैरात्मन्नात्मनि स्वस्मिन्नेव रीचवैर्जीवैः सदनेषु वृंदावनतरुषु गोपीगृहेषु च लीलया कर्माणि कुर्वन्सक्तवद्भीयते आभिमुख्येन प्रतीयते ॥ ११ ॥ ननु सर्वथाऽहंकारादिरहितस्यात्मारामस्य लीलाऽपि कुत इत्याशंक्य परानुग्रहार्थेत्याशयेनाह । यस्येति । अखिलान्यखिलस्य वा अमीवानि पापानि घ्नंतीत्यखिलामीवहानि तैः । तथा सुमंगलैः शोभनानि मंगलानि येभ्यस्तैः गुणाः करुणादयः कर्माणि जन्मानि च तैर्विमिश्रा युक्ता वाचो जगत्प्राणन्ति जीवयंति शुंभंति शोभयंति पुनंति पवित्रयंति । व्यतिरेकमाह । या इति । तैर्विरक्ता रहितास्तास्तु वाचः स्वलंकृता अपि वस्त्राद्यलंकृतशववच्छोभमाना मताः सतां संमताः ॥ १२ ॥

तस्यैव भगवत ईक्षया ईक्षणेन स ऐक्षत " एकोऽहं बहु स्याम् " इति श्रुतेः । स्वस्मिन्नेव :प्रकाशितै रज्जूरगवत्प्रदर्शितैर्जीवैः । एतेनाध्यस्तानामधिष्ठानातिरेकेण सत्ताया अभावाद्वस्तुतः प्रतीतिकर्तृत्वमेव न तेषां स्वयमेवात्मनात्मानमपश्यदिति । अयमेवार्थौं वतिना सक्तवदित्युक्तेनाभिधीयते " लोकवत्तु लीलाकैवल्यम् " इति न्यायोऽप्यत्रानुकूल एवेति ॥ * ॥ मनुष्यकृतेस्तस्य लावण्योपलंभो नयनाभ्यामेव, स च सांप्रतं नंदग्राम एव अन्तर्यामिणः परमेश्वरस्य तस्य त्वनुमानेनैवोपलंभोऽस्मदादीनां सदा सर्वत्र वर्तत एवेत्याह–य इति । असत्सतोर्जीवस्याशुभशुभकर्मणोरीक्षिताऽहंरहितोऽप्यहं पश्यामीत्यहंकारहीनोऽपीत्यपिकारेण जीवो देहाहंकारसहित एवेक्षिता, परमात्मा तु तद्देहाहंकाररहित एव द्रष्टा उदासीनः सन्साक्षीत्यर्थः । नन्वहंकारराहित्यसाहित्याभ्यां को विचारः ? देहस्थितश्चेत्तद्वर्तिशोकमोहादिभिर्युज्यत एव, न हि गृहे स्थित आसक्तोऽनासक्तो वा गृहवर्ति ध्वान्तमौष्ण्यं शैत्यं वा नानुभवेत्तत्राह–स्वतेजसा चिच्छक्त्यापास्तं तमोऽज्ञानं तत्कृता भिदा भ्रमश्च येन सः । यो ह्यंतर्यामी स्वीयया माययात्मनि जीवेऽधिकारेण रचिताः सृष्टा याः प्राणेंद्रियधियस्ताभिस्तासां स्रष्टा स ईयतेऽनुमीयते, तथा तदीक्षया तासां प्राणादीनामीक्षया प्रकाशेन च तासां प्रकाशकः स सदनेषु समष्टिव्यष्टिदेहेष्वनुमीयते । तदुक्तम्–' गुणप्रकाशैरनुमीयते भवान् ' इति । तद्रूपलावण्यानुभवो हि परमभाग्यफलमेव ॥ ११ ॥ लीलायामाक्षिपति–नन्विति । अखिलानीति कर्मधारये कस्येत्याकांक्षोदयात्तत्पुरुषमाह–अखिलस्य वेति । वाचो भक्तानुकंपिन्मुरारे यशोदासूनो इत्येवंलक्षणाः । व्यतिरेकं गुणकर्मजन्ममिश्राभावमाह । तैर्गुणकर्मजन्मभिः । ता वाचः । स्वलंकृताः उपमारूपकोत्प्रेक्षाद्यलंकारयुक्ता अपि । यथास्या मुखं सुंदरमित्यर्थे वर्णनीये अस्या मुखं कमलमिवेत्युपमा । एतन्मुखमेतन्मुखमिवेत्यनन्वयः । मुखकमलं रम्यमिति रूपकम् । अस्या मुखे भ्रमरा अब्जमत्या पतंतीति भ्रांतिमदलंकारः । " अस्या मुखे कृते धात्रा किं पद्मेन किमिंदुना " इति आक्षेपः । एतन्मुखं कमलं वेति संशयः । नैतन्मुखं किं तु कमलमित्यपह्नुतिः । मन्य एतन्मुखं कमलमित्युत्प्रेक्षा, एवमन्यदप्यूह्यम् । यथा सुवस्त्राद्यलंकृतोऽपि शवो न शोभते तद्वत् । अत एवोक्तम्–" न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित् । तद्वायसं तीर्थमुशांति मानसा न यत्र हंसा निरमन्त्युशिक्क्षयाः ॥ " इति प्रथमे ॥ * ॥ यस्य संकीर्तनान्यपि यदुद्धारकाणीत्याह–यस्येति । अखिलानि अखिलस्य वाऽमीवानि पापानि घ्नंतीत्यखिलामीवहानि तैः, शोभनानि मंगलानि येभ्यस्तैर्यस्य गुणकर्मविमिश्रा वाचो वाक्यानि जगत् तद्वक्तृश्रोत्रात्मकं प्राणंति जीवयंति, जीवयित्वा शुंभंति कृपालुत्वनिर्मत्सरत्वादिभिरलंकारैः शोभयंति, शोभयित्वा च पुनंति आविद्यकदोषात्पवित्रयंति । तद्रहिता वाचो गुणालंकारादिमत्योऽपि शवाञ्शोभयंति ताः । प्रथमं जीवतोऽपि तद्वक्तृश्रोत्रात्मकाञ्जनाञ्शवान्कुर्वंति, तत उपमाद्यैरलंकारैरलंकारैरिव शोभयंतीति । तदुक्तम्–" जिह्वासती दार्दुरिकेव सूत न चोपगायत्युरुगायगाथाः । बिले बतोरुक्रमविक्रमान्ये न शृण्वतः

स चावतीर्णः किल सात्वतान्वये स्वसेतुपालामरवर्यशर्मकृत् ॥ यशो वितन्वन्व्रज आस्त ईश्वरो गायंति देवा यदशेषमंगलम् ॥ १३॥ तं त्वद्य नूनं महतां गतिं गुरुं त्रैलोक्यकांतं दृशिमन्महोत्सवम् ॥ रूपं दधानं श्रिय ईप्सितास्पदं द्रक्ष्ये ममाऽऽसन्नुषसः सुदर्शनाः ॥ १४ ॥ अथावरूढः सपदीशयो रथात्प्रधानपुंसोश्चरणं स्वलब्धये ॥ धिया धृतं योगिभिरप्यहं ध्रुवं नमस्य आभ्यां च सखीन्वनौकसः ॥ १५ ॥ अप्यंघ्रिमूले पतितस्य मे विभुः शिरस्यधास्यन्निजहस्तपंकजम् ॥ दत्ताभयं कालभुजंगरंहसा प्रोद्वेजितानां शरणैषिणां नृणाम् ॥ १६ ॥

स्वयंरचितान्सेतून्वर्णाश्रमधर्मान्पालयताममरवर्याणां सुखकर्ता सन्नवतीर्णः । यद्यशः ॥ १३ ॥ त्रैलोक्ये एकमेव कांतम् । दृशिर्दृष्टिस्तद्वतां महानुत्सवो यस्मात् । यद्वा महानुत्सव एव । अत एव श्रिय ईप्सितमास्पदमेवंभूतं रूपं श्रीमूर्तिं दधानं तमीश्वरं द्रक्ष्यामीति । अत्र लिंगम् । उषसः प्रभातसमयाः । सुदर्शनाः सुप्रसन्नं दर्शनं येषां ते शुभदर्शना इत्यर्थः । सुखं प्रभाता रजन्यः शुभसूचिका बभूवुरित्यर्थः ॥ १४ ॥ किं च । अथ दर्शनानंतरं सपदि तत्क्षणमेव रथादवतीर्णः सन्प्रधानयोः पुरुषयो रामकृष्णयोश्चरणं योगिभिरप्यात्मलाभाय केवलं धियैव धृतं साक्षादहं नमस्यामि । आभ्यां सहानयोः सखीन् गोपांश्च नमस्यामीति ॥ १५ ॥ किं च । अपीति । अधास्यत्

कर्णपुटे नरस्य ॥ " इत्याद्युक्तेः ॥ १२ ॥ अस्त्वेवं प्रकृते किमागतं तत्राह–स चेति । स च भगवान् । किलेति प्रसिद्धम् । सोऽवतीर्ण इह किं मानामिति चेदाह–गायंति । देवा व्यासदेवप्रभृतयः । गेयसंभवे गानं युक्तम् ' सति कुड्ये चित्रम् ' इति न्यायेन । अशेषाणां सर्वेषां श्रोतृवक्तृप्रभृतीनां मंगलं श्रेयस्करम् ॥ * ॥ तदेवं य ईक्षिता यस्य च नानागुणकर्मणां तादृङ् माहात्म्यं स तु सोऽपि स्वयं सात्वतान्वयेऽवतीर्णः सन्व्रज आस्त इति संबंधः । किलेति महत्सु शांतेषु च प्रसिद्धिं प्रमाणयति । स्वसेतवो भगवद्धर्मादिमर्यादाः । अमरवर्या ब्रह्मरुद्राद्याः । न केवलं तदवतारादिदर्शिनां तेषामेव शर्मकृदपि त्वन्येषामपीत्याह–यश इति । तदेव प्रशंसति–यद्यशो देवाः सर्वाराध्या अपि गायंति । यच्च परमनिकृष्टपर्यंताशेषजीवानां मंगलमिति । तत्तत्कर्तृत्वञ्च नास्मदादिवत्कर्मपारवश्येन किं तु स्वातन्त्र्येणेत्याह–ईश्वरः ॥ १३ ॥ स्वमानसं प्रति वक्ति–तं कृष्णम् । महतां गतिं महद्भिर्गम्यम् । एकमेवेत्येवकारेणान्यत्र तादृशसौंदर्यव्यवच्छेदो बोध्यते ' ' स्वमूर्त्या लोकलावण्यनिर्मुक्त्या ' इति वक्ष्यमाणत्वात्, ' परं पदं भूषणभूषणांगम् ' इत्याद्युक्तेश्च । पंचमीबहुव्रीहिणोत्सवहेतुत्वं प्रतीयते । पुत्रजन्मादिवन्न तूत्सवरूपत्वमित्यस्वारस्यादाह–यद्वेति । 'उत्सवो मह उत्सेकः ' इति कोशादुत्सवो भद्रहेतुरित्यर्थः । ''भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः'' इति श्रुतेः । एवंभूतं श्रीकांक्षितम् । अत्र दर्शने । लिंगं हेतुः । इत्यर्थ इति–प्रातः शुभशकुनादिभिर्ज्ञायतेऽवश्यं मे भगवद्दर्शनं भविष्यतीति भावः ॥ * ॥ नन्वेवं साधारण्यञ्चेत्तस्मात्तव किं वैशिष्ट्यं तत्राह–तं त्विति । नूनं निश्चये । तुशब्दः सर्वयादवादितोऽपि निजभाग्यवैशिष्ट्यविवक्षया । अहं त्वद्यैव तं द्रक्ष्ये, महतां महाभागवतानां गतिं गम्यं गुरुञ्चोपदेष्टारामिति साध्यसाधनत्वमुक्तम् । रूपं सौंदर्यम् । एवं सामान्यत उक्त्वा श्रीकृष्णरूपे तस्मिन्विशेषमाह–त्रैलोक्य–(–मध्ये मध्योऽर्ध्वलोकः स च महावैकुंठपर्यंतः सोऽपि महानारायणपर्यंतस्तस्मादपि-)–कांतम् । अत एव स्वसहितानां तादृशामपि दृशिमतां महोत्सवम् । वक्ष्यते च महाकालपुरनाथेन श्रीभगवता–''द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनीताः'' इति । उक्तञ्च उद्धवेन–' विस्मापनं स्वस्य च ' इति । न केवलं स्वरूपरीयसामेव तादृशं तत्, अपि तु स्वशक्तिवरीयस्या अपीति वदँस्तादृशसुभगतायां हेतुमाह–सर्वसौभाग्याश्रयरूपायाः श्रियोऽपि ईप्सितमीप्सा तस्या आस्पदं न तु महानारायणादिवद्भोग्यमपीत्यर्थः । तदुक्तम्–' यद्वाञ्छया श्रीललनाचरत्तपः ' इति । उषस इत्यनेन बह्व्यो रात्रयश्चिरं सुप्रभाताः सन्ति, अन्यथेदृशं फलं न स्यादित्यर्थः ॥ १४ ॥ धृतं ध्यातं न तु दृष्टम् । आभ्यां रामकृष्णाभ्यां सह ॥ * ॥ वनौकसः वृंदावनसकलप्राणिनः ॥ १५ ॥ अन्यदाह–किञ्चेति । अपीति सम्भावनायाम् । कालसर्पवेगेन प्रोद्वेजितानां त्रस्तानाम् । तद्धस्तपंक

समर्हणं यत्र निधाय कौशिकस्तथा बलिश्चाप जगत्त्रयेंद्रताम् ॥ यद्वा विहारे व्रजयोषितां श्रमं स्पर्शेन सौगंधिकगंध्यपानुदत् ॥ १७ ॥ न मय्युपैष्यत्यरिबुद्धिमच्युतः कंसस्य दूतः प्रहितोऽपि विश्वदृक् ॥ योंतर्बहिश्चेतस एतदीहितं क्षेत्रज्ञ ईक्षत्यमलेन चक्षुषा ॥ १८ ॥ अप्यंघ्रिमूलेऽवहितं कृतांजलिं मामीक्षिता सस्मितमार्द्रया दृशा ॥ सपद्यपध्वस्तसमस्तकिल्बिषो वोढा मुदं वीतविशंक ऊर्जिताम् ॥ १९ ॥ सुहृत्तमं ज्ञातिमनन्यदैवतं दोर्भ्यां बृहद्भ्यां परिरप्स्यतेऽथ माम् ॥ आत्मा हि तीर्थीक्रियते तदैव मे बंधश्च कर्मात्मक उच्छ्वसित्यतः ॥ २० ॥

धास्यति । तद्विभावयति दत्ताभयमिति सार्धेन ॥ १६ ॥ बलिना तावत्पदत्रयपरिमितभूदानसमये तस्य हस्ते उदकं निहितम् । कौशिकः कौशिकगोत्रोत्पन्न इंद्रस्तेनापि कदाचित्किंचिन्निहितमिति ज्ञातव्यम् । मुमुक्षूणां संसारभयनिवर्तकं सकामानामभ्युदयप्रदं चेत्युक्तमथानुरक्तानां परमसुखदं चेत्याह । यद्वेति । वाशब्दो वितर्के । यत्करपंकजं विहारे रासक्रीडायाम् । सौगंधिकस्य गंध इव गंधो यस्य तत्सौगंधिकगंधि ॥ १७ ॥ एवं परमानुग्रहं संभाव्य पुनरप्यसंभवमाशंक्य परिहरति । न मयीति । यद्यप्यहं कंसेन प्रहितोऽतस्तस्य दूतस्तथापि मय्यरेरयमिति बुद्धिं नोपैष्यति न करिष्यतीत्यर्थः । यतो विश्वदृक् सर्वज्ञोऽतो मम चेतसोंतश्च बहिश्च यदीहितं चेष्टितमेतद्यः क्षेत्रज्ञोंतर्यामी नित्यज्ञानेनेक्षते । अयं भावः । चेतसो बहिरेव कंसमनुवर्तेतस्तु कृष्णमेव तदेतदसौ हृदि स्थितो जानातीति । यद्वा एतस्य जगत ईहितमिति ॥ १८ ॥ अपि यद्यंघ्रिमूले चरणोपांतेऽवहितं संयतं कृपामृतेनार्द्रया दृशा मामीक्षिता द्रक्ष्यति तर्हि सपद्येव विनष्टाखिलकल्मषः परां मुदं वोढा प्राप्स्यामीति ॥ १९ ॥ अथ मां परि

जम् । विभावयति विवृणोति । विभुरिति सर्वव्यापित्वान्मन्मनोरथं करिष्यत्येवेत्याह ॥ * ॥ नृणामिति षष्ठी चतुर्थ्यर्थे ॥ १६ ॥ यत्र हस्तपंकजे । कौशिकत्वमिंद्रस्य यथा जातं तद्धरिवंशतोऽवसेयम् । निहितं स्थापितम् । 'दत्ताभयम्' इत्यादिना मुमुक्षूणां, 'समर्हणम्' इत्यादिना सकामानाम् । अनुरक्तानां परमप्रेमवताम् । 'सौगंधिकं तु कह्लारम्' इत्यमरः । यद्धस्तपंकजम् । अपानुदन्निराकरोत् ॥ * ॥ सम्यगर्ह्यते पूज्यते येन तत्समर्हणं संकल्पोदकम्, तच्च सार्वभौमावतारे पुरंदरेण तस्य हस्ते जलं दत्तमिति पुराणांतरे । बलिना च वामनावतार इत्यष्टमे वर्णितमेव । यच्च विहारे रासक्रीडानंतरसंप्रयोगे श्रमं विहारश्रमोत्थस्वेदांबु मार्जयामास । तदुक्तम्—"तासां रतिविहारेण श्रांतानां वदनानि सः । प्रामृजत्करुणः प्रेम्णा शंतमेनांग पाणिना ॥" इति । तेन तासां परममाधुरी ध्वनिता । तत्किंभूतं—स्पर्शेन तासां मुखस्पर्शेन सौगंधिकगंधि मानससरोवरकमलं सौगंधिकमिति पुराणांतरे प्रसिद्धम् । इहापि पूर्ववत्स्वस्वगतोक्तत्वान्न रसाभासः ॥ १७ ॥ संभाव्य विचार्य । असंभवं दर्शनादेर्मनस्येवाह । अथ वा—किं प्रलापेन तव कंसभृत्यत्वात्तत्प्रहितत्वाच्च त्वय्यच्युतोऽरिबुद्धिं करिष्यत्येवेति मंदाशंकां परिहरन्नाह—न मयीति । अतः कंसप्रहितत्वात् । इत्यर्थ इति—धातूनामनेकार्थत्वादेतिरत्र करणेर्थे बोध्य इत्याशयः । यतो यस्माद्धेतोः । अतो हेतोः । एतत् संकल्पलक्षणम् । क्षेत्रं श्रीगीतोक्तलक्षणम् "महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च । इंद्रियाणि दशैकं च पंच चेंद्रियगोचराः ॥ इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः । एतत्क्षेत्रम्" इत्येवंरूपं जानाति साक्षात्पश्यतीति क्षेत्रज्ञः । निजाभिप्रायमाह—अयं भाव इति । पूर्वव्याख्याने ममेहितमित्युक्तेर्भगवतः परिच्छिन्नदर्शित्वप्रतीतेरस्वारस्यादाह--यद्वेति ॥ * ॥ ० ॥ १८ ॥ 'अतो नु अपि यद्यर्थे' इत्याह—अपि यदि । ईक्षिता लुटः प्रथमपुरुषैकवचनम् । वीता गता विविधा शंका 'शत्रुप्रेषितोऽयं नांगसंगार्हः' इत्येवमादिका यस्य स तथा । ऊर्जितामुद्रिक्ताम् । वोढेति वहतेः पूर्ववत् ॥ * ॥ सपदि तत्क्षणमेव ॥ १९ ॥ अथ दृष्ट्यनंतरम् । तीर्थीक्रियते ज्ञानयोग्यपात्री

लब्धांगसंगं प्रणतं कृतांजलिं मां वक्ष्यतेऽक्रूर ततेत्युरुश्रवाः ॥ तदा वय जन्मभृतो महीयसा नैवादृतो यो धिगमुष्य जन्म तत् ॥ २१ ॥ न तस्य कश्चिद्दयितः सुहृत्तमो न चाप्रियो द्वेष्य उपेक्ष्य एव वा ॥ तथाऽपि भक्तान्भजते यथा तथा सुरद्रुमो यद्वदुपाश्रितोऽर्थदः ॥ २२ ॥ किं चाऽग्रजो माऽवनतं यदूत्तमः स्मयन्परिष्वज्य गृहीतमंजलौ ॥ गृहं प्रवेश्यातसमस्तसत्कृतं संप्रक्ष्यते कंसकृतं स्वबंधुषु ॥ २३ ॥

रप्स्यते आलिंगिष्यति यदा तदैव तेन मे आत्मा देहस्तीर्थीक्रियतेऽतिपवित्रीकरिष्यते । बंधश्च अतो देहात् उच्छ्वसिति श्लथो भविष्यति ॥ २० ॥ ततः भोस्ताततेति । तदा जन्मभृतः सफलजन्मानः । अन्यथा तज्जन्मैव न भवतीत्याह । महीयसेति । महीयसा श्रीकृष्णेन योऽनादृतोऽमुष्य तस्य जंतोस्तज्जन्म धिक् ॥ २१ ॥ ननु सुहृदादिषु परिष्वंगसंप्रश्नादयो जीवधर्माः कथमीश्वरे संगच्छंतेऽत आह । न तस्येति । दयितः प्रियस्तद्विपरीतोऽप्रियः सुहृत्तमो हिततमस्तद्विपरीतो द्वेष्य एतत्सर्वव्यतिरिक्त उपेक्ष्य इति । दयितादयो न संतीति सत्यं तथापि भक्तान्भजते । तत्र यथा ये भक्तास्तांस्तथा भजते । " ये यथा मां प्रपद्यंते तांस्तथैव भजाम्यहम् " इति भगवद्वचनात् । अविषमत्वेपि भक्तेभ्य एव फलं ददातीत्यत्र दृष्टांतः । यद्वत्सुरद्रुम इति ॥ २२ ॥ यो मयांजलिः करिष्यते तस्मिन्नेवांजलौ गृहीतं स्वकरेण धृतं माम् । आतानि समस्तान्यर्घादिस

क्रियते इति वा । भगवदालिंगनेन विनैवोपास्ति ज्ञानयोग्यो जात इति भावः । कर्मात्मकः संसृतिलक्षणः । अतो देहाद्बंधः, अतोंगसंगाद्वा ॥ * ॥ सुहृत्तमं श्रीवसुदेवादिहितकारित्वात् । न केवलं सुहृत्तमतैव किन्तु ज्ञातिम् । ज्ञातित्वेऽपि सत्यनन्यदैवतम् ऐकांतिकदास्यवंतम् । ततश्च तेन मे देहस्तीर्थी क्रियते तीर्थं करिष्यते, देहः पूतो भूत्वाऽन्येषामपि पावनो भविष्यति । अतः परिरंभाद्धेतोः । उच्छ्वसिति उद्गतो भविष्यति ॥ ॥ २० ॥ तन्यते विस्तार्यते वंशोऽनेनेति ततः, तनोतेः क्तप्रत्ययेऽनुनासिकलोपेन रूपसिद्धेः । 'ततोऽनुकंप्ये जनके' इति मेदिन्युक्तेर्जनकभ्रातृत्वान्मयि ततशब्द उपचर्यते । भगवद्दृष्ट्याऽनुकंप्यत्वाद्वा मां ततेति वक्ष्यते । तत एव तात इत्यभिप्रेत्यैवोक्तम्--भो तातेति । महीयसाऽतिपूज्यतमेन । यः पुमान् । अमुष्य पुंसः । तज्जन्म यस्मिञ्जन्मनि नादृत इत्यर्थः ॥ * ॥ उरु महत् श्रवः कीर्तिर्निरुपाधिकृपाकरत्वादिलक्षणा यस्य सः । महीयसा सर्वपूज्यतमेन भगवता प्रेमसंभाषणादिना न संमानितः । अमुष्य तादृशस्य । तन्महत्तमानादृतम् । यद्वा--परमापकृष्टत्वेनाऽनिर्वचनीयम् । यद्वा--संजात्यादिनोत्कृष्टमपि । यद्वा--महीयसा कृपादिगुणमहत्तमेन तत्सेवकेन केनचिदपि । किं पुनस्तेन सर्वकृपालुगुणमूर्द्धन्यमणिनेत्यर्थः ॥ २१ ॥ तत्रानीश्वरतामाशंकते--नन्विति । अतोऽत्र । तस्मात्प्रियाद्विपरीतः । एतस्माद्दयितादिचतुष्काद्व्यतिरिक्तो भिन्नः । इति सत्यम्--दयितत्वाद्यभावस्तत्र सत्यं विद्यतेऽपि । तत्र दयितत्वादिमस्तु । यथा दयितत्वादिरूपेण । तान् दयितत्वादिमतः । तथा--दयितत्ववंतं दयितत्वेन, द्वेष्यं द्वेष्यत्वरूपेण । तथा च श्रीगीतासु । इत्यत्रैतस्मिन्विषये । यद्वद्यथा । सुरद्रुमः कल्पतरुः । न हि कल्पद्रुमस्य केनापि साकं रागद्वेषादि तथापि फलं तु सेवकायैव ददातीतिवद्भगवानपीति भावः ॥ * ॥ ननु तस्य परमेश्वरत्वात्सर्वत्र साम्यमेव संभवेत्; एवं च त्वं स्वस्मिन्सुहृत्तमत्वादिकं किं संभावयसीति तत्राह--न तस्येति । तथापि भक्तान्भजत इति--" समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः । ये भजंति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ " इति तदुक्तेः । तत्रापि यथा तथेति ये यथा भक्तास्तांस्तथा भजते । " ये यथा मां प्रपद्यंते तांस्तथैव भज्याम्यहम् " इति तद्वचनात् । यद्वत्सुरद्रुम इति--आश्रयणतारतम्येन फलतारतम्यम् । अनाश्रितेभ्यः फलाऽप्रदानं च तदपि सुरद्रुमस्य यथा न वैषम्यं तथा तस्य भगवतोऽपि । किञ्च--सुरद्रुमस्याश्रिताधीनत्वं तथा नास्ति यथा भगवतो भक्ताधीनत्वम् । अतो भक्तिसंबंधेन तस्य सौहार्दद्वेषोपेक्षा अपि दृष्टा एव । यथांबरीषादौ सौहार्दं, तद्द्वेष्टृदुर्वासःप्रभृतौ द्वेषोपेक्षे च दृष्टे एवेति ॥ २२ ॥ इदानीं बलदेवविषयिणीं चिंतां कुरुते--किञ्चेति । स्मयन्नहो मां पितृव्यः सन्नमतीति मंदस्मितं कुर्वन् स्वबंधुषु वसुदेवादिषु संप्रक्ष्यतेऽनुयोक्ष्यते ॥ * ॥ स्वबंधुषु वसुदेवादिषु ॥ २३ ॥

श्रीशुक उवाच ॥ इति संचिंतयन्कृष्णं श्वफल्कतनयोऽध्वनि ॥ रथेन गोकुलं प्राप्तः सूर्यश्चास्तगिरिं नृप ॥ २४ ॥ पदानि तस्याखिललोकपाल
किरीटजुष्टामलपादरेणोः ॥ ददर्श गोष्ठे क्षितिकौतुकानि विलक्षितान्यब्जयवांकुशाद्यैः ॥ २५ ॥ तद्दर्शनाह्लादविवृद्धसंभ्रमः प्रेम्णोर्ध्वरोमाऽश्रुकला
कुलेक्षणः ॥ रथादवस्कंद्य स तेष्वचेष्टत प्रभोरमून्यंघ्रिरजांस्यहो इति ॥२६॥ देहंभृतामियानर्थो हित्वा दंभं भियं शुचम् ॥ संदेशाद्यो हरेर्लिंगदर्शन
श्रवणादिभिः ॥ २७॥ ददर्श कृष्णं रामं च व्रजे गोदोहनं गतौ ॥ पीतनीलांबरधरौ शरदंबुरुहेक्षणौ ॥ २८ ॥

त्कृतानि येन तं मां गृहं प्रवेश्य ॥ २३ ॥ एवंप्रकारेणाध्वनि संचिंतयन् स तु मार्गमपि न वेद तथापि सूर्यास्तगमने रथेन गोकुलं प्राप्त इति ॥ २४ ॥ अखिलैर्लोक
पालैः किरीटेषु जुष्टाः अमलाः पादरेणवो यस्य तस्य । क्षितिकौतुकानि क्षितेरलंकाररूपाणि ॥ २५ ॥ तद्दर्शनेन तेषां पदानां दर्शनेन य आह्लादस्तेन विवृद्धः संभ्रमो यस्य
सः प्रेम्णा ऊर्ध्वानि रोमाणि यस्य सः । अश्रूणां कलाभिर्लेशैराकुले ईक्षणे यस्य सः । अवस्कंद्यावप्लुत्य तेषु पदेषु सोऽक्रूरः अचेष्टत व्यलुठत् । अहो इति दुर्भलतां भावयन्
॥२६॥ ननु किमर्थमेवं व्यलुठत् नास्ति प्रेमसंभ्रमे फलोद्देश इत्यत आह । देहंभृतामिति । देहभाजामेतावानेव पुरुषार्थः । कः । कंसस्य संदेशात्संदेशमारभ्य हरेर्लिंगदर्शन
श्रवणादिभिर्दंभादि हित्वा योऽयमक्रूरस्य वर्णित इति । संदेश आद्यो यस्यार्थस्य स संदेशाद्यो यावानक्रूरस्य जात इति वा ॥ २७॥ ततः कृष्णं रामं च ददर्श । गावो दुह्यंतेऽस्मि

इति इत्थम् । सूर्यश्चास्तगिरिमिति–प्रातश्चलितो मथुरातोऽल्पेऽपि मार्गे भगवद्ध्यानावेशितचेतस्त्वादश्वरश्मिसंचालनादिकं न सस्मारेति भावः । नृपालनादिव्यग्राणामेतद्दौर्लभ्यमाह–नृपेति संबोधयन्निति भावः ॥ * ॥
सूर्यश्चास्तगिरिमिति सहोपमा । सा चास्तगिरिणा सूर्यस्येव गोकुलमहसा तस्यावृतत्वं ध्वनयति ॥ २४ ॥ तस्य श्रीकृष्णस्य । पदानि पादतलचिह्नानि । विलक्षितानि विलक्षणत्वेन ज्ञापितानि । 'अलंकारेऽपि
कौतुकम्' इति कोशांतरात् ॥ * ॥ ननु रथोपर्यासीनेन सायं गोधूलिकृतांधकारे बहुलगोपगणपदावृतानि तस्य पदानि कथं दृष्टानि तत्राह–क्षितीति । क्षितेः कौतुकमुत्सवो येभ्यस्तानीति । निजालंकारत्वेन तयैव
सुव्यक्ततया रक्षणात् । तत्र च भक्तजनदृष्टौ स्वतः स्फुरणादिति भावः । ननु तस्यैव तानीति कथं विज्ञातं तत्राह–अब्जाद्यैर्विलक्षितानि असाधारणानि ॥ २५ ॥ तेषां पदानां दर्शनेन । संभ्रमोऽत्र भक्त्युद्रेकनिमि
त्तव्यापारविशेषः ॥ * ॥ संभ्रमः कर्तव्यतानुसंधानाभावः । अश्रूणां कला कलनमतिक्षरणं तेनाकुले ईक्षणे यस्य सः । अहो भाग्यं दुर्लभलाभो ममायमिति सगद्गदं ब्रुवन् ॥ २६ ॥ रजोलोठने किं प्रयोजन
मित्याक्षिपति–नन्विति । प्रेमसंभ्रमे प्रेमावेशे फलोद्देशः फलमुद्दिश्य प्रवृत्तिर्भवतीति । पदविभागमुपेक्ष्यैकपदस्य लघुत्वादाह–बहुव्रीहिणा । मतुबंतेन मतुबंतस्यान्वयो वा, तुल्यालिनिवेशन्यायेन वा ।
संदेशः परमुद्दिश्य निजवृत्तकथनम् ॥ * ॥ मथुरातो यात्रामारभ्य नंदव्रजे प्रवेशपर्यंतमक्रूरस्य मनोवाक्कायचेष्टितं वर्णयित्वा तदेव दृष्टांतीकृत्य सिद्धांतसारमाह–देहमिति । देहमिति
द्वितीयार्षी । अलुक्समासे प्रथमाद्वितीययोरग्रहणात् । तच्च प्रयोगादर्शनात्तत्रोदाहरणाभावाच्चेति ध्येयम् । देहधारिणामियानेतावानेव पुरुषार्थः । कंसस्य संदेशादारभ्य हरेर्लिंगदर्शनश्रवणा
दिभिर्योऽयमक्रूरस्य वर्णितः । यथा हरेर्लिंगं पदचिह्नं दृष्ट्वा अक्रूरस्तत्रैव धूलौ लुलोठ । तत्राक्रूरो राजमंत्री राज्ञोऽत्यादरणीयः कथं गोचारकस्य पदधूलौ लोठामीति दंभं हित्वैव, मद्दूतोऽपि भूत्वा
मच्छत्रोः कृष्णस्य पदधूलौ लोठतीत्युपजापकंपितात्कंसाद्भयं हित्वा, कुपितकंसविनाश्येषु गृहकलत्रादिषु च शुचं शोकं हित्वैव लुलोठ । यथा तथैव वयं पंडितत्वादभिजातत्वादैश्वर्यवत्त्वाच्च श्रेष्ठाः कथं सर्वलोकानादृत
कुचैलाकिंचननिकृष्टवैष्णवचरणधूलौ पताम इति दंभं स्वजननिंदनाद्भयं तत्तत्त्यागाच्छोकञ्च हित्वा हरेर्लिंगं वैष्णवं दृष्ट्वा तच्चरणधूलौ पतेयुः । यद्वा–हित्वेत्यादिकं देहभृत्स्वेव योग्यं न त्वक्रूरे प्रेमविह्वल इति । यथा
हरेर्नारदादिमुखाद्यशःश्रवणेन स्मरणेन चाक्रूरो यथा दास्यरसानुकूलान्मनोरथांश्चकार तथैव कदा हरिं परिचारिष्यामः अपि किं तं द्रक्ष्याम इत्यादिमनोरथान् कुर्युरिति ॥ २७ ॥ ततोंघ्रिरजोलोठनोत्तरम् । गोदोहनं

किशोरौ श्यामलश्वेतौ श्रीनिकेतौ बृहद्भुजौ ॥ सुमुखौ सुंदरवरौ बालद्विरदविक्रमौ ॥ २९ ॥ ध्वजवज्रांकुशांभोजैश्चिह्नितैरंघ्रिभिर्व्रजम् ॥ शोभयंतौ महात्मानौ सानुक्रोशस्मितेक्षणौ ॥३०॥ उदाररुचिरक्रीडौ स्रग्विणौ वनमालिनौ ॥ पुण्यगंधानुलिप्तांगौ स्नातौ विरजवाससौ॥३१॥ प्रधानपुरुषावाद्यौ जगद्धेतू जगत्पती ॥ अवतीर्णौ जगत्यर्थे स्वांशेन बलकेशवौ ॥ ३२ ॥ दिशो वितिमिरा राजन्कुर्वाणौ प्रभया स्वया ॥ यथा मारकतः शैलो रौप्यश्च कनकाचितौ ॥ ३३ ॥

न्निति गोदोहनं तत्स्थानं गतौ प्राप्तौ ॥ २८ ॥ २९ ॥ अनुक्रोशोऽनुकंपा तद्विलसितस्मितयुक्तमीक्षणं ययोस्तौ ॥ ३० ॥ उदारा रुचिरा क्रीडा ययोस्तौ । स्रग्विणौ रत्नस्रग्भिरलंकृतौ विरजे निर्मले वाससी उत्तरीये ययोः ॥ ३१ ॥ प्रधानभूतौ पुरुषौ प्रकृतिपुरुषात्मकौ वा । कुतः । आद्यौ । तदपि कुतः । जगद्धेतू । अत एव जगत्पती । विपरीतो वा चतुर्णां पदानां हेतुहेतुमद्भावः । जगत्यर्थे पृथिव्या भारापनयनाय स्वांशेन मूर्त्तिभेदेन बलकेशवौ संताववतीर्णौ ॥ ३२ ॥ स्वप्रभया विगततिमिरा

क्रियां वा ॥ * ॥ प्रथमं दूरतो वस्त्रदर्शनात्तदेवादौ वर्णयति–पीतनीलेति । ततस्तडिदादिभ्योऽपि प्रकाशबहुलत्वेन नेत्रदर्शनात्तयोरेव वर्णनम् ॥ २८ ॥ किशोरावनाप्तयौवनौ । " किशोरोऽश्वशिशौ सूर्ये वयसि यौवनाग्रिमे " इति धरणिः ॥ * ॥ ततः किंचिच्चलने सति व्यक्तीभूतकैशोरस्य ततो वर्णस्य तत्र शोभोपलंभात्तद्वर्णनम् । ततो गवां सम्भालनार्थमुत्थापितभुजावलोकनं, ततः श्रीमुखनिभालनं, ततः किंचिन्निकटीभूय पश्यता तेन सर्वांगसौंदर्यावलोकनं, ततो बालौ किशोरावपि महाबलत्वेन द्विरदविक्रमौ मत्तगजवच्चलन्तौ ददर्श ॥ २९ ॥ महात्मानौ परपुरुषौ ॥ * ॥ ० ॥ ३० ॥ उदारा महती ख्याता चातुर्य विशिष्टा वा रुचिरा द्रष्टृचेतोहरा । " उदारो महति ख्याते दक्षिणे दानशौंडके " इति शाश्वतः । वनमालायाः पृथगुपादानाद्रत्नस्रग्भिरित्युक्तम् । पुण्यः सुरभिर्गंधो यस्य तुलसीदारुपटीरादेः स पुण्यगंधस्तेन " नास्ति प्रियोऽनुलेपोऽन्यो हरेस्तुलसिजो यथा " इति हरिभक्तिचंद्रोदये ॥ * ॥ उदाररुचिरा महामनोहरा क्रीडा गवाह्वानरोधनादिषु विलासहासादिरूपा ययोस्तौ । कृपया निजमाधुरीं दर्शयितुं तमदृष्ट्वैव स्थितयोरनयोः क्रीडायां कौतुकावेशः । तत्र च वेशविशेषाणां प्रत्येकनिशामनमिति क्रमेण वर्णनम् । स्रग्विणौ ह्रस्वमध्यममालाधारिणौ । वनमालिनौ दीर्घमालाधारिणौ । विरजं वासो ययोस्तौ । विरज इत्यकारांतो रजशब्दः ' अर्थाः पादरजोपमाः ' इति प्रयोगात् । स्रग्वीत्यादिकं तु स्नानानंतरमेव गृहात्तत्रागमादिति ज्ञेयम् ॥ ३१ ॥ ' अप्रसिद्धेः प्रसिद्धिर्बलीयसी ' इति न्यायेनाह–प्रकृतिपुरुषात्मकौ वा । बलदेवस्य शेषावतारत्वेन प्रकृतित्वं ज्ञेयम् । तच्च ' यस्याद्य आसीद्गुणविग्रहो महान् ' इत्यादिना " महानहंवैकृततामसेंद्रियाः सृजाम सर्वे यदनुग्रहादिदम् " इत्यंतेन पञ्चमस्कंधेऽवसेयम् । तत्राशंकते–कुत इति । तदपि आद्यत्वमपि । अत एव जगद्धेतुत्वादेव, उत्पादकस्य प्रायो रक्षकत्वदर्शनात् । वैपरीत्ये विनिगमनाविरहात्तदप्यस्त्वित्याह–विपरीतो वेति । जगत्पतित्वं कुतो–यतो जगद्धेतू, तदपि कुतो–यत आद्यौ, तदपि कुतो यतः प्रधानपुरुषाविति । स्वांशेन निजैश्वर्येण मायया वा ॥ * ॥ कृष्णस्य सर्वापेक्षया प्रधानत्वं, रामस्य त्वन्यापेक्षया स्वांशेन स्वाविर्भावभेदेन हेतुना । यथाऽघबकादीन् कृष्णो धेनुकप्रलंबादींश्च रामो जघानेति । यथा चाणूरकंसादीन्कृष्णो मुष्टिकद्विविदादींराम इत्युभावेव जगतीक्षेमायावतीर्णाविति ॥ ३२ ॥ मारकतः श्याममणिस्तच्छैलोपमः कृष्णः । रूप्यं रजतं तत्समो रामः । ननु कृष्णप्रभाया अंधकारनिरासकता न संभवति तत्तुल्यत्वदर्शनादिति चेत्कश्चिन्मंदो वदेत्तं प्रत्याह–" यदेतदादित्यस्य परं कृष्णं

रथात्तूर्णमवप्लुत्य सोऽक्रूरः स्नेहविह्वलः ॥ पपात चरणोपांते दंडवद्रामकृष्णयोः ॥ ३४ ॥ भगवद्दर्शनाह्लादबाष्पपर्याकुलेक्षणः ॥ पुलकाचितांग औत्कंठ्यात्स्वाख्याने नाशकन्नृप ॥ ३५ ॥ भगवांस्तमभिप्रेत्य रथांगांकितपाणिना ॥ परिरेभेऽभ्युपाकृष्य प्रीतः प्रणतवत्सलः ॥ ३६ ॥ संकर्षणश्च प्रणतमुपगुह्य महामनाः ॥ गृहीत्वा पाणिना पाणी अनयत्सानुजो गृहम् ॥ ३७॥ पृष्ट्वाथ स्वागतं तस्मै निवेद्य च वरासनम् ॥ प्रक्षाल्य विधिवत्पादौ मधुपर्कार्हणमाहरत् ॥ ३८ ॥ निवेद्य गां चातिथये संवाह्य श्रांतमादृतः ॥ अन्नं बहुगुणं मेध्यं श्रद्धयोपाहरद्विभुः ॥ ३९ ॥

दिशः कुर्वाणौ । कनकाचितौ सुवर्णव्याप्ताविति सालंकारयोः शैलसादृश्यार्थमुक्तम् ॥ ३३ ॥ ३४ ॥ भगवद्दर्शनाह्लादेन यद्बाष्पं तेन पर्याकुले ईक्षणे यस्य सः । पुलकैराचितं व्याप्तमंगं यस्य सः । स्वाख्यानेऽक्रूरोऽहं नमस्करोमीति कथने नाशकन्नाशक्नोत् ॥ ३५॥ अभिप्रेत्याक्रूरोऽयमेतदर्थमागत इति ज्ञात्वा कंसहननसामर्थ्यं द्योतयन्निव रथांगेन चक्रेणांकितो यः पाणिस्तेनाभ्युपाकृष्य तमालिंगितवान् ॥ ३६ ॥ पाणी अंजलिरूपेण संहतावेव स्वपाणिना गृहीत्वा ॥ ३७ ॥ मधुपर्क एवार्हणं तस्मिन्वा

रूपम् " इह श्रुतौ, " आकृष्णेन रजसा वर्तमानः " इति श्रुतौ च रवितेजः कृष्णमेव यथा तमोऽपहं तथैवात्राप्यनुसंधेयम् । नेत्रेऽपि कृष्णवर्णैव कनीनिका प्रकाशिकास्तीत्याबालगोपालप्रसिद्धेः ॥ * ॥ ननु दूरतस्तद्विशेषः कथं दृष्टः, उच्यते—महातेजस्वित्वादिति । यतः क्रमशः रात्र्यंशे जातेऽपि विशेषतो विद्योतेतामित्याह--दिश इति । शैलदृष्टांतोऽन्यसवयस्कापेक्षया । तथा च विष्णुपुराणे--'प्रांशुमुत्तुंगबाह्वंसम्' इत्यादि । योजना चेयं यथा मारकतश्शैलो रौप्यश्च कनकाचितौ भवतस्तथा तौ ददर्शेति ॥ ३३ ॥ तूर्णं दर्शनसमकालमेव । अवप्लुत्यावरुह्य ॥ * ॥ अयं भावः--दूरतः प्रथमदर्शने यद्रथान्नावप्लुतस्तत्र स्नेहवैकल्यमेव हेतुः । भूमौ रथे वा स्थितोऽहमित्यनुसंधानाभावात्, तदभिमुखगामितुरगेण रथेन तदीयरूपाकृष्टदृष्टिमनसः स्वस्यानुकूल्यालाभाच्च । अथ निकटागतो यदवप्लुतस्तत्रापि तदेव हेतुः । दूरस्वभावतस्तदात्मन ईषदूर्ध्वस्थितेर्न स्फुटमवगतासीत्, निकटात्तु स्फुटमवगताऽतस्तदनुसंधानादादराकर्षणे जाते इति । तथा पितृव्यताव्यवहारेण योग्यतायामपि प्रणामे यथाविधि तदविधाने हेतुर्दुर्गम्य इति ॥ ३४ ॥ आह्लादोऽत्यानंदः । पुलकै रोमांचैः "पुलको मणिदोषेऽश्मभेदे कृमिविशेषके । रोमांचे हरिताले गंधर्वे हस्त्यन्नपिंडके ॥" इति धरणिः ॥ * ॥ स्नेहविह्वलत्वं सहेतुकमभिव्यञ्जयाति--भगवदिति । पर्याकुले० सम्यक् द्रष्टुमपि नाशकदिति सूचितम् । उत् उच्चैर्गतः कंठस्तद्भवः स्वरो यस्य स उत्कंठस्तस्य भाव औत्कंठ्यं तस्मात्सन्नकंठत्वादित्यर्थः । स्वाख्यानेऽपि नाशकत् किं पुनः प्रसंगापादन इति भावः ॥ ३५ ॥ तम् अक्रूरम् । रथांगपदेन निशातनद्योतकेन बलाधिक्यं द्योतितम् । अभ्युपाकृष्य समीपमानीय । प्रीतस्तद्भक्त्यवबोधनेन ॥ * ॥ भगवानिति सार्वज्ञ्यं परमकारुण्यादिकञ्चाह । अभिप्रेत्य ज्ञात्वा । रथांगेत्युपलक्षणं, तदुक्तं पराशरेण—"सोऽप्येनं ध्वजवज्राब्जकृतचिह्नेन पाणिना । संस्पृश्याकृष्य च प्रीत्या सुगाढं परिषस्वजे ॥ " इति । प्रीतः सन्परिरेभे न तु पितृव्यव्यवहारेण । तदमनने हेतुः—प्रणतवत्सल इति । तदीयदास्यमयभक्तिविशेषवशः 'ये यथा मां प्रपद्यंते' इत्यादेः ॥ ३६ ॥ पाणी अनयदिह प्रकृति भावः ॥ * ॥ सानुज इति अग्रजत्वव्यवहारेणातिथ्यकरणे तस्यैव मुख्यत्वात् । गृहं श्रीनंदगृहम् । श्रीरामस्यापि स्वगृहत्वेनैवाभिमानात् । पाणिना स्वदक्षिणेन । पाणी अंजलिभूतौ । गृहीत्वेति 'गृहीतमंजलौ' इति तन्मनोरथात् ॥ ३७ ॥ "मधुपर्कं घृतक्षौद्रदधिभिः संभवेन्मुने" इत्यादिपुराणात् । तत्तद्द्रव्यमानीय मधुपर्कं कृत्वार्चयदिति भावः । पूर्वव्याख्यानेऽर्हपदं व्यर्थं ज्ञात्वा व्याख्यांतरं कृतवानिति ध्येयम् ॥ * ॥ वरं श्रेष्ठं रत्नादिमयम् । प्रक्षाल्य पादावित्यत्र तदप्रत्याख्याने हेतुः--आदृतः सादरः । तथादरपरिपाटीभिः स्वमाधुरी व्यंजिता यथाऽक्रूरोऽपि तदैश्वर्यादिकं विस्मृत्य तदिच्छानुसारी बभूवेति भावः ॥ ३८ ॥ गां गोशब्दोपलक्षितां वासार्थभूमिम् । पानीयादि दुग्धार्थं धेनुं वा । संवाह्य पादसेवां कृत्वा । बहुगुणं षड्रसयुक्तं पायसं वा । विभुः स्वयं भगवान् । किञ्च,—

१ रामकृष्णयोर्व्यक्तिरिति शेषः ।

तस्मै भुक्तवते प्रीत्या रामः परमधर्मवित् ॥ मुखवासैर्गंधमाल्यैः परां प्रीतिं व्यधात्पुनः॥४०॥ पप्रच्छ सत्कृतं नंदः कथं स्थ निरनुग्रहे ॥ कंसे जीवति दाशार्ह सौनपाला इवावयः ॥ ४१ ॥ योऽवधीत्स्वस्वसुस्तोकान्क्रोशंत्या असुतृप्खलः ॥ किं नु स्वित्तत्प्रजानां वः कुशलं विमृशामहे ॥ ४२ ॥

यदुचितमर्हणं तदाहरत् आनीय समर्पितवानित्यर्थः ॥ ३८ ॥ ३९ ॥ ४० ॥ सत्कृतं संमानितम् । निरनुग्रहे निर्दये कथं केन प्रकारेण स्थ जीवथेत्यर्थः । सौनः पशुघाती स एव पालको येषामवीनां मेषाणां त इव तत्तुल्या इत्यर्थः ॥ ४१ ॥ निरनुग्रहतामाह । योऽवधीदिति । तोकान् तोकानि । असुतृप् असूनेव तर्पयति यः अतः

गोनिवेदनं किमर्थमिति प्रश्ने "न त्वेवामांऽसोऽर्वः स्यात्" इति श्रुतेः तुशब्दः पक्षव्यावृत्तौ । अर्घोऽर्चनममांसः पश्वालंभनवर्जितो नैव भवेत् । अत्र "यद्यालभेद्यद्युत्सिसृक्षेत्" इत्यनेन सूत्रेण गवालंभस्य विकल्पं विधाय "न त्वेवामांऽसोऽर्वः" इत्यनेनार्घमात्रे गवालंभनं नियमेन विधत्ते । तथा तद्वयोः स्मृत्यंतरविरोधेनाप्रामाण्ये प्राप्ते व्यवस्थामाह–'अधियज्ञमधिविवाहं कुरुते' इत्येवं ब्रूयात् । अधियज्ञं यज्ञे । अधिविवाहं विवाहे । कुरुते विदधाति । 'गवालंभनपाप्मानं हिनोमि' इत्यस्यांते इत्येवं ब्रूयात् । अन्यत्र पाप्मा हतः पाप्मानं हन्मीति वा विकल्पः । यद्यप्येवं मधुपर्के "तद्यथैवादो मनुष्यराज आगतेऽस्मिन्वार्हत्युक्षाणं वेहतं वा क्षदंते" इति श्रुतेर्वेहतं वंध्यां गां क्षदंते हिंसंति इति गवालंभो विहितस्तथाप्यस्वर्ग्यत्वाल्लोकविद्विष्टत्वाच्च "मा गामनागामदितिं वधिष्ट" इति श्रुतेः, "अश्वालंभं गवालंभं संन्यासं पलपैतृकम् । देवराच्च सुतोत्पत्तिं कलौ पंच विवर्जयेत् ॥" इति स्मृतेश्च, कलौ न विधेयः । "अत्रोपविष्टं कार्ष्णिं तं शास्त्रतः प्रत्यपूजयत् । पाद्यं निवेद्य प्रथममर्घ्यं गां च न्यवेदयत् ॥ स च तां मंत्रवत्पूजां प्रत्यगृह्णाद्यथाविधि । प्रतिगृह्य तु तां पूजां जनकाद्द्विजसत्तमः ॥ गां चैव समनुज्ञाय" इति मोक्षधर्मेषु भारतोक्तेर्गां धेनुं समनुज्ञाय तृणादनार्थं सम्यगाज्ञां दत्त्वान्यां पूजां प्रत्यगृह्णादिति टीकोक्तेश्च कलौ न विधेयः । "अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नहि" इति याज्ञवल्क्यस्मृतिषु निषेधदर्शनात् । अर्घ्याश्च "षडर्घ्या भवंति" इति श्रुतेः षडेव अर्घ्या अर्घार्हाः । के ते–"आचार्य ऋत्विग्विवाह्यो राजा प्रियः स्नातकः" इति श्रुतेः । आचार्य उपनयपूर्वकं वेदाध्यापकः । ऋत्विक् श्रौतस्मार्तादिकर्मार्थं वृतो ब्रह्मादिः । विवाह्यो वरः । राजा अभिषेकादिगुणवान्प्रजापालनेऽधिकृतः क्षत्रियः । प्रिय उत्कृष्टजातिः समानजातिर्वा सखा । स्नातको ब्रह्मचर्यात्समावृत्तः । आचार्यस्यार्घ्यो नान्यस्य । तथा च मनुः–" तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः । स्रग्विणं तल्प आसीनमर्हयेत्प्रथमं गवा ॥" इति । ब्रह्म वेदः स एव दायस्तं हरतीति तथा । प्रतीति–प्रतिसंवत्सरमागतानाचार्यादीनर्घेण पूजयेयुर्नार्वागित्यलं प्रपंचेन । तथा चाक्रूरस्य प्रियत्वादर्घ्यत्वम् । तत्र गोप्रदर्शनमेव योग्यं न त्वालंभो याज्ञवल्क्येन यज्ञोद्वाहयोरपि कलौ निषिद्धत्वाद्यज्ञविवाहाभ्यामन्यत्राविहितत्वाच्च ॥ * ॥ एवं संवाह्य पादसंवाहनं कृत्वा उभयत्र ण्यंतत्वं वा । **विश्वनाथः**–पाद्याद्युपचारेषु गौरियं दृश्यतां तेष्वतिनयनेंद्रियसुखदानार्थं सुंदरगवोपस्थानमप्येको मंगलोपचारः । मेध्यं द्वादशीपारणाविहितं हविष्य मित्यर्थः । अस्य दिनस्य द्वादशीत्वं परश्वश्चतुर्दश्यां भूतराजपूजायां कंसमारणात् । 'न रात्रौ पारणं कुर्यात्' इति निषेधातिक्रमस्तु कृष्णगृहान्नप्राप्तिलाभात् ॥ ३९ ॥ तस्मै अक्रूराय । मुखवासैः कर्पूरतांबूलैः । पुन मुखवासादिदानांते ॥ * ॥ ० ॥ ४० ॥ इत्यर्थ इति–जीवनस्यैव सत्तापदार्थत्वात्प्राणधारणानुकूलो व्यापारः सत्तेति तल्लक्षणादिति तात्पर्यम् । सूनाऽयुताधिकपशुहननस्थानं, तत्र तिष्ठतीति सौनः । इत्यर्थ इति–सौनपाले जीवति यथा मेषजीवनं दुर्घटं तथा भवतामपीत्यर्थः । "अविर्नाथे रवौ मेषे शैले मूषिककम्बले" इति मेदिनी ॥ * ॥ हे दाशार्हेति कंसस्य यदुकुलद्वेष्टृत्वेन तस्यापि ततो भयं सूचयति । सूनावृत्त्या चरतीति सौनः, सूना पशुमारणं जीवघातस्थानमिति यावत् । एतेन न जाने कस्मिंश्चिद्दिने युष्मानेव हनिष्यतीति भयं सूचितम् ॥ ४१ ॥ यः कंसः । स्वस्वसुर्देवक्याः । 'तोकं पुत्रे सुतायां च' इति मेदिनी । अतोऽसुतर्पकत्वात् । नु स्विदिति निपातद्वयं वितर्के ॥ * ॥ तोकान् बालापत्यानि, तत्रापि स्वसुः, तत्रापि क्रोशंत्या इति निर्दयत्वं महादुष्टत्वं चोक्तम् । तच्च केवलमात्मदेहरक्षार्थमेवेत्याह–असुतृबिति । तदपि तेषु मिथ्यादोषारोपा

इत्थं सूनृतया वाचा नंदेन सुसभाजितः ॥ अक्रूरः परिपृष्टेन जहावध्वपरिश्रमम् ॥४३॥ इति श्रीभागवते महापुराणे दशमस्कंधे पू० अक्रूरागमनं नामा ऽष्टात्रिंशोऽध्यायः ॥ ३८ ॥ ॥ श्रीशुक उवाच ॥ सुखोपविष्टः पर्यंके रामकृष्णोरुमानितः ॥ लेभे मनोरथान्सर्वान्पथि यान्स चकार ह॥१॥ किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने ॥ तथाऽपि तत्परा राजन्नहि वांछंति किंचन॥२॥सायंतनाशनं कृत्वा भगवान्देवकीसुतः ॥ सुहृत्सु वृत्तं कंसस्य पप्रच्छान्यच्चिकीर्षितम् ॥३॥ श्रीभगवानुवाच ॥ तात सौम्यागतः कच्चित्स्वागतं भद्रमस्तु वः ॥ अपि स्वज्ञातिबंधूनामनमीवमनामयम् ॥ ४ ॥

खलः । तस्य कंसस्य प्रजानाम् । हे अक्रूर येषां जीवनमात्रमपि दुर्लभं तेषां वः किं नु कुशलं विमृशामहे विचारयाम इति ॥ ४२ ॥ मधुरया वाचा इत्थं सत्कृतः । तथैव वाचा परिपृष्टेन प्रश्नेन । भावे क्तः । अध्वपरिश्रमं संसारश्रमम् ॥ ४३ ॥ इति श्रीमद्भागवते दशमस्कंधे पूर्वार्धे टीकायामष्टात्रिंशत्तमोऽध्यायः ॥ ३८ ॥ ॥ नवत्रिंशे पुरीं गच्छत्यच्युते गोपिकोक्तयः ॥ अक्रूरेणाथ कालिंद्यां विष्णुलोकस्य दर्शनम् ॥ १ ॥ भक्तानां मनोरथाः सत्या भवंतीति द्योतयन्नाह । सुखोपविष्ट इति । रामकृष्णाभ्यामुरु अधिकं मानितः ॥ १ ॥ २ ॥ ३ ॥ हे तात हे सौम्य स्वागतं यथा तथा आगतः । स्वज्ञातिबंधूनां स्वे सुहृदः ज्ञातयः सपिंडाः बंधवोऽसपिंडाः

दित्याह—खल इति । तस्य प्रजानामधीनानां किं कतमत्कुशलम् । कुशलाभावे निश्चितेऽपि कथं कुशलं पृच्छाम इति भावः ॥ ४२ ॥ ' अध्वा संसारमार्गयोः ' इति धरणिः । भगवद्दर्शनमेव संसारपरिश्रमहानौ हेतुर्न तु नंदप्रश्नादिः । इममेवाध्यायार्थं श्रुतिरप्याह–" देवानां दूतः पुरुधः प्रसूतो नागान्नो वोचतु सर्वताता " इत्यादिः । "सदासुगः पितु मां अस्तु पंथाः" इति । "उद्रायो अस्था सदनं पुरुक्षोः" इत्यक्रूरमनोरथो वर्णितः । अक्रूरागमनमाह—देवानां कंसं हंतुकामानां वागाद्यभिमानिनामग्न्यादीनामहं दूतोऽस्मि कृष्णं प्रति गंतुं प्रस्थितोऽस्मि । पुरुधः बहुप्रकारैः प्रसूतो निसृष्टः कंसेन नोऽस्मान्प्रति अनागान् निष्पापान् सर्वताता सर्वस्य विस्तार कर्ता हरिः वोचतु वदतु । अस्माभिः सह संभाषणं करोतु । तथा पंथा अपि सदा सुगः सुगमः पितुमानन्नवानस्तु मार्गेऽप्यंतरायो मा भूदित्यर्थः । पुरुक्षोर्बहूनां क्षयकर्तुः सदनं गृहमेश्यां प्राश्नुयाम् । उद्राय उत्कटसंपद इति श्रुतिपदानामर्थः ॥ * ॥ अध्वनि मार्गे परितः श्रमः ' न मय्युपैष्यत्यरिबुद्धिमच्युतः ' इति पूर्वोक्तरीत्या श्रीव्रजेश्वरादिमनःप्रसादे संदेहात्मको यो मनःखेदस्तमपि जहावित्यर्थः ॥ ४३ ॥ इति श्रीमद्भागवतभावार्थदीपिका प्रकाशे दशमस्कंधे पूर्वार्धेऽष्टात्रिंशोऽध्यायः ॥ ३८ ॥ अथ गोपिकोक्तेरनंतरम् । दर्शनं कृतामिति शेषः ( १ ) । ' सत्यं मे भक्तचिंतितम् ' इत्याह—भक्तानामिति । मनोरथान् ' गोचारणायानुचरद्वने ' इत्यारम्य ' किं चाग्रजो मावनतम् ' इत्यंतान् यान् । सोऽक्रूरः । चकार दध्यौ, कृञत्र ध्याने करणार्थत्वात् । तदुक्तं यादवेन–" करणं कारणे काले साधनेऽनुव्रतादिषु । स्पष्टाद्युच्चारणाभेदे ध्यानपद्मासनादिषु ॥ " इति ॥ * ॥ लेभे मनोरथान्सर्वान् इति केषांचित्प्राप्तत्वेन वर्णितत्वात् । केषांचिदुपलक्षितत्वेन सूचितत्वात् । केषाञ्चित्प्राप्तव्यत्वेन निश्चितत्वादिति ॥ १ ॥ ननु मुख्यमनोरथो मोक्षः स त्वनेन नो लब्धः संसाराऽनिवृत्तेरित्यत्राह–किमिति : तत्परा मुख्यभागवतास्तत्प्रसादमंतरेणान्यन्नाकांक्षंतीति भावः ॥ * ॥ नन्वन्यान्साष्टर्यादीनमि कथं न प्रार्थितवाँस्तत्राह–किमलभ्यमिति । तत्परास्तद्भक्त्येकनिष्ठाः किञ्चन भक्तिव्यतिरिक्तम् । राजन्निति–श्रीकृष्णभक्त्यां देदीप्यमानत्वात्तुभ्यमिदं श्रावयामीति भावः ॥ २ ॥ सायंतनाशनं रात्रिभोजनम् । "सायं प्रातर्द्विजातीनां भोजनं श्रुतिचोदितम् " इति याज्ञवल्क्योक्तेः । सुहृत्सु वसुदेवादिषु । वृत्तं वर्तनम् ' वृत्तं वर्तनच्छंदसोः ' इति धरणिः ॥ * ॥ सायंतनाशनं कृत्वेति द्वादश्यामपि द्विर्भोजनमुपनयनात्प्राग्न विरुद्धमिति धर्मशास्त्रात् । देवकीसुत इति–तद्भावमात्मनो व्यंजयन्नित्यर्थः । अत एव सुहृत्सु यादवेषु वृत्तिं वर्तमानां चेष्टां तथान्यच्चिकीर्षितमध्यवसीयमाना भाविनीं चेष्टा तामपि पप्रच्छ–' वृत्तम् ' इति पाठेऽतीतां चेष्टां, यद्वान्यत्तन्मारणलक्षणं चिकीर्षितं स्वयं कर्तुमिष्टमित्यर्थः ॥ ३ ॥ स्वागतं शुभागमनम् । सपिंडा।

किं नु नः कुशलं पृच्छे एधमाने कुलामये ॥ कंसे मातुलनाम्न्यंग स्वानां नस्तत्प्रजासु च ॥ ५ ॥ अहो अस्मदभूद्भूरि पित्रोर्वृजिनमार्ययोः ॥ यद्धेतोः पुत्रमरणं यद्धेतोर्बंधनं तयोः ॥ ६ ॥ दिष्ट्याऽद्य दर्शनं स्वानां मह्यं वः सौम्य कांक्षितम् ॥ सञ्जातं वर्ण्यतां तात तवागमनकारणम् ॥ ७ ॥ श्रीशुक उवाच ॥ पृष्टो भगवता सर्वं वर्णयामास माधवः ॥ वैरानुबंधं यदुषु वसुदेववधोद्यमम् ॥ ८ ॥



संबंधिनः तेषामपि कच्चित् किमनमीवमपापमदुःखं सुखमिति यावत् । अनामयमारोग्यम् ॥ ४ ॥ एवं प्रश्नोऽपि मम नातीव संगत इत्याह । किं न्विति । अंग हे अक्रूर पृच्छे पृच्छामि । नोऽस्माकं कुलस्यामये रोगे नो मातुल इति नाम यस्य तस्मिन् । नः स्वानां ज्ञातीनां तस्य प्रजासु च ॥ ५ ॥ अस्मदस्मन्निमित्तम् । वृजिनं दुःखम् । आर्ययोर्निरपराधयोः । यद्धेतोर्योऽहमेव हेतुस्तस्मात् ॥ ६ ॥ हे सौम्य स्वानां वो दर्शनमद्य मम संजातं तद्दिष्ट्या भद्रम् ॥ ७ ॥ माधवो मधोर्वंशजः ॥ ८ ॥

सत्पुरुषावधयः । अनमीवमस्तीति शेषः ॥ * ॥ हे तातेति पितृव्यतया पितृतुल्यत्वम् । हे सौम्येति साधुतया तत्रापि गौरवातिशयो व्यञ्जितः । अत एवागता इति व इति च । क्वचिदेकवचनांतपाठोऽपि । भद्रं क्षेममस्तु युष्माकमित्याशीः प्रश्ने सदाचारानुरोधात् । यद्वा—दैन्यमागतस्य तस्य समाश्वासनार्थम् । अनमीवमनामयमिति द्वाभ्यां क्रमेण सामान्यविशेषदुःखाभावप्रश्नः । स्वागतमिति—किं सुखेनागतमन्यथा वेति संदेहव्याप्तप्रश्नस्तु अतर्कितददागमनादेव ॥ ४ ॥ एवं प्रश्नोऽनमीवादिप्रश्नः । तस्य कंसस्य ॥ * ॥ अनामयस्य विशेषतः प्रश्ने स्वतात्पर्यं दर्शयति—तदनुपहतिरेवानामयतया पृष्टेति भावः । नाममात्रेणैव मातुले वस्तुतस्त्वामये यतोऽसौ नागंतुकः, न त्वेकस्य किन्तु सर्वस्यैव कुलस्येत्यतस्तन्नाशनमेवोचितम् । तथाप्येतावंतं कालं मातुलनाम्नैवोपेक्षितामिति भावः ॥ ५ ॥ प्रश्नोत्तरमनुतप्तः सन्नाह—अस्मदिति । हेतौ पंचमी । 'वृजिनं दुःखपापयोः' इति विश्वः । ''आर्यश्शिष्टे निरागसि । वर्णाश्रमोक्तधर्माग्र्ये श्रेष्ठे वणिक्संहतौ'' इति धरणिः । तयोः पित्रोः ॥ * ॥ ० ॥ ६ ॥ मह्यं मम ॥ * ॥ तदेवं सति यदद्य वो दर्शनं सम्यगैकांतिकं जातं तद्दिष्ट्या । कीदृशानां वः—स्वानां कंसस्य परजातत्वादास्निग्धत्वाच्च भोजराजत्वेऽपि ममैव ज्ञातीनां मदीयधनरूपाणां वेत्यर्थः । सर्वनामत्वाभावस्तु 'स्वोऽर्थज्ञात्यन्यत्राच्वपि' इत्युक्तेः । कीदृशं दर्शनं—कांक्षितम् । ततस्तावत्प्रियत्वेनैव यद्येकस्याप्यात्मीयस्य तत्रत्यस्य दर्शनं भवेत्तदा तन्मारणयुक्तिः सिद्ध्येदित्यभिप्रायेणेति भावः । अत्रैतावती विवक्षा—अत्रत्या मातापित्रादयस्तत्रत्येभ्योऽपि परमस्निग्धा इति तदनुमतिं विना तत्र गंतुं न शक्नोमि । तथाऽप्रकटेष्वपि तेषु महापराधेषूपेक्षितस्य मातुलनाम्नस्तस्य सहसा जिघांसयाभिगमने तमेव कारणीकर्तुमिच्छामि । तस्मादपि तादृशोऽपेक्षितः कश्चिदायाति ततस्तदनुरोधेन तेषामनुमतिं लेभे, तेन सह युक्त्वा च तस्यैव तत्कारणमुद्भावयामि, तदैव तन्मारणं नीतिपदवीमारोहतीति । अतो हे तात तवागमनकारणं तावद्वर्ण्यताम् । तस्मिञ्ज्ञाते सत्यायतिचिंतां करिष्याम इति भावः ॥ ७ ॥ माधवोऽक्रूरः । वैरस्य प्रकृतस्यानुबन्धमनुवर्तनं, वैरेणानुबंधं सततदोषभावं वा ''अनुबंधो दोषभावे प्रकृत्यादिविनश्वरे । मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ॥'' इति यादवः ॥ * ॥ भगवते[3] भगवंतं ज्ञापयितुमित्यर्थः ॥ ८ ॥

१ स्वशब्दस्येत्यादिः । २ ज्ञातिवाचित्वेनाऽज्ञातिधनाख्यायामिति पर्युदासात् । ३ 'भगवते सर्वम्' इति पाठाभिप्रायेण ।

यत्संदेशो यदर्थं वा दूतः संप्रेषितः स्वयम् ॥ यदुक्तं नारदेनास्य स्वजन्मानकदुंदुभेः॥९॥श्रुत्वाऽक्रूरवचः कृष्णो बलश्च परवीरहा ॥ प्रहस्य नंदं पितरं राज्ञाऽऽदिष्टं विजज्ञतुः ॥ १० ॥ गोपान्समादिशत्सोऽपि गृह्यतां सर्वगोरसः ॥ उपायनानि गृह्णीध्वं युज्यंतां शकटानि च ॥ ११ ॥

यो धनुर्मखच्छद्मा संदेशो यस्य । यदर्थं चाणूरादिभिर्घातनार्थं स्वयं संप्रेषितः । अस्य कृष्णस्य पुरतो वर्णयामास । स्वजन्म कृष्णजन्म । आनकदुंदुभेः सकाशात् ॥ ॥ ९ ॥ विजज्ञतुर्विशेषेण ज्ञापयामासतुः ॥ १० ॥ सोऽपि नंदोऽपि गोपान्समादिशत् । तदेव दर्शयति गृह्यतामित्यादिना । गोरसः क्षीरादिः उपायनानि राज्ञे निवेदनी

स्वयम् अक्रूरः । प्रेषितः कंसेनेति शेषः । किं तदुक्तं तत्राह—स्वजन्मेति ॥ * ॥ यत्संदेशः स्वयमात्मनाऽक्रूरो दूतस्तेन प्रेषितः यदर्थं वा तत्संदेशं तमर्थञ्च वर्णयामासेति योजना । संप्रति वैरसातत्यादौ हेतुः—यदुक्त मिति ॥ ९ ॥ परेषु शत्रुषु वीरः कंसस्तद्धंता, परश्चासौ वीरश्चेति वा ॥ * ॥ वैशंपायनोक्तमपि वाक्यजातमत्रानुसंधेयम्—“मथुरां स्वपुरीं तात यास्यामः स्वसुखाय वै । गमिष्यंति व्रजाः सर्वे गोपालाः सपरि ग्रहाः ॥ कंसाज्ञया समुचितं करमादाय वार्षिकम् । समृद्धस्तस्य कंसस्य भविष्यति धनुर्महः ॥ तद्द्रक्ष्यथः समृद्धं च स्वजनैश्च समेष्यथः । पितरं वसुदेवञ्च सततं दुःखभाजनम् ॥ दीनं पुत्रवधश्रांतं युवामथ समेष्यथः । सततं पीड्यमानञ्च कंसेनाश्रुतबुद्धिना ॥ देशांते शोषितं वृद्धं दुःखैः शिथिलतां गतम् । कंसस्य भयसंत्रस्तं भवद्भ्यां च विना कृतम् ॥ दह्यमानं दिवारात्रौ सोत्कंठेनांतरात्मना । तां च द्रक्ष्यसि गोविंद पुत्रैरमृदित स्तनीम् ॥ देवकीं देवसंकाशां सीदंतीं विगतप्रभाम् । पुत्रशोकेन शुष्यंतीं त्वद्दर्शनपरायणाम् ॥ वियोगशोकसंतप्तां विवत्सामिव सौरभीम् । उपप्लुतेक्षणां दीनां नित्यं मलिनवाससम् ॥ स्वर्भा नुवदनग्रस्तां शशांकस्य प्रभामिव । त्वद्दर्शनपरां नित्यं तवागमनकांक्षिणीम् ॥ त्वत्प्रवृत्तेन शोकेन सीदंतीं वै तपस्विनीम् । त्वत्प्रभावेष्वकुशलां त्वया बाल्ये वियोजिताम् । अरूपज्ञां तव विभो वक्त्रस्यास्येंदुवर्चसः ॥ यदि त्वां जनयित्वा सा देवकी परितप्यते । अपत्यार्थो नु कस्तस्या वरमेवानपत्यता ॥ त्वं तु शक्रसमो यस्याः पुत्रः स्वसदृशो गुणैः । परेषामप्यभयदो न सा शोचितुमर्हति ॥ वृद्धौ तवाद्य पितरौ परभृत्यत्वमागतौ । भर्त्स्येते त्वत्कृते तेन कंसेनाशुभबुद्धिना ॥ यदि ते देवकी मान्या पृथिवी वात्मधारिणी । तां शोकसलिले मग्नामुत्तारयितुमर्हसि ॥ तं च वृद्धं प्रियसुतं वसुदेवं सुखोचितम् । पुत्रयोगेन संयोज्य कृष्ण धर्ममवाप्स्यसि ॥ यथा नागः सुदुर्वृत्तो दमितो यमुनाह्रदे । विमूलश्च कृतः शैलो यथा वै भूधरस्त्वया ॥ दर्पोत्सिक्तश्च बलवानरिष्टोऽपि निपातितः । परप्राणहरः केशी दुष्टात्मा च हयो हतः ॥ एतेनैव प्रयत्नेन वृद्धावुद्धृत्य दुःखितौ । यथा धर्ममवाप्नोषि तत्कृष्ण परिचिंत्यताम् ॥ निर्भर्त्स्यमानो यैर्दृष्टः पिता ते कंससंसदि । ते सर्वे चक्षुर श्रुभिर्नेत्रैरभ्युत्थिता भृशम् ॥ गर्भावकृंतनादीनि दुःखानि च बहूनि च । माता ते देवकी कृष्ण कंसस्य सहते वशे ॥ ” इत्यादि । प्रहस्येति—स्वमृत्युमपि निमंत्र्य स्वान्तिकमानेतुमुपक्रमते युष्माकं राजेत्यर्थद्योतकोऽयं प्रहासः । राजादिष्टं धनुर्मखनिमंत्रणं विज्ञापयामासतुर्न तु रहस्यम् । विज्ञापने हेतुः—परवीरहेति । पर उत्कृष्टो वीरः कंसस्तद्धननार्थमेवेति भावः ॥ १० ॥ सर्वे गोरसाः क्षीराज्यदध्यादिरूपा यत्र समूहे स तथा यद्वा—सर्वगः सर्वत्रगः रसः सुवर्णादिः “रसो रागे विषे वीर्ये तिक्तादौ पारदे द्रवे । रेतस्यास्वादने हेम्नि शृंगारादौ ध्वनावपि ॥ ” इति यादवः । यद्वा—सर्वगः सर्वव्यापी रसः कृष्णः “ रसो वै सः ” “ स ह्येवायं लब्ध्वाऽऽनन्दीभवति ” इति श्रुतेः कंसेन गृह्यतामस्मद्देशाऽधीशत्वाद्दुष्कर्मत्वेऽपि तस्य मोक्षो भवत्वित्यभिप्रायः । उत्तमवस्तूनि रत्नादिरूपाणि नवनीतादीनि वा ॥ * ॥ सोऽपि स्वपुत्रपालनव्यग्रत्वेन प्रसिद्धः श्रीनंदोऽपी

यास्यामः श्वो मधुपुरीं दास्यामो नृपते रसान् ॥ द्रक्ष्यामः सुमहत्पर्व यांति जानपदाः किल ॥ एवमाघोषयत्क्षत्ता नंदगोपः स्वगोकुले ॥ १२ ॥ गोप्यस्तास्तदुपश्रुत्य बभूवुर्व्यथिता भृशम् ॥ रामकृष्णौ पुरीं नेतुमक्रूरं व्रजमागतम् ॥ १३ ॥ काश्चित्तत्कृतहृत्तापश्वासम्लानमुखश्रियः ॥ स्रंसद्दुकूलवलयकेशग्रन्थ्यश्च काश्चन ॥ १४ ॥ अन्याश्च तदनुध्याननिवृत्ताशेषवृत्तयः ॥ नाभ्यजानन्निमं लोकमात्मलोकं गता इव ॥ १५ ॥

यान्युत्तमवस्तूनि ॥ ११ ॥ रसान्घृतादीन् । शब्दच्छलेनेदं सूचयति । अचिकित्स्यस्य रोगस्य चिकित्सार्थं रसान्दास्याम इति । क्षत्ता व्रजरक्षाधिकृतेन । आघोषयत्सर्वतो घोषितवान् ॥ १२ ॥ ताः कृष्णैकजीवना गोप्यस्तत्तदाऽक्रूरमागतमुपश्रुत्येति ॥ १३ ॥ व्यथालिंगान्याह पंचभिः। काश्चिदिति । तेन श्रवणेन कृतो यो हृत्तापस्तेन यः श्वासस्तेन म्लाना मुखश्रीर्यासां ता बभूवुरिति । दुकूलानि च वलयानि च केशग्रंथयश्च स्रंसंतो दुकूलादयो यासां तथाभूताः काश्चन बभूवुरित्यर्थः ॥ १४ ॥ तस्य

त्यर्थः । इंद्रमखभंगवृत्तस्यैव विज्ञापनमोहनतया परवशीभूयेति भावः । एवं न कस्यापि तत्र विप्रतिपत्तिर्जातेति ज्ञेयम् ॥ ११ ॥ शब्दच्छलेन श्लेषेण । एकशब्दस्यानेकार्थताविशिष्टस्य प्रकृतभिन्नाभिन्नार्थसूचनं श्लेषः । अचिकित्स्यस्यानिवर्त्यस्य रोगस्य कंसस्य । तत्रैव भगवताप्यामयशब्दः प्रयुक्तः ‘ एधमाने कुलामये ’ इति । चिकित्सार्थं निवृत्त्यर्थम् । रसान् विषवन्मारकस्वभावाञ्श्रीकृष्णबलदेवरूपान् । बहुत्वं पूजायाम् । पर्वोत्सवम् “ पक्षसंधावुत्सवे च ग्रंथौ पर्व विदुर्बुधाः ” इति दत्तः । जानपदा लोकाः “ भवेज्जनपदो जानपदोऽपि जनदेशयोः ” इति मेदिनी । “ क्षत्ता शूद्राक्षत्रियजे प्रतीहारे च सारथौ । भुजिष्यातनयेऽपि स्यान्नियुक्ते वेधसि पुमान् ॥ ” इति च ॥ * ॥ जानपदा इति–सर्वजनपदवासिनो यांतीत्यतोऽस्माकमेव तत्र का विप्रतिपत्तिरिति भावः ॥ १२ ॥ व्यथिता जातपीडाः ॥ * ॥ उपश्रुत्य कस्यापि कुतश्चिन्मुखाच्छ्रुत्वा साक्षात्तासु कस्यापि कथनाशक्तेः । ताः स्वभावसिद्धप्रेयसीभावाः । तत् आघोषणमात्रं श्रुत्वा भृशं व्यथिताः । अन्यास्तु साधनसिद्धप्रेयसीभावास्तौ नेतुमागतमक्रूरमुपश्रुत्य भृशं व्यथिता इति योज्यम् । किन्तु--तासामपीयं व्यथा तद्विरहभीत्यैव जाता तत्र गतस्य तस्यानिष्टाशंकया तु न जाता ‘ तासां मुकुंद–’ इत्यादिवक्ष्यमाणात् । तद्गमने परमधीरश्रीमन्नंदोपनंदादिसर्ववृद्धवृंदसंमतिरेव तत्र कारणमन्यथा सद्य एव तासामंतर्द्धानं स्यादिति लीलाशक्तिरेव तादृशस्फूर्तिमरौत्सीदिति ज्ञेयम् । विरहभीतिरपि न सार्वकालिकी तत्रासार्वकालिकस्थितिनिश्चयेन । नंदसूनुरिति–श्रीमन्नंदसूनुत्वेनैव निश्चेष्यमाणत्वात् । ‘ तासां मुकुंद--’ इत्यादिकस्याशंकामयमात्रत्वात् । अन्यथा तथापि प्रागुक्तमेव स्यात् । आशामात्राजीवातुत्वात्प्रोषितप्रेयसीनामेवमपि तादृश्यवस्था परमानुरागस्वभावेनैव ज्ञेया ॥ १३ ॥ ‘ दुकूलं श्लक्ष्णवस्त्रे स्यात्क्षौमे च ’ इति मेदिनी ॥ * ॥ तत्र रासदर्शितप्रेमतारतम्येनासामुत्तरोत्तरमवस्थावैशिष्ट्यमाह–काश्चिदिति त्रिभिः । यद्यप्यत्र पूर्वोक्ताया व्यथाया लिंगवर्णनमिति तदुपश्रुतिकृतत्वं स्वत एव लभ्यते तथापि तत्कृतेत्यधिकप्रयोगस्तदवस्थायाः तदुपश्रवणस्य स्वरूपमात्रेणैव न तु ‘ अन्याश्च तदनुध्याने ’ इत्याद्यर्थानुसंधानार्थकाललवविलंबजाततदनुध्यानादिकार्यद्वारेति बोधयति । स्रंसदित्यर्धे तु कार्यादिनिर्देशात्तासहयोगाच्च तत्कृतेत्येवान्वितं गम्यम् । श्रवणमात्रजन्यत्वादत्र च तत्र चार्थसंधानानंतराण्यपि कैमुत्येन गम्यानीति । एवं सति प्रथमद्वयमुत्तमं प्रायो नित्यसिद्धं च, स्वाभाविकहार्दात् । उत्तरं कनिष्ठं प्रायः साधनसिद्धं च, तादृशत्वाभावात् । अत्र च प्रथमे द्वये उत्तरोत्तरं श्रैष्ठ्यमुत्तरे तु न्यूनत्वमिति ज्ञेयम् । अथ क्रमेण व्याख्यायते--तत्रैकासां भद्रादीनां सहसा श्वासवैवर्ण्ये प्राह--काश्चिदित्यर्धेन । श्वासेन म्लानाः सद्यो विवर्णीभूता मुखश्रियस्तिलकादयोऽपि किं पुनर्वर्णा यासां ताः । तत्कृतहृत्तापादिपरपरत्रापि गम्यं पूर्वपूर्वावस्थाश्च । अथ कासांचिच्छ्यामलादीनां सहसा कार्श्यमप्याह स्रंसदिति ॥ १४ ॥ आत्मलोकं मोक्षम् ॥ * ॥ चंद्रावल्यादीनां प्रणयमप्याह–

स्मरंत्यश्चापराः शौरेरनुरागस्मितेरिताः ॥ हृदिस्पृशश्चित्रपदा गिरः संमुमुहुः स्त्रियः ॥ १६ ॥ गतिं सुललितां चेष्टां स्निग्धहासावलोकनम् ॥ शोकापहानि नर्माणि प्रोद्दामचरितानि च ॥ १७ ॥ चिंतयंत्यो मुकुंदस्य लीलाविरहकातराः ॥ समेताः संघशः प्रोचुरश्रुमुख्योऽच्युताशयाः ॥ १८ ॥ गोप्य ऊचुः ॥ अहो विधातस्तव न क्वचिद्दया संयोज्य मैत्र्या प्रणयेन देहिनः ॥ तांश्चाकृतार्थान्वियुनंक्ष्यपार्थकं विक्रीडितं तेऽर्भकचेष्टितं यथा ॥ १९ ॥

श्रीकृष्णस्यानुध्यानेन निवृत्ता अशेषाश्चक्षुरादिवृत्तयो यासां ता इमं लोकं देहमपि न जानंति स्म मुक्ता इवेति ॥ १५ ॥ अपराः स्त्रियः शौरेर्गिरः स्मरंत्यः संमुमुहुः । कथंभूताः । अनुरागेण यत्स्मितं तेनेरिताः । हृदि स्पृशंतीति हृदिस्पृशो मनोज्ञाः । चित्राणि पदानि यासु ताः ॥ १६ ॥ १७ ॥ विरहेण कातरा विह्वलाः । अच्युते आशयश्चित्तं यासां ताः ॥ १८ ॥ कृष्णसंगतिं विधाय विघट्टयतीति विधातारं प्रत्येकमाक्रोशंत्य आहुः । अहो इति । मैत्र्या हिताचरणेन प्रणयेन स्नेहेन च

तस्यानुसंधानेन ध्यानधारया निवृत्ता अशेषाश्चक्षुरादिवृत्तयो यासां ताः । यद्वा—श्रीकृष्णस्य गमनेऽनुसंधानम्—कथमसौ यास्यति, कथं वा तत्र स्थास्यति, कथं च वयं जीवेम इत्यादिलक्षणा निरंतराचिन्ता, तेन निवृत्ताशेषवृत्तयः । इमं लोकं देहदैहिकपदार्थं सर्वमेव आत्मलोकं परमात्मस्वरूपं प्राप्ता इवेति देहाद्यज्ञानमात्रे दृष्टान्तः, न त्वास्वादांशेऽपि, काचकाञ्चनयोरिव ब्रह्मास्वादप्रेमास्वादयोस्तुल्यत्वानौचित्यात् ॥ १९ ॥ ईरिताः वर्णिताः ॥ * ॥ श्रीराधादीनां प्रणयातिशयमाह--स्मरन्त्य इति । शौरेरिति—संप्रति शूरापत्यताभिमता यो गंतुकामस्तस्येति तासां पक्षपातिनः श्रीशुकस्य प्रणयेर्ष्योक्तिः । अनुरागव्यञ्जकं यत्स्मितं तेनेरिताः । चित्राणि विस्मयजनकानि पदानि यासु ता गिरः 'न पारयेऽहं निरवद्यसंयुजाम्' इत्यादिवाक्यानि स्मरन्त्यः सम्यगेव मुमुहुः । पूर्वास्तद्रूपस्यैव ध्यानधारयैव मुमुहुः, एतास्तु तद्वाचोऽपि स्मरणेनापि सम्यगेव मुमुहुरिति पूर्वतः प्रेमवैशिष्ट्यवत्यो ज्ञेयाः ॥ १६ ॥ गतिं यात्राम् । चेष्टामंगादिचालनरूपाम् । नर्माणि हास्यवचांसि ॥ * ॥ एवं मूर्छादिसंचारिग्रस्ता एव रात्रिं गमयित्वा पुनः किं संजातमिति शंकासंचारिसंस्कारप्राबल्येन लब्धबाह्यानुसंधानाः परमोत्कण्ठया प्रातर्व्रजराजपुरद्वार एवागता भाविविरहवत्त्वेन साम्यात्सर्वाः संहता विलेपुरित्याह—गतिमिति ॥ १७ ॥ संघशः संघीभूय । समेता युताः ॥ * ॥ निमेषविरहतोऽपि भीताः संप्रति भात्रिना महाविरहेण विह्वलाः संघशः समेता यूथैर्यूथैः संगता मिलिताः ॥ १८ ॥ विघट्टयति वियोजयति । बालिशोऽज्ञो बालो वा 'बालिशश्च शिशौ मूर्खे' इति मेदिनी । अपार्थकं निष्फलम् । कथम्—यथेति । अर्भकचेष्टितं बालाङ्गचालनादि ॥ * ॥ श्रीकृष्णस्य संगताविव विच्छेदेऽपि कमप्यन्यं हेतुमनालोचयन्त्यो विधातारमेव तत्र हेतुं मन्वानास्तमेवाक्रोशयन्त्य आहुः—अहो इति त्रिभिः । अहो खेदे । हे विधातरिति—त्वमेव सर्वं विदधासीति भावः । अतः सर्वेष्वपि जीवेषु दयां कर्तुमर्हस्यपि तव कस्मिंश्चिद्दया नास्ति, विधातृत्वमेव दर्शयन्त्यो निर्दयत्वं च दर्शयन्ति—संयोज्येत्यादिना । देहिनो देहाभिमानवशेनेतस्ततो वर्तमानानपि जीवान् अकस्मादन्योऽन्यं मैत्र्यापि केवलं तथा प्रणयेन च संयोज्येति विधातृत्वं दर्शितम् । एवं श्रीकृष्णसंगतौ निजगुणादिराहित्यं सूचितम् । अप्यर्थे चकारः । संयोज्यापि अकृतार्थानेव वियोजयसि । विविधचेष्टितमपार्थकम् अपगतावर्थौ हेतुप्रयोजने यस्येति । केन हेतुना किमर्थं वा संयोजयसि, अकृतार्थानपि पश्चात्केन हेतुना किमर्थं वा वियोजयसीति नावगच्छाम इत्यर्थः । हेतौ प्रयोजने च सति संयोजितानामकस्माद्वियोजनमयुक्तमेवेति भावः । अपार्थकत्वे दृष्टान्तः—अर्भकेति । तच्चेष्टितं यथा हेतुं प्रयोजनं च विना केवलं मौढ्यादेव तद्वदित्यर्थः । अन्यत्तैः । तत्र हिताचर

यस्त्वं प्रदर्श्यासितकुंतलावृतं मुकुंदवक्रं सुकपोलमुन्नसम् ॥ शोकापनोदस्मितलेशसुंदरं करोषि पारोक्ष्यमसाधु ते कृतम् ॥ २० ॥ क्रूरस्त्वमक्रूरसमाख्यया स्म नश्चक्षुर्हि दत्तं हरसे बताज्ञवत् ॥ येनैकदेशेऽखिलसर्गसौष्ठवं त्वदीयमद्राक्ष्म वयं मधुद्विषः ॥ २१ ॥

अकृतार्थानप्राप्तभोगानपि तान्वियुनंक्षि वियोजयसि तस्मान्न तव दया । बालिशोऽपि त्वमित्याहुः । अपार्थकमिति ॥ १९ ॥ विगर्हितं तवेदं कर्मेत्याहुः । यस्त्वमिति । शोकमपनुदतीति शोकापनोदः स चासौ स्मितलेशश्च गूढहासस्तेन सुंदरं मुकुंदस्य वक्रं सकृत्प्रदर्श्य पुनस्तस्य पारोक्ष्यमदृश्यतां करोष्यतस्तव कृतं कर्मासाधु निंद्यमित्यर्थः । ॥ २० ॥ किं च दत्तापहारित्वेनातिक्रूरत्वमित्याहुः । क्रूरस्त्वमिति । नन्वक्रूरो हरति नाहमिति चेदत आहुः । अक्रूरसमाख्ययेति । न ह्येवं कर्तुमन्यः प्रभवत्यतो नामांतरेण स्म ध्रुवं त्वमेवागतोऽसि । कृष्णं हरामि न युष्मच्चक्षुरिति चेन्न । येन त्वद्दत्तेन चक्षुषा मधुद्विष एकदेशे नेत्रवक्रादौ त्वदीयं समग्रं सृष्टिनैपुणमद्राक्ष्म दृष्टवत्यो

णेन तत्कृतप्रीत्या स्नेहेन संबंधाविकृतप्रीत्येत्यर्थः । यद्वा—स्वयं मैत्र्यापि लक्षितः सन्प्रणयेन मिथो विलब्धप्रेम्णा सह संयोज्येति योज्यम् ॥ १९ ॥ निंद्यत्वमाह—विगर्हितामिति । अदृश्यतां चक्षुरविषयताम् । इत्यर्थ इति—न ह्येतत्साध्वाचार इति भावः ॥ * ॥ भवतु वा सामान्यतस्तव तादृशं चरितम्, विशेषतस्त्विदं गर्हितमित्याहुः—यस्त्वमिति । प्रकर्षेण रसानुभवपूर्वकं दर्शयित्वाऽसितैः कुंतलैः कुटिलालकैरावृतं श्रीललाटोपरिभागे भ्रमरवन्निपातेन व्याप्तमित्यूर्ध्वभागस्य शोभा, सुकपोलमिति पार्श्वद्वयस्य, उन्नसमिति मध्यस्य, शोकेति मधुरस्मितेन विकसदधरबिम्बं तदारुण्यच्छुरितश्रीमद्दन्तपंक्तिमाधुर्याभ्यामंतर्भागस्यापि सूचिता । शोकश्चार्तानां सर्वेषाम् । तत ईदृशस्य तद्वक्रस्य परोक्षताचरणात्तव कर्मासाध्वेव । अत एव श्रीविष्णुपुराणे—"सारं समस्तगोष्ठस्य विधिना हरता हरिम् । प्रहृतं गोपयोषित्सु निर्घृणेन दुरात्मना ॥" इति । अन्यत्तैः । यद्वा—मुकुंदस्य सर्वदुःखमोचकत्वेन तन्नामधेयस्य वक्रं प्रकर्षेण दर्शयित्वा पारोक्ष्यमदृश्यत्वं करोषि नयसि, तस्य ते तव कृतमसाध्वेव । चातुर्वर्ण्यादित्वात् ष्यञ् । आस्तां तावन्मैत्रीपूर्वकतदीयसंयोगस्य वियोजनं नाम तद्दर्शनमात्रस्यापि गर्हितं किमुत तत्प्रकृष्टदर्शनस्येत्यर्थः । प्रकर्षमेव दर्शयन्ति—असितेत्यादिविशेषणैः ॥ २० ॥ अन्यततोऽप्यधिकमाह—किञ्चेति । स्वस्य क्रूरतामपानुदन्नाशंकते—नन्विति । यतोऽन्योऽप्रभुरतो हेतोः । नामांतरेणाक्रूरनाम्ना । भंग्यन्तरेणाह—कृष्णमिति । तत्राहुर्नेति । अत्र ब्रह्मण आशयं प्रकटयन्त्य आहुः—अयं भावः । रहस्यं गुह्यं गोपीभिरभिज्ञातमित्यमर्षेण कोपेन । इवशब्देन वस्तुतः कोपाभावं बोययति निजकल्पितत्वात् । "क्रूरो भयंकरे सौरे नृशंसे कठिनोष्णयोः" इति हलायुधः ॥ * ॥ हि एव, त्वमेव करोषि । बत, खेदे । तथा श्रीविष्णुपुराणेऽपि—"अहो गोपीजनस्यास्य दर्शयित्वा महानिधिम् । उत्कृत्तान्यद्य नेत्राणि विधात्राऽकरुणात्मना ॥" इति । यथाऽज्ञः पापापापमजानञ्जनो दत्तमपि हरति तद्वदित्यर्थः । किन्तु त्वं सर्वज्ञोऽप्यज्ञायस इति परमदुःखदानमात्रतात्पर्यत्वेन ततोऽपि पापवैशिष्ट्यमिति भावः । कथं चक्षुर्हृतं, तत्राह—येनेति । त्वदीयमखिलसर्गसौष्ठवं मधुद्विष एकदेशेऽद्राक्ष्मेति, तदीयनत्रेवक्रादिसौन्दर्यामृतार्णवकलांशांशांश एव पद्मचंद्रादिसौंदर्यं पर्याप्तमपश्यामेत्यर्थः । अतोऽनभिरुचेरन्यत्राप्रवर्तमानस्य तन्मात्रविषयस्य चक्षुषस्तद्धरणेन चक्षुष एव हरणम् । तत्र मधुद्विष इति योग्यपदोपादानम् । 'नारायणसमो गुणैः' इति वाक्यात्सर्वातिशयगुणशालित्वेनैव तत्पर्यायस्येत्यर्थः । यद्वा—मध्विव मधु तदितरसर्वप्राकृताऽप्राकृतव्यञ्जनीयं तस्मै द्वेष्टि तदीयानां तद्धरतीति तस्येति । यद्वा—मधुपुरीपतित्वात्तत्समशीलत्वाच्च कंस एव मधु तद्विष इति तं हत्वा तद्राज्ये लब्धे पुनरत्रागमनं दुर्लभमिति

१ अज्ञ इवाचरसीति ।

न नंदसूनुः क्षणभंगसौहृदः समीक्षते नः स्वकृतातुरा बत ॥ विहाय गेहान्स्वजनान्सुतान्पतींस्तद्दास्यमद्धोपगता नवप्रियः ॥ २२ ॥ सुखं प्रभाता रजनीयमाशिषः सत्या बभूवुः पुरयोषितां ध्रुवम् ॥ याः संप्रविष्टस्य मुखं व्रजस्पतेः पास्यंत्यपांगोत्कलितस्मितासवम् ॥ २३ ॥ तासां मुकुंदो मधुमंजुभाषितैर्गृहीताचित्तः परवान्मनस्व्यपि ॥ कथं पुनर्नः प्रतियास्यतेऽबला ग्राम्याः सलज्जास्मितविभ्रमैर्भ्रमन् ॥ २४ ॥

वयं तच्चक्षुः । अयं भावः । मम सर्वं रहस्यमाभिर्ज्ञातमित्यमर्षेणेव कृष्णं वियोजयन्नस्मानंधीकरोषीति ॥ २१ ॥ विधातारं विहाय परस्परमूचुः । न नंदसूनुरिति । बतेति खेदे । क्षणभंगमस्थिरं सौहृदं यस्य सः । गृहादीन्विहायाद्धा साक्षात्तस्यैव दास्यमुपगताः स्वकृतातुरास्तत्कृतेनैव स्मितादिना परवशा अपि नोऽस्मान्न समीक्षते । नवंनवं प्रियं यस्य सः । अत एनं निवारयाम इति भावः ॥ २२ ॥ सेर्ष्यमूचुः । सुखं प्रभातेति । व्रजस्पतेः श्रीकृष्णस्य मुखं पास्यंत्यादरेण द्रक्ष्यंति । कथंभूतम् । अपांगेन नेत्रप्रांतेनोत्कलितमुज्जृंभितं स्मितमेवासवो रसो यस्मिंस्तत् । यद्वा अपांगोत्कलितस्मितेनासवरूपं यन्मुखम् । ततश्च पानं मुख्यमेव संभावयंति ॥ ॥ २३ ॥ ननु द्वित्राणि दिनानि तथा भवतु नाम तथाप्यस्मत्स्नेहाकृष्टः पित्रादिभिश्च परावर्तित आगमिष्यतीत्याशंक्याहुः । हे अबलास्तासां मधुवन्मंजुभिर्भाषितैर्व

भावः ॥ २१ ॥ कृष्णं कटाक्षीकृत्यान्योऽन्यमाहुः—नेति । नंदसूनुरिति साभिप्रायोक्तिः । अतो नवप्रियत्वात् । इति भाव इति—नूतनस्त्रीसंगरसिकः पुनरस्मान्प्रागनुभूताः प्रति नागमिष्यतीत्याशयः ॥ * ॥ उदासीनं विधातारं किं निंदामः, परम् आत्मीयोऽस्मज्जीवनैकहेतुः श्रीनंदसूनुरेव तथाविध इत्याहुः—नेति । नंदसूनुर्बल्लवेंद्रकुमारत्वेनास्मत्संमीक्षणयोग्यः किं पुनरस्माभिस्तादृशप्रेमबंधेन सोऽपीत्यर्थः । न समीक्षते नापेक्षते अपृष्ट्वैव दूरप्रस्थानोद्यमात् । समीक्षिष्यते इति च व्याख्यानेऽपि संप्रत्यपेक्षाया दर्शनादिति भावः । अतो दृढसौहृदत्वेन ज्ञातत्वेऽपि क्षणभंगसौहृद एवासौ नः समीक्षायाम् । हेतुगर्भविशेषमाहुः—विहायेति । गेहादीनां यथोत्तरं श्रैष्ठ्यमूह्यम् । अद्धा साक्षात्स्वदेहार्पणादिना दासीत्वमुप सामीप्येन प्राप्ता इति दास्यविशेषः सूचितः । तदुपगतावेव हेतुः—स्वकृतातुरा इति । तैर्व्याख्यातम् । यद्वा—संप्रति समीक्षायां विशेषतो हेत्वन्तरमाहुः—स्वकृतेन त्यागेनातुरा रोगेणेव पीडिताः नः केवलं न समीक्षते, किञ्च नवप्रियोऽसौ सर्वान्व्रजजनान्विहायाक्रूरेण सममात्मीयतां व्यज्य गमनदर्शनान्नवप्रियोऽसौ संप्रति माथुरीभिरेव प्रीतिं विधास्यतीत्यर्थः ॥ २२ ॥ सेर्ष्यं क्षान्तिरहितम् । व्रजस्पतेरिह पतिशब्दस्य छांदसः सुट् । मुखस्य पानासंभवादर्थान्तरमाह—यद्वेति । रूपकेण मुखमासवीक्रियते, ततश्च मुखस्यासवरूपत्वादासवस्य पानं संभवत्येव । “ आसवोऽमृतमद्ययोः ” इति धरणिः ॥ * ॥ हंतहंत किमद्भुतमस्माकं दुरदृष्टं, मथुरांगनानां शुभादृष्टं युगपदेव फलति स्मेत्याहुः—सुखमिति । इयं रजनी पुरयोषितां सुप्रभाता, व्रजयोषितां तु दुष्प्रभाता, तासामाशिषः विप्रादिदत्ता दीर्घमनोरथा वा सत्याः सफलाः, अस्माकं तु नष्टा बभूवुः । व्रजस्पतेः कृष्णस्य । सुडार्षः । व्रजजनानामेव दृश्यमिति भावः । अपांगे नेत्रान्ते उत्कलितस्मितम् उत्कृष्टा--रसव्याञ्जिकाः कलाः संजाता यस्य तदुत्कलितं स्मितमेव रहस्येंगितम् आसवो मादको रसो यत्र तन्मुखं पास्यन्ति स्वापाङ्गरसनाभिरास्वादयिष्यान्ति । कुलधर्मलज्जाभयादिकं सहसैव त्यक्त्वाऽस्येंगितमंगीकरिष्यन्तीत्यर्थः । ततश्च समुचितसमये सम्यक्प्रकारेणान्यजनालक्षिततया मुखमपि साक्षात्पास्यन्ति । तदुक्तं विष्णुपुराणे—“ सुप्रभाताऽद्य रजनी मथुरावासियोषिताम् । पास्यन्त्यच्युतवक्त्राब्जं यासां वै नेत्रपंक्तयः ॥ ” इति ॥ २३ ॥ अन्योऽन्यमाशंक्य समादधत इत्याहुः—नन्विति । तथा भवतु पुरांगनानां सुप्रभाता रजनी भवतु । नामेति वाक्यालंकारे । पित्रादिभिर्नन्दाद्यैः । तासां मथुरांगनानाम् । मधुवत्पुष्परसवत् । मंजुभिः श्रुतिमनोहरैर्वाक्यैः । विभ्रमैर्विलासैः । ‘ मनोज्ञं मंजुमंजुलम् ’ इत्यमरः । न हि नंदादय एव तत्संबंधिनः किं त्वन्येऽपीत्याहुः—यद्वेति । अन्ये वसुदेवप्रभृतयः । ग्राम्या ग्रामभवाः । अविदग्धाश्चातुर्यहीनाः । “ ग्राम्यं स्त्रीकरणे क्लीबेऽश्लीलप्राकृतयोस्त्रिषु ” इति मेदिनी । इत्यर्थ इति—

अद्य ध्रुवं तत्र दृशो भविष्यते दाशार्हभोजांधकवृष्णिसात्वताम् ॥ महोत्सवः श्रीरमणं गुणास्पदं द्रक्ष्यंति ये चाध्वनि देवकीसुतम् ॥ २५ ॥ मैतादृविधस्याकरुणस्य नाम भूदक्रूर इत्येतदतीवदारुणः ॥ योसावनाश्वास्य सुदुःखितं जनं प्रियात्प्रियं नेष्यति पारमध्वनः ॥ २६ ॥

शीकृतचित्तस्तथा तासां सलज्जस्मितैर्विभ्रमैर्भ्रमन्परवान्पित्रादिपरतंत्रोऽपि । यद्वा व्रजे परेऽन्ये बंधवः संति यस्य तथा मनस्वी धीरोऽपि ग्राम्या अविदग्धा नः कथं प्रतियास्यते प्रत्येष्यति न कथंचिदित्यर्थः ॥ २४ ॥ किञ्च । अस्मदुत्सवभाजोऽन्य एवाद्य भविष्यंतीत्याहुः । अद्येति । तत्र पुरे दाशार्हादीनां दृशो दृष्टेर्महानुत्सवो भविष्यते भविष्यति । ये देवकीसुतं द्रक्ष्यंति तथा ये चाध्वनि गच्छंतं द्रक्ष्यंति तेषामपि दृशो भविष्यतीति । यद्वा दृश इति द्वितीया । तेषां दृशो नेत्राणि महोत्सवो भविष्यते प्राप्स्यति प्राप्त्यर्थस्य भवतेरात्मनेपदित्वात् ॥ २५ ॥ अक्रूरं शपंत्य आहुः । मैतद्विधस्येति । एषा विधा विधानं कर्म यस्य अत एव निष्कृपस्याक्रूर इति शोभनं

चतुरस्त्रीप्राप्तौ को मूढामाद्रियत इति भावः । " परवांस्तु पराधीनो निघ्नः परवशः स्मृतः " इति हलायुधः । यद्वा—अबलाः सुरतधार्ष्ट्यहीनाः । ग्राम्या अश्लीललीलाः । मथुराङ्गनास्त्वग्राम्या नित्यसुरतकर्मोपेताः । " समुद्रोर्मिवदुन्नम्यभ्रूविलासेन सुंदरी । निद्रितं मदनं या तु बोधयेत्सा वरांगना ॥ " इति कामन्दकोक्तेः ॥ * ॥ भ्रमन् सर्वं विस्मरन् । लोकधर्मयोर्वर्त्मादिसकलं विस्मरिष्यतीति भावः । परवान् गृहीतचित्तत्वादेव तत्पराधीनः सन्नित्यर्थः । तदुक्तं विष्णुपुराणे—" मथुरां प्राप्य गोविन्दः कथं गोकुलमेष्यति । नागरस्त्रीकलालापमधु श्रोत्रेण पास्यति ॥ विलासिवाक्यपानेषु नागरीणां कृतास्पदम् । चित्तमस्य कथं भूयो ग्राम्यगोपीषु यास्यति ॥ भावगर्भस्मितं वाक्यं विलासललिता गतिः । नागरीणामतीवैतत्कटाक्षेक्षितमेव तु ॥ ग्राम्यो हरिरयं तासां विलासनिगडैर्यतः । भवतीनां पुनः पार्श्वं कया युक्त्या समेष्यति ॥ " इति । अबलाः तादृशकलालावण्यबलहीनाः ॥ २४ ॥ स्वप्राह्यस्यान्यत्रगत्या शोचन्त्य आहुः—किञ्चेति । आर्षत्वाश्रयणेनात्मनेपदस्वीकारस्यागतिकगतिकत्वादाह—यद्वेति ॥ * ॥ गुणानां गुणजातीनां सर्वासामास्पदमाश्रयः । यदाश्रयेणैव ते सिद्ध्यन्ति तमित्यर्थः । किं बहुना सर्वगुणसंपत्तिहेतुं विष्णुप्रियां श्रियं लक्ष्मीमपि रमयितुं जातरतिं कर्तुं शीलं यस्य तदिति प्रौढिवाक्यम् । देवकीसुतमिति—' प्रागयं वसुदेवस्य'इत्यादितत्पुरोहितवाक्येन । स च सा च तत्पुत्रत्वमेवाभिमंस्येते इति । ये चाध्वनि वर्तमानाः पथिकास्तद्वासिनोऽपि लोकाः । तदुक्तं वैष्णवे—" धन्यास्ते पथि ये कृष्णमितो यान्तमवारिताः । उद्वहिष्यंति पश्यन्तः स्वदेहं पुलकाचितम् ॥ मथुरानागरीपौरनयनानां महोत्सवः । गोविन्दावयवैर्दृष्टैरतीवाद्य भविष्यति ॥ को नु स्वप्नः सुभाग्याभिर्दृष्टस्ताभिरधोक्षजम् । विस्तारितांतनयना या द्रक्ष्यन्त्यनिवारिताः ॥ " ॥ २५ ॥ इदानीमक्रूरनामानर्थकमित्याभिप्रेत्याहुः—मेति । एषा प्रत्यक्षा । अत एव एतादृशकर्मकर्तृत्वादेव । तत्र एतन्नामानंगीकारे । लोलिंबराजेनापि हरिविलासे एतदभिप्रेत्यैवोक्तम्—" अक्रूर ते नामनि निश्चयेन बली बहुव्रीहिसमास एव । अस्माकमात्मानममुं यतस्त्वं कृतान्तवन्नेतुमुपागतोऽसि ॥ " इति ॥ * ॥ इति शब्देनैव एतदित्यस्यार्थस्योक्तत्वात् ' इत्येतत् ' इति तैर्न लिखितम् । यद्वा—इत्येतत्, इत्येवम्, इत्यादिप्रयोगदर्शनाद्गोबलीवर्दन्यायेन पौनरुक्त्याऽदोषो ज्ञेयः । अतीवदारुणः परमक्रूरः । कुतः—तदाहुः—य इति । असाविति—दारुणत्वेनानिर्वचनीयत्वं सूचितम् । यद्वा—असावयमित्यर्थः । प्रत्यक्षस्थितोऽपि अनाश्वास्य पुनरेष मया समानीय युष्मासु समर्पणीय इति वचसापि । जनमिति सामान्येनोक्तेस्तन्मात्रस्याप्याश्वास उचितः, किमुताबलारूपस्येत्यर्थः । अतोऽचिरादस्मिन्स्त्रीवधो भावीति सुशब्दाभिप्रायः । अतोऽतीवक्रूर एव । तदुक्तं विष्णुपुराणे—" किं न वेत्ति नृशंसोऽयमनुरागपरं जनम् । येनायमक्ष्णोराह्लादं नयत्यन्यत्र नो हरिम् ॥ " इति । अतः परमस्य क्रूरस्य क्रूर इत्येव नाम युक्तमिति भावः । यद्वा—अक्रूर इत्येव नाम मा भूदेव, इत्येवमेतत्प्रकारमन्यन्नामापि मा भूदिति । अतः परमस्य क्रूर एव नाम भाव्यम् । तन्नाम्नैवाभिधेय इति

१ न क्रूरो यस्मादित्यभिप्रायः ।

अनार्द्रधीरेष समास्थितो रथं तमन्वमी च त्वरयंति दुर्मदाः ॥ गोपा अनोभिः स्थविरैरुपेक्षितं दैवं च नोऽद्य प्रतिकूलमीहते ॥ २७ ॥ निवारयामः समुपेत्य माधवं किं नोऽकरिष्यन्कुलवृद्धबांधवाः ॥ मुकुंदसंगान्निमिषार्धदुस्त्यजाद्दैवेन विध्वंसितदीनचेतसाम् ॥ २८ ॥

नाम मा भूत् । तत्र हेतुः । अतीवदारुण इत्यादि । प्रियात्प्राणादपि प्रियतरं कृष्णमध्वनः पारमस्मद्दृग्गोचरत्वादतिदूरं देशं नेष्यति ॥ २६ ॥ अहो धिगस्मज्जीवितमित्याहुः । अनार्द्रधीरिति । अनार्द्रा कठिना धीर्यस्य स तावदेष कृष्णो रथमधिरूढः । अस्याविनयमालक्ष्य स्थविरैश्चोपेक्षितम् । ते न निवारितवंत इत्यर्थः । किं च दैवं चेति । अयं भावः । यदि दैवमस्माकमनुकूलं भवेत्तर्हि विघ्नैः कश्चिदेषां मध्ये प्रतिहन्येत अकस्माद्वज्रपातो वा भवेत् । अन्यद्वा किंचिदनिष्टं स्यान्न तु तत्किंचिदस्तीति ॥ २७ ॥ परस्परं संमंत्र्य साहसमधिरुह्याहुः । निवारयाम इति । अकरिष्यन्करिष्यंति । निःमिषार्धदुस्त्यजान्मुकुंदसंगाद्विध्वंसितानि वियोजितान्यत एव दीनानि चेतांसि

भावः । एतद्विधस्यैतादृशस्य ॥ २६ ॥ आत्मानं निन्दन्त्य आहुः—अहो इति । अस्य कृष्णस्य । अविनयं धाष्टर्यम् । स्थविरैः वृद्धैः । इत्यर्थ इति—वृद्धा अपि धृष्टसंबंधेन धृष्टा एव जाता इति भावः । न हि वृद्धानां दोष इत्याहुः—किञ्चेति, अयं भाव इति । एतेषां गोपानाम् । अन्यत् आमयादिरूपम् । तत् अनिष्टम् । किञ्चित्किमपि । सर्वमेतद्दैवप्रातिकूल्याज्जातम् "प्रतिकूले नृणां दैवे सरले वक्रता भवेत्" इत्युक्तेरिति भावः ॥ * ॥ अहो अत्रागत्याऽक्रूरेण स्वक्रूरता सर्वत्रैव संचारिता, यतः परमकोमलचित्तः श्रीनंदनंदनोऽप्यस्मान्प्रति परमकठिनोऽभूदित्याहुः—एष कृष्णोऽप्यनार्द्रधीरस्मान्रुदतीर्दृष्ट्वापि यतो रथं सम्यगवास्थित उपरिनीडमारूढः । तं रथम् । अनु पश्चात् । अनोभिः शकटैः सहिता गोपाः । दुर्मदा इति—एषामहो दुष्टमत्ततैवाजनिष्ट अत्रानागमिष्यतः कृष्णस्य विरहेण स्वयं यन्मरिष्यन्ति तदपि नानुसंदधत इति भावः । स्थविरैर्वृद्धैरपि निषेधमकुर्वद्भिरुपेक्षितम् । स्वजीवितमिति शेषः । किञ्च, दैवञ्चेति, अयं भाव इति स्वामिचरणैरुक्तमेव । तस्मादायुरेव व्रजस्थानामतः परं नास्तीति निश्चिनुम इति सिद्धम् ॥ २७ ॥ साहसमुत्तरकालमनालोच्य कर्मकरणम् । अत एव विमुक्तत्वादेव । एवंभूतानां कृष्णवियुक्तानाम् । इत्यर्थ इति—मृत्युभयं हि जीवतां भवति तत्त्वस्माकमात्मभूतेन कृष्णेन रहितानां मृतप्रायाणां नास्तीति । अपिशब्दात्कुलसंबंधिनां तु तद्दूरापास्तमिति भावः ॥ * ॥ सोऽयमस्माभिर्बाल्यमारभ्यानन्यवृत्तिना मनसा वृत इति, स चाप्यस्मांस्तथैवांगीकृतवानिति पतिरेव स्यात् । ततः संप्रत्यस्मान्परित्यज्य व्रजन्नसौ कथं निवारणीयः, कस्य वा तु संकोच इत्याशयेनाहुः—निवारयाम इति । सम्यग्लज्जादिकमपहाय साहसमवलम्ब्योप समीपे गत्वा श्रीहस्तधारणादिना माधवं निवारयामः शीघ्रमेव निवारयिष्यामः । ननु पित्राद्यनुमतिं विना कथं स्वातंत्र्येण वृतोऽसौ तत्राप्याहुः—माधवमिति । नूनं लक्ष्म्यापि निगूढमयं वृतोऽस्तीति सदाचारप्रश्ने नायं दोष इति भावः । स्थापयिष्यते चेदम् 'एवं ब्रुवाणा' इत्यादौ । ननु कुलवृद्धादयस्त्विदमौद्धत्यं दृष्ट्वा शान्तिं करिष्यन्ति तत्राहुः—किन्न इति । कुलस्य वृद्धा धर्मप्रवर्तका बांधवाः स्नेहादिबद्धाः पत्यादयश्च धाष्टर्यदर्शनेन निश्चितरहस्यवृत्तान्ता अपि नोऽस्माकं किं करिष्यन्ति । यतो दैवेनापरिहार्येण निजाऽदृष्टेन हेतुना यो मुकुन्दसंगस्तत्प्रथमदर्शनादिस्तेनैव विध्वंसितानि देहगेहाद्यासक्तितो विच्यावितानि तथा यथामनोरथं तदप्राप्त्या दीनानि चेतांसि यासां तासाम् । नन्वतो दैवेन तद्वियोजनमधुना भद्रमेव कृतं तर्ह्यधुनापि तत्संगाग्रहस्त्यज्यतां तत्र सभयमाहुः—निमिषेति । यद्वा—युष्माकं ते किञ्चिदपि न करिष्यन्ति तत्राहुः—मुकुंदेति । मुकुन्दस्य सानुरागेण कुलवृद्धा देव्यो मोचकत्वात्तन्नाम्नस्तस्य माधवस्य संगाद्दैवेन विध्वंसिता अत एव दीनचेतसो यास्तासामस्माकम् । कीदृशान्मुकुंदसंगात् निमिषार्द्धोऽपि दुस्त्यजत्वेन पूर्वमस्माभिरनुभूतादित्यर्थः । अयं भावः—यद्यसौ निवृत्तः स्यात्, यदि तैस्त्यज्येमहि तदा वनदेव्य इव वृंदावनैकशरणा भूत्वा तं सुखमेव निषेवेमहि, यदि दंड्येमहि निरुद्ध्येमहि च तदापि तन्निवृत्तिं दृष्ट्वैव म्रियेमहि इति सुखमेव । यदि न निवृत्तः स्यात्त

यस्यानुरागललितस्मितवल्गुमंत्रलीलावलोकपरिरंभणरासगोष्ठ्याम् ॥ नीताः स्म नः क्षणमिव क्षणदा विना तं गोप्यः कथं न्वतितरेम तमो दुरन्तम् ॥ २९ ॥ योऽह्नः क्षये व्रजमनंतसखः परीतो गोपैर्विशन्खुररजश्छुरितालकस्रक् ॥ वेणुं क्वणन्स्मितकटाक्षनिरीक्षणेन चित्तं क्षिणोत्यमुमृते नु कथं भवेम ॥ ३० ॥ श्रीशुक उवाच ॥ एवं ब्रुवाणा विरहातुरा भृशं व्रजस्त्रियः कृष्णविषक्तमानसाः ॥ विसृज्य लज्जां रुरुदुः स्म सुस्वरं गोविंद दामोदर माधवेति ॥ ३१ ॥

यासाम् । एवंभूतानामस्माकं न मृत्योरपि भयमित्यर्थः ॥ २८ ॥ इतोऽपि कारणादवश्यं साहसमेवावलंबनीयमित्याहुः । हे गोप्यो यस्य ललितं स्मितं च वल्गु मंत्रश्च लीलावलोकश्च परिरंभणं चानुरागेणैतानि यस्यां रासगोष्ठ्यां रासक्रीडासभायां नोऽस्माभिः क्षणदा रात्रयः क्षणमिव नीतास्तममुं कृष्णं विना दुरंतं तमो विरहदुःखं कथं नु अतितरेम । न कथंचिदित्यर्थः॥२९॥ किं च आस्तां तावत्तमोऽतितरणं जीवनमेव कथं स्यादित्याहुः । य इति । अह्नः क्षये दिनावसाने खुररजोभिश्छुरिता धूसरा अलकाः स्रजश्च यस्य स व्रजं विशन् स्मितेन यत्कटाक्षनिरीक्षणं तेन नश्चित्तं क्षिणोति हरति । अमुं कृष्णं विना तावत्कथं भवेम जीवेम ॥३०॥ कृष्णे विषक्तानि

दोत्सर्गसिद्धमेव मरणमिति च न किमपि ते कुर्युस्ततो निवारयामैवेति ॥ २८ ॥ इतोऽपि वक्ष्यमाणादपि । क्षणं निद्रावसरं सुरतोत्सवं वा ददतीति क्षणदाः "क्षणः कालांशव्यापारपर्वोत्सवहानिषु" इति धरणिः । इत्यर्थ इति—प्रियविरहे क्षणमपि युगशतमिव तर्तुमशक्यं भवतीति भावः ॥ * ॥ अथ निवारणार्थमुद्यता अपि बहुविरुद्धसंघट्टे तस्मिन्स्वेषां प्रवेशमदृष्ट्वा सभयमाहुः—यस्येति । यस्यानुरागेणैव ललितस्मितादीनि, यस्यां सैव वल्गुमंत्रः रहस्यसंकेतवार्ता, रासगोष्ठ्यां रासोपलक्षितक्रीडामात्रसभायाम् । नोऽस्माभिः । तममुं विना दुरन्तमदृष्टपारं तमो विरहांधकारदुःखसमुद्रं कथं तरेमेति । यथास्य संगसुखेन बह्वयोऽपि रात्रयः क्षण इवाभूवंस्तथैव विरहःदुखेन क्षणोऽप्यस्माकं युगसहस्रं सदा भवत्येव, किन्तु बह्वी रात्रीरागामिनीर्गमयितुं कथं प्रभविष्याम इत्यर्थः ॥ २९ ॥ जीवनेऽपि ससंदेहा आहुः—किंचेत्यादि । आस्तां तिष्ठतु । छुरिता व्याप्ताः "छुरितं व्यापने छेदे" इति निरुक्तेः । न कथमपीत्यर्थः ॥ * ॥ अनन्तः संकर्षणतया तदेकनामत्वाच्छुभ्रवर्णत्वेन सारूप्यादनंतबलत्वाच्च । व्रजे कृष्णनामांतरवत्तथा गर्गोक्त्या प्रसिद्धो बलदेवस्तस्य सखा तत्सहित इत्यर्थः । गोपैर्वयस्यैः । परीतो वेष्टितः । स्मितं मंदहासः । कटाक्षोपांगदर्शनम् । निरीक्षणं वक्षोजादिनिभालनं तेन चित्तं संमोहयाति । अद्य सायं तत्तद्यदि न भविष्यति तदा का खलु जीवितं धारयितुं पारयिष्यतीति भावः ॥ ३० ॥ एवमुक्तरीत्या । गोविन्देत्यनेन दीनदयालुता । दामोदरेत्यनेन भक्तायत्तता । माधवेत्यनेन मधोः क्षत्रियत्वेन तद्वंश्यत्वात्क्रौर्यं वा स्त्रीषु कृपालुता च ध्वनितेति भावः ॥ * ॥ एवं विलप्य कृष्णं रथादवतारयितुं संहता एव यदा गंतुं प्रवृत्तास्तदोरुस्तंभादिविघ्नवशादसामर्थ्ये सति केवलं रुरुदुरेवेत्याह—एवमिति । विरहपीडयाऽऽतुरा एकमपि पदं गंतुं स्पष्टाक्षरतया वक्तुं चासमर्थाः । हे गोविन्द इत्यनेनास्माकं गा मनश्चक्षुरादींद्रियवृत्तीर्गव्यः परःसहस्रा विन्द लभस्व, त्वत्संगे एव गच्छंतीरेताः कृपया गृहाण, स्वीयमनोवृषभेन्द्रेण सह संगमय्य रक्षस्व, न तूपेक्षस्व । देहास्त्वस्माकं त्वत्संगायोग्यत्वाद्दुर्भगा अत्रैव पंचत्वं प्राप्स्यंति, यदि त्वं नागमिष्यसीति । किंच स्त्रीवधाज्जिघृक्षसि चेद्गृहाण, यस्याः प्रेम्णा दामबंधनमपि स्वीकृतवानभूस्तां मातरं श्रीव्रजेश्वरीं मा जहि, यदि परश्वस्त्वं नायास्यसि तदा सा सर्वथा मरिष्यतीति मातृहत्यान्तु मा गृहाणेति हे दामोदरेति पदेन विज्ञापना । हे माधवेति—त्वमस्माकं मा खलु धवः किन्तु सखा भवसि, यदि धवोऽभविष्यस्तदास्मासु तव स्वत्वसंभवात्स्ववस्तूनां पालने ज्वालने वा नैवाति दोषः प्राप्स्यत् । किन्तु वयं परद्रव्याणि भवामोऽतोऽस्मन्नाशानिबंधनं दोषं नांगीकुथा इति विज्ञापना द्योतितेति **विश्वनाथः** । अत्र **तोषिणी**—अथ भृशं विरहातुरत्वेन विशेषविलापाऽशक्त्या शोकोद्दीपकतन्नामविशेषैरेव विलेपुरित्याह—

स्त्रीणामेवं रुदंतीनामुदिते सवितर्यथ ॥ अक्रूरश्चोदयामास कृतमैत्रादिको रथम् ॥ ३२ ॥ गोपास्तमन्वसज्जंत नंदाद्याः शकटैस्ततः ॥ आदायोपायनं भूरि कुंभान्गोरससंभृतान् ॥ ३३ ॥ गोप्यश्च दयितं कृष्णमनुव्रज्यानुरंजिताः ॥ प्रत्यादेशं भगवतः कांक्षंत्यश्चावतस्थिरे ॥ ३४ ॥

मानसानि यासाम् । सुस्वरमुच्चैः ॥ ३१ ॥ क्रूरमक्रूरतः श्रुत्वा कंसं कंसनिषूदनः ॥ गोपीमनोरथारामः सरामः स्वपुरं ययौ ॥ १ ॥ स्त्रीणामिति । ता अनादृत्य कृतमैत्रादिको मैत्रं मित्रदैवतं प्रातःसंध्योपासनं तदादि कर्म कृतं येन सः ॥ ३२ ॥ अन्वसज्जंतान्वगच्छन् ॥ ३३ ॥ अनुरंजिताः परावृत्य निरीक्षणा

एवमादिशं भृशं ब्रुवाणा इत्यन्यदपि तादृशमूचुरिति ज्ञेयम् । तत्र हेतुर्विरहातुरा विवशास्तत्रापि हेतुर्व्रजस्त्रियः सहजप्रेमरसमयत्वेन प्रसिद्धा इत्यर्थः । अत एव कृष्णे विषक्तानि प्रेम्णा लग्नानि मानसानि यासां ताः । अत एव लज्जां त्यक्त्वा सुस्वरमुच्चस्वरेण रुरुदुः । स्म पादपूरणे । तच्च प्रेमार्तेरशक्त्या । कथं रुरुदुः—हे गोविंद दामोदर माधवेत्येवम् । अत्र गोविन्देति गोकुलेन्द्रस्मरणात्त्वां विना गोकुलमिदं सर्वं क्षणादेव विलेष्यते इति सूचयति । दामोदरेति नाम श्रीव्रजेश्वर्याः स्वकृतानुतापस्मारकम् । ततस्त्वां विना तस्यास्तस्यै स्मरणेन संप्रति कीदृगवस्था भविष्यतीति व्यञ्जयति । माधवेति 'जयति तेऽधिकं जन्मना व्रजः' इत्यनेन, 'सततमुरसि सौम्य श्रीर्वधूः साकमास्ते' इत्यनेन च निजसंभावनानुसारेण तया श्रीनारायणप्रिययापि गूढं वृत इति परमसन्तापकस्त्वं योग्यमेवास्मन्महानुरागाविषयो जात इति स्मरणेन हंत कथमस्मा कमधुना कालक्षेपणं भविष्यतीति ज्ञापयन्ति । मानाम्नीं नारायणप्रियामपि धुनोति भावविशेषेण कंपयतीति निरुक्तिश्चात्र प्रस्तुतोपयोगिनी ज्ञेया । ईशस्यापि तव विच्छेदे वयं वा कथं जीवेम मरणे च हा पुनर्द्रष्टव्यो नासीदिति ध्वनयन्ति । चकारोऽनुक्तानामन्येषामपि रागमयकरुणपरिदेवितानां समुच्चये ॥ ३१ ॥ गोपीमनोरथानामेवारामो निवासः सन् स्वपुरं मथुरां मथुरायाः स्वीयावासत्वात् "मथुरा भगवान्यत्र नित्यं सन्निहितो हरिः" इत्युक्तेः स्वपुरत्वमिति (१) ॥ अनाश्वासितास्ता रुरुदुरित्याह—स्त्रीणामिति । ताः साक्षाच्छ्रुतिरूपाः । मित्रदैवतं सूर्यरूपतयोपदिष्टं ब्रह्म यत्र गायत्रीमंत्रे तज्जपाग्र्यं कर्म । यद्वा—कृतसूर्यमंडला धिष्ठितनारायणोपासनः "ध्येयः सदा सवितृमंडलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान्मकरकुंडलवान्किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः ॥" इति स्मृतेः, "यश्चासावादित्ये" इत्यादिश्रुतेश्च । आदिपदात्स्तव पाठादिग्रहः ॥ * ॥ एवमुक्तप्रकारेण रुदतीरपि स्त्रियोऽनादृत्येत्यक्रूरस्यापराधः सूचितः । स्वतः सर्वैरनुकंप्यानां तत्रापि तादृशप्रेम्णा यथा रुदतीनां व्रजस्त्रीणां कथमपि सान्त्वनमपेक्ष्य प्रस्थानात् । भो मातरः क्षमध्वं पराधीनस्य राजसेवकस्य ममापराधमेषोऽहमेव कृष्णमानीय समर्पयिष्यामीत्यनाश्वासनमेव तदनादरः । अत एव तदनादरफलमक्रूरस्य स्यमंतकप्रसंगे कृष्णविच्छेददुःखं, द्वारकात्यागं, दुर्यशो, वाराणसीवासं च भावुकभक्तविशेषाः श्रीगोकुलमहिम्ना मन्यंते । अतस्ताभिरपि तदपराधं मत्वा प्रागुक्तम्—'योऽसावनाश्वास्य सुदुःखितम्' इत्यादिना । वैष्णवेऽपि—"अक्रूरः क्रूरहृदयः शीघ्रं प्रेरयते हयान् । एवमार्तासु गोपीषु घृणा कस्य न जायते ॥" इति । सूर्य उदिते एव सद्गुणाद्यपेक्षयेति ज्ञेयम् । अत्र गोपीविलापाब्धिनिमग्नचेतस्त्वादेव मुनिना तात्कालिकव्रजेश्वरीविलापावर्णनमिति केचित् । धनुर्मखोत्सव दर्शनोत्कण्ठमना बालकोऽयं स्वपित्रा सहैव याति, यथासमयं पित्रैव भोजयिष्यमाणः पितुरंक एव सुखं शयिष्यमाण एकदिनं तत्र स्थित्वा परश्वः पुनः स्वपित्रा सहैवायास्यति, कात्र चिंतेति पुरंध्रीभिर्गोपैश्च नंदादिभिश्च मुहुराश्वासितायास्तस्यास्तदा नातिशोक इत्यन्ये प्राहुः ॥ ३२ ॥ तं श्रीकृष्णम् । ततो व्रजात् ॥ * ॥ तं रथम् । अन्वषज्जन्त पश्चादगच्छन्, नानाशंकाकुलचित्तत्वात् । आद्यपदेन सनंदादयः । तत इत्यनेन सूचिते विलम्बे हेतुः—उपायनं रत्नाद्युत्तमद्रव्यम् । कुंभांश्चेति यात्रामंगलमपि सूचितम् ॥ ३३ ॥ प्रत्याख्यानं—तिष्ठन्तु नायान्त्विति गमननिषेधरूपम् ॥ * ॥ अनुरञ्जिताः कृष्णेन रथस्थेनैव पश्चिमाभिमुखीभूय स्वप्रेयसीनां निर्गच्छतः प्राणानालक्ष्य—भोः प्राणैकवल्लभा मा खिद्यत एष्येऽहमेतान्वञ्चयित्वा युष्मत्सान्निधिमेष्यामीत्यर्थद्योतकेन निरीक्षणेन किञ्चिदानंदिताः । ततश्चोर्वादिजाड्ये निवृत्ते सति । गोप्यश्चेति यथा गोपा आनंदेन रथमनुव्रजन्ति स्म तथा गोप्यश्च दयितमनुव्रज्य प्रत्यादेशं दूतादिद्वाराऽवधिकरणार्थनिजाविज्ञप्तिवाक्यस्य प्रतिवचनं काङ्क्षन्त्यः नयनकृतमाश्वासं यथा प्रापुस्तथा वचनकृतमपि तमभिलषं

१ उदूखलबन्धनकर्मणः ।

तास्तथा तप्यतीर्वीक्ष्य स्वप्रस्थाने यदूत्तमः ॥ सांत्वयामास सप्रेमैरायास्य इति दौत्यकैः॥३५॥यावदालक्ष्यते केतुर्यावद्रेणू रथस्य च॥अनुप्रस्थापितात्मानो लेख्यानीवोपतस्थिरे॥३६॥ता निराशा निववृतुर्गोविंदविनिवर्तने ॥ विशोका अहनी निन्युर्गायंत्यः प्रियचेष्टितम्॥३७॥भगवानपि संप्राप्तो रामाक्रूरयुतो नृप ॥ रथेन वायुवेगेन कालिंदीमघनाशिनीम्॥३८॥तत्रोपस्पृश्य पानीयं पीत्वा मृष्टं मणिप्रभम् ॥ वृक्षषंडमुपव्रज्य सरामो रथमाविशत्॥३९॥

दिभिः किंचिदानंदिताः । प्रत्यादेशं प्रत्याख्यानम् ॥ ३४ ॥ तप्यतीः संतप्यमानाः । ताः आयास्ये शीघ्रमागमिष्यामीति दौत्यकैः दूतवाक्यैः ॥ ३५ ॥ कृष्णमनुप्रस्थापिता आत्मानश्चित्तानि याभिस्ताः लेख्यमयपुत्रिका इव निश्चलाः ॥ ३६ ॥ ३७ ॥ ३८ ॥ वृक्षाणां षंडं समूहमुपव्रज्य ॥ ३९ ॥

त्योऽवतस्थिरे । दूरतस्तद्दृष्टिविषये परमोच्चे देशे सावधानतया स्थिता इत्यर्थः ॥३४॥ ता गोपीः । स्तथोक्तप्रकारेण । पाठा० संप्रेष्यैः प्रेषितुं योग्यैः—भवतीर्ध्यायन्नेव कश्चित्कालं तत्र स्थास्य इत्येवंरूपैः ॥*॥ केचित्तु यदेवं व्याचक्षते दूतद्वारकसंदेशे स्वरूपैरायास्यामि न तु स्वयं—तदसत्, इतिशब्दस्य सर्वान्ते निदेशाभावात्तदप्रतिपत्तेः । संदेशमात्रागमने प्रत्युत तासां परमक्षोभापत्तेः । “ आगमिष्यत्यदीर्घेण कालेन व्रजमच्युतः ” इत्यनेन परमाप्तदूतस्य श्रीमदुद्धवस्य वाक्येन तदुच्छित्तेः । दौत्यकैर्गोप्यतया वारंवारं बहुभिर्दूतवचनैः सप्रेमैर्विविधशपथपूर्वकं स्नेहमयैर्न तु सच्छलैरित्यर्थः । यदूत्तमः संप्रति तन्नामाभिमत्यैत्र तद्रक्षानिश्चयात् । गमनेहेतुरायास्यत इति । “ वर्तमानसमीपे वर्तमानवद्वा ” इति लट्प्रयोगोऽपि । तच्च दंतवक्त्रवधानंतरं सिद्धमिति पाद्मोत्तरखंडमूलस्वारस्यं च तत्रैवोदाहरिष्यते । अत्र **तोषिणी**—दौत्यकैरिह कर्मणि ष्यञ् । बहुवचनेन यथा तासां प्रबोधो भवति तथा बहुप्रकारैस्तद्विश्वासोत्पादकैः शपथशतसहितैरित्यर्थः । कप्रत्ययेनानुकंपाव्यञ्जकैः सप्रेमैः सप्रेमाभिरिति । यथा यूयं मां विना विभिन्नधैर्यास्तथाहमपि विदीर्णहृदय एव पराधीन एव, भवतीनां स्मितमधुरकटाक्षमाध्वीकं त्रिजगदतिदुर्लभं स्वधीरसनया लिहन्नेव जीवन्पुरीं यामि, यद्यहं परश्वो नागमिष्यामि तदा यूयमहं च न युगपदेव प्राणान्धर्तुं शक्नुमः । यदि वा परमायुःप्राबल्यादाशाबंधाच्च जीविष्यामस्तदपि तज्जीवनं मरणकोटितोऽप्यधिककष्टमित्यादिप्रेमामृतम्रक्षितैरित्यर्थः । परश्वआगमनप्रकारस्तु उपरिष्टाद्व्याख्यास्यते ॥ ३५ ॥ केतुर्ध्वजः ‘ केतुर्ग्रहपताकयोः ’ इति विश्वः ॥ * ॥ अथापि तासां संघः प्राणरक्षैवाभून्न तु शान्तिरित्याह—यावदिति । आलक्ष्यते किञ्चिल्लक्षणेनेषद्दृश्यते तावत्तं रथं रेणुञ्चानु पश्चात्प्रस्थापितात्मान उपलक्षिता लोकैः समीपे दृष्टाः ॥ ३६ ॥ प्रियचेष्टितं कृष्णलीलां प्रगायन्त्यो विशोकाः सत्यः । यद्वा—विशिष्टशोकाः ॥ * ॥ अतो गोविन्दस्य विशेषेण मथुरागमनौन्मुख्यं विनैव निवर्तने निराशाः । किन्तु तत आगमन एव साशाः सत्यो निवृत्ता इत्यर्थः । आयास्य इति तेनोक्तत्वात्तथैवाह—प्रियस्य कृष्णस्य चेष्टितं ‘तस्मान्मच्छरणं गोष्ठम्’ इत्यादिलक्षणं तत्तत्प्रतिपालकं चरितमायास्य इत्यस्य प्रमाणरूपं गायन्त्यो विशोका आशाच्छेदज्ञानेन मर्मपर्यन्तभेदकेन प्रियविच्छेदं जानंत्यस्त दुःखाशंकालक्षणेन शोकेन रहिताः सत्योऽहनी निन्युरदर्शनदुःखातिशयं विषह्य गमयामासुरन्यथा क्षणमपि नागमिष्यन्नित्यर्थः । तथैव श्रीभगवता वक्ष्यते—“ धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान्कथंचन । प्रत्यागमनसंदेशैर्बल्लव्यो मे मदात्मिकाः ॥ ” इति । श्रीमदुद्धवेन च—“ गायन्ति ते विशदकर्म गृहेषु देव्यो राज्ञां स्वशत्रुवधमात्मविमोक्षणं च । गोप्यश्च ” इत्यादि । अहनी रात्र्यहनी । तद्विशेषस्तु लीलास्तोत्रादौ वर्णितः ॥ ३७ ॥ अपिशब्देन गोपगणोऽपि । कालिन्दीं कलिन्दगिरिसंभूताम् ॥ * ॥ अथ तासामिव प्रियजनप्रेमार्द्रतास्वभावेन सकलश्रुतिस्मृतिगीतस्य श्रीकृष्णस्याप्यार्तिर्जातैव, किन्तु गांभीर्येणैव गोपिता दौत्यकैरिति बहुवचनेन तदावेशसूचनात् । गमनं त्वावश्यककार्यविशेषार्थमेवेत्याह—भगवानपीति । सोऽपि तद्दुःखदर्शनाक्षमतया वायुवेगेन तद्वच्छीघ्रतया चालितेन रथेन कालिन्दीमनन्ततीर्थप्रदेशावच्छिन्नां सम्यक्प्राप्तः । अघानि दुःखव्यसनानि नाशयतीति ताम् । निजविरहतापनाशिनी सा भवेदिति बुद्ध्यैवेत्यर्थः । ननु तद्दुःखं न तत्र स्पष्टं दृष्टं तत्राह—रामेति । तत्संकोचान्निगूहितामिति भावः । ननु तर्हि व्याजेनापि कथं न निवृत्तस्तत्राप्याह—रामेति । कालिन्दीप्राप्तिश्चेयं मध्याह्ने । तथा च श्रीविष्णुपुराणे—“ गच्छन्तो जविनाश्वेन रथेन यमुनातटम् । प्राप्ता मध्याह्नसमये रामाक्रूरजनार्दनाः ॥ ” इति । अत एवान्ये तत्संगे गंतुं न शक्ताः । तत्र तदानीं नंदीश्वरगिरिसन्निहितः श्रीनंदनिलय इति प्रसिद्धावपि यद्यपि तादृशवेगस्य रथस्य तावान्विलम्बो न संभवति तथाप्यसौ मुहुर्दूत्यादिद्वारा श्रीगोपिकासान्त्वनबाहुल्येन वृक्षावृततया रथगमने कौटिल्येन च ज्ञेयः ॥ ३८ ॥ तत्र कालिन्द्याम् ।

अक्रूरस्तावुपामंत्र्य निवेश्य च रथोपरि ॥ कालिंद्या ह्रदमागत्य स्नानं विधिवदाचरत् ॥ ४० ॥ निमज्ज्य तस्मिन्सलिले जपन्ब्रह्म सनातनम् ॥ तावेव ददृशेऽक्रूरो रामकृष्णौ समन्वितौ ॥ ४१॥ तौ रथस्थौ कथमिह सुतावानकदुंदुभेः ॥ तर्हि स्वित्स्यंदने न स्त इत्युन्मज्ज्य व्यचष्ट सः॥४२॥ तत्रापि च यथापूर्वमासीनौ पुनरेव सः॥न्यमज्जद्दर्शनं यन्मे मृषा किं सलिले तयोः ॥४३॥ भूयस्तत्रापि सोऽद्राक्षीत्स्तूयमानमहीश्वरम् ॥ सिद्धचारणगंधर्वैरसुरैर्नतकंधरैः ॥ ४४ ॥ सहस्रशिरसं देवं सहस्रफणमौलिनम् ॥ नीलांबरं बिसश्वेतं शृंगैः श्वेतमिव स्थितम् ॥ ४५ ॥ तस्योत्संगे घनश्यामं पीतकौशेयवाससम् ॥ पुरुषं चतुर्भुजं शांतं पद्मपत्रारुणेक्षणम् ॥ ४६ ॥

शत्रुभ्यः शंकितः सन् रथोपरि निवेश्य ॥ ४० ॥ ब्रह्म वेदं सावित्रीं जपन् । एवशब्दः प्रतिबिंबव्यावृत्त्यर्थः ॥ क्वेमौ बालौ क्व तौ मल्लाविति शंकितचेतसे । अक्रूराय जले रूपमत्याश्चर्यं व्यदर्शयत् ॥ १ ॥ ४१ ॥ ४२ ॥ ४३ ॥ सिद्धादिभिः स्तूयमानम् ॥४४॥ सहस्रं शिरांसि यस्य तम् । सहस्रफणेषु मौलयः किरीटानि यस्य संतीति तथा तम् । नीले अंबरे यस्य तम् । बिसवत्कमलनालवच्छ्वेतं शुभ्रम् । शृंगैः शिखरैः श्वेतं कैलासमिव स्थितम् ॥ ४५ ॥ तस्योत्संगे कुंडलीकृतदेहार्धे विलोक्येत्येकादशेन श्लोके

मृष्टमतिपूतम् । मणेर्दिनमणेः । प्रभवत्युद्भवतीति तथा । एकदेशन्यायोऽत्र बोध्यः, एकदेशस्त्वादिमोंऽतिमो वातोऽत्रांत्यैकदेशो गृहीतः । ‘ निशम्य भानुनंदिनी ’ इतिवत् । यथा वृषभानुनंदिन्यां राधायां शिवेन भानुनंदिनीत्युक्तं तद्वदिहापि, श्याममणिसदृशं वा ॥ * ॥ ० ॥ ३९ ॥ तौ रामकृष्णौ । शत्रुभ्यः कंसानुयायिभ्यः । अधोगतौ मा गृह्णीयुरिति शंकितः ॥ * ॥ अहो श्रीव्रजदेवीमनःक्षोभात्किल तदाप्यक्रूरस्य तन्निजपरममधुरवैभवावगाहिता यथा ब्रह्मादेर्जाता तथा न जातेत्याह—अक्रूर इति त्रिभिः । तावुपामंत्र्य अनुज्ञाप्य । रथोपरीति सुखोपवेशार्थम् । कालिन्द्या ह्रदमनन्ततीर्थम् ॥ ४० ॥ तस्मिन्कालिन्दीह्रदे । ब्रह्म अघमर्षणसूक्तम्, तस्यैव निमज्ज्यजपविधेः वेदं वा । तौ रामकृष्णावेव ॥ पद्यम्—इमौ रामकृष्णौ । तौ चाणूरमुष्टिकौ । यद्यप्यन्येऽपि तत्र मल्लाः संति तथापि तयोः प्रधानत्वात्तच्छब्देन तौ गृहीतौ, ताभ्यामेवादौ तयोर्युद्धस्य प्रवृत्तत्वाद्वा । अत्याश्चर्यमदृष्टपूर्वम् ( १ ) ॥ * ॥ “स्वमंत्रध्येयरूपादप्यद्भुतं रूपमीक्षितम् । व्रजेऽक्रूरेण तत्रैव निष्ठामप्याप चेतसः ॥ तां च्यावयन्व्रजवधूमंत्रहेतोः पुरातनीम् ॥ निष्ठामेवापय
न्कृष्णो वैकुण्ठं तमदर्शयत् ॥”॥ ४१ ॥ सोऽक्रूरः । व्यचष्टाद्राक्षीत् । स्यंदने रथे । इह जले ॥ * ॥ ४२ ॥ तत्रापि रथेऽपि । व्यचष्टेति क्रियापदमपि आकृष्यतेऽत्र । सोऽक्रूरः । पुनर्न्यमज्जत् । तयोः रामकृष्णयोः ॥ * ॥ ० ॥ ४३ ॥ तत्रापि कालिन्दीजलेऽपि । भूयः पुनः । असुरैः असुषु प्राणेषु रतैर्यत्नपरैः । ‘-प्राणेष्विन्द्रियेषु च । असवः परिकीर्त्यन्ते–’ इति । “ रतं गुह्ये प्रयत्ने च मैथुने क्रीडनेऽपि च ” इति धरणिः । जितेन्द्रियैः प्राणायामपरैर्वा । बल्यादिभिर्वा ॥ * ॥ द्वितीये निमज्जने तु तं स्वांशं श्रीविष्णुं तन्मंत्रोपास्यदैवतं दर्शयंस्तत्रैव तन्मनोनिष्ठां धारयितुं तत्परिकरानन्तरूपमपि साक्षादनुभावयामास मदभीष्टदेवः श्रीवैकुण्ठनाथो वसुदेवगृहेऽवतीर्ण इति ज्ञापयामास च–भूय इति त्रयोदशभिः । तत्रैव ह्रदेऽहीश्वरमद्राक्षीन्न तु पूर्ववद्रामकृष्णौ । सिद्धैः स्वशिष्यैः सनकादिभिः । भुजंगपतयो विवृता वैष्णवे–“वृतं वासुकिरंभाद्यैर्महद्भिः पवनाशिभिः” इति । असुरैः प्रह्लादाद्यैः । नैतमस्तकैरिति सर्वेषां विशेषणम् ॥ ४४ ॥ देवं शेषम् ॥ * ॥ मौलिनामिति व्रीह्यादित्वादिनिः । “ददृशुर्ब्रह्मणो लोकं यत्राऽक्रूरोऽध्यगात्पुरा” इत्यत्र ब्रह्मणो लोकं वैकुंठमिति स्वामिव्याख्यानात् । ‘ वैकुंठेऽपि यथा शेषः ’ इति भागवतामृतवाक्याच्च जलेऽक्रूरो वैकुण्ठमेवापश्यदिति प्राहुः ॥ ४५ ॥ तस्य शेषस्य ॥ * ॥ कृष्णस्यांशं नारायणं वर्णयति–तस्येति । पुरुषं ब्रह्माण्डान्तर्यामिणो रूपविशेषम् । स्पष्टयिष्यते च ‘ नतोऽस्म्यहं त्वाम् ’

१ असुषु रता असुराः “ अन्येष्वपि दृश्यते ” इत्यपि शब्दाङ्गः । २ अयमेवमेव पाठमुरीकरोति ।

प्रसन्नचारुवदनं चारुहासनिरीक्षणम् ॥ सुभ्रून्नसं चारुकर्णं सुकपोलारुणाधरम् ॥ ४७ ॥ प्रलंबपीवरभुजं तुंगांसोरःस्थलश्रियम् ॥ कंबुकंठं निम्ननाभिं वलिमत्पल्लवोदरम् ॥ ४८ ॥ बृहत्कटितटश्रोणिकरभोरुद्वयान्वितम् ॥ चारुजानुयुगं चारुजंघायुगलसंयुतम् ॥ ४९ ॥ तुंगगुल्फारुणनखव्रातदीधितिभिर्वृतम् ॥ नवांगुल्यंगुष्ठदलैर्विलसत्पादपंकजम् ॥ ५० ॥ सुमहार्हमणिव्रातकिरीटकटकांगदैः ॥ कटिसूत्रब्रह्मसूत्रहारनूपुरकुंडलैः ॥ ५१ ॥ भ्राजमानं पद्मकरं शंखचक्रगदाधरम् ॥ श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥ ५२ ॥ सुनंदनंदप्रमुखैः पार्षदैः सनकादिभिः ॥ सुरेशैर्ब्रह्मरुद्राद्यैर्नवभिश्च द्विजोत्तमैः ॥ ५३ ॥

नान्वयः ॥ ४६ ॥ शोभने भ्रुवौ यस्य उन्नता नासिका यस्य तं च तं च । शोभनौ कपोलौ यस्य अरुणावधरौ यस्य तं च तं च ॥ ४७ ॥ तुंगावंसौ यस्य उरःस्थले श्रीर्यस्य तं च तं च । वलिमत्पल्लवोदरं वलयस्तिर्यङ्निम्नरेखा यस्य संति तद्वलिमत्तच्च तत्पल्लववदश्वत्थदलसदृशमुदरं यस्य तम् ॥ ४८ ॥ कटितटं च श्रोणिश्च करभसदृशमूरुद्वयं च बृहच्च तत्कटितटश्रोणिकरभोरुद्वयं च तेनान्वितम् । यद्वा बृहद्भ्यां कटितटश्रोणिभ्यां करभोरुद्वयेन चान्वितम् ॥ ४९ ॥ तुंगावीषदुन्नतौ गुल्फावरुणनखव्राताश्च तेषां दीधितिभिः । तथा नवाः कोमला अंगुल्योंगुष्ठौ च तान्येव दलानि तैश्च विलसच्छोभमानं पादपंकजं यस्य तम् ॥ ५० ॥ सुमहार्हा मणिव्राता येषु तैः किरीटादिभिः भ्राजमानम् ॥ ५१ ॥ ५२ ॥ पृथक्पृथक् भावोऽभिप्रायो येषां तैः । तत्र पार्षदैः स्वामीति स्तूयमानम् । सनकादिभिर्ब्रह्मेति । ब्रह्माद्यैः सुरे

इत्यादिना । शान्तं घोरत्वाद्यभावेन मनोनयनानन्दकम् ॥ ४६ ॥ चारु रम्यं प्रसन्नं विशदं वदनं मुखं यस्य तम् । चारुहासेन युतं निरीक्षणं यस्य तम् । मध्यमपदलोपी समासः । चारुहासः स्मितम् । यद्वा—चारुणी हासनिरीक्षिते यस्येति ॥ * ॥ चारुसुशब्दयोर्मुहुरुक्तिस्तु तत्तदतिशयबोधनायैव ॥ ४७ ॥ पल्लव आकाशस्तद्वदुदरं यस्येति । " पल्लवोऽस्त्री किशलये विस्तृताकाशयोरपि " इति वैजयन्ती । अनंताण्डकोटिनिवेशनक्षममुदरं यस्येति भावः ॥ * ॥ श्रीरत्र रेखारूपा । प्रेयसीतत्सखीरूपे त्वग्रे वक्ष्येते च ॥ ४८ ॥ करभवन्निम्नोन्नतमरोमकं चोरुद्वयम् । कटितटं काञ्चीपदम् । पूर्वसमासे श्रोणिकटपदयोः स्थितेऽपि द्वित्वे सामान्याभिप्रायेणैकत्वमाश्रित्य कृतविग्रहत्वात्किञ्चिदस्वारस्यं मत्वा द्विवचनान्ताभ्यां विगृह्णाति—यद्वेति ॥ * ॥ कटिरेव तटं विस्तीर्णत्वात, श्रोणिरत्र तदग्रभागस्तयोर्बृहत्त्वं स्थौल्यम् । " मणिबंधादाकनिष्ठं करस्य करभो बहिः " इत्यमरः । **विश्वनाथस्तु**—कटितटं नितम्बः । श्रोणिः कटिः ' कटिः श्रोणिः ककुद्मती ' इत्यमरः । ऊरुद्वयस्य करभसादृश्यं यथायथं स्थूलत्वेन क्रमनिम्नत्वेन च । अन्वितसंयुतादिपदं तत्सौन्दर्यातिशयव्यञ्जनायापूर्वमित्यर्थः ॥ ४९ ॥ व्रातः समूहः । दीधितिभिः किरणैः ॥ * ॥ नवशब्देन सौकुमार्यं, तेन च नवदलवदारुण्यं लक्ष्यते । नवानि यान्यंगुल्यादिरूपाणि दलानि तैरिति वैपरीत्येन रूपकश्चातिशयितार्थम् । अत्र काचिद्व्युत्क्रमेण वर्णनेन तद्दृष्टेस्तथैव भ्रमणं बोधयित्वा लोभाकुलता बोध्यते ॥ ५० ॥ सुमहार्हाः अमूल्याः:। कटिसूत्रं काञ्ची । ब्रह्मसूत्रमुपवीतम् ॥ * ॥ अधुना भूषणादिकमाह—सुमहार्हेति । सुमहार्हे परमश्रेष्ठत्वं कटिसूत्रादीनां ज्ञेयम् ॥ ५१ ॥ पद्मः करे यस्य तम् ॥ * ॥ पद्मस्य पृथगुक्तिरनायुधत्वात् । करसंबंधेनोक्तिरन्यत्रांगेऽपि तद्धारणसंभवात् ॥ ५२ ॥ पार्षदैरनुचरैः । नवभिर्नवसंख्याकैः । तत्र पार्षदैः सुनंदाद्यैः । संभवत्वाद्वचसामपि विशेषणम् । अत आह—वचोभिरिति, वेति ॥ * ॥ परिवारानाह—सुनंदेति । तत्र पार्षदाः सेवकत्वात्सर्वान्तरंगाः । सनकाद्या भक्तत्वेऽपि सेवांशराहित्येन ततो बहिरंगाः । निष्कामत्वेन भगवत्स्वरूपानु

प्रह्लादनारदवसुप्रमुखैर्भागवतोत्तमैः ॥ स्तूयमानं पृथग्भावैर्वचोभिरमलात्मभिः ॥ ५४ ॥ श्रिया पुष्ट्या गिरा कांत्या कीर्त्या तुष्ट्येलयोर्जया ॥ विद्ययाऽविद्यया शक्त्या मायया च निषेवितम् ॥५५॥ विलोक्य सुभृशं प्रीतो भक्त्या परमया युतः ॥ हृष्यत्त नूरुहो भावपरिक्लिन्नात्मलोचनः ॥५६॥

श्वर इति । 'मरीचिरत्र्यंगिरसौ पुलस्त्यः पुलहः क्रतुः । भृगुर्वसिष्ठो दक्षश्च' इति नवभिर्द्विजोत्तमैः परः प्रजापतिरिति । वसुरुपरिचरः । प्रह्लादनारदवसवः प्रमुखा मुख्या येषां तैः परं दैवतमिति च । श्रेष्ठैर्वचोभिः पृथग्भावैर्वचोभिरिति वा ॥५३॥५४॥ इला भूः ऊर्जा बलं विद्याविद्ये जीवानां मुक्तिसंसृतिहेतू माया तु तयोः कारणम् । शक्ति र्ह्लादिनी संवित् ( ज्ञानम् ) आभिरन्याभिश्च निषेवितम् ॥ ५५ ॥ विलोक्य सुभृशं प्रीतोऽस्मत्कृष्णोऽसावेवंभूतः परमेश्वर इति ज्ञात्वेति ॥ ५६ ॥

भक्तित्वेन चान्येऽभ्योऽन्तरंगाः । ब्रह्माद्येषु ब्रह्मरुद्रयोर्वस्तुतस्तु तद्गुणत्वेऽपि जगदधिकारांशाभिमानाभाससद्भावेन ततो बहिरंगतादर्शकत्वम् । अन्ये तु बहिरंगा एव । " मरीचिरत्र्यंगिरसौ पुलस्त्यः पुलहः क्रतुः । भृगुर्वसिष्ठो दक्षश्च " इति नवप्रजापतयो ब्रह्माद्यपेक्षया न्यूनज्ञानादित्वेन बहिरंगा एव । प्रह्लादादयस्तु तत्तन्महागुणत्वेऽपि सर्वतत्तत्परिवारसहितस्य तस्य दैनोपासिकाभिमानितया बहिरेव प्रायस्तिष्ठन्तीति सर्वबहिर्गणिताः । एषां दिङ्नियमश्चागमानुसारात् । यथा पार्षदाः पूर्वाद्यष्टस्वपि दिक्षु, सनकाद्याः पश्चात्, ब्रह्माद्याः ऊर्ध्वादियथास्वदिक्षु, देवस्य दक्षिणे भागे वा । मरीच्याद्या वामे, प्रह्लादादयः संमुखे, नारदस्तु संमुखोऽर्द्ध्व इति । एते च नित्यावरणरूपत्वात्प्रापञ्चिकानामपीशा ज्ञेयाः । यथोक्तं पाद्मोत्तरखंडे—" नित्याः सर्वे परं धाम्नि ये चान्ये च दिवौकसः । ते वै प्राकृतनाकेऽस्मिन्ननित्यास्त्रिदशेश्वराः ॥ " । " तेह नाकं महिमानः सचंते " इति श्रुतिरिति । तत्र श्रेष्ठैरित्यमलात्मभिरित्यस्यार्थः । अविद्यमानं मलं दोषो यत्रेति । पृथग्भावैरिति वचोविशेषणमेव कृतं तथापि वक्तृष्वेव तात्पर्यम् । अमलात्मभिरिति परिवारस्य विशेषणम् । तेन च सर्वेषामभिप्रायाणां युक्ततमत्वं व्यक्तम् ॥ ५३ ॥ ५४ ॥ तयोर्विद्याविद्ययोः । आभिः श्र्यादिभिः । अन्याभिर्विमलोत्कर्षिणीज्ञानक्रियायोगाप्रह्वीसत्यानुग्रहेशानाभिश्च ॥ * ॥ आवरणरूपेण वर्तमानाः शक्तीराह—श्रियेति । तत्र श्रीरैश्वर्यम् । पुष्टिर्बलम् । गीर्ज्ञानम् । कान्तिः श्रीः । कीर्तिर्यशः । तुष्टिर्वैराग्यमिति षट् भगशब्दवाच्याः शक्तयः । इला भूशक्तिः संधिन्याख्या अंतरंगा, यस्या विभूतिः पृथ्वी । ऊर्जा लीलाशक्तिरंतरंगा, यस्या विभूतिस्तु लोकस्था तुलसी । विद्याविद्ये जीवानां मुक्तिसंसृतिहेतू बहिरंगे, शक्तिर्महालक्ष्मीह्लादिन्यंतरंगा । माया विद्याविद्ययोर्मूलभूता बहिरंगा, चकारात्तदधीना जीवशक्तिस्तटस्था, एताभिर्नितरां सेवितम् । अत्र **तोषिणी—**ह्लादिनी स्वरूपानंदानुभाविनी संवित् चिद्रूपा स्वरूपभूतमहाशक्तिः, सैव हि शक्तिशब्दस्य प्रथमप्रवृत्तिहेतुर्मायातिरिक्ता च । तया महालक्ष्म्याख्यया तदंतरंगया निषेवितं तया तत्स्पर्शात् । तदुक्तम्—" ह्लादिन्या संविदाश्लिष्टः सच्चिदानंद ईश्वरः " इति । संविदित्यस्यान्ते ज्ञानमित्यधिका टीका केनचिदबुद्ध्वैव कल्पितेति लक्ष्यते । मायया च बहिरंगया निषेवितं चाद्गौणताव्यक्तेस्तया तदस्पर्शात् । तदुक्तं श्रीवैष्णवे—" ह्लादिनी संधिनी संवित्त्वय्येका सर्वसंस्थितौ । ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते ॥" इति । तथा द्वितीये च—" विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया " इत्यादि । अनयोरेव मूर्तिभेदाः श्र्यादयः प्रापञ्चिकाप्रापञ्चिकभेदेन द्विविधत्वात्तासां जात्या त्वेकत्वं विवक्षितम् । तत्र श्रीः संपदः संपादयित्री, पुष्टिः शरीरस्य, गीर्वाचः, कांतिः शोभायाः, कीर्तिर्यशसः, तुष्टिरंतःकरणस्य, इला भुवः, ऊर्जा लीलायाः, विद्या यथार्थज्ञानस्य, अविद्या तदज्ञानस्य । तत्र क्वचित्तत्तत्प्रेम्णापि भवतीति ह्लादिनीवृत्तिरपि,--एतदुपलक्षणत्वेनान्या अपि ज्ञेयाः । तदुक्तं पाद्मोत्तरखंडे—" एवं परपदे नित्यैर्मुक्तैर्हरिपरायणैः । दिव्याभिर्महिषीभिश्च राजते हरिरीश्वरः ॥ " इति ॥ ५५ ॥ हृष्यन्ति प्रादुर्भूतानि तनूरुहाणि रोमाणि यस्य स तथा । भावेन परप्रेम्णा परिक्लिन्ने आनंदाश्रुजलस्नाते लोचने यस्य सः । परिक्लिन्नं द्रवीभूतं आत्मा चित्तं लोचने च

गिरा गद्गदयाऽस्तौषीत्सत्त्वमालंब्य सात्वतः ॥ प्रणम्य मूर्ध्नावहितः कृतांजलिपुटः शनैः ॥ ५७ ॥ इति श्रीभा० म० द० पूर्वार्धेऽक्रूरप्रतियाने भगवत्प्रयाणनिरूपणं नाम एकोनचत्वारिंशोध्यायः ॥ ३९ ॥ अक्रूर उवाच ॥ नतोऽस्म्यहं त्वाखिलहेतुहेतुं नारायणं पूरुषमाद्यमव्ययम् ॥ यन्नाभिजातादरविंदकोशाद्ब्रह्माऽऽविरासीद्यत एष लोकः ॥ १ ॥ भूस्तोयमग्निः पवनः खमादिर्महानजादिर्मन इंद्रियाणि ॥ सर्वेंद्रियार्था विबुधाश्च सर्वे ये हेतवस्ते जगतोंगभूताः ॥२॥ नैते स्वरूपं विदुरात्मनस्ते ह्यजादयोऽनात्मतया गृहीताः ॥ अजोऽनुबद्धः स गुणैरजाया गुणात्परं वेद न ते स्वरूपम्॥३॥

॥५७॥ इति श्री० भा० म० दशमे पूर्वार्धे टीकायामेकोनचत्वारिंशोऽध्यायः ॥३९॥ चत्वारिंशे ततोऽक्रूरः कृष्णं मत्वेश्वरेश्वरम् ॥ प्रणम्य भक्त्या तुष्टाव सगुणागुणभेदतः ॥ १ ॥ श्रीकृष्णं प्रणमति । नतोऽस्मीति । हे कृष्ण त्वा त्वां नतोऽस्मि । त्वमस्मत्पितृव्यः कुतो मां बालं नतोऽसि तत्राह । आद्यं पुरुषमव्ययं चानादिनिधनमित्यर्थः । कुत एतत् । अखिलहेतूनां हेतुम् । स तु नारायणो नाहमिति चेत्तत्राह । नारायणं त्वाम् । किं नारायण इति मां स्तौषि काऽत्र स्तुतिः सत्यमेवेत्याह । यन्नाभिजातादिति । यतो ब्रह्मणः एष लोक आविरासीत् । अनेन नारं जीवसमूहं तस्य अयनत्वात् नारायण इति सूचितम् ॥ १ ॥ अखिलहेतुत्वं प्रपंचयति । भूरिति । खस्यादिरहंकारः । अजा माया तस्या आदिः पुरुषः । एते ये जगतो हेतवस्ते सर्वे तवांगभूता अंगाच्छ्रीमूर्तेर्भूताः जाताः । उपसर्जनभूता वा ॥ २ ॥ नन्वतिस्तुतिः कथं क्रियतेऽहमेवान्यत उत्पन्नस्तत्परतंत्रश्चेत्याशंक्य तवैषा माया त्वत्पारमार्थ्यं तु न कोऽपि वेदेत्याह । नैत इति । एते अज आदिर्येषां ते आत्मनस्ते स्वरूपं न विदुः । अना

यस्येति वा ॥ * ॥ विलोक्येति तैर्व्याख्यातम् । तत्राध्याहारेण व्याचष्टेऽस्मत्कृष्णोऽसावित्यादि । तथोक्तं वैष्णवे–" बलकृष्णौ तदाऽक्रूरः प्रत्यभिज्ञाय विस्मितः " इति ॥ ५६ ॥ सात्वतोऽक्रूरः । सत्त्वं धैर्यं व्यवसायमिति यावत्, आत्मभावं वा । " सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मत्वे व्यवसायासुचित्तेष्वस्त्री तु जन्तुषु ॥ " इति मेदिनी ॥ * ॥ सत्त्वं धैर्यम् । रुद्धकंठत्वेन शनैरेव अहो अक्रूरभाग्यमिति विमृशंस्तं नृपं प्रत्याह मुनीन्द्रः–हे भारतेति । भरतवंश्यैर्भवाद्भिरपि बहुशोऽसावनुभूत एवेति भावः ॥ ५७ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कंधे पूर्वार्द्धे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ईश्वरेश्वरं सर्वेश्वरम् । सगुणागुणभेदाभ्यामिति तृतीयार्थे तसिः ( १ ) । तत्राक्षेपे । इत्यर्थ इति–उभयपदसंगृहीतोऽयमर्थ इत्याशयः । अत्र हेतुमाक्षिपति–कुत इति । एतत् अनादिनिधनत्वम् । ' सोऽखिलहेतुहेतुः ' इत्युक्तेः । इति चेत् इत्युक्ते । तत्राक्षेपे उत्तरमाह–मां किं स्तौषीति, नारायणस्त्वम् । अत्र मन्नारायणत्वे । सत्यं यथार्थमेव । यस्य नारायणस्य नाभिजातात् । केचित्तु नारपदेन नराद्यखिलवस्त्ववकाशप्रदत्वेनायनत्वान्नारायण आकाश एव किं न स्यात्तद्वारणाय–पूरुषमिति । पुरुषाणामपि पितृपितामहादिवद्बीजपरंपरा स्यात्तद्वारणाय आदिमिति वदंति, तदत्राचारुत्वद्ध्वातीति ॥ * ॥ ० ॥ १ ॥ सर्वकारणत्वं विशदयति–' अनंतरस्य विधिर्वा प्रतिषेधे वा ' इति न्यायेन खस्यादिरित्युक्तम् । एवमजादिरिहापि । इंद्रियार्थाः शब्दादयः । विबुधा इन्द्रियाधिष्ठातारः । श्रीमूर्तेर्नारायणात् । " नाभ्या आसीदंतरिक्षꣳ शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकानकल्पयन् ॥ ", " श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत " इत्यादिश्रुतेः । यद्येत एव जगद्धेतवस्तर्हि किं मयेति चेदाह– उपसर्जनभूता गौणीभूता न ह्यङ्गिनं प्रधानं विना गुणीभूतैरंगैः किञ्चित्कर्तुं शक्यत इति ॥ * ॥ श्रीमूर्तेर्जाता " वाचां वह्निर्मुखं क्षेत्रम् " इत्याद्युक्तेः ॥ २ ॥ अत्राक्षिपति–नन्विति । तत्परतंत्रोऽन्याधीनः । इति भाव इति–चेतनस्येन्द्रियाविषयत्वात् " न हि ज्ञातारं

श्रीभगवानुवाच ॥ आयास्ये भवतो गेहमहमार्यसमन्वितः ॥ यदुचक्रद्रुहं हत्वा वितरिष्ये सुहृत्प्रियम् ॥ १७ ॥ श्रीशुक उवाच ॥ एवमुक्तो भगवता सोऽक्रूरो विमना इव ॥ पुरीं प्रविष्टः कंसाय कर्माऽऽवेद्य गृहं ययौ ॥ १८ ॥ अथापराह्णे भगवान्कृष्णः संकर्षणाऽन्वितः ॥ मथुरां प्राविशद्गोपैर्दिदृक्षुः परिवारितः ॥ १९ ॥ ददर्श तां स्फाटिकतुंगगोपुरद्वारां बृहद्धेमकपाटतोरणाम् ॥ ताम्राऽऽरकोष्ठां परिखादुरासदामुद्यानरम्योपवनोपशोभिताम् ॥ २० ॥

संबोधयति ॥ १६ ॥ आदौ तावद्यदुचक्राय द्रुह्यतीति यदुचक्रध्रुक् तं कंसं हत्वा सुहृदां प्रियं वितरिष्ये दास्यामि ॥ १७ ॥ रामकृष्णावानीताविति स्वकृतं कर्मावेद्य समर्प्यैति ॥ १८ ॥ गोपैः परिवारितः प्राविशत् ॥ १९ ॥ श्रीकृष्णदृष्टां पुरीमनुवर्णयति चतुर्भिः । ददर्श तामिति । स्फाटिकानि तुंगानि गोपुराणि पुरद्वाराणि गृहद्वाराणि च यस्यां ताम् । बृहंति हेममयानि कपाटानि तोरणानि च यस्यां ताम् । ताम्रं चारः आरकूटश्च तन्मयाः कोष्ठा धान्यागाराश्वशालादयो यस्यां ताम् । परिखाः

यदूत्तमेत्युक्ते यादवांतरवारणायाह—उत्तमश्लोकेति । तादृशा अनेके युधिष्ठिरादयः सन्ति तद्वारणायाह—नारायणेति ॥ * ॥ हे देवदेवेति । तत्र त्वद्गमनेन ध्रुवं महापुण्यं स्यादेवेति भावः । यद्वा—देवानां ब्रह्मादीनां पूज्येति । यद्यपि स्व एव सेवकास्त्वदनुग्राह्यास्तथापि जगन्नाथत्वेन मामप्यनुग्रहीतुमर्हसीति भावः । ननु पुण्यवत एवानुगृह्णामि तत्राह—पुण्येति । तव श्रवणादिनाहमपि पुण्यवानेव । यद्वा—यस्य श्रवणकीर्तनाभ्यामपि पुण्यं स्यात्तस्य दर्शनादिना ममापि महापुण्यं जातमेवेति भावः । किञ्च—यदूत्तमेति—यदुकुलावतीर्णेन तच्छ्रेष्ठेन त्वया तत्कुलजातोऽहमनुग्रहीतुं योग्य एवेति भावः । ननु तथापि कंससंगी त्वं श्रीगोकुले जाताऽपराधश्च कथमनुग्राह्य इत्याशंक्याह—उत्तमश्लोकेति । पूतनादीनामपि तादृशगतिदानेन सर्वोत्कृष्टनिजकीर्त्यपेक्षयेत्यर्थः । नन्वीश्वरस्य मम तादृशीच्छा क्वचिद्भवेत्क्वाचिन्न भवेदित्याशंक्याह—नारं जीवसमूहस्तस्यायनमाश्रयेति । भवतु मा वा तथापि जीवमात्रस्य त्वमेव गतिरिति भावः । परमवैयग्र्येण सपादग्रहं प्रणमति—नम इति । एवं श्रीकृष्णमेकं प्रत्येव प्रार्थनादिकम् । अन्योऽन्यं महास्निग्धतया श्रीबलदेवेन सह तस्याभेदात्तस्मात्प्राधान्याच्चेति । **विश्वनाथस्तु**—हे देवदेव त्वं देवेषु दीव्यसि, अद्य मद्गृहे दीव्य । त्वं जगतां नाथः, अद्य मद्गृहस्य नाथो भव । हे पुण्यश्रवणकीर्तन अद्य मद्गृहमपि पुण्यं कुरु । हे यदूत्तम यदोर्मम गृहमागच्छ । हे उत्तमश्लोक पतितपावनत्वयशः प्रकाशयन्पतितस्य मम गृहं पुनीहि ॥ १६ ॥ आर्यो बलदेवः । वितरिष्ये 'विपूर्वस्तरतिर्दाने' इति व्याडिः ॥ * ॥ आर्येण श्रीरामेण सम्यगन्वित इति गोपैः साहित्यं निरस्तम्, तेषां चिरं तत्रानवस्थानात् । कदेत्यपेक्षायामाह—यदुचक्रेति । यदेति शेषः । संकेतेनैव तदुक्तिः, मंत्रभंगभयाद्दुष्टत्वाद्वा । सुहृदां यादवादीनां श्रीवसुदेवमोचनादिना प्रियं प्रीतिं—पितरौ बद्धौ सर्वे यादवाश्च दुःखिता अतोऽत्रागतस्य मम त्वद्गृहगमनादिनातिथ्यसुखं न योग्यमिति भावः । **विश्वनाथस्तु**—सत्यं भो मां यदूत्तमं ब्रूषे तर्हि यदुचक्रद्रुहं हत्वैव त्वद्गृहमायास्ये ॥ १७ ॥ एवमुक्तरीत्या । भगवता सहागमनाभावाद्विमना इवेति कंसदौर्जन्याद्वा ॥ * ॥ स परमोत्सुकः । श्रीभगवदानयने परमहृष्टोऽपि । इवेति वाक्यालंकारे । यद्वा—आयास्य इति तदंगीकारेण कंसहननप्रतिज्ञादिना चात्यन्तवैमनस्याभावात् । प्रायः श्वः कंसं मारयित्वा श्रीभगवानागमिष्यतीति विभाव्य बहुधा निजगेहमुपस्कर्तुमिति ज्ञेयम् । अत एव तदासक्त्या तत्र तस्य श्रीभगवदागमनपर्यंतमन्यत्कर्मादिकं किमप्यग्रे कुत्रापि न श्रूयते ॥ १८ ॥ अथाक्रूरप्रेषणोत्तरम् ॥ * ॥ ० ॥ १९ ॥ अथ मथुरावर्णनम् ॥ तां

सौवर्णशृंगाटकहर्म्यनिष्कुटैः श्रेणीसभाभिर्भवनैरुपस्कृताम् ॥ वैदूर्यवज्राऽमलनीलविद्रुमैर्मुक्ताहरिद्भिर्वलभीषु वेदिषु ॥ २१ ॥ जुष्टेषु जालामुखरंध्रकुट्टिमेष्वाविष्टपारावतबर्हिनादिताम् ॥ संसिक्तरथ्यापणमार्गचत्वरां प्रकीर्णमाल्यांकुरलाजतंडुलाम् ॥ २२ ॥ आपूर्णकुंभैर्दधिचंदनोक्षितैः प्रसूनदीपावलिभिः सपल्लवैः ॥ सवृंतरंभाक्रमुकैः सकेतुभिः स्वलंकृतद्वारगृहां सपट्टिकैः ॥ २३ ॥

परितःखातगर्तास्ताभिर्दुरासदां दुर्गमाम् । उद्यानानि इह दूरस्थानानि कृत्रिमवनानि रम्याण्युपवनानि च निकटानि तैरुपशोभिताम् ॥ २० ॥ सौवर्णाः शृंगाटकाश्चतुष्पथा हर्म्याणि धनिनां गृहाणि च निष्कुटा गृहोचिता आरामाश्च तैः । श्रेणीनामेकरूपशिल्पोपजीविनां सभाभिरुपवेशस्थानैरन्यैश्च भवनैर्गृहैरुपस्कृतामलंकृताम् । अमलाः स्फटिकाः । हरितो मरकताः । वैदूर्यादिरत्नैर्जुष्टेषु वलभ्यादिष्वाविष्टैरुपविष्टैः पारावतैर्बर्हिभिश्च नादिताम् । तत्र वलभ्यो गृहपुरोभागेषु वक्रदारुच्छादनानि । वेदयो वलभीनामधोदेशे विरचिता अवष्टंभवेदिकाः जालामुखरंध्राणि गवाक्षच्छिद्राणि कुट्टिमानि मणिबद्धा भमयस्तेष्विति । रथ्या राजमार्गाः । आपणाः पण्यवीथयः । मार्गा अन्ये च । चत्वराण्यंगणानि । संसिक्तानि रथ्यादीनि यस्यां ताम् । प्रकीर्णा माल्यादयो यस्यां ताम् ॥ २१ ॥ २२ ॥ तथा स्वलंकृतानि द्वाराणि येषां ते गृहा यस्यां ताम् । कैः । आपूर्णैः कुंभैर्दध्ना चंदनेन चोक्षितैः सिक्तैः प्रसूनानां दीपानां चावलयो येषु तैः । वृंतैः फलगुच्छैरुपलक्षिता रंभाः क्रमुकाश्च तत्सहितैः । सकेतुभिः केतवो ध्वजास्तत्सहितैः । पट्टिका वितास्तिविस्तारपट्टवस्त्राणि तत्सहितैः । तत्रेयं रीतिः । द्वारेषूभयतस्तंडुलानामुपरि पूर्णकुंभास्तत्परितः प्रसूनावलयः कंठे पट्टिका

मथुराम् । तोरणानि द्वारबहिर्भागाः । "तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः । 'आरकूटश्च पित्तलम्' इत्यभिधानचिंतामणिः । आरपदेनारकूटग्रहस्त्वेकदेशन्यायेन[1] बोध्यः । उपवनानि प्रमदवनानि वा ॥ * ॥ कोष्ठानि दुर्गप्राकारा इत्यपि केचित् ॥ २० ॥ "शृंगाटकं भवेद्वारिकंटके च चतुष्पथे" इति मेदिनी । 'हर्म्यं तु धनिनां गृहम्' इति शाश्वतः । "निष्कुटस्तु गृहोद्याने स्यात्केदारकपाटयोः" इति मेदिनी । "श्रेणिः स्त्रीपुंसयोः पंक्तौ समानशिल्पिसंहतौ" इति च । "सभा समाजके गोष्ठ्यां द्यूतमंदिरयोरपि" इति च । 'भवनं स्याद्गृहे भावे' इति च । उपस्कृतामलंकृताम् । वलभीष्वाच्छादनवक्रदारुषु । वेदिषु परिष्कृतभूमिषु ॥*॥ वलभी । पटलाधारो वंशपञ्जरस्तस्य चूडा वेति **क्षीरस्वामी** । "आच्छादनं स्याद्वलभी गृहाणाम्" इति हलायुधः । 'छाजा' इति भाषायामपि मध्यदेशीयानाम् । सा चेष्टकादिनिर्मितगृहप्रान्तैः पाषाणादिनिर्मितच्छादनश्रेणी 'वलभी चंद्रशालिका' इति त्रिकांडशेषः । सा च गृहोपरि गृहम् । तथा च माघकाव्ये—"यस्यामसेवंत नमद्वलीकाः समं वधूभिर्वलभीर्युवानः" इति । वेदिर्गृहाग्र इष्टकादिबद्धा विश्रान्तिभूः ॥ ( २१ ) ॥ नादितां कारितनादाम् । तत्प्रतिध्वनियुक्तान्तर्गृहामित्यर्थः ॥ २१ ॥ २२ ॥ तत्र कुंभाद्यलंकारे । क्रमुकः पूगः "क्रमुकस्तु पुमान्भद्रमुस्तके ब्रह्मदारुणि । फले कार्पासिकायाश्च पट्टिकालोध्रपूगयोः॥" इति मेदिनी । रंभाः कदली

[1] नामैकदेशे नाममात्रस्य ग्रहणं सत्या सत्यभामा, भीमो भीमसेन इत्यादिवत् ।

नमस्ते वासुदेवाय सर्वभूतक्षयाय च ॥ हृषीकेश नमस्तुभ्यं प्रपन्नं पाहि मां प्रभो ॥३०॥ इति श्रीभागवते महापुराणे दशमस्कंधे पूर्वार्धेऽक्रूरस्तुतिर्नाम चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥ ॥ श्रीशुक उवाच ॥ स्तुवतस्तस्य भगवान्दर्शयित्वा जले वपुः ॥ भूयः समाहरत्कृष्णो नटो नाट्यमिवात्मनः॥१॥

पतन्प्रार्थयते नम इति द्वयेन । विज्ञानमेव मात्रा मूर्तिर्यस्य तस्मै । अत एव सर्वप्रत्ययहेतवे समस्तज्ञानकारणाय । किं च पुरुषस्य ये ईशाः सुखदुःखादिप्रापकाः कालकर्मस्वभावादयस्तेषां प्रधानाय नियंत्रे । कुतः । ब्रह्मणे परिपूर्णाय । कि श्च अनंतशक्तये अनंताः शक्तयो यस्य । यद्वा अनंता मायाख्या शक्तिर्यस्य तस्मै । अथ वा प्रधानं प्रकृतिः पुरुषस्तत्प्रवर्तक ईशः काल एतात्रितयात्मने ब्रह्मणे। वक्ष्यति च भगवान् "प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यंजकः कालो ब्रह्म तत्रितयं त्वहम् ॥" इति ॥ २९ ॥ सर्वप्रत्ययहेतुत्वमभिव्यंजयन्स्तौति । नमस्त इति । वासुदेवाय चित्ताधिष्ठात्रे । सर्वभूतक्षयाय क्षय आश्रयः । अहंकारश्च प्राणिनामाश्रयः । ततश्चाहंकाराधिष्ठात्रे संकर्षणायेत्यर्थः । हृषीकेशेति । बुद्धिमनसोरधिष्ठात्रोः प्रद्युम्नानिरुद्धयोरेकीकृत्य ग्रहणम् । शरणागतं मां पाहीति प्रार्थना ॥ ३० ॥ इति श्रीभा० म० दशमे पूर्वार्धे टीकायां चत्वारिंशोऽध्यायः ॥ ४० ॥ छ ॥ एकचत्वारिंशकेऽहव्रजकं प्रविशन्पुरीम् ॥ ततो वरानदानुष्टः सुदाम्नो वायकस्य च ॥ १ ॥ सशंकमक्रूरमनः

पूर्णस्य सर्वनियंतृत्वं स्फुटमेवेति न केवलं परिपूर्णरूप एवेत्याह—किश्चेति । अनंता अमिताः । शक्तयः सामर्थ्यानि । बहुशक्तिकल्पनापेक्षया सर्वव्यवहारसाधिकैकशक्तिकल्पना वरीयसी बहुवनचरसिंहाश्रयणन्यायेनेत्याह—यद्वेति । अनंता ज्ञानमृते नान्तो यस्याः सानंता । पुरुषेशेत्यादिपदस्य पूर्वव्याख्याने क्लिष्टकल्पनामपेक्ष्य प्रसिद्धार्थमाह—अथ वेति । वक्ष्यति एकादशे भगवानुद्धवाय 'प्रकृतिः' इतीममर्थम् ॥ * ॥ पादयोः पतन्नात्मानं निवेदयति--नम इति । विज्ञानस्य मदनुभवस्य मात्रा परिमाणं यतस्तस्मै । यावन्तं स्वविषयकमनुभवं ददासि तावदेव त्वामनुभवामीत्यर्थः । अन्यविषयकज्ञानानामपि त्वमेव हेतुरित्याह--सर्वेति । यतः पुरुषेति पुरुषोन्तर्यामी तद्रूपेण कर्मादिषु प्रेरयसि, ईश ईश्वरस्तद्रूपेण कर्मादिफलं ददासि, प्रधानं माया तद्रूपेण विषयेषु त्वमेव बध्नासि, ब्रह्मज्ञानैकस्वरूपं तद्रूपेण स्फुरितं सत्तस्माद्बंधान्मोचयसि च, अनंतशक्तिर्भगवाँस्तद्रूपेण स्वस्मिन्भक्तिं प्रदाय कृतार्थयसि च ॥ २९ ॥ अभिव्यञ्जयन्प्रकटयन् । अहंकारमाश्रित्यैव सर्वे व्यवहरन्तीति प्रसिद्धम् । ततश्चाहंकारस्याश्रयत्वादेव । इत्यर्थ इति—अहमित्यभिमानलक्षणं संकर्ष इत्याचक्षत इत्युक्तेरयमर्थः । इयमक्रूरस्तुतिर्मरुद्रूपेण कृष्णस्य श्रुतौ प्रसिद्धा । तथा च श्रुतिः—"सप्तसप्त शाकिन एकमेका शता ददुः यमुनायामधि श्रुतमुद्राधो गव्यं मृजेति राधो अश्वं मृजे" इति । एतदर्थस्तु—अघमर्षणकाले भगवंतं दृष्ट्वाऽक्रूरस्तद्देवतां मरुतं स्तौति—सप्तसप्तैकोनपञ्चाशत् शाकिनः शक्नुवन्ति य इति, वा शक्नुवंत्येतैरिति शाकिनः शक्तिमन्तः, शक्तिप्रदा वा मरुतः । एकमेका प्रत्येकम् । शता 'शतमैश्वर्यं भवति ' इति यास्कः । ऐश्वर्याणि ददुः । यतो मया श्रुतम् 'एषास्य परमा संपत्' इति वेदशिरोभ्य आकर्णितम् । राधो धनं सूत्रान्तर्यामिरूपं यमुनायामधि मध्ये, मृजे मृगयामि पश्यामीत्यर्थः । तदेव राध उत् ऊर्ध्वं गव्यं गोषु सूर्यरश्मिषु स्थितं मृजे तथाश्वमश्ववति रथे स्थितं तदेवातिमृजे अधो भूलोकेऽपि पश्यामीत्यर्थः ॥ * ॥ वासुदेवायेति । हे वसुदेवनंदन भवानेव मम सेव्योऽस्तु न तु दुष्टभूपतिरिति भावः । सर्वभूतानां क्षयाय निवासाय । स्वस्मिन्मां वासय न तु गृहांधकूप इति भावः । हृषीकेशेति—मम मनआदींद्रियाणि भवानेव गृह्णातु न तु कलत्रपुत्रादिरिति भावः ॥३०॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कंधे पूर्वार्धे चत्वारिंशोऽध्यायः ॥४०॥ ॥ रजकं वस्त्रनिर्णेजकम् । ततो रजकहननोत्तरम् । सुदाम्नो मालाकारस्य । वायकस्य सौचिकस्य च ( १ ) । सशंकं मारणार्थमेतावहं नेष्याम्यतोऽहं पापीयानस्मीति शंकाकुलम् । स्वधाम निजस्वरूपम् । तस्य संदर्शनमेव सती कृपा ततः । प्रमोद्य प्रतोष्य । अलंकृता चासावनंतैर्महोत्सवैर्हस्तिमल्लादिश्रृंगारैर्यद्वा—अनंतेन बलेन महेनातिपूज्यतमेन श्रीकृष्णेन चोत्सवो ययोर्देवकीवसुदेवयोस्ताभ्यामाढ्या युता ताम् (२)।तस्याक्रूरस्यात्मनो वपुर्दर्शयित्वा। नाट्यं नटनविषयम्, गणेशाम्बिकादिरूप

सोपि चांतर्हितं वीक्ष्य जलादुन्मज्ज्य सत्वरः ॥ कृत्वा चावश्यकं सर्वं विस्मितो रथमागमत् ॥ २ ॥ तमपृच्छद्धृषीकेशः किं ते दृष्ट मिवाद्भुतम् ॥ भूमौ वियति तोये वा तथा त्वां लक्षयामहे ॥ ३ ॥ अक्रूर उवाच ॥ अद्भुतानीह यावंति भूमौ वियति वा जले ॥ त्वयि विश्वात्मके तानि किं मेऽदृष्टं विपश्यतः ॥ ४ ॥ यत्राद्भुतानि सर्वाणि भूमौ वियति वा जले ॥ तं त्वाऽनुपश्यतो ब्रह्मन्किं मे दृष्टमिवाद्भुतम् ॥ ५ ॥

प्रमोद्य स्वधाम संदर्शनसत्कृपातः ॥ स्वराजधानीं मथुरामपश्यदलंकृतानंतमहोत्सवाढ्याम् ॥ २ ॥ १ ॥ २ ॥ ३ ॥ भूमौ वियति जले वा यावंत्यद्भुतानि तानि त्वय्येव संति तं च त्वां पश्यतो मे किमद्भुतमदृष्टम् । अपि तु सर्वं दृष्टमित्यर्थः ॥ ४ ॥ ननु मत्प्राप्तेः पूर्वमेव त्वं विस्मितमुखो लक्षितोऽस्यतो भूमौ वियति जले वा किमप्यद्भुतं दृष्टमेवेति चेदत आह । यत्राद्भुतानीति । यत्र त्वयि सर्वाण्यद्भुतानि संति तं सर्वाद्भुताधिष्ठानं त्वामिह पश्यतो मे त्वत्तोऽन्यत्र भूम्यादौ किमद्भुतं दृष्टम् । त्वां विना न तत्र

मिव । नटो रूपाभिनयकर्ता ॥*॥ तस्येत्यनादरे षष्ठी। तमपृष्ट्वैवेत्यर्थः। समाहरदन्तर्धापयामास । नाट्यमिवेत्युपसंहारे दृष्टान्तः । नटो नाट्यं यथोपसंहरति तथैव कृष्णो वैकुंठं वैकुंठीयञ्च सनातनं वस्तु तत्सर्वमुपसंजहारेत्यर्थः ॥१॥ सोऽपि अक्रूरोऽपि । आवश्यकं नित्यं संध्यावंदनादि ॥ * ॥ ० ॥ २॥ तमक्रूरम् । ते त्वया । इवशब्देन सर्वाश्चर्यमये मय्येतन्नाद्भुतमित्युक्तम् । तथेति—यथा कश्चिदद्भुतदर्शी व्यापृतचित्तो भवति ॥ * ॥ तथा त्वां लक्षयामह इति—तव नेत्रे सास्रे प्रोत्फुल्ले एवात्र प्रमाणमिति भावः ॥ ३ ॥ इत्यर्थ इति—सर्वाद्भुताधिष्ठानदर्शने सर्वं दृष्टं हस्तिपदन्यायेनेति भावः ॥ * ॥ पूर्वं तद्रूपं तदभेदेन ज्ञातवान्, इदानीं तु सदयतत्प्रश्नप्रभावेण लब्धविशेषज्ञानस्तमेव सत्सर्वदर्शकं मत्वा तद्रूपमपि तद्वैभवमेव विमृश्याह—अद्भुतानीति । भूम्यादिषु यावंत्यद्भुतानि सन्ति तानि तावन्ति त्वय्येवेह संति, तत्र हेतुः—मिश्वात्मके विश्वस्य मूलरूपत्वात् । विश्वेन कार्येणा श्रित आत्मा यस्य तादृशे । मध्यपदलोपी बहुव्रीहिः । " यस्मिन्विज्ञाते सर्वं विज्ञातं स्यात् " इति श्रुतेः । तस्माद्विपश्यत इति विपश्यता मे मया भूम्यादिषु किमद्भुतं दृष्टं न किमपि, किन्तु यत्किमपि दृष्टं तत्त्वय्येव दृष्टमित्यर्थः । त्वद्रूपे दृष्ट एव तद्दर्शनादिति भावः ॥ ४ ॥ पुनराशंकते—नन्विति । यतो मत्संगात्पूर्वमेव विस्मितोऽतो हेतोः । अतोऽत्र । इह रथे । इत्यर्थ इति—"यस्मिन्दृष्टे सर्वं दृष्टं स्यात् " इति श्रुत्यर्थोऽप्यत्र सूचित इति भावः । संबुद्धिस्तु स्वयमेवोपस्थिता भवत्यतो ब्रह्मेति द्वितीयान्तं पदं, तथा च त्वां ब्रह्म परिपूर्णं पश्यत इति योज्यम्। नलोपे संबुद्धौ विशेषाभावात् ॥ * ॥ त्वद्रूपेऽस्मिन्दृश्यमाने तु तानि सर्वाण्यप्य द्भुतत्वाय न कल्पन्ते किं तु त्वद्रूपमेवेदमित्याह—यत्रेति । भूम्यादिषु यान्यद्भुतान्यपि सर्वाणि यत्र त्वयि संति तं त्वामनुपश्यत इति भाग्यतः, संप्रति निरंतरं पश्यता मया किमन्यदद्भुतमिह दृष्टं किन्त्विदमेव त्वद्रूपं पूर्वतोऽप्य द्भुतं दृश्यत इत्यर्थः । तत्र हेतुगर्भं विशिनष्टि—ब्रह्मेति । अथ कस्मादुच्यते ब्रह्म " बृंहति बृंहयति च " इत्यादिश्रुतौ " बृहत्त्वाद् बृंहणत्वाच्च यद्ब्रह्म परमं विदुः " इति श्रीविष्णुपुराणे च त्वय्येव सर्वबृहत्तमत्त्वस्य दृष्टत्वात् । तत्रापि ' यन्मर्त्यलीलौपयिकम् ' इत्यादौ ' विस्मापनं स्वस्य च सौभगर्द्धेः परं पदम् ' इति प्रसिद्ध्या त्वद्रूपस्य परमतत्त्वादिति भावः । ' ब्रह्मन् ' इति पाठेऽपि स एवार्थः । ' दृष्टमिव ' इति पाठे

इत्युक्त्वा चोदयामास स्यंदनं गांदिनीसुतः ॥ मथुरामनयद्रामं कृष्णं चैव दिनात्यये ॥ ६ ॥ मार्गे ग्रामजना राजंस्तत्रतत्रोपसंगताः ॥ वसुदेवसुतौ वीक्ष्य प्रीता दृष्टिं न चाऽऽददुः ॥ ७ ॥ तावद् व्रजौकसस्तत्र नंदगोपादयोऽग्रतः ॥ पुरोपवनमासाद्य प्रतीक्षंतोऽवतस्थिरे ॥ ८ ॥ तान्समेत्याह भगवानक्रूरं जगदीश्वरः ॥ गृहीत्वा पाणिना पाणिं प्रश्रितं प्रहसन्निव ॥ ९ ॥ भवान्प्रविशतामग्रे सह यानः पुरीं गृहम् ॥ वयं त्विहावमुच्याथ ततो द्रक्ष्यामहे पुरीम् ॥ १० ॥ अक्रूर उवाच ॥ नाहं भवद्भ्यां रहितः प्रवेक्ष्ये मथुरां प्रभो ॥ त्यक्तुं नार्हसि मां नाथ भक्तं ते भक्तवत्सल ॥ ११ ॥ आगच्छ याम गेहान्नः सनाथान्कुर्वधोक्षज ॥ सहाग्रजः सगोपालैः सुहृद्भिश्च सुहृत्तम ॥ १२ ॥

किंचिदद्भुतमित्यर्थः । ब्रह्मन् हे परमेश्वरेत्यर्थः । ब्रह्मेति वा पाठः ॥ ५ ॥ गांदिनीसुतोऽक्रूरः ॥ ६ ॥ दृष्टिं नाददुः पश्यंत एव स्थिता इत्यर्थः ॥ ७ ॥ रामकृष्णागमनं प्रतीक्षमाणाः स्थिताः ॥ ८ ॥ प्रश्रितं विनीतम् ॥ ९ ॥ स्वगृहं च प्रविशताम् । अवमुच्योत्तार्य विश्राम्येत्यर्थः ॥ १० ॥ ११ ॥ साग्रजः सह गोपालैरित्यर्थः ॥ १२ ॥

त्विवशब्दस्तस्य दर्शनस्य न्यूनत्वमेव बोधयतीति दिक् ॥ ९ ॥ इति एवम् । दिनात्ययेऽपराह्णे ॥ * ॥ अनयदित्यनेन श्रीमुनींद्रस्य गोकुलजनत्वाभिमानो बोध्यते । दिनात्ययेंत्ययामे 'तथापराह्णे' इति वक्ष्यमाणात्, वक्ष्यमाणबहलर्लीलाकालसमावेशाच्च, "तयोर्विचरतोः स्वैरमादित्योऽस्तमुपेयिवान्" इति च वक्ष्यते । तथोक्तं श्रीपराशरेण--"संप्राप्तश्चापि सायाह्ने सोऽक्रूरो मथुरां पुरीम्" इति । अत्रांतिमदशदंडात्मकापराह्णस्यान्तिमषड्दंडात्मकसायाह्नस्य च प्रायिकत्वात्तन्मध्यवर्तिचतुर्थप्रहरत्वमेवोभयसमंजसमिति । तदुक्तं वैशंपायनेन--"विविशुस्ते पुरीं रम्यां काले रक्तदिवाकरे" इति सायाह्नस्यैकदेशचिह्नं मंतव्यम् । अक्रूरतीर्थादतिनिकटवर्तिपुरोपवनस्य दिनात्यये प्राप्तिरक्रूरस्य तदाश्चर्यदर्शनाच्चिरं विलंबात् ॥ ६ ॥ तत्रतत्र मार्गसव्यदक्षिणपार्श्वयोरित्यर्थः । यद्वा—वसुदेवसुतौ वीक्ष्य तत्रतत्र श्रीकृष्णे बलदेवे च लग्नां दृष्टिम् । इत्यर्थ इति--दृष्टिप्रत्यादाने विवशा बभूवुरित्यर्थः ॥ * ॥ किञ्च पथि लोकानां प्रीत्यर्थं शनैरागमनादपीत्याशयेनाह—मार्ग इति । ग्रामाणां जना इति मूढत्वं सूचितं, तथापि प्रीता इति वस्तुस्वभावो दर्शितः । हे राजन्निति—तत्त्वया बुध्यत एवेति भावः । यद्वा—ग्रामे जनानामपि तादृशप्रीतिस्मरणात्प्रेमार्त्युदयेन शोचन्संबोधयति—अहो राज्ञां स्वभावं त्वं जनास्येवेति भावः ॥ ७ ॥ तावत्तदा । अग्रतोऽग्रे । तत्र मथुरोपकण्ठे ॥ * ॥ यावत्ते आयान्ति तावत्प्रतीक्षमाणाः अवतस्थिरे । 'अनिष्टाशङ्कीनि बंधुहृदयानि' इति न्यायेन वर्त्म निरीक्षमाणा ऊर्द्ध्वावस्थित्याऽवर्तन्त, न तूपविष्टा इत्यर्थः । पूर्वं रथशैघ्र्येण गंतुमशक्तास्ते स्ववर्त्माग्रे रथचिह्नमदृष्ट्वापि वक्रवर्त्मांतरे तच्चिह्नात्तेनासौ गत इत्याशंकमाना शीघ्रं तन्मेलनायर्जुवर्त्मना चलन्त एवासन्, संप्रति त्वेकीभूतवर्त्मनि पुरसमीपे तमदृष्ट्वा परमोत्कंठया पश्चादेव निरीक्षमाणास्तस्थुरिति ज्ञेयम् । विलम्बस्त्वक्रूरनिमज्जनादेवेति तत्त्वम् ॥ ८ ॥ तान् नंदादीन् । इवेन पितृव्येण हास्यानौचित्यमुक्तम् । यद्वा—तेषु कंसकृतदौर्जन्यमालक्ष्य हसन्निवेत्युक्तम् ॥ * ॥ जगदीश्वरोऽपि निजपाणिना तत्पाणिं गृहीत्वा, यतो भगवान् भक्तवात्सल्याद्यशेषगुणप्रकटनपर इत्यर्थः । प्रहसन्निवेति—तदानंदनार्थमेव न तु वस्तुतः प्रहसन्मथुरादर्शनेन व्रजनगरत्यागस्मृत्यान्तर्विषादोदयात् ॥ ९ ॥ इहोपवने । इत्यर्थ इति—धातूनामनेकार्थत्वाभिप्रायेण विश्रामेऽपि मुचिः । यद्वा—अवोपसर्गवशादप्यर्थांतरम् ॥ * ॥ त्वत्प्रवेशानंतरमेव पुरीं द्रक्ष्यामहे । तोतेति तत्संतोषार्थमादरोक्तिः । एवमवमोचनं पुरीदर्शनञ्च कार्यमस्माकमस्तीति विलम्बात्सहैव गमने न स्यादिति व्यञ्जितम् । तच्चाऽसंकोचेन तद्दर्शनार्थम् ॥ १० ॥ संबुद्धित्रयेण स्वत्यागानौचित्यं द्योतयति । न हि प्रपन्नत्यागः प्रभ्वादीनामुचित इति भावः ॥ * ॥ परमार्त्या बहुधा संबोधयन्प्रार्थयते—प्रभो इत्यादिना । नाहमित्यादौ हेतुः—हे प्रभो सर्वोपकारिप्रभवनशीलत्वेन सर्वाश्रय । ननु तदाऽपि मदाज्ञया प्रविशत तत्राह—त्यक्तुमिति । तत्र हेतुः—हे नाथेति । नाथयाति याचयति ददाति सर्वेभ्यः सर्वान्कामानिति हे तथाभूत । ननूदासीनस्त्यज्यत एव तत्राह—भक्तं ते तव।अनन्यगतिमित्यर्थः।ननु सत्यं कदापि न त्याज्य एव किन्तु स्वच्छन्देन पुरीविहाराद्यर्थमिममेल्पकालं स्वगृहं प्रस्थाप्यसे तत्राह—हे भक्तवत्सलेति।क्षणमपि भक्तत्यागो न युक्तस्तवेति भावः॥ ११ ॥नो गेहान्

१ तत इत्यत्र तातेति पाठाभिप्रायेण ।

पुनीहि पादरजसा गृहान्नो गृहमेधिनाम् ॥ यच्छौचेनानुतृप्यंति पितरः साग्नयः सुराः ॥ १३ ॥ अवनिज्यांघ्रियुगलमासीच्छ्लोक्यो बलिर्महान् ॥ ऐश्वर्यमतुलं लेभे गतिं चैकांतिनां तु या ॥ १४ ॥ आपस्तेंऽघ्र्यवनेजन्यस्त्रींल्लोकाञ्छुचयोऽपुनन् ॥ शिरसाऽधत्त याः शर्वः स्वर्याताः सगरात्मजाः ॥ ॥ १५ ॥ देवदेव जगन्नाथ पुण्यश्रवणकीर्तन ॥ यदूत्तमोत्तमश्लोक नारायण नमोऽस्तु ते ॥ १६ ॥

यच्छौचेन यस्य पादरजसः क्षालनोदकेन गृहांगणस्थितेन देवाः पितरश्च तुष्टा भवंति ॥ १३ ॥ श्लोक्यः पुण्यकीर्त्यर्हः । एकांतभक्तानां या गतिस्तां गतिं च लेभे ॥ १४ ॥ अपुनन्पवित्रितवत्यः । याभिरद्भिः स्वः स्वर्गं प्राप्ताः ॥ १५ ॥ प्रार्थयमानो नमस्करोति । देवदेवेति । अतः परमन्यच्छ्रेयो नास्तीति मत्वा बहुधा नोऽस्मान्वा । इत्यर्थ इति–"बहुलं छन्दसि" इति व्यवहितयोरपि ससहशब्दयोः पूर्वोत्तरभावेनान्वय इति तात्पर्यम् । अधोक्षजेतीन्द्रियजन्यज्ञानाऽविषयत्वेऽपि सुहृत्तमत्त्वात्ताद्विषयो जात इति संबुद्धिद्वयाभिप्रायः। 'गृहं गेहं च पुंभूम्नि' इति त्रिकाण्डकोशात् ॥ * ॥ तर्हि किं कार्यं तत्राह–आगच्छेति । नन्वस्मदागमनविज्ञापनाय त्वं कंसं यास्यसि इत्याशंक्य तदैश्वर्यानुभवेन कंसान्निर्भयतया नेत्याह–याम इति । अहं यूयञ्च सर्वे एव प्रथमतो गृहाण्येत्र गमिष्यामः। तथापि संमतिमालक्ष्य सदैन्यं प्रार्थयते–नोऽस्मान्सनाथान्कुरु । बहुत्वं निजबंधुवर्गापेक्षया । हे अधोक्षज इंद्रियज्ञानागोचर इत्येवंभूतस्य तव साक्षाद्गमनेनैव सनाथत्वं सिद्ध्यतीति भावः । यद्वा–नोऽस्मत्संबंधिनो गेहान्याम तानेव सनाथान्कुरु दासस्य तेषु स्वामित्वाभावात् । त्वद्गमनेनैव सनाथत्वसिद्धेरिति भावः । अत एव नैकाकी चागच्छेरित्याह–सहेति । तैर्व्याख्यातम् । तत्र छांदसत्वाद्विपर्ययेण पाठ इति भावः । यद्वा–सुहृद्भिः पित्रादिभिः । तैश्च कीदृशैः–सगोपालैः शाकटबलीवर्दरक्षकैरपि सह । साकल्येऽव्ययीभावः। "तृतीयासप्तम्योर्बहुलम्" इत्यादेशविकल्पः। ननु सत्र एव कथं घटतां तत्राह–सुहृन्निरुपाधि कृपाकरः साधुः, सुहृत्तरस्त्वद्भक्तः साधुः, सुहृत्तमस्त्वं भगवानिति तथाभूतत्वन्माहात्म्येन घटते न तु मद्योग्यतयेत्यर्थः । **विश्वनाथोऽपि**–याम इति–एते त्वमहञ्चास्माकं गेहान्याम इति कंसमावेदयितुं प्रथमं तत्समीपमहं न यास्यामि श्वो मारिष्यन्स तु किं कर्तुं शक्नुयात् नाहं तस्मात्किञ्चिदपि बिभेमि त्वदैश्वर्यस्य दृष्टत्वादिति भावः। न च मद्गृहे कस्यापि वस्तुनः संकोचस्तस्मात्सर्वेऽपि यूय मागच्छतेत्याह–सहाग्रज इति ॥१२॥ गृहमेधिनां पञ्चसूनाजातहिंसावताम् । पितरो दिव्या अग्निष्वात्तादयो वंशप्रवर्तका वा । अग्नयो गार्हपत्यादयः । सुरा इन्द्रादयः ॥ * ॥ ननु पित्राग्निसुरादीनां पूजादिना सदा त्वद्गृहाणां सनाथता भात्येव तत्राह–पुनीहि । गृहमेधिनां नित्यं गृहेषु पञ्चसूनातत्पराणाम् । अनुशब्देन सकृल्लुब्धेनापि निरंतरं तृप्यंतीति ध्वन्यते । पितर इति–पित्रादीनामनुतृप्त्या गार्हस्थ्यकृत्यसमाप्त्या गृहस्थानां स्वत एव सुखं कृतार्थता च स्यादिति भावः ॥ १३ ॥ अवनिज्य प्रक्षाल्य । गतिः सालोक्यादिरूपा ॥ * ॥ न चेयं स्तुतिर्दृष्टफलत्वात् । यद्वा–ननु तर्हि रजस्तच्छौचजलं वा तत्र नीयतामित्याशङ्क्य श्रीबलिवत्तत्र साक्षात्प्रक्षालयितुमिच्छामीत्या शयेनाह–अवनिज्येति । महाञ्छ्लोक्यः पुण्यकीर्तिमत्सु श्रेष्ठ इत्यर्थः, श्रीव्यासादिभिरपि प्रशस्तत्वात् । अतुलमिन्द्रादीनामपि दुर्लभत्वात । गतिं प्याप्यं ताञ्च लेभे इहैव द्वारपालत्वेन साक्षाच्छ्रीभगवतः प्राप्तत्वात् ॥ ॥ १४ ॥ अंघ्र्योरवनेजनं शौचोऽस्ति यासां तास्तथा, चरणप्रक्षालनच्युताः । शर्वः शिवः ॥ * ॥ अहो आस्तां तावत्त्वदवनेजनजलानां माहात्म्यं परंपरयाऽपि तत्स्पृष्टानां माहात्म्यं परमाश्चर्यमित्याह–आप इति । शुचय इति–महापातकिपावनेनान्यतीर्थानामिवाशुचित्वं निरस्तम् । न केवलं त्रींल्लोकानेवापुनन्, लोकपालमुख्यं सर्ववंद्यं श्रीशिवमपीत्याह–शिरसेति । तदुक्तं प्रथमस्कंधे–'सेशं पुनाति' इति । बहिःश्मशानादिसंबंधं तिरस्करोतीत्यर्थः । इति तासां परमपुरुषार्थरूपत्वमुक्तम् । अहो साक्षात्तत्स्पर्शेन पावनत्वं किं वक्तव्यं, महापराधिनां चिरं स्वकृतपापेनैव दग्धानामपि दाहस्थानस्पर्शमात्रेणैव परमशोधनं ब्रह्मलोकप्रापणञ्चाह–स्वर्याता इति । स्वरिति–त्रिलोकीपक्षे ब्रह्मलोकपर्यंतस्य स्वर्गत्वाद्ब्रह्मलोकमित्यर्थः । तत्तु नवमे व्यक्तम् । एवमादौ पावनत्वं, ततः परमवंद्यत्वं, ततश्च सुदुस्तरमहदपराधादपि निस्तारकत्वं, परमपदप्रापकत्वञ्च क्रमेणोक्तम् ॥ १५ ॥ अतः श्रीहरिकीर्तनात् । देवदेवेत्युक्तेरिन्द्रवारणायाह–जगद्भिर्नाथ्यते प्रार्थ्यत इति जगन्नाथ दुष्टदमन । तादृशा राजानोऽपि संति तद्वारणायाह–पुण्यं श्रवणं नाम येषां रुद्रादीनां ते पुण्यश्रवणास्तैः कीर्त्यत इति तथा ।

तां संप्रविष्टौ वसुदेवनंदनौ वृतौ वयस्यैर्नरदेववर्त्मना ॥ द्रष्टुं समीयुस्त्वरिताः पुरस्त्रियो हर्म्याणि चैवारुरुहुर्नृपोत्सुकाः ॥ २४ ॥ काश्चिद्विपर्यग्धृतवस्त्रभूषणा विस्मृत्य चैकं युगलेष्वथापराः ॥ कृतैकपत्रश्रवणैकनूपुरा नांक्त्वा द्वितीयं त्वपराश्च लोचनम् ॥ २५ ॥ अश्नंत्य एकास्तदपास्य सोत्सवा अभ्यज्यमाना अकृतोपमज्जनाः ॥ स्वपंत्य उत्थाय निशम्य निस्वनं प्रपाययंत्योऽर्भमपोह्य मातरः ॥ २६ ॥ मनांसि तासामरविंदलोचनः प्रगल्भलीलाहसितावलोकनैः ॥ जहार मत्तद्विरदेंद्रविक्रमो दृशां ददच्छ्रीरमणात्मनोत्सवम् ॥ २७ ॥ दृष्ट्वा मुहुः श्रुतमनुद्रुतचेतसस्तं तत्प्रेक्षणोत्स्मितसुधोक्षणलब्धमानाः ॥ आनंदमूर्तिमुपगुह्य दृशात्मलब्धं हृष्यत्त्वचो जहुरनंतमरिंदमाधिम् ॥ २८ ॥

मुखे चूतादिपल्लवास्तदुपरि पात्रांतरे दीपावलयस्तत्सन्निधौ सवृंतरंभाः क्रमुकस्तंभाः केतवस्तोरणानि चेति ॥ २३ ॥ नरदेववर्त्मना राजमार्गेण तां पुरीं संप्रविष्टाविति द्वितीयान्तम् ॥ २४ ॥ औत्सुक्यमेवाह द्वयेन । काश्चिदिति । विपर्यक् विपरीतं धृतानि वस्त्राणि भूषणानि च याभिस्ताः युगलेषु धार्येषु कुंडलकंकणादिष्वेकं विस्मृत्य एकमेव धृत्वा अपराः समीयुः । तदेवोदाहरति । कृतमेकमेव पत्रं ययोस्ते श्रवणे यासामेकमेव नूपुरं चरणाभरणं यासां ताश्च ताश्च नांक्त्वा अनंक्त्वा एकस्मिन्नेव लोचने अंजनं विधायैव ॥ २५ ॥ तद्भोजनं अपास्य त्यक्त्वा । अभ्यज्यमानाः सखीभिः क्रियमाणतैलाभ्यंगाः । अकृतोपमज्जना अकृतस्नानाः । अर्भं बालकं अपोह्य निरस्य ॥ २६ ॥ प्रगल्भा या लीलास्ताभिर्हसितानि अवलोकनानीक्षणानि च तैः श्रियं रमयतीति श्रीरमणस्तेनात्मना वपुषा तासां दृशामुत्सवं ददत् मनांसि जहार ॥ ॥ २७ ॥ मुहुः श्रुतत्वात्तद्गतचेतसः सद्यस्तं दृष्ट्वा तस्य प्रेक्षणं चोत्स्मितं च तदेव सुधा तयोक्षणं सेचनं तेन लब्धो मानो याभिस्ताः । दृशोद्घाटितेन नेत्रद्वारेणात्मनि मनसि लब्धं प्राप्तं परिष्वज्य तदप्राप्तिजनितमनंतमाधिं मानसीं व्यथां जहुः । हे अरिंदम निर्जितकामेति संबोधनम् । शृंगाररसे निमग्नो मा भूरिति ॥ २८ ॥

वृक्षाः "रंभा कदल्यप्सरसोर्ना वेणौ वारणांतरे" इति च ॥ * ॥ ० ॥ २३ ॥ वसुदेवनंदनावित्युक्तेर्मथुरागमनसमये नंदनंदनवपुषो निःसृत्य वसुदेवनंदनो बलदेवेन साकं गोपैश्च मथुरां ययौ । नंदनंदनस्तु प्रकटलीलामंतर्धाप्य वृंदावन एव तस्थावंतर्धाय निजवपुरिति । अत एव "वृंदावनं परित्यज्य न याति नंदनंदनः । सदैव तत्र रमते प्रकटोऽप्रकटः क्वचित् ॥" इति पाद्मादिषु स्फुटम् । उत्सुका जातोत्कंठाः ॥ * ॥ ० ॥ ॥ २४ ॥ काश्चित्पुरस्त्रियः । "पत्रं तु वाहने पर्णे स्यात्पक्षे शरपक्षिणोः" इति मेदिनी ॥ * ॥ ० ॥ २५ ॥ अर्भं बालकम् ॥ * ॥ ० ॥ २६ ॥ तासां पुराङ्गनानाम् । ईक्षणानि कटाक्षपातान् । उत्सवमानंदम् । "उत्सवो मह उत्सेके इच्छाप्रसवकोपयोः" इति मेदिनी ॥ * ॥ श्रिया स्वांगलक्ष्म्यैव मथुरांगना रमयति क्रीडयति तेन दृशामुत्सवं ददत्तासां मनांसि जहार । चाक्षुषसंभोगदानेन ता विह्वलीकृत्यालक्षितमेव मनोरत्नानि चोरयामासेत्यर्थः ॥ २७ ॥ तद्गतचेतसः कृष्णगतचेतसः । तं श्रीकृष्णम् । तस्य कृष्णस्य । उत्स्मितमुत्कृष्टस्मितम् । तदेवोत्स्मितमेव । तया सुधया । तेन सेचनेन । ता गोप्यः । तस्य कृष्णस्याप्राप्त्या जनितम् । एकदापि कृष्णो न दृष्टोऽस्माभिरित्येवमाधिं मनःपीडाम् । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः । हृष्यन्ती त्वग्यासां ताः, रोमाञ्चितांगा इत्यर्थः ॥ * ॥ हे अरिंदमेति—एतादृशभगवच्चरितश्रवणमननादिनैव त्वया

**प्रासादशिखरारूढाः प्रीत्युत्फुल्लमुखांबुजाः ॥ अभ्यवर्षन्सौमनस्यैः प्रमदा बलकेशवौ ॥ २९ ॥ दध्यक्षतैः सोदपात्रैः स्रग्गंधैरभ्युपायनैः ॥ तावानर्चुः प्रमुदितास्तत्रतत्र द्विजातयः ॥ ३० ॥ ऊचुः पौरा अहो गोप्यस्तपः किमचरन्महत् ॥ या ह्येतावनुपश्यंति नरलोकमहोत्सवौ ॥ ३१ ॥ रजकं कंचिदायातं रंगकारं गदाग्रजः ॥ दृष्ट्वाऽयाचत वासांसि धौतान्यत्युत्तमानि च ॥ ३२ ॥ देह्यावयोः समुचितान्यंग वासांसि चार्हतोः ॥ भविष्यति परं श्रेयो दातुस्ते नात्र संशयः ॥ ३३ ॥**

**सौमनस्यैः कुसुमसमूहैः शोभनमनोभावैर्वा ॥ २९ ॥ ३० ॥ पौराः पुरस्त्रियः ॥३१॥ रजको वस्त्रनिर्णेजकः स एव वस्त्राणां रंगमपि कुर्वन् रंगकारस्तम् ॥३२॥३३॥**

कामादयोऽरयो विजिता इति भावः ॥ २८ ॥ कुसुमवृष्टेरपि सुमनस्त्वं हेरानंदजनकमिति मत्वाह—शोभनमनोभावैरिति ॥ * ॥ ० ॥ २९ ॥ तौ बलकृष्णौ । तत्रतत्र स्थलेस्थले । उदपात्रं पाद्याद्यर्थम् । उपायनैरुपवीतफलाद्यैः ॥ * ॥ ० ॥३०॥ या गोप्यः । एतौ बलकृष्णौ । प्रेक्षणेनैवातीवानंदजनकत्वान्नरो लोक्यते निजानंदप्रदत्वेन येन स नरलोकः । यद्वा—नरैर्लोक्यते निजानन्दप्रदत्वेन यः स नरलोकः स्त्रीजनस्तस्य महान् कथनस्याप्यगोचर उत्सवो याभ्यां तौ तथा ॥ * ॥ पौराः पौर्यः, केवलगोपीनां श्लाघनात् । क्लीबभावस्त्वार्षः । यद्वा—एवं स्त्रीपुंसानां सर्वेषामेव प्रमोदमुक्त्वा तत्र च प्रायो रूपदर्शनमेव कारणमिति बोधयंस्तन्माहात्म्यं तात्पर्येणाह—ऊचुरिति । पुरौकसः सर्वेऽपि किमूचुस्तदाह—अहो इति । तत्र गोप्य इत्युपलक्षणं नरलोको भूर्लोकस्तत्रावतीर्णत्वेन तत्प्राधान्यात् । यद्वा—नराणामित्युक्त्वा संतोषाभावादाहुः—लोकानां चतुर्दशभुवनानामपि । यद्वा—नरलोको जीवलोकस्तेषां सर्वेषामपि महानुत्सवो याभ्यां तौ महोत्सवरूपाविति वा । अनु निरंतरं पश्यन्तीति वर्तमाननिर्देशः पुनस्तत्र गमनसंभावनात् ॥ ३१ ॥ अथ श्रुतिविहितरजकवधमालाकारकुब्जाद्यनुग्रहमाह—रजकमिति । तथाह श्रुतिः—"युवं वस्त्राणि पीवसा वसाथे युवोरच्छिद्रामंतवो ह सर्गाः" इति । अर्थस्तु—युवं युवाम् । पीवसा बलेन रजकं हत्वेत्यर्थः । वस्त्राणि वसाथे । युवोर्युवयोः । मंतवो मानयितारः—मालाकारकुब्जाप्रभृतयः । सर्गाः सृजन्ति माल्यानुलेपनादिकं ये ते सर्गाः । अच्छिद्रा नीचत्वकुब्जत्वदोषहीना भवन्तीति ॥ * ॥ एवं शिष्टानां परमानंदेन तत्संमाननमुक्त्वा दुष्टानां तद्वैपरीत्यं दर्शयन्नादौ रजकवधमाह—षड्भिः । किञ्चिद्दैत्यस्वभावं कंसानुगमित्यर्थः । अत उक्तं वैष्णवे—'कृष्णस्तस्य दुरात्मनः' इति । रंगकारमित्यनेन तस्य विक्रेतव्यान्यपि कतिचिद्वस्त्राण्यासन् । वंचनार्थमेव तु राजवस्त्राणीति वक्ष्यतीति भावः । वस्त्रधावनस्थानात्पुर्यन्तरागच्छन्तमिति, तदपि मंगलमेकमिति सूचितम् । 'धौताम्बरश्च रजकोऽपि शुभाय दृष्टः' इत्युक्तेः । गदाग्रज इत्यनुप्रासरक्षार्थं, रजरंगेति वारद्वयश्रवणात् । यद्वा—गदोऽपि तादृशत्वेन प्रसिद्धः किमुत तदग्रजः स्वयं भगवानिति ज्ञापनार्थम् । एवं यदुकुललीलारंभे गुणतः श्रीरामकृष्णेतरसर्वभ्रातृगणमुख्यस्य गदस्यापि जन्म सूचितम् । गदौ च द्वौ । 'बलं गदं सारणञ्च' इति रौहिणेयः । "देवरक्षितया लब्धा नव चात्र गदादयः" इति । दैवरक्षितेयश्चेति । तत्र रौहिणेयस्य जन्माभावादन्यतर एव गृह्यतेऽत्र । स चानंतरकनिष्ठः, श्रीकृष्णश्चानंतरज्येष्ठः । श्रीरामवदेव सहविहारी भविष्यतीति सूचितम् । अत एव 'कच्चिद्गदाग्रजः सौम्य' इति श्रीगोपीभिः, 'मम गदाग्रज एत्य पाणिम्' इति श्रीरुक्मिण्या च वक्ष्यत इति ॥ ३२ ॥ अर्हतोरित्युक्त्या भगवता स्वस्य नरेशकंसभागिनेयत्वेन सर्वपूजापूज्यत्वं द्योतितम् । समुचितानि अस्मद्धृतियोग्यानि, प्रमाणतो वर्णतो वा । परं श्रेयस्तु तेऽदातुरपि भविष्यति किं पुनर्दातुरित्यसंशयमेवेति ॥ * ॥ कथमयाचत तदाह—देहीति । समुचितानि परिधानयोग्यानि । अंग हे रजक । न वक्तव्यमेतद्वस्त्रयोग्यौ युवां न भवथ इत्याह—अर्हतोरिति । ननु मूल्यं विना कथं देयानीति चेत्तत्राह—भविष्यतीति । परमुत्तमं श्रेयो मंगलमैहिकामुष्मिकञ्च, किञ्चिद्विलंबेन मूल्यमधिकं देयं पुण्यञ्च परमं भावीत्यर्थः । दुष्टं प्रत्यपीदृशं मधुरवाक्यं निजसौशील्येनायत्यां भक्तजनासह्यनिजकीर्तिपरिहारेच्छया, श्लेषादकारप्रश्लेषेणाऽदातुश्च परलोके भक्तिसुखमयं वैकुंठप्राप्तिलक्षणं

स याचितो भगवता परिपूर्णेन सर्वतः ॥ साक्षेपं रुषितः प्राह भृत्यो राज्ञः सुदुर्मदः ॥ ३४ ॥ ईदृशान्येव वासांसि नित्यं गिरिवनेचराः ॥ परिधत्त
किमुद्वृत्ता राजद्रव्याण्यभीप्सथ ॥ ३५ ॥ याताशु बालिशा मैवं प्रार्थ्यं यदि जिजीविषा ॥ बध्नंति घ्नन्ति लुंपंति दृप्तं राजकुलानि वै ॥ ३६ ॥

रुषितः कुपितः ॥ ३४ ॥ हे उद्वृत्ताः गिरौ वने चरथ ये नित्यं ते यूयं पूर्वं किं परिधत्तेति संभावनायां लोट्। अभीप्सथ प्रार्थयध्वम् ॥ ३५ ॥ राजकुलानि राजकीयाः

परं श्रेयो न भावि किन्तु तद्ग्राह्यं केवलं कैवल्यमेव । अत्र च संशयो जीवने संदेहः, मरणमेवेत्यर्थः ॥ ३३ ॥ स रजकः । सर्वतः परिपूर्णस्य याचनमपि तदनुग्रहार्थमेवेति भावः । साक्षेपं भर्त्सनां कुर्वन् "आक्षेपो भर्त्सनाकृष्टिकाव्यालंकृतिषु स्मृतः" इति मेदिनी । सुदुर्मदः प्राप्तालपभृतित्वात् । नृपात्तविशेषभृतिको राजपुरुषः क्षमी, तदितरो विपरीत इति प्रत्यक्षं लोके इति ॥ * ॥ सर्वतः परिपूर्णेन कौतुका देवेति भावः । सुदुर्मदत्वं तूक्तं वैष्णवे—"कंसस्य रजकः सोऽथ प्रसादारूढविस्मयः" इति । 'मुदुर्मुखः' इति पाठे परमदुर्वचनः "प्राप्ताविष्टाय मूर्खाय सृजते वाङ्मयं विषम्" इति हरिवंशोक्तेः ॥ ३४ ॥ साक्षेपवाक्यं विवृणोति—ईदृशानीति । "उद्वृत्तमुत्तमाचारे तथैवोच्छृङ्खलेऽनृजौ" इति धरणिः । गिरिवनेचरोक्तेर्नेदृग्वस्त्रार्हा यूयं वनौकसः पक्ष्यादिवदिति भावः । किमत्र निषेधे वा वितर्के "कुत्सायां किं वितर्के च निषेधप्रश्नयोरपि" इति मेदिनी ॥ * ॥ हे उद्वृत्ता राजतो निःशंकचेष्टा, यतो गिरिवनेचराः तादृशा यूयमीदृशान्येव वासांसि परिधत्त तर्हि किं कथं राजद्रव्याण्यभीप्सथ, अत्र नाधिकलाभः प्रत्युतेदानीं राजपुरागतानां वो राजापराधतो भयं च भविष्यतीति भावः । अत्र यद्यपि परिधत्तेति सोपहासमेव तत्र च हेतुर्गिरिवनेचरा इति, तथापि वंचनार्थं सत्यमुद्रया वाऽवददिति किमभीप्सथेत्युक्तम् । यद्वा—ईदृशान्येव वासांसि किं परिधत्त, येनोद्वृत्ताः सन्तो राजद्रव्याण्यभीप्सथ, वस्तुतो न परिधत्त न तदभीप्सा च योग्या किन्तूद्वृत्तत्वमेव युष्माकमवशिष्यत इति भावः । अत्र यद्यपि 'परिपूर्णेन सर्वतः' इति, 'श्यामं हिरण्यपरिधिम्' इत्या द्युक्तानुसारेण तद्वस्त्रं तु सर्वोत्कृष्टमेव । तदुक्तं वृंदावनविहारे पराशरेणापि—"सुवर्णाञ्जनचूर्णाभ्यां तौ तदा भूषिताम्बरौ" इति, तथाप्यासुरदृष्ट्या तत्सौंदर्यं न च दृश्यत इति तथोक्तम् । सरस्वती[1] तु यथार्थमाह—हे उत्कृष्टवृत्ता नित्यमेव श्रीगोवर्धनवनविहारिणो यूयं किमीदृशान्येव वासांसि परिधत्त, अपि तु परमदिव्यान्येव राजद्रव्याणि अपवित्राणि लीलयापि किमभीप्सथ अपि तु नैवेत्यर्थः । तस्माद्व्याजमात्रमेवेदं याचनमिति भावः । अत्र **चक्रवर्ती**—वृत्तात्सौशील्यादुद्गताः हे दुःशीला इत्यर्थः । परिधत्तेति संभावनायां लोट् । 'वृत्तं पद्ये चरित्रे च त्रिषु' इत्यमरः ॥ ३५ ॥ जिजीविषा जीवितुमिच्छा । "कुलं जनपदे गोत्रे सजातीयगणेष्वपि । भवने च तनौ भृत्ये" इति शाश्वतः । निःस्वं रंकम् ॥ * ॥ हे बालिशा आशु यात, पलायध्वमित्यर्थः । मैवं प्रार्थ्यं पुनः कदापि प्रार्थनमीदृशं न कार्यम् । घ्नन्ति प्रहरन्ति । लुम्पन्ति छिन्दन्ति । हि यतः संप्रति त्वस्माभिर्बालिशत्वादेव क्षान्तमिति भावः । सरस्वती त्वाह—हे याताशुबालिशाः यातः प्राप्तः आशुश्चपलो बालिशो मूर्खश्चायं रजकलक्षणो यैस्तथाभूताः । यदि जिजीविषा जीवनधारणेच्छा तत्प्रकटनेच्छा तदा मैवं प्रार्थ्यम् । ननु शूरै रजकेऽपि कथं बलं वर्णनीयं तत्राह—हि यतः राजकुलानि राजवंश्या भवद्विधा दृप्तं जनं बध्नन्तीत्यादि । 'जीव—बलप्राणधारणयोः' । **विश्वनाथस्तु**—बलिं श्यन्ति त्रिपादभूमिं प्रार्थ्य तनुं कुर्वन्तीति बालिशाः । स्वार्थेऽण् । बालिशाः हे परमेश्वराः यदि जिजीविषास्ति मे तर्हि मैवं प्रार्थ्यं बलिरिव तुभ्यं यदि वासांसि ददामि तर्हि मे जीवनं न स्थास्यतीत्यर्थः । कुत इत्यत्र आह—बध्नन्तीति । राजकुलानि अत्रत्या राज

[1] वक्तुरन्याऽभिप्रायेऽपि वाग्देवी यथार्थमेवाहेति बोध्यम्, एवमग्रेऽपि यथास्थलं 'वाग्देवी तु सरस्वती तु, गीस्तु' इत्यादिभिर्बोध्यम् ।

एवं विकत्थमानस्य कुपितो देवकीसुतः ॥ रजकस्य कराग्रेण शिरः कायादपातयत् ॥ ३७ ॥ तस्यानुजीविनः सर्वे वासःकोशान्विसृज्य वै ॥ दुद्रुवुः सर्वतो मार्गं वासांसि जगृहेऽच्युतः ॥ ३८ ॥ वसित्वात्मप्रिये वस्त्रे कृष्णः संकर्षणस्तथा ॥ शेषाण्यादत्त गोपेभ्यो विसृज्य भुवि कानिचित् ॥ ३९ ॥ ततस्तु वायकः प्रीतस्तयोर्वेषमकल्पयत् ॥ विचित्रवर्णैश्चैलेयैराकल्पैरनुरूपतः ॥ ४० ॥

लुंपंति निःस्वं कुर्वंति ॥ ३६ ॥ ३७ ॥ वासःकोशान्वस्त्रपुटकान् ॥३८॥३९॥ वायकस्तंतुवायविशेषः । वेषमलंकारम् । चैलेयैर्वस्त्रमयैरनुरूपैराकल्पैर्भूषणैः ॥ ४० ॥

कीयाः पुरुषाः । दृप्तं कंसराजान्निशंकं जनं प्रथमं बध्नन्ति, ततो राजानं विज्ञाप्य घ्नन्ति, ततो लुम्पन्ति तद्गृहं लुण्ठन्ति ॥ ३६ ॥ एवमित्थम् । विकत्थमानस्याविमृश्य भाषिणः । कराग्रेण चपेटप्रदानेन । करस्याग्र्यं सामग्र्यं तेन "अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलंबने समूहे च प्रान्ते सामस्त्यमुख्ययोः ॥ अधिके प्रथमे ज्ञाने गमने प्रापणेऽपि च। " इति निरुक्तिः। कायादेहात् । अपाहरत् पृथक्चकार ॥*॥ विकत्थमानस्य विरुद्धमात्मश्लाघापूर्वकमुच्चैर्जल्पतः । अत्रात्मश्लाघा च—एवंभूतमहाशिल्पिराजात्मीयसेवकोऽहमिति व्यंजनया । सा च स्पष्टं दर्शिता वैशंपायनेन—" अहं कंसस्य वासांसि नानादेशोद्भवानि वै । कामरागाणि शतशो रञ्जयामि विशेषतः ॥ " इत्यादौ । कुपितः कंसपक्षपातात्, विशेषतश्च बहुवचनेन तत्साक्षादग्रजादीन् प्रति दुरुक्तिस्पर्शात् । अत एव खड्गानुकारिणा कराग्रेणैकेनैव, तिष्ठत एव तस्य शिरः कायादपाहरत्, छित्त्वा दूरे चिक्षेपेत्यर्थः । देवकीसुत इत्यत्र कंसेन क्रियमाणया देवक्या यातनया कदर्थितः सोऽयं तदीयानां जनानामौद्धत्यं कथं सहतामिति भावः । यद्वा—दुष्टसंवारार्थं तस्यां जात इत्यर्थः॥ ३७ ॥ तस्य रजकस्यानुजीविनः पुत्रादयः । " कोशोऽस्त्री कुड्मले दिव्ये पात्रे खड्गपिधानके । जातिकोषेऽर्थसंघाते पेश्यां शब्दादिसंगहे ॥ गृहे तनौ च पुटके पिटकायामपि " इति हलायुधः ॥ * ॥ वै इति—'च' इति पाठोऽनुक्तसमुच्चायकः—ते गर्दभादयोऽपि सर्वत इतस्ततो मार्गे दुद्रुवुः । यद्वा—मार्गस्य सर्वा दिशो दुद्रुवुः । अकारप्रश्लेषेऽमार्गमिति वा । मार्गं हित्वा तदितरस्थानं प्रति दुद्रुवुरित्यर्थः । अच्युत इति—तत्स्थानस्थितिमपि व्यञ्जयति। ॥ ३८ ॥ वसित्वा परिधाय । वस्त्रे इति द्वित्वेन दुकूलोत्तरीये उक्ते । यद्वा—कंचुकप्रावाररूपे । कानिचिद्धारणाऽयोग्यानीत्यर्थः ॥ * ॥ आत्मप्रिये पीतनीलवर्णे । वस्त्रे परिधानीयोत्तरीये । आदत्त आ सम्यक् तत्तदिच्छाद्यनुसारेण वस्त्रं दत्तवान्, तदर्थं गृहीतवानिति वा । कानिचिद्योग्यानि अधिकानि च । अत्रायमपि श्रीभगवतोऽभिप्रायः—नूनं कंसेन महोत्सवे स्वपरिकरशोभार्थमेतान्यपूर्वाणि वस्त्राणि धारयितुं दत्तानि,तस्मात्तच्छोभां नाशयंस्तैरहमेव स्वपरिकरशोभां कुर्वन्प्रथमतस्तदुत्साहं नाशयामीति । वस्तुतस्त्वेतानि वस्त्राणि नरकहृतकुमारीवत्तदीयान्येव लीलासौष्ठवाय लीलाशक्त्या तद्वारैव मिलितानीति ज्ञेयम् ॥ ३९ ॥ ततो वस्त्रस्वीकारोत्तरम् । 'आकल्पो वेषभूषणे' इति हैमः ॥ * ॥ इत्थं शिष्टहर्षार्थं दुष्टनिग्रहं कृत्वा शिष्टाननुजग्राहेति वदन्नादौ वायकानुग्रहमाह—ततस्त्विति । ततस्तद्वधाद्वस्त्रपरिधानाच्च । वायकः प्रीतो विष्णुभक्तत्वात् । चैलेयैरेवाकल्पैः कटककुंडलादिभिस्तयोर्वेषं रचितवान् । आकल्पत्वमेव स्थापयति—विचित्रवर्णैर्मणिजटितसुवर्णाकल्पवद्विरच्य स्वगृहादानीतैरित्यर्थः । ननु कुतस्तौ मणिमयनिजालंकारौ त्यक्तवंतौ कुतो वा सोऽपि चैलेयमेवालंकारं दत्त

१ गिरिवनेचराः ( ३५ ), बालिशाः ( ३६ ) इत्यादिना। २ यथा नरका-( भौमा )-सुरैकत्रिताः कुमार्यस्तथेति ।

नानालक्षणवेषाभ्यां कृष्णरामौ विरेजतुः ॥ स्वलंकृतौ बालगजौ पर्वणीव सितेतरौ ॥ ४१ ॥ तस्य प्रसन्नो भगवान्प्रादात्सारूप्यमात्मनः ॥ श्रियं च परमां लोके बलैश्वर्यस्मृतींद्रियम् ॥ ४२ ॥ ततः सुदाम्नो भवनं मालाकारस्य जग्मतुः ॥ तौ दृष्ट्वा स समुत्थाय ननाम शिरसा भुवि ॥ ४३ ॥ तयोरासनमानीय पाद्यं चाथार्हणादिभिः ॥ पूजां सानुगयोश्चक्रे स्रक्तांबूलानुलेपनैः ॥ ४४ ॥ प्राह नः सार्थकं जन्म पावितं च कुलं प्रभो ॥ पितृदेवर्षयो मह्यं तुष्टा ह्यागमनेन वाम् ॥ ४५ ॥

पर्वण्युत्सवे सितेतरौ श्वेतकृष्णौ गजशावाविव ॥ ४१ ॥ इह लोके परमां श्रियं च बलं चैश्वर्यं च स्मृतिं चेंद्रियं तत्पाटवं च प्रादात् ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

वांस्तत्राह—अनुरूपतः, मल्ललीलायां गात्रतोदकत्वेन तस्यैवानुरूप्यादित्यर्थः । अनेन तयोः स्वस्वानुरूप्यमपि ज्ञेयम् ॥ ४० ॥ लक्षणं मुद्रा । 'पर्व स्यादुत्सवे ग्रंथौ ' इति कोशात् । सितेतरौ श्वेतश्यामौ ॥ * ॥ नाना बहुविधं लक्षणं प्रकारो ययोस्ताभ्यां वेषाभ्यां छन्दाभ्याम् । द्वित्वं तदनुरूपत्वेन द्विधाभेदात् । विरेजतुरित्यत्र भक्तसेवास्वीकारादिति तत्त्वम् । सितेतरौ श्वेतकृष्णौ । दार्ष्टान्तिकवर्णव्यतिक्रमेण दृष्टान्तवर्णोक्तिः । केवलमलंकारकृतशोभायां तात्पर्येण पूर्वापरतानपेक्षणात् ॥ ४१ ॥ तस्य वायकस्य । बलं शारीरं रूपसौंदर्यं वा । ऐश्वर्यमणिमादि । स्मृतिर्निजस्मरणम् । " बलं गंधरसे रूपे स्थामनि स्थौल्यसैन्ययोः । पुमान्हलायुधे दैत्यप्रभेदे वायसेऽपि च ॥ बल्युक्तेऽन्यलिंगः स्याद्वाब्यालके तु योषिति । " इति मेदिनी ॥ * ॥ तस्य तस्मै । प्रकर्षेणादात् । पूर्वत एव तस्य तद्भक्त्या सारूप्यादीनां तत्स्वामित्वबोधनार्थम् । लोके इति—अत्रैव लोके, किमुत परत्रेत्यर्थः । यद्वा—लोके पश्यत्स्वेवेत्यर्थः । प्रशब्दार्थं व्यञ्जयति—आत्मनः श्रीगोपालरूपस्येति । परमां ब्रह्मादिदुर्लभाम् । श्रियं द्रव्यादिसंपदम् । परमामिति लिंगादिव्यत्ययेनाग्रेऽपि योज्यम् । चकारादैश्वर्यं प्रभुत्वं दानं च त्रिवक्रावत्तत्कालमेव ज्ञेयम् । तत्संभावनार्थमाह—भगवानिति ॥ ४२ ॥ ततो वायकवरदानोत्तरम् । तौ रामकृष्णौ । सुदाम्न इत्यन्वर्थनामवतः । आराद्दूरात् ॥ * ॥ ततस्तदनंतरमिति, चैलेयाकल्पानंतरं पुष्पमालानामपेक्ष्यत्वादित्यर्थः । यद्वा—वायकानुग्रहानंतरं वायकादपि मालाकारं प्रत्यधिकानुग्रहार्थमित्यर्थः । सर्वलोकवत्तस्य पूर्वं स्वयं श्रीकृष्णनिकटप्रयाणं तु तदुपायनार्थापूर्वमालारचनाभिनिवेशेनेति ज्ञेयम् । अग्रे च व्यक्तं भावि । सम्यक् ससंभ्रममासनत्यागादिप्रकारेणोत्थाय भुवि ननाम शिरसा । तदुक्तं वैष्णवे—" भुवं विष्टभ्य हस्ताभ्यां पस्पर्श शिरसा महीम् " इति । श्रीभगवद्दर्शनार्थं निष्क्रान्तपरिकरस्य तन्मालानिविष्टदृष्टेस्तस्य कृपया सहसांतिकसमागमनेन प्रणामस्थानसंकोचापत्तेः, संभ्रमेण तद्विस्मरणाद्वा ॥ ४३ ॥ तयोः रामकृष्णयोः । अर्घार्थमुदकमर्घ्यं, तदितरमर्हणमनुधूपादीनि तैः । सानुगयोः सगोपयोः ॥ * ॥ अर्घ्यं गंधादिद्रव्याष्टकम्, अर्हणं चान्यत्पूजोपकरणं धूपदीपनैवेद्यादि । आदिशब्दाच्चामरवीजननीराजनादीनि । अर्हणशब्दादिशब्दाभ्यां गृहीतानामपि स्रगादीनां पृथगुक्तिस्तत्प्राचुर्यस्य पुनः पूजनस्य चाभिप्रायेण ॥ ४४ ॥ सार्थकं सफलम् । मह्यं मम । वां युवयोः ॥ * ॥ अथ भक्त्या स्तुतिश्च कृतेत्याह—आहेति । प्रेमगद्गदाद्युत्तमप्रकारेणावदत् । न इति बहुत्वं तद्गमनेनात्मनो बहुमानात्, निजपरिकराद्यपेक्षया वा । आगमनेनेति—कृपया वास्तुस्पर्शमात्रेण किमुत साक्षाद्दर्शनदानेनेति भावः। अहो किं वक्तव्यं युष्मदागमनसौभाग्यवतां युवामेव साक्षात्पश्यतामस्माकं जन्म सार्थकमिति । अनेनैव पूर्वपुरुषाः संबंधिनश्च सर्वे भूतभविष्या निस्तीर्णा इत्याह—पावितञ्चेति । नित्यपूज्यानां पित्रादीनां प्रीत्युत्पत्त्या समास

१ ' दृष्ट्वाऽऽरात्समुत्थाय ' इति पाठाभिप्रायेण । २ ' चार्घ्यार्हणादिभिः ' इति पा० ।

भवंतौ किल विश्वस्य जगतः कारणं परम् ॥ अवतीर्णाविहांशेन क्षेमाय च भवाय च ॥ ४६ ॥ न हि वां विषमा दृष्टिः सुहृदोर्जगदात्मनोः ॥
समयोः सर्वभूतेषु भजंतं भजतोरपि ॥ ४७ ॥ तावाज्ञापयतं भृत्यं किमहं करवाणि वाम् ॥ पुंसोऽत्यनुग्रहो ह्येष भवद्भिर्यन्नियुज्यते ॥ ४८ ॥
इत्यभिप्रेत्य राजेंद्र सुदामा प्रीतमानसः ॥ शस्तैः सुगंधैः कुसुमैर्माला विरचिता ददौ ॥ ४९ ॥

क्षेमायाभयाय भवायोद्भवाय ॥ ४६ ॥ रजकवधेन वायकानुग्रहेण च युवयोर्विषमदृष्टितयाऽनीश्वरता नाशंकनीयेत्याह । न हि वामिति । अत्र हेतुः समयोरिति । अत्रापि हेतुद्वयम् । सुहृदोरिति जगदात्मनोरिति च । कथं तर्हि वैषम्यं दृश्यते तत्राह । भजंतमिति । कल्पतरोरिवेत्यर्थः ॥ ४७ ॥ ४८ ॥ इत्यभिप्रेत्य

कृत्यता च वृत्तेत्याशयेनाह—पितृदेवेति । हीति प्रमाणं दर्शयति ॥ ४९ ॥ विश्वस्य सर्वस्य । अंशेन प्रकृतिपुरुषादिरूपेण । परं केवलं कारणम् । इह मथुरायाम् । एकोऽत्र चशब्दः समुच्चये, तेन जगतः क्षेमायेति योज्यम् ॥ * ॥ तथा चाक्रूरेण वक्ष्यते—‘ अद्येश नो वसतये ’ इत्यादि । तत्र सर्वत्रैव हेतुः—हे विभो परमेश्वरेति । ननु नंदगोपसुतावावां, कथमीदृशी स्तुतिः क्रियते तत्राह—भवन्ताविति । किल शास्त्रादिप्रसिद्धौ । विश्वस्य सर्वस्य जगतोऽस्थिरस्य महदादेः कारणं पुरुषरूपेण कारणावस्थातः परश्च स्वयं भगवद्रूपेण इह मथुरायामंशेनेति जातावेकत्वम् । अंशैर्गोपयादवादिभिः सहेत्यर्थः । यद्वा—अंशेन जगतः कारणमित्यन्वयः । तथा च वक्ष्यते—“ यस्यांशांशांशभागेन विश्वस्थित्यप्ययोद्भवाः ” इति । चकाराभ्यां द्वयोरपि प्राधान्यं बोध्यते । तत्र क्षेममिहामुत्र चाभयम् । भव उद्भवो वृद्धिर्वा ॥४६॥ ईश्वरतां तयोराह—रजकेत्यादिना । अत्राविषमदृष्टित्वे अत्रापि समत्वेऽपि ॥ * ॥ ज्ञानक्रियाशक्तिदातृत्वेनोपकारात् सुहृदोः, अर्थात्सर्वेषां चेतनानां मूलकारणत्वेन जगतः कृत्स्नस्य चेतनाचेतनस्य चात्मनोः । यद्वा—जगत्कृत्स्नं व्याप्य सुहृदोरात्मनोश्च । अपिरुक्तसमुच्चये । भजन्तं ब्राह्मणचांडालादीनामेकतरमाश्रयमाणमात्रम् । भजतोः स्वयमाश्रयतोश्च । अतः समयोर्युवयोर्न विषमा दृष्टिः, किं वा सुहृदोर्जगदात्मनोश्च तावन्न विषमा दृष्टिः । तथा भजन्तमेव भजतोः कृपयतोरपि न सा, यतः समयोः प्राकृते दुःखे सुखे च तुल्ययोः । सूर्ये तमस इव पेचकचक्षुर्ज्योतिष इव च तच्चेतसि तस्यतस्य स्पर्शासंभवात् । स्वरूपभूताह्लादिनशिक्तिविलासविशेषरूपाया भक्तेरेव स्पर्शादिति भावः । तदुक्तं गीतासु—“समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः । ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ ” इति । नवमे च—“ साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् । मदन्यं ते न जानन्ति नाहं तेभ्यो मनागपि ॥ ” इति । उभयत्र भक्त्यैव न त्वन्येन तच्चित्तं लिप्तं भवतीत्यर्थः । अन्यत्तैः । यद्वा—ईश्वरयोर्युवयोर्भक्तिहीनाधमगृह आगमनं सर्वत्र समतयैवेति दैन्यमात्रादाह—न हीति । अयमनुग्राह्योऽयं नेति विषमा दृष्टिर्नास्ति, यतः सुहृदोर्निरुपाधिकृपाकरयोः । किञ्च—जगदेवात्मा प्रियः ययोः, कुतः भजन्तं भजतोरपि सर्वभूतेषूत्तमाधमेष्वपि समयोर्जगन्नाथत्वाद्दीनवात्सल्याच्चेत्यर्थः । न तव जात्यादिवैषम्यं यतोऽत्रत्येष्वपि मध्ये भजन्तं वायकं मालाकारं माञ्च कृतार्थयसीति भावः ॥ ४७ ॥ तावत्र भवंतौ । भृत्यं माम् एतत्कुर्विति यन्नियुज्यते प्रेर्यत एष इत्यर्थः ॥ * ॥ तौ विषमदृष्टिराहितावपि । ननु मदाज्ञा वेदरूपास्त्येव तत्राह—किमिति । साक्षादागतयोर्युवयोरधुना किं कार्यं तादित्यर्थः । नन्वाज्ञां विनापि पूर्वमातिथ्येन स्वयं तत्कृतमेव तत्राह—पुंस इति । हि यस्माद्भवद्भिर्यन्नियुज्यते हि एव एष एव पुंसो जीवस्य निजजनस्य वाऽनुग्रहः परमानुग्राह्यत्वमिति । भवद्भिरिति बहुत्वं तदीयापेक्षया । अहो अधुना भवदाज्ञया किं चिकीर्षामीति भावः ॥ ४८ ॥ इतोऽनंतरं तावानर्चेत्याह—इत्यभिप्रेत्येति । तन्मतं भगवन्मतम्—एता माला अस्मभ्यं ददात्वयमित्येवंरूपम् ॥ * ॥ अभिप्रेत्येति—लज्जादिना ताभ्यां साक्षादनुक्तमपि मालाकारस्य स्वस्य गृहागमनेन मालाविशेषविषयदृष्ट्या च संभाव्येत्यर्थः । हे राजेंद्रेति महाराजस्यापि ता दुर्लभा इति सूचयति ।

ताभिः स्वलंकृतौ प्रीतौ कृष्णरामौ सहानुगौ ॥ प्रणताय प्रपन्नाय ददतुर्वरदौ वरान् ॥ ५० ॥ सोऽपि वव्रेऽचलां भक्तिं तस्मिन्नेवाखिलात्मनि ॥ तद्भक्तेषु च सौहार्दं भूतेषु च दयां पराम् ॥ ५१ ॥ इति तस्मै वरं दत्त्वा श्रियं चान्वयवर्धिनीम् ॥ बलमायुर्यशः कांतिं निर्जगाम सहाग्रजः ॥ ५२ ॥ इति श्रीभागवते महापुराणे दशमस्कंधे पूर्वार्धे पुरप्रवेशो नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥

इत्येवं विज्ञापयन्नभिप्रेत्य मन्मतं ज्ञात्वा मालाः कृष्णरामादिभ्यो ददौ ॥ ४९ ॥ ५० ॥ ५१ ॥ अन्वयवर्धिनीं अन्वये वंशे वृद्धिमतीमित्यर्थः । अप्रार्थितं श्रीप्रभृतिकं च दत्त्वा ततो निर्जगामेति ॥५२॥ स्वैरं चरन्मधुपुरे रजकं निकृत्य कृष्णः प्रदाय च वरानथ वायकाय ॥ मालाकृतं समनुकंप्य चकार कुब्जामृज्वीं धनुश्च सह सोन्नमयन्बभंज ॥ १ ॥ इति श्रीमद्भागवते दशमस्कंधे पूर्वार्धे टीकायामेकचत्वारिंशोऽध्यायः ॥ ४१ ॥

यद्वा—तद्भाग्यविशेषं बोधयति, न संबोधयति । शस्तैः सद्वर्णसौकुमार्यादिगुणैर्मंगलकरत्वान्मंगलैरिति वा । विरचिता इति—यासु निजकुटुंबैः सह स्वयं विशेषेण रच्यमानासु तौ सहसैवानुगतौ, ता विरचिताः सतीर्ददावित्यर्थः । पूजायां तु शैघ्र्येण पूर्वसिद्धा राजादियोग्या एव ददाविति भावः । अन्यथा विरचिता इति व्यर्थम् । प्रीतमानसत्वेन दानप्रकारस्तु श्रीपराशरेणोक्तः—"ततः प्रहृष्टवदनस्तयोः पुष्पाणि कामतः । चारूण्येतानि चैतानि प्रददौ स विलोभयन् ॥" इति । 'मालाम्' इत्येकवचनान्तपाठे भ्रातृभ्यां तुल्यतयैव दीयमानास्वपि मालासु मध्य एवालक्षितं श्रीकृष्णाय सर्वश्रेष्ठामेकां मालां ददावित्यर्थः ॥४९॥ ताभिर्मालाभिः ॥ * ॥ प्रणताय मालादानानंतरं कृताष्टांगप्रणामाय । प्रपन्नाय रक्षरक्षेत्यादिप्रकारेण शरणागताय । यद्वा—प्रथमत एव भक्ताय ॥ ५० ॥ सोऽपि सुदामापि । तस्मिञ्छ्रीकृष्ण एव । तद्भक्तेषु हरिभक्तेषु । भूतेषु स्थावरजंगमेषु ॥ * ॥ ननु के ते वराः, तांश्च परमैकान्ती सुदामा स्वयं वृतवान्न वा तत्राह—सोऽपीति । तस्मिन् कृष्ण एव । ननु कथं पूर्वभक्तिरीत्या संकर्षणेऽपि न वृतवांस्तत्राह—अखिलानां श्रीसंकर्षणादीनां स्वांशानामात्मनि मूलस्वरूपेंऽशिनीत्यर्थः । तेन सा च सिद्ध्येदिति विविक्तपुरुषार्थतयेति भावः । पूर्वं तु समयुग्मतावर्णनं, तदग्रजतया तस्यापि गौरवलीलासारादेकमेव द्विधा प्रकाशमानं तत्त्वमेकपरमैश्वर्यस्याश्रययोग्यं भक्त्यैवेति प्रशंसातात्पर्येणेति भावः । परां श्रेष्ठां निरुपाधिदयाम् । आद्यश्चकारस्त्वर्थे, द्वितीय उक्तसमुच्चये ॥ ५१ ॥ इतीत्थं प्रार्थितः । तस्मै सुदाम्ने । इत्यर्थ इति—यावद्वंशस्तावद्वृद्धिमतीं न तु वंशं वर्द्धयतीत्येवंरूपां सदावंशसत्त्वापत्तेरित्याशयः । भक्तवात्सल्यमाह—अप्रार्थितमिति । ततो मालाकारगृहात् ॥ (५२) ॥ अध्यायार्थं वर्णयन्नग्रिमाध्यायार्थं सूचयति—स्वैरमिति । निकृत्य छित्त्वा 'कृती—छेदने' । ऋज्वीं सरलाम् । बभञ्ज तुत्रोट ॥ * ॥ इति—एतदप्रार्थितान् । ननु कथं वदान्यशिरोमणिरसौ स्वयमन्यान्वरान्न ददौ तत्राह—श्रियञ्चेत्यादि,—द्वितीयचकारोक्तं समुच्चिनोति । अन्यत्तैः । अन्वयवर्धिनीमितीन्नन्तपाठ एव तेषां संमतः । मतुपा व्याख्यातत्वात् । वर्धनं वर्धः अन्वयवर्धोऽस्यामस्तीति । तत्र वंश इति सप्तम्यन्तासमस्तपाठे तद्वंशेऽनवच्छिन्नां श्रियमित्यर्थः । समस्तपाठे वंशवृद्धिश्चेत्यर्थः । तदुक्तं श्रीपराशरेण—"बलहानिर्न ते सौम्य धनहानिरथापि वा । यावद्दिनानि तावच्च न विनङ्क्ष्यति संततिः ॥ भुक्त्वा च विपुलान्भोगांस्त्वमन्ते मत्प्रसादतः । ममानुस्मरणं प्राप्य दिव्यलोकमवाप्स्यसि ॥ धर्मे मनश्च ते भद्र सर्वकालं भविष्यति । युष्मत्संततिजातानामायुर्दीर्घं भविष्यति ॥ नोपसर्गादिकं दोषं युष्मत्संततिसंभवः । अवाप्स्यति महाभाग यावत्सूर्यो भविष्यति ॥" इति । 'बलमायुः' इति पाठे च तत्तत्सर्वं श्र्याद्यन्तर्भूतमेव ज्ञेयम् । अग्रजेन सह वरान्दत्त्वा तेनैव सह निर्जगामेत्यर्थः । **विश्वनाथस्तु**—श्रीबलादीनां तस्य ग्रहीतुमनपेक्षत्वेऽपि स्वस्य दातुमपेक्षत्वाद्गृह्ण

श्रीशुक उवाच ॥ ॥ अथ व्रजन्राजपथेन माधवः स्त्रियं गृहीतांगविलेपभाजनाम् ॥ विलोक्य कुब्जां युवतीं वराननां पप्रच्छ यांतीं प्रहसन्रसप्रदः ॥ १ ॥ का त्वं वरोर्वेतदु हानुलेपनं कस्यांगने वा कथयस्व साधु नः ॥ देह्यावयोरंगविलेपमुत्तमं श्रेयस्ततस्ते न चिराद्भविष्यति ॥ २ ॥ सैरंध्र्युवाच ॥ दास्यस्म्यहं सुंदर कंससंमता त्रिवक्रनामा ह्यनुलेपकर्मणि ॥ मद्भावितं भोजपतेरतिप्रियं विना युवां कोऽन्यतमस्तदर्हति ॥ ३ ॥

द्विचत्वारिंशके कुब्जोन्नमनं धनुषो भिदा ॥ वधस्तद्रक्षिणां कंसारिष्टं रंगोत्सवादि च ॥ १ ॥ अंगविलेपाश्चंदनादयः गृहीतान्यङ्गविलेपानां भाजनानि यया ताम् । रसप्रदः सुखप्रदः ॥ १ ॥ हे अंगने हे वरोरु इति सोपहासं संबोध्यापृच्छति त्वं का एतदनुलेपनं कस्य वा उ ह इति निपातौ भ्रूविक्षेपयुक्ते वितर्के । अस्मत्सेवा सद्यः फलत्येवेत्याह । न चिरादिति ॥ २ ॥ तिस्रो ग्रीवोरःकट्यो वक्रा इति त्रिवक्रेति नाम यस्याः सा अनुले

वात्सल्येन ददाविति ज्ञेयम् ॥ ९२ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कंधे पूर्वार्द्धे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥ कुब्जाया उन्नमनमृज्वीकरणम् । भिदा भेदनम् । तद्रक्षिणां धनूरक्षकाणाम्। कंसस्य आरिष्टं मरणाचिह्नावलोकनम् "अरिष्टमशुभे तक्रे सूतिकागार आसवे । शुभे मरणचिह्ने च" इति मेदिनी । स्वामिचरणैररिष्टपदं लक्षणया तद्दर्शनपरं प्रयुक्तम् । आदिना श्रीकृष्णस्य पुरान्निर्गमो ग्राह्यः ( १ ) । अथ मालाकारगृहान्निर्गमोत्तरम् । माधव इत्युक्त्या तस्या मांशत्वं सूचितम् । युवतीं तरुणीम् । वराननामिति पृच्छायोग्यतामाह ॥ * ॥ रसं कुब्जायाः शृंगारं, सहचरेषु हास्यं सर्वत्राद्भुतं प्रददातीति सः । इयं स्वरूपभूतायाः साक्षाद्भूशक्तेः सत्यभामायाः अंशभूता अस्या एव विभूतिः पृथिवी प्रसिद्धा । अतस्तया सहैक्येनेयं परःसहस्रदुष्टासुरभारसुग्नत्वं स्वकुब्जत्वेन दर्शयन्ती स्वीयं गंधगुणं चंदनादिमिषेणोपहरन्ती पृथिव्येव परमभक्ता प्रीत्या पथि संगताऽभूत् । भगवांश्च सानंदमेव गंधं गृहीत्वा स्वीयं माधुर्यमेव रसं ददानो—भो मद्भक्ते पृथिवि संप्रत्येव कंसादिस्वभावान्मयापहृतानेव विद्धि, तदधुनैव त्वं स्वस्था भवेति तामाश्वासयन्नानंदमग्नामृज्वीं चक्रे इत्येवैतत्प्रकरणतत्त्वमिति केचिदाहुः । तोषिणी तु—राजपथेनेति तास्मिँल्लोकसुखदातृत्वं दर्शयति । युवतीमिति, वराननामिति पदद्वयेनान्यत्सौष्ठवं त्वस्तीति बोधितम् । यान्तीं कंसगृहं गच्छन्तीम् । तथा च तस्या एवोक्तिः श्रीहरिवंशे—'राज्ञः स्नानगृहं यामि' इति । प्रकर्षेण साकूततया हसन् । स्वभावत एव रसप्रद इति ॥ १ ॥ साधु निष्कपटम् । ततोंगविलेपदानात् ॥ * ॥ साधु सभ्यं, वा लज्जया यदुक्तिवैकल्यं तद्विनैव, वा यदि स्यादङ्गविलेपनमस्मद्गात्रयोग्यम् । तथा च तत्रैव—"तामुवाच हसन्तीं तु कृष्णः कुब्जामवस्थिताम् । उभयोर्गात्रसदृशं दीयतामनुलेपनम् ॥" इति । किञ्च—"वयं विदेशातिथयो मल्लाः प्राप्ता वरानने । द्रष्टुं दिव्यं धनुर्गेहं राष्ट्रं चैव महार्द्धिमत् ॥" इति । संबोधनमुपहासेन—वरावूरू यस्या इति । न तावेव केवलं तादृशावपि त्वंगं मूर्तिरेव प्रशस्तं यस्या अस्तीति सर्वे गुणाः संत्येव, तच्चैकमेवात्र, बहुत्वं दोष इत्यभिप्रायात् ॥ २ ॥ "चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी । प्रसाधनोपचारज्ञा सैरंध्रीत्यभिधीयते ॥" इति कात्यः । अमरस्तु—"सैरंध्री परवेश्मस्था स्ववशा शिल्पकारिका" इत्याह । दासी परिचारिका । मद्भावितं मन्निष्पादितं—चंदनादि । भोजपतेः कंसस्य । अन्यतमोऽन्येष्वपि कः श्रेष्ठः, न कोऽपीत्यर्थः ॥ * ॥ त्रिवक्रनामेति पुंवद्भाव आर्षः । हि प्रसिद्धौ । तथा च तत्रैव—"कुतश्चागम्यते सौम्य यन्मां त्वं नावबुद्ध्यसे । महाराजस्य दयितां नियुक्तामनुलेपने ॥" इति । मया भावितं साधितम् । तत् अनुलेपनम् । युवामिति सामान्योक्त्या श्रीरामेऽपि तदर्हताप्राप्तिस्तत्संबंधेनैवाभिप्रेयते । हे सुंदरेति—तस्यैव संबोधनेन तदेकतात्पर्यात् । युवां विनान्येषु बहुषु श्रेष्ठो यः सोऽपि कोऽर्हति । यद्वा—अन्यतमः युवाभ्यामत्यन्तभिन्नः, इति युष्मदयाः सखायोऽप्यर्हतीति । अन्यत्तैः । यद्वा—तवाहं दास्यस्मीति भावविशेषेणादावुक्त्वा पश्चात्तत्प्रेम्णोंतरमाह । विश्वनाथस्तु—दास्यस्मीत्यन्यस्य संबंधिपदस्याऽनुपादाना

१ कामिनीमिति पा० । २ हरिवंशे, एवमग्रेऽपि ।

रूपपेशलमाधुर्यहसितालापवीक्षितैः ॥ धर्षितात्मा ददौ सांद्रमुभयोरनुलेपनम् ॥ ४ ॥ ततस्तावंगरागेण स्ववर्णेतरशोभिना ॥ संप्राप्तपरभागेन शुशुभातेऽनुरंजितौ ॥५॥ प्रसन्नो भगवान्कुब्जां त्रिवक्रां रुचिराननाम् ॥ ऋज्वीं कर्तुं मनश्चक्रे दर्शयन्दर्शने फलम् ॥६॥ पद्भ्यामाक्रम्य प्रपदे द्व्यंगुल्युत्तानपाणिना ॥ प्रगृह्य चिबुकेऽध्यात्ममुदनीनमदच्युतः ॥ ७ ॥ सा तदर्जुसमानांगी बृहच्छ्रोणिपयोधरा ॥ मुकुंदस्पर्शनात्सद्यो बभूव प्रमदोत्तमा ॥ ८ ॥

पनसाधनक्रियायां कंसस्य बहुमता दास्यस्मि ॥ ३ ॥ रूपं चांगसौष्ठवं पेशलं च सौकुमार्यं माधुर्यं च रसिकता हसितं चालापाश्च वीक्षितं च तैर्धर्षितात्मा मोहितचित्ता सा ददौ । सांद्रं घनम् ॥ ४ ॥ स्ववर्णेतरशोभिना रामकृष्णयोर्वर्णाभ्यामितरः पीतादिवर्णस्तेन शोभितं शीलं यस्य तेन । संप्राप्तपरभागेन संप्राप्तः परो नाभेरुपरितनो भागो येन सः । संप्राप्तः परभागः शोभातिशयो येनेति वा । तेनानुरंजितौ ॥ ५ ॥ स्वदर्शने सद्यः फलं दर्शयन् ॥ ६ ॥ तस्याः प्रपदे पादाग्रद्वयं पद्भ्यामापीड्य द्वे अंगुल्यावुत्ताने उन्नते यस्मिन्पाणौ तेन चिबुके मुखस्याधोभागे धृत्वाऽध्यात्मं देहमुन्नमयामास ॥ ७ ॥ तदैव ऋजु समानमंगं यस्याः ।

त्प्रत्यासत्त्या तवेति द्योतनम् । तवेत्युक्तेऽनृतं भावव्यक्तिश्च स्यादिति तन्न प्रयुक्तम् । सुंदरेत्येकवचनेनैकस्मिन्कृष्ण एव स्पृहा । युवामिति द्विवचनेन स्वीयभावस्यावहित्था च द्योतिता । हि एवार्थे । अनुलेपनकर्मण्येवाहं कंससंमता न त्वन्यत्र कुब्जत्वदोषादिति स्वबुद्धिर्ज्ञापिता ॥ ३ ॥ उभयोः रामकृष्णयोः । 'सांद्रं वने घने मृदौ' इति मेदिनी ॥ * ॥ माधुर्यं स्वभावतो मनोहरत्वम् "किमेतदद्भुतमिव वासुदेवेऽखिलात्मनि" इत्यादि । तच्च रूपं पेशलं सौंदर्यसौष्ठवयुक्तम् 'वाचः पेशैः' इतिवत् । तथा तत्रैव हसितेनालापेन वीक्षणेन च विशेषत इत्यर्थः । रूपादिभिरिति—श्रीकृष्णस्यैवेति ज्ञेयम् । तत्रैव भावस्य स्वयमभिव्यज्ययिष्यमाणत्वात् । उभयोरपि योग्यं तदिच्छया ददौ समर्पितवती । तथा श्रीविष्णुपुराणे—"श्रुत्वा तमाह सा कृष्णं गृह्यतामिति सादरम् । अनुलेपञ्च प्रददौ गात्रयोग्यमथोभयोः ॥" इति । अत्र दानं हस्ते समर्पणं, गात्रे लेपनं वा । पूर्वत्र सांद्रमिति तत्संज्ञकम् । ततः स्ववहनयोग्येन स्वल्पेनापि सहचरवृंदसहितयोः पर्याप्तिरभूदिति बोध्यते । उतत्र सर्वांगव्याप्तमित्यर्थः । उभयत्र मालाकल्पानुपघातपूर्वकानुलेपनं ज्ञेयम् । **विश्वनाथस्तु**—रूपेण सौंदर्येण पेशलैः संमोहनकर्मणि दक्षैर्माधुर्यावैर्धर्षितचित्ता । ' दक्षे तु चतुरपेशलपटवः ' इत्यमरः ॥ ४ ॥ ततोऽनुलेपेन । तृतीयार्थे तसिः । तौ रामकृष्णौ । प्रसिद्धार्थत्यागे कारणाभावमालक्ष्याह—परभागः शोभातिशयः "परभागोऽतिसौंदर्येऽन्यांशे भक्ते महेश्वरे" इति धरणिनिरुक्तौ । अनुरञ्जितौ स्वकांयनकूरशोभां प्राप्तौ ॥ * ॥ अनुरञ्जितौ पत्रभंगरचनाविधिना श्रीगंडवक्षोभुजादिष्वनुलिप्तौ सखिभिस्तथैव स्वयम् ॥ ५ ॥ दर्शयन् भाविकंसहनने निजशक्तिप्रकटनेन लोकान्प्रत्याययन्निति भावः ॥ * ॥ कुब्जामत एव त्रिवक्रां तत्संज्ञकाम् । ऋज्वीं कर्तुमिति—अनृज्वीम् ऋज्वीं कर्तुमित्यर्थः । ऋज्वीकरणे हेत्वंतरम्—रुचिराननामिति । सद्यः फलमापातफलं विशेषफलस्य तथैव 'एहि' इत्यादिना प्रार्थयिष्यमाणत्वात् ॥ ६ ॥ तस्याः कुब्जायाः । उन्नमयामास ऊर्ध्वमाकृष्टवानित्यर्थः । 'पादाग्रं प्रपदम्' इत्यमरः । 'अधस्ताच्चिबुकम्' इत्यपि । अधरोष्ठयोरधस्तादित्यर्थः ॥ * ॥ सद्यः फलं तु मल्ललीलोचितग्रहणप्रावीण्यपूर्वकमेवेत्याह—द्वे अंगुल्यौ मध्यमातर्जन्यौ उत्ताने उपरिस्थिताग्रभागे यत्र तेन पाणिना दक्षिणेन, वामेन पृष्ठावस्तंभनं ज्ञेयम् । आत्मानं जीवमधिकृत्य वर्तमानमध्यात्मं देहम् । इति जीवभागपर्यंतं तद्देहस्य प्रारब्धवशेनापरिहार्यं कुब्जत्वमिति सूचितम् । अच्युतो निजलीलाविशेषादच्युत इति । अत एव तथा ग्रहणमन्यथेच्छामात्रेणैव तत्तत्संभवात् ॥ ७ ॥ सा कुब्जा । तदैवोन्नमनक्षण एव । श्रोणिशब्दो यद्यपि ' कटिः श्रोणिः ककुद्मती ' इत्यमरोक्तेः कटिवाचकस्तथापि नितंबं लक्षयतीह । ' स्तनमेघौ पयोधरौ ' इति हैमः । मुंकुंदस्पर्शने नैतदसंभावितमित्याह—मुकुंदेति ॥ * ॥

१ कुब्जा– ।

ततो रूपगुणौदार्यसंपन्ना प्राह केशवम् ॥ उत्तरीयांतमाकृष्य स्मयंती जातहृच्छया ॥ ९ ॥ एहि वीर गृहं यामो न त्वां त्यक्तुमिहोत्सहे ॥ त्वयोन्मथितचित्तायाः प्रसीद पुरुषर्षभ ॥ १० ॥ एवं स्त्रिया याच्यमानः कृष्णो रामस्य पश्यतः ॥ मुखं वीक्ष्यानुगानां च प्रहसंस्तामुवाच ह ॥ ११ ॥ एष्यामि ते गृहं सुभ्रूः पुंसामाधिविकर्शनम् ॥ साधितार्थोऽगृहाणां नः पांथानां त्वं परायणम् ॥ १२ ॥

बृहत्यौ श्रोणी पयोधरौ च यस्याः सा । मुकुंदस्पर्शनादिति मुख्यं कारणम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ आधिविकर्शनं मनःपीडाशमनम् । कंसवधेन स्वयं

ऋजूनि वक्रतापगमात् । अत एव कुब्जतया वक्षोभागादेः स्वल्पत्वादिना पूर्वमसमानानि अधुना तु समानं योग्यं मानं परिमाणं येषां तथाभूतान्यंगानि यस्याः । तदेव दर्शयति–बृहदिति । न केवलमेतावदेव, प्रमदानां मध्ये उत्तमा च बभूव । भगवदंगसंगानुरूपोत्कर्षमपि लेभ इत्यर्थः । अतोऽत्र मुकुंदस्पर्शनमेव मुख्यं कारणं, ग्रहणादिपरिपाटी तु विनोदमात्रत्वाद्गौणमिति भावः । मुकुंदेति कैमुत्यमेव हेतुगर्भम्–यो निजांशेनापि, तेन च चिंत्यमानमात्रेणाप्यशेषसंसारदोषदूरीकरणपूर्वकं सारूप्यादिमुक्तिमपि ददाति, तस्य साक्षाद्भूतस्य कियदिदमिति भावः ॥ ८ ॥ ततः प्रमदोत्तमाभावानंतरम् । उत्तरीयांतं दुकूलप्रान्तम् । स्मयंती ईषद्धसंती । जातहृच्छयोद्दीप्तकामा ॥ * ॥ ततस्तत्संस्पर्शनादेव रूपगुणयोरौदार्यं महत्त्वं, तेन संपन्ना सतीति प्रमदोत्तमात्वमेव दर्शितमतो योग्यताप्राप्त्या जातहृच्छयाविर्भूतकामा । स्मयो मदः स्मितं वा, तत्सहितं यथा स्यात्तथा । 'स्मयंती' इति पाठे स्मयस्माना ' प्रकर्षेण कटाक्षवीक्षणादिना आह । तदुक्तं श्रीपराशरेण–"विलासललितं प्राह प्रेमगर्भभरालसम् " इति ॥ ९ ॥ वीरेति रतियुद्धशूर । इहाधुना । त्वया कारणेन उन्मथितं विलोडितं चित्तं यस्याः । पुरुषेषु श्रेष्ठत्वात्त्वां विनाऽन्यो न मे रोचत इति संबुद्ध्यभिप्रायः ॥ * ॥ वीरेति–निजाभावोद्दीपनगुणाविशेषविशिष्टतया संबोधयति श्लेषेण, हे अभीष्टपूरणसमर्थ मम गृहं त्वमेहि । ननु निजसंगिन इमान्विहाय कथमेकाकी आयायामिति चेत्तत्राह–त्वमेतेऽहं च सर्वे यामः । ननु दिनांतरे आगमिष्यामस्तत्राह–नेति । इह राजमार्गे त्यक्तुं न शक्नोमि वासस्थानानिश्चयेन पुनर्दुष्प्रापत्वात् । अतो गृहमेव नेष्यामीत्यर्थः । यद्वा–तर्हि ज्येष्ठोऽयं सखीनामेको वा नीयतां तत्राह–नेति । त्वय्येव मदपेक्षा न त्वस्मिन्निति भावः । नन्वीदृशमत्र ते धार्ष्ट्यं न योग्यं तत्राह–त्वयेति । अतो मम न कोऽपि दोष इति भावः । अत एव प्रसीद स्वयमेवानुग्रहं कुरु । त्वत्प्रसादे सति धार्ष्ट्यादपि न बिभेमीति भावः । तत्र हेतुमाह–पुरुषर्षभ हे पुरुषोत्तमेति । किंच–निजपुरुषर्षभत्वापेक्षया त्वयापि नाहं त्यक्तुं योग्येति भावः । **विश्वनाथस्तु**–हे वीरेति–अन्ये धर्मवीराद्या भवंति त्वं तु स्त्रीजनधर्मध्वंसवीरो भवसीति भावः । ननु त्वमेहीत्यादिना भोजनार्थं मां निमंत्रयसि किं तत्राह–न त्वां त्यक्तुमित्यादि,–त्वदुक्त्या तु लोका इह राजमार्गे हसंतोऽन्यथा संभावयंति तस्मादेवं मा वादीस्तत्राह–त्वयोन्मथितेति । तर्हि त्वया मच्चित्तं कथमुत्कर्षेण मथितमिति तवैवायं स्पर्शदोषो न ममेति भावः । सप्तम्यर्थे षष्ठी ॥ १० ॥ एवमित्थम् । अनुगानां गोपानाम् । ह स्फुटम् । तां कुब्जाम् ॥ * ॥ रामस्य पश्यतः, अनुगानां च पश्यतां तत्तत्साक्षात्स्त्रिया कामिन्या याच्यमानः रहस्यं किमपि प्रार्थ्यमानः, अत एव च तस्य तेषाञ्च मुखं वीक्ष्य प्रहसन्कौतुकेनोच्चैर्हसन् । तथा चोक्तं श्रीवैशंपायनेन–" तौ जातहर्षावन्योऽन्यं सतामाक्षेपमव्ययौ । वीक्ष्यमाणौ प्रहसितौ कुब्जायाः श्रुतविस्तरौ ॥" इति । ह स्फुटमेवोवाच । तथा तत्र श्रीरामादीन्प्रति एतां वञ्चयामीति व्यंजनाय, तां प्रति तु प्रतिजानाम्येवैतादिति बोधनायेति भावः । अत्र **विश्वनाथः**–मुखं वीक्ष्येति–भो आर्य भोः सखायश्च किमधुना युष्माकं मुखानि हास्यार्णवेन विप्लुतानि, पश्यत नेयं स्त्रीमूर्तिः किन्तु हास्यरस एव युष्मान्कौतुकिनो ज्ञात्वा मेलितुमुपक्रमते, मथुरापुर्या हास्यवैदग्धीयं वा स्वं परिचाययतीति भावः ॥ ११ ॥ पुंसां तरुणानाम् । किञ्चिदत्यावश्यकं झटिति करणीयं मेऽस्तीत्याह–कंसवधेनेति । त्वं तु सर्वथाऽत्याज्ये

१ 'सस्मयं जातहृच्छया' इति पाठाभिप्रायेण ।

विसृज्य माध्व्यां वाण्या तां व्रजन्मार्गे वणिक्पथैः ॥ नानोपायनतांबूलस्रग्गंधैः साग्रजोऽर्चितः ॥ १३ ॥ तद्दर्शनस्मरक्षोभादात्मानं नाविदन्स्त्रियः ॥
विस्रस्तवासःकबरवलया लेख्यमूर्तयः ॥ १४ ॥ ततः पौरान्पृच्छमानो धनुषः स्थानमच्युतः ॥ तस्मिन्प्रविष्टो ददृशे धनुरैंद्रमिवाद्भुतम् ॥ १५ ॥
पुरुषैर्बहुभिर्गुप्तमर्चितं परमर्द्धिमत् ॥ वार्यमाणो नृभिः कृष्णः प्रसह्य धनुराददे ॥ १६ ॥

**साधितोर्थः सुहृदा प्रयोजनं येन सः । अगृहाणामकृतदाराणां पांथानां प्रवासिनां परमयनमाश्रयस्त्वम् ॥ १२ ॥ मधुरया गिरा तां प्रस्थाप्य व्रजन्वणिक्पथैर्वणिग्भिरने कोपायनादिभिः पथि अर्चितः ॥ १३ ॥ लेख्याश्चित्रन्यस्ता इव मूर्तयो यासां ताः ॥ १४ ॥ धनुषः स्थानं धनुर्मखशालां पृच्छमानः पृच्छन् ॥ १५ ॥ प्रसह्य**

त्याह–अगृहाणां वनवासिनाम् । पांथानां मार्गेत आगतानाम् । नोऽस्माकम् । अनेनासंगानामीश्वराणामस्माकं भक्ता एव पूजादिनाऽऽश्रयीभूता इति दर्शितम् ॥ * ॥ कुब्जां प्रति प्रियोऽयं मां स्वीकरोतीति, राम दीन्प्रति तु ग्राम्यां स्त्रियमिवायं कृष्णो वञ्चयतीति द्योतयन्नाह–एष्यामीति । पुंसामिति बहुवचनेन तां प्रति परिहासः । साधितार्थ इति कंसवधाद्यावश्यककृत्यं कृत्वा निश्चितो भूत्वेति समयसंकेतश्च व्यञ्जितः । अगृहाणाम " न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते " इति न्यायेनाकृतदाराणाम् । नोऽस्माकमिति राजपुत्रत्वादात्मन आदरेण खल्वेकत्वेऽपि सा बहुवचनं मन्यते स्म । पांथानामिति–गोकुले स्वनगरे मम गोप्योऽनुरागिण्यो वतते तथाऽत्र पुर्यामपरिचितायां न काश्चन, केवलं त्वमेकैवानुरागिणी प्राप्तेति तां प्रत्यनुरागश्च व्यंञ्जितः । रामादींस्तु बहुवचनेनाधिपदेन च प्रयुक्तेन कृष्ण एनामस्वीकुर्वन्सामान्यवनितालक्षणगालिप्रदानेनैनामनभिज्ञां तिरस्करो तीति प्रत्याययामास ॥ १२ ॥ तां कुब्जाम् । वणिक् वणिज्या पंथाः परंपरागतमार्गो येषां ते तथा । " वणिक् स्त्रियां वणिज्यायां वैश्ये च कारणांतरे " इति धरणिः ॥ * ॥ नानाविधैरुपायनरूपैस्तांबूलादिभिश्च उपायनगृहीतानामपि तांबूलादीनां पृथग्निर्देशस्तदानीमुपादेयानां तेषां प्राचुर्यविवक्षया, स्रजो रत्नमुक्तादिमालाः गंधः सुगंधिचंदनादिपंकोऽगुर्वादिसाधितद्रवविशेषः, विचित्रवर्णचूर्णादयश्च । साग्रज इत्युपलक्षणं सानुगोऽपि । श्रीयमुनांतिके पुर्यंते वर्तमानत्वादादौ विप्रैः कृतमधुना चांतर्वर्तमानैर्वैश्यैरर्चनमुक्तं, क्षत्रियाश्च प्रायो मध्ये वसंतीति तत्कृतं नोक्तमिति ज्ञेयम् । **विश्वनाथः**–वणिक्पथैर्वैष्णवैर्वणिजां वर्त्मवर्तिभिर्नानाजातीयैरित्याह ॥ १३ ॥ तस्य तयोर्वा दर्शनेन यः स्मरक्षोभः कामोत्थानं तस्माद्विस्रस्तानि स्खलितानि वस्त्रकेशपाशकटकानि यासां ताः ॥ * ॥ वणिक्पथेष्वपि स्त्रीणां तु कोमलस्वभावत्वादाधिको भावो जात इत्याह–तदिति । स्त्रियो वणिग्यो षितः । तस्य दर्शनेन यः स्मरः स्मरणमात्रेणापि जायमानः प्रेमविलासरूपः कामस्तेन क्षोभो धैर्यक्षयो मोहो वा तस्माद्धेतोरात्मानं देहं देहिनं वा नाविदन् । का वयं क्व वर्तामह इत्यनुसंधातुं न शक्ता इत्यर्थः । अत एव विशेषेण स्रस्तानि वासआदीनि यासां ताः । तत्र वासोवलयविस्रंसः स्मरवेगेन सद्य एव कार्श्याद्यापत्तेः, केशविस्रंसस्तु गात्रमोटनकंपाद्यामर्दात् । किञ्च–लेख्यवन्मूर्तयो, बभूवुरिति शेषः । **विश्वनाथस्तु**–तेषां स्त्रियस्तु परमभक्ताः " चक्षूरागः प्रथमं चित्तासंगस्ततोऽथ संकल्पः । निद्राछेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ॥ उन्मादो मूर्छा मृतिरित्येताः स्मरदशा दशैव स्युः । " इति कालक्रमोद्भविष्णूरपि स्मरदशाः सद्य एव प्रापुरित्याह–तद्दर्शनेति । आत्मानं नाविदन्निति का वयं क्व तिष्ठामः किं कुर्म इति ज्ञातुमसमर्था इति त्रपानाशांता दशा उक्ताः । विस्रस्तेति–उन्मादोऽष्टमः । लेख्याश्चित्रन्यस्तमूर्तयो यासां ता इति मूर्च्छा नवमी । दशमीत्वमंगलत्वात्प्रेमवतीनां प्रायो न भवतीति प्राञ्चः ॥ १४ ॥ ततः स्त्रीभ्यो दर्शनदानोत्तरम् । तस्मिन् धनुःस्थाने । ऐन्द्रमिवानेकवर्णम् ॥ * ॥ तत इति सार्धकम् । भक्तजनानुग्रहानंतरं ज्ञानाद्यैश्वर्यात्सर्वथा च्युतिरहितोऽपि लीलाकौतुकावेशेन धनुःस्थानं पृच्छन्निति योज्यम् । ऐन्द्रं धनुरिवेति रत्नादिजटितत्वेन विचित्रवर्णत्वाद् बृहत्तरत्वाच्च, अत एवाद्भुतम् । तथा च हरिवंशे–"स तयोर्दर्शयामास तद्धनुः स्तंभसन्निभम् । अनारोप्यमसंभेद्यं देवैरपि सवासवैः ॥" इति । पुरुषैः कंसभृत्यैः । अर्चितत्वादेव परमर्द्धिर्भूषणादिमहाधनसंपत्तिस्तद्वत् ॥ १५ ॥ परमर्द्धिमद्बहुभारम् "समृद्धौषाधिभारेषु

करेण वामेन सलीलमुद्धृतं सज्यं च कृत्वा निमिषेण पश्यताम् ॥ नृणां विकृष्य प्रबभंज मध्यतो यथेक्षुदंडं मदकर्युरुक्रमः ॥ १७ ॥ धनुषो भज्यमानस्य शब्दः खं रोदसी दिशः ॥ पूरयामास यं श्रुत्वा कंसस्त्रासमुपागमत् ॥ १८ ॥ तद्रक्षिणः सानुचराः कुपिता आततायिनः ॥ ग्रहीतुकामा आवव्रुर्गृह्यतां वध्यतामिति ॥ १९ ॥ अथ तान्दुरभिप्रायान्विलोक्य बलकेशवौ ॥ क्रुद्धौ धन्वन आदाय शकलैस्तांश्च जघ्नतुः ॥ २० ॥ बलं च कंसप्रहितं हत्वा शालामुखात्ततः ॥ निष्क्रम्य चेरतुर्हृष्टौ निरीक्ष्य पुरसंपदः ॥ २१ ॥ तयोस्तदद्भुतं वीर्यं निशाम्य पुरवासिनः ॥ तेजः प्रागल्भ्यं रूपं च मेनिरे विबुधोत्तमौ ॥ २२ ॥ तयोर्विचरतोः स्वैरमादित्योऽस्तमुपेयिवान् ॥ कृष्णरामौ वृतौ गोपैः पुराच्छकटमीयतुः ॥ २३ ॥

बलात् ॥ १६ ॥ निमिषेणातिशीघ्रम् । मदकरी मत्तहस्ती ॥ १७ ॥ १८ ॥ गृह्यतां वध्यतामिति वदंतो जिघृक्षव आवृतवंतः ॥ १९ ॥ न केवलं क्रुद्धौ किं तु भग्नस्य धनुषः शकले गृहीत्वा जघ्नतुश्चेति ॥२०॥ परतः प्रातरेव गंतव्यमिति शालामुखादेव पुनर्निष्क्रम्य ॥ २१ ॥ तेजः प्रभावम् । प्रागल्भ्यं धृष्टताम् ॥२२ ॥ शकटं

वृद्धावृद्धिः प्रकीर्तिता'' इति निरुक्तिः ॥ * ॥ वार्येयर्द्धकम् । नृभिस्तद्रक्षिभिः क्रोधात्, तथा सर्वैरपि कंसभीत्या स्नेहाद्वार्यमाणोऽपि ॥ १६ ॥ ज्यया मौर्व्या सहितं सज्यम् । अनिमिषेण निश्चलपक्ष्मणेत्यर्थः । 'ज्या मातरि वसुधायां मौर्व्याम्' इति मेदिनी ॥ * ॥ सलीलं सावहेलं, चकारादस्य सर्वैरप्यन्वयः । तथा निमिषेणेत्यस्यापि । उद्धृतमुत्थापितम् । पश्यतां नृणां तत्र रक्षिणां क्रुद्धानामन्येषां च यथासंभवं मल्लानामिति ज्ञेयम् । अनादरे षष्ठी । अकारप्रश्लेषेणानिमिषेण निर्निमेषतया पश्यतामिति वा । अत्र **विश्वनाथः**—नृणां पश्यतां प्रबभंजेति, हंहो लोकाः श्रुतचरमहिमद्रढिमकमेतदेव धनुः पूज्यते राज्ञा, इदं तु मत्पाणिस्पर्शमात्रेणैव विदीर्णं घुणजीर्णमेवोपलब्धमिति प्रोवाचेति ज्ञेयम् ॥ १७ ॥ यं शब्दम् ॥ * ॥ न च तन्मृदुलं मंतव्यं किन्तु वज्रसारतोऽपि परमतिकठिनमित्याशयेनाह—धनुष इति । प्राक् खमंतरिक्षं पूरयामास शब्दस्याकाशगतत्वात् । ततो रोदसी द्यावाभूमी महत्तरत्वेनोर्द्ध्वाऽधोगामित्वात् । ततश्च दिशः सर्वाः, एवं सर्वानपि लोकानपूरयदित्यर्थः । कंसो जगद्भीषणोऽपि उपाधिक्येन त्रासं प्रातः, निर्घातकोटिनिष्ठुरतच्छब्दादेव, विचारतश्च तस्मात्सद्यो मृत्युप्राप्तिमननात् ॥ १८ ॥ तद्रक्षिणो धनूरक्षिणः । आततायिनः आयुधान्यातत्याऽऽगच्छंतः ॥ * ॥ सानुचरं श्रीरामादिसहितम् । आततायिनो गृहीतायुधाः । गृह्यतां राज्ञे समर्पणाय जीवन्नेव ध्रियतां, पश्चाद्बध्यतां पाशैर्यंत्र्यतामिति, एषा महामदेन बहलोक्तिः । वाग्देवीमते तु—अस्मद्विधो जनो गृह्यतां बध्यतामिति ज्ञेयम् ॥ १९ ॥ अथ निजाऽऽवरणोत्तरम् । तान् धनूरक्षकान् ॥ * ॥ दुरभिप्रायान् दुष्टभावान् । धन्वनो धनुषः । शकले खंडे द्वे । तान्विलोक्य क्रुद्धौ, जघ्नतुश्चेति वाक्यभेदात्तानित्यस्यापुनरुक्तता ॥ २० ॥ परतोऽग्रे । इति हेतोः । शालामुखाद्धनुर्गृहद्वारात् । बलं चेति पूर्वान्वयि । पुरसंपदो हर्म्यादिशोभाः ॥ * ॥ कंसेन प्रहितं प्रेषितं बलं सैन्यम्, श्लेषेण कंसस्य सामर्थ्यमिवेति । ततस्तस्मादेवेति शालामुखविशेषणम् । पुरसंपदो निरीक्ष्य हृष्टौ सन्तौ पुनरपि चेरतुः लीलया पुर्य्यन्तर्वव्रमतुः ॥ २१ ॥ तयोः रामकृष्णयोः । तत् धनुर्भंगबलहननरूपम् । रूपं सौंदर्यम् 'रूपं स्वभावे सौंदर्ये' इति मेदिनी ॥ * ॥ एवं दुष्टदमनादिना शिष्टानामानंदो नितरां जात इत्याह—तयोरिति । तत् तत्रत्यम् । वीर्यं धनुर्ग्रहणादौ पराक्रमम् । तेजः सर्वाभिभवनस्वभावम्, प्रागल्भ्यमकुंठत्वम्, रूपं सौंदर्यं च । तेजआदीनां द्वंद्वैक्यम् । विबुधोत्तमौ शिवविष्णू, ततोऽप्युत्तमौ संकर्षणवासुदेवौ वा ॥ २२ ॥ तयोः रामकृष्णयोः । अस्तमस्ताचलम् । शकटाः सन्ति अत्रेति

१ 'तद्रक्षिणः सानुचरम्' इति पाठाभ्युपगमादेतत् ।

गोप्यो मुकुंदविगमे विरहातुरा या आशासताशिष ऋता मधुपुर्यभूवन् ॥ संपश्यतां पुरुषभूषणगात्रलक्ष्मीं हित्वेतरान्तु भजतश्चकमेऽयनं श्रीः ॥ २४ ॥
अवनिक्तांघ्रियुगलौ भुक्त्वा क्षीरोपसेचनम् ॥ ऊषतुस्तां सुखं रात्रिं ज्ञात्वा कंसचिकीर्षितम् ॥ २५ ॥

शकटावमोचनस्थानम् ॥ २३ ॥ मुकुंदस्य विगमे व्रजान्निर्गमनसमये या आशिष आशासत 'सुखं प्रभाता रजनीयम्'। 'अद्य ध्रुवं तत्र दृशो भविष्यते' इत्यादि यदुक्तवत्यस्ता ऋताः सत्या बभूवुः। केषाम्। मधुपारि मथुरायां पुरुषभूषणस्य श्रीकृष्णस्य गात्रस्य देहस्य लक्ष्मीं शोभां संपश्यताम्। कथंभूतस्य गात्रस्य। नु अहो इतरान्ब्रह्मादीन् हित्वा यदयनमाश्रयं श्रीः कामयामास। यां गात्रलक्ष्मीमिति वा ॥ २४ ॥ अवनिक्तं क्षालितमंघ्रियुगलं ययोस्तौ क्षीरमिश्रमन्नं भुक्त्वा तां रात्रिं

शकटम्। अर्शआदित्वादच्। एतदभिप्रेत्यैव स्वामिभिर्व्याख्यातं शकटावमोचनस्थानमिति ॥ * ॥ विशेषतो बहुत्रता तया चरतोः। आदित्योऽस्तमिति तदानीमाविष्कृततत्प्रतापासहनादेवेति भावः ॥ २३ ॥ पुरुषभूषणं पुरुषश्रेष्ठम्। "श्रेष्ठे चालंकृतौ प्रोक्तं भूषणं भूनिवासके" इति निरुक्तिः। किंभूताः—यदित्यध्याहारापेक्षया सरलसंस्थानमाह—यां पुरुषभूषणगात्रलक्ष्मीमिति वेति। अयनमित्यनेन व्यधिकरणेनाप्यजहल्लिंगत्वात्संबंधः ॥ * ॥ अथ श्रीगोपीनां पुरजनानां च प्रेमवर्णनमुपसंहरति—गोप्य इति। अयमर्थः—मुकुंदस्य विगमे व्रजं परित्यज्य मथुराप्रस्थाने गोप्यो विरहातुराः सत्यो या आशिषः "सुखं प्रभाता रजनीयमाशिषः सत्या बभूवुः पुरयोषितां ध्रुवम्" इति रीत्या पुरयोषितां कामिनीनां यानर्थानाशासताऽवश्यप्राप्यत्वेनेष्टवत्यः स्वयमभिप्रेतवत्य इत्यर्थः। 'आङः—शासु—इच्छायाम्'। ता आशिषो मधुपुरि मधुपुरे पुरुषभूषणस्य मुकुंदस्य सम्यक्पश्यतामन्येषामपि जनानामव्यभिचारिण्यो बभूवुः। तदुत्कर्षार्थं तद्गात्रलक्ष्मीमेव विशिनष्टि—हित्वेति। 'श्रीर्यत्पदांबुजरजश्चकमे तुलस्याः' इत्यादिरीत्या, 'यद्वांछया श्रीः' इत्यादिरीत्या च। भजतः स्वसंपत्तिकामनया समुपासीनानपीतरान् हित्वा तन्मयनिजांतरवैभवमनादृत्य यामेवायनमाश्रयं कामयामास, तदेवं परमयोग्यानां तासां विरहमनभिनंदन्परमयोग्यत्वादेव पर्यवसानेन तु न स्थास्यत्येव विरह इति ध्वनयति। वक्ष्यते च स्वयं भगवता—"मय्यावेश्य मनः कृष्णे विमुक्ताशेषवृत्तयः। अनुस्मरंत्यो मां नित्यमचिरान्मामुपैष्यथ ॥" इति। **विश्वनाथस्तु**—व्रजसुंदरीभावभावितत्वादकस्मात्तद्विरहस्मृतिजनितविषादो मुनींद्रः परीक्षितं पूर्वकथां स्मारयति—गोप्य इति। मुकुंदस्य विगमे व्रजान्निर्गमनसमये या आशिषः भविष्यन्तीः सुखसंपत्तीः आशासत अस्माकमाशिषोऽद्य पुरस्थाः प्राप्स्यंतीत्यभाषंत 'सुखं प्रभाता रजनीयम्' इति, 'अद्य ध्रुवं तत्र दृशो भविष्यतः' इत्यादिकास्ताः मधुपुर्यां कृष्णगात्रशोभाः पश्यतामृताः सत्या यथार्था एवाभूवन्। कथं तादृशीनां विलापोक्तिरप्यन्यथा भवेदिति भावः। श्रीस्त्रैलोक्यवर्तिन्यपि शोभा सर्वशोभाधिष्ठात्री देवता इतरान्भजतः स्वां कामयमानानपि पुंसस्त्यक्त्वा यां गात्रशोभां चकमे। 'भूषणभूषणांगम्' इतिवत्स्वं शोभयितुमिति भावः। गात्रलक्ष्मीं विशिनष्टि—अयनं प्राकृताऽप्राकृतसर्वशोभानामाश्रयणीयमित्यर्थः ॥ २४ ॥ क्षीरस्योपसेचनमुपसेको यस्मिन्नन्ने तत्तथा। यस्यां मथुरां गतास्ताम्। कंसचिकीर्षितं हस्तिमल्लादिद्वारा निजमारणलक्षणम् ॥ * ॥ अवनिक्तं दासैः क्षालितमंघ्रियुग्मं ययोस्तौ। क्षीरेण व्रजस्थकृष्णप्रियवयस्किनीदुग्धेन शकटोपरिष्टाग्निधान्यां व्रजेश्वर्यैवार्पितभांडस्थेनोपसिच्यमानमोदनं भुक्त्वा कंसस्य चिकीर्षितं परेद्यवि स्वहिंसनव्यवसायं ज्ञात्वापि निर्भयत्वात्सुखं स्वापाधिक्येनोषतुः। भोः पुत्रौ अद्य किं कृतं मुग्धाभ्यां युवाभ्यां, हंतहंत कथमार्चितं धनुर्भग्नं, कथं वा तद्रक्षिणो हताः, न जाने क्रुध्यन्कंसः श्वः किं कर्त्तेति हाहा कथं मया गोष्ठाद्युवामानीताविवत्यादिभीतस्य सर्वां रात्रिमनिद्राणस्य पितुर्नंदस्य वाक्यं स्वापाधिक्यादेव तौ न श्रुतवंताविति ज्ञेयम्। अत्र **तोषिणी**—अवनिक्त इति तैर्व्याख्यातम्। तत्र ययोरिति षष्ठ्या तत्तदंगसेवककर्तृकत्वं बोध्यते। क्षीरमिश्रमिति पूर्ववत्। क्षीरेणोपसिच्यत इति कर्मणि ल्युड्विधानात्। कंसस्य चिकीर्षितं प्रातर्मंचारूढमहाजनसमागममध्ये रंगभूमौ मल्लयुद्धादिविधापनेच्छां ज्ञात्वा लोकमुखाच्छ्रुत्वा, सुखं तद्वधार्थमायासं विना स्वस्थं यथा स्यात्तथा। यत्खल्वत्र रजकादिकं हत्वा पादावनेजनमात्रं कृत्वा न तु स्नात्वा भुक्तं तत्रेदं मन्यामहे—पापिनां वधः खलु परमधर्म एव तथा "प्रत्यंगुलं तु तीर्थानि प्रतिहस्तं सुरालयाः" इति मथुरामाहात्म्यवचनादरः कर्तव्य एव, तत

कंसस्तु धनुषो भंगं रक्षिणां स्वबलस्य च ॥ वधं निशम्य गोविंदरामविक्रीडितं परम् ॥ २६ ॥ दीर्घप्रजागरो भीतो दुर्निमित्तानि दुर्मतिः ॥ बहून्यचष्टोभयथा मृत्योर्दौत्यकराणि च ॥ २७ ॥ अदर्शनं स्वशिरसः प्रतिरूपे च सत्यपि ॥ असत्यपि द्वितीये च द्वैरूप्यं ज्योतिषां तथा ॥ २८॥ छिद्रप्रतीतिश्छायायां प्राणघोषानुपश्रुतिः ॥ स्वर्णप्रतीतिर्वृक्षेषु स्वपदानामदर्शनम् ॥ २९ ॥ स्वप्ने प्रेतपरिष्वंगः खरयानं विषादनम् ॥ यायान्नलदमाल्येकस्तैलाभ्यक्तो दिगंबरः ॥ ३० ॥ अन्यानि चेत्थंभूतानि स्वप्नजागरितानि च ॥ पश्यन्मरणसंत्रस्तो निद्रां लेभे न चिंतया ॥ ३१ ॥ व्युष्टायां निशि कौरव्य सूर्ये चाद्भ्यः समुत्थिते ॥ कारयामास वै कंसो मल्लक्रीडामहोत्सवम् ॥ ३२ ॥

सुखं न्यवसताम् ॥ २५ ॥ परं केवलं गोविंदरामयोर्विक्रीडितं तन्न तु पराक्रमः कश्चित् ॥ २६ ॥ उभयथा स्वप्नजागरितभेदेन प्रत्येकं मृत्योर्दौत्यकराणि च । तथा च मंत्रः । " इत्थादुलूकश्चापप्तन् हिरण्याक्षो अयोमुखः । रक्षसां दूत आगतः ॥ " इत्यादिः । तथा " यदेतद्भूतान्यन्वाविश्य दैवीं वाचं वदसि " इत्यादिश्च ॥ २७ ॥ तानि दर्शयति श्लोकत्रयेण । जलादौ प्रतिरूपे दृश्यमानेऽपि स्वशिरसस्तत्रादर्शनम् । असत्यपि द्वितीये चक्षुषोंतर्धानेंगुल्यादौ ज्योतिषां चंद्रादीनां द्वित्वम् ॥ २८ ॥ छायायां प्रतिबिंबे छिद्रप्रतीतिः । पिहितकर्णपुटस्य योंतःश्रूयमाणो ध्वनिः स प्राणघोषस्तस्यानुपश्रुतिरश्रवणम् । वृक्षेषु स्वर्णवर्णप्रतीतिः । रजःकर्दमादिषु स्वपदानामदर्शनम् । एतानि जागरितानि दुर्निमित्तानि ॥ २९ ॥ स्वप्नान्याह । स्वप्न इति । प्रेतैर्मृतैः परिष्वंगः । खरमारुह्य यानम् । विषभक्षणम् । नलदमाली जपाकुसुममाली यायादिति यत्तदप्येकं दुर्निमित्तमिति ॥ ३० ॥ ३१ ॥ कष्टेन कथंचित्प्रभातायां पुनः सूर्ये चाद्भ्यः समुत्थित इति । तथा च श्रुतिः । " अद्भ्यो वा एष

स्तदनंतरं स्नानं युक्तमिति ॥ २५ ॥ धनुष इति देहलीदीपकन्यायेन भंगपदेन रक्षिणामित्यनेन च संबध्यते । परं केवलम् ॥ * ॥ कंसस्त्विति युग्मकम् । कंसस्तु धनुर्भंगादिकं निशम्य तंत परं केवलं रामकृष्णयोः विचित्रक्रीडारूपं न तु युद्धरूपं निशम्य भीतो दुर्निमित्तान्याचष्टे ॥ २६ ॥ उभयथा दैह्यानि बाह्यानि वा । तथा च मृत्युदौत्ये मंत्रः श्रुतिः । इत्था इत्थम् । उलूकः पक्षिविशेषः । आपप्तन् शुभमिति शेषः । हिरण्याक्षः पीतनेत्रः । अयोमुखः लोहचञ्चुः । रक्षसां रक्षोवन्निर्दयानाम् । बहुत्वं पूजापेक्षम् । यमराजस्य मृत्योरित्यर्थः । तथाऽन्यो मंत्रः—भूतानि पक्ष्यादीनि।यत् यां वाचम्।दैवीं देवद्योतिकां वदसीति। तदेषा वाक् मृत्योर्दूतरूपेति भावः ॥ * ॥ दुर्मतिः तदानीमपि भगवद्भागवतद्रोहानिवृत्तेः । अयं सर्वत्रैव हेतुः । बहूनि राज्यभंगादिहेतूनि तावद्ददर्श । मृत्योर्दौत्यमिव कुर्वन्तीति तत्कराणि तत्सूचकानि च ददर्शेत्यर्थः ॥ २७ ॥ तानि दुर्निमित्तानि । प्रतिरूपे प्रतिबिंबे । तत्र प्रतिबिंबे । द्वितीये रूपे । द्वित्वं द्विरूपत्वम् ॥ * ॥ द्वैरूप्यं द्वित्वभानम् । चकारद्वयं दर्शनादर्शनयोर्द्वयोरपि प्राधान्यबोधनार्थम् । एवं तथेत्यस्य परेणान्वयः ॥ २८ ॥ जागरितानि जागरे जातानि । स्वपदाना स्वपादलाञ्छनानाम् ॥ * ॥ छिद्रप्रतीतिः सच्छिद्रतादर्शनम् ॥ २९ ॥ स्वाप्नानि स्वप्नभवानि । परिष्वङ्ग आलिंगनम् । ' बिसादनम् ' इति पाठे पद्मकंदभक्षणमित्यर्थः । " नलदमाली दक्षिणामुखो व्राजयति " इति श्रुतेः । " पद्ममालां शिरः कृत्वा यो गच्छेद्दक्षिणामुखः । एवं पश्यन्निशि स्वप्ने तत्क्षणे मृत्युमृच्छति ॥ " इति स्वप्ननिदर्शने । यद्वा—नलदं वक्ररक्तपुष्पं मृणालशून्यं वर्षासु जायमानं तन्मालाधारी । ' अभयं नलदं सेव्यममृणालं जलाशयम् " इत्यमरः । तैलाभ्यक्तः कृततैलाभ्यंगः । दिगंबरो नग्नः ॥ * ॥ ० ॥ ३० ॥ इत्थंभूतानि अन्यानि कर्दममज्जनादीनि त्वक्स्फुरणादीनि च स्वप्नजागरजानि । मरणसंत्रस्तो मृत्युभीतः ॥ * ॥ सञ्जातो जागरो येषु तानि जागरितानि, जागरसंबंधीनीत्यर्थः ॥ ३१ ॥ व्युष्टायामित्यस्य कष्टेनेत्यादिरर्थः । " अद्भ्यो वा " इति श्रुतिर्व्याख्यातचरा । अथापरा श्रुतिः—यः

आनर्चुः पुरुषा रंगं तूर्यभेर्यश्च जघ्निरे ॥ मंचाश्चालंकृताः स्रग्भिः पताकाचैलतोरणैः ॥ ३३ ॥ तेषु पौरा जानपदा ब्रह्मक्षत्रपुरोगमाः ॥ यथोपजोषं विविशू राजानश्च कृतासनाः ॥ ३४ ॥ कंसः परिवृतोऽमात्यै राजमंच उपाविशत् ॥ मंडलेश्वरमध्यस्थो हृदयेन विदूयता ॥ ३५ ॥ वाद्यमानेषु तूर्येषु मल्लतालोत्तरेषु च ॥ मल्लाः स्वलंकृता दृप्ताः सोपाध्यायाः समासत ॥ ३६ ॥

प्रातरुदेति अपः सायं प्रविशति " इति । " य उदगान्महतोर्णवाद् विभ्राजमानः सलिलस्य मध्यात् । स मा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु ॥ " इति च ॥ ३२ ॥ ३३ ॥ यथोपजोषं यथासुखम् ॥ ३४ ॥ ३५ ॥ मल्लताल उत्तर उपरि उच्चैः श्रूयते येषु तेषु तूर्येषु । उपाध्याया मल्लाचार्याः ॥ ३६ ॥

सूर्यः । उदगादुदयं प्राप । अर्णवादर्णवस्य संबंधिनः सलिलस्य जलस्य मध्याद्विभ्राजमानो देदीप्यमानः । स ऋषभश्रेष्ठः । विपश्चित्सर्वज्ञो मां पुनात्विरयर्थः ॥ * ॥ ० ॥ ३२ ॥ जघ्निरे वादयाञ्चक्रिरे, वादकैः । कर्मणि लिट् । चैलमत्रानेकवर्णवस्त्रम् ॥ * ॥ सहोत्सवमाह—रंगं मल्लक्रीडास्थानम् । पुरुषाः कंसभृत्याः । आनर्चुर्मंगलकलशस्थापनाऽऽदिनाऽलंचक्रुः । तथा च हरिवंशे कंसादेशः—" श्वः सचित्राः समालाश्च सपताकास्तथैव च । सुवासिता वपुष्मंत उपनीतोत्तरच्छदाः ॥ क्रियंतां मञ्चवाट्यश्च वलभ्यो वीथयस्तथा ॥ " इत्यादि ॥ ३३ ॥ तेषु मञ्चेषु । जानपदा देशांतरीया जनाः ॥ * ॥ यथोपजोषमित्यत्र विशेषः । श्रीविष्णुपुराणे—"राजमञ्चेषु चारूढाः सह भृत्यैर्महीभृतः । अन्तःपुराणां मञ्चाश्च तथाऽन्ये परिकल्पिताः ॥ अन्ये च वारमुख्यानामन्ये नगरयोषिताम् । अक्रूरवसुदेवौ च मञ्चमध्ये व्यवस्थितौ ॥ नगरीयोषितां मध्ये देवकी पुत्रगार्धिनी । " इति । हरिवंशे च—" मंचागारैः सुनिर्मुक्तैर्युद्धाय सुविभूषितैः । समाजवाटः शुशुभे समेघौघ इवार्णवः ॥ श्रेणीनाञ्च गणानाञ्च मंचा भान्त्यचलोपमाः । अंतःपुरगणानां च प्रेक्षागाराण्यदूरतः । रेजुः काञ्चनचित्राणि रत्नमालाकुलानि च ॥ गणिकानां पृथग्मञ्चाः शुभैरास्तरणाम्बरैः । शोभिता वारमुख्याभिर्विमानप्रतिमौजसः ॥ अन्ये च मञ्चा बहवः काष्ठसंचयबंधनाः । रेजुः सास्तरणास्तत्र शतशोऽथ सहस्रशः ॥ " इति । देवक्या नागरीमध्यप्रवेशे हेतुः—पुत्रगार्धिनीति । कंसेनानादृतत्वादंतःपुरमञ्चाऽप्रवेशादिति भावः । विविशुरुपाविशन् । कृतं निर्माय न्यस्तमासनं तत्तद्योग्यपीठादिकं येषां ते ॥ ३४ ॥ राजमञ्चेऽत्युच्चमञ्चे । विदूयता परितप्यमानेन ॥ * ॥ राजमञ्चश्चोक्तस्तत्रैव—" प्राङ्मुखश्चात्र निर्मुक्तो मेरुशृंगसमप्रभः । रुक्मयंत्रनिभस्तंभश्चित्रनिर्योगशोभनः ॥ प्रेक्षागारः स कंसस्य चकाशेऽप्यधिकं श्रिया । शोभितो माल्यदामाद्यैर्निवासकृतलक्षणः ॥ " इति । " स दृष्ट्वा सर्वनिर्मुक्तिप्रेक्षागारं नृपोत्तमः । श्रेणीनां दृढसंयुक्तैर्मञ्चवाटैर्निरंतरम् ॥ सोत्तारणाय युक्ताभिर्वलभीभिर्विभूषितम् । काञ्चनीभिः प्रवृद्धाभिरेकस्तंभैश्च शोभितम् ॥ सर्वतः सारनिर्यूहं स्वायतं सुप्रतिष्ठितम् । उदकप्लवेन सुश्लिष्टं मंचारोहणमुत्तमम् ॥ छन्नं तद्वोदकाभिश्च मानवौघभवक्षयम् । " इति । तत्र मंचप्रेक्षागारयोः स्वल्पबहुलपरिच्छदादीनां भेदो ज्ञेयः । मंडलेश्वराः खंडमंडलपतयस्तेषां मध्यस्थः कंससेवकत्वेन तेषां तन्मञ्च एव स्थितेः । राजानश्चान्ये तन्मित्रनृपा इति भेदः । यद्वा—पृथग्मञ्चोपविष्टानां तेषामेव मञ्चवर्गमध्ये कंसमंचस्य वृत्तेः । विशेषेण दूयता दूयमानेन हृदयेनोपलक्षित इति स्वभावतो नित्यभीतत्वाद्विशेषतश्च दुर्निमित्तदर्शनात् ॥ ३५ ॥ तालस्ताडः, स च भुजयोस्ताडनरूपः । डलयोरैक्यम् । " ताडस्तु ताडने घोषे मुष्टिमेयतृणादिषु । ताडी पत्रद्रुमे " इति मेदिनी ॥ * ॥ न केवलं स्वयमेव वाद्यमानेषु अपि तु मल्लानां तालश्च स्वबाहुमूलघातः स उत्तरस्तदधिकतया श्रूयमाणो येषु तादृशेषु चेति । तद्वाद्यादप्यधिकशब्दोऽयमिति मल्लानां महाबलिष्ठतोक्ता । यद्वा—बहिः साधारणेषु तूर्येषु वाद्यमानेषु, अन्तस्तु मल्लोचिततालप्रधानेषु वाद्यमानेष्विति । यतो दृप्ताः सगर्वाः

चाणूरो मुष्टिकः कूटः शलस्तोशल एव च ॥ त आसेदुरुपस्थानं वल्गुवाद्यप्रहर्षिताः ॥ ३७ ॥ नंदगोपादयो गोपा भोजराजसमाहुताः ॥ निवेदितोपायनास्ते एकस्मिन्मंच आविशन् ॥ ३८ ॥ इति श्रीभा० म० द० पू० कुब्जास्वरूपदानमल्लरंगोपवर्णनं नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
श्रीशुक उवाच ॥ अथ कृष्णश्च रामश्च कृतशौचौ परंतप ॥ मल्लदुंदुभिनिर्घोषं श्रुत्वा द्रष्टुमुपेयतुः ॥ १ ॥ रंगद्वारं समासाद्य तस्मिन्नागमवस्थितम् ॥ अपश्यत्कुवलयापीडं कृष्णोंबष्ठप्रचोदितम् ॥ २ ॥

उपस्थानं मल्लरंगमासेदुरागताः ॥ ३७ ॥ भोजराजेन कंसेन समाहुताः समाहूताः । निवेदितान्युपायनानि यैस्ते ॥ ३८ ॥ इति श्री० म० दशमे पूर्वार्धे टीकायां द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ त्रिचत्वारिंशके हत्वा गजेंद्रं रामकृष्णयोः ॥ रंगप्रवेशसौभाग्यं चाणूरेण च भाषणम् ॥ १ ॥ पूर्वैर्गुरुरेव कृतं शौचं शुद्धत्वं निरपराधत्वं याभ्यां तौ । एतदुक्तं भवति । धनुर्भंगादिनाऽऽवाभ्यां निजैश्वर्ये सूचितेऽपि पितरौ न मुंचत्यावां च पुनर्जिघांसत्यतोऽस्य मातुलस्यापि वधे नावयोर्दोष इत्येवं कृतापराधपरिहाराविति । मल्लानां दुंदुभीनां च निर्घोषं मल्लतालदुंदुभिनिर्घोषं वा ॥ १ ॥ कुवलयापीडसंज्ञकं नागं हस्तिनम् अंबष्ठो हस्तिपकस्तेन चोदितम् ॥ २ ॥

अत एव सम्यगसंकोचेन सर्वतोऽविशेषेणाविविशुः ॥ ३६ ॥ कांश्चिन्मल्लान्नामतो निर्दिशति–चाणूर इति । ते चाणूराद्याः ॥ * ॥ उपतिष्ठन्त्याराधयन्ति कंसं यत्र तदुपस्थानं मल्लरंगोचितस्थलमासेदुः प्राप्तवन्तः । एवकारेण चाणूराद्य एवासेदुः, किमुतान्ये तच्छिष्या इत्यर्थः । चकारात्प्राश्निकवर्गोश्च । तथा च श्रीविष्णुपुराणे–“ मल्लाः प्राश्निकवर्गश्च रंगमध्ये समीपगः । कृतकंसेन ” इति । अस्यार्थः–मल्ला बाहुयोधिनः । प्राश्निकाश्चानुमोदनादिना तदुत्साहनादिपरास्तेषां वर्ग इति ॥ ३७ ॥ समाहुताः ह्रस्वत्वमार्षम् । ये समाहूतास्त इति योज्यम् । निवेदितोपायना दत्तप्रभूताः “ प्रभूतमुद्गते प्राज्ये उपढौकनकेऽपि च ” इति कोशात् ॥ * ॥ भोजराजेन कंसेन सम्यगादरं साश्वासं चाहूता इत्यर्थः । अत्राश्वासश्च–भो व्रजराज त्वं मे मंडलेश्वरमुख्योऽसि, गोष्ठादागतोऽपि किं भीत्यैव मां न संगतोऽभूः, धनुर्भंगं खलु पुत्रयोर्दौरात्म्यं मा मंस्थास्ताभ्यां च स्वबलार्थं क्षिव मह्यं दत्ता, तौ बलिष्ठौ श्रुत्वैव द्रष्टुमाहूतौ, तद्यूयं शीघ्रमागच्छत, मा भैष्टेत्यादिकः । अत एव राजाज्ञागौरवादेव । क्वापि प्रातरेव गतौ स्वपुत्रौ तत्रापश्यन्नपि तदागमनमनपेक्ष्यैव परमातबुद्धितो गोपानत्र तयोरर्थे शीघ्रशिक्षणार्थंच नियुज्य हितोपदेशवाक्यं संदिश्य च द्रुतं नंद आजगाम । उपनंदादयश्च द्रुतमायाताः कंसाय निवेदितदधिघृतवस्त्रस्वर्णमुद्राद्युपायना राजमञ्चे उपवेशस्थानाऽदर्शनाद्राज्ञ आज्ञयैवान्यस्मिन्नेकस्मिन्मंचे उपविविशुः । अत्राश्वासनं श्रीरामकृष्णयोर्मल्लयुद्धं प्रवर्तनार्थमेवेति ज्ञेयम् । श्रीकृष्णप्रियाणामपि तेषामादौ गमनं हि कुवलयापीडवधपूर्वकस्वच्छंदेन रंगांतः प्रवेष्टुं श्रीकृष्णेच्छयैवेति ध्येयमिति **तोषिणीकाराः** ॥ ३८ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे पूर्वार्धे द्वाचत्वारिंशोऽध्यायः ॥ ४२ ॥ सौभाग्यमत्र रसकदंबमूर्तिप्रदर्शनरूपम् ( १ ) । शौचमभिनीय प्रदर्शयति–एतदुक्तमित्यादिना । द्वितीयोऽर्थ उत्तान एव । दुंदुभिध्वनिना मल्लघोषस्याभिभवमाशंक्यार्थान्तरमाह–मल्लताल एव दुंदुभिनिर्घोषस्तम् । तत्र तस्यैव प्राधान्यादित्यर्थः ॥ * ॥ अथेति पित्रादीन्दृष्ट्वैव सर्वलक्षितौ सवयस्यौ यमुनातीरं रामकृष्णौ गतौ, तत्रैव कृतदंतधावनादिकौ भोभो वयस्या मल्लतालमयो दुंदुभिघोषोऽयं श्रूयते तदित एव प्रविशाम इति द्रष्टुं द्रुतमीयतुः ॥ अत्र **तोषिणी**–द्रष्टुमिति–दिदृक्षाव्याजेनेत्यर्थः । अंबष्ठादिवचनार्थं परिधानीयोत्तरीयपरिधानेन मल्लवेशास्वीकारात् । अन्यथा वक्ष्यमाणपरिकरबंधवैयर्थ्यं स्यात् । उपेयतुः रंगस्थलांतिकं ययतुः । परंतप हे शत्रुनाशनेति । तादृशदुष्टद्वेषे भवादृशां शील एवेति भावः । यद्वा–कृतशौचाविति नरचेष्टानुकरणमात्रम्, एतन्मिषेणैव वृद्धगोपेभ्यः पूर्वमेव विच्छिन्नाविति ज्ञेयम् ॥ १ ॥ तस्मिन् रंगद्वारे । नागं गजम् “नागः पन्नगमातंगक्रूराचारिषु तोयदे । नागकेसरपुन्नागनागदंतकमुस्तके ॥” इति मेदिनी । “अंबष्ठस्तु महामात्रे रागद्रव्य विलोमजे” इति धरणिः ॥ * ॥ हिंसार्थमेवांबष्ठप्रेरितमैक्षत ॥ २ ॥

१ ‘ समावेशन् ’ इति पाठाभिप्रायेणेदम् ।

बद्ध्वा परिकरं शौरिः समुद्य कुटिलालकान्॥उवाच हस्तिपं वाचा मेघनादगभीरया ॥ ३ ॥ अंबष्ठांबष्ठ मार्गं नौ देह्यपक्रम मा चिरम् ॥ नो चेत्सकुंजरं त्वाद्य नयामि यमसादनम् ॥ ४ ॥ एवं निर्भर्त्सितोंबष्ठः कुपितः कोपितं गजम् ॥ चोदयामास कृष्णाय कालांतकयमोपमम् ॥ ५ ॥ करींद्रस्तमभिद्रुत्य करेण तरसाऽग्रहीत् ॥ कराद्विगलितः सोऽमुं निहत्यांघ्रिष्वलीयत ॥ ६ ॥ संक्रुद्धस्तमचक्षाणो घ्राणदृष्टिः स केशवम् ॥ परामृशत्पुष्करेण स प्रसह्य विनिर्गतः ॥ ७ ॥

परिकरं बद्ध्वा युद्धोचितपरिधानं कृत्वा । समुद्य निबध्य ॥ ३ ॥ ४ ॥ अंतको मृत्युः कालस्तन्निमित्तं यमस्तन्नियंता तैरुपमा यस्य तम् ॥ ५ ॥ विगलितो विच्युतः मुष्टिना निहत्य चरणेष्वलीयतादृश्यो बभूव ॥ ६ ॥ अचक्षाणोऽपश्यन् । घ्राणमवघ्राणं तेन दृष्टिर्दर्शनं यस्य सः । लोचनागोचरमपि हि पशवो घ्राणेन जानंतीति

"भवेत्परिकरः संघे पर्यंकपरिवारयोः । प्रगाढगात्रिकाबंधे समाचारविवेकयोः ॥" इति मेदिन्युक्तेर्युद्धोचितपरिधानं गाढगात्रबंधं, कटिबंधमिति यावत् ॥ * ॥ शौरिरिति तद्वंश्यानामानंदार्थमिति भावः । परिकरं बद्ध्वा कंचुकं विसृज्य परिधानीयवस्त्रं मध्यबन्धनधटीपटेन वेष्टयित्वा प्रालम्बमालादिकं वैकक्षादित्वे निधायेत्यर्थः । 'विचित्रवेषाभरणस्रगम्बरौ' (१९) इति वक्ष्यमाणत्वात् । कुटिलान् स्वभावत एव वक्रान्, अत एव पूर्वं कंकतिकया लसदुष्णीषेषु दीर्घकेशेषु प्रवेशितानपि, यद्वोष्णीषबंधकालेंगुल्या केशान्तःप्रवेशितानपि युद्धकाले विक्षेपशंकयाऽलकांश्चूर्णकुंतलान्समूह्योत्तरीयेणापि गाढं बद्ध्वेत्यर्थः । समूह्येह दीर्घत्वमार्षम् । श्लेषेण दुष्टवधे मुखावरणादिना विघ्नापादनात्कुटिलानां स्वीयानामपि सम्यग्बंधनं युक्तमेवेति ध्वनितम् ॥ ३ ॥ अपक्रम दूरीभव । नो चेन्मार्गदानाभावे । यमसादनं यमगृहम् ॥ * ॥ वीप्सा दृढावधानार्थं क्रोधादेव वा । मार्गरोधनं किल महापातकमित्याशयेनाह—मा चिरं द्रुतमपक्रम मार्गादपसर । सदनमेव सादनम् । स्वार्थेऽण् । वस्तुतस्तु यमेन मनोनिरोधेनासाद्यते प्राप्यत इति यमसादनं मोक्षम् । नयामि प्रेषयामि । सामीप्ये वर्तमानत्वम् । अद्येति एतावंतं कालमुद्वृत्तो वर्तसे तस्मादद्य त्वां यमस्य सादनम्—।अग्रे पूर्ववत् ॥४॥ एवमित्थम् । निर्भर्त्सितो वाचा ताडितः । कृष्णाय कृष्णमुद्दिश्य । तन्निमित्तं मृत्युकारणम् । तन्नियन्ता मृत्युप्रेरकः । यद्वा—बलादाकर्षणो कालो मृत्युर्वा "कालो मृत्यौ यमे कृष्णे समये चालकेऽपि च" इति धरणिः । संहारेंतको रुद्र इव "रुद्रोन्तकः" इति श्रुतेः । क्लेशजनने यम इव तम् ॥ * ॥ कृष्णाय कृष्णं ग्रहीतुम् । कालेनांतः आयुःशेषो येषां तेषां मनुष्यादीनाम् । यां यमः प्रसिद्धस्तेनोपमा यस्य तम् । तेन कृष्णस्यासौ किमपि कर्तुं न प्रभविष्यतीति भीतं राजानं प्रत्याश्वासो ध्वनितः ॥ ५ ॥ अभिद्रुत्य झटिति प्राप्य । तं कृष्णम् । करेण शुंडादंडेन । "करो वर्षोपले रश्मौ पाणौ च बलिशुंडयोः" इति मेदिनी । अमुं गजम् । स कृष्णः ॥ * ॥ तं निर्भयत्वेनैव स्थितं कृष्णं करेण शुण्डेन मध्यदेशेऽग्रहीत् । ततश्च स कृष्णोऽमुं कुंजरं निहत्य वाममुष्ट्या शुंडे प्रहृत्य तत्प्रहारविवशाच्छुंडाद्विगलितः सन्नंघ्रिषु तस्य महास्थूलपदेष्वलीयतादृश्यो बभूव । अंघ्रिष्विति बहुवचनेनैवं व्याख्येयम्—प्रथममेकस्मिन्पादपृष्ठेऽलीयत तदा घ्राणदृष्टौ कुंजरे तत्रैव धर्तुमुद्यते सति अन्यस्मिन्पादेऽलीयत तत्रापि धर्तुमुद्यतेऽन्यस्मिन्नित्येवं सहासमुखांबुजो महाकौतुकी स कुंजरं बहुशो वंचयन्स्वखेलामत्र महाद्भुतां लोकान्दर्शयामासेति भावः ॥ ६ ॥ स गजः । तं कृष्णम् । "पुष्करं खेंबुपद्मयोः । तूर्यवक्त्रे खड्गफले हस्तिहस्ताग्रकांडयोः । कुष्ठौषधे द्वीपतीर्थभेदयोर्दुर्लभेऽपि च ॥" इति बहवः । द्वितीयः स शब्दः कृष्णपरामर्शी ॥ * ॥ अचक्षाणोऽपश्यन् । पशुत्वात् घ्राणदृष्टिः गंधेनैव जानन् । पुष्करेण शुंडाग्रेण । परामृशत् तं जग्राहेति । स्वीयखेलांतं

पुच्छे प्रगृह्याऽतिबलं धनुषः पंचविंशतिम् ॥ विचकर्ष यथा नागं सुपर्ण इव लीलया ॥ ८ ॥ स पर्यावर्तमानेन सव्यदक्षिणतोऽच्युतः ॥ बभ्राम भ्राम्यमाणेन गोवत्सेनेव बालकः ॥ ९ ॥ ततोऽभिमुखमभ्येत्य पाणिनाऽऽहत्य वारणम् ॥ प्राद्रवन्पातयामास स्पृश्यमानः पदेपदे ॥ १० ॥ स धावन्क्रीडया भूमौ पतित्वा सहसोत्थितः ॥ तं मत्वा पतितं क्रुद्धो दंताभ्यां सोऽहनत्क्षितिम् ॥ ११ ॥

प्रसिद्धम् । परामृशद्धृतवान् । पुष्करेण शुंडाग्रेण । स कृष्णः । प्रसह्य बलेन ॥ ७ ॥ धनुषो धनुषां पञ्चविंशतिं हस्तशतं यावत्तावंतं देशं विचकर्ष आकृष्य नीतवान् । कं क इव विचकर्ष । यथा नागं सर्पवद्वर्तमानं गजं सुपर्ण इव स्वयमित्यर्थः । 'आविरासीद्यथा प्राच्यां दिशींदुरिव पुष्कलः' इतिवत् प्राचीदिगिव वर्तमानायां देवक्यां इंदुरिव वर्तमानः कृष्णः ॥ ८ ॥ स पर्यावर्तमानेनेति । पुच्छग्राहिणं श्रीकृष्णं ग्रहीतुं यदि दक्षिणतः परिवर्तते गजस्तर्हि सव्यतो भ्रामयति तं कृष्णः । यदा सव्यतः परिवर्तते गजः तदा दक्षिणतो भ्रामयन् भ्राम्यमाणेन तेन सह स बभ्राम । गोवत्सेन भ्राम्यमाणेन बालकः स एव कृष्णो यथान्यो वा बालक इवेति ॥ ९ ॥ वारणं गजं प्राद्रवन्प्रकर्षेणासमंततो धावन्पातयामास । यथा पतति तथा तं वंचयन्प्राद्रवदित्यर्थः ॥ १० ॥ किं च स धावन्निति । अहनदहन् ॥ ११ ॥

लोकान्दर्शयिष्यन् कृष्णः स्वमेकवारं तदुत्साहवर्धनार्थं ग्राहयामासेति भावः । ततश्च कुंजरे तस्मिन्कृतार्थमन्ये सति स कृष्णः प्रसह्य बलात्कारेणैव—किमरे बलं दर्शयसीत्युक्त्वा स्वं मोचयित्वा बहिर्निर्गतोऽभूत् । **तोषिण्यां** तु—पुष्करेण श्लेषाच्छ्रीमदंगे कमलवत्कोमलतां गतेनेति ध्वन्यते ॥ ७ ॥ पंचविंशतिधनुर्मितदेशं शतहस्तामित्यर्थः । 'धनुर्हस्तचतुष्टयम्' इति नाममाला । इतिवदिति—यथाविरासीद्यथेत्यत्र यथाशब्द इव शब्दश्चान्वितौ, प्राच्यां यथा प्राचीवद्वर्तमानायां देवक्यामिंदुरिव वर्त्तमानः स्वयं हरिराविरासीदिति तद्वदत्रापीति भावः ॥ * ॥ 'धनुर्हस्तचतुष्टयम्' इति कोशाच्छतहस्तप्रमाणं देशं व्याप्य । यथेति यथावदेव विचकर्ष । स कुंजरस्तदा किमपि धैर्यं कर्तुं न शशाकेति भावः ॥ ८ ॥ सोऽच्युतः । तेन गजेन । अन्यः प्राकृतः ॥ * ॥ ततश्च कुंजरस्य किञ्चिदुत्साहप्रापणार्थमाकर्षणवेगं भगवान् किञ्चिच्छिथिलीचक्रे इत्याह—स अच्युतः कदाचिदपि तदा तत्पुच्छग्रहणाच्च्युतिराहित्याभिप्रायेण । यद्वा—द्रुतगतिविशेषेण सव्ये दक्षिणे चालातचक्रवद्वर्तमानत्वात् ॥ ९ ॥ ततो भ्रामणोत्तरम् । ''वारणं प्रतिषेधे स्याद्वारणस्तु मतंगजे'' इति मेदिनी । तं गजम् । इत्यर्थ इति—अतिस्थूलशरीरवत इतस्ततो भ्रमणे स्वयमेव पतनं भवेदिति भावः ॥ * ॥ अथान्यां खेलां दर्शयन्पुच्छं तत्याजेत्याह—तत इति । पाणिनाऽऽहत्येषदेव प्रहृत्य, यथावत्प्रहारे सद्य एव मरणात्प्रारभ्यमाणखेला न निष्पद्यत इति भावः । प्राद्रवन्सन्निति प्रकर्षेण द्रवन् आ ईषदेव भ्रमँस्तदुत्साहवर्धनार्थं स्वस्य प्रद्रवणं दर्शयामास तम् । वस्तुतस्तु स्वस्य तदीषदेव द्रवणमित्यर्थः । अत एव पदेपदे तेन स्पृश्यमानः सँस्तं पातयामास इति तं पातयितुमेव स्वयं मुहुर्मुहुर्द्रवणासमर्थ इव स्खलति स्मेत्यर्थः ॥ १० ॥ अन्यं वंचनाविधिं चकारेत्याह—किञ्चेति । स कृष्णः । क्रीडया लीलया । सहसा झटित्येव । तं कृष्णम् । स गजः ॥ * ॥ ततश्च कठोरशिलामय्यां भूमौ तमत्याघातं पातयितुं स्वस्य पतनमेव तं दर्शयामास, न तु लाघवोत्थानमित्याह—स इति । तं पतितं मत्वा तमेव हंतुमुद्यतोऽपि क्षितिमेवाहन् । जानुभ्यां पतित्वा चखानेत्यर्थः ।

स्वविक्रमे प्रतिहते कुंजरेंद्रोऽत्यमर्षितः ॥ चोद्यमानो महामात्रैः कृष्णमभ्यद्रवद्रुषा ॥ १२ ॥ तमापतंतमासाद्य भगवान्मधुसूदनः ॥ निगृह्य पाणिना हस्तं पातयामास भूतले ॥ १३ ॥ पतितस्य पदाक्रम्य मृगेंद्र इव लीलया ॥ दंतमुत्पाट्य तेनेभं हस्तिपांश्चाहनद्धरिः ॥ १४ ॥ मृतकं द्विपमुत्सृज्य दंतपाणिः समाविशत् ॥ अंसन्यस्तविषाणोऽसृङ्मदबिंदुभिरंकितः ॥ विरूढस्वेदकणिकावदनांबुरुहो बभौ ॥ १५ ॥ वृतौ गोपैः कतिपयैर्बलदेवजनार्दनौ ॥ रंगं विविशतू राजन्गजदंतवरायुधौ ॥ १६ ॥ मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान्गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः ॥ मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनां वृष्णीनां परदेवतेति विदितो रंगं गतः साग्रजः ॥ १७ ॥

॥१२॥१३॥ १४ ॥ रंगं समाविशत्तदा वीरश्रिया बभौ । कथंभूतः । अंसे न्यस्तं विषाणं गजदंतो येन सः । असृजो रक्तस्य मदस्य च बिंदुभिः परितोंऽकितः।विरूढा उद्गताः स्वेदकणिकास्ताभिरुपलक्षितं वदनांबुरुहं यस्य सः ॥ १५ ॥ न केवलं स एकः समाविशत्किं तु वृतौ गोपैरिति ॥ १६ ॥ तत्र च शृंगारादिसर्वरसकदंबकमूर्तिर्भगवांस्तत्तदभिप्रायानुसारेण तत्तद्रूपो बभौ न तु साकल्येन सर्वेषामित्याह । मल्लानामिति । मल्लादीनामज्ञानां द्रष्टॄणामशन्यादिरूपेण दशधा विदितः सन्साग्रजो रंगं गत इत्यन्वयः । मल्लादिष्वभिव्यक्ता रसाः क्रमेण श्लोकेन निबध्यंते । " रौद्रोऽद्भुतश्च शृंगारो हास्यं वीरो दया तथा । भयानकश्च बीभत्सः शांतः सप्रेमभक्तिकः ॥ " अविदुषां विराट् विकलः अपर्याप्तो राजत इति तथा । अनेन बीभत्सरस उक्तः । विकलत्वं च ' क वज्रसारसर्वांगौ ' इत्यादिना वक्ष्यते ॥ १७ ॥

तस्य दंतक्षेपकाल एवातिसूक्ष्मेण रूपेण कृष्णस्योत्थायान्यत्र गमनात्, अत एव 'अतर्कितेतिसहसा' इत्यभिधानात्सहसोत्थित इति प्रयुक्तम् ॥ ११ ॥ महामात्रैर्हस्तिपाधिपैः "महामात्रः समृद्धे चामाने हस्तिपकाधिपे" इति मेदिनी । अभ्यद्रवत्संमुखमाजगाम ॥ * ॥ स्वत एवात्यमर्षितः संजातपरमामर्षः, पुनश्च महामात्रैः प्रेर्यमाणो रुषा तद्वैशिष्ट्येनाभ्यद्रवत् ॥ १२ ॥ तं गजम् । हस्तं शुंडादण्डम् "हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च" इति मेदिनी ॥ * ॥ ततश्च कालाधिक्यमालक्ष्य तेन सह खेलां समापयामासेत्याह—तमिति । स्वयं भगवानप्यंशेन च तादृशमधोः सूदनोऽपि श्रीमन्नराकारोचितमल्ललीलारसानुसारेणैव पाणिना एकेनैवावहेलया वामेनैवेत्यर्थः । हस्तं शुंडां प्रगृह्येत्यर्थः ॥ १३ ॥ पतितस्य दंतमुद्धृत्य । तेन दंतेन । इभं गजम् ॥ * ॥ [1]पतितं सन्तं तं श्रीचरणेन शिर आक्रम्य । पाठान्तरे पतितस्य स्वतस्तस्य दंतमुत्पाट्य । हरिरिति सिंहवत्तत्प्राणहरणाद्धस्तिहननेन सिंहरूपत्वाच्च ॥ १४ ॥ तदा रंगप्रवेशावसरे । अंसे स्कंधे । 'अंसो भुजशिरोव्याध्योः' इति धरणिः । "विषाणी क्षीरकाकोल्यामजशृंग्याञ्च योषिति । कुष्ठनामौषधे क्लीबं त्रिषु शृंगेभदंतयोः ॥" इति मेदिनी । "असृक् स्याद्योगभेदे ना रक्तेऽपि स्यान्नपुंसकम्" इति च ॥ * ॥ मृतकमित्यर्धकम् । दंतयुक्तवामपाणिः । द्वितीयदन्तोऽस्य श्रीबलदेवेनोत्पाट्य गृहीत इति ज्ञेयम् । 'गजदन्तवरायुधौ' ( १६ ) इति वक्ष्यमाणत्वात् । सम्यक् मत्तगजेन्द्रगत्या शोभाविशेषेण च, आ ईषद्वारान्तः प्राविशत् प्रविवेश । शोभाविशेषमाह— । अंसो वामस्कंधः । आङ्कितः विचित्रैरिव भूषितः । विशेषेग विचित्रतया वा रूढाः प्रादुर्भूताः, रुहेः प्रादुर्भावार्थकत्वात्, सच्चिदानंदविग्रहे विकारासंभवात् । अंतर्भूतानंततादृशविलासधर्माणां लीलानुरूप्येण केवलाविर्भावतिरोभावसंप्रतिपत्तेश्च । अंबुरुहरूपेण तस्यापि जलबिन्दुभिर्यथा शोभा स्यात्तथेति ध्वन्यते । मूर्तया वीररसश्रियैव बभौ ॥ १५ ॥ कतिपयैरल्पसंख्यैः ॥ ॥ * ॥ प्रवेशे पूर्वतो विशेषविवक्षयोक्तशेषन्यायेनाह—वृताविति । कतिपयैरिति—वृद्धानां श्रीव्रजेन्द्रेण सह गमनात् । सवयसामप्यत्यासन्नानामेव श्रीगोकुलतः संगमनात् । बलदेव इति अनुजस्नेहेन दुष्टवधार्थं बलविशेषप्रकटनात् । जनार्दन इति—जनैर्निजभक्तैः श्रीनारदादिभिरर्द्यते कंसवधार्थं याच्यते यः स तथा । राजन्निति हर्षेण संबोधयति । गजस्य दंतावेव तन्मारणसाधनतया कंसादौ भयदत्वेनांसे गृहीततया च वरे आयुधे ययोः । यद्वा—गजदंतश्रेष्ठावायुधे ययोस्तौ ॥ १६ ॥ तत्र च प्रवेशसमये । कदंबकं समुदायः " कदंबं निकुरंबे स्यान्नीपसिद्धार्थयोः पुमान्" इति मेदिनी । निकुरंबं समूहः । तत्तदभिप्रायानुसारेण मल्लाद्यभिप्रायानुरोधेन । साकल्येन

[1] 'पतितं तं समाक्रम्य' इति पा० ।

रससमूहमूर्तित्वेन । प्रेमभक्त्या तन्नामकरसेन सह वर्तत इति सप्रेमभक्तिकः । अनेन विकलत्वकथनेन । उक्तो द्योतितो न तु भगवति बीभत्सत्वं संगच्छतेऽतीव रम्यत्वादिति भावः ॥ ॥ * ॥ मल्लानामिति तैर्व्याख्यातम् । तत्र सर्वरसकदंबमूर्तिरिति कार्यकारणभेदात् "रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनंदी भवति" इति श्रुतेः । विशेषश्चैवं—मल्लानां परमशूरंमन्यतया गवतानामवज्ञातचरस्याप्य शनितुल्यांगत्वेन हरेः स्फुरणादशनिवद्विरोधिनमवगणय्य प्रवेशाच्च मल्लानां क्रोधस्थायिभावमयो रौद्रः १ । नृणां तद्द्वेषितदीयंमन्यव्यतिरिक्तानां पौरादीनां लोकोत्तरविलासादिदर्शनेन विस्मयस्थाय्यद्भुतः २ । स्त्रीणां मात्रादिव्यतिरिक्तानां स्मरत्वेन प्रियभावमयी रतिर्व्यक्ता, ततः स्थायी शृंगारः ३ । गोपानां श्रीदामादीनां स्वजनो वयस्यस्ततोऽसंकुचितचित्ततया गजरक्तमदबिंदुदंतादिजातविलक्षणवेशदर्शनेन तेषां हासस्थायिभावो हास्यः ४ । असतां राज्ञां शास्तेति तद्वीर्यातिशयदर्शनेन युद्धोत्साहस्थायी वीररसः ५ । पित्रोः श्रीदेवकीवसुदेवयोः श्रीनंदवसुदेवयोर्वा, तदुपलक्षणत्वेन तत्समवासनानामन्येषामपि शिशुत्वस्फूर्तेस्तदीयमार्दवज्ञानेन मल्ला दिदौरात्म्यशंकया शोकस्थायी करुणः ६, ( एष एव दयाशब्देन लक्षितः ) । कंसस्य मृत्युस्तद्धेतुस्तेन भयस्थायी भयानकः ७ । अविदुषां सच्चिदानंदविग्रहत्वेन विद्वद्गुणसंमतेऽपि तस्मिन्विकलत्वमननेन भौतिक निर्णयाज्जुगुप्सास्थायी बीभत्सः ८ । योगिनां ज्ञानिभक्तानां परं तत्त्वं परब्रह्मविग्रहः, तेन शांतिस्थायी शान्तः ९ । 'शमो मन्निष्ठता बुद्धेः' इति शान्तिशब्दस्य तन्निष्ठावाचित्वेन तन्निष्ठायाश्च तत्प्रीतिमात्रजन्य त्वेन दास्यसख्यादिभावविशेषानिर्देशेन चाखिलान्यवासनाशान्तिपूर्वकस्तत्स्वरूपैकालम्बनः प्रीतिविशेष एव शान्तिरित्युच्यते सोऽस्याऽस्तीति अर्शआदित्वादच् । वृष्णीनां परमाराध्य इति सप्रेमभक्तिकः भक्तिराराध्य तया ज्ञानं प्रेमात्मिका भक्तिः प्रेमभक्तिस्तया स्थायिरूपया सह वर्तत इति । अतोऽयं रससंग्रहश्लोकः । "रौद्रोऽद्भुतः शुचिरथो धृतसख्यहास्ये वीरोऽथ वत्सलयुतः करुणो भयांधः । बीभत्ससंज्ञ उदितोऽथ तथैव शान्तः सप्रेमभक्तिरिति ते ह्यधिका दश स्युः ॥" इति । अत्र क्रमं विना निर्देशस्तत्रोच्चावचजनानां दृष्टिपातस्तथैव जात इति विवक्षया । अथ वा—ये तत्र प्रतिकूलज्ञाना अज्ञानाः सज्ञाना अनुकूलज्ञानाश्चेति सामान्यतश्चतुर्विधा स्तदवांतरभेदेन विशेषतो दशविधा द्रष्टारः सन्ति तेषामसौ यथायोग्यं पृथक्पृथक्तत्तद्धर्मप्रकटनेनाविर्बभाविति तादृङ्मधुरविलासे परमैश्वर्यमपि दर्शयति—मल्लानामिति । तत्र मल्लाः कंसपक्षीयाः । सक्षितिभुजश्च कंसश्च प्रतिकूलज्ञानाः परमसुखविग्रहे तस्मिँस्तथातथा दुःखदत्वायोग्यत्वात् । किन्तु तमोदूषितदृष्टयस्तस्मिन्विपरीतमेव धर्मं प्रतियन्ति खंडे पित्तदूषितजिह्वायास्तिक्तत्वमिव, तत्र मल्लानां स्वांगस्पर्शातिकर्कशत्वादिना सर्वयादवादि साधुगणस्य तथा तस्यापि पराभवं भावयतां ततोऽप्यतिकर्कशत्वादित्वं प्रकटितमित्यशनिः । असतां साधूनामेव शान्तिं कुर्वतां तत एवानधिकारिणामपि बलादेव क्षितिभुजां तदुपभोगकर्तॄणां श्लेषेण तानभ्यवहरतामिव शास्ता दंडकर्ता, भोजपतेश्च राक्षसदैत्यादिनिजगणद्वारा स्वयं चानेकसाधूनां मृत्युहेतुत्वेन स्वमात्रादौ स्वस्मिँश्च तथोद्यमकारित्वेन प्रसिद्धस्य, अतः सर्वगिलानां श्रेष्ठस्येत्यर्थः । तस्य मृत्युर्यम इव । अथ न द्वेषिणो न च सज्ञाना न चानुकूलज्ञाना याज्ञिकब्राह्मणा इव केचिदविद्वांसस्तादृशतत्स्वरूपानुभूते सुखोदयाभावायोगान्न जानन्त्येव किन्तु तादृशत्वावभावकतच्छक्तिविशेषप्रसादालाभेन यत्किञ्चिन्नृबालक त्वेनैवानुभवन्ति तेषां विराट् विराडंशनृबालकविग्रहः । अथ सज्ञाना आकाशस्थितयोगिनः सनकादयस्ते तु सर्वाश्रयभूततया जानन्तीत्यनुकूल्यांशस्य नातिसंभवात्केवलतज्ज्ञानमात्रास्तेषां परं तत्त्वम् । अखंडस्वरूप तल्लक्षणं गुणानां पिण्डरूपश्रीभगवदाकारत्वेन केवलस्वरूपमात्राविर्भावब्रह्मोद्धारतोऽपि श्रेष्ठं वास्तववस्त्वित्यर्थः । अथ नरः स्त्रियो वृष्णयः पितरौ गोपाश्चानुकूलज्ञानाः तथातथा ज्ञानस्यानुकूल्यमयत्वात्तेषां तत्तद्रूप इति स्वाभाविकानंतमाधुरीप्रभाववृंदस्य तस्य ताँस्तान्प्रति तत्तदुल्लासाद्यदंशांशाभासलाभेन जीवा अपि तथातथा रोचन्ते, तत्र नृणामितरानुकूलचतुष्टयव्यतिरिक्तानां साधारणानाम् "निरीक्ष्य तावुत्तमपूरुषौ जनाः" ( २० ) इत्यादिवक्ष्यमाणानां मध्ये केषाञ्चित्पुरुषाणाम् 'महानयं बताधर्मः' ( अ० ४४, श्लो० ७ ) इत्यादिवक्ष्यमाणवचनानां मध्ये कासाञ्चित्स्त्रीणाञ्चेत्यर्थः । तेषां नरवरो नरश्रेष्ठः । एषां ज्ञानित्वं प्रभावमाधुर्य शज्ञानेनैव तच्छ्रेष्ठत्वावगमात्, आनुकूल्यं च तथातथा वचनात् । एवमुत्तरोत्तरत्रापि तारतम्येन तत्त्वं ज्ञेयम् । स्त्रीणां तादृशवाक्यानां मध्ये 'गोप्यस्तपः किमचरन्' ( अ०४४, श्लो०१४ ) इत्यादिवचनानां कासाञ्चि त्स्मरस्तद्धेतुमाधुरीविशेषप्रकाशनेन श्रीकृष्णावतारिते चेतसि प्राकृतस्मरदेवताया अधिकारसामर्थ्येन च स्वयमेतद्रूपोऽत एवाह—मूर्तिमानिति । मृत्युत्वेन त्विदं न विरोक्ष्यतेऽयथावस्त्वात् । परतत्त्वेऽपि न तेन सह मूर्तेरभे दात् । वृष्णीनां तत्प्रधानानां यादवानां परदेवता पारमैश्वर्यस्फुरणेन संबंधस्फुरणस्यावृतप्रायत्वात् । परा सर्वतः श्रेष्ठा या देवता स्वयं भगवत्त्वेन निजाराध्या सैव स्वयम् । अतः पित्रोर्यदुकुललीलायां पितृत्वेन प्रसिद्धयोः

श्रीवसुदेवदेवक्योर्वृष्णिश्रेष्ठत्वेन तज्जन्मलक्षणमारभ्य तादृशस्तुत्यादिश्रवणेनैश्वर्यज्ञानाच्चावृतवात्सल्ययोरपि शिशुरिति तदानीं तादृशसंकटसमये श्रीनंदादिसंगेनैव शुद्धवात्सल्यस्योल्लासादिति ज्ञेयम् । स्वशब्दोऽत्र वृष्णिभ्योंतरंगत्वव्यञ्जनाय । 'स्वपित्रोः' इति क्वचित्पाठः, तत्र विशेष्यपदं नाध्याहार्यम् । गोपानां श्रीनंदादीनां श्रीदामादीनां च स्वजनः पुत्रादिरूपो मित्रादिरूपश्चेति तेषां स्वभाव उक्तः । तथातथैव श्रीगोकुललीलायां श्रीमुनींद्रादिभिस्तेषामसकृत्प्रशस्तत्वात्तदपेक्षयाऽन्येषां कनिष्ठीकृतत्वाच्च । अत्र चैवं ज्ञेयम्—भक्तयभावास्तावत्त्रिविधाः—प्रतिकूलज्ञानानां प्रीतिविरोधिनः, अज्ञानानां प्रीत्युदासीनाः, अन्योभयेषां प्रीत्यात्मका इति । तत्राद्यानामशानित्वशास्तृत्वमृत्युत्वभानाद्भयप्राया एव लक्ष्यन्ते । तच्च तेषां भयं रसतां न प्राप्नोति । प्राकृतरसशास्त्रविदः श्रव्यकाव्यदर्शनीयेषु दृश्यकाव्यानुकार्येषु च नलदमयन्त्यादिषु रसोत्पात्तिं न रसं प्रतिपद्यन्ते,किन्तु तत्तत्काव्यानुभवितृष्वेव तेष्वपि तत्सवासनेष्वेव संप्रतिपद्यन्ते, मल्लादिसवासनास्तु न भगवत्काव्याधिकारेण इति । श्रीभागवतरसाविदस्तु तादृशं भावं द्वेष्यत्वेनैव मन्यन्ते । वस्तुतश्च दुःखरूप एवासाविति न सुखस्वरूपरसतामर्हति । तथाज्ञानामवज्ञतैव सापि रसतां न प्राप्नोति । अथान्योभयेषां प्रीत्यात्मकत्वेनैक्येऽपि तत्तद्विशेषात्पञ्च भेदाः । योगिनां ज्ञानिभक्तस्य परपर्याया शान्तिः, वृष्णीनां तदुपलक्षितभक्तिमतां प्रेमपर्याया भक्तिः, मित्राणां सख्यं, पित्रादीनां शिशुत्वपुत्रत्वभावनामयप्रीतिमतां वात्सल्यं, स्त्रीविशेषाणां प्रियताभावनामयीरतिरिति । यत्र तु वैशिष्ट्यं न जातं तत्र शुद्धैव प्रीतिः, तथा नृणामिति षट् । एष च प्रीत्यात्मकः सर्वोऽपि भावो रसतां प्राप्नोत्येव, ब्रह्मानंदतोऽपि स्वत एव परमानंदरूपत्वात्, प्राकृतरसशास्त्राणामपि यत्किञ्चिदानंदरूपत्वेनैव प्रीत्यादीनां रसतासंप्रतिपत्तेः । विभावादिसद्भावश्चात्र स्वत एव परमालौकिकः, अतः प्राकृतरसवत्कविकृत्रिमालौकिकत्वमपि नापेक्षते । अतोऽत्र वर्णनीयानुकार्ययोरेव मुख्यरसोत्पात्तिः । एष एव भागवतरसो नाम कौमुदीकारादिभिर्दर्शितः । मूलेऽपि—' पिबत भागवतं रसमालयम् ' इत्यादौ । तत्रोदाहरणञ्च—"स्मरन्तः स्मायरन्तश्च मिथोऽघौघहरिं हरिम् । भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥", "क्वचिद्रुदन्त्यच्युतचिंतया क्वचिद्धसन्ति नन्दन्ति वदन्त्यलौकिकाः । नृत्यन्ति गायन्त्यनुशीलयन्त्यजं भवन्ति तूष्णीं परमेत्य निर्वृताः ॥" इति च । अत्र हरिरालम्बनो विभावः, स्मरणमुद्दीपनो विभावः । विशेषेण भावयति रसमिति विभावशब्दस्यार्थः । स्मरणादिक उद्धास्वरोत्थोऽनुभावः, पुलकः सात्त्विकाख्यः । अनुभावयति ज्ञापयति रसमिति तच्छब्दार्थः । चिन्तादयः सञ्चारिभावाः । रसे सम्यक् चरन्तीति । संजातया भक्त्येति स्थायी भावः, सर्वाश्रयत्वात्स्थातुं शीलमस्येति । 'भवन्ति तूष्णीं परमेत्य निर्वृताः' इति तत्संवलनम् । परं परमरसात्मकं वस्त्वित्यर्थः । एवम्—" भगवद्दर्शनाह्लादबाष्पपर्याकुलेक्षणः । पुलकाञ्चितांग औत्कंठ्यात्स्वाख्यानेऽपि हि नाशकत् ॥ " इत्यादि । एवं प्रीतेरैक्येन तन्मयरसस्याप्यैक्यम् । तद्भावानां षोढा भेदेन रसा अपि षोढा । यथा—शान्तिस्थायी शान्तः १, प्रेमभक्तिस्थायी सप्रेमभक्तिकः २, सख्यस्थायी सख्यमयः ३, वात्सल्यस्थायी वत्सलः ४, रतिस्थायी शृंगारः ५, अवशिष्टप्रीतिस्थायी तु प्रीतिमय ६ एव । अथ येऽन्येऽद्भुतादयो भागवताः सप्त रसास्तेऽपि तेषु भगवत्प्रियजनेषु भगवत्प्रीतेरेवाविर्भवन्ति, तत्रैव च तिरो भवन्तीति तत्तद्रससंचारिभावप्राया गौणत्वान्नात्र गण्यन्ते, तद्विरोधितदुदासीनभावौ तु तज्ज्ञानायैव दर्शिताविति । एते च भावरसाः प्रायः संज्ञान्तरेण परिभाष्य रसामृतसिंधौ श्रीमद्भ्रातृशुभाशयैर्विस्तरतः करतल इव दर्शिताः । संक्षेपतस्तदर्थसंग्रहश्लोकाश्चैते—" स्थायीभावो विभावानुभावैः संचारिभिस्तथा । स्वादुत्वं नीयमानोऽसौ रस इत्यभिधीयते ॥ कारणान्यथ कार्याणि सहकारीणि यानि च । तान्येव व्यपदिश्यन्ते विभावाद्याख्यया रसे ॥ आलंबनोद्दीपनाख्ये विभावस्य भिदे उभे । आलम्बनौ च द्विविधौ विषयाश्रयभेदतः ॥ रसस्य विषयः कृष्णस्तस्यानुभविताश्रयः । स चानुभविता प्रेम्णो यः श्रेष्ठोऽन्यस्पृहाकरः ॥ उद्दीपनास्तु सम्बंधिपदार्थाः कंसवैरिणः । अनुभावाः सात्त्विकाः स्युरांगिकाश्चेति ते द्विधा ॥ स्तंभः स्वेदोऽथ रोमांचः स्वरभंगोऽथ वेपथुः । वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥ नृत्यं विलुंठितं गानं श्वासहासादयोऽपि च । आंगिका अनुभावास्ते यथायथमुदीरिताः ॥ निर्वेदश्च विषादश्च दैन्यं ग्लानिस्तमो मदः । गर्वः शंकात्रासवेगा उन्मादापस्मृती तथा ॥ व्याधिर्मोहो मृतिश्चैव आलस्यं जाड्यमित्यपि । व्रीडाऽवहित्था स्मरणं वितर्कश्चिन्तनं मतिः ॥ हिंसौत्सुक्यत्वौग्र्यमर्षासूयाश्च धृतिचापले । निद्रा च सुप्तिरालस्यमितीमे व्यभिचारिणः ॥ निर्वेदाद्यास्त्रयस्त्रिंशद्भावाः स्युर्व्यभिचारिणः । स्थायिनं वर्धयन्त्येते प्रादुष्षन्ति तिरोऽपि च ॥ आनुकूल्यात्मिकायां चेल्लिप्सोल्लाससधर्मिका । स स्थायी तारतम्येन रतिप्रेमादिनामभाक् ॥ रतिः प्रेमा तथा स्नेहः प्रणयो मानरागकौ । अनुरागमहाभावावेते भावक्रमा मताः ॥ शान्तिः प्रीतिस्तथा सख्यं वात्सल्यं प्रियता तथा । ज्ञानादरस्वतुल्यत्वकृपावल्लभतारतः ॥ शान्तः प्रीतस्तथा प्रेयान् वत्सलो मधुरो रसाः । सामान्याद्भक्तिशब्दोक्तः स्थायी भक्तिरसो मतः ॥ विस्मयो हास्य उत्साहक्रोधभीतघृणाशुचः । ये चैते स्थायिनो

**हतं कुवलयापीडं दृष्ट्वा तावपि दुर्जयौ ॥ कंसो मनस्व्यपि तदा भृशमुद्विविजे नृप ॥ १८ ॥ तौ रेजतू रंगगतौ महाभुजौ विचित्रवेषाभरणस्रगंबरौ ॥ यथा नटावुत्तमवेषधारिणौ मनः क्षिपंतौ प्रभया निरीक्षताम् ॥ १९ ॥**

उद्विविजे भीतो बभूव ॥ १८ ॥ यथा नटाविति निर्भयत्वं दर्शितम् ॥ १९ ॥

भक्तेर्जातास्ते तत्र गौणकाः ॥ अद्भुते हास्यवीरौ च रौद्रस्तद्वद्भयानकः । बीभत्सः करुणश्चैव तेषु गौणरसाः क्रमात् ॥ श्रीकृष्णविषयत्वं तु भक्तिद्वाराऽत्र संमतम् । क्वचित्स्वतोऽपि येन स्यात्स्थायिनो न हि दूषणम् ॥" इति । अत्र **विश्वनाथस्तु**—अथ तत्र रंगभूमौ स्थितेषु नानाविधजनसमुदायेषु श्रुतिप्रथितमहारसस्वरूपः स्वयं भगवांस्तत्तदन्तःकरणानुरूपमेव स्फुरति स्मेति वदन्स्वयमेव सर्वोपनिषत्साराऽर्थो मूर्त इति साक्षादिव दर्शयति—मल्लानां पर्वतोपमशरीराणां चाणूरादीनामशनिरिव विदितोऽभूदित्येवमेव सर्वत्रान्वयः । क्वचित्तृतीयार्थे क्वचित्संबंधे च षष्ठ्यः । अतिसुकुमारसुशीतलमधुरांगोऽपि सः पर्वतैर्महाकठोरसुसंतापककटुतरांगो वज्र इव मल्लैर्ईषद्विष्टांतःकरणैरनुभूतः, पित्तदूषितरसनैर्मत्स्यंडिकापित्त इवातितिक्त इति तैस्तत्सवासनैस्तत्रत्यैः सभ्यैरपि दृष्ट्वापि भगवतः स्वरूपं नास्वादितमिति तेषु रसाभास एव न तु रसः । नृणां माथुराणां द्वेषादिराहित्यादुत्पत्त्यैव प्रेमसामान्यवतां नरवरः, नरेष्वसाधारणैरतिचमत्कारकगुणरूपशीलादिभिः श्रेष्ठ इति तैः शुद्धसत्त्वमयान्तःकरणैस्तस्य नरवरत्वं स्वरूपमेवास्वादितामिति तेषु विस्मयरसः । स्त्रीणां जनन्यादिव्यतिरिक्तानां युवतीनां स्मर इति, कृष्णविषयककामस्य प्राकृतत्वाभावात्तासां माथुरत्वेन प्रेमवत्त्वात्ताभिस्तस्य साक्षान्मन्मथमन्मथत्वं स्वरूपमेवास्वादितामिति तासूज्ज्वलो रसः, अत्रैव मूर्तिमानिति विशेषणोपन्यासेनास्यैव स्वरूपस्यांगित्वं ध्वनितम् । गोपानां स्वजन इति तैरपि स्वरूपमास्वादितं यतो गोपमित्रत्वं तस्य खलु स्वरूपमेवेति तेषु सख्यरसो हास्यरसश्च । असतामसाधूनां क्षितिभुजां, श्लेषेण सज्जनवतीं पृथिवीं ग्रसतामिव भक्तापराधिनां तेषां शास्तान्तक इत्यन्तकत्वम् । सर्वसुहृदः सर्वानंदकस्य कृष्णस्य न स्वरूपमिति तैर्मह्लैरिव तन्नास्वादितमिति तेषु रौद्ररसाभास एव । स्वपित्रोः नंदवसुदेवयोर्वसुदेवदेवक्योर्वा शिशुरिति—ताभ्यां च स्वरूपमास्वादितं यतो नंदात्मजत्वं तस्य स्वरूपमेवेति तत्र वात्सल्यरसो विजिवांसुलोकदर्शनात्करुणरसश्च । भोजपतेः कंसस्य मृत्युरिति मृत्युत्वम् । माधुर्यसुधावर्षकस्य कृष्णस्य न स्वरूपमतस्तेन तस्य तमिति तस्मिन्भयानकरसाभासः । अविदुषां कंसपुरोहितादीनामपराधिनां विराट् व्यष्टिः । प्राकृतो मनुष्यः—हंहो अयमेव किं परमेश्वर इत्युच्यते भ्रान्तैरयं तु पारदारिकत्वेन गवादिघातित्वेन च श्रुतचरः, संप्रति प्राण्यस्थिरक्तकलिलगात्रो मनुष्येष्वप्यनाचारो घृणास्पदीभवत्यस्मिन्नेत्राणामिति व्याहरत्सु महापापिष्ठेष्वावेशाभावात्कंसादिभ्योऽप्यधमेषु मंदभाग्येषु तेषु बीभत्सरसाभासः । योगिनां सनकादीनां परं तत्त्वं मूर्तं परं ब्रह्मेति तस्य स्वरूपं तैरास्वादितमिति तेषु शान्तरसः । वृष्णीनां परदेवता उपास्यपरमेश्वर इति तत्स्वरूपं तैरास्वादितामिति तेषु दास्यरस इत्येवं तत्र दशविधेषु जनसमुदायेषु चतुर्णां विमुखत्वेन तद्रसास्वादनासामर्थ्यात् षाड्भिरष्टौ रसा आस्वादिता इत्यतः "रसो वै सः, रसं ह्येवायं लब्ध्वानंदी भवति" इति । वै निश्चितमेव । स श्रीभागवतीयदशमस्कंधदर्शितायां माथुररंगभूमौ प्रसिद्धः कृष्ण एव रसः, तं रसम् "कृष्ण एवायमानंदमयोऽपि लब्ध्वा आनंदीभवत्यानंदभूमवान् भवति" इति श्रुतिरेवं व्याख्येया ॥ १७ ॥ तौ रामकृष्णौ । मनस्वी शूरः "मनस्वी स्थिरचित्ते स्याच्छूरे योगविदि" इति धरणिः ॥ * ॥ हतं दृष्ट्वेति महोच्चमञ्चोपर्युपवेशात् । अतिदुर्जयत्वदर्शनं कुवलयापीडहननात्, तेजोविशेषाभिव्यंजनाद्वा । मनस्वी महाशूरोऽपि । तदेति ततः प्राक्तादृग्भयाभावात् । कंसस्य तादृशोद्वेगात्प्रहर्षेणाह—हे नृपेति । त्वं तु नृपालकत्वादासन्नमृत्युरपि न बिभेषीति भावः । तस्य त्वादृशत्वं नास्ति परद्रोहित्वात् 'द्रोग्धुर्हि परतो भयम्' इत्युक्तेः । स एव भूतो न तु त्वमिति भावान्तरम् ॥ १८ ॥ तौ रामकृष्णौ । महाभुजौ शूरौ । प्रभया देहकान्त्या । क्षिपंतावाकर्षन्तौ ॥ * ॥ विचित्राणि विविधानि अद्भुतानि वा वेषादीनि ययोस्तौ । तत्र वेषस्तिलकादिः, आभरणं तिलकमेव, कटककुंडलादिकं (धृ) तोऽपि महायुद्धे तेषामम्लानत्वादिव्यंजनया कौशलविशेषो व्यञ्जितः । निरीक्षमाणानां मल्लादिदशविधजनानां प्रभयाऽशनित्वादिरूपया स्वतेजसा मनः क्षिपन्तौ यथायथं विक्षिपंतौ । उत्तमवेषधारिणाविति नटविशेषणम् । उत्तमास्तथातथा प्रत्यायनसमर्था ये वेषा नानानेपथ्यानि तद्धारिणावित्येकस्य नानात्वं, प्रकाशमात्रेण तु कालभेदेन दृष्टान्तः । यद्वा—इन्द्रजालिकनट

निरीक्ष्य तावुत्तमपूरुषौ जना मंचास्थिता नागरराष्ट्रका नृप ॥ प्रहर्षवेगोत्कलितेक्षणाननाः पपुर्न तृप्ता नयनैस्तदाननम् ॥ २० ॥ पिबंत इव चक्षुर्भ्यां लिहंत इव जिह्वया ॥ जिघ्रंत इव नासाभ्यां श्लिष्यंत इव बाहुभिः ॥ २१ ॥ ऊचुः परस्परं ते वै यथादृष्टं यथाश्रुतम् ॥ तद्रूपगुणमाधुर्य प्रागल्भ्यस्मारिता इव ॥ २२ ॥

प्रहर्षवेगेनोत्कलितान्युज्जृंभितानीक्षणान्याननानि च येषां ते । तयोराननं पपुः परं न तृप्ताः । निराकांक्षा न बभूवुरित्यर्थः ॥ २० ॥ तदेवाह । पिबंत इवेति । श्लिष्यंत इव परिष्वंगं कुर्वंत इव लक्षिता इत्यर्थः ॥ २१ ॥ यथादृष्टं धनुर्भंगादि यथाश्रुतं गोवर्धनोद्धरणादि तत्तदनतिक्रम्य तदनुरूपमित्यर्थः । प्रत्यक्षं च तयो रूपं गजदंतादियुक्तं गुणाः शौर्यादयो माधुर्यं हसितालापादि प्रागभ्यं धाष्टर्यं तैः स्मारिता इव स्मरणं प्रापिता इवेत्यर्थः ॥ २२ ॥

एवात्र दृष्टान्तः । स च स्वांगेन्द्रजालाभ्यां सत्यासत्यधर्मान्युगपद्दर्शयतीति ॥ १९ ॥ तावुक्तार्थौ । इत्यर्थ इति–रम्यवस्त्वालोकतः कस्याचिदपि चेतो न निवर्तत इति भावः ॥ * ॥ ये तु प्रतिकूलज्ञानव्यतिरिक्तास्तेषु तु साधारणानामपि परमप्रेमैव जातः किमुतासाधारणानामित्याह–निरीक्ष्येति । उत्तमपूरुषावित्यखिलसौंदर्यवैदग्ध्यादिकं सूचितम् । मंचास्थिता इति निरीक्षणं सम्यगुक्तम् । नागराः पौराः । राष्ट्रिका जानपदा लोकाः सर्वेऽपीत्यर्थः । उत्कलितत्वं विकाशितत्वम् । पपुरित्यनेन नयनानां चमत्कृतत्वम्, आननस्य सौन्दर्यामृतनिधानपात्रत्वम् । आननं पपुरिति सौन्दर्यप्राचुर्यात्तेनाभेदोत्प्रेक्षया । केवलाननिर्देशो दर्शनैतत्प्राधान्यात् ॥ २० ॥ तदेवाऽनैराकांक्ष्यमेव । पिबन्तः सादरमवलोकयन्तः । लिहन्त आस्वादयन्तः । इत्यर्थ इति–तत्रत्यजनैरिति शेषः । लक्षिता दृष्टाः । सर्वेन्द्रियैस्त मभजन्निति भावः ॥ * ॥ पिबन्त इति युग्मकम् । ताविति शेषः । इवेत्युत्प्रेक्षायाम् । नेत्रविस्तारणालिंगेन ताभ्यां तयोः पानमिव कुर्वन्त इत्यर्थः । प्रत्येकापेक्षया द्वित्वाऽद्वित्वादि । एवं जिह्वाद्वारा तन्माधुरीवर्णनलिंगेन तया तयोर्लेहनमिव कुर्वन्त इत्यर्थः । तथा हर्षवशात्तदतिसांमुख्यपूर्वकनासाफुल्लत्वससंभ्रमश्वासोत्तोलनादिलिंगेनाविच्छिदुरतत्सौरभ्यलाभलालसया तावेव नासयोः प्रवेशयितुमिव प्रवृत्ता इत्यर्थः । तद्वदेव च परस्पररूपदर्शनार्थं करचालनलिंगेन बाहुभिस्तदालिंगनमिव कुर्वन्तः । अत एव चालनलाघवेन बहव इव दृश्यन्त इत्यभिप्रायेण । अत्र तु बहुत्वं केषांचित्तत्तद्योग्यानां तत्तदिच्छाप्यस्ति, ततः किञ्चिदनुकरणमपि संभवतीत्यपि पिबन्त इवेत्यादिकमुक्तम् । अत्र **विश्वनाथः**–पिबन्त इवेत्यादीनि नयनविस्ताररसनाचालनप्रफुल्लनासाश्वासग्रहणबाहुप्रसारणलिंगज्ञापितानीत्यर्थः ॥ २१ ॥ इत्यर्थ इति । न त्वदृष्टाश्रुतचरं जगदुरिति भावः । 'प्रगल्भो निपुणे धृष्टे' इति धरणिः । प्रागल्भ्यं नैपुण्यं च ॥ * ॥ ऊचुरिति तैर्व्याख्यातम् । तत्र यथादृष्टमित्यादावेवं विवेचनीयम्–समासोऽयमव्ययीभावः । स च "अव्ययं विभक्ति–"इत्यादिना सूत्रेण, "यथासादृश्ये" इत्यादि च वर्ण्यते । तत्र प्रथमेन यथार्थत्वे प्रवर्तमानस्यैवं विवेकः–यथार्थाश्चत्वारः,–योग्यता, वीप्सा, पदार्थानतिवृत्तिः, सादृश्यञ्चेति । अत्र पदार्थानतिवृतिस्तदनतिक्रमः । तत्रोदाहरणम्–यथाबलमधीते, बलमनतिक्रम्येत्यर्थः । योग्यतायामुदाहरणम्–अनुरूपस्य दानं यथादानमिति, योग्यमित्यर्थः । अत्र यथाशब्देन प्रयुज्यते न त्वन्यशब्दैः । एवं सवीणं ध्वनतीत्यत्र सादृश्यार्थे सहशब्दवत् । तस्माद्यथादृष्टमित्यादौ दृष्टं यद्धनुर्भंगादि तदनतिक्रम्य । श्रुतं यद्गोवर्धनोद्धारणादि तत्तदनतिक्रम्येति विभज्यैव योज्यम् । तदनुरूपमित्यर्थ इति–अत्र योग्यतायामेवाव्ययीभावो गम्यते, अनुरूपमस्य दानामितिवत् । तत्तश्च तत्तद्योग्यमित्यर्थः । पदार्थानतिवृत्तियोग्यतयोरव्ययीभावयोर्भिन्नार्थत्वेऽपि योग्यतार्थे यत्पर्यवसानं कृतं, तत्खलु तत्रैव तात्पर्यमित्यपेक्षया गम्यते । "यथाऽसादृश्ये" इत्यसादृश्ये प्रवर्तमानस्य द्वितीयसूत्रस्योदाहरणम्–यथावृद्धं प्रविशंतु, येये वृद्धास्त इत्यर्थः । प्रत्यक्षमित्यनेन तच्छब्दो व्याख्यात इति । यद्वा–यथेति योग्यतार्थे एव, दृष्टं यद्धनुर्भंगादि तदनुरूपमेव । श्रुतं यन्नारायणांशवत्त्वादि तदनुरूपमेव, नाधिकामित्यर्थः । अत एव वक्ष्यते–'अंशेन' ( २३ ) इति, तत्तदपि तेषां संदिग्धमि

एतौ भगवतः साक्षाद्धरेर्नारायणस्य हि ॥ अवतीर्णाविहांशेन वसुदेवस्य वेश्मनि ॥ २३ ॥ एष वै किल देवक्यां जातो नीतश्च गोकुलम् ॥ कालमेतं वसन्गूढो ववृधे नंदवेश्मनि ॥ २४ ॥ पूतनानेन नीतांतं चक्रवातश्च दानवः ॥ अर्जुनौ गुह्यकः केशी धेनुकोन्ये च तद्विधाः ॥ २५ ॥ गावः सपाला एतेन दावाग्नेः परिमोचिताः ॥ कालियो दमितः सर्प इंद्रश्च विमदः कृतः ॥ २६ ॥ सप्ताहमेकहस्तेन धृतोद्रिप्रवरोमुना ॥ वर्षवाताशनिभ्यश्च परित्रातं च गोकुलम् ॥ २७ ॥ गोप्योस्य नित्यमुदितहसितप्रेक्षणं मुखम् ॥ पश्यंत्यो विविधांस्तापांस्तरंति स्माश्रमं मुदा ॥ २८ ॥

विस्मितानां वाक्यान्याह अष्टभिरेतावित्यादिभिः ॥ २३ ॥ किलेति सर्वत्रान्वेति ॥ २४ ॥ गुह्यकः शंखचूडः अन्ये चाघासुरादयः ॥ २५ ॥ २६ ॥ २७ ॥ आश्रममीषच्छ्रमयुक्तं मुखम्। अश्रमं श्रमरहितं मुखमिति वा। यद्वा अश्रमं यथा भवति तथा तापांस्तरंति स्मेति ॥ २८ ॥

वार्सात्संप्रति तद्दर्शनेनैव निश्चितं जातमित्याह–तद्रूपेति । तस्य रूपं भगवल्लक्षणाकारम्, गुणा असमोर्द्ध्वसौन्दर्यादयः, माधुर्यं कदाचिदाच्छादितेष्वपि रूपगुणेषु तत्स्वभावत एव मनोहरत्वम्, प्रागल्भ्यं सर्वत्राकुंठितत्वं, तैः स्मारिता इव । इवेत्युत्प्रेक्षायाम् । वस्तुतस्त्वसंभावनाविपरीतभावनाभ्यां संदिग्धत्वमेव न तु श्रुत्वापि दृष्ट्वापि विस्मृतत्वामिति तैः प्रतीतिं प्रापिता इत्यर्थः । यद्वा–तत्तत्तु तेषां सदा स्मर्यमाणमपि तदानीं तद्रूपादिदर्शनेनातीव चमत्कृतत्वमासीदिति । नूतनस्मरणविषयतामिव प्राप्तमित्याह--तद्रूपेति । अत एवोत्तरत्र 'विस्मितानां वाक्यमाह' इति तैर्व्याख्यास्यते । अत्र **विश्वनाथः**–दृष्टं धनुर्भंगादि, श्रुतं गोवर्धनोद्धरणादि, तत्तदनतिक्रम्योचुः । रूपाणि श्यामत्वदन्तपाणित्वादीनि, गुणाः शौर्यादयः, प्रागल्भ्यानि धनुर्भंगादिष्वकुंठत्वादीनि, तैस्तत्प्रभावादीञ्श्रुतान्स्मारिता इवेत्यनधिकारार्थः ॥ २२ ॥ एतौ रामकृष्णौ । नारायणस्य साक्षादंशेनैश्वर्येण । यद्वा–अंशानां समूह आंशं स्वाभाविकस्वरूपं, नारायण एवावतीर्णावित्यर्थः । षष्ठी त्वत्राभेद एव राहोः शिर इतिवत् । यद्वा–इं कामं हन्तीतीहः शिवः, सोंशोऽवयवोद्भवो यस्य स इहांशो नारायणः । "नारायणाद्रुद्रोऽजायत" इति श्रुतेः । स इनः स्वामी यस्य स इहांशेनः परीक्षित्तत्संबुद्धौ तथा । एतेन 'कृष्णस्तु भगवान्स्वयम्' इत्युक्तिसामंजस्यमुक्तम् ॥ * ॥ यदूचुस्तदेवाऽऽहाष्टभिः–। भगवतः स्वाभाविकसमोर्द्ध्वनिखिलैश्वर्ययुक्तस्य हरेः सर्वदुःखहर्तुरभीष्टदानादिना मनोहरस्य च यतो नारायणस्य सर्वजीवाश्रयस्य तस्य साक्षादंशेन न तु शक्त्यावेशादिना । इत्येतौ सर्वाभीष्टप्रदौ भविष्यत इति दर्शितम् । इह मथुरायाम्, तत्रापि श्रीवसुदेवस्य वेश्मनीति स्वेषु चातिशयेन पक्षपातो दर्शितः । वेश्मनीति साक्षाद्भगवदंशत्वेन विकारासंभवात् । गीर्देवी त्वित्याह–अंशेन तच्छक्तिमयत्वात्तदंशोपलक्षितो यो वसुदेवस्तस्य वेश्मनीत्यर्थः ॥ २३ ॥ एष कृष्णः । किल प्रसिद्धम् । किल नीतः, किल ववृध इत्येवं किलाव्ययं सर्वत्रान्वेतीत्यर्थः । एतम् एतावंतम् । एतच्छब्दो मत्वर्थे लाक्षणिकोऽर्थानुपपत्तेः ॥ * ॥ एवं सामान्येन द्वावप्युक्त्वा भगवदवतारत्वमेव स्पष्टयितुं तच्चरितानि वक्ष्यन्तः प्राधान्येन श्रीकृष्णस्यादावाहुः–एष इति षड्भिः । वै प्रसिद्धौ । यो जातः प्रादुर्भूतः स एवैषः, अंगुल्या निर्देशादेष इति । किल निश्चये । एतमेतावंतम् । आर्षत्वात्तद्धितलुक् ॥ २४ ॥ अनेन कृष्णेन । अन्तं नाशम् । चक्रवातस्तृणावर्तः । अर्जुनौ ककुब्वृक्षौ । तद्विधास्तैस्तुल्याः, छलिन इत्यर्थः ॥ * ॥ अन्तं विनाशम् ॥ २५ ॥ एतेन श्रीकृष्णेन ॥ * ॥ सर्पतीतस्ततः प्रसरतीति सर्पः । शिरस्सु नृत्येन तद्गमनमशक्यमिति । कालिय इति तन्नामप्रसिद्ध्यैव महाविषत्वादिकं सूचितम् ॥ २६ ॥ अमुना कृष्णेन । अद्रिप्रवरो गोवर्धनः । अशनिर्वज्रपातः ॥ * ॥ विमदकरणप्रकारमाह–सप्ताहमिति । प्रथमः च उक्तसमुच्चये, द्वितीयोऽनुक्तस्य । तेन श्रीगोविंदाभिषेकोऽपि गृहीतः ॥ २७ ॥ अस्य कृष्णस्य । नित्यं सदा । मुदिते हर्षयुते हसितप्रेक्षणे यस्मिँस्तत्तथा । भगवति श्रमारोपेणानीशत्वमाशंक्याह–अश्रमं श्रमरहितमिति वा । मुखे तु श्रमचिह्नं भवति न तु श्रमस्तस्यान्यांगविषयत्वात्प्राय इत्यरुच्याह–यद्वेति । विविधानाध्यात्मिकादीन् ॥ * ॥ तत्रैव भावविशेषवतीनां कासाञ्चित्स्त्रीणां वाक्यमाह–गोप्य इति । नित्यं मुदितं हर्षेण प्रसन्नञ्च,

वदंत्यनेन वंशोऽयं यदोः सुबहुविश्रुतः ॥ श्रियं यशो महत्त्वं च लप्स्यते परिरक्षितः ॥ २९ ॥ अयं चास्याग्रजः श्रीमान्रामः कमललोचनः ॥ प्रलंबो निहतो येन वत्सको ये बकादयः ॥ ३० ॥ जनेष्वेवं ब्रुवाणेषु तूर्येषु निनदत्सु च ॥ कृष्णरामौ समाभाष्य चाणूरो वाक्यमब्रवीत् ॥३१॥ हे नंदसूनो हे राम भवंतौ वीरसंमतौ ॥ नियुद्धकुशलौ श्रुत्वा राज्ञाऽऽहूतौ दिदृक्षुणा ॥ ३२ ॥ प्रियं राज्ञः प्रकुर्वंत्यः श्रेयो विंदंति वै प्रजाः ॥ मनसा कर्मणा वाचा विपरीतमतोऽन्यथा ॥ ३३ ॥ नित्यं प्रमुदिता गोपा वत्सपाला यथा स्फुटम् ॥ वनेषु मल्लयुद्धेन क्रीडंतश्चारयंति गाः ॥ ३४ ॥

अनेन परिरक्षितः यदोर्वंशः सुबहुविश्रुतः सञ्छ्र्यादि लप्स्यत इति वदंतीति ॥ २९ ॥ धेनुकबकवत्सासुरेषु विपर्ययोक्तिर्जनवादेष्वनिश्चयात् ॥ ३० ॥ जनेष्वेवं ब्रुवाणेषु सत्सु तदसहमानश्चाणरोऽब्रवीदिति ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

तत् हसिते प्रेक्षणमवलोकनं ऽ मँस्तच्च । यद्वा—नित्यं मुदितं तत्, अत एव हसितं हास्ययुक्तं च प्रकृष्टं कटाक्षादिना सुंदरमीक्षणं यस्मिँस्तत्र । यद्वा—उदितं हसितयुक्तं प्रेक्षणं यस्मिँस्तन्नित्यं मुदा पश्यन्त्यः, अत एवाश्रममनायासेन तरान्ति स्माऽतरन् । ता एव तेरुर्नास्मादृिधमंदभाग्या इति दैन्येनातीतत्वम् । यद्वा—स्म प्रसिद्धावेव नातीते । अतो वर्तमानप्रयोगस्तस्य व्रजगमने संभावनानपगमात् । विविधान् गुरुपत्यादिकृतनिन्दा तर्जनादिना विरहादिभेदेन वा । एवं रासादिलीलापि सूचिता ॥ २८ ॥ अनेन कृष्णेन ॥ * ॥ अथ श्रीमथुरादौ करिष्यमाणां लीलामुद्दिशति—वदन्तीति, शास्त्रज्ञाः कथयन्ति । महत्त्वं सर्वत उत्कर्षम् ॥ २९ ॥ अयं रामः । अस्य कृष्णस्य । येन रामेण ॥ * ॥ एवं श्रीबलदेवस्याप्याहुः—अयमिति । अप्यर्थे चकारः । अग्रजत्वेन श्रीमान् तदनुरूपं सर्वशोभायुक्तः । तत्रापि नेत्रशोभया लोभयन्ति—कमलेति । वत्सको वत्सप्रतिरूप एव न तु वत्सः । "इवे प्रतिकृतौ" इति कन् । इति तद्वधे दोषः प्रत्याख्यातः । आदिशब्दाद्धेनुकजातयः । विपर्ययोक्तिस्तैर्योजिता । अत्र 'यथादृष्टं यथाश्रुतम्' ( २२ ) इत्युक्तेस्तत्त्वज्ञानाभाव एवोपजीव्यः ॥ ३० ॥ तत् जनवादरूपं तन्महत्त्वम् ॥ * ॥ एवमेतत्प्रकारम् । ब्रुवाणेष्विति प्रहर्षेण तेषामुक्त्यसमाप्तिरुक्ता । जनेष्विति बाहुल्यात्तेषाम निवार्यत्वं ज्ञापितं, तदुक्तेरप्रमाणं च खंडितम् । एवं तेषां मात्सर्यादयः । तूर्येषु नितरां नदत्स्वित्यनेन युद्धोत्साहश्च दर्शितः । अत एवाब्रवीत्समाभाष्याहूय संबोध्य वा, वाक्यमिति पौनरुक्त्यं विशेषणाविशेष्येऽत्र देय इत्याभिप्रायेण । स च निष्ठुर इति गम्यः । यद्वाऽकारप्रश्लेषेण वक्तुमयोग्यामित्यर्थः ॥ ३१ ॥ लोकप्रसिद्धत्वादाह—हे नंदसूनो इति । वीर्येण पराक्रमेण । संमतौ सम्यक्ख्यातौ । नियुद्धं बाहुयुद्धम् ॥ * ॥ समाभाषणप्रकार मेवाह—हे इति । नंदसूनुत्वेन संबोधनं तदीयसत्पुत्रत्वस्य व्यञ्जनाय, रामेति सकललोकरतिहेतुत्वस्य । तत्तच्च युद्धाय प्रोत्साहनम् । श्लेषेण तु गोपपुत्रत्वेनामहत्त्वं, तद्वत्पितृसंबंधानुल्लेखेनाज्ञातापितृकत्वं सूचयति । तत्तूपहासेन तेजोग्लापनार्थमिति ज्ञेयम् । वीर्येण बलेन । सम्मतौ लोकानामादृतौ । तत्रापि नियुद्धे बाहुयुद्धे । कुशलौ दक्षौ श्रुत्वाऽत एव दिदृक्षया भवन्तौ नियुद्धं वा द्रष्टुमिच्छया । राज्ञेति तद्योग्यतोक्ता । अहो अत्र मल्लयुद्धेन क्रीडतामिति भावः । अत्रापि विरोधिलक्षणयोपहास एव तात्पर्यम् ॥ ३२ ॥ अतोऽन्यथा राज्ञः प्रियानाचरणेन । विपरीतमश्रेयः ॥ * ॥ तत्र वैमुख्यं न युक्तं, तथा च स्मृतिरित्याह—प्रियमिति । प्रकुर्वन्त्य इत्यार्षो नुम् । एतच्च भगवतोः श्रेयोऽर्थमेवेति भावः ॥ ३३ ॥ राज्ञा कथमवगतमेतौ नियुद्धकुशलाविति चेत्तत्राह—नित्यामिति । नियुद्धक्रीडया गोपा गोवत्सांश्चारयन्तीति किंवदन्त्यावगतामित्यर्थः ॥ * ॥ न च वक्तव्यं गोपैरस्माभिस्तन्न सम्यग्ज्ञायते इति यतो नित्यमिति । गोपाः गवां रक्षकाः । समुच्चयेऽप्यर्थे वा तथा शब्दः । वत्सपाला अपि, गाः गोजातीः स्फुटं व्यक्तं प्रसिद्धमेवेत्यर्थः । इदमपि निगूढावहासयुक्तम् । एवमुत्तरत्रापि ॥ ३४ ॥

तस्माद्राज्ञः प्रियं यूयं वयं च करवाम हे ॥ भूतानि नः प्रसीदंति सर्वभूतमयो नृपः ॥ ३५ ॥ तन्निशम्याब्रवीत्कृष्णो देशकालोचितं वचः ॥ नियुद्धमात्मनोऽभीष्टं मन्यमानोऽभिनंद्य च ॥ ३६ ॥ प्रजा भोजपतेरस्य वयं चापि वनेचराः ॥ करवाम प्रियं नित्यं तन्नः परमनुग्रहः ॥ ३७ ॥ बाला वयं तुल्यबलैः क्रीडिष्यामो यथोचितम् ॥ भवेन्नियुद्धं माधर्मः स्पृशेन्मल्लसभासदः ॥ ३८ ॥

हे कृष्ण प्रियं करवामेति । राज्ञि प्रीते भूतानि च प्रसीदेयुः ॥ ३५ ॥ ३६ ॥ ३७ ॥ यथोचितं नियुद्धं बाहुयुद्धं भवेत् । मल्लसभासदो यतो नित्यं भवतामेषा क्रीडा तस्माद्धेतोः । यूयं वयं च करवाम इत्यत्र 'युगपत्प्राप्तौ परः' इत्युत्तमपुरुषप्रयोगः । नियुद्धस्य कलहरूपत्वात्तत्र किं फलं तत्राह—भूतानीति ।:कथं सर्वभूतप्रसादस्तत्राह—सर्वभूतेति ॥ * ॥ तर्हि गोपैः सह तत्क्रीडा कार्येति चेत्तत्राह—तस्मादिति । राज्ञः प्रियार्थमेवाऽस्माभिः सह कार्येति भावः । भूतानि जीवाः । नृपस्य सर्वभूतमयत्वं सर्वभूतस्य तदुपजीवनत्वात् । तस्मान्निजप्रजारूपयोर्भवतोरनेन रक्षैव कार्येति मा च भैषीस्त्वमिति भावः । अन्यत्तैः । तत्रेतिशब्दस्य प्रकारार्थस्य राज्ञीत्यादिनान्वयः ॥ ३९ ॥ तत् चाणूरवाक्यम् । अभिनंद्य कारवमेत्युक्त्वा च ॥ * ॥ तन्निशम्याभिनंद्य च देशकालोचितं तदानीं तादृशमेव वक्तुं योग्यं वचोमात्रमब्रवीत् । वस्तुतोऽभिप्रायस्त्वन्य एवेति भावः । तादृशवचने हेतुः—नियुद्धमित्यादि । तत्र हेतुः—कृष्णः, तादृशलीलाकौतुकितया प्रसिद्ध इत्यर्थः ॥३६॥ अस्य कंसस्य । प्रजा यूयम् । तथात्वेऽपि वयं वनेचरा एतेन वनेचराणां मुख्यप्रजात्वं नास्तीत्युक्तं, तथापि यद्वयं प्रियं नृपप्रियं नियुद्धं नित्यं करवाम तत्परं केवलमनुग्रह एवेशस्येति शेषः । वस्तुतस्तु वयं नित्यं प्रियं मोक्षं यदस्य करवाम करिष्याम, तन्नोऽस्माकमनुग्रह एव । न हि मदनुग्रहं विना मोक्षो भवतीति सूचितम् ॥ * ॥ अभिनंदनमेवाह—प्रजा इति । भोजपतेरिति गौरवात् । तत्राप्यस्य न तूग्रसेनस्यापीत्यर्थः । वयञ्च प्रजाः क्रीदृशा अपि वनेचरा अपि । चकाराद्धवन्तस्तावत्पुरवासिनः सुतरामेवेत्यर्थः । तस्माद्वयमपि राज्ञः प्रियमाज्ञापालनादिकं करवामैव, नोऽस्मभ्यं भोजपतेरनुग्रह एव वयमत्र प्रवृत्ता भवामेति भावः । वस्तुतस्त्वस्येत्यनादरे षष्ठी । वयं चापि वयमपि प्रजाः, अपि तु नैवेत्यर्थः । तत्र हेतुर्वनगोचराः, ।नित्यवृंदावनविहारिण इत्यर्थः । अयमाधुनिक इति भावः । तस्माद्वयं राज्ञः स्वस्य श्रीगोपराजस्यैव प्रियं करवाम कर्तुमिच्छामः, न तु भोजपतेः । नन्वीश्वरस्य तवान्यत्र राजत्वादिमननमाज्ञापालनादिकञ्चासंभवमित्याशंक्याह—नोऽस्माकमनुग्रहः—प्रेमविशेषकर्तृजनविषयश्चेतोद्रवविशेष एव, येन तादृशीमपि वश्यतां प्रतिपद्येमहीति भावः ॥ ३७ ॥ इत्यर्थ इति—माऽत्र निषेध एवेति ध्येयम् । न हि मल्लानां सभा सा तु राज्ञ एवेत्यस्वारस्यादाह—हे मल्लेति वा । वस्तुतस्तु वयं बाला बलानां शक्तीनां समूहो बालं तद्विद्यते येषु ते बालाः । मत्वर्थीयोऽच् । सर्वशक्तिमंत ईश्वराः । तुल्यबलैः स्वसदृशसर्वशक्तिमद्भिः । अन्यथा निर्बलसबलयोर्युद्धेक्षणात्सभ्याः पापिनो भवन्तीति तात्पर्यम् । एतेन यूयं नास्मत्तुल्यबला इति बलैकदेशवतां सर्वबलवद्भिर्नियुद्धमनुचितमेवेति ध्वनितम् ॥ * ॥ बाला बाल्यत्वेनाल्पबला इत्यर्थः । बहुत्वमन्येषामपि बालानां स्वकोटौ प्रवेशश्च दृष्टान्तव्यञ्जनाय, संसर्गिगोपवर्गापेक्षया वा । तुल्यबलैरिति—बालेष्वपि ये न्यूनबला अधिकबलाश्च तैर्नेत्यर्थः । क्रीडिष्याम इति—तत्रापि क्रीडायामेव ममेच्छेति भावः । अन्यत्तैः । वस्तुतस्तु हे बाला अज्ञास्तुल्यबलैर्गोपैः सखिभिरेव सह क्रीडिष्यामो न त्वल्पबलैर्युष्माभिरित्यर्थः । गोपैर्ममानंतबलशीलवयोविलासवेशैश्च 'मूर्छितकलं वरवेणुवाणवीणैः' इति प्रसिद्धेः । 'मल्लानामशनिः' इति च । तत्रापि भवादृशामाग्रहात्तत्र प्रवर्तामहे, ततोऽशनिस्वभावमदंगस्य स्पर्शने भवतां वधे तु नास्माकं दोष इति भावः । श्रीहरिवंशे विष्णुपर्वणि कंसवधेऽष्टाशीतितमेऽध्याये नियुद्धे निपातनानंतरमवध्यस्यापि मल्लस्य तस्य वधे कार्ये स्वदोषपरिहारार्थं स्पष्टमेव भगवद्वचनम्—"अहं बालो महानंध्रो वपुषा पर्वतोपमः । युद्धं ममानेन सह रोचते बाहुशालिना ॥ युद्धव्यतिक्रमः कश्चिन्न भविष्यीत मत्कृतः । न ह्यहं बाहुयोधानां दूषयिष्यामि यन्मतम् ॥ योऽयं करीषधर्मश्च तोयधर्मश्च रंगजः । कषायस्य च संसर्गः समयो ह्येष कल्पितः ॥ संयमः स्थिरता शौर्यं व्यायामः सत्क्रिया बलम् । रंगे च नियता सिद्धिरेतद्युद्धविदां मतम् ॥ यदयं बाहुयुद्धं वै स्वैरं कर्तुमुद्यतः । अत्र वै निग्रहः कार्यस्तोषयिष्याम्यहं जगत् ॥ करूषेषु प्रसूतोऽयं चाणूरो नाम नामतः । बाहुयोधी शरीरेण कर्मभिश्चात्र चिन्त्य

चाणूर उवाच ॥ न बालो न किशोरस्त्वं बलश्च बलिनां वरः ॥ लीलयेभो हतो येन सहस्रद्विपसत्त्वभृत् ॥ ३९ ॥ तस्माद्भवद्भ्यां बलिभिर्योद्धव्यं नाऽनयोऽत्र वै ॥ मयि विक्रम वार्ष्णेय बलेन सह मुष्टिकः ॥ ४० ॥ इति श्रीभागवते महापुराणे दशमस्कंधे पूर्वार्धे कुवलयापीडवधो रंगभूमिप्रवेश निरूपणं नाम त्रिचत्वारिंशोऽध्यायः ॥४३॥ श्रीशुक उवाच ॥ एवं चर्चितसंकल्पो भगवान्मधुसूदनः ॥ आससादाथ चाणूरं मुष्टिकं रोहिणीसुतः ॥१॥ हस्ताभ्यां हस्तयोर्बद्ध्वा पद्भ्यामेव च पादयोः ॥ विचकर्षतुरन्योन्यं प्रसह्य विजिगीषया ॥ २ ॥

मल्लसभाधिकृताज्ञनानधर्मो मा स्पृशेन्न स्पृशेदित्यर्थः । हे मल्लेति वा ॥ ३८ ॥ सहस्रद्विपानां सत्त्वं बलं बिभर्तीति तथा ॥३९॥ बलिभिर्मादृशैः सह भवद्भ्यां बलिभ्याम्। अत्र युद्धे नानयो नाधर्मः। विक्रम पराक्रमं कुरु । मुष्टिको विक्रमतादित्यनुषंगः ॥ ४० ॥ इति श्रीमद्भागवते म० दशमस्कंधे पूर्वार्धे टीकायां त्रिचत्वारिंशोऽध्यायः॥४३॥ चतुश्चत्वारिंशके तु मल्लकंसादिमर्दनम् ॥ कंसयोषित्समाश्वासस्ताभ्यां पित्रोश्च दर्शनम् ॥१॥ चर्चितो निश्चित एव संकल्पो यस्य सः । आससाद जग्राहेत्यर्थः ॥१॥२ ॥

ताम् ॥ एतेन बहवो मल्ला निपातानन्तरं हताः । रंगप्रतापकामेन मल्लमार्गश्च दूषितः । शास्त्रसिद्धिस्तु योधानां संग्रामे शस्त्रयोधिनाम् ॥ रंगे सिद्धिश्च मल्लानां प्रतिमल्लनिपातजा । रणे विजयमानस्य कीर्तिर्भवति शाश्वती ॥ हतस्यापि रणे शस्त्रैर्नाकपृष्ठं विधीयते । रणे ह्युभयतः सिद्धिर्हतस्येह घ्नतोऽपि वा ॥ सा हि प्राणान्तिकी यात्रा महद्भिः साधुपूजिता । अयं तु मार्गो बलतः क्रियातश्च विनिस्सृतः ॥ मृतस्य रंगे कः स्वर्गो जयतां वा कुतो रतिः । ये तु केचित्स्वदोषेण राज्ञः पंडितमानिनः । प्रतापार्थे हता मल्ला मल्लहंतुर्वधो हि सः ॥" इति ॥ ३८ ॥ तथैवाह सः—न बाल इते । बलिनामेकैकशक्तिमतां ब्रह्मादीनां वरः । तदेवाह—येन त्वया सहस्रेति ॥ * ॥ किशोरश्च न भवसि तस्यापि बालसादृश्येनाल्पबलत्वात् । किन्तु बलिनां मध्ये वरः श्रेष्ठः । वरत्वमेव दर्शयति—लीलयेति । येनेति येनयेनेत्यर्थः । द्वयोरपि स्कंधे गजदंतस्य दृष्टत्वादनुमाय तदिदं प्रोक्तमिति ज्ञेयम् ॥ ३९ ॥ यस्माद्युवां बलिनां वरौ लोकदृष्ट्या। बलिभिरस्माभिः सह । अत्र नियुद्धे ॥ * ॥ बलिभिरिति बहुत्वं सर्वेषामेव मल्लानां क्रमेण नियुद्धेच्छया । यद्वा—बलिभिर्बहुभिरप्येकदा योद्धव्यं तथापि नानयः। कथं तर्हि भवता योद्धव्यमित्याशंक्य पुनः स्वाभिमानमाह—मयि तु विक्रम, यावन्तं स्वविक्रमं दर्शयेत्यर्थः । अहं तु न दर्शयामीति भावः । ननु गोपा वयं राजसभायां न क्रीडायोग्या इत्यत्राह—हे वार्ष्णेय । तदिदमपि वयं जानीम इति भावः । न त्वं गोपः किन्तु वृष्णिवंशोद्भूतत्वाद्राजवंशीय एवेति तत्त्वम् । **विश्वनाथस्तु**—बलिभिर्मादृशैः सह, न चात्र तैर्बालैस्तेषां त्वत्तुल्यबलत्वाभावादिति भावः ॥ ४० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशदस्कंधे पूर्वार्धे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ आदिपदेन मातापित्रोः शोकमर्दनग्रहः । ताभ्यां रामकृष्णाभ्याम् ( १ ) । श्रुत्युक्तमल्लादिमर्दनमाह—एवमिति । तथा च श्रुतिः— "अवातिरतमनृतानि विश्वऋतेन मित्रावरुणा सचेथे" इति । अर्थस्तु—तत्रायादवोऽपि कंसो यदूनामाधिपत्यमिच्छन्ननृतः,तेन प्रयुक्तानि मल्लादीनि बहुत्वमाद्यर्थम् , आदिना हस्त्यनुक्ताद्यादीनां ग्रहः । अनृतानि विश्वसर्वाणि तानि अवातिरतं तिरस्कृतवन्तौ । ऋतेन सत्येनैव यादवत्वेन गोपत्वाच्छादितया प्रागप्रसिद्धेन मित्रावरुणौ सूत्रान्तर्यामिणौ रामकृष्णौ सचेथे संगच्छेथे युवाम् । तत्र कंसस्यानृतत्वमत्र हरिवंशस्थमहामात्रकथया बोध्यम् ॥'चर्चितो निश्चितार्चितौ' इति निरुक्तिकारः ! एवं चाणूरोक्तप्रकारेण ॥ * ॥ भगवानशेषैश्वर्यसंपन्न इति सद्य एवेच्छामात्रेण तद्वधसामर्थ्यं सूचितम् । तथापि चाणूरमाससाद क्षणंक्षणं मल्लयुद्धकौतुकार्थमंतिके गतः । यतो मधुसूदनः । यथा सद्यो हंतुं शक्तोऽपि चिरं बाहुयुद्धक्रीडां कृत्वा मधुं हतवाँस्तद्वदित्यर्थः । लोकवत्तु लीलाकैवल्याम्, इति न्यायेनेति भावः । अथ तदनंतरं मुष्टिकमित्यादि॥१॥ मल्लयुद्धरीतिमाह—हस्ताभ्यामिति । बद्ध्वा गृहीत्वा ॥ * ॥ क्रीडामेवाह—हस्ताभ्यामित्यादिचतुर्भिः । चकार उक्तसमुच्चये । एवशब्दस्य हस्ताभ्यामित्यनेनाप्यन्वयः, अन्येनान्यस्य मिश्रणे वैषम्यापत्त्या मल्लक्रीडापाटवहानेः । एवमग्रेऽपि । अन्योऽन्यं विजिगीषयेति । श्रीभगवतोऽपि

अरत्नी द्वे अरत्निभ्यां जानुभ्यां चैव जानुनी ॥ शिरः शीर्ष्णोरसोरस्तावन्योन्यमभिजघ्नतुः ॥ ३ ॥ परिभ्रमणविक्षेपपरिरंभावपातनैः ॥ उत्सर्पणापसर्पणैश्चान्योन्यं प्रत्यरुंधताम् ॥४॥ उत्थापनैरुन्नयनैश्चालनैः स्थापनैरपि ॥ परस्परं जिगीषंतावपचक्रतुरात्मनः ॥५ ॥ तद्बलाबलवद्युद्धं समेताः सर्वयोषितः॥ऊचुः परस्परं राजन्सानु कंपा वरूथशः॥६॥महानयं बताऽधर्म एषां राजसभासदाम्॥ये बलाबलवद्युद्धं राज्ञोन्विच्छंति पश्यतः ॥ ७ ॥

बाहुमध्यात्कनिष्ठांगुलिव्यतिरेकेण कृतमुष्टिर्हस्तोऽरत्निः ॥ ३ ॥ परिभ्रामणं हस्तादिषु गृहीत्वा परितश्चालनं विक्षेपो नोदनं परिरंभो बाहुभ्यां निष्पीडनम् अवपातनमधःक्षेपः उत्सर्पणमुत्सृज्य पुरतो गमनम् अपसर्पणं पृष्ठतो गमनम् एतैः अन्योऽन्यं प्रत्यरुंधतां प्रत्यावृतवंतौ ॥ ४ ॥ उत्थापनं जानुनी पादौ च पिंडीकृत्य पतितस्योच्चाटनम् । उन्नयनं हस्ताभ्यामुद्धृत्य नयनम् । चालनं कंठादिलग्नस्य निःसारणम् । स्थापनं पाणिपादादिपिंडीकरणम् । एवं परस्परमात्मनो देहस्यापचक्रतुरपकारं कृतवंतौ ॥ ५ ॥ तद्युद्धं बलाबलवदेकतो बलमन्यतोऽबलम् तद्युक्तं बलाबलवत् विषममित्यूचुरित्यर्थः । वरूथशः समेताः संघशो मिलिताः । यद्वा तद्बलाबलवतोर्युद्धं दृष्ट्वा महानयमधर्म इत्यूचुरित्यन्वयः । अत्र दृष्ट्वेत्यध्याहार्यम् ॥ ६ ॥ तदेव दर्शयति । महानिति । बालयोर्बलवतोश्च युद्धं राजा चेत्पश्येत्स्वयं वारणीयः । एते तु राज्ञः पश्यतः स्वयम

नरलीलाव्यवसायत्वेन विजयेच्छासंभवात् । चार्चितश्चाणूरमहं हन्यामिति विचारितः संकल्पोऽभिप्रायो येनेति सः ॥२॥ तौ कृष्णचाणूरौ । अभिजघ्नतुः संयोजितवन्तौ ॥*॥ द्वे प्रत्येकं पृथगित्यर्थः । तौ श्रीभगवच्चाणूरौ । तावित्यस्य पूर्वेण परेणाप्यन्वयः।अभितो जघ्नतुः प्रहृतवन्तौ । अरत्निशब्दस्तैर्व्याख्यातः । अत्र प्रमाणवाचकः खल्वयं, ततस्तेन युद्धं न संभवति,:कथंचित्तद्व्यञ्जकाकारांगवाचकत्वेऽपि निस्सृतकनिष्ठांगुलितया प्रहारसौकर्यं न संभवति, नापि मल्लेषु तादृशं युद्धं प्रसिद्धं, तस्मान्मुष्ट्योपलक्षितत्वेन कथंचिन्मुष्टिरेव वाच्या । व्याख्यास्यते च भगवद्गात्राणामरत्निजान्वादीनामिति । यद्वा—"अरत्निः कफणौ हस्ते सप्रकोष्ठे तदंगुलौ" इति विश्वप्रकाशात्कफोणिरेवोच्यते । 'कफोणिः कफणिस्तथा' इति द्विरूपकोशात् । अत्र **विश्वनाथस्तु**—यद्यप्यरत्निभ्यां मल्लयुद्धं दुष्करत्वादप्रसिद्धं, प्रसिद्धन्तु समुष्टिहस्ताभ्यामेव तदपि 'वेणुवाद्य उरुधा निजशिक्षा' इतिवद्भगवता निष्कनिष्ठमुष्टिहस्तेनैवारब्धे नियुद्धे चाणूरेणापि कष्टं प्राप्तेनापि वीराभिमानिना तथा कृतमिति ज्ञेयम् ॥ ३ ॥ एतैर्नियुद्धप्रकारैः ॥ * ॥ प्रत्यरुद्धतामिति—लुङि श्नम्प्रत्यय आर्षः ॥ ४ ॥ उच्चाटनमुच्चैःकरणम् । एवमुक्तरीत्या । "मल्लयुद्धं नियुद्धज्ञा विंशभेदं प्रचक्षते । द्वात्रिंशद्भेदमपरे चत्वारिंशद्विधं परे ॥" इति संग्रामविजयवचनात् । सर्वनियुद्धविधिदर्शनार्थं भगवतैवं क्रीडितम् । तत्तद्विधायासाभावादयमेवार्थ उपर्यपि । "तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ । युयुधाते" इत्यादिना सूच्यते ॥ * ॥ आत्मनोपचक्रतुरिति[2] भगवतस्तदभावेऽपि द्रष्टृलोकाभिप्रायानुरोधात्तथोक्तम् ॥ ५ ॥ इत्यर्थ इति—कृष्णचाणूरयोः साम्याभावाद्बलाबलवतोर्विषममेव युद्धमिति भावः । वरूथशः संघशः "वरूथो रथगुप्तौ संघे क्लीबं चर्मवेश्मनोः" इति कोशात् । विषमपदाध्याहारस्यागातिकगतिकत्वादाह—यद्वेति । अग्रिमश्लोकपादेनान्वयोऽत्रेति ॥ * ॥ सानुकंपा इति—स्नेहस्य स्वभाव एवायं यत्स्वविषयस्य बलाधिक्यं न प्रत्याययेदिति । वरूथशः स्वस्ववर्गभेदेन ॥ ६ ॥ तदेव अधर्मत्वम् । स्वयं युद्धकर्तृभिरिति । एते युद्धकर्तारः । अनुमन्यन्ते अनुकूलं मन्वते । राजसभायां सीदंत्युपविशंतीति राजसभासदस्तेषां तथा । इत्यर्थ इति—सत्यप्यधर्मवारके पुनरतद्वारणे महानेवाधर्म उभयोरिति[3] भावः ॥ * ॥ तासामुक्तिं दशभिराह—बालाभ्यां सह बलवतोर्युद्धं

१ तिलोप आर्षः । २ 'उपचक्रतुरात्मना' इति पा० । ३ अधर्मकर्त्रवारकयोः ।

क्व वज्रसारसर्वांगौ मल्लौ शैलेंद्रसन्निभौ ॥ क्व चातिसुकुमारांगौ किशोरौ नाप्तयौवनौ ॥ ८ ॥ धर्मव्यतिक्रमो ह्यस्य समाजस्य ध्रुवं भवेत् ॥ यत्राधर्मः समुत्तिष्ठेन्न स्थेयं तत्र कर्हिचित् ॥ ९ ॥ न सभां प्रविशेत्प्राज्ञः सभ्यदोषाननुस्मरन् ॥ अब्रुवन्विब्रुवन्नज्ञो नरः किल्बिषमश्नुते ॥ १० ॥ वल्गतः शत्रुमभितः कृष्णस्य वदनांबुजम् ॥ वीक्ष्यतां श्रमवार्युप्तं पद्मकोशमिवांबुभिः ॥ ११ ॥ किं न पश्यत रामस्य मुखमाताम्रलोचनम् ॥ मुष्टिकं प्रति सामर्षं हाससंरंभशोभितम् ॥ १२ ॥

न्विच्छंत्यनुमन्यंत इति बतायं महानधर्म इत्यर्थः ॥७॥ बलाबलवद्युद्धतां प्रपंचयति पंचभिः । क्वेति । वज्रसाराणि वज्रवत्कठिनानि सर्वाण्यंगानि ययोस्तौ ॥८॥ समाजस्य सभायाः ॥ ९ ॥ अपरा ऊचुः । न सभामिति । अब्रुवन् ज्ञात्वाऽपि तूष्णीं तिष्ठन् । विब्रुवन्विपरीतं ब्रुवन् । अज्ञो न जानामीति ब्रुवन् । अतः प्राज्ञो न सभां प्रविशेदिति ॥ १० ॥ वल्गतः शत्रुमभित इति शत्रोः सर्वतो धावतः कृष्णस्य श्रमवारिणा उप्तं व्याप्तं मुखांबुजं दृश्यताम् ॥११॥ अन्या ऊचुः । किं न पश्यतेति । सामर्षं सक्रोधम् ।

राजा चेत्पश्येत्सोऽपि वारणीयः । एते तु राज्ञः पश्यतोऽनु पश्चात्स्वयमपि पश्यन्ति, इच्छतस्तस्यानु स्वयमपीच्छन्तीति शत्रंतस्य दर्शेराक्षेपात्तिङन्तोऽपि दर्शिर्लभ्यते । तथैव तिङन्तस्येच्छतेराक्षेपात्सोऽपि शत्रन्तो लभ्यते ॥ ॥ ७ ॥ " सारो बले स्थिरांशे च पुमान्न्याय्ये वरेऽन्यवत् " इति यादवः । शैलेन्द्रो मेरुस्तद्वद्दृढांगौ । नाप्तयौवनावप्राप्तयुवधर्मौ ॥ * ॥ बलवत्त्वाबलवत्त्वे तर्जनीभिर्दर्शयन्ति—क्वेति । क्व अत्यन्तबाधके धर्मे, तथा क्वात्यन्त बाध्यधर्मे वर्तत इत्यर्थः ॥ ८ ॥ व्यतिक्रमो हानिः । अस्य कंसकृतस्य । यत्र स्थाने । विदुषा न स्थेयमित्यर्थः । कर्हिचिदिति लाभेऽपीत्यर्थः ॥ * ॥ समुत्तिष्ठेत्सम्यगुद्भवेत् । तस्मादत्र वयं स्थातुं न योग्या इति भावः ॥ ९ ॥ अतः किल्बिषावाप्तेः " आत्मसर्वांगसंबद्धमलं किल्बिषमुच्यते " इति । अनपायिमलं किल्बिषमित्यर्थः ॥ * ॥ तथाप्यत्र यत्प्रविष्टास्तन्महापराधा जाता एवेत्याशयेनाहुः—नेति । प्राज्ञः युक्तवचनायुक्तवचनयोर्दोषज्ञः । तर्हि तव तस्य सावधानत्वे को दोषस्तत्राहुः—सभ्यानां कथंचित्कस्यचिद्दोषः स्यात् । एवं स्वस्यापि भ्रमादिना सभ्यानां संसर्गजं स्वस्यापि भ्रमादिष्टं विचारयन्नित्यर्थः । दोषानेवाह—अब्रुवन्निति । विज्ञोऽपि मौनमपलापं वा कुर्व स्तथा स्वयमज्ञोऽपि विरुद्धं ब्रुवन्, किमुत विज्ञोऽपीत्यर्थः । **विश्वनाथस्तु**—अस्माभिरत्रागत्यैवापराद्धमित्यपराः शास्त्रशासनमाहुः—नेति । सभायामधर्मे उत्पद्यमाने सति धर्मं ज्ञात्वापि तमब्रुवंस्तूष्णीं तिष्ठन्नित्यर्थः । विब्रुवन् विधर्ममेव ब्रुवन् । वा ज्ञः ज्ञात्वापि न जानामीति ब्रुवन् किल्बिषं प्राप्नोत्यतः सभां न प्रविशेदिति सभाप्रवेशनिषेधो व्यवहारसापेक्षस्यैव प्राज्ञस्य न तु व्यवहारनिरपेक्षस्य प्राज्ञस्य । यथा सभापर्वणि द्यूते द्रौपदीविपदि व्यव हारसापेक्षाः प्राज्ञा भीष्मादयोऽब्रुवाणा एव तस्थुः । व्यवहारनिरपेक्षः प्राज्ञो विदुरस्तु धर्मं ब्रूते स्मैवेति । रंगभूमौ तु सर्व एव प्राज्ञाः कंसाद्भीता व्यवहारसापेक्षा एवेति ॥१०॥ पद्मकोशं पद्ममुकुलम् । अंबुभिर्जलबिंदुभिः । वल्ग—प्लुतगतौ ' ॥ * ॥ नन्वेतयोः श्रमाऽदृष्ट्या बलवत्त्वानुमानान्न कोऽपि दोषप्रसंग इत्याशंक्य श्रीकृष्णस्य तावच्छ्रमं दर्शयंति—वल्गत इति । श्रमश्चायं तादृशस्निग्धानेव प्रतिभासते न तु सर्वानिति ज्ञेयम् ' मल्लानाम, शनिः ' इत्याद्युक्तेः । रूपकेण तत्तद्धर्मं साधयित्वापि पद्मेति पुनरुपमानादिदं बोधयति—आकृष्टांबुजगणसौन्दर्यात्तन्मुखमेवांबुजम्, तथा श्रमवार्येव तच्छोभाहेतुत्वेन तदुपयुक्तं वारीति स्वानुभवव्यञ्जनाय रूपकं कृतम्, यथाकथंचित्साधारणजनानुभवायैव तु पुनरुपमा कृतेति । श्रमवारीत्यत्र भिसो लुक्छांदसः । तदेवांबुभिरित्युपमानेन योगः स्यादिति कोशपदोपादानेन मुखस्यापि स्मितेनेषद्विकाशित्वं ज्ञापितमत एव विशेषणेक्षताम् । **चक्रवर्ती** तु—वदनांबुजं मुखचन्द्रो दृश्यताम् । ' अब्जौ शङ्खशशांकौ च ' इत्यमरः । अत्र लक्षितलक्षणयांबुजपदेन चन्द्रो लक्षितः । क्लीबत्वं चार्षम् ॥ ११ ॥ किं वितर्के । आताम्रे ईषद्रक्ते लोचने यस्य तम् ॥ * ॥ अथ तद्वत्सुकुमारस्यापि श्रीरामस्य तच्छ्रमदर्शनेन स्वश्रममभिभूय जातं क्रोधं तेजः पश्येतेति तदेव स्थापयन्ति—किं पश्यतेति । हासेनावज्ञा च दर्शिता । हासकर्तृको य

पुण्या बत व्रजभुवो यदयं नृलिंगगूढः पुराणपुरुषो वनचित्रमाल्यः॥गाः पालयन्सहबलः क्वणयंश्च वेणुं विक्रीडयांऽचति गिरित्ररमार्चितांघ्रिः॥१३॥ गोप्यस्तपः किमचरन्यदमुष्य रूपं लावण्यसारमसमोर्ध्वमनन्यसिद्धम् ॥ दृग्भिः पिबंत्यनुसवाभिनवं दुरापमेकांतधाम यशसः श्रिय ऐश्वरस्य॥१४॥

हासेन संरंभ आवेशस्तेन शोभितम् ॥१२॥ अन्या ऊचुः । पुण्या बतेति। नृलिंगेन मनुष्यदेहेन गूढः । वनस्थानि चित्राणि माल्यानि यस्य सः । गिरित्रः शिवो रमा च ताभ्यामर्चितावंघ्री यस्य सः । अयं भावः । धिगिमां सभां यस्यामयं पराभूयते तास्तु व्रजभुवोऽपि पुण्याः यत्रास्वयं कृष्णो विविधक्रीडया नानाविधविहारेणांचति गच्छतीति ॥ १३ ॥ अहो कष्टमल्पपुण्या वयं यतोऽस्माभिरनवसरे दृष्टोऽयम् । गोप्यस्तु बहुपुण्या इत्याहुस्त्रिभिः । गोप्य इति । अमुष्य श्रीकृष्णस्य रूपमंगं लावण्येन सारं

आवेशोऽविच्छिन्नोदयस्तेन शोभितम् । **विश्वनाथस्तु**—क्रोधस्य कारणं मुष्टिकप्रहारजनितश्रम एव बुद्ध्यतामिति भावः ॥ १२ ॥ बत हर्षे । वने यानि चित्राणीति सप्तम्या अधिकरणार्थकत्वाद्वनस्थानीत्युक्तं स्वामिचरणैः । गिरिं कैलासं, गिरीन् पूज्यानर्थाद्विप्राँस्त्रातीति वा गिरित्रः ‘ तद्ब्राह्मणान्परमसर्वविपत्सु पाति ’ इति दक्षोपाख्यानोक्तेः । “ गिरिर्ना नेत्ररुग्भिदि । अद्रौ गैरेयके योषिद्वीर्णे पूज्ये पुनस्त्रिषु ” इति मेदिनी । अत्र तात्पर्यमाहुः—अयं भाव इति । अयं श्रीकृष्णः । ताः प्रसिद्धाः ॥ * ॥ पुण्या इति तैर्व्याख्यातम् । तत्रायं भावः—इत्यस्योदंतं विवक्षितमित्यर्थः । यद्वा—अथ काश्चिद्दिदृक्षा यज्ञपत्नीप्राया ऐश्वर्यज्ञानमिश्रपरप्रेमवत्यस्तत्समा वैगुण्येन मधुपुरीमप्यबहुमन्वानास्तत्रत्यानां साद्गुण्ये श्रीव्रजभुवमेव प्रशंसन्ति—पुण्या इति चतुर्भिः । बत विस्मये । व्रजभुवः व्रजसंबंधिन्यो भूमय एव पुण्याः परमधन्या न त्वियं महापुर्यपि । बहुत्वनिर्देशेन तासां बहूनामपि यादृशपुण्यत्वं न त्वेकस्या अपि तादृशत्वमित्यर्थः । यत् यासु अयं श्रीकृष्णाख्यः पुराणपुरुषोऽपि नवः नित्यनूतनो यः, य एव पुरुषस्तन्मुख्यत्वेन तच्छब्दः प्रथमोऽभिधेयः सोऽहं चेति । अञ्चति वर्तमानप्रयोगस्तत्सामीप्यात्, पुनस्तत्र गमनाभिप्रायाच्च । वस्तुतस्तु यथार्थभारतीनिःसृतिरियम् । तत्र तदीयनित्यलीलायाः स्थापयिष्यमाणत्वात् । अन्यत्र परममहतामप्यसौ दुर्लभ इत्याह—गिरित्रेण रमयापि हृदयेऽर्चितावागमोक्तमार्गेणोद्दिश्यैवाराधितौ न तु व्रजवासिजनवत्साक्षात्सेवितावंघ्री यस्य तादृश इत्यर्थः । ननु संप्रत्यत्राप्ययमञ्चति तत्राह—विक्रीडयेति । अत्र प्रतिकूलैः पराभवितुमिष्यते विविधोदासीनलोकैः संकीर्य्यते चेति नानाभीष्टचिक्रीडिषोदयान्नात्र विशिष्टा क्रीडा । तत्र तु सर्वस्याप्यनुकूलत्वेन कान्तत्वेन च परमाभीष्टचिक्रीडिषोदयाद्विशिष्टैवैति कुतः साम्यमेवोते भावः । सर्वानुकूल्यं वैशिष्ट्यञ्च दर्शयन्ति—वनेत्यादिना । वने सर्वाभीष्टपुष्पादिनिधाने परमैकान्ते श्रीवृन्दावने चित्राणि विशिष्टक्रीडाकौतुकितया सखिभिर्मिलित्वा विविधाश्चर्यत्वेन यावदभीष्टं रचितानि माल्यानि यस्य तादृशः । उपलक्षणं चैतद्वेशान्तराणाम् । तथा गाः पालयन् स्वयं निजपरमस्नेहपात्राणां गवां तत्तन्निजाभीष्टक्रीडास्वैरतासहायं पालनं विश्वमोहनं मधुराह्वानादिना कुर्वन् । किञ्च—सहबलः तत्रतत्र बलसहाय इति स्वयमभीष्टतत्तत्क्रीडने श्रीबलेन पुष्टतत्क्रीड इत्यर्थः । अहो किमपरं वक्तव्यं शक्रशर्वपरमेष्ठिमोहनं तरूणामपि पुलककारकं वेणुञ्च क्वणयंस्तद्वाद्यमाधुरीं मुहुरुल्लासयन्निति । अत्र **विश्वनाथो**ऽपीत्थमेव व्याचख्यौ ॥ १३ ॥ निजभाग्यं निदन्त्यो गोपीभाग्यं च श्लाघयंत्य आहुः—अहो कष्टमित्यादिना । रूपं द्रव्याश्रयलक्षणं गुणम् । तच्च—“अंगान्यभूषितान्येव प्रेक्षणीयैर्विभूषणैः । येन भूषितवद्भान्ति तद्रूपं प्रोच्यते बुधैः ॥” इत्युक्तं भरतेन । न केवलं लावण्यसारमेव किं त्वन्यत्राविद्यमानमित्याहुः—किञ्चेति । तदपि असमोर्ध्वमपि । पाठान्तरे ‘ईश्वरस्य’ इति पाठे । अनुसवं प्रतिक्षणम् । अभिनवं नूतनम् । तथा चोक्तं स्वामिभिः—नित्यनवीनमिति । दुरापं विना ज्ञानमित्यर्थः ॥ * ॥ गोप्य इत्यत्र तेषामवतारिकायां दृष्टोऽयमितिपर्य्यन्तः पूर्वपद्याभिप्रायः । गोप्य इ॰ युत्तरत्रयस्य ज्ञेयम् । असमोर्द्धम् अनंततदाविर्भावेष्वपि न विद्यते समं किमुतोर्द्ध्वं यस्य तादित्यर्थः । पिबन्तीति तृषार्ता इवामृतमिति भावः । अनुसवाभिनवं प्रतिक्षणमधिकाविर्भावप्रेमतत्स्फूर्त्योः परस्परं वर्धमानत्वादिति भावः । दुरापं लक्ष्म्यादिभिर्दुर्लभमपि । श्रियः सर्वशोभायाः । ‘ईश्वरस्य’ इति पाठे परमेश्वरस्यापि परमालंबनरूपमित्यर्थः । अन्यत्तैः । तत्र

१ श्रीधरस्वामिनाम् ।

या दोहनेऽवहनने मथनोपलेपप्रेंखेंखनार्भरुदितोक्षणमार्जनादौ ॥ गायंति चैनमनुरक्तधियोऽश्रुकंठ्यो धन्या व्रजस्त्रिय उरुक्रमचित्तयानाः ॥ १५ ॥

श्रेष्ठम् । किं च असमोर्ध्वं न विद्यते सममूर्ध्वमधिकं च यस्य तत् तदपि नान्येनाभरणादिना सिद्धं किं तु स्वत एव ऐश्वरस्यैश्वर्यस्य चैकांतधामाव्यभिचारिस्थानम् । पाठांतरे अमुष्य ईश्वरस्येत्यन्वयः । एवंभूतं नित्यं नवीनं रूपं या नेत्रैः पश्यंतीति ॥ १४ ॥ किं च या दोहनादिष्वेनं गायंति ता व्रजस्त्रियो धन्याः । प्रेंखेंखनं दोलांदोलनम् । उक्षणं सेचनम् । कथंभूताः । उरुक्रमे चित्तमुरुक्रमचित्तं तेनैव यानं सर्वविषयप्राप्तिर्यासां ताः । पाठांतरे उरुक्रमं चिंतयंत्य इत्यर्थः । कुतः । अनुरक्तधियः ।

सौन्दर्यमिति लेख्येऽप्यसंगतमिति, नूनं प्रथमलेखकभ्रमात् । अन्यथा किञ्चेत्यस्य तदपीत्यादेश्चासंगतिरिति । यद्वा—व्रजभुवां धन्यत्वेन तद्वासिमात्रधन्यत्वं व्यञ्जितम् । तत्रापि श्रीगोपीनां किं वक्तव्यमिति परमविदग्धाः काश्चिच्छ्रीशुकेनाप्यनुमोद्यमानेष्वमीषु बाढमनुमोद्यमानवाक्यमाहुः—गोप्य इति । तपो भगवदाराधनलक्षणम् । किं कतमदाचरितवत्यः, ईदृशफलस्य वाङ्मनसातीतत्वात् । तदपि तादृशमित्यर्थः । यदि जानीथ तदा वयमपि तत्रोद्यमं करवामेति भावः । यद्वा—किं तपोऽचरन्नपि तु नैवाचरन्निति तपोमात्रस्येच्छाफलदानाशक्तेस्तदीयनित्यप्रेयसीसमुचित एवायमुदय इति भावः । तथात्वे हेतुं परमाह—यद्यस्मादमुष्य साक्षाद्भावेऽपि निर्देष्टुमशक्यस्येत्यर्थः । रूपं परमं शोभनप्रमाणांगप्रत्यंगवत्त्वम् । दृग्भिः पिबन्तीति नैरंतर्येऽपि तस्याऽक्षयिष्णुत्वं तासामतृप्तिञ्च सूचयित्वा रूपस्य सुधासमुद्रत्वमुत्प्रेक्षते । किञ्च—दर्शनमात्रस्य तादृशत्वं दर्शयित्वालिंगनादेः कैमुत्यमानयन्ते । कीदृशं तत्—लावण्यस्य कान्तिकंदलीचाकचिकस्य सारः श्रेष्ठांशो यत्र तादृशं तत्, प्राचुर्यात्तद्रूपमेव वा । नन्वनन्ता एव तत्प्रादुर्भावा इति तत्रतत्रापि तादृशत्वं संभवति तत्राहुः—असमोर्द्ध्वम् । नन्वन्यत्र नास्ति चेत्कुतो लब्धं तत्राहुः—अनन्यासिद्धं, स्वाभाविकमेवेति नित्यत्वञ्च दर्शितम् । अत एव यशआद्युपलक्षितानां षण्णां भगानामातिशयितं धाम नित्याश्रयम् । पाठान्तरेऽपि ईश्वरस्यैत्येवार्थः । नन्वेवं सदैकरूपत्वेन पश्यन्ति चेत्तदा नास कश्चमत्कारः स्यात्तत्राहुः—अनुसरेति । नन्वीदृशं रूपं तत्रास्ति चेत्तदाऽन्येऽपि पश्येयुस्तत्राहुः—दुरापमिति । स्वतस्तादृशप्रेम्णोऽसंभवादन्येषां तादृशत्वं तासामेव दृढावधानेन स्फुरति, अन्यथा तु न स्फुरतीत्यर्थः ।

**विश्वनाथस्तु**—हंतहंत महासुकृतिन एव व्रजभूमिषूत्पद्यन्ते तेष्वपि गोपीजना अतिश्रेष्ठा इत्याहुः—गोप्य इति । किमचरन्निति—भोः सख्यस्तत्तपः यदि यूयं सर्वज्ञस्य कस्याचिन्मुखाज्जानीथ तदा ब्रूत, तदेवास्मिञ्जन्मनि कृत्वा व्रजभूमौ गोप्यो भवेम, यद्यतस्ता अमुष्य रूपं सौन्दर्यामृतं पिबन्ति, वयं तु मथुरास्था अस्य पराभवविषं पीत्वाऽऽनखशिखं ज्वलाम इति भावः । तासां दृग्भिः पानस्यैव तादृशतपःफलमुक्त्वा स्वांगैरालिंगनादेस्त्वनिर्वाच्यहेतुकत्वं ज्ञापितम् । किं चास्य रूपे लावण्यमधिकं वर्तत इत्यत उपादीयत इति न वाच्यं, किन्तु लावण्यसारं लावण्यापि यः सारस्तत्स्वयमेवैतत् । ननु स्वर्लोकादिभ्योऽपि न्यूने भूर्लोकेऽस्मिंश्चेदेवं रूपं दृश्यते तर्हि सर्वतः श्रेष्ठे महावैकुंठलोके इत्यतोऽप्यधिकमधुरं श्रीनारायणस्य रूपं भवेदिति तत्राहुः—असमोर्द्ध्वम् । एतद्रूपस्य समरूपमपि क्वापि नास्ति किमुताधिकमिति भावः । ननु तर्हि कृष्णेनैतद्रूपं कुतः सकाशाल्लब्धं तत्राहुः—अनन्यसिद्धम् । अस्मिन्नेवैतत्स्वाभाविकमिति । नन्वेतद्रूपं ताः सदैकरूपत्वेन पश्यन्ति चेत्तदा न तासामसकृच्चमत्कृतिहेतु तत्स्यात्तत्राहुः—अनुसवं प्रतिक्षणम्, अभिनवं नूतनम् । एवं चेत्तत्रैव गत्वा देशान्तरीयस्त्रीभिरपि सुखेनायं दृश्यतां तत्राहुः—दुरापं, लक्ष्म्या अपि दुर्लभम् । ननु भवतु नामास्य सौंदर्योपाधिक एव सर्वोत्कर्षः, श्रीनारायणादौ तु भगवच्छब्दवाच्यं षडैश्वर्यमधिकमस्ति तत्राहुः—एकान्तेति । यशआद्युपलक्षितानां षण्णामेव भगानामेकान्तधाम अतिशयितास्पदम् । ऐश्वरस्यैश्वर्यस्य ॥ १४ ॥ पुनर्व्रजांगनाभाग्यमभिनंदंत्य आहुः—किञ्चेति । अवहनने व्रीहिताडनावसरे । मथने दधिमंथने, उपलेपे गोमयादिना स्थललेपनसमये, अर्भरुदिते बालरोदने, मार्जने धूलिशोधनकाले, आदिपदात्स्नानादिग्रहः । पाठान्तरे ‘ चिन्तयाना ’ इति पाठे । इत्यर्थ इति—‘ चिति–स्मृत्याम् ’ स्मरन्त्य इति भावः । अत्र हेतुमाशंकन्ते—कुत इति । अनुरक्तधिय इति हेतुगर्भविशेषणम् । अनुरक्तधीत्वादित्यर्थः । तत्रानुरक्तबुद्धौ । लिंगं हेतुः । अश्रिवति—न ह्यनुरागं विनाऽश्रूद्गमो भवतीत्यर्थः ॥ * ॥ किञ्च—तासां गृहकर्माण्यपि नैतन्माधुर्यपानप्रतिबंधकानीत्याहुः—या दोहनादिष्वेनं गायन्ति । दोहनेऽ

प्रातर्व्रजाद्व्रजत आविशतश्च सायं गोभिः समं क्वणयतोऽस्य निशम्य वेणुम् ॥ निर्गम्य तूर्णमबलाः पथि भूरिपुण्याः पश्यंति सस्मितमुखं सदयावलोकम् ॥ १६ ॥ एवं प्रभाषमाणासु स्त्रीषु योगेश्वरो हरिः ॥ शत्रुं हंतुं मनश्चक्रे भगवान्भरतर्षभ ॥ १७ ॥ सभयाः स्त्रीगिरः श्रुत्वा पुत्रस्नेहशुचातुरौ ॥ पितरावन्वतप्येतां पुत्रयोरबुधा बलम् ॥ १८ ॥

तत्र लिंगमश्रुकंव्यः ॥१५॥ प्रातारिति । या अबलाः क्वणयतो वादयतो वेणुं निशम्य गृहात्तूर्णं निर्गम्य पथि सास्मितमुखं पश्यंति ता भूरिपुण्या इति ॥१६॥ एवं सभयं ब्रुवाणासु स्त्रीषु तासां भयनिवृत्तये कृष्णः शत्रुं हंतुं मनश्चक्रे ॥ १७ ॥ सभयाः स्त्रीणां गिरः श्रुत्वा पुत्रयोः स्नेहेन या शुक् तया आतुरौ विह्वलौ पुत्रयोर्बलमजानंतौ

वहनने इति पदे अन्तर्भूतण्यर्थे । अवहननं तुषापकरणम् । चकारात्क्वापि पश्यन्ति चेत्येतन्माधुर्यं रसनाभिरपि दृग्भिरपि पिबन्तीति पानाविच्छेद उक्तः । उरुक्रमचित्तमेव यानं वाहनं यासां ताः । यत्रयत्र तच्चित्तं याति तत्रतत्रैव तास्मिंस्ता एव स्फुरन्तीति भावः । यद्वा—उरुक्रमस्य चित्तं वाहनं यासां ताः । अयमुरुक्रमोऽपि ब्रह्माद्यैः स्वचित्तेषूह्यमानोऽपि याः स्वयं स्वचित्ते वहतीति तास्वपि कृष्णोऽयमनुरक्तधीरिति तासां सौभाग्यभरो दर्शितः ॥ १५ ॥ पुनराहुः—प्रातारिति । अस्य श्रीकृष्णस्य ॥ * ॥ प्रातर्व्रजाद्वनं व्रजतः, सायं वनाद्व्रजं प्रविशतोऽस्य कृष्णस्य वेणुं निशम्य गृहेभ्यो निर्गत्य पथि गवानयनमार्गसमीपोपवनादौ पश्यन्ति।सदयः स्वविरहखिन्नाङ्गीस्ता दृष्ट्वा तदभीष्टवितरणव्यञ्जकानुकंपासहितोऽवलोको यस्य तम् ॥ १६ ॥ योगेश्वर इति पराभिप्रायज्ञत्वादित्याह—शत्रुं हंतुमिति ॥*॥ यद्यप्यन्यदापि तद्दर्शनं संपद्यते तथापि तन्निर्गमनावेशयोरनुव्रज्याभिगमनच्छलाल्लोकानामग्रेऽप्यसंकोचेन तत्सिद्ध्यतीति । तथा चेदृशमात्रस्य दर्शनमस्माकं न संभवेदित्यत एवा पुण्या एव वयमिति भावः । एवमीदृशं प्रकर्षेण प्रेमार्त्या सभयं भाषमाणासु सतीष्विति तादृशभाषणात्तासामनिवृत्तिरुक्ता । "अर्हानर्हयोश्च" इत्यर्हार्थे सप्तमी । तदा तद्विधानं योग्यमेवेत्यर्थः । योगेश्वर इति स्वेच्छया स्वशक्तिप्रकाशनाप्रकाशनयोर्हेतुः । हरति भूभारमिति हरिः, तद्वधप्रवृत्तावौत्सार्गिकश्चास्ति हेतुरिति भावः । शत्रुमिति मत्सरिद्वेषित्वात् । भगवानिति स्वरूपनिर्देशः सर्वत्रैव हेतुगर्भः । हे भरतर्षभेति—चिरं युद्धक्रीडया तद्वधविलंबादप्रसन्नचित्तं राजानमुल्लासयाति, भरतवंश्यत्वात्त्वमपि भारतयुद्धादावीदृशीं लीलां जानासीत्यभिप्रायेण । **विश्वनाथस्तु**—शत्रुं हंतुं मनश्चक्र इत्यलमनुरागिणीर्दुःखयित्वेति भावः ॥ १७ ॥ पितरौ संमुखस्थौ देवकीवसुदेवौ ॥ * ॥ उपाधिक्येन सामीप्येन वा श्रुत्वा पितरौ देवकीवसुदेवौ वसुदेवनंदौ वाऽन्वतप्येताम्—हंतहंत व्रजे गमिष्यन्नक्रूर एव कथं तथा न शिक्षितो यथैतौ नानयिष्यत्स इति, हंतहंत "कथमनायि पुरे मयकासुतः कथमसौ न निगृह्य गृहे धृतः"इत्यादिकं पश्चात्तापं प्रकुर्वन्तौ।बलमबुधावजानंतौ।इह षष्ठ्यभावस्तु तस्याः षष्ठ्या अनित्यत्वात्। तदुक्तम्—"कर्तृकर्मणोः कृति"इत्यत्र भाष्यवृत्तौ विहित"तदर्हम्"[2] इतिनिर्देशेनानित्यज्ञापनात्,

---

१ 'सभयं तदुपश्रुत्य' इति पाठो भाति । २ "तस्यार्हम्" इत्यकरणादिति भावः ।

तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ ॥ युयुधाते यथान्योन्यं तथैव बलमुष्टिकौ ॥ १९ ॥ भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरैः ॥ चाणूरो भज्यमानांगो मुहुर्ग्लानिमवाप ह ॥ २० ॥ स श्येनवेग उत्पत्य मुष्टीकृत्य करावुभौ ॥ भगवंतं वासुदेवं क्रुद्धो वक्षस्यबाधत ॥ २१ ॥ नाचलत्तत्प्रहारेण:मालाहत इव द्विपः ॥ बाह्वोर्निगृह्य चाणूरं बहुशो भ्रामयन्हरिः ॥ २२ ॥ भूपृष्ठे पोथयामास तरसा क्षीणजीवितम् ॥ विस्रस्ताऽऽकल्पकेशस्रगिंद्रध्वज इवापतत् ॥ २३ ॥

पितरावनुतापं प्राप्ताविति ॥ १८ ॥ १९ ॥ तदा भगवतो गात्राणामरत्निजान्वादीनां निष्पातैः प्रहारैर्वज्रस्य निष्पेषस्तीव्रप्रपातस्तद्वन्निष्ठुरैः । भज्यमानांगः श्लथद्गात्रः ॥ ॥ २० ॥ श्येनस्येव वेगो यस्य स चाणूरः अबाधताताडयत् ॥ २१ ॥ २२ ॥ भूपृष्ठे भुव उपरि । पोथयामासास्फालयत् । इंद्रध्वजो वज्रम् । यद्वा इंद्रध्वजो नाम गौडेषु 'धार्येरामोदमुत्तमम्'इति भट्टेश्च। तद्धितप्रत्ययः खलु सूत्रे प्रथमनिर्दिष्टविभक्त्यंतादेव नियमितः।यथा''तस्यापत्यम्''इत्यत्र उपगोरपत्यमौपगवः,धनमर्हति धन्य इति।। १८।।तैस्तैरुक्तैरनुक्तैर्वा।इतरश्चाणूरः।तथैव कृष्णचाणूरवत् ॥*॥ पुनर्युद्धवर्णनमवतारयति—तैरिति, पूर्वदर्शितदिङ्मात्रैः । वीप्सा तेषां वैचित्र्याद्यपेक्षया । ते च मल्लशास्त्र उक्ताः विधयः—कृतप्रतिकृतसुसंकटबाहुसन्निपातावधूतप्रमाथोन्मथनक्षेपणमुष्टिवराहोद्धूतनिस्वनतलप्रसृष्टाशलाकानखपात पादोद्धूतजानुशिरोऽवघट्टनप्रकर्षणाकर्षणाभ्याकर्षविकर्षणादिभेदान्नियुद्धं बहुभेदमस्ति । कृतादिस्वरूपमाह—''क्वाचिद्देशे निपीडं तु कृतं तस्य तु मोचनम् । मल्लशास्त्रविशेषज्ञैः प्रतिकृतमुदाहृतम् ॥ मुष्टिग्रहणवश्यौ तु बाहू सुसंकटौ मतौ । सन्निपातोंगसंघट्टोऽवधूतं तन्निराकृतिः ॥ निपात्य पेषणं भूमौ प्रमाथ इति कथ्यते । यत्तूत्थायांगमथनं तदुन्मथनमुच्यते ॥ क्षेपणं कथ्यते यत्तु स्थानात्प्रच्यावनं हठात् । उभयोर्भुजयोर्मुष्टिरुरोमध्ये निपात्यते । मुष्टिरित्युच्यते सुज्ञैर्मल्लविद्याविशारदैः ॥ अवाङ्मुखस्कंधगतं भ्रामयित्वा तथैव यः । क्षिप्तस्य शब्दः स भवेद्वराहोद्धूतनिःस्वनः ॥ चेपटो वज्रपातेन तुल्यस्तल उदीरितः । अंगुल्यः प्रसृता यास्तु प्रसृष्टास्ता उदीरिताः ॥ ऋज्वी दृढा रुषा क्षिप्ता शलाका सांगुली स्मृता । तस्या यस्तु नखोत्पातः शलाकानखपातकः ॥ जानुभिश्च शिरोभिश्चावघट्टनबहुध्वनि । तदुक्तं जानुशिरसोरवघट्टनमत्र वै ॥ आकृष्य क्रोडीकरणं प्रकर्षणमुदाहृतम् । आकर्षणं लीलयैव संमुखीकरणं स्मृतम् ॥ पुरः पश्चात्पार्श्वयोश्चाभ्याकर्षो भ्रमणं मतम् । पश्चात्प्रपातनं वेगाद्विकर्षणमुदाहृतम् ॥'' । एवमन्येऽपि नियुद्धभेदा बहवः सन्ति ग्रंथविस्तरभिया न लिखिता इति ज्ञेयम् । उभाविति—चाणूरस्यापि तत्र नैपुण्यं बोधयति। अन्यथाऽनर्हतया लीलासौष्ठवं न स्यात्तच्च लीलाशक्तिसंपादितामिति भावः । 'विविधैरच्युतेतरौ' इति पाठे इतरश्चाणूरः ॥ १९ ॥ तदा युद्धावसरे । ग्लानिं प्राणसंदेहक्लेशम् ॥ * ॥ अचिन्त्यशक्तिवाचको भगवच्छब्दोऽत्र, मल्लेषु तादृशस्फूर्तौ हेतुः । वज्रनिष्पेषस्तत्करणकसंचूर्णनं, तद्वन्निष्ठुरैः ॥ २० ॥ श्येनः कपोतारातिः पक्षिविशेषः । उत्पत्य उत्प्लुत्य ॥ * ॥ श्येनवेग इति पूर्वं ग्लानिं प्राप्य दूरगमनं बोधितम् । उभावित्येकदैव मुष्टिकृताभ्यां द्वाभ्यामेव प्रहारात् । महाबलिष्ठत्वान्नियुद्धकौशलत्वं च दर्शितम् । भगवन्तं वासुदेवमिति तन्मूढत्वदौरात्म्यव्यञ्जकं तत्तन्निरुक्तेः ॥ २१ ॥ तत्प्रहारेण चाणूरोभयमुष्टिप्रहारेण । मालाहतः पुष्पैस्ताडितः ॥ * ॥ श्रीभगवानपि तादृशनिजजनहर्षणाय तस्य तत्तदेव व्यञ्जितवान्न तु स्वविनोदाय, स्वस्य क्षोभलेशमप्यकृतवानित्याह—नेत्यर्द्धेन । स्रग्भिरित्यनेन सुखमपि तस्य तस्य सूचितम् । बहुत्वस्य यदि बह्वीभिरपि ताभिर्हतः स्यात्तदपि तस्य न किञ्चिदपि यथा स्यात्तथास्य बलबाहुल्येनापीति भावः । अथ श्रीहरिवंशवचनानि—''यदयं बाहुयुद्धं वै सर्वैरं कर्तुमुद्यतः । तत्र वै निग्रहः कार्यस्तोषयिष्याम्यहं जगत् ॥ करूषेषु प्रसूतोऽयं चाणूरो नाम नामतः । बाहुयोधी शरीरेण कर्मभिश्चानुचिन्त्यताम् ॥ एतेन बहवो मल्ला निपातानंतरं हताः । रंगप्रतापकामेन मल्लमार्गाश्च दूषिताः ॥ ये तु केचित्त्वदोषेण राज्ञः पंडितमानिनः । प्रतापार्थे हता मल्ला मल्लहंतुर्वधो हि सः ॥'' बहुशो बहुवारान्बहुधा चेत्यर्थः ॥ २२ ॥ आस्फालयाचिक्षेप । वज्रेन्द्रध्वजपदाऽप्रासिद्धिं मत्वाह—यद्वेति । विस्रस्ता विश्लथा

---

१ 'स्रग्भिर्हतः' इति पा० ।

तथैव मुष्टिकः पूर्वं स्वमुष्ट्याभिहतेन वै ॥ बलभद्रेण बलिना तलेनाभिहतो भृशम् ॥ २४ ॥ प्रवेपितः स रुधिरमुद्वमन्मुखतोऽर्दितः ॥ व्यसुः पतातोर्व्युपस्थे वाताहत इवांघ्रिपः ॥ २५ ॥ ततः कूटमनुप्राप्तो रामः प्रहरतां वरः ॥ अवधील्लीलया राजन्सावज्ञं वाममुष्टिना ॥ २६ ॥ तर्ह्येव हि शलः कृष्णपदापहतशीर्षकः ॥ द्विधा विदीर्णस्तोशलक उभावपि निपेततुः ॥ २७ ॥ चाणूरे मुष्टिके कूटे शले तोशलके हते ॥ शेषाः प्रदुद्रुवुर्मल्लाः सर्वे[1] प्राणपरीप्सवः ॥ २८ ॥ गोपान्वयस्यानाकृष्य तौ संसृज्य विजह्रतुः ॥ वाद्यमानेषु तूर्येषु वल्गंतौ रुतनूपुरौ ॥ २९ ॥

प्रसिद्धः कस्मिंश्चिदुत्सवे महान्स्तंभो ध्वजपताकाद्यलंकृतः पुरुषाकृतिरुच्छ्रीयते स यथा पतति तद्वदपतदिति ॥ २३ ॥ २४ ॥ अर्दितः पीडितः । उर्व्युपस्थे भूतले ॥ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ वल्गंतौ नृत्यादि कुर्वंतौ ॥ २९ ॥

आकल्पकेशस्रजो यस्य स । उच्छ्रीयते ऊर्द्ध्वं स्थाप्यते । स इन्द्रध्वजः ॥ * ॥ तरसा भ्रामणवेगेनैव । क्षीणजीवितमाकाश एव मृतम् । तथा च विष्णुपुराणे—"भ्रामयित्वा शतगुणं दैत्यमल्लममित्रजित् । भूमावा स्फोटयामास गगने गतजीवितम् ॥" इति । अत एवाहो मृत एवायमित्युक्त्वा परित्यागमिषेणैव पोथयामासेति ज्ञेयम् । अपतत्—स चेति शेषः । इन्द्रध्वजोपमया तद्देहस्य बृहत्तरत्वमप्युक्तम् । तदुक्तं श्रीहरिवंशे—"देहेन तस्य मल्लस्य चाणूरस्य गतायुषः । सन्निरुद्धो महारंगः स शैलेनैव लक्ष्यते ॥" इति ॥ २३ ॥ तथैव चाणूरवदपतदित्यन्वयः । तलेन चपेटेन "तलश्चपेटे तालद्रौ तलं ज्याघातवारणे" इति मेदिनी ॥ * ॥ अभिमुखं हतेन प्रहृतेन 'बलभद्रं बलोच्छ्रयात्' इति स्वभावत एव महाबलिष्ठेन । तत्रापि बालिना प्रकटितबलेनेत्यर्थः । तलेन चपेटेन ॥ २४ ॥ स मुष्टिकः । प्रवेपितोऽतिकंपयुतः ॥ * ॥ पूर्वमिन्द्रध्वजदृष्टान्त ऊर्द्ध्वात्पतनेऽत्र तु वृक्षदृष्टांतो भूमेरेवेति ॥ २५ ॥ ततो मुष्टिकवधोत्तरम् । सावज्ञमनायासं भर्त्सनपूर्वकं वा । 'अवज्ञा भर्त्सने श्रमे' इति तीर्थः ॥ * ॥ लीलयाऽप्रयासचेष्टया, यतो वाममुष्ट्या, तत्रापि सावज्ञं हेलयैवेत्यर्थः ॥ २६ ॥ तर्ह्येव हि मुष्टिकपातसमकालमेव । द्विधा द्वाभ्यामेकेन वोभयोर्विदीर्णो विदारितः ॥ * ॥ शलस्तोशलकश्च मल्लन्यायमतिक्रम्य भयान्मिलित्वैवालक्षितयुगपत्पादद्वयाकर्षणाय नीचितमस्तकः सन्निति ज्ञेयम् ॥ २७ ॥ शेषा उक्तेभ्योऽन्ये ॥ * ॥ युद्धे श्रीकृष्णतो युद्धे । कंसतः प्राणरक्षां कर्तुमिच्छन्त इत्यर्थः ॥ २८ ॥ तौ रामकृष्णौ । संसृज्य संगम्य । रुतौ शब्दायमानौ नूपुरौ तुलाकोटी ययोस्तौ 'तुलाकोटिस्तु नूपुरे' इति यादवः ॥ * ॥गोपानित्यतः प्राक् ततश्च विहस्येति ज्ञेयम् । आकृष्य आपातप्रवृत्तौ लज्जया स्वयमनागच्छतोऽपि बलाद्गृहीत्वा संनह्य मल्लरीत्या मिथो गृहीत्वा वल्गन्तौ मल्लगतिं कुर्वन्तौ । तदानीं चैलेयालंकारत्वेऽपि रत्ननूपुराविति चरणे प्रतिमल्लविमर्दाभावाद्गात्रनोदकत्वेन वल्गनपोषकशब्दत्वेन च तदपरित्यागात् । एतद्वयस्योत्कर्षणादिकं कौतुकार्थम् । तच्च कंसक्रोधविवर्धन

[1] सर्वे इत्यत्र 'युद्धे' इति पा० ।

जनाः प्रजहृषुः सर्वे कर्मणा रामकृष्णयोः ॥ ऋते कंसं विप्रमुख्याः साधवः साधुसाध्विति ॥ ३० ॥ हतेषु मल्लवर्येषु विद्रुतेषु च भोजराट् ॥ न्यवारयत्स्वतूर्याणि वाक्यं चेदमुवाच ह ॥ ३१ ॥ निःसारयत दुर्वृत्तौ वसुदेवात्मजौ पुरात् ॥ धनं हरत गोपानां नंदं बध्नीत दुर्मतिम् ॥ ३२ ॥ वसुदेवस्तु दुर्मेधा हन्यतामाश्वसत्तमः ॥ उग्रसेनः पिता चापि सानुगः परपक्षगः ॥ ३३ ॥ एवं विकत्थमाने वै कंसे प्रकुपितोऽव्ययः ॥ लघिम्नो त्पत्य तरसा मंचमुत्तुंगमारुहत् ॥ ३४ ॥

साधुसाधु इति वदंतः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ अव्ययोऽश्रमः । लघिम्ना लाघवेन ॥ ३४ ॥

मपि ज्ञेयम् ॥ २९ ॥ जना रंगस्थाः । प्रजहृषुस्तुतुषुः । ऋते विना ॥*॥ विप्रेषु मुख्याः साधवश्च ये ते तु तन्महिमज्ञानबलेनाकुतोभयत्वात्साधुसाध्विति स्पष्टमेव वदन्तः प्रजहृषुः ॥३०॥ विधृतेषु पलायितेषु । इदं वक्ष्यमाणम् ॥*॥ स्वस्यैव तूर्याणि न्यवारयन्न तु देवानां निवारयितुं शक्तस्तदानीं हततेजस्कत्वात् । न च यानि स्वयमवाद्यन्त तानि वाऽशक्यत्वादिति भावः । 'सैः' इति पाठेऽपि स एवार्थः । श्रीविष्णुपुराणे तु पूर्वमेव न्यवारयदिति प्रोक्तम्—"बलक्षयं विवृद्धिं च दृष्ट्वा चाणूरकृष्णयोः । वारयामास तूर्याणि कंसः कोपपरायणः ॥ मृदंगादिषु वाद्येषु प्रतिषिद्धेषु तत्क्षणात् । खे संगतान्यवाद्यन्त देवतूर्याण्यनेकशः ॥ जय गोविंद चाणूरं जहि केशव दानवम् । इत्यंतर्द्धिगता देवास्तमूचुरतिहर्षिताः ॥" इति । श्रीहरिवंशे च—"ततः प्रस्विन्नवदनः कृष्णप्रणिहितेक्षणः । न्यवारयत तूर्याणि कंसः सव्येन पाणिना ॥ प्रतिषिद्धेषु तूर्येषु मृदंगादिषु तेषु वै । खे संगतानि" इत्यादि । किञ्च—"स्वयमेव प्रावाद्यन्त तूर्यघोषाश्च सर्वशः" इति । अत्रैकवाक्यता वादकैः पुनः प्रवर्तितत्वाज्ज्ञेया । निवारणच्छलं दर्शयति—वाक्यञ्चेति । ह स्फुटम् । निजादेशश्रवणार्थमिवेति भावः । भोजैर्यादवभेदैः कतिपयैरेव राजत इति तथा स इति सर्वेषामपि तदनादरः सूचितः ॥ ३१ ॥ निःसारयत निष्कासयत । बध्नीत निगडयुतं कुरुत ॥ * ॥ नियुद्धक्रीडायां मल्लहननाद्दुर्वृत्तौ, युद्धं चानयोस्तदित्याह—यतो वसुदेवात्मजौ । पुरान्निःसारयतेत्यपकर्तुमशक्यत्वात् । निःसारणशक्यत्वञ्चानयोः प्रायो वनवासिनोर्वनाभिरुचेः स्यादिति गूढोऽभिप्रायः । प्रकटस्तु भागिनेयावेताविति । दुर्मतिं वसुदेवेन सह सौहृद्यात्, तथाप्यज्ञानादेव मच्छत्रुपालनं कुरुत इति बध्नीतैव न तु हन्यादिति । सरस्वती तु—दुर्गमं वृत्तं चरितं ययोस्तौ । पुरात् पुरमध्यास्य । निश्शेषेण सारं श्रेष्ठं कुरुत । गोपानां धनं श्रीकृष्णं हरत अत्रैव रक्षत । नंदं बध्नीत प्रेमरसनयेति शेषः । तेन सहातिप्रीतिं कुरुतेत्यर्थः । दुर्गमा मतिर्यस्य तम् ॥३२॥ असत्तमोऽतीव कपटः । उग्रसेनोऽपि हन्यताम् । परपक्षगो वसुदेवपक्षपाती ॥ * ॥ सुदुर्मेधाः पुत्रपरिवर्तनादिकौटिल्येन । अतोऽसत्तमः स्वपुत्रार्पणप्रतिज्ञाखंडनात् । 'वसुदेवस्तु' इति पाठः क्वाचित्कः । चकार एव समुच्चयेऽत्र । अपिशब्दात्पितापि । तथापि परपक्षगो वसुदेवानुगः । सरस्वती तु—दुर्गमबुद्धिर्वसुदेवो हन्यतां गम्यतां, सर्वैराश्रियतामित्यर्थः । न विद्यते सत्तमो यस्मात्सः । तथोग्रसेनोऽप्याश्रियतां, यतः परः परमेश्वरस्तस्य पक्षं गच्छतीति तथा ॥ ३३ ॥ एवमित्थम् । विकत्थमानेऽयुक्तं भाषमाणे । अव्ययो न केनापि हंतुमर्हः । तरसा शीघ्रम् । उत्तुंगमत्युच्चम् ॥ * ॥ विकत्थमान इति तथा तर्जनस्याप्यात्मश्लाघायां तात्पर्यात् ।

१ स्वेत्यत्र ।

तमाविशंतमालोक्य मृत्युमात्मन आसनात् ॥ मनस्वी सहसोत्थाय जगृहे सोऽसिचर्मणी॥३५॥तं खड्गपाणिं विचरन्तमाशु श्येनं यथा दक्षिणसव्यमंबरे॥ समग्रहीद्दुर्विषहोग्रतेजा यथोरगं तार्क्ष्यसुतः प्रसह्य ॥ ३६ ॥ प्रगृह्य केशेषु चलत्किरीटं निपात्य रंगोपरि तुंगमंचात् ॥ तस्योपरिष्टात्स्वयमब्जनाभः पपात विश्वाश्रय आत्मतंत्रः ॥३७॥ ( कंसोपि कृष्णेन जगत्त्रयैकनिवासभूतेन निपात्य सोऽधः ॥ तेनात्मतंत्रेण च पीडितोऽसूंस्तत्याज राजन्निमिषांतरेण ॥१॥ ) तं संपरेतं विचकर्ष भूमौ हरिर्यथेभं जगतो विपश्यतः ॥ हाहेति शब्दः स महांस्तदाऽभूदुदीरितः सर्वजनैर्नरेंद्र ॥ ३८ ॥ स नित्यदोद्विग्नधिया तमीश्वरं पिबन्वदन्वा विचरन्स्वपञ्छ्वसन् ॥ ददर्श चक्रायुधमग्रतो यतस्तदेव रूपं दुरवापमाप ॥ ३९ ॥

॥ ३५ ॥ दुर्विषहमविषह्यमुग्रं तेजो यस्य स श्रीकृष्णः ॥ ३६ ॥ गरिष्ठत्वाय विश्वाश्रयत्वमुक्तम् । तत्र हेतुः । अब्जनाभः । कुतस्तस्योपर्येव पपात । यत आत्मतंत्रः स्वतंत्रः ॥ ३७ ॥ ३८ ॥ ३९ ॥

अव्ययः श्रीकृष्णः । तन्नामत्वेन प्रसिद्धत्वादश्रम एव सन्नित्यर्थः । स्वभक्तद्रोहश्रवणात्प्रकुपितः । लघिम्ना शैघ्र्यातिशयेनालक्षिततयेत्यर्थः । तरसा वेगेन । आरुहत् आरोहदित्यर्थः ॥ ३४ ॥ तं श्रीकृष्णम् । मनस्वी धीरः ॥ * ॥ आविशन्तं वेगेन मञ्चान्तः प्रविशन्तम् । आत्मनो मृत्युं मृत्युमिव । साक्षाद्भीत्या मृत्युत्वेन प्रतीयमानमित्यर्थः । मनस्वीति निन्दार्थे विन् 'भूमनिन्दाप्रशंसासु' इत्यादिस्मरणात् । निंदितमना भीत इत्यर्थः । अत एव कंसोऽशस्त्रेऽपि तस्मिन्नसिचर्मणी जग्राह ॥ ३५ ॥ तं कंसम् । दुर्विषहे उग्रे च बलार्चिषी यस्य स तथा । "तेजो दीप्तौ प्रभावे च स्यात्पराक्रमरेतसोः" इति मेदिनी ॥ * ॥ दक्षिणं वामं च भागं व्याप्य गतिकौशलेनाशुवेगेन विविधं चरन्तं भ्रमन्तम् । अत्रानुरूपो दृष्टान्तः—यथाकाशे श्येनमिति । अनेन दुर्ग्रहत्वमुक्तम् । तथापि प्रसह्य बलात्समग्रहीत् । कुतः—दुर्विषहमुग्रं न तु साधारणोग्रं तेजः पराक्रमो यस्य स इति । तार्क्ष्यसुतोऽपि दुर्विषान्सर्पान्हन्तीति दुर्विषहा, अत एवोग्रतेजाश्च । तद्दृष्टान्तेन त्वसाधारणोग्रः, लीलया ग्रहणमपि सूचितम् ॥३६॥ तस्य कंसस्य । गरिष्ठत्वाय दुर्भरत्वाय तत्र विश्वाश्रयत्वे । उपरिपतनमाक्षिपति—कुत इति । आत्मतंत्रः अपराधीनत्वाद्यथेच्छं पपातेति भावः ॥ * ॥ सम्यग्ग्रहणमेव व्यञ्जयति—केशेषु प्रकर्षेण दृढं गृहीत्वेति । ननु मुकुटबद्धकेशेषु द्रुतं ग्रहणं कथं स्यात्तत्राह—चलत् ग्रहणोद्यम एव सवैयग्र्यमस्तकचालनेन । विगलत्किरीटं यस्य तम् । तथा च श्रीविष्णुपुराणे—'केशेष्वाकृष्य विगलत्किरीटम्—' इति । हरिवंशे च—"मुकुटश्चापतत्तस्य कांचनो वज्रभूषितः । शिरसस्तस्य कृष्णस्य परामृष्टेन पाणिना ॥" इति । अन्यत्तैः । यद्वा—आत्मतंत्रे हेतुः—विश्वाश्रयः । तत्र कैमुत्येन हेतुः—अब्जनाभः, गर्भोदशायिरूपेणांशेनापि भुवनकोषपद्मनाभ इत्यर्थः ॥ ३७ ॥ परेतं मृतम् । हरिः सिंहः । तदा कंसपतनाऽवसरे । कृष्णलीलाश्रवणरता एव नरेंद्रा अन्ये तु नरा अपि न सन्ति "कृष्णभक्ता नरेंद्राः स्युरन्ये तु पशवो नराः" इति पुराणांतरात् । "परेतो वाच्यलिंगः स्यान्मृते भूतान्तरे पुमान्" इति मेदिनी ॥ * ॥ उपरि श्रीभगवत्पातादेव सम्यक्परेतं मृतम् । जगतो विश्वस्येति न केनापि निवारितं सर्वेषां च सुखमिति च सूचितम् । हाहेति शब्दोऽत्र विस्मये । महापुरुषस्याप्यवज्ञया वधात् । तथा च विष्णुपुराणे—" ततो हाहाकृतं सर्वमासीत्तद्रंगमण्डलम् । अवज्ञया हतं दृष्ट्वा कृष्णेन मथुरेश्वरम् ॥" इति । नरेंद्रेति—तं हृष्टं दृष्ट्वा स्वयमतिहृष्टः संबोधयति । नरेंद्रा अपि त्वादृशा दुष्टान्मारयंति किमुतेंद्रेंद्रः श्रीकृष्ण इति नाश्चर्यमिति भावः ॥३८॥ स कंसः । उद्विग्नधिया भीतबुद्ध्या तं कृष्णरूपम् । नित्यदा सदा । यतो हेतोश्चक्रायुधं सुदर्शनधरं ददर्शातो हेतोस्तदेवरूपं चक्रायुधरूपं दुरवापं ज्ञानमृते साधनांतरानवाप्यम् "तमेव विदित्वातिमृत्युमेति, नान्यः पंथा विद्यतेऽयनाय" इति: श्रुतेः । सर्वदा ज्ञानरूपभक्तेर्देहान्ते जातज्ञानत्वात्तदेवापेति भावः । ज्ञानस्य मुक्तौ पाके वह्नेर्ज्वालावद्व्रत्तयवांतरव्यापारवत्त्वादित्यन्यत्र बहुधा निरूपितमिति ॥ * ॥ प्रसंगात्कंसस्य मोक्षमाह—स इति । नित्यदा नित्यमेवोच्चैर्भीतया भयेनाकृष्टया धिया ददर्श । तस्य

तस्याऽनुजा भ्रातरोऽष्टौ कंकन्यग्रोधकादयः ॥ अभ्यधावन्नभिक्रुद्धा भ्रातुर्निर्वेशकारिणः ॥ ४० ॥ तथाऽतिरभसांस्तांस्तु संयत्तान्रोहिणीसुतः ॥ अहन्प रिघमुद्यम्य पशूनिव मृगाधिपः ॥ ४१ ॥ नेदुर्दुंदुभयो व्योम्नि ब्रह्मेशाद्या विभूतयः ॥ पुष्पैः किरंतस्तं प्रीत्या शशंसुर्ननृतुः स्त्रियः ॥ ४२ ॥ तेषां स्त्रियो महाराज सुहृन्मरणदुःखिताः ॥ तत्राभीयुर्विनिघ्नंत्यः शीर्षाण्यश्रुविलोचनाः ॥ ४३ ॥ शयानान्वीरशय्यायां पतीनालिंग्य शोचतीः ॥ विलेपुः सुस्वरं नार्यो विसृजंत्यो मुहुः शुचः ॥ ४४ ॥ हा नाथ प्रिय धर्मज्ञ करुणानाथ वत्सल ॥ त्वया हतेन निहता वयं ते सगृहप्रजाः ॥ ४५ ॥ त्वया विरहिता पत्या पुरीयं पुरुषर्षभ ॥ न शोभते वयमिव निवृत्तोत्सवमंगला ॥ ४६ ॥ अनागसां त्वं भूतानां कृतवान्द्रोहमुल्बणम् ॥ तेनेमां भो दशां नीतो भूतध्रुक्को लभेत शम् ॥ ४७ ॥

निर्वेशो निष्कृतिरानृण्यमित्यर्थः । तत्कारिणः संतस्तेऽभ्यधावन् ॥ ४० ॥ तथा तादृगतिरभसो वेगो येषां तान् । संयत्तानुद्युक्तान् ॥ ४१ ॥ ४२ ॥ ४३ ॥ शोचंत्यो विलापांश्चक्रुः । शुचः अश्रूणि ॥ ४४ ॥ हेधर्मज्ञ हेकरुण हेदीनवत्सलेति विलापे प्रेमसंबोधनानि । ते त्वदीया वयम् ॥ ४५ ॥ त्वया पत्या विरहिता पुरीयं न शोभत इति स्वदृष्ट्याभिधानम् ॥ ४६ ॥ अनागसामिति तु परमार्थाभिधानम् ॥ ४७ ॥

यद्रूपं नित्यं दृष्टं तदेवाऽधुनापि स्फुरितं सत्प्रापेत्यर्थः । "यंयं चापि स्मरन्भावं त्यजत्यन्ते कलेवरम् । तंतमेवैति कौंतेय सदा तद्भावभावितः ॥ " इति भगवद्गीतातः पेशस्कारिकीटवदिति भावः । दुरवापमाप—ननु कालनेमिजन्मनि श्रीमदजितेन हतस्याप्यप्राप्तमोक्षस्य तादृशदुष्टस्य तत्कथं घटेत तत्राह—तं निजांशैश्वर्यप्रकटनपरमीश्वरमिति । **विश्वनाथस्तु—**स्वस्य भूतलाघाताभावार्थं तस्योपरिष्टादेव पपात । विश्वाश्रय इति स्वभावे नैव तं मारयितुमिति भावः । किञ्च—कंसो मृत इति कोऽपि यदा न प्रतीयाय किन्तु मूर्छितोऽयमिति मन्यते स्म तदा तं विचकर्ष । तन्मृत्युं सर्वान्प्रत्याययितुमिति भावः । कंसस्य भयहेतुको भगवदावेश एव सर्वापराध हानिपूर्वकमोक्षहेतुरासीदित्याह—स इति ॥ ३९ ॥ तस्य कंसस्य । इत्यर्थ इति—"निर्वेशस्तु पुमान्भागे वेतने मूर्छनेऽपि च" इति मेदिनी । 'वेतनं भृतिरानृण्यम्' इति कोशांतरात् । तत् आनृण्यम् । ते कंसानुजाः ॥*॥ निर्वेशो निष्कृतिरानृण्यमिति यावत् ॥ ४० ॥ "परिघो योगभेदेऽस्त्रविशेषेऽर्गलघातयोः" इति मेदिनी । पशून्मृगादीन् "पशुर्मृगादिदेवाजे नाऽव्ययं पशुदर्शने" इति । 'सिंहव्याघ्रौ मृगाधिपौ' इति हलायुधः ॥ * ॥ परिघं तत्रैव दैवतः प्राप्तम् । यद्वा—परिघाकारं गजदंतमेव ॥ ४१ ॥ तं कृष्णम् । विभूतयः अंशाः "विभूतिर्भस्ममांसेषु संपत्तौ भवनेऽपि च" इति धरणिः ॥ * ॥ विभूतयस्तदैश्वर्यास्तत्सेवका इत्यर्थः । स्त्रियोऽप्सरसः ॥ ४२ ॥ तेषां कंसादीनाम् । तत्र रंगभूमौ ॥ * ॥ ० ॥ ४३ ॥ वीरशय्यायां रणभूमौ । वीराणां शय्या शयनं यस्यां सा तस्याम् । विसृजन्त्यस्त्यजन्त्यः ॥ * ॥ वीराणां शय्या रणभूः ॥ ४४ ॥ अनाथा प्रिया वत्सला यस्य स तथा । करुणया नाथंते प्रार्थयन्त इति करुणानाथा दीनस्तेषु वत्सल स्निग्ध 'वत्सलः स्निग्धपुत्रयोः' इति कोशात् ॥ * ॥ हा नाथेत्या द्येकत्वं प्रत्येकं पृथग्विलापात् । मुख्यत्वेन कंसस्त्रीणामेव तद्वर्णनाद्वा । करुणादयालो आ ईषत्प्रहतेऽपि निहताः किं पुनर्मारिते । 'त्वया हतेन' इति पाठः क्वचित् । त्वया हतेनैव कर्त्रेति दुःखोक्तिः । गृहैः प्रजा भिश्चापत्यादिभिः सहिता । गीर्देवी तु निंदति—अनाथेत्यकारप्रश्लेषेणैकपद्यात् ॥ ४५ ॥ निवृत्ते उत्सवमंगले यस्यां सा । उत्सवो होलिकादिरूपो, मंगलं विवाहादि ॥ * ॥ विशेषेणाऽपुनर्योगतया रहिताः । निवृत्त उत्सवो गीतवाद्यादि मंगलानि च शुभसूचकानि यस्याः सा । न चान्यतस्तत्संभवेदित्याहुः—पुरुषर्षभेति । गीर्देवी तु—पुरुषर्षभ बलीवर्द । काक्वा न शोभते किमिति "ऋषभः स्वरभेदे स्यादष्टवर्गौषधे वृषे । श्रेष्ठार्थे च" इति विश्व प्रकाशात् ॥ ४६ ॥ तेन भूतद्रोहेण । इमां मृत्युरूपाम् । भूतध्रुक् प्राणिद्रोही "एतस्य महतो भूतस्य" इत्यादिश्रुतौ भूतशब्द ईशपरस्तथा चेशद्रोही कः शं लभेत, न कोऽपीत्यर्थः । दैहिकव्यवहारमात्रेण ताभिः

सर्वेषामिह भूतानामेष हि प्रभवाप्ययः ॥ गोता च तदवध्यायी न क्वचित्सुखमेधते ॥ ४८ ॥ श्रीशुक उवाच ॥ राजयोषित आश्वास्य भगवाँल्लोकभावनः ॥ यामाहुर्लौकिकीं संस्थां हतानां समकारयत् ॥ ४९ ॥ मातरं पितरं चैव मोचयित्वाऽथ बंधनात् ॥ कृष्णरामौ ववंदाते शिर साऽऽस्पृश्य पादयोः ॥ ५० ॥ देवकी वसुदेवश्च विज्ञाय जगदीश्वरौ ॥ कृतसंवंदनौ पुत्रौ सस्वजाते न शंकितौ ॥ ५१ ॥ इति श्रीभागवते महापु राणे द० पूर्वार्धे कंसादिवधो नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

एष कृष्णः प्रभवंत्यस्मादिति प्रभवः अपियंति प्रलीयंतेस्मिन्नित्यप्ययः स च स च । तदवध्यानं कृष्णस्य अवज्ञा तत्कर्तुं शीलं यस्य सः ॥ ४८ ॥ ४९ ॥ आस्पृश्य ईषत्स्पृष्ट्वा ॥ ५० ॥ पुत्रभ्रांतिं विहाय जगदीश्वराविति ज्ञात्वा शंकितौ न सस्वजाते नालिंगितवंतौ । किंतु बद्धांजली तस्थतुरित्यर्थः ॥ ५१ ॥ प्रसह्य हत्वा हस्तींद्रं मल्लेंद्रान्मलली लया ॥ बीभत्सचरितं कंसं स बीभत्समभारयत ॥ १ ॥ इति श्रीमद्भागवते म० दशमस्कंधे पूर्वार्धे टीकायां चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

सह शोचन्त्यः काश्चित्परमार्थदर्शिन्य आहुः—अनागसामिति द्वाभ्याम् । उल्वणमुत्कटं बहुधा दुर्मारणात् ॥ ४७ ॥ एष प्रत्यक्षस्थितः । “ प्रभवाप्ययौ हि भूतानाम् ” इति श्रुतेः । सुखं यथा स्यात्तथा न वर्धते ॥ * ॥ किञ्च—सर्वेषामिति तदवध्यायी तदवज्ञातापि, किं पुनर्द्रोहीत्यर्थः । सुखं यथा स्यात्तथा नैधते स सदा दुःखेन क्षीयत इत्यर्थः । क्वचिदिह परत्र चेत्यर्थः । इदं तत्स्वभावनिन्दापेक्षयैवोक्तं न तु तादृशानामपि सुखपर्यवसायक भगवत्स्वभावदृष्ट्येति ज्ञेयम् । एष श्रीकृष्णः । प्रभवत्यस्मादिति प्रभवः, अपियंत्यस्मिन्नित्यप्ययः, स च स चेति **विश्वनाथः** ॥ ४८ ॥ आश्वास्य सर्वतदीयवृत्तश्रावणेन सांत्वय्य । संस्थां मृतसंस्कारम् ॥ * ॥ आश्वास्येत्यत्र हेतुः—लोकभावनः, स्वाभाविक्या दयया सर्वलोकपालक इति । अत एव श्रीविष्णुपुराणे—“ बहुप्रकारमाश्वस्तः पश्चात्तापातुरो हरिः । ताः समाश्वासयामास स्वयमस्त्राविलेक्षणः ॥ ” इति । श्रीहरिवंशे च—“ कंसनारीविलापांश्च श्रुत्वा स—करुणान्बहून् । गर्हमाणस्तथात्मानं तस्मिन्यादवसंसदि ॥ अहो मयातिबाल्येन नवरोषातिवर्तिना । वैधव्यं स्त्रीसहस्राणां कंसस्यास्य कृते कृतम् ॥ ” इत्यादि । संस्थामंत्यकृत्यम् । सा च ‘ स नीतो यमुनातीरमुत्तरम्—’ इत्यादिश्रीहरिवंशानुसारेण परिज्ञेया । तच्च तासां महाशोकदर्शनपरिहारार्थं तीर्थानामनाविलतार्थं चेति गम्यते । आश्वास्य मयि पालयितारि का युष्माकं चिन्तेति बोधयित्वेति **विश्वनाथः** ॥ ४९ ॥ अथ कंससंस्थोत्तरम् ॥ * ॥ अथ तदनंतरमिति परदुःखासहिष्णुतयादौ कंसस्त्रीणां पतिदेहेन सह प्रेषणाय व्यग्रत्वात्सर्वेषु स्वस्वस्थानं गतेषु कोलाहलशान्तिश्च । आस्पृश्य सम्यक् स्पृष्ट्वा ॥ ५० ॥ सस्वजात इति “ द्वयोर्नाम्नोर्बहूनां वा यत्र वाक्ये समुच्चयः। नामत्रयाश्रिता संख्या कृत्तिबायोर्विशेषणम् ॥ ” इति हरिभर्त्रनुशासनाद्देवकीवसुदेवयोर्द्वित्वमादाय सस्वजात इत्युक्तम् । अन्यथा सस्वज इत्यस्य द्विरुपादानं स्यात् । इत्यर्थ इति—शंकाकुलत्वान्नालिंगितवन्तौ । शंका च—कथमावामीश्वरे पुत्रत्वबुद्धिं कुर्व इत्येवंरूपा ज्ञेया ॥ ( ५१ ) ॥ ‘यादृशो यक्षस्तादृशो बलिः’ इति न्यायेन सबीभत्सं केशग्रहपूर्वकभूमिविलोडनसहितम् । अयमर्थः श्रुत्याप्यनूद्यते—“अहश्च कृष्णमहरर्जुनं च विवर्तेते रजसी वेद्याभिः वैश्वानरो जायमानो न राजावातिरज्ज्योतिषाग्निस्तमांसि” इति श्रुतिः । अस्या अर्थः--अहः युद्धयज्ञः कृष्णम् अनु एकः विवर्तते विशेषेण जायते । तथार्जुनम् अनु अहार्विवर्तते । एकश्चकारोऽन्वाचयेऽपरः समुच्चये । तेन कृष्णार्जुनाभ्यां विभज्य समुच्चित्य वा क्रियमाणौ द्वौ युद्धयज्ञौ वर्तेते इत्यर्थः । उभे अप्यहनी रजसी रजोगुणकार्ये वेद्याभिर्लब्धुं योग्याभिः, श्रीभिर्हेतुभूताभिः । लक्ष्यर्थं युद्धानि जायन्त इत्यर्थः । ताभ्याञ्च सहायाभ्यां वैश्वानरो विश्वेषां नृणाम् इष्टफलप्रापको धर्मः स्वयमदृष्टरूपोऽपि जायमान आविर्भवन् । वाशब्द इवार्थे । राजा जायमानः सन् तमांसि अधर्मरूपाणि अवातिरत् तिरस्कृतवान् । केन—अग्निज्योतिषेत्यर्थः । खांडवदाहेऽग्निना दत्ते चक्रगांडीवे तद्रूपेण ज्योतिषेति भावः । अनेन मंत्रेण सर्वे कृष्णकृतयुद्धाऽर्जुनयुद्धाश्च लक्ष्यन्त इत्यवधेयम् ॥*॥ विज्ञाय विशेषतो ज्ञात्वा सांप्रता

श्रीशुक उवाच ॥ पितरावुपलब्धार्थौ विदित्वा पुरुषोत्तमः ॥ मा भूदिति निजां मायां ततान जनमोहिनीम् ॥ १ ॥ उवाच पितरावेत्य साग्रजः सात्वतर्षभः ॥ प्रश्रयावनतः प्रीणन्नंब तातेति सादरम् ॥ २ ॥

पंचचत्वारिंशकेऽथ पितृनंदादिसांत्वनम् ॥ उग्रसेनाभिषेकश्च गुरौ वासात्पुरागमः ॥ १ ॥ उपलब्धार्थौ विदित्वेति। अयमर्थः। उप समीपे आवयोः पुत्रबुद्ध्या यः सांसारिकपरमसुखभोगात्पूर्वमेव लब्धार्थावावामीश्वराविति लब्धः प्राप्तः परमज्ञानरूपोऽर्थो याभ्यां तथाभूतौ तौ ज्ञात्वा मयि प्रसन्ने सत्यनयोर्ज्ञानं नाम किं दुर्लभं स्यात् दुर्लभं तु मयि पुत्रतया प्रेम तत्प्रेम यथा पुत्रतया न तथा ईश्वरत्वेन अत इदानीमेव तज्ज्ञानम् नाभूदिति । निजां स्वाधीनां मायां तयोः प्रसारितवानिति ॥ १ ॥ तदेव दर्शयति उवाचेत्यादिभिरष्टभिः ।

द्भुतकर्मदर्शनादिना स्मृततज्जन्मवृत्तांतत्वेन पुनरैश्वर्यज्ञानोद्बोधात्कृतसभक्तिवंदनावपि पुत्रावपि जगदीशबुद्ध्या भीतो संतौ । यद्वा—न सस्वजाते किन्तु प्रणतौ भवन्तौ च स्थितावित्यर्थः । तथा श्रीविष्णुपुराणे—“ उत्थाप्य वसुदेवस्तु देवकी च जनार्दनम् । स्मृतजन्मोक्तवचनौ तावेव प्रणतौ स्थितौ ॥ ” इति स्तुतिस्तु दीर्घा तत्रास्ति ॥ ९१ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कंधे पूर्वार्धे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ अथ कंसमृतेरनंतरम् । गुरौ गुरुसमीपे उज्जयिन्याम् ( १ ) । उपलब्धार्थावित्यस्याशयमाह—अयमर्थ इति । अतः पुत्रप्रेम्णो दुर्लभत्वात् । तज्ज्ञानमेतावीश्वरावित्येवंरूपम् । तयोर्देवकीवसुदेवयोः ॥ * ॥ अहो भगवतो नौमि बलात्सर्वप्रवर्तनम् । प्राहिणोद्यः स्वशून्येऽपि श्रीनंदादीनपि व्रजे॥१॥ अत्र ‘ तं संपरेतं विचकर्ष भूमौ ’ ( अ० ४४, श्लो० ३८) इत्यारभ्य ‘ उवाच पितरावेत्य ’ ( २ ) इत्येतत्पर्यन्तस्य प्रकरणस्य लीलाक्रमघटनार्थमित्यार्थिक एव क्रमो गृह्यते । तथाहि—प्रथमं तावत्कंसस्य मृत्युप्रत्यायनार्थं रंगभूमावेव यत्किञ्चिद्विकर्षणम् , ततः कंसभ्रातॄणां हननम्, ततः श्रीवसुदेवदेवकीमोचनम् ,तत्रैव ताभ्यां वंद्यमानयोस्तयोः संकोचवचनम्, ततः पर्वतकायस्य कंसस्य यमुनातीरं प्रति नयनासंभवाच्छ्रीकृष्णेन पुनः कर्षणम्, तेन च परिखा जातेति श्रीविष्णुपुराणे प्रसिद्धम् । यथा—“ गौरवेणातिमहता परिखा तेन कृष्यता । कृता कंसस्य देहेन वेगेनेव महांभसः ॥ ” इति । सा चाद्यापि विश्रान्तितीर्थपर्यन्तसंगता कंसस्य खातं, कंसनदीति च प्रसिद्धा दृश्यते । एवं कंसदेहस्य काठिन्यस्थौल्येऽपि व्यक्ते, ततः कंसादिस्त्रीणां तत्रैव गमनं विलापाद्यञ्च, ततश्च ‘ पितरावुपलब्धार्थौ ’ इत्यादि । अथ तदिदं प्रकरणं व्याख्यायते—उपलब्धार्थाविति । उपोऽत्र हीने, पुत्रभावमयप्रेमतो हीनतया लब्धोऽर्थः पारमैश्वर्यज्ञानं याभ्यां तादृशौ । तन्मोचनानंतरवंदनसमये ज्ञात्वा तत्तु मा भूदिति विचार्य जनमोहिनी या माया पुत्राद्यासक्तिरूपा, निजां तां स्वविषयकां ततान “ या प्रीतिरविवेकानां विषयेष्वनपायिनी । त्वामनुस्मरतः सा मे हृदयान्नापसर्पतु ॥ ” इतिवत् । यद्वा—स्वीयामसाधारणीं कृपां, किं वा स्वविषयकां पितृभावमयीं कृपां वात्सल्यम् । तामभिव्यञ्जयति—जनानां स्वभक्तानां मोहिनीं, यद्दर्शनेन तदानींतना यच्छ्रवणेनेदानींतनाश्च भक्ताः प्रेममोहं प्राप्नुवन्तीत्यर्थः । एतेन तादृशभावस्य परमपुरुषार्थत्वं ध्वनितम् । श्रीशुकादीनामपि तादृशभक्तगणान्तःपातात् । यद्वा—तां मायां पुनः कीदृशीम्—अंशेन जनमोहिनीञ्च, किञ्चिदन्यथावचनत्वेन पुरतः प्रतीयमानत्वात् । तच्च तां प्रति युक्तमेव “ स्त्रीषु नर्मविवाहेषु वृत्त्यर्थे प्राणसंकटे ” इत्यादिन्यायात् ’ पुत्रभाव एवानयोः पितृत्वेन स्त्रीकृतयोर्वृत्तिरिति । वक्ष्यते च—‘ इति माया ’ इत्यादौ ‘ परिरभ्यापतुर्मुदम्, ( १० ) इति । **विश्वनाथस्तु**—उपलब्धोऽर्थोऽस्मदैश्वर्यज्ञानरूपं धनं याभ्यां तथाभूतौ पितरौ ज्ञात्वा मा भूदिति स चार्थोऽनयोर्माऽस्तु किन्तु तदावरको वात्सल्यप्रेमैव, संप्रत्यस्तु मम चानयोश्च तेनैव परमानंदलाभादिति मनसि विमृश्य निजामंतरंगां मायां स्वैश्वर्यज्ञानमावरीतुं योगमायां ततान । जनमोहिनीम् “ दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ” इत्यत्र जनशब्देन भक्ता एवोक्तास्तान्मोहयितुं शीलं यस्यास्ताम् । यद्वा—जनयत इति जनौ जननीजनकौ, तयोर्मोहिनीम् । स्वामिचरणास्तु—मयि प्रसन्ने सत्यनयोर्ज्ञानं नाम किं दुर्लभं, दुर्लभं तु मयि पुत्रतया प्रेमेति भगवदभिप्रायमाहुः । अत एव पितरौ वात्सल्यरसं ग्राहयितुमग्रिमश्लोकेषु तयोः करटोक्तिरपि न दोषायेति ज्ञेयम् ॥ १ ॥ तदेव मायाप्रसारणमेव । प्रश्रयाय प्रकृष्टं सेवां कर्तुमवनतः । प्रीणन्निति णिजा

नास्मत्तो युवयोस्तात नित्योत्कंठितयोरपि ॥ बाल्यपौगंडकैशोराः पुत्राभ्यामभवन्क्वचित् ॥ ३ ॥

प्रीणन्प्रीणयन्सादरमुवाच ॥ २ ॥ अस्मत्तोऽस्मन्निमित्तं नित्य मुत्कंठितयोरपि युवयोः पुत्राभ्यामावाभ्यां कृत्वा बाल्यपौगंडकैशोरास्तत्तदवस्थानुभवसुखानीत्यर्थः । तानि नाभवन्निति अस्मत्तः पुत्राभ्यामिति सामानाधिकरण्यं वा ॥ ३ ॥

द्यभाव आर्षः ॥ * ॥ तदेव विवृणोति—उवाचेति । ‘ उवाच पितरावेत्य ’ इति पूर्वं मोचयित्वा गृहमेव प्रस्थापितौ तावेत्येत्यर्थः । कंसादिसंस्कारार्थमन्यान्नियोज्येति भावः । सात्वतर्षभ इति—स्ववंश्यत्वेनानुगृहीतेषु यादवेषु च कृपां विस्तारयितुमुचितोऽयमिति तद्दर्शनया तेष्वपि तां विस्तारयितुमिति भावः । तथा च विष्णुपुराणे—“मोहाय यदुचक्रस्य विततान स वैष्णवीम् ” इति । साग्रजत्वं तत्साहित्येन तयोरधिकविश्वासार्थम् । यद्वा—हे अंब, हे तातेत्येवं संबोधनेन प्रीणन् तौ प्रीणयन् । किं वा स्वयमेव हृष्यन्सादरमुवाच ॥ २ ॥ इत्यर्थ इति—लक्षणयाऽवस्थाशब्दास्तत्तदवस्थासुखपरा बोध्याः । ते बाल्यादयः । नैमित्तिकाधारसप्तमीकल्पनापेक्षया तृतीया कल्पना प्रथमातिक्रमे कारणाभावाद्दूरेति मत्वाह—अस्मत्त इति । आवाभ्यामित्यर्थः । तसिरत्र सप्तमीतृतीययोः पूर्वापरव्याख्यानयोर्ज्ञेयः ॥ * ॥ हे ताततेति प्राधान्यात् । किं वा ज्ञानपरस्य तस्य स्नेहौत्कट्यमसंभाव्य मातृवत्स्नेहोदयाय । क्वचिदेकांशेऽपि तदिदं कैशोरस्य पूर्वपूर्वावस्थैवोच्यते । तथात्र वर्षक्रमो विचार्यते—“क्व सप्तहायनो बालः क्व महाद्रिविधारणम्” इति श्रीव्रजवासिवचनेन तद्धारणसमये सप्तहायनत्वं श्रूयते । तद्धारणञ्च तत्पूजासमयकार्तिकशुक्लप्रतिपदानंतरं तृतीयायामेव गम्यते । वर्षपूरणसमयस्तु गौणभाद्रकृष्णाष्टम्यामेव मासद्वयादिनदशकाधिकेऽपि वात्सल्यात्सप्तवर्षमात्रतां प्रोक्तवन्तस्तस्मात्तन्मर्यादया पूर्वपूर्वपर्यालोचनया च तदभ्यन्तर लीलावर्षाणि गण्यन्ते । तत्र ‘कालेनाल्पेन राजर्षे’ इत्यादिदृष्ट्या राजकुमारादिषु दृष्टत्वेन कैमुत्यप्राप्त्या च नासंभावना कार्या । तत्र सति वर्षे पूर्णे तृणावर्तवधः, तृतीयवर्षारंभकार्तिके दामोदरलीला, ततः कतिचिद्दिनान्ते वृंदावनप्रवेशः, प्रविष्टे च वृन्दावने द्वित्रिमासानंतरं वत्सचारणारंभः, तत्र वत्सबकव्योमवधस्तदेवं तृतीये चतुर्थारंभे शरदि बालवत्सहरणम्, तत्र पौगंडस्य प्रवेशेऽपि “यत्कौमारे हरिकृतं जगुः पौगंडकेऽर्भकाः ” इति वचनात्तद्धारणहेतोरनुल्लासे स्तंभः, पंचमारंभे पौगंडप्रकाशः, तत्र कार्तिकशुक्लाष्टम्यां गोचारणारंभः, पंचमस्य निदाघे कालियमर्दनं, षष्ठे गोचारणकौतुकमात्रं, सप्तमारंभे कैशोरप्रवेशः, तत्रैव पक्वतालावसरे धेनुकवधः, तत्संध्यायां ‘पीत्वा मुकुंदमुखसारघम्’ इत्यादिरीत्या प्रथमतादृशभावाभिव्यक्तिः, कालियदमनधेनुकवधयोर्विपर्ययः प्रतिपन्न एव, सप्तमस्य निदाघे प्रलंबवधः, अष्टमस्याश्विने वेणुगीतं, कार्तिके गोवर्धनोद्धारणमिति ‘क्व सप्तहायनो बालः’ इति वचनमनुस्मृत्य स्थापितम् ॥ तथा “एकादश समास्तत्र गूढार्चिः सबलोऽवसत्” इत्यनुसृत्य निरूप्यते—अष्टमारंभ एव कार्तिकशुक्लैकादश्यां गोविंदाभिषेकः, द्वादश्याञ्च वरुणलोकगमनम्, तत्पूर्णिमायां ब्रह्मह्रदावगाहनं श्रीवराहदेवेन तस्यां तन्महिमकथनात् , हेमन्ते वस्त्रहरणं, निदाघे यज्ञपत्नीप्रसादः, नवमस्य शरदि रासलीला, शिवरात्रिचतुर्दश्यामंबिकावनयात्रा, फाल्गुन्यां शंखचूडवधः, दशमे स्वैरलीला, एकादशे चैत्रपौर्णमास्यामरिष्टवधः, द्वादशस्य गौणफाल्गुनद्वादश्यां केशिवधः, तच्चतुर्दश्यां कंसवध इति द्वादशस्तत्र न पूर्ण इत्येकादश समा इत्युक्तम् । किन्तु नवमान्त एव पूर्णकिशोरता, सा च न व्यवच्छिद्यते “कृष्णं मत्वा स्त्रियो ह्रीता निलिल्युस्तत्रतत्र हि” इति प्रद्युम्नस्यागमनेऽपि तत्साम्यावगमादिति प्रस्तुतमनुसरामः । अत्र **विश्वनाथोऽपि** ‘ बाल्यपौगंडकैशोराः ’ इह पुंस्त्वमार्षम् । ननु “ क्व चातिसुकुमारांगौ किशोरौ नाप्तयौवनौ ” इति पुरस्त्रीणामुक्तेः कथं कैशोरस्यातीतत्वमुच्यते “ कौमारं पञ्चमाब्दान्तं पौगंडं दशमावधि । कैशोरमापञ्चदशाद्यौवनञ्च ततः परम् ॥ ” इति वचनात्पञ्चदशवर्षपर्यन्तमेव कैशोरं, कृष्णस्त्वेकादशवर्षवयाः कंसं जघान ‘एकादश समास्तत्र’ इत्याद्युद्धवोक्तेर्व्रजभूमावुपनयनाभावाच्चेत्यतस्तदानीं तयोः कैशोरस्यारंभ एव न तु शेषोऽपीति,—सत्यं, यद्यपि सामान्यतो वयोगणना ईदृश्येव तदपि “कालेनाल्पेन राजर्षे रामः कृष्णश्च गोव्रजे । अघृष्टजानुभिः पद्भिर्विचक्रमतुरंजसा ॥” इत्युक्तेः राजकुमारादावपि क्वचित्सुखिनि पौगंडवयस्यपि शरीरवृद्धिमति कैशोरचेष्टादर्शनात् । कृष्णे तु

न लब्धो दैवहतयोर्वासो नौ भवदंतिके ॥ यां बालाः पितृगेहस्था विंदंते लालिता मुदम् ॥ ४ ॥ सर्वार्थसंभवो देहो जनितः पोषितो यतः ॥ न तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा ॥ ५ ॥ यस्तयोरात्मजः कल्प आत्मना च धनेन च ॥ वृत्तिं न दद्यात्तं प्रेत्य स्वमांसं खादयंति हि ॥ ६ ॥ मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुम् ॥ गुरुं विप्रं प्रपन्नं च कल्पोऽबिभ्रच्छ्वसन्मृतः ॥ ७ ॥

किं च आवामेव दैवहीनावित्याह । न लब्ध इति । पितृगेहस्था बाला यां मुदं विंदंते लभंते सा च न लब्धेति ॥ ४ ॥ एवं तावच्छ्लोकद्वयेन युवयोरावयोश्च कामहानि र्जातेत्युक्तमावयोः पुनर्युष्मत्परिचर्यालोपेन धर्महानिरपि जातेत्याह । सर्वार्थसंभव इति । सर्वेषां धर्मायर्थानां संभवो यस्मिन्स देहो यतो याभ्यां जनितः पोषितश्च तयोः पित्रोर्निर्वेशं निष्कृतिमानृण्यं मर्त्यः शतसंवत्सरमात्रेणायुषा न प्राप्नोति ॥ ५ ॥ तन्मध्ये पितुरपेक्षया यः पुत्रः कल्पः समर्थः सन्नपि देहेन धनेन च पित्रोर्वृत्तिं जीविकां न संपादयेत्तं प्रेत्य लोकांतरे यमदूताः स्वस्यैव मांसं खादयंति हि ॥ ६॥ किं च मात्रादिशुश्रूषामकुर्वन्विफलजीवितश्च भवतीत्याह । मातरमिति । प्रपन्नमापन्नमित्यर्थः ।

कैमुत्यप्राप्तेर्वैष्णवतोषिणीभक्तिरसामृतानंदवृंदावनचंप्वादिमतमनुसृत्यैवं व्यवस्थेयम्—मासचतुष्टयाधिकवर्षत्रयस्यैव कृष्णे पंचवर्षीयमाणत्वात्तत्प्रमाणं प्रथमं वय एव कौमारं तत्र कृष्णस्य महावने स्थितिः । ततः परमष्टमासाधिकषड्वर्षपर्यन्तं वयः पौगंडं, तत्र वृंदावने थितिः । ततः परं दशवर्षपर्यन्तं कैशोरं, तत्र नंदीश्वरे स्थितिः । ततः सप्तमे मासि चैत्रकृष्णत्रयोदश्यां मथुरागमनं, चतुर्दश्यां कंसवध इति । तत्र दशवर्षे तु कैशोरभावं तत्रैव नित्यस्थितिरतस्तदनंतरं सर्वकालमेव तस्य कैशोरमेव ज्ञेयम् । ‘ कृष्णं मत्वा स्त्रियः ’ इत्यादिना प्रच्छन्नागमे तत्साम्यावगतेः , ‘ संतं वयसि कैशोरे ’ इति सामान्यतः श्रीकपिलदेवोक्तेश्च, आगमादिष्वपि विंशाक्षरादिमंत्राणां द्वारकालीलामयध्यानेष्वपि तथा दृष्टेश्च । तस्मात्कंसवधदिने तस्य कैशोरापगमः कैशोरानपगमश्चेति कृष्णस्य पुरस्त्रीणाञ्चैकवाक्यं संगच्छते स्म ॥ ३ ॥ इह चावयोरेव महती हानिर्नात्रभवतोर्युवयोरित्याह—किञ्चेति । दैवहीनौ मंदभाग्यौ । नौ आवयोः । तृतीयार्थे षष्ठी । आवाभ्यामित्यर्थः । यां लालनरूपाम् । सा मुद् ॥ * ॥ नेति तैरवतारितम् । तत्र किञ्चेत्यस्य न केवलं युवयोरेव हानिः किं त्वावयोरपीत्यर्थः । अत एव कारणेन नौ व्यावर्तेतां किन्त्वस्य पुत्रजातीया एवेति ज्ञेयम् । यद्वा—मादृशयोरप्रयोजनकयोः पुत्रयोस्तेनापि युष्मत्सुखदत्वं न स्यादेव किं तु आवयोरेव सर्वसुखहानिर्जातेत्याह—नेति । कर्तरि संबंधविवक्षया षष्ठी । अकारप्रश्लेषेणादैवहतयोः कर्माधीनतारहितयोरिति तत्त्वार्थः । पितृगेहस्थत्वादेव पितृभ्यां लालिताः संतः । यद्वा—पितृगेहस्था एव स्वभावतो यां मुदं विंदन्ति विशेषतस्ताभ्यां लालिता इति ॥ ४ ॥ यद्वा—शतशब्दोऽनंतार्थकस्तेन सहस्रादिवर्षायुषापि न, किं वक्तव्यमल्पायुषाम् । तयोर्मातापित्रोः ॥ * ॥ ० ॥ ५ ॥ तन्मध्ये तयोर्मातापित्रोर्मध्ये । पितुः सकाशाद्यः कल्पः स्त्रीणामस्वातंत्र्यात्सामर्थ्याभावाच्च पितुरित्युक्तं स्वामिभिः । देहेन निजदेहेनैव न तु भृत्यादिना । धनेनालंबुद्ध्युत्पादकवसुना । तयोरित्युभयत्रान्वेति काकाक्षिगोलकन्यायेन । तयोर्मातापित्रोः, तं मातृपिताजीविकामददतम् । हीति ‘ वृद्धौ च मातापितरौ ’ इत्यादिकां स्मृतिं सूचयति ॥ * ॥ यस्तयोरित्यत्र टीकायां तन्मध्येऽपि त्वित्येव पाठो न तु पितुरिति । स्वस्य तस्यैवेत्यर्थः । कल्पः शास्त्रविधिनादातुं योग्यः । कर्मणि स्थित इति यावत् ॥ ६ ॥ न केवलं पारत्रिकक्लेश इहापि तेऽयोग्या एवेत्याह—किञ्चेति । स्मृतिमर्थतः पठति—मातरमिति । मातरं सर्वावस्थासु मानार्हाम् । साध्वीमक्षताचाराम् । शिशुं स्वजीविकाकृत्यायोग्यम् । गुरुं ज्ञानोपदेष्टारम् । तच्च विप्रमेव तस्यैव

तत्रावकल्पयोः कंसान्नित्यमुद्विग्नचेतसोः ॥ मोघमेते व्यतिक्रांता दिवसा वामनर्चतोः ॥ ८ ॥ तत्क्षंतुमर्हथस्तात मातर्नौ परतंत्रयोः ॥ अकुर्वतोर्वां शुश्रूषां क्लिष्टयोर्दुर्हृदा भृशम् ॥ ९ ॥ श्रीशुक उवाच ॥ इति मायामनुष्यस्य हरेर्विश्वात्मनो गिरा ॥ मोहितावंकमा रोप्यपरिष्वज्यापतुर्मुदम् ॥१०॥ सिंचंतावश्रुधाराभिः स्नेहपाशेन चावृतौ ॥ न किंचिदूचतू राजन्बाष्पकंठौ विमोहितौ ॥ ११ ॥ एवमाश्वास्य पितरौ भगवान्देवकीसुतः ॥ मातामहं तूग्रसेनं यदूनामकरोन्नृपम् ॥ १२ ॥

अबिभ्रदपुष्णन् श्वसन्नपि मृततुल्य एवेति ॥ ७ ॥ तत्तस्मान्नौ आवयोः मोघं व्यर्थम् । अनर्चतोरपूजयतोः ॥ ८ ॥ दुर्हृदा शत्रुना कंसेन कृत्वा ॥ ९ ॥ १० ॥ ११ ॥ आश्वास्य सांत्वयित्वा ॥ १२ ॥

ज्ञानोपदेशाधिकारात् “ मुखजा उपदेष्टारो बाहुजा रक्षकाः स्मृताः । वर्णानामाश्रमाणाञ्च मुख्योऽभूद्ब्राह्मणो गुरुः ॥ ” इत्युक्तेः , “ विप्रस्यैवाधिकारोऽस्ति धर्मज्ञानोपदेशने ” इति संहितोक्तेश्च । यद्वा—गुरुं ज्ञानवृद्धं विप्रञ्चेति पृथगेव । तत्र विप्रं जातिमात्रम् । ‘ ब्राह्मणो जन्मना श्रेयान् ’ इत्युक्तेश्च । प्रपन्नं शरणमागतं यं कं वापि ॥ * ॥ वृद्धं कुलवृद्धम् ॥ ७ ॥ नन्वस्त्वेतत् प्रकृते किमायातं तत्राह—तन्नाविति । यत एवं शास्त्रार्थस्तत्तस्माद्धेतोः । कंसात् ‘ कसि— गतिशासनयोः ’ इति धातोः सर्वहिंसाधिकारणत्वेन तन्नाम्नो राज्ञः । नित्यमहोरात्रम् । उद्विग्नचेतसोः त्रस्तमनसोः । अकल्पयोः शक्तिसामग्रीहीनयोः । एते इतः पूर्वे दिवसा मोघम् “ मोघा स्त्री पाटलायां स्याद्धीननिष्फलयोस्त्रिषु ” इति मेदिन्युक्तेः निष्फलं यथा स्यात्तथा क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनञ्चेति ॥ * ॥ अत्राकल्पशब्दः केवलासमर्थस्यैव वाचकः । अकल्पत्वे हेतुः—कंसादिति । मोघमिति दोषोक्तिः । न विद्यते कल्पो याभ्यां तयोः , कंसात्कंससामान्ययुद्धोत्साहवशात् , नित्यमुदोरत एव विग्नचेतसोः पुरीं प्रति चलितचेतसोः ‘ ओविजी—भयचलनयोः ” मोघमित्यादिकाकूक्तिरिति वास्तवोऽर्थः ॥ ८ ॥ एतदेव स्फुटयति—तदिति । यत आवामकल्पौ तत्तस्माद्धेतोः । दुर्हृदाऽशोभनमनसा ‘ दुरशोभनदुःखयोः ’ इति यादवः । परतंत्रयोरिति मनुष्यनाट्यानुकरणम् । नौ आवयोः ॥ * ॥ तदर्चनम् । हे तात, मातरिति पुनः संबोधनं स्नेहभरजननार्थम् । तातमातृत्वादेव सुश्रूषामकुर्वतोरपि नौ क्षंतुमर्हथ । किञ्च—परतंत्रयोर्निहृतवासेनास्वाधीनयोरतो दुर्हृदा कंसेन क्लिष्टयोरावयोरसामर्थ्याच्चेति भावः । तत्र श्रीकृष्ण उवाचेति क्वचिदस्ति ॥ ९ ॥ इत्युक्तरीत्या । मायया कृपया गृहीतनरवपुषः । विश्वात्मनः सर्वान्तर्यामिणः ॥ * ॥ मोहितौ विस्मारितवात्सल्यव्यतिरिक्तसर्वौ । तत्र हेतवः—मायामनुष्यस्य कृपाप्रधानेन नराकृतिपरब्रह्मणः, हरेरसमोर्द्ध्वमाधुर्येण सर्वमनोहरस्य, विश्वात्मनः परमात्मत्वेन विश्वस्यापि निरुपाधिपरमप्रेमास्पदस्येति । अंकमारोप्य ताविति शेषः । **विश्वनाथस्तु**—इति एवं माया कपटं मनुष्येषु यस्येत्याह ॥ १० ॥ वाष्पकंठौ गद्गदवाचौ ॥ * ॥ चकार उक्तसमुच्चये । स्नेहपाशेनावृतौ सन्तौ पाशास्त्रवदपारिहार्येण दीर्वेग च प्रेम्णा बहिरन्तर्व्याप्यमानौ अत एव विमोहितौ न किंचिदप्यनुसंधातुं समर्थौ बाष्परुद्धकंठौ च सन्तौ न किमप्यूचतुश्च, किन्तु केवलमश्रुधाराभिः सिंचन्तौ तयोरभिषेक मिव कुर्वन्तौ स्थितावित्यर्थः । हे राजन्निति स्नेहभरस्वभावो भवतागम्य इवेति भावः । तदिदं वृत्तं श्रीनन्दादीनामगोचर एव ज्ञेयम् , उभयत्रैव भगवता पितृत्वव्यञ्जनात् ॥ ११॥ यदूनां नृपं रायदुजत्वे स्थापयामास ॥ * ॥ मातामहमित्यवश्यमान्यत्वेन पितृभ्यां सह संबंधविशेषेण तत्संमतत्वेन च यदुराजयोग्यतोक्ता । अत एव तु शब्दः । तद्विधाने मुख्यं प्रयोजनं स्वस्य गोकुलगमनेच्छयैव ज्ञेयम् । तथा च श्रीहरिवंशे तं प्रति श्रीभगवद्वाक्यम्— “ अहं स एव गोमध्ये गोपैः सह वनेचरः । प्रीतिमान्विचारिष्यामि कामचारी यथा गजः ॥ एतावच्छतशोऽप्येवं सत्येनैव ब्रवीमि ते । न मे कार्यं नृपत्वेन विज्ञाप्यं क्रियतामिदम् । भवान्राजा तु मान्यो मे यदूनामग्रणीः

आह चास्मान्महाराज प्रजाश्चाज्ञप्तुमर्हसि ॥ ययातिशापाद्यदुभिर्नासितव्यं नृपासने ॥ १३ ॥ मयि भृत्य उपासीने भवतो विबुधादयः ॥ बलिं हरंत्यवनताः किमुतान्ये नराधिपाः ॥ १४ ॥ सर्वान्स्वज्ञातिसंबंधान्दिग्भ्यः कंसभयाकुलान् ॥ यदुवृष्ण्यंधकमधुदाशार्हकुकुरादिकान् ॥ १५ ॥ सभाजितान्समाश्वास्य विदेशावासकर्शितान् ॥ न्यवासयत्स्वगेहेषु वित्तैः संतर्प्य विश्वकृत् ॥ १६ ॥

त्वमेवाज्ञापयेति मा वदेत्याह । ययातिशापादिति । तव तु यादवत्वेऽपि मदाज्ञया न दोष इति भावः ॥ १३ ॥ मम तादृशी शक्तिर्नास्तीति चेत्तत्राह । मयीति । मत्प्रसादेन सर्वं सिद्धं भविष्यतीत्यर्थः ॥ १४ ॥ स्वान्ज्ञातीन्संबंधांश्च दिग्भ्य आनाय्येति शेषः ॥ १५ ॥ १६ ॥

प्रभुः । विजयायाभिषिञ्चस्व स्वराज्ये राजसत्तम ॥ " इति । नृपं राजानमकरोन्न तु पूर्ववदधिपं, यतो भगवान् कर्तुमकर्तुमन्यथा कर्तुं समर्थत्वाद्भक्तवात्सल्येन ययातिशापमपि नापेक्षितवानिति भावः । अतः पूर्वेषां राजत्वं तु स्वकपोलकल्पितमित्यायातम् । अस्य राजत्वविधानं बंधनान्मोचयित्वेति ज्ञेयम् , प्रथमाध्यायान्ते निगृह्येत्युक्तेः । अत एव श्रीविष्णुपुराणेऽपि—" उग्रसेनं ततो बंधान्मुमोच मधुसूदनः । अभ्यषिञ्चत्तथैवैनं निजराज्ये हतात्मजम् ॥ " इति । श्रीहरिवंशे तु—यदुग्रसेनस्य कंसशोकादिकं तत्तु लोकव्यवहारमात्रेणानुकृतमिति श्रीशुकेन नादृतम् । यच्च तस्य वसुदेवादेरपि कंसेनानिग्रहणं तादृशमन्यच्च कल्पभेदेन व्यवस्थेयम् । **विश्वनाथस्तु**—' एवमाश्वास्य ' इत्यादिकं श्रीनंदस्य परोक्षमेव, मत्पुत्रं युद्धश्रान्तमेते परमानंदमत्ताः स्नेहेन भोजयितुमंतःपुरं नयान्ति, नयन्तु, अहन्तु संप्रति पुत्रार्थे गतभीः स्वावास एवाह्निकं कृत्यं करवै इत्युक्त्वा तेन तत्रैव गतत्वात् ॥ १२ ॥ तदाज्ञामाक्षिपति—त्वमेवेति । इति भाव इति—' प्रभोराज्ञा गरीयसी ' इत्युक्तेर्मदाज्ञयाऽकर्तव्यमपि कर्तव्यं स्यादित्यर्थः ॥ * ॥ अस्मान्यादवान् । ननु भवद्विधाज्ञापने मम का योग्यता तत्राह—प्रजा इति । त्वदधीनानित्यर्थः । तुशब्दो निर्धारणे । हे महाराजेति यदुराजत्वेन साम्राज्यमप्यभिप्रेतम् । किन्तु यद्यपि भवतामपि यदुत्वमेव तथापि भवतां भोजानां प्रायः परस्परराज्यप्राप्तेरस्माकं वृष्णीनां तु प्रायस्तदप्राप्तेर्भवतामेव राज्यं योग्यमिति विशेषतो भावः ॥ १३ ॥ तदाशंकामपनुदतीत्याह—ममेत्यादिना । भवतस्तव । आदिपदाद्दैत्यगंधर्वादीनां ग्रहः । इत्यर्थ इति—मय्यनुकूले सर्वमनुकूलं स्यात् , " सुप्रसन्ने जगन्नाथे प्रतीपं सरलं भवेत् " इत्युक्तेः ॥ * ॥ तदेव दर्शयति—अवनता भक्त्या नम्राः सन्तो बलिं हरन्त्वित्याज्ञा । तथा च श्रीविष्णुपुराणे—"ययातिशापाद्वंशोऽयमराज्यार्होऽपि सांप्रतम । मयि भृत्ये स्थिते देवानाज्ञापयतु किं नृपैः ॥ " इति । ' हरन्ति ' इति पाठे हरिष्यन्तीत्यर्थः । अन्ये इतरेभ्यो न्यूना इत्यर्थः । नराधिपा अप्यन्य इति वा ॥ १४ ॥ कंसभयेनोद्गतान्निःसृतान् । विश्वकृत्सर्वकृतिकुशलः ॥ * ॥ सर्वानिति युग्मकम् । स्वे आत्मीयाः, संबंधाश्च कृतवैवाहिकादिसंबंधाः । दिग्भ्य आनाय्येति शेषः । दिग्भ्य इति कर्मणि चतुर्थी वा, गतानित्यनेनान्वयात् । याद्विति—यदुभेदा भोजादय इत्यर्थः । आदिशब्देन सात्वतादयः । भोजाश्चाक्रूरेण सह तत्रैवासन् । इत्येते यादवानामष्टौ भेदा मुख्यतमा ज्ञेयाः । सभाजितान्सतः शीघ्रयानप्रस्थापनादिमानेनेत्यर्थः । अतः सम्यक्सुखं शीघ्रश्चानाय्य विदेशावासेन कृशतां प्राप्तानतो बहुलधनेन संतर्प्य नितरां गृहाद्युपस्करपरिच्छदवृत्तिप्रदानादिना समहोत्सवमवासयत् । नन्वसंख्यानां कथं तथानिवासनं द्रुतमेव संभवेत्तत्राह—विश्वकृदिति । अतस्तद्वैभवस्येंद्रादिदुर्लभत्वमपि सूचितम् । तत्र श्रीरोहिणीमपि व्रजादानेष्यतीति ज्ञेयम् ॥ १५ ॥ १६ ॥

---

१ त्वस्मानिति पा० । २ कंसभयोद्गतानिति पा० ।

कृष्णसंकर्षणभुजैर्गुप्ता लब्धमनोरथाः ॥ गृहेषु रेमिरे सिद्धाः कृष्णरामगतज्वराः ॥ १७ ॥ वीक्षंतोऽहरहः प्रीता मुकुंदवदनांबुजम् ॥ नित्यं प्रमुदितं श्रीमत्सदयस्मितवीक्षणम् ॥ १८ ॥ तत्र प्रवयसोऽप्यासन्युवानोऽतिबलौजसः ॥ पिबंतोऽक्षैर्मुकुंदस्य मुखांबुजसुधां मुहुः ॥ १९ ॥ अथ नंदं समासाद्य भगवान्देवकीसुतः ॥ संकर्षणश्च राजेंद्र परिष्वज्येदमूचतुः ॥ २० ॥

सिद्धा पूर्णाः । कृष्णरामाभ्यां गतो निवृत्तो ज्वरस्तापो येषां ते ॥ १७ ॥ सदयस्मितं वीक्षणं यस्मिस्तत् ॥ १८ ॥ प्रवयसो वृद्धाः अप्यतिशयितं बलमोजश्च येषां ते ॥ १९ ॥ २० ॥

यद्वा-सिद्धा इवेति लुप्तोपमा । जीवन्मुक्ता यथा कृष्णे परब्रह्मणि रामेण रमणेन रत्या वा गताध्यात्मिकादितापत्रया भवन्ति तथा रेमिरे "सिद्धिः स्त्री योगानिष्पत्तिपादुकान्तार्द्धिवृद्धिषु । मुक्तौ योगविशेषे च तद्वान्सिद्धः प्रकीर्तितः ॥" इति निरुक्तिकारः ॥ * ॥ अथ तेषां सर्वोत्तमां स्थितिमाह-त्रिभिः । तत्र कृष्णेति युग्मकम् । प्रथमं तावत्कंसादिवधेन गतज्वराः, ततश्च पुनर्वासादिना लब्धमनोरथाः, तदनंतरं श्रीकृष्णसंकर्षणभुजैर्गुप्ताः कंसभयादितो रक्षिताः, ततस्तैरेव लब्धमनोरथास्तदीपतत्वाविर्भावसहिततादृशमथुरावासादिना पूर्णकामाः सन्तो रेमिरे ताभ्यां क्रीडां चक्रुः । तेनैव सिद्धाः कृतकृत्या बभूवुः । तत्र च कृष्णरामाभ्यामन्यनिरपेक्षया तत्स्वरूपमात्राभ्यां गतज्वरा बभूवुः । ताभ्यां व्यतिरिक्ते तापः सुखं तु तयोरेव येषां तथा बभूवुरित्यर्थः । तत्तदर्थयोग्यतत्तन्नामनिरुक्तिस्तून्नेया ॥ १७ ॥ अहरहः प्रतिदिनम् । पूर्वेणैव संबंधः ॥ ॥ * ॥ सुखमेव विवृणोति-वीक्षन्त इति । विशेषेण सन्निकृष्टत्वादिना तन्मुखमीक्षमाणाः । तत्राप्यहरहर्वीक्षमाणाः प्रीता बभूवुरिति दर्शनसौख्यं नित्यमेवाधिकं दर्शितम्, तेनातृप्तिरपि दर्शिता । तत्र हेतवः-नित्यप्रमुदितं क्षणक्षणमेव प्रकर्षेण हृष्यत्, अतो नित्येति सर्वत्रैव व्यंग्यम् । क्षणक्षणमेव श्रीमत्प्रशस्तशोभं तथा सदयेत्यादिना च ॥ १८ ॥ तत्र मथुरायां तदा वा । युवत्वे किमौषधमिति चेत्तत्राह-पिबन्त इति । अक्षैर्नेत्रैः "अक्षो नेत्रे च शकटे चक्रे रावणजेंद्रिये" इति धरणिः ॥ * ॥ तत्र भगवत्पार्षदत्वमेव तदावरणपूजादेवतानां श्रीमदुद्धवादीनां, प्रवयस्त्वं न स्यादेव ये केचिदंधकादयो प्राचीनवृद्धास्तेऽपीत्यपिशब्दार्थः । अतः "स कथं सेवया तस्य कालेन जरसं गतः" इति श्रीमदुद्धवमुद्दिश्य विदुरवाक्यन्तु प्राकट्यावसरप्रमाणचरमकक्षां गत इत्येवाभिदधाति-अलौकिकगुणस्वादशालित्वात्सुधेव सुधासौन्दर्यं मुखांबुजस्य सुधामिति तथाप्यलौकिकत्वं तामक्षैराक्षिभिः पिबंत इति तेनैव तादृशं कमलमिति च पुनस्तयोः परमालौकिकत्वं व्यञ्जितम् । मुहुः प्रतिक्षणं पिबन्तः प्रतिक्षणमतिशयेन युवानः शरीरेंद्रियबलयुक्ताश्चासन् । उपलक्षणं चैतत्सहआदीनामिति ॥ १९ ॥ अथ यादवाश्वासनानन्तरम् । देवकीसुत इति-देवकीत्युपलक्षणं मातापित्रोः, जातस्नेहः स एव नंदात्मजस्य तु तत्रानगतत्वात् । मथुरागमनावसरे ततः पृथग्भूय तत्रैवांतर्हितो नित्यलीलारतोऽभूदिति तत्त्वम् ॥ * ॥ अथ श्रीव्रजराजस्य प्रस्थापनं प्रक्रममाणः श्रीकृष्णस्य भगवत्तायां देवकीसुततायाः प्रस्तावे च परीक्षितः समुल्लसन्मुखतामवेक्ष्य राजेंद्रेति संबोधनम् । तन्मुखमवलोक्य तदीप्सिततानुरूपं वदन्नपि श्रीकृष्णस्यैव वचनपारिपाटीभिर्निजाभीप्सितं स्थापयिष्यन्नाह-अथेति । अथ यादवानां तथाभावादनंतरमिति । अद्य सायमस्माभिः प्रस्थापितव्यं सायञ्च सति प्रातरित्येवं यदुकुलाश्वासनपौरसंमाननाद्यवश्यकृत्याद्यपेक्षया कतिपयदिनविलंबविधानात् । यद्यहं सहसैव गोकुले गच्छामि तदा जरासंधादिसंमर्दस्तत्र स्यादत्रत्यानामरक्षा चेत्यंगीकृतनरलीलाघटितया शंकया तदसमाप्तौ तु कदाचिदेकान्ते सम्यगासाद्य पुत्रोचितनमस्कारादिमद्व्यवहारेणोपेत्य केवलबालोचितभावाविष्कारेण परिष्वज्य चेदं श्लोकत्रयेण वक्ष्यमाणं केवलतत्पुत्रोचितमब्रवीत् । कोऽसौ-भगवान् पूर्णसर्वैश्वर्येण निरपेक्षः । यश्च देवकीसुतः देवक्यां प्रकटितजन्मा स एव, तथा संकर्षणश्च तत्तन्निरुक्त्या यो वसुदेवात्मजत्वं प्राप्तस्तदनुसंगेन स चैव ऊचतुरिति भवद्भिर्यथार्थमेव मंतव्यम्, न च श्रीवसुदेवदेवक्योरिव यत्किञ्चिदन्यथा कर्तुम्, तत्र सिद्धान्तस्य प्रायो विरुद्धत्वात्, अत्र तु

**पितृर्युवाभ्यां स्निग्धाभ्यां पोषितौ लालितौ भृशम् ॥ पित्रोरभ्यधिका प्रीतिरात्मजेष्वात्मनोऽपि हि ॥ २१ ॥**
**स पिता सा च जननी यौ पुष्णीतां स्वपुत्रवत् ॥ शिशून्बंधुभिरुत्सृष्टानकल्पैः पोषरक्षणे ॥ २२ ॥**

**भृशमात्मनोऽप्याधिक्येन पोषितौ । न चाश्चर्यमेतदित्याह । पित्रोरिति । आत्मनो देहादप्यात्मजेषु पित्रोरभ्यधिका हि प्रीतिरिति ॥ २१ ॥ देवकीवसुदेवयोः**

'नंदस्त्वात्मज—'इत्यादौ सिद्धांतस्य दर्शितत्वात् । तथा तत्र 'मायां ततान जनमोहिनीम्' इतिवदत्र श्लेषेणाप्यनुक्तत्वाच्छ्रीनंदप्रभृतीनां भावस्य श्रीब्रह्मशुकोद्धवादिभिः स्वाभाविकत्वेन सर्वदुर्लभत्वेन स्तुतत्वाच्च । 'अहोभाग्यम्' इत्यादिभिः, 'नेमं विरिञ्चि—' इत्यादिभिः, 'युवां श्लाघ्यतमौ' इत्यादिभिश्च । तत्र राजेंद्रेति राजेंद्राणां भवतां महाराजकन्यायाः प्रपितामह्याः संबंधेन तत्रैव निष्ठा युक्ता, भिक्षुकाणामस्माकं तु यथारुच्येवेति भावः । अत्र **विश्वनाथः**—बहुदिवसीयकथां कथयित्वा कंसवधदिवसस्य परेद्यवि कस्यचिदतिमुख्यायाः दुरधिगमार्थायाः कथायाः कथनारंभबोधनायाथशब्दः । 'नक्तं सम्यक् समासाद्य' इति तत्पुत्रत्वाभिमानवत्त्वेनैवेत्यर्थः । देवकीसुत इति देवकीसुतत्वाभिमानमपि गृह्णन्नित्यर्थः । भगवानित्युभयोः समाधात्रीं स्वीयामैश्वर्यशक्तिमेवाश्रित्येति भावः । संकर्षणश्चेति "यदूनामपृथग्भावात्संकर्षणमुशंत्यपि" इति स्वनाम्नो व्युत्पत्तिं दर्शयन्निति भावः । परिष्वज्येति प्रणामेऽवसराप्राप्तेरिति भावः । तदवसरप्राप्त्यभावश्च तयोर्दर्शनमात्रेणैवार्गलोपमाभ्यां भुजाभ्यां श्रीनंदेनानंदसमुद्रनिमग्नेन युगपदेवोद्धृत्यातिविस्तीर्णे स्ववक्षसि तयोर्द्वयोरेव धारणात् । अतस्तयोरत्र परिष्वंगकर्मत्वेनैव परिष्वंगकर्तृत्वमभूदिति बुध्यते । ऊचतुरिति तदनंतरमुपविष्टे श्रीव्रजराजे तदासनमध्यास्य तद्भुजाश्लिष्टावेव तौ सप्रश्नोत्तरवृत्तबहुवृत्तान्तकथनानंतरमिदं सविनयं सान्तःसंकोचं यादवजनतोपरोधज्ञापनपूर्वकं साश्वासं ससान्त्वनमूचतुः ॥२०॥ युवाभ्यां नंदयशोदाभ्याम् । एतत् आत्माधिक्येन पोषणम् ॥ * ॥ प्रथमं ज्येष्ठत्वाद्बलदेव आह—द्वाभ्याम् । हे पितुर्युवाभ्यां मातापितृभ्यां यशोदानंदसंज्ञाभ्यामित्यर्थः । एतच्च युक्तमेवेत्याह—पित्रोरिति । आत्मनो देहादप्यात्मजेष्वौरसेष्वभ्यधिका स्यादेव । पोषितौ लालितावित्यत्र द्विवचनेन मित्रपुत्रे मयि स्वपुत्रे कृष्णे च युवयोस्तुल्यवात्सल्यस्य दृष्टत्वात् । युवामेव यथा कृष्णस्य तथा ममापीत्यावयोर्द्वयोरपि पितराविति द्योतयित्वा युवां लालकौ विना कोटिप्राणप्रियतमं भ्रातरं कृष्णञ्च विनाऽत्र पुर्यामपरिचितयोर्देवकीवसुदेवयोः पित्रोर्गृहे मया स्थातुं न शक्यत इत्यनुद्योतितम् ॥ २१ ॥ नंदं बोधयति भगवान्—देवकीत्यादिना । उत्सृष्टाँस्त्यक्तान् । पोषरक्षणे इति समाहारद्वंद्वः ॥ * ॥ ननु भो बलभद्र सत्यमेव त्वं मम मित्रस्य वसुदेवस्यैव पुत्रोऽसि, स च विपन्मुक्तश्चिरात्प्राप्तं त्वां पुत्रं कथं त्यक्तुं प्रभविष्यत्यतस्त्वं संप्रति स्वपितुस्तस्यैव गृहे तिष्ठ आवां तु त्वद्विच्छेदविदीर्णं स्वहृदयं विवेकशिलया पिधाय कथंचिज्जीविष्यावो न तु वसुदेवस्य सख्युर्दुःखं द्रष्टुं प्रभविष्यावो यत आवां तव पोषकावेव पितराविति चेत्तत्राह—स इति । तेषां शिशूनां स एव पिता सैव जननी न त्वाधानकर्तापि पिता स्वकुक्षौ धृतवत्यपि जननी, ताभ्यामुत्सृष्टानां शिशूनां यदि प्राणा एवाऽयास्यँस्तदा केषां तौ पितरावभविष्यतामतः शिशुभिरपि विवेकिभिः पोषकावेव पितरौ, ताभ्यामपि सकाशाद्बहु माननीयावतो मया नात्र स्थातव्यं, यदि स्वयं ब्रह्माप्यागत्य वदेत्तेनापि ममायं हठो न शिथिलयितुं शक्यः, हंतहंत पितुस्तव संगे कृष्णो व्रजं गत्वा सुखेन खेलयिष्यति, अहं तु कृष्णविच्छेददावदग्धो मथुरायां स्थास्यामीति सर्वथैव न भवेत्तस्माद्बोः पितरहं सशपथमेवेदं ब्रुवे—यदि कृष्णो मां हित्वा त्वत्संगेन व्रजं यास्यति तदा मे प्राणाः सद्य एव यास्यन्तीति स्वाभिप्रायो द्योतितः । अत्र **तोषिणी**—अत्र संकर्षणोऽपि नान्यथा मंतव्य इति स्वयं श्रीकृष्ण आह—स पितेति । चकारोऽप्यर्थे । सोऽपि तस्मात्संकर्षणोऽपि नान्यथा मंतव्य इति । मम तु जन्मादित्रयहेतू एव भवन्ताविति भावः । यद्वा—स एव पिता सैव जननी न तु त्यक्तवन्तः पूर्वपित्रादयस्तस्माद्यद्यन्यतो

यात यूयं व्रजं तात वयं च स्नेहदुःखितान् ॥ ज्ञातीन्वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम् ॥ २३ ॥ एवं सांत्वय्य भगवान्नंदं सव्रजमच्युतः ॥ वासोऽलंकारकुप्याद्यैरर्हयामास सादरम् ॥ २४ ॥

पुत्रौ युवां नास्मत्पुत्रावित्यपि न वाच्यमित्याह । स पितेति ॥ २२ ॥ २३ ॥ सव्रजं व्रजवासिभिः सहितम् । कुप्यानि स्वर्णरजतव्यतिरिक्तकांस्यपात्रादीनि

जन्म स्यात्तथापि किमुत जन्मादित्रयमित्यादि ॥ २२ ॥ वो युष्मान् ज्ञातीन् । पूर्वोक्तरीत्या नंदादयोऽपि ज्ञातय एव । अत्रत्यं किंचित्कृत्यं कृत्वेत्याह—विधायेति । एष्याम इत्युक्तेश्च बहवो मिलित्वा गमिष्यामः । एतेन कुरुक्षेत्रयात्रा सूचिता, तत्रैव तथा संभवादिति तात्पर्यम् ॥ * ॥ तथैव सान्त्वयति—यातेति । वयमिति द्वित्वे " अस्मदो द्वयोश्च " इति वचनात् । चकारेणोद्धवं संगृह्णाति । पूर्वमेतावागमिष्यतः पश्चात्त्वयमित्यर्थः । सुहृदां भवत्सख्यादिसंबंधेनैव पित्रादितया मतानां श्रीवसुदेवादीनां सुखं विधायेति तदिच्छया तत्तत्कार्यसाधनाय यद्यस्मिन्यादवपांडवादिमेलनेच्छया च तदौरसत्वख्यापनपूर्वकं तद्विद्वेषिदंतवक्रपर्यंतदुष्टवधावाधिकमभीष्टं संपाद्येत्यर्थः । एतदर्थं भवतां यदुवंशोत्पन्नत्वमवलंब्य मातृपक्षेऽपि " ब्राह्मणादुग्रकन्यायामावृतो नाम जायते । आभीरोंबष्ठकन्यायामायोगव्यात्तु धिग्वणः ॥ " इति मनुस्मृतेस्तदुत्तमत्वमालंब्य क्षत्रियकन्या अपि परिणेष्यामीत्युक्त्वा प्रार्थनव्यञ्जना च । आपातगमनेनैषां प्रीतिभंगः स्याद्भवतां तु न कोटिकल्पान्तरेऽपीति भावः । तदेव ज्ञातीन्साक्षात्पित्रादीन् स्नेहदुःखितान्द्रष्टुमेष्यामः । पश्यन्त एव स्थातुमागमिष्याम इत्यर्थः । तदर्थतायां विहितेन तुमुन्प्रत्ययेन तस्यैव पुरुषार्थत्वव्यञ्जनात् । यद्वा—' तथापि भूमन्महिमा गुणस्य ते ' इत्यत्र बोधगोचरीभवितुमितिवदत्रापि द्रष्टुं गोचरीभवितुमिति व्याख्येयम् । न च यत्किंचिदेव दर्शनमात्रार्थं किन्त्वविच्छिन्नमेवेत्यभिप्रेत्याह—स्नेहदुःखितानिति । स्नेहस्य निरवधिकत्वे तद्धेतुकादर्शनदुःखस्य तादृशत्वमिति विचार्य यस्मात्करुणाकुलतया गमिष्यामस्तस्मान्नित्यानिजाविर्भावदानेन युष्माकं तद्दुःखमवश्यमेव दूरीकरिष्याम इत्यर्थः । अत्र सुखं विधायेति तस्य तु पुनरपेक्षणीयत्वं दर्शितम् । तदेवं ज्ञातिषु भवत्सु नित्यावस्थानमेव युक्तं तेषु सुहृत्सु पुनरैच्छिकमेव तदिति भावः । किञ्च—सुहृदां सुखं विधायेति मध्येमध्ये समागमने कदर्थनैव स्यात्, आपातसमाधानार्थं साक्षात्कारतुल्यं ममाप्रकटलीलास्फोरणं तदुद्धव एव करिष्यतीति व्यञ्जितम् । तदेतदुद्धवसंदेशे व्याख्यास्यते व्रजमागत्य श्रीकृष्णस्य नित्यावस्थितिश्च दंतवक्रवधान्ते स्थापयिष्यते । श्रीनंदस्तु तदेतत्सर्वं तदाभिप्रेतं न तदानीं सदावगतवान्, क्रमेणैव तु बोद्धेति गम्यम् । अत्र **विश्वनाथः**—ततश्च हंतहंत किमहं करोमि यदि बलदेवं नीत्वैव व्रजं यामि तदा व्रजे महासुखं भविष्यति किन्त्वत्र यादवानां विशेषतो वसुदेवस्य महादुःखं भविष्यति, ममापि महाकलंको भावी—हाहा कंसेन मे सर्वे पुत्रा हताः, यस्त्वेकस्तद्धस्तादपि रक्षितोऽवशिष्टोऽभूदयं बलभद्रस्तमपि नीत्वा नंदो व्रजं जगाम तन्मे नायं सखा किन्तु दैवहतस्य द्वितीयः कंस एवेति संभावयन्नतिसंततो वसुदेवः परःसहस्रानभिशापान्मे दास्यति, ततश्च मे कृष्णस्यापि कुतः कुशलमिति भावनासंकटग्रस्तं नंदं कतिशः क्षणांस्तूष्णीमेव स्थितमालक्ष्य तं युक्त्या प्रबोधयन्कृष्णः ससांत्वनमाह—यातेति । हे तात यूयं संप्रति व्रजं यात । वयमित्यहं बलदेवोमधुमंगलादयश्च वो ज्ञातीन्द्रष्टुमेष्यामः, संप्रति कतिशो दिनान्यत्रैव पुर्यां वसेमेति भावः । कदायास्यथेत्यत आह—वः सुहृदां वसुदेवादीनां सुखं विधायेति । यथा त्वां कलंको न स्पृशेद्यथैतेषां च स्वपुत्रं बलदेवं प्राप्याभिमत्य संलाल्यात्मगृहे स्थास्यतीति विश्वस्य सुखं भवेत्तथा कृत्वेत्यर्थः ॥ २३ ॥ एवं निजागमनोक्त्या सान्त्वय्याश्वास्य । "अकुप्यं रूप्यहेमादि कुप्यमन्यद्धनादिकम्" इति हलायुधः । प्रभृतिपदेन ताम्रलोहकाष्ठपीठशकटादीनां ग्रहः ॥ * ॥ सान्त्वय्येत्यत्र हेतुः—भगवान्, सर्वं कर्तुं समर्थ इत्यर्थः । मत्पुत्रोऽयं सत्यवाक्यात्कदापि च्युतो न स्यादिति श्रीनंदसंभावनोत्पादनायेति भावः । सव्रजं सर्वव्रजजनैः सहितम् । ये तत्र संगे गतास्तान्साक्षादेव तादृशवाक्येन तत्तत्प्रदानेन च, ये व्रजस्थाः श्रीयशोदादयस्तानपि तत्तत्संदेशेन तत्तत्प्रेषणेन चेत्यर्थः । कुप्यानि गोदोहनार्थं कांस्यादिपात्राणि । आदिशब्दादुत्तमयानादीनि । व्रजस्य तत्तदधिकसंपत्सद्भावेऽपि तत्तत्प्रदानं प्रीति

## इत्युक्तस्तौ परिष्वज्य नंदः प्रणयविह्वलः ॥ पूरयन्नश्रुभिर्नेत्रे सह गोपैर्व्रजं ययौ ॥ २९ ॥

**तत्प्रभृतिभिः ॥ २४ ॥ २५ ॥**

मयंत्वांद्वांछिततमं गंधपुष्पादिवत् । तदेवाह—सादरं यथा स्यात्तथा । यद्वा—सादरं श्रीनंदं पुत्रेण यदुच्यते क्रियते वा तत्रतत्रैव स्नेहभरेण प्रीयमाणमित्यर्थः । अर्हयामासेति—श्रीवसुदेवोग्रसेनादीनानाय्य तद्वारा पूजयास । स्वयं तु सन्निधानेनैव हेतुरासीदित्यर्थः । 'कारीषाग्निरध्यापयति' इतिवत्तदायुक्तत्वात् । अत्र **विश्वनाथः**—एवं सान्त्वय्येति—यद्यत्र मम कतिचिद्दिनविलंबो भवेत्तदापि न व्याकुलीभवितव्यं, मम तत्रैव मनोऽत्र त्वेतदनुरोधेनैव स्थितिरिति । सव्रजं कुप्यानीति व्याख्यातचरं पूर्वव्याख्याने ॥ २४ ॥ तौ रामकृष्णौ ॥ * ॥ इत्युक्त इत्यस्य 'यात यूयम्' इत्याद्यन्तपूर्वपद्यत्रयेण व्यवहितेनाप्यन्वयः । प्रणयविह्वल इति स्तंभमोहादि कञ्च सूचयति । गोपैः सहेति तेषामपि प्रत्येकमालिंगनं तथा प्रेमविह्वलत्वादिकञ्चोक्तम् । "अहो भगवतो नौमि बलात्सर्वप्रवर्तनम् । प्राहिणोद्यः स्वशून्येऽपि श्रीनंदादीनपि व्रजे ॥ त्वां व्रजेश्वरि शोचामि त्वां च वृंदावनेश्वरि । कृष्णं विना गतेष्वेषु हाहा जीयिष्यथः कथम् ॥" । अत्र **विश्वनाथः**—प्रणयाविह्वलः पुत्रविच्छेदोत्थमूर्छाविवशः व्रजं ययौ । रामकृष्णौ तौ तु वसुदेवगृहमागत्य सुखं वर्तेते स्मेति । अत्र केचिद्रसज्ञाः प्रेम्णोऽणुमात्रमप्यपचयमसहमाना आक्षिपन्तो विवदन्ते इति तांश्च समाधित्सामो व्याख्यान्तरेण । तच्च—ये उपादित्सन्ते त एवोपाददतां, तत्रायमाक्षेपः—'पितर्युवाभ्याम्' इत्यादिश्लोकपञ्चकस्य यथाश्रुतार्थः खलु प्रेमप्रातिकूल एव स्पष्ट एतावता व्याख्यानेनापि न प्रेमा स्थिरीभवति नंदकृष्णयोर्मिथस्त्यागात्, तत्रापि कृष्णः खल्वीश्वरो दुर्गमलीलो नंदं पितरमपि त्यक्त्वा तिष्ठतु, नंदस्तु कृष्णं त्यक्त्वा कथं व्रजं गन्तुमशकत्, प्राणकोट्यधिकप्रेष्ठं तमप्युपेक्ष्य व्रजे गोधनाद्यपेक्षैव किं तस्य दुस्त्यजाऽभूत्, मथुराप्रांत एव तावत्कालं किन्नावसत् । तद्व्याख्यानञ्चैवं श्रीनंदप्रबोधनमात्रोपक्षीणं, न तु रामकृष्णयोस्तादृश्येव निष्ठा मनसि वास्तवी यतो रामोऽपि व्रजमायास्यन्दशमे वर्णितो न तु कृष्णः, निखिलान्स्ववध्याञ्शत्रून्दंतवक्रपर्यन्तान् हत्वा निश्चिंतीभूय, यद्व्रजागमनं पाद्मोत्तरखंडदृष्टम् 'यह्यंबुजाक्षापससार भो भवान्कुरून्मधून्वा' इति प्रथमस्कंदवाक्यज्ञापितं च वर्तते तदपि न प्रेमलक्षणं संगमयति । तथाहि—"तास्तथा तप्यतीर्वीक्ष्य स्वप्रस्थाने यदूत्तमः । सांत्वयामास सप्रेमैरायास्ये इति दात्यैकैः ॥" इति श्रीशुकोक्तौ दौत्यकैर्दूतवाक्यैरिति टीकाकाराणां व्याख्यानम् । तत्र बहुवचनेन बहूनां दूतानां वाक्यैरेकस्यैव वा दूतस्यायास्ये आयास्ये आयास्येऽवश्यमायास्याम्येवेति पुनःपुनरुक्तैरिति बुद्ध्यते । कीदृशैः—सप्रेमैः प्रेमसहितैरिति दुर्लंघ्याज्ञस्य राज्ञोऽज्ञस्य धनुर्मखदर्शनार्थकानिमंत्रणानुरोधेनैवाद्य मथुरां युष्माँस्त्यक्त्वा यामि न तु स्वेच्छया, अतः श्वो धनुर्मखं दृष्ट्वा परश्व आयास्यामि, तत्र यदि कार्यान्तरमापतेत्तदपि श्व एव कृत्वा परश्वस्तु शीघ्रमायास्याम्येवेत्येषोऽर्थ एव कृष्णस्य यदि वाङ्मनसयोः स्यात्तदैव तद्वाक्यानां प्रेमसहितत्वं स्यादन्यथा तु कपटसहितत्वमेव । यथा—"न लब्धो दैवहतयोर्वासो नौ भवदंतिके । यां बालाः पितृगेहस्था विन्दन्ते लालिता मुदम् ॥" इत्यादिवसुदेवदेवकीमोहनार्थकानां तद्वाक्यानामिति, संतु वा तद्वाक्यानि तादृशान्येव श्रीशुकदेवः कथं सप्रेमैरित्यनेन तानि विशिनष्टि स्म, तस्माद्यदि जरासंधादिदुष्टदमनादिनानाकृत्यान्यनपेक्ष्यैव कंसवधपरादिने एव शीघ्रं कृष्णो व्रजमागच्छेत्तदैव तस्य गोपीनां प्रेम्णोऽपेक्षा स्यादन्यथा तूपेक्षैव, सप्रेमैरिति पदार्थश्चालीक एव स्यात्तस्मादत्रोपपत्तिश्चिंतनीया । तत्रेयं चिन्ता—वसुदेवादयोऽपि प्रेमवन्तो भवन्त्येवेत्येषामप्युपेक्षाऽनुचिता, नंदादयस्तु असमोर्द्ध्वप्रेमवन्तस्तेषामुपेक्षा सर्वथैवानुचिता, जरासंधादिदुष्टवधशिष्टपालनमप्यवतारप्रयोजनमवश्यसंपाद्यं, रुक्मिण्यादिपारिजाताद्याहरणधर्मपुत्रादिसाहित्यविचित्रचरित्रात्मिका द्वारकादिलीलाप्यवश्यप्रकाश्या, धनुर्मखं दृष्ट्वैवायास्यामीति गोपीष्वागमनं प्रतिश्रुतं च सत्यं कार्यं, वह्निदाहेन कनकस्वरूपमिव महाप्रवासविप्रलंभप्रकाशितं तासामसमोर्द्ध्वं प्रेमस्वरूपं च मथुराद्वारकाप्रेमपरिकरमुख्यमभिज्ञचूडामणिमुद्धवं दर्शयित्वा तस्यैव प्रेम्णः सर्वोत्कर्षश्च स्थापनीय इत्याद्यावश्यकनिखिलकृत्यसमाधात्रीमतर्क्यैश्वर्यस्वीययोगमायाशक्तिमाश्रित्य बलदेवसहित एव कृष्णः श्रीनंदं पितरमासाद्य तदैव तेषां नंदादीनां स्वस्य च द्वौद्वौ प्रकाशावाविर्भाव्य प्रथमेन प्रकाशेन श्रीनंदं प्राति ' पितर्युवाभ्याम् ' इत्यादिश्लोकत्रयं यदुवाच तस्य ' एवं सांत्वय्य ' इति तदुत्तरस्य श्लोकद्वयस्य च व्याख्याकृतैव तत्रैव प्रकारान्तरेण कृष्णरामावाहतुः—पितरिति । युवाभ्यां स्निग्धाभ्यामावां

कृष्णरामौ द्वावपि पोषितौ पालितौ चेति युवयोरावां पोष्यपुत्रावेव न त्वात्मजौ किमित्यावाभ्यां त्वं पृच्छयसे तत्र तत्त्वं ब्रूहि, अत्रत्यास्तु नंदस्य पोष्यपुत्रावेवेत्युग्रसेनादयो ब्रुवन्ति, अत एव देवकीवसुदेवावावामात्मजौ मत्वा लालनादिकं बहुतरं कृत्वा मथुरायामत्रैव निरुद्धय रक्षितुमीहेते त्वत्समीपमायातुमपि न ददाते, त्वं तत्प्रियसखोऽपि लौकिकरीत्या श्वोभोजनार्थमपि न निमंत्रितः, अद्यापि त्वां मेलितुमपि केऽपि यादवा नायान्ति आवान्त्वतितरामुद्विग्नौ तैरलक्षितं बलात्पलाय्यैव त्वत्समीपमायाताविति भावः।ननु भोः कृष्ण त्वं पूर्वजन्मनि वसुदेवस्य पुत्र आसीरेव "प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः" इति त्वन्नामकरणसमये गर्गेणोक्तं तेनैव वसुदेवं प्रत्यपि तथैवोक्तमित्यनुमिमेऽतो वसुदेवस्त्वां गुणगणार्णवमेतज्जन्मन्यपि पुत्रत्वेनाभिमत्य जिघृक्षति,बलदेवं स्वपुत्रं तु स्वगृहं नेष्यत्येवेत्यहं जाने एव,तत्त्वामप्यहं पृच्छामि—एतेषां वाचैव त्वं किमावां पोषकौ पितरावेव संप्रति मन्यसे, आवयोः किं त्वं पोष्य एव पुत्रोऽभूस्तत्र कृष्णः सास्रमाह—पित्रोः खल्वात्मजेष्वेव पुत्रेषु आत्मनो देहाज्जीवात्मनश्चापि सकाशादधिकप्रीतिर्भवेत्, यद्यहं युवयोः पोष्य एव पुत्रो नात्मजस्तदा कथमहं युवयोरात्मप्राणकोटेरपि प्रियोऽभूवमतस्त्वद्वैरिणां वसुदेवादीनां मुखमप्यतः परं न द्रक्ष्यामीति भावः । ननु वत्स भो बलदेव तव कोऽभिप्रायस्तं ब्रूहीत्यत आह—'सपिता' इत्यादि । तस्मादहं वसुदेवगृहे त्वां कृष्णञ्च हित्वा नैव स्थास्यामि यदि स्वयं ब्रह्माप्यागत्य वेददिति पूर्वव्याख्यात एव भावः । ततश्च यदि बलदेवमपि नीत्वा व्रजं यामि तर्ह्येते महादुःखिनो भविष्यन्ति, एतैः स्वार्थपरैर्मयि वैरभावः कृत एव, अहं तु वैरं कथं करवाणीति क्षणं चिंतयन्तं व्रजराजं तौ सत्वरमाहतुः—यातेति । हे तात यूयं यात वयञ्च व्रजं यामो न चात्र क्षणमपि विलम्ब्यतामिति भावः । " जातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम् " इति नीतिशास्त्रं जानास्येव तथापि स्वसाधुत्वेन यद्येषां दुःखगंधमपि सोढुं न शक्नोषि तर्हि शृणु यद्ब्रूमहे इत्याहतुः—ज्ञातीनिति । वो युष्माकं यादवत्वेन ज्ञातीन्वसुदेवादीन् द्रष्टुमेष्यामः, सुहृदां तत्रत्यानां सौहार्दवतां जनानां स्वदर्शनदानादिना सुखं विधाय— । इति ताभ्यामुक्तस्तौ रामकृष्णौ वामदक्षिणाभ्यां भुजाभ्यां परिष्वज्यैव कृपणः स्वधनमिव न तु स्वांगविच्युतीकृत्येत्यर्थः । प्रणयानंदविवशः अश्रुभिरानंदधाराभिर्नेत्रे पूरयन्नेव कनकशकटमारुह्य व्रजं ययौ । अतो योगमायाप्रभावात्परस्परालक्षित एको नंदः कृष्णवियुक्त एव व्रजं ययावन्यस्तु कृष्णसंयुक्त इति । एवं च व्रजस्थानामपि सर्वेषां गोपगोपीपश्वादीनां प्रकाशद्वयीकारणादेके कृष्णवियुक्तेन नंदेन सह दुःखसमुद्रे निमग्ना अन्ये कृष्णसंयुक्तेन नंदेन सहानंदसमुद्रे निमग्ना व्रज एव तत्र परस्परमलक्षिता असंपृक्ता एव वर्तंते स्म । यथा द्वारकायां नारददृष्टप्रकाशेषु एकत्र कृष्णं लालयन्ती भोजयन्ती देवकी परमानंदनिमग्ना, तैदवान्यत्र कृष्णवियुक्ता हंतहंत मृगयां कृत्वाऽधुनापि नायातो मत्पुत्रः क्षुधातृष्णाव्याकुल इति वदन्ती परमदुःखनिमग्नैवेति। यदुक्तं भागवतामृते—" आश्चर्यमेकदैकत्र वर्तमानान्यपि ध्रुवम् । परस्परमसंपृक्तस्वरूपाण्येव सर्वथा ॥ " इति । यद्यपि " प्रकाशस्तु न भेदेषु गण्यते स हि नो पृथक् " इत्युक्तेर्वस्तुतो न प्रकाशानां भेदस्तदाप्यभिमानचेष्टितादीनां लीलाशक्तिप्रभावाद्भेदस्तिष्ठत्येवेति योगमायाविभूत्यध्याये बहुलाश्वश्रुतदेवोपाख्याने च व्यक्तीभवित्यतीति प्रकाश द्वयस्य क्रमेण प्रयोजनद्वयम् । यथा स्वीयकनकस्यानर्घ्यस्य स्वरूपज्ञानार्थमेव यथा वह्निना तत्संदह्यते तथैव स्वीयसर्वप्रेमपरिकरमुख्यमप्युद्धवं दिव्योन्मादचित्रजल्पादिभिर्महाचमत्कारमयं व्रजप्रेम्ण उत्कर्षं ज्ञापयितुमेव प्रथमो वियोगमयः प्रकाशः प्रकाशितः । अत एव व्रजं प्रत्युद्धव एव प्रस्थापयिष्यते । स च प्रायस्तमेव वियोगमयं प्रकाशं दृष्ट्वा महाप्रेमचमत्कारमाप्नुवन् । ' एताः परं तनुभृतो भुवि ' इति, ' नायं श्रियोंग—' इति, ' आ सामहोचरणरेणुजुषाम् ' इत्यादिपद्यैस्तत्प्रेम्ण एव सर्वोत्कर्षं प्रतिपादयिष्यति । स एव प्रकाशः कुरुक्षेत्रं गत्वा देवकीवसुदेवादींरुक्मिण्यादींश्च स्वं दर्शयित्वा प्रेमचमत्कारं प्रापयिष्यति । बलभद्रोऽपि व्रजं गतस्तमेव प्रकाशं प्रेमोन्मादमयं दृष्ट्वा चमत्कारमाप्स्यतीति व्रजविषयकं स्वाश्रयकं प्रेमाणं निश्चलमेव ज्ञापयितुं द्वितीयः स योगमयः प्रकाशः । अत एव " विशोका अहनी निन्युर्गायन्त्यः प्रियचेष्टितम् " इत्यत्राहनी इति द्विवचनेन द्वे अहनी व्याप्यैव विच्छेदो न तत इति ज्ञापितः । उद्धवेनापि—" हत्वा कंसं रंगमध्ये प्रतीपं सर्वसात्वताम् । यदाह वः समागत्य कृष्णः सत्यं करोति तत् ॥ " इति तदा वर्तमानकाल एव प्रयुक्तः । तथा तेन व्रजप्रवेशे प्रथमं संयोगमय एव प्रकाशः सामान्यतो द्रक्ष्यते । यद्वक्ष्यते—" वासितार्थे नियुद्धद्भिर्नादितं शुष्मिभिर्वृषैः " इति, "गोदोहशब्दाभिरवैर्वेणूनां निःस्वनेन च " इति, "स्वलंकृताभिर्गोपीभिर्गोभिश्च सुविराजितम् " इति, " तादीपदीप्तैर्मणिभिर्विरेजु रज्ज्वाविकर्षद्भुजकंकणस्रजः । चलन्नितंबस्तनहारकुंडलत्विष्यत्कपोलारुणकुंकुमाननाः ॥ " इति, ' उद्गायतीनामरविन्दलोचनम् ' इत्यादिकृष्णसंयोगानंदलक्षणमित्येवं प्रकाशद्वयप्रयोजनं

अथ शूरसुतो राजन्पुत्रयोः समकारयत् ॥ पुरोधसा ब्राह्मणैश्च यथावद्द्विजसंस्कृतिम् ॥ २६ ॥ तेभ्योऽदाद्दक्षिणा गावो रुक्ममालाः स्वलंकृताः ॥ स्वलंकृतेभ्यः संपूज्य सवत्साः क्षौममालिनीः ॥२७॥ याः कृष्णरामजन्मर्क्षे मनोदत्ता महामतिः ॥ ताश्चाददादनुस्मृत्य कंसेनाधर्मतो हृताः ॥ २८ ॥ ततश्च लब्धसंस्कारौ द्विजत्वं प्राप्य सुव्रतौ ॥ गर्गाद्यदुकुलाचार्याद्गायत्रं व्रतमास्थितौ ॥ २९ ॥ प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ ॥ नान्य सिद्धामलज्ञानं गूहमानौ नरेहितैः ॥ ३० ॥ अथो गुरुकुले वासमिच्छंतावुपजग्मतुः ॥ काश्यं सांदीपनिं नाम ह्यवंतिपुरवासिनम् ॥ ३१ ॥ यथोपसाद्य तौ दांतौ गुरौ वृत्तिमनिंदिताम् ॥ ग्राहयंतावुपेतौ स्म भक्त्या देवमिवादृतौ ॥ ३२ ॥

पुरोधसा गर्गाचार्येण अन्यैश्च ब्राह्मणैः द्विजसंस्कृतिमुपनयनम् ॥ २६ ॥ गावो गाः रुक्मस्य माला विद्यंते यासां ताः क्षौमवस्त्रमालावतीः ॥ २७ ॥ याः पूर्वं मनोदत्ता आसंस्ताः स्वा एवाददात् । ननु ताः कंसेनापहृताः सत्यं राजगोष्ठादाच्छिद्य दत्ता इत्याह । कंसेनाधर्मत इति ॥ २८ ॥ गायत्रं व्रतं ब्रह्मचर्यम् ॥ २९ ॥ प्रकर्षेण भवंत्याभ्यामिति प्रभवौ अत एव सर्वज्ञौ स्वतः सिद्धममलं ज्ञानं नरचेष्टितैः प्रच्छादयंतौ ॥ ३० ॥ ३१ ॥ यथा यथावत् । उपसाद्य प्राप्य गुरौ

प्रमाणं चोक्तम् ॥ २५ ॥ अथ नंदागमनोत्तरम् । ब्राह्मणैरन्यैः सभ्यादिरूपकर्मार्थमागतैः सह । यथावत् । क्षत्रियोचितदंडचर्मादिभिः " पालाशं ब्राह्मणस्योक्तं बैल्वं क्षत्रस्य वै विशः । औदुंबरं मार्गसैंहबास्तचर्माणि वै क्रमात् ॥ " इत्याद्युक्तेः ॥ * ॥ ० ॥ २६ ॥ तेभ्यो ब्राह्मणेभ्यः । क्षौमं वस्त्रं मालाः पुष्पमालाश्च विद्यंते यासां तास्तथा ॥ * ॥ ० ॥ २७ ॥ गोदान आशंकते—नन्विति ॥ * ॥ रामकृष्णयोर्जन्मर्क्षे तदुपलक्षितसमय इत्यर्थः । अतः ' कृष्णावतारोत्सव—' इत्यादिवद्रामजन्म श्रुत्वापि तथैवादादिति बोद्धव्यम् । तथा दाने हेतुः—महामतिरिति । तज्जन्मसमये भाविवृत्तज्ञानादधुना च तदनुस्मरणादिति भावः ॥ २८ ॥ तत उपनयनोत्तरम् । द्विजत्वं क्षत्रियत्वसंपादकधर्मम् । व्रतं तज्जपरूपनियमं वा ॥ * ॥ गर्गादिति तच्छिक्षयेत्यर्थः । गायत्रमिति प्राजापत्यब्राह्मयोरुपलक्षणम् । तत्र गायत्रं गायत्रीमधीयानस्य त्रिरात्रव्यापि, प्राजापत्यं वेदारंभपर्यंतम्, ब्राह्मं तत्समाप्तिपर्यंतम् । अत एव सामान्यतो ब्रह्मचर्यमेव तैर्व्याख्यातम् । सुव्रतौ सन्तौ ॥ २९ ॥ प्रभवौ मूलकारणे । अत एव सर्वज्ञानकारणत्वादेव । नान्येन तपआदिना सिद्धं किं तु स्वाभाविकं यदमलं वेदरहस्यरूपं ज्ञानम् ॥ * ॥ प्रभवाविति युग्मकम् ॥ ३० ॥ अथो अतः । काश्यां पठितवान् काश्यस्तम् । केचिदिह काश्यामिति पठंति तन्नादर्तव्यम् " तदोपनीतो भगवानवंतीनगरं ययौ । चकार विद्याग्रहणं मुनेः सांदीपनेर्गुरोः ॥" इति ब्रह्मवैवर्तोक्तेः । शिष्टास्तु काश्यमित्येकदेशन्यायेन कश्यपगोत्रोद्भूतमित्यर्थमाहुः ॥ * ॥ उपजग्मतुः रथमारुह्येति ज्ञेयं, रथस्य वक्ष्यमाणत्वात् । काश्यं काश्यां जातम् ॥ ३१ ॥ तौ रामकृष्णौ । शिक्षयन्तौ 'यद्यदाचरति श्रेष्ठः ' इत्याद्युक्तसंपादनार्थमित्यर्थः । देवमिवेत्यनेन "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ" इत्यादिकां श्रुतिं सूचयति । अनिन्दितामिति विद्याभ्यासं कुर्वता छात्रेणाध्यापकेतरसेवा न कार्या तन्निंदाश्रुतेः,—"विप्रः शास्त्रमधीयानो ह्यन्नपानादिलिप्सया । विना विद्याप्रदातारं सेवमानः पतत्यधः ॥ भिक्षादिना प्रभुञ्जीत न तु वृत्तिं समाश्रयेत् । निंदाभिरेव संशय्य तादृशत्वे तु नारकी ॥" इति संहितोक्तेः । "वृत्तिर्बुद्ध्यादिविकृतौ सेवाजीवनयोरपि" इति धरणिः । यद्वा—अनिन्दिता सेवा गुरोः कार्या न तु तस्मिन्प्रवसिते तद्भार्यारजःसमाप्तौ तत्संगादिरूपाऽपीत्यर्थः । अत्र महाभारतीया गाथैतद्विषयिण्यनुसंधेया—"विद्यां श्रुत्वा ये गुरुं नाद्रियन्ते प्रत्यासन्ना मनसा कर्मणा च । तेषां पापं भ्रूणहत्याविशिष्टं तेभ्यो नान्यः पापकृच्चास्ति लोके ॥ " इति । प्रत्यासन्नच्छात्रादिनाऽवश्यमाचार्यसेवा शक्त्यनुसारेण कार्येति बोधितम् ।

तयोर्द्विजवरस्तुष्टः शुद्धभावानुवृत्तिभिः ॥ प्रोवाच वेदानखिलान्सांगोपनिषदो गुरुः ॥ ३३ ॥ सरहस्यं धनुर्वेदं धर्मान्न्यायपथांस्तथा ॥ तथा चान्वीक्षिकीं विद्यां राजनीतिं च षड्विधाम् ॥ ३४ ॥ सर्वं नरवरश्रेष्ठौ सर्वविद्याप्रवर्तकौ ॥ सकृन्निगदमात्रेण तौ संजगृहतुर्नृप ॥ ३५ ॥

वृत्तिमन्यान् ग्राहयंतौ शिक्षयंतौ । गुरुमुपेतावुपगतौ । सेवितवंतावित्यर्थः ॥ ३२ ॥ शुद्धो भावो यासु ताभिरनूवृत्तिभिः । सांगोपनिषदः अंगानि षडंगानि शिक्षादीनि तैरु पनिषद्भिश्चैतरेयादिभिः सहितान् ॥ ३३ ॥ सरहस्यं मंत्रदेवताज्ञानसहितम् । धर्मान्मन्वादिधर्मशास्त्राणि । न्यायपथान्मीमांसादीन् । आन्वीक्षिकीं तर्कविद्याम् । षड्विधाम् –" संधिश्च विग्रहो यानमासनं द्वैधमाश्रयः " इत्येवं षड्विधां राजनीतिम् ॥ ३४ ॥ सकृन्निगदमात्रेणैकवारं गुरोरुच्चारणमात्रेण ॥ ३५ ॥

"योऽन्नाद्याप्तये त्यक्त्वा गुरुसेवां करोति च । अन्यस्य स च संज्ञेयो नामधारकछात्रकः । स तु विप्रो न पूजार्हः कुक्षिंभरगणाग्रणीः ॥" इति बहुधा संहिताभागे वर्णितमस्ति वरतंतुनेति ॥ * ॥ यथावत् समित्पाणित्वादिश्रुत्युक्तप्रकारेण । दान्तौ संयतौ सन्तौ । तथा च श्रीहरिवंशे–"निवेद्य गोत्रं स्वाध्यायमाचारेणाभ्यलंकृते । शुश्रूषू निरहंकारावुभौ रामजनार्दनौ ॥" इति । वृत्तिमनुवृत्तिम् । अनिंदितामीश्वरत्वेऽपि कर्तुं योग्यत्वेन श्लाघ्याम् । स्मेति तद्वृत्तं प्रसिद्धमेवेत्यर्थः ॥ ३२ ॥ तयोः रामकृष्णयोः । निखिलान् पदक्रमांगजटावल्ल्यादिसहितान् । आदिना कल्पव्याकरणनिरुक्तज्योतिर्गणच्छंदोविचितीनां ग्रहः । उपनिषदः केनमांडूक्याद्याः । शिक्षादीनां लक्षणान्यक्रूरस्तुतौ विवेचितानि ॥ * ॥ शुद्धेन भावेन भक्त्या या अनुवृत्तयस्ताभिः । तद्विशेषश्चाग्रे श्रीदामविप्रोपाख्याने श्रीभगवन्मुखादेव व्यक्तीभाव्यत एवात्र स्वयं बादरायणिना न प्रपञ्चित इति ज्ञेयम् । अखिलान् चतुरोऽपीत्यर्थः । एतदुपदेशश्च शब्दमात्रतः, अर्थज्ञानं मीमांसोपदेशेनैव भविष्यतीति तदनंतरं तत्पाठशुद्ध्यर्थमावश्यकत्वादर्थसहितान्येव च तान्यंगान्युक्तानि । "शिक्षा व्याकरणं कल्पो ज्योतिषं छंद एव च । निरुक्तं च निरुक्तानि षडंगानि मनीषिभिः ॥" इति ज्योतिषोंऽगत्वं तदर्थकालादिशुद्ध्यपेक्षणात् । अंगानंतरं रहस्यत्वेनानुपदिष्टचरीरुपनिषदः । एताश्च पूर्ववत्प्रथमतः शब्दत एव ॥ ३३ ॥ तर्कविद्यां वेदेतिहासाद्यर्थनिर्णायकामित्यर्थः । संधिः साम, बलवताऽरिणा मेल इति यावत् । विग्रहो दंडः, दुर्बलेऽरौ निग्रह इत्यर्थः । यानं विजिगीषोररिं प्रति यात्रा । आसनं कदाचिच्छक्तिप्रतिबंधे च तत्रैव शत्रोर्दुर्गमावेष्ट्य तत्र धान्यादिप्रवेशं प्रतिबध्नताऽवस्थानम् । बलवता विग्रहे बलवत्तरेण तच्छत्रुणा संधिं कृत्वोभयत्र दासोऽस्मीति वाचैवात्मसमर्पणं कर्तव्यं न कर्मणेति स द्वैधीभावस्तदुक्तं कामन्दके–"बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन् । द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः ॥" इति । अरिणा पीड्यमानस्य बलवद्भूपदुर्गाद्याश्रयणमाश्रयः इति । एषामवान्तरभेदा विस्तरभिया न लिखिताः ॥ * ॥ सरहस्यमिति सार्द्धद्वयकम् । ततश्च क्षत्रियजातावावश्यकत्वाद्धनुर्वेदः, एतदादीन्यर्थतोऽपि ज्ञेयानि । ततश्च तत्तत्सर्वविद्योपकारकत्वेनापेक्ष्याणि धर्मशास्त्राणि । ततश्च वैशिष्ट्याधानार्थं न्यायपथान्, तत्तद्वेदार्थनिर्णायकाञ्जैमिनिकपिलपतञ्जलिबादरायणरचितपूर्वमीमांसादीञ्शब्दानुगतयुक्तिग्रंथान् । ततश्च बाह्यवादनिरासार्थं स्वतंत्रयुक्तिमयीमान्विक्षिकीमपि । एवं जातायां राजत्वयोग्यतायां राजनीतिमित्येवं क्रम एव सिद्ध्यति ॥ ३४ ॥ सर्वं विद्यासमूहम् । सर्वा विद्या यत्र सा सर्वविद्या वेदचतुष्टयी तस्याः सर्वासां विद्यानां वा प्रवर्तकौ "अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वांगिरस इतिहासः पुराणं विद्या उपनिषदः " इत्यादिबृहदारण्यकश्रुतेर्विद्यापदवाच्या वैशेषिकपातंजलादिरूपा

अहोरात्रैश्चतुःषष्ट्या संयत्तौ तावतीः कलाः ॥ गुरुदक्षिणयाऽऽचार्यं छंदयामासतुर्नृप ॥ ३६ ॥

चतुःषष्ट्या अहोरात्रैस्तावतीश्चतुःषष्टिकलाः संजगृहतुः । ताश्च शैवतंत्रप्रोक्ता लिख्यंते यथा । गीतम् १ । वाद्यम् २ । नृत्यम् ३ । नाट्यम् ४ । आलेख्यम् ५ । विशेषकच्छेद्यम् ६ । तंडुलकुसुमबलिविकाराः ७ । पुष्पास्तरणम् ८ । दशनवसनांगरागाः ९ । मणिभूमिकाकर्म १० । शयनरचनम् ११ । उदकवाद्यमुदकघातः ( उदकयानम् ) १२ । चित्रयोगाः १३ । माल्यग्रथनविकल्पाः १४ । शेखरापीडयोजनम् १५ । नेपथ्ययोगाः १६ । कर्णपत्रभंगाः १७ । सुगंधयुक्तिः १८ । भूषणयोजनम् १९ । ऐंद्रजालम् २० । कौचुमारयोगाः २१ । हस्तलाघवम् २२ । चित्रशाकापूपभक्ष्यविकारक्रियाः २३ । पानकरसरागासवयोजनम् २४ । सूचीवायकर्म २५ । सूत्रक्रीडा २६ । वीणाडमरुकवाद्यानि २७ । प्रहेलिका २८ । प्रतिमाला २९ । दुर्वचकयोगाः ३० । पुस्तकवाचनम् ३१ । नाटकाख्यायिकादर्शनम् ३२ । काव्यसमस्यापूरणम् ३३ । पट्टिकावेत्रबाण ( न ) विकल्पाः ३४ । तर्ककर्माणि ३५ । तक्षणम् ३६ । वास्तुविद्या ३७ । ( सुवर्ण ) रूप्यरत्नपरीक्षा ३८ । धातुवादः ३९ । मणिरागज्ञानम् ४० । आकरज्ञानम् ४१ । वृक्षायुर्वेदयोगाः ४२ । मेषकुक्कुटलावकयुद्धविधिः ४३ । शुकसारिकाप्रलापनम् ४४ । उत्सादनम् ४५ । केशमार्जनकौशलम् ४६ । अक्षरमुष्टिकाकथनम् ४७ । म्लेच्छितकुतर्कविकल्पाः ४८ । देशभाषाज्ञानम् ४९ । पुष्पशकटिकानिमित्त ( र्मिति ) ज्ञानम् ५० । यंत्रमातृकाधारणम् ५१ । मातृकासंवाच्यम् ५२ । मानसीकाव्यक्रिया ५३ । अभिधानकोशः ५४ । छंदोज्ञानम् ५५ । क्रियाविकल्पाः ५६ । छलितकयोगाः ५७ । वस्त्रगोपनानि ५८ । द्यूतविशेषः ५९ । आकर्षक्रीडा ६० । बालक्रीडनकानि ६१ । वैनायिकीनाम् ६२ । वैजयिकीनाम् ६३ । वैतालिकीनां च विद्यानां ज्ञानम् ६४ । इति चतुःषष्टिकलाः । छंदयामासतुरुपलोभितवंतौ ॥ ३६ ॥

ज्ञेया । इह " शास्त्रयोनित्वात् " इति न्यायाच्च ॥ * ॥ ० ॥ ३९ ॥ चतुःषष्ट्या संख्यया संख्यातैरहोरात्रैर्दिननिशाभिः । तावतीस्तावत्संख्याकाः । ताश्च कलाश्च । कं सुखं लान्ति स्वविदामिति कला इति । ता गणयति–यथेति । गीतम्–गानशिक्षा, गीतनिर्माणं, स्वरजातिरागभेदास्तालमात्रादिरचनाप्रकाराः, साधकबाधकस्वरादिमेलनपरिज्ञानञ्च । " स्वरगं पदगं चैव तथा लयगमेव च । चेतोऽवधानगं चैव गेयं ब्रूयुश्चतुर्विधम् ॥ " । स्वरादिभेदा अनंताः । रागाश्च भैरवश्रीरागादिभेदेन षोढाऽप्यवांतरभेदैरनंता एव । तालश्च कालक्रियामानम्, कालस्य क्रिययाऽऽवापनिष्क्रमादिकया मानं परिच्छेदः । लयश्च गीतवाद्यपादादिन्यासानां क्रियाकालयोः साम्यम् । गीतविशेषमाह–" गा (धा) तुमातुसमायुक्तं गीतमित्युच्यते बुधैः । तत्र नादात्मको गातुर्मातुरक्षरसञ्चयः ॥ " इति । तद्विविधम् । यथा–" गीतं च द्विविधं प्रोक्तं यंत्रगात्रविभागतः । यंत्रं स्याद्वेणुवीणादि गात्रं तु मुखजं मतम् ॥ " । किञ्च–" निबद्धमनिबद्धञ्च गीतं द्विविधमुच्यते । अनिबद्धं भवेद्गीतं वर्णादिनियमं विना ॥ यद्वा गमकधातुभिरनिबद्धं विना कृतम् । निबद्धञ्च भवेद्गीतं तालमानरसान्वितम् । छन्दोगमकधातुभिर्वर्णादिनियमैः कृतम् ॥ ऋग्भिः पाठ्यमभूद्गीतं सामभ्यः समपद्यत । यजुर्भ्योऽभिनया जाता रसाश्चाथर्वणः स्मृताः ॥ अंगैरालम्बयेद्गीतं हस्तेनार्थं प्रदर्शयेत् । दृष्टिभ्यां भावयेद्भावं

पादाभ्यां तालनिर्णयः ॥ गीतं पीनपयोधरा समदना नारी विचित्रा कथा रम्यं हर्म्यतलं सुधांशुकिरणप्रोद्दीपिता यामिनी । चित्तज्ञाः सुहृदः सुताः सुमनसो भक्ताः पुनः सेवकाः शुद्धं गीतफलं कवित्वमतुलं संसारसारा
मताः ॥ संगीतकेन रम्येण सुखं यस्य न चेतसि । मनुष्यवृषभो लोके विधिनैव स वञ्चितः ॥ संसारदुःखदग्धानामुत्तमानामनुग्रहात् । प्रभुणा शंकरेणात्र गीतं वाद्यं प्रकाशितम् ॥ गीतज्ञो यदि गीतेन नाप्नोति
परमं पदम् । रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥ गीतेन हरिणा रङ्गं प्राप्नुवन्त्यपि पक्षिणः । वनादायान्ति फणिनः शिशवो न रुदन्ति च ॥ कृतिचमत्कृतये किमतः परं फणिवरोऽश्वतरो बत
पञ्चमः । अपि मृतां यदवाप मदालसां मधुरगीतवशीकृतशंकरः ॥ परमानन्दविवर्धनमभिमतफलं वशीकरणम् । सकलजनचित्तहरणं विमुक्तिबीजं परं गीतम् ॥ " अत एव–" नाहं वसामि वैकुंठे योगिनां हृदये
न वै । मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ॥ " इति भगवताऽप्युक्तमित्यलम् १ ॥ अथ वाद्यानि–" तालेन राजते गीतं तालो वादित्रसंभवः । गरीयस्तेन वादित्रं तच्चतुर्विधमुच्यते ॥ ततं सुषिरमानद्धं
घनमित्थं चतुर्विधम् । ततं तंत्रीगतं वाद्यं वंशाद्यं सुषिरं तथा ॥ चर्मावनद्धमानद्धं घनं तालादिकं मतम् । " इति । तत्र ततं यथा–" अलावती ब्रह्मवीणा किन्नरी लघुकिन्नरी । विपञ्ची वल्लकी ज्येष्ठा
चित्रा जोषवती जया ॥ हस्तिका कुब्जिका कूर्मा शारंगी परिवादिनी । त्रिशवी शतचन्द्री च नकुलौष्ठी चटंसत्री ॥ औडंबरी पिनाकी च निबंधः शुष्कलस्तथा । गदावारणहस्तश्च रुद्रोऽथ शरमण्डलः ॥ कपि
लासो मधुस्यंदी घोणेत्यादि ततं वदेत् । " । अलावणी यथा–"कनिष्ठिकापरिध्यर्धमध्यच्छिद्रेण संयुतः । दशयष्टिमितो दंडः खादिरो वैणवोऽथ वा । अधः करभवानूर्ध्वे छत्रावल्याभिशोभितः ॥ नवांगु
लादधः छिद्रोपरि चंद्राऽर्धसन्निभाम् । निवेश्य तुंबिकां भद्रालाबुखंडं निवेशयेत् ॥ द्वादशांगुलविस्तारं दृढपक्वं मनोहरम् । तुंबिकावेधमध्येन दंडच्छिद्रे तु निर्मिताम् ॥ अलाबूमध्यगां डौर्वीं कृत्वा स्वल्पां तु काष्ठि
काम् । तथा संवेष्ट्य तन्मध्ये काष्ठिकां भ्रामयेत्ततः ॥ यथा स्यान्निश्चलालाबूबन्धश्च करभोपरि । पञ्चांगुलिषु संत्यज्यालाबूं स्वल्पाञ्च बन्धयेत् ॥ केशान्तर्निर्मिता पट्टमयी सूत्रकृताथ वा । समा सूक्ष्मा दृढा तत्रतत्र देया
विचक्षणैः । एतल्लक्षणसंयोग्यात्रा ( न्या ) लावणी प्रकीर्तिता ॥ बिन्दुना न समुपेतं तुंबं निक्षिप्य वक्षसि । मध्यमानामिकाभ्यां च वाद्या दक्षिणपाणिना ॥ तारे मन्द्रे च घोषे च त्रिस्थाने बिन्दुरिष्यते । तुम्बीमूलं
समुत्पत्य वामांगुष्ठेन धारयेत् । ततस्ताभिस्तु सर्वाभिः स्वरव्यक्तिर्विधीयते ॥ त्रिस्वरो दक्षिणः पाणिर्वामस्तत्र चतुःस्वरः । अलावण्यां स्थिता ज्ञेयाः सप्त षड्जादयः स्वराः ॥ रागव्यक्तिर्यथा रागे भवेत्षड्जादिभेदतः । अंश
न्यासविभेदाच्च तथात्राऽपि विधीयते ॥ इयमलावणी प्रोक्ता मनःश्रवणरञ्जनी । प्रत्यक्षा शारदा देवी वीणारूपेण संस्थिता ॥ " इत्यलावणीलक्षणानि । अन्येषां विस्तरभयान्नोदाहृतानि । तानि च संगीतदर्पणसंगीतदामो
दरादिग्रंथेभ्योऽवसेयानि । सुषिरं यथा–" वंशोऽथ पारो मधुरी तित्तिरीशंखकाहलाः । तोरडीमुरलीबुक्काश्शृंगिकास्वरनाभयः ॥ शृंगं कापालिकं वंशश्चर्मवंशस्तथापरः । एते सुषिरभेदास्तु कथिताः पूर्वसूरिभिः ॥ वर्तुलः
सरलश्चैव पर्वदोषविवर्जितः । वैणवः खादिरो वाऽपि रक्तचंदनजोऽथ वा ॥ श्रीखंडजोऽथ सौवर्णो दंतिदंतमयोऽपि वा । राजतस्ताम्रजो वाऽपि लौहजः स्फाटिकोऽथ वा ॥ कनिष्ठांगुलितुल्येन गर्भरंध्रेण शोधितः । शिल्प
विद्याप्रवीणेन वंशः कार्यो मनोहरः ॥ वंशेनैव मतोऽरीति मतंगमुनिनोदितम् । ततोऽन्येपि तदाकारा वंशा एव प्रकीर्तिताः ॥ तत्र [1]चैवं शिरोदेशादधोऽद्रिमितमंगुलम् । फूत्काररंध्रं कुर्वीत मितमंगुलिपर्वणा ॥ पञ्चांगुलानि
संत्यज्य तावद्रंध्राणि कारयेत् । कुर्यात्तथाऽन्यरंध्राणि सप्तसंख्यानि कौशलात् ॥ बदरीबीजतुल्यानि संत्यज्यार्धार्धमंगुलम् । प्रांतयोर्बंधनं कार्यं स्वराद्यैर्नादहेतवे ॥ सिक्थकेन कला देया तेन सुस्वरता भवेत् । पञ्चांगुलोऽयं वंशः
स्यादेकैकांगुलवृद्धितः ॥ षडंगुलादिदाम्ना स्याद्यावदष्टादशांगुलम् । फूत्कारतारंध्रस्य यावदंगुलमंतरम् । तदेव नाम वंशस्य वांशिकैः परिकीर्त्यते ॥ एकांगुलो द्व्यंगुलश्च त्र्यंगुलश्चतुरंगुलः । अतितारतरत्वेन वांशिकैः समु
पेक्षितः ॥ [2]त्रैयोदशांगुलो वीणा विधौ च समुपेक्षितः । निंदितो वंशतत्त्वज्ञैस्तथा सप्तदशांगुलः ॥ महानंदस्तथा नंदो विजयोऽथ जयस्तथा । चत्वार उत्तमा वंशा मतंगमुनिसंमताः ॥ दशांगुलो महानंदो नन्द एकादशां
गुलः । द्वादशांगुलमानस्तु विजयः परिकीर्तितः ॥ चतुर्दशांगुलमितो जय इत्यभिधीयते । ब्रह्मा रुद्रो रविर्विष्णुः क्रमादत्र व्यवस्थिताः ॥ नैर्वेद्यं प्रौढता चापि सुस्वरत्वञ्च शीघ्रता । माधुर्यमिति पञ्चामी फूत्कृतेषु गुणाः
स्मृताः ॥ शीत्कारबहुलः स्तब्धो विस्वरः स्फुटतो लघुः । अमाधुर्यश्च विज्ञेयाः षड् दोषाः फूत्कृतेः क्रमात् ॥ वृथा प्रयोगबाहुल्यमल्पता गीतवादने । एभिर्दोषैर्युतोऽतीव निंदितो वांशिको मतः ॥ स्थानकादिलयाभिज्ञो गम

१ ' त्यंधा ' इति प्राचीनपु० पाठः । २ ' त्रयोदशांगुलो वीणापरः । ' एवमपि पाठः, स चोह्यः ।

काव्यः स्फुटाक्षरः । शीघ्रहस्तः कलाभिज्ञो वांशिको रक्त उच्यते । प्रमुक्तिर्बद्धमुक्तिश्च युक्तिश्चेत्यंगुलेर्गुणाः । सुस्थानत्वं सुस्वरत्वमंगुलौ सावनाक्रियाम् । समस्तगमकज्ञानं रागरागांगवेदिता ॥ क्रियाभाषाविभाषासु दक्षता गीतवादने । सुस्थाने चापि दुःस्थाने नादनिर्माणकौशलम् ॥ गातॄणां स्थानदातृत्वं तद्दोषाच्छादनं तथा । वांशिकस्य गुणा एते मया संक्षिप्य दर्शिताः ॥ " इति वंशः । काहलास्त्रीति निषंगः तोडही मुरली बुक्का इत्येतेऽत्र स्त्रियां सप्तस्वराणां नाभिरिव स्वरनाभिः स्त्रियां वर्तते,इतरेषां विस्तरभिया स्वरूपं नोक्तम्।तच्च संगीतदर्पणसंगीतदामोदरादिग्रंथेभ्योऽवसेयम्। आनद्धं यथा—"आनद्धे मर्दलः श्रेयानित्युक्तं भरतादिभिः"।अपि च—मुरजपटहढक्का बिंबको दापवाद्यं पणवघनसरुञ्जालावजाहू त्रिवल्यः । करठकमठभेरी स्यात्कुडुक्का हुडुक्का मनसमुरालेझल्ली ढुक्कली दौंडिशाना ॥ डमसटमुकिमड्डुः कुण्डली तण्डनामा रणमभि घटवाद्यं दुंदुभी चारजश्च । क्वचिदपि टुटुकी स्याद्दुर्दुरं चाप्युपांगं प्रकटितमनवद्यं वाद्यमित्थं जगत्याम् । त्रिपुरमथनकर्तुस्ताण्डवे तत्प्रयाणे ततमुखसुषिरञ्चानद्धमित्थं घनञ्च ॥ मर्दलः खादिरः श्रेष्ठो हीनः स्यादन्यदारुजः । रक्तचन्दनजो वाद्यो गभीरध्वनिरुच्चकैः ॥ सार्धहस्तप्रमाणञ्च दैर्घ्यमस्य विधीयते । त्रयोदशांगुलं वाममथ वा द्वादशांगुलम् ॥ दक्षिणञ्च भवेद्धीनमेकेनार्द्धांगुलेन वा । करणानद्धवदनो मध्ये चैव पृथुर्भवेत् ॥ षण्मासीयो भवेद्वस्तस्तच्चर्मकरणं मतम् । मृत्तिकानिर्मितश्चैव मृदंगः परिकीर्त्तितः । पातयेत्खरालिं वाद्यमादनार्थञ्च मर्दले ॥ विभूतिर्गैरिकं भक्तं केन्दुकेन समन्वितम् । यद्वा चिपि ( पी ) टकं देयं जीवनीसत्त्वमिश्रितम् ॥ सर्वमेकत्र पिष्टं तल्लेरः खरलिरुच्यते । वामास्ये पूरिकां कृत्वा लेपं दद्याच्च दक्षिणे ॥ एवं मर्दलकः प्रोक्तः सर्ववाद्योत्तमो मतः । अस्य संयोगमासाद्य सर्वं वाद्यञ्च शोभते ॥ एतदंगे बीजकाष्ठे दलमर्द्धांगुलं विदुः । तदिर्व्रीमिति विज्ञेयाः पाठवर्णा मृदंगजाः ॥" । थोंदंढं धिक्कट स्तद्धीताकंदंदंथोंगंधिधिखझीझिनंगटदंथाः कूटपाठा मता अमी । तधिंथोंडेंतकत्रींदोंदंदंधिगणांततं तधितकतंधंधिदोंताधिपाटखंडे त्वयं क्रमः । तथा च—यतिमाने पाटखंडः—द्रगतथेजां द्रगतथेजां धोधोधिकताधिका थोजांथोजांतकतताधिकाथोताद्रगतताधिधिधिधिकतताकडनाथोधिकथोजांधोताद्रगतताद्रतताधि इति । "यतिरोढाप्यवच्छेदो गजरो रूपकं ध्रुवम् । गलरः सारिगोणी च नादं च कथितं तथा । प्रहरणं वृंदनञ्च प्रबंधा द्वादश स्मृताः ॥" । यथा—दंथात इत्येकताल्यां यतिः । ओडवाद्यं यथा—"दांतथोतधिकतधिकदंथादंथाथोधियोधितततत्तथाविथविदिश्यांदिश्यांटटनाकिटटनाकितदटङ्गनंटतगथत्रटङ्गथत्रटङ्गतागिनागितागिनागिदां दांदंदंदींदींदंतातथा" इति । अवच्छेद्यवाद्यं यथा—"दंथातः दथातः धिक्किधिक्किदिगणंदंताथः" इति । गजरवाद्यं यथा—थोकटेन्ननेजढेंडेंगयोगथोङ्गटेङ्कयोगतकिधिकटेङ्ननधिधिकटतकथोकत्तधिकट तक्ककतथोगतद्धीम्" इत्येकताल्यां गजरः । रूपकवाद्यं यथा—"तकधिकतकधिकककथविताकिथविताक्किधिक्कदंथातः" इति । ध्रुवकवाद्यं यथा—'तक्कतक्काटाधिक्कधिक्काट' इति निसारताले ध्रुवकः । गलरो यथा—"तधिदधिधिकतकताधिगलगंथा थादेंतथाढेनत्र" इत्येकताल्यां गलपः । सारिगोणी यथा—"थोङ्गटेन्तक्कधिक्कतकधिकतकथोहटङ्गनहटङ्गनथोगक्कयोः" इति प्रथमखण्डः । "टेत्रयोःधियोहःटेत्रटेत्रदक्कतगदक्कधिक्कतादिददक्कदंगदंगथोगथोकतकतक धिकतधिकतधोटेत्रधोटेत्रथटेगलखोगगलखोगखोहटगेंठगेंखोहटम् इत्यस्य छंदनम्" इति । नादो यथा—"दांकारात्रितयं पूर्वं दांधिगिति ततस्त्रयम् । दांदांत्रिकत्रयं यत्र इति नादः शचीप्रियः ॥" इति । "द्रुतं मानसमार ब्धशुद्धं कूटविनिर्मितम् । सप्तखण्डमयं वाद्यं कथितं तदिहोच्यते ॥" द्रुतमानत्वात्प्रतिताले यथा—"तत्ततततत्ततताक्किततक्किदिदंदंधिगनथोधिगनथोधिक्कधिक्कधिक्कधिक्कधिक्नगिनगमिथोथोधिधिधिःदांदांधिक्कथोथोथोहथोहनात्रि थोनत्रिथोथोहथोहडेटिडेडिथोहथोहतटितटितटुंकगींगींधगिधगिततत्तधेततधेततततगिडीत्रडीथोगथोगथोंथोगगथोगथोतत्ताचाः" "इति सप्तपदान्याहुः कथितं वाद्यपंडितैः । प्रतितालेन तालेन पादवर्णसमासतः ॥ गंधर्वपतिना पूर्वमु र्वशीलास्यनर्तने । सुधर्मीरञ्जनार्थञ्च कथितं प्रकटीकृतम् ॥" इति प्रहरणं यथा—"थोगक्का तदधिक्काथागकटगगोंदंथोगादिदधिकूधिक्कादिकटेत्र" इत्येकताल्या प्रहरणम् । "वाद्यं विमुच्यते येनच्छदनं तन्निगद्यते " यथा—'तझधिथोदि त्रटेत्रतत्र' इति छदनम् । "कलासो विकलासश्च टाकलं चार्धटाकली । जोलाटाकलिका चैव गोमुद्री मुरजस्तथा ॥" अलाबुवाद्यं म्लेच्छवाद्यम् । मर्दलस्त्रयोदशांगुलवाममुखो, द्वादशांगुलदक्षिणमुखः।मुरजस्त्वष्टादशांगुलवाममुखः, सप्त दशांगुलदाक्षिणमुखः, मर्दलमुरजयोरयं भेदः । घनं यथा—"अनुरक्तं विरक्तञ्च द्विविधं घनवाद्यकम् । गीतानुगञ्चानुरक्तं विरक्तं तालसंश्रयम् ॥ करतालः कांस्यतालो जयघंटोऽथ शुक्तिका । कंबिकापटवाद्यं च पट्टातोद्यञ्च घर्घ रम् ॥ झंझातालश्च मंजीरं कर्तर्थुकुर. इत्यपि । द्वादशैते मुनीन्द्रेण कथिता गवसंज्ञिकाः ॥ त्रयोदशांगुलव्यामौ शुद्धकांस्यविनिर्मितौ । मध्यमुखौ स्तनाकारौ तन्मध्ये रज्जुगुम्फितौ ॥ पद्मिनीपत्रसदृशौ कराभ्यां रज्जु

---

१ ( " तनेति शब्दस्तनः स्यान्मङ्गलानां प्रदर्शकः । तेशब्देनोच्यते गौरी नशब्देनोच्यते हरः ॥ तेन माङ्गलिकश्चायं शब्दस्तेन इति स्मृतः ॥ " इति संगीतदामोदरे )। २ मथ इति वा ।

यंत्रितौ । करतालावुभौ वाद्यौ पोटर्ह्वनटकैरिति ॥ यद्वा त्रयोदशयवव्यानं वक्त्रयवोन्मितम् । यवपञ्चकगम्भीरं मध्ये च यवसप्तकम् ॥ विस्तृतं वर्तुलं निम्नं यवत्रयमितं ततः । पृष्ठतो मध्यदेशे च शिवलिंग समाकृतिम् ॥ अत्यम्लपैष्टिनिर्दिग्धशुद्धकांस्यविमिर्षितम् । संरक्तांगुलिसुस्निग्धसुदीर्घमधुरध्वानिम् ॥ घनानिसाविसंरक्तं दृढं शुष्कं मनोहरम् । काश्मर्यादिसमुद्भूतं तालमाहुर्मनीषिणः ॥ सुनादं दक्षिणं तालं ततो हीनञ्च वामकम् । कुर्वीत तद्वयं कार्यं तर्जन्यंगुष्ठयोगतः ॥ वामहस्तस्य तालस्य मध्यमं सन्निनादितम् । तिर्यग्दक्षिणतालस्य परिव्यंसेन तालयेत् ॥ तालादौ वादयेचैव प्लुतदीर्घलघुद्रुतैः । " इति करतालविशेषः । कर्तरी घनविशेषः । उंकरश्च घनविशेषोऽदन्तरेफान्तपुँल्लिंगः । अन्येषां लक्षणं विस्तरभयान्नोक्तम् । " रुक्मिण्याः सत्यभामायाः कालिन्दीमित्रविन्दयोः । जांबवत्या नाग्नजित्या लक्ष्मणाभद्रयोरपि । कृष्णस्याष्ट महिषीणां पुरोद्वाहमहोत्सवे ॥ ततं शुषिरमानद्धं घनञ्च युगपज्जनाः । अवादयन्नसंख्यातमिति पौराणिकी श्रुतिः ॥ ततं वाद्यं तु देवानां गंधर्वाणां च शौषिरम् । आनद्धं राक्षसानां तु किन्नराणां घनं विदुः । निजा वतारे गोविन्दः सर्वमेवानयत्क्षितौ ॥ यावन्ति वाद्यभांडानि रामरावणयोर्युधि । तावन्त्यो नाभवन्सेनाः कुरुपांडवसंगरे ॥ " किञ्च—" निर्लिपह्वत्कंपनतोमरेण रणे सुरोरर्मथनात्सुरेण । अभूत्तताद्यैरपि सिंहनादैः सा पञ्चशब्दीति कणादवादः ॥" युधि सैन्यानां योऽहंकाररवः स सिंहनादः । ततादिभिरेभिश्चतुर्भिर्वाद्यैश्च पञ्चशब्दीवाद्यमभूत् । सिंहनादेन सह वाद्यं पंचविधमस्तीति संगीतदामोदरः । " शिवागारे झल्लकञ्च सूर्यागारे तु शंखकम् । दुर्गागारे वंश (शी) वाद्यं माधुरीञ्च न वादयेत् ॥ " । झल्लकं कांस्यनिर्मितकरतालमिति योगिनीतंत्रम् । मत्स्यपुराणेऽपि—" गीतवादित्रनिर्घोषं देवस्याग्रे च कारयेत् । विरिञ्चेश्च गृहे ढक्कां घंटां लक्ष्मीगृहे त्यजेत् ॥ घंटा भवेदशक्तस्य सर्ववाद्यमयी यतः । " । किञ्च—" देवस्याग्रे प्रतिदिनं कारयेत्सम्भकारकः । तत्तद्देवस्य चरितं पौराणं व्यासकीर्तितम् ॥ तेनैव सर्ववाद्यानां फलं पूर्णं प्रजायते । न्यूनता चोपचाराणां सापि पूर्णा भवेत्ततः ॥ वेदिता सर्वशास्त्राणां वेदानामंगसंयुजाम् । विशुद्धोभयवंशश्च वक्ता कार्यो द्विजोत्तमः ॥ कुटुम्बी शान्तचित्तश्च छात्राध्यापनतत्परः । अनन्यजीविको विप्रो जयोच्चारे शुभावहः ॥ " इति भविष्योक्तेः । जयशब्दार्थस्तु—" अष्टादश पुराणानि रामस्य चरितं तथा । विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ॥ कार्ष्ण्यं च पञ्चमो वेदो यन्महाभारतं स्मृतम् । सौराश्च धर्मा राजेन्द्र मानवोक्ता महीपते । जयेति नाम एतेषां प्रवदन्ति मनीषिणः ॥ " इति ब्रह्मचारिकाण्डे भविष्योक्तेः । वाद्यम्—" विततञ्च घनं वाद्यं ततं सुषिरमेव च । कांस्यं पुष्करतंत्रीभिर्वेणुना च यथाक्रमम् ॥ " । एत देवामरेणापि—" ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् ॥ चतुर्विधमिदं वाद्यम् " इति । तत्र शिक्षादयः पूर्ववत् २ ॥ नृत्यनाट्यम्—" नृत्यं कृतानुकरणं नाट्यं तु नर्तकाश्रयम् । करणान्यङ्गहाराश्च विभावो भाव एव च । अनुभावो रसाश्चेति संक्षेपान्नृत्यसंग्रहः ॥ " इति । करणानि साधनानि । अंगहारो अंगविक्षेपः । विशेषेण भावयन्त्युत्पादयन्ति रसमिति विभावाः, स्त्रीवसन्तोद्यानादयः रसकारणानि । अनुभूयते रस एभिरित्यनुभावाः, कंपस्वेदादीनि रसकार्याणि । भावाः सात्त्विकाः स्तंभादयो, व्यभिचारिणश्च धृतिस्मृत्यादयः । एतैरुत्कर्षमारोप्यमाणोऽत्र व्यञ्जितः स्थायीभावो रत्यादिः शृंगारादिरसरूपो भवतीति । तंत्रान्तरे तु नृत्यभेदज्ञानार्थमेव पृथङ्नाट्यकलोक्ता ३ ॥ आलेख्यम्—चित्रकर्म । "रूपभेदाः प्रमाणानि भावलावण्ययोजनम् । सादृश्यं वर्णिकाभंगमिति चित्रं षडंगकम् ॥ " एषां स्वरूपं स्थापत्यशास्त्रादवसेयम् ४ ॥ विशेषकच्छेद्यम्—विशेषकं तिलकं यल्ललाटे दीयते तस्य भूर्जादिपत्रमयस्य छेदनं, विशेषकग्रहणमादरार्थं विलासिनीनामतिप्रियत्वात् ५ ॥ तंडुलकुसुमावलिविकाराः—तण्डुलैर्नानावर्णैः कुसुमैर्वा शिवादिपूजार्थं नानाप्रकाररचना । अत्र ग्रथनं माल्यग्रथन एवान्तर्भूतं भक्तिविशेषेणावस्थापनं कलान्तरम् ६ ॥ पुष्पास्तरणम्—पुष्पादिभिः शय्यादिरचनम् । पुष्पशयनमित्यपरा संज्ञा ७ ॥ दशनवसनांगरागाः—रागशब्दः प्रत्येकं संबध्यते । दशनरागो मस्यादिना । वसनरागः कौसुंभादिना । अंगरागोंगमार्ष्टिः ८ ॥ मणिभूमिकाकर्म—मणिभूमिकावत्कुट्टिमभूमिस्तस्या मरकतादिभेदेन करणम् ९ ॥ शयनरचनम्—शयनीयस्य कालापेक्षया रक्तविरक्तमध्यस्थाभिप्रायादाहारपरिणत्यादिदशाकृद्रचनम् १० ॥ उदकवाद्यम्—उदकपूरितपात्रे मुरजादिवन्मधुरनानातालसमुत्थापनम् ११ ॥ उदकघातः—हस्तयंत्रयुक्तिभिरुदकस्य ताडनं तदुभयं जलक्रीडांगम् । जलस्तंभविद्येति केचित् १२ ॥ चित्रयोगाः—दौर्भाग्यकेशपलितीकरणादयोऽद्भुतदर्शनोपायाः १३ ॥ माल्यग्रथनविकल्पाः—माल्यानां देव

१ आनद्धम् ।

पूजार्थं नेपथ्यानां ग्रथनविकल्पाः १४॥ शेखरापीडयोजनम्—ग्रथनविकल्प एवायं किन्तु योजनं कलांतरम्।तत्र शेखरस्य शिखास्थानेऽवलम्बनन्यासेन परिधापनादापीडस्य च मण्डलाकारग्रथितस्य काष्ठिकायोगेन परिधापनान्नानावर्णैः पुष्पैर्विरचनं योजनम् । तदुभयं नेपथ्यांगम् १५॥ नेपथ्ययोगाः—देशकालापेक्षया वस्त्रमाल्याभरणादिभिः शोभार्थं शरीरस्य मंडनाकाराः १६॥ कर्णपत्रभंगाः-दंतशंखादिभिः कर्णपत्रविशेषा नेपथ्यार्थाः १७॥ सुगंधयुक्तिः—स्वशास्त्रविहितप्रपंचातीतप्रयोजना १८॥भूषणयोजनम्—तद्योगो द्विविधः—संयोज्योऽसंयोज्यश्च।तत्र संयोज्यस्य हारादेर्मणिमुक्ताप्रवालादिभिर्योजनम्।असंयोज्यस्य कटकादे रचनम्।तदुभयं नेपथ्यांगं न तु शरीरे भूषणयोजनं, तस्य 'नेपथ्ययोगाः' इत्यनेन गतार्थत्वात्१९॥ ऐंद्रजालम्—इन्द्रजालादिशास्त्रप्रभवयोगाः सैन्यादिदर्शनाद्विस्मयार्थाः२०॥ कौचुमारयोगाः—कौचुमाराश्च योगाः कुचुमारर्षिणा प्रोक्ताः सुभगंकरणादयः, सुरूपत्वाद्यापादका इत्यर्थः। कौचमार इति पाठे कुचानां स्तनानामिमे कौचाः काठिन्यादयः, मारस्य कामस्येमे मारा रागकरणादयः, कौचाश्च ते माराश्चेति कौचमाराः । यद्वा—कुचुशब्दः पक्षिशब्दानुकरणे, तेन पक्षिणो लक्ष्यन्ते, कुचून् पक्षिणो मारयन्तीति कुचुमारास्त एव कौचुमारा जालनिर्माणादयः २१ ॥ हस्तलाघवम्—चमत्कारार्थं लघुहस्ततया तत्तद्वस्तुपरिवर्तनम्, शस्त्रास्त्राद्युत्सर्गशैघ्र्यं वा २२ ॥ चित्रशाकापू (कसू) पभक्ष्यविकाराक्रियाः—पानकरसरागासवयोजनं दशविधशाकमुद्गादिसूपभक्ष्यविकाराणां क्रिया पाकविधिना निष्पादनम् । द्रावितमद्रावितं रसं पानकम्। रागो लेह्यम्। आसवः संधानमेका कला द्विविधोक्ता,पानकेषु रसादियोजनमिति केचित् ।"मूलपत्रकरीराग्रफलकाण्डादिरूढकम् । त्वक्पुष्पं कवकं चैव शाकं दशविधं स्मृतम् ॥" अविरूढं नालबीजांकुरास्थिमज्जादि । 'सूपं व्यञ्जनसूदयोः' इति मेदिनी २३ ॥ सूचीवायकर्म—सूच्या पुष्पमूर्त्यादिरूपेण सीवनम् २४ ॥ सूत्रक्रीडा—सूत्राणामन्यथा दर्शनं, सूत्रचारेण पुत्रिकादिचालनं वा २५ ॥ वीणाडमरुकवाद्यानि—एतच्च विशेषवित्रक्षयेहोक्तमपि केचिन्न लिखन्ति, वाद्यशब्देनोक्तार्थत्वात् २६ ॥ प्रहेलिका—अपह्नुतवागर्थज्ञानम् । "व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात् । यत्र बाह्यार्थसंबद्धं कथ्यते सा प्रहेलिका ॥" इति हारिः । तथाहि—"वने जाता वनं त्यक्त्वा वने वसति नित्यशः । पण्यस्त्री न तु सा वेश्या यो जानाति स पण्डितः ॥ (१) । अर्धे वसति वैकुण्ठे तदर्धे गणिकागृहे । सर्वे तु वणिजो हट्टे वद वैद्य किमौषधम् ॥ (२) । पर्वताग्रे रथो याति भूमौ तिष्ठति सारथिः । चलति (ते) वायुवेगेन तस्याहं कुलबालिका ॥ (३) । श्यामास्या न च मार्जारी द्विजिह्वा नैव सर्पिणी । पञ्चभर्त्री न पाञ्चाली यो वेद स च पंडितः ॥ (४) । अपदो दूरगामी च साक्षरो न तु पण्डितः । अमुखः स्फुटवक्ता च यो जानाति स पण्डितः ॥ (५) । क्रमादेता नौ-हारताल-कुलालजा-लेखनी-पत्राणां बोधकाः । एवमन्या बह्वयः सन्ति २७ ॥ प्रतिमाला—"प्रतिश्लोकं क्रमाद्यत्र संधायाक्षरमंतिमम् । पठेत्तं श्लोकमन्योऽन्यं प्रतिमालेति सोच्यते ॥" । तथाहि—"कृष्णेति मंगलं नाम यस्य वाचि प्रवर्तते । भस्मीभवन्ति तस्याशु महापातककोटयः ॥" । इह 'यः' अन्ते पठित एतच्छ्रुत्वाऽपरो यकारादिमं श्लोकं पठेत् । स च—"य इच्छेन्निजकल्याणं स सदा संगमाचरेत् । हरिभक्तिपराणां हि ते हि कल्याणभाजनम् ॥" इत्येतच्छ्रुत्वा परस्तु—"नंदनंदन मे देहि दधिपात्रं नमोऽस्तु ते । पात्रं विना गताया मे श्वश्रूस्ताडयिता भृशम् ॥" इतोऽन्यस्तु—"शंखचक्रगदापद्मास्ते करेषु जनार्दन । द्योतन्तेऽर्कं त्वतिक्रम्य रणे मुरनिषूदन ॥" इति श्रुत्वाऽपरो नकारादिमं पठेदित्थं प्रतिमाला भवति । सर्ववस्तुप्रकृतिनिर्माणं वा प्रतिमाला २८ ॥ दुर्वचकयोगाः—शब्दतोऽर्थतश्च यद्दुःखेनोच्यते तद्वक्तुमुपायाः । यथा—"वाश्चारेड्ध्वजधग्धृतोड्वधिपतिः कुध्रेड्जजानिर्गणेड्गोराडारुडुरस्सरेडुरुतरग्रैवेयकभ्राडरम् । उडुवीड्धृङ्नरकास्थिभृत्त्रिदृग्भृदार्द्राजिनाच्छच्छविः स स्तादंबुमदंबुदालिगलरुग्देवो मुदे वो मृडः ॥" इत्येवंरूपं वृत्तं पाठार्थतो दुरुच्चार्यम् । (पदच्छेदः—वाश्चारेड्ध्वजधक् । धृतोड्वधिपतिः । कुध्रेड्जजानिः । गणेट् । गोराडारुडुरस्सरेडुरुतरग्रैवेयकभ्राट् । अरम् । उडुवीड्धृक् । नरकास्थिभृत् । त्रिदृग्भृत् । आर्द्राजिनाच्छच्छविः । सः । स्तात् । अम्बुमदम्बुदालिगलरुक् । देवः । मुदे । वः । मृडः ) । वार्षु चरन्तीति वाश्चारा मत्स्याः, तेषाम् ईट्—ईष्टे इतीट् स्वामी महामत्स्यो ध्वजे यस्य स कामः, तं दहतीति तथा । धृत उड्नामृक्षाणामधिपतिश्चन्द्रो येन स तथा । कुं भूमिं धरन्तीति कुध्राः पर्वतास्तेषामीड् हिमालयस्तज्जा पार्वती जाया यस्य स तथा । गणानां प्रमथानामीड् स्वामी । गवां राजा नंदी गोराट्, तमारोहतीति गोराडारुट् । उरसा सरन्ति गच्छन्तीत्युरःसराः सर्पास्तेषामीडेव उरुतरं ग्रैवेयकं कंठाभरणं तेन भ्राजते द्योतते इति तथा । "उ संबुद्धौ रुषोक्तौ च शिववाचि त्वनव्ययम् । उ प्रश्ने च" इति हैमः । उना शंभुना डीयते उपरि ध्रियत इत्युडुर्गंगाप्रवाहः । विशेषेणेड्यत इति

वीट्,उडुश्चासावीट् चेत्युड्वीट्, तं धृजतीति तथा। नराणां कं मस्तकं च तदस्थि चेति तथा, तद्बिभर्तीति तथा । तिस्रः दशास्त्रिदशास्ता बिभर्तीति तथा । आर्द्राजिनेनाच्छा छविर्यस्य स तथा । अंबुमंतश्च तेंबुदास्तेषामालिस्तद्वद्दलरुक्कण्ठकान्तिर्यस्य स तथा । स देवो मृडः वो मुदे अरं शीघ्रं स्तादित्यर्थः २९ ॥ पुस्तकवाचनम्—पुस्तकस्थानां काव्यानां श्रृंगारादिरसानुकूलगीतस्वरेण वाचनम् ३० ॥ नाटिकाख्यायिकादर्शनम्—नाटकस्य दशरूपकस्याख्यायिकायाश्च परिज्ञानं निर्माणञ्च । तच्च नाटकम्—"पूर्वरंगं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥ प्रथमं पूर्वरंगः स्यात्ततः प्रस्थापनेति च। आरंभे सर्वनाट्यानामेतत्सामान्यमिष्यते ॥ " इत्यादिनारभ्यते । पूर्वरंगो नांदी । सूत्रधारो नाट्याचार्यः । आख्यायिकाऽज्ञातसत्यार्थभूता कथा । यथा—" उत्पातकं तादिह देव विचारणीयं नारायणः पतति चेदथ वा सुभद्रा । कादंबरीमदविघूर्णितलोचनस्य युक्तं हि लांगलपतेः पतनं पृथिव्याम् ॥१ " । अयं श्लोकः साख्यायिकः । सा च—कदाचित्कश्चिद्ब्राह्मणोऽधीतशास्त्रो वृत्त्यर्थं देशांतरे भ्रमन् कस्यचिन्नृपस्य नगरसमीपस्थसरसि स्नात्वा हरिमर्चयँस्त्रागतेनैकाकिनैव तन्नगरनृपेण नमस्कारपूर्वकं पृष्टः—किमर्थं कुतश्चागत इति, तेनोक्तं—वृत्त्यर्थमत्र नृपपार्श्वे आगतोऽस्मि, तेनोक्तं—यदि न किञ्चिद्दास्यति तदा किं करिष्यसि, विप्रेणोक्तं—यदि मे दैवं प्रबलं तदा पादत्राणप्रहारेण ग्रहीष्याम इत्युक्तो नृपः स्वद्वारपालादींस्तं दर्शयित्वोवाच—अयं न मत्पार्श्वमानेयो नास्य वार्तापि कार्येति । ब्राह्मणश्च मध्याह्नोत्तरं भ्रमन्राजमार्गे केनचिन्नृपाधिकारिणा दृष्टः स्वगृहमानीय सत्कृत्येह तिष्ठ तव वृत्त्यर्थं यत्नं करिष्यामीत्युक्तस्तत्स्थान उवास । तत्र वसतस्तस्याल्पेनैव कालेन तद्गृहस्थजगन्नाथमन्दिरमूर्तित्रयमध्यतो बलभद्रमूर्तिरकस्मात्पपात । ततो नृपो ब्राह्मणानाहूयोत्पातोऽयं जातः किमर्थं का चास्य शांतिरित्युवाच । तच्छुत्वा ते स्वस्वमत्यनुरोधेनोत्पातं मत्वा शांत्याद्यूचुः । यद्गृहे राजदृष्टचरविप्र आसीत्तेनोक्तं—मद्गृहेऽप्येकः पण्डितोऽस्ति तमहं पृष्ट्वा वदिष्यामि, राज्ञोक्तमवश्यं पृष्ट्वागच्छ । स तदैव गत्वा तं तद्वृत्तं पप्रच्छ, तेनोक्तं—नृपपार्श्वे एव वदिष्यामि नान्यत्र । स चागत्य नृपाय तथैवाकथयत् । नृपश्च तमानाय्य नत्वा च दृष्टचरं तमेव मत्वा पप्रच्छ, तेन हि पूर्वमुक्तश्लोकः पठितस्तदाकर्ण्य नृपो नानावस्त्रालंकाराद्यानाय्य तदुपरि पादत्राणं संस्थाप्य विप्राय ददौ । कथं राजन्सर्वोपकरणोपरि पादत्राणं स्थापितमित्युक्तो विप्रेण नृपस्तमाहानेन मां ताडयित्वा गृहाणैतदिति, भवदुक्तिरियं सत्या जातेति कथमेतां विना श्लोकतात्पर्यं न लभ्यते । इत्थं साख्यायिका अन्येऽपि सन्ति ३१ ॥ काव्यसमस्यापूरणम्—पूरणसाकांक्षा कविशक्तिपरीक्षार्थमपूर्णतयैव पठ्यमाना समस्या । तस्याः पूरणं यथा—' शतचंद्रं नभस्तलम् ' इति । तत्र " दामोदरकराघातविह्वलीकृतचेतसा । दृष्टं चाणूरमल्लेन " इत्यनेन पूर्यते । एवम्—' पिपीलिका चुम्बति चन्द्रबिम्बम् ' इति । तत्र " लवुर्जनः सज्जनसंगमेन करोति दुःसाध्यमपीह साध्यम् । पुष्पाश्रया शंभुशिरोऽधिरूढा " इत्यादिना पूर्यते । एवमन्या अप्यनन्ताः संतीति ३२ ॥ पट्टिकावेत्रवानविकल्पाः—पट्टिकायाः खट्वादेश्च वेत्रैर्वाने वितनने विविधकल्पनाऽनेकपुष्पलतादिरूपा कल्पना । ' पट्टिका छुरिकासंयोः' इति धरणिः । केचित्तु—छुरिका वेत्रबाणानां प्रहरणे विविधकल्पना ऊर्ध्वाधस्तिर्यगादिप्रकारेण प्रहरणमित्याहुः ३३॥ तर्ककर्माणि—तर्काणां शास्त्रीयानां लौकिकानां वा नानाविधोहापोहेन क्रियाः । तथाहि—'भद्रस्य कटयां शरटः प्रविष्टः । तत्र छिद्राभावे प्रवेशो न संभवतीत्याद्यूहनम् । यदि माता स्यात्तर्हि पिताऽपि स्यादित्येवंरूपा अनन्ताः सन्तीति । तार्किकास्तु—व्याप्यारोपेण व्यापकारोपस्तर्क इत्यूचुः । तदुदाहरणञ्च—'यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यात् ' इति । "व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम् " । यथा—वह्न्यभावो व्याप्यस्तदारोपप्रयुक्तो व्यापकधूमाभाव इति । केचित्तु—'तर्कोऽनिष्टप्रसञ्जनम् ' इत्याहुः । तच्च शंखोऽस्थि कथं पवित्रं मृग चर्मापि कथं तत्, तयोरस्थिचर्मविशेषत्वात्पावित्र्ये हेतुर्वाच्य इत्येवमनेकधानिष्टप्रसंगारोपोऽस्ति वैधेयानाम् ३४ ॥ तक्षणम्—शयनाद्यर्थं वार्धकिकर्म ३५ ॥ वास्तुविद्या—गृहनिर्माणादिरूपा ३६ ॥ सुवर्णरत्नरूप्यपरीक्षा—तेषां गुणदोषमूल्यादिभिः परीक्षणम् । स्वर्णमेकादशवर्णतो हीनं न ग्राह्यमधिकवर्णं ग्राह्यं षोडशवर्णं यावत् । एवं रूप्यमपि मृदु कांस्यादिसंगहीनं ग्राह्यम् । तत्र वज्रमौक्तिकमाणिक्यनीलमरकतभेदात्पञ्च रत्नानि, गोमेदपुष्परागवैदूर्यप्रवालभेदाच्चतुर्धोपरत्नानि । वज्रमौक्तिके श्वेते, माणिक्यं लोहितम्, नीलं नीलमेव, मरकतं हरितं श्वेतं पीतञ्च । गोमेदं पुष्परागं पिंगलम्, प्रवालं लोहितम् । वैदूर्यं हरिपांडुरञ्च इति । वज्रे सप्त दोषाः पञ्च गुणाश्च सन्ति । षट्कोणलघुभास्वरतीक्ष्णधारसर्वतोरश्मिस्निग्धञ्चाकालमृत्युसर्पादिशत्रुव्याधिभयहरं वज्रं भवति । मलबिन्दुरूक्षरेखावैषम्यकाचवत्तदनिष्टकरम् । तन्मौल्यं द्वादशधा परीक्षानुसारेण । एवमेव रत्नशास्त्रे सर्वेषां गुणदोषमूल्यान्युक्तानीत्यलमतिप्रसङ्गेन ३७ ॥ धातुवादः—स हि मृत्प्रस्तररसधातूनां गैरिकाभ्रकपारदादिरूपाणां पातनसाधनमेलनादिज्ञानहेतुरर्थार्थः । यद्वा—धातूनां क्रियाणां वादः । धातुरित्युपलक्षणम् । स च गुप्तक्रियादिरूपः । तथाहि—"रामनाम सुधाधाम

पवित्रं रस ना रसम् । कः कर्ता कर्म किश्चात्र क्रियासंबोधने च के ॥'' इति । इह हे न इति संबुद्धिः, रसेति क्रियापदम् 'रस–आस्वादने', रामनामेति कर्म, त्वमिति कर्तेति । एवम्–''सार स्व तेन कौ मुद्याथ
वा भवति देहिनाम् । अत्र क्रियापदं गुप्तं कर्तृसंबोधने तथा ॥'' इति केचिदाहुः । हे स्व देहिनां या मुद् हर्षः कौ भूमौ भवति सा ते न आरेति योजनया सर्वं ज्ञायते ३८ ॥ मणिरागाकरस्थानम्–स्फटिकादि
रञ्जनज्ञानम् । तदुत्पत्तिस्थानमेतादृशभूमावमुकमण्याकर इति ज्ञानम् ३९ ॥ वृक्षायुर्वेदयोगाः–वृक्षाणां रोपणमुष्टिचिकित्साः । वृक्षाश्चाम्रादयस्तेषां रोपणम् ''सम्यक्कृष्टे समे क्षेत्रे माषानुप्त्वा तिलांस्तथा । सुनिष्पन्नान्समु
द्धृत्य तत्र बीजोप्तिरिष्यते ॥'' इति । ''क्षीरनिषिक्तं बीजं बृहतीतिलभस्मसर्पिषा लिप्तम् । गोमयमृदितमथोप्तं सद्यो जायेत धूपितं वसया ॥ ( १ ) ॥ खर्जूरबिल्वलकुचाः सितसर्षपेण पिण्याकतश्च तुषवारिवशेन चाम्राः ।
ऐरावता निचुलपत्रजलोक्षितेन सार्द्रा हिमाभसलिलेन च यान्ति वृद्धिम् ॥ ( २ ) ॥ नराणामिव वृक्षाणां वातपित्तकफाद्गदाः । संभवन्ति न संदेहस्तल्लक्षणमथो ब्रुवे ॥ ( ३ ) ॥ कृशो दीर्घो लघू रूक्षो निद्राहीनोऽ
ल्पचेतनः । न धत्ते फलपुष्पाणि वातप्रकृतिकस्तरुः ॥ ( ४ ) ॥ आतपाऽसहनः पांडुः शाखाहीनो मुहुर्यदि । अकालफलपाकी च शाखी पित्तात्मकः कृशः ॥ ( ५ ) ॥ स्निग्धशाखादलः शाखी सम्यक्पुष्पफलो
ज्ज्वलः । लतापरीतगात्रस्तु कफवान्परिमंडलः ॥ ( ६ ) ॥ सस्निग्धैः पिशितरसैः प्रयाति वातः सस्निग्धैस्सुहिमजलैश्च याति पित्तम् । कट्वम्लैरहिमजलैः कषायरूक्षैः श्लेष्मापि क्रमविहितैः प्रयाति नाशम् ॥ ( ७ ) ॥''
इत्थं बहुधा वृक्षायुर्वेदे वर्णितमित्यलं प्रपंचेन ४० ॥ मेषकुक्कुटलावकयुद्धविधिः–मेषादीनामुपस्थानादिचतुरंगैर्योधनम् । लावकः पक्षिविशेषः । उपस्थानानुस्थानप्रस्थानपुरस्थानानि चतुरंगानि ४१ ॥ शुकसारिका
प्रलापनम्–तयोर्मानुषभाषापाठनम् ४२ ॥ उत्सादनम्–उत्सादने संवाहने केशमर्दने च कौशलम् । पादयोर्मर्दनमुत्सादनं, शेषांगेषु मर्दनं संवाहनं, शिरोऽभ्यंगकर्म केशमर्दनम् ४३ ॥ अक्षरमुष्टिकाकथनम्–अक्षराणां
मुष्टिरिव गुप्तिः साभासा निराभासा च । आद्याक्षरमुद्रा यथा–'मे-वृ-मि-क-सिं-'इत्यादिना मेषवृषादिकथनम् । दिवोदासीयेऽपि–''आ-भा-का-सितपक्षेषु मैत्रश्रवणरेवती-।-संगमे न हि भोक्तव्यं द्वादश्यां द्वादशाऽऽहरेत् ॥''
इति । ''आ-का-पौ-चै-द्वितीयायां शिष्यं नाध्यापयेद्गुरुः'' इति स्मृत्यंतरे । '' जन्मर्क्षसंख्यासहिता गताब्दा दृगूनिता नंदहृतावशेषाः । आ-चं-कु-रा-जी-श-बु-के-शु-जाताः क्रमेण मौद्गीयदशाः प्रदिष्टाः ॥ '' इति ।
हिल्लाजेपि-''धनिष्ठार्धश-पू-उ-रे तृणकाष्ठादिसंग्रहम् । शय्यावितति गेहांतर्द्धिप्रेतदहनं त्यजेत् ॥ '' इति मुहूर्तशास्त्रेऽपि । यद्वा–एकाक्षरोक्त्याक्षरमुष्टिकाया वर्णसमुदायरूपपादादेर्ज्ञानम् । तथाहि–कदाचिदेकनगरवास्त
व्यौ स्वस्वविद्याप्रवीणौ सवयसौ कौचिद्वनिदेवरुक्मकारतनयौ मिथःसख्येनार्थार्जनाय नगरान्तरमीयतुः । तत्र च पश्यतोहरतया बहुसचातुरीचुंचुनापि नाडिन्धमेन न तथा धनमार्जितं यथाधिमारुतिमन्दिरमिन्दिराजानि
कथां कथयतैकदैव,–सन्तोष सेविना वाडवजनिना परेण । ततश्च हायनाऽनेहसि गते पितृदर्शनाभिलाषुकयोर्भवनमभिपरावर्तमानयोर्द्रव्यापहारभिया कृतजागरणयोररण्ये क्रमेण शयने कृतसमययोः पुरश्शयितेन स्वर्णकार
सुतेन शयानस्य साधुद्विजदारकस्य शिखां पादेनाक्रम्य शिरश्छेदाय पापेन वसुलिप्सयासिरुदयोजि । ततश्च बहुबोधितस्यापि दुर्मतिशान्तिमनालोच्यासिच्छिन्नांगुल्यसृजा पत्रे 'अ-प्र-शि-ख' इति वर्णचतुष्टयं विलिख्य
मत्पित्रे देयमिति तस्मै प्रायच्छत् । स च स्वमनोरथं सम्पाद्यागत्य तत्पित्रे तददात् । स च तदर्थमबुध्यमानो भोजराजसभामगात् । तत्रत्येष्वपि तदर्थमकथयत्सु बुधेषु राज्ञि 'सप्तदिनाभ्यन्तरेऽब्रुवाणा यथार्हं दण्ड्या
इमे ' इति कृतनियमे पलायमानेषु तेषु वनवटाधः स्थितेन वररुचिना रात्रौ तत्रस्थगृध्र–गर्भिणीमांसाभिलाषितपत्नीसंवादेन तदक्षरार्थोऽवगतः । यतश्च श्रूयते–'' दिवा निरीक्ष्य वक्तव्यं रात्रौ नैव च नैव च । धूर्ताः
सर्वत्र तिष्ठन्ति वटे वररुचिर्यथा ॥ '' इति । ततश्च प्रसन्नमनाः स प्राता राजसभामागत्येमं श्लोकमेकैकाक्षरज्ञातैकैकपादं पपाठ–'' अ-नेन तव पुत्रस्य प्र-सुप्तस्य वनान्तरे । शि-खामाक्रम्य पादेन ख-ड्गेन निहतं
शिरः ॥ '' इति । अपरा चेष्टामुद्रा । सा च किसलयादिरूपेणाक्षरकथनम् । तथाहि–'' अहिफणकजचक्राणि टंकारासिप्रभञ्जनान् । मुखोर्द्ध्वरोमसंस्पर्शकेशस्पर्शौ क्रमेण च ॥ अकचटतपयशा इति वर्गाष्टकस्य च ।
एतानि कुर्यान्मतिमान्सामितौ बोधनाय वै ॥ अंगुल्या निर्दिशेद्वर्णं मात्राः स्फोटिकया तथा । एतद्रामेण निर्दिष्टं लक्ष्मणाय वने सता । नासाकर्णौ शूर्पणख्याश्छेत्तुं बोधाय चेष्टया ॥ '' । अस्यार्थः–कजं कमलम् ।
टंकारो दुंदुभिवादनानुकरणम् । असिपदेन खड्गप्रहारानुकरणम् । प्रभञ्जनो वातकरणानुकरणम् । स्पष्टमन्यत् । यदा 'रामं नौमि ' इति कथनेच्छा स्यात्तदा मुखोर्द्ध्वरोमाणि स्पृष्ट्वांगुलिद्वयमुत्थाप्य स्फोटिकाद्वयं कुर्यादेतेन
' रा ' इति सिद्धम् । ततो ' मं ' सिद्ध्यर्थं हस्तेन पवनं कृत्वांगुलिपञ्चकमुत्थाप्यैकादश स्फोटिकाः कुर्यात् । ततो ' नौ ' सिद्धये खड्गप्रहारं हस्तेनानुकार्यांगुलिपञ्चकमुत्थाप्य स्फोटिकात्रयं कुर्यादित्येषा रीतिः सर्वत्र
बोध्या । एवम् 'कृष्णोऽस्ति' इति बोधनार्थमादौ कमलं कृत्वा तत एकांगुलिमुत्थाप्य तां वक्रां कुर्याद्ककारसिद्धये स्फोटिका न कार्या, तेन 'कृ' इति सिद्धम् ।

ततः केशं स्पृष्ट्वांगुलिद्वयमुत्थाप्य दुंदुभिवादनानुकरणं कृत्वांगुलिपञ्चकमुत्थाप्य पुनरंगुलिद्वयं संयोज्य नव स्फोटिकाः कुर्यात्तेन ‘ ष्णो ’ इति जातम् । ततः केशान्स्पृष्ट्वांगुलित्रयमुत्थाप्य पुनरंगुलिद्वयं संयोज्य स्फोटिकात्रयं कुर्यात्तेन ‘स्ति’ इति । सर्वसंयोजनात्कृष्णोऽस्तीति जायते । किञ्च–‘क्रू’ कथनार्थमादौ कमलं कृत्वैकांगुलिमुत्थाप्य ततो मुखोर्द्ध्वरोमाणि स्पृष्ट्वांगुलिद्वयमुत्थाप्यांगुलिद्वयसंयोगं कृत्वा षट् स्फोटिकाः कुर्यात् । ‘ क्ष ’ कथनेऽपि कमलं कृत्वा केशान्स्पृष्ट्वांगुलिद्वयं संयोज्यैकां स्फोटिकां कुर्यात् । ‘ भ्रि ’ कथनार्थं मुखरोमाणि स्पृष्ट्वांगुलिद्वयमुत्थाप्यासिचेष्टां कृत्वांगुलित्रयमुत्थाप्य पुनरासिचेष्टां कृत्वांगुलिचतुष्कमुत्थाप्य पुनरासिचेष्टां कृत्वांगुलिपञ्चकमुत्थाप्यांगुलिचतुष्टययोगं विधाय स्फोटिकात्रयं कुर्यादित्येवं संयुक्ताक्षरेऽक्षरपौर्वापर्यापेक्षयाक्षरसंयोगसमांगुलियोगेनांते मात्रासमाः स्फोटिकाः कार्या इति ४४ ॥ म्लेच्छितविकल्पाः–यत्साधुशब्दोपनिबद्धमप्यक्षरविन्यासादस्पष्टार्थं, तस्य भेदा ज्वलनागंतुकश्रृंगादयः । यथा–‘ साहेऽव शलाम् ’ इति । इहाहिना शेषेण सह वर्तते इति साहिर्विष्णू रुद्रो वा, तत्संबुद्धौ हे साहे । शं मोक्षलक्षणं कल्याणं लाति ददातीति शला ब्रह्मविद्या ताम् । अव रक्ष देहि वा । भारतेपि विदुरेणोपदिष्टा लाक्षामंदिरप्रवेशसमये । भेदाश्चास्य ग्रन्थांतरगम्याः ४५ ॥ देशभाषाज्ञानम्–अप्रकाशवस्तुज्ञापनार्थं तत्तद्देशीयैर्व्यवहारार्थं च ४६ ॥ पुष्पशकटिकानिमित्तज्ञानम्–पुष्पाणि निमित्तीकृत्य शुभाशुभादेशपरिज्ञानम् । पुष्पसंख्यावर्णाभ्यां शुभाशुभकथनम् । तच्च शकुनशास्त्रादवसेयम् । निमित्तज्ञानम्–आगतस्य भाषणादिना तदागमनकार्यज्ञानम् । भवदीयं तक्रमतिमिष्टामित्युक्ते तक्रार्थमागतोऽयमित्येवंरूपतया ज्ञानमिति सामान्येनोक्तम् ४७ ॥ यन्त्रमातृका–सजीवानां निर्जीवानां च यन्त्राणां संग्रामार्थं घटनाशास्त्रं विश्वकर्मप्रोक्तम् । सजीवयन्त्राणि तु जीववदुत्प्लुत्योत्प्लुत्य नाशहेतूनि । तानि च धनुर्वेदे प्रसिद्धानि ४८ ॥ धारणमातृका–श्रुतग्रन्थस्य धारणार्थं शास्त्रम् । यथोक्तम्–“ वस्तु कोशस्तथा द्रव्यं लक्षणं केतुरेव च । इत्येते धारणादेशाः पञ्चांगरुचिरं वपुः ॥ ” इति । वस्तुपदेन वस्तूनां स्वरूपबोधकं शास्त्रम् । निघंट्वादिकोशः प्रसिद्धः । द्रव्यस्य तल्लक्षणस्य च बोधकं शास्त्रं तर्कादि । केतुपदं तत्तच्चिह्नपरम्, व्याकरणं पुंस्त्यादिबोधकम् ४९ ॥ संपाद्य ( वाच्य ) म्–तत्रैकः पूर्वधारितं ग्रंथं पठति, अपरोऽश्रुतपूर्वं तेन सह तथैव पठति । केचित्तु संपाठ्यमिति पठित्वाऽभेद्यस्यापि वज्रादेर्द्वैधाकरणमित्याचक्षते ५० ॥ मानसी–मनःसंभवा चिन्ता । तत्र कश्चिद्व्यञ्जनाकारैः पद्माद्याकृतिभिर्यथास्थितानुस्वारविसर्गयुक्तैरनुक्तार्थं श्लोकं लिखत्यन्यस्तथैव पठतीति दृश्यविषया। यदा तु तथैव यथाक्रममाख्यातानि श्रुत्वाऽपूर्ववदुन्नीय पठति तदादृष्टविषया, सा चाकाशमानसी । तदुभयं क्रीडार्थं वादार्थञ्च । तदुक्तं विदग्धमुखमंडने–“मानसी नाभसीत्याद्या बुद्ध्यादौ न्यासितापि या । बाहुल्येन प्रयोगात्तु नेह तासां प्रदर्शनम् ॥” इति । आदिपदान्मूर्ता-त्रिचित्रा-वाचिकी-प्रातिलोमिकी-मौलदेवी-धारा-पल्लवी-साभिनयालंकारादयः संवेद्याः । “ि ० ० ० ू व ० ं ० ि ं ि ं ि वेः ु ु ं वी ० ि ०ः ।। ० ु ० ० ि ु ृ व ु ० ० ० ० वी ० ० वे ० ० ं ं ः ॥” इयमेव बिन्दुमतीत्युच्यते–“स्वरेषु बिन्दुयुक्तेषु हलां यदत्रबोधनम् । तद्बिन्दुमदिति प्राहुः केचिद्बिन्दुमतीमिति ॥” । “त्रिनयनचूडारत्नं मित्रं सिंधोः कुमुद्वतीदयितः । अयमुदयति घुसृणारुणरमणीवदनोपमश्चन्द्रः ॥” । इत्यस्योदाहरणं स्वरबिन्द्वादि पूर्वोक्तम् । यद्वा–पत्रादिचित्ररूपा सा “वर्णद्वयेन चैकैकदलभूतदलाष्टकम् । सर्वोत्तराद्यवर्णेन पद्यं स्यात्कृतकर्णिकम् ॥” । उदाहरणम्–“अलयोऽपश्यदरयोऽररेऽवंद्योऽहस्तोऽगजोऽहीनः” एवमन्येऽपि बहवो भेदाः सन्तीति ५१ ॥ काव्यक्रिया–संस्कृतप्राकृतापभ्रंशकाव्यकरणम्, चित्रकाव्यकरणम् । तदुक्तम्–“भाषाभिश्चित्रितं यस्यात्संस्कृतप्राकृतादिभिः । संतश्चित्रं तदिच्छन्ति संशुद्धं त्वेकभाषया ॥” इति । उदाहरणं संस्कृतप्राकृतयोः–“किं न स्यात्कीदृक्षं महतोऽपि हि तादृशस्य जलराशेः । दिनमणिकिरणसिफंसणपडिबद्धं लोहि किं गोसे (१) ”। कमलवणं महतोऽपि समुद्रस्य किं कीदृशं न स्यात् । कं जलमलवणमक्षारं न स्यात् । दिनमणेः किरणानां स्पर्शेन प्रतिबुद्धं भवति किं प्रभाते कमलानां वनम् । एवमन्यदपि साहित्यशास्त्रतोऽवसेयम् । संस्कृतापभ्रंशमुदाहरति–“किं सुखमाहुः प्रायः केशविकारं च का हरेर्दयिता । भा कस्मिन्निशि किं भृशवाक्कोलुच्च इवीलपुलसाणम् (१) ” । को रोचते वीरपुरुषाणामिति चतुर्थः प्रश्नः । ‘शमलकम्मालं भे’ शं सुखम्, अलकं चूर्णकुंतलम्, मा लक्ष्मीः, अलमत्यर्थम्, भे नक्षत्रे, समरकर्मारंभे इत्यलमतिप्रसंगेन ५२ ॥ अभिधानकोशः–उत्पलमालादि । आदिना विश्व-हैम-शब्दार्णवो-ज्ज्वला-जय-धनंजय-संसारावर्त-नाममाला-यादव-शाश्वत-धरणि-हलायुध-वररुचि-व्याडय-मर-भागुरि-बोपालित-रंतिदेव-हर-केशव-शुभांक-गोवर्धन-रभश-रुद्रदत्त-गंगाधर-हारावली-त्रिकांड-रत्नमाला सौभरि-वाग्भट-माधव-वाचस्पति-धर्म-तारपाल-विक्रम-वामन-कात्यायन-चंद्र-गोभि-पाणिन्यनेकार्थध्वनिमञ्जर्यनेकार्थादीनां ग्रहः ५३ ॥ छंदोज्ञानम्–पिंगलादिप्रणीतच्छंदसो ज्ञानम् ।



छंदश्च मात्रावर्णभेदेन द्विधा । मात्राछंदांस्यार्यादीनि । वर्णच्छंदांसि तु श्र्यादीनि । तेषां प्रस्तारोद्दिष्टनष्टैकद्व्यादिलगक्रियापथिमार्गयोगमेरुमर्कटीसूचीपताक्यादिभिः प्रत्ययैर्यथार्थज्ञानं भवतीति ५४ ॥ क्रियाकल्पः—काव्यकरण विधिः । स च—"साधुशब्दार्थसंदर्भं गुणालंकारभूषितम् । स्फुटरीतिरसोपेतं काव्यं कुर्वीत कीर्तये ॥" इति वाग्भट उक्तः । साधू निर्दोषौ सालंकारौ यौ शब्दार्थौ तयोः संदर्भो गुंफनं यत्र तत् । गुणैरौदार्यादिभिरलंकारैश्चित्रोप पमादिभिर्भूषितम् । स्फुटा रीतयः पाञ्चालीगौड्यार्भटयादयः,रसाश्च श्रृंगारादयस्तैरुपेतम् । कीर्तय इत्युपलक्षणम् "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥" इति काव्य प्रकाशोक्तार्थानाम् । तत्कारणञ्च प्रतिभाव्युत्पत्त्यभ्यासाः। नवनवार्थोन्मेषशालिनी बुद्धिः प्रतिभा, व्युत्पत्तिर्गुरूपदेशपूर्वकसर्वशास्त्रज्ञानम् , अभ्यासोऽनारतं काव्यरचनादरः।एवमन्येपि मनःप्रसत्त्यादयः काव्यहेतवस्तच्छास्त्रतोऽवसेयाः। यद्वा—क्रियाणां यज्ञादीनां कल्पो बौधायनादिपद्धतिग्रंथज्ञानम् । वा—क्रियाणां स्वर्णकारादिकर्मणां कल्पो ज्ञानम् । तेन भूषणभाजनहर्म्यादिसर्वक्रियाकरणं बोध्यम् ५५॥ छलितकयोगाः—"तद्रूपमन्यरूपेण संप्रकाश्य हि वञ्चनम् । देवेतरप्रयोगाभ्यां ज्ञेयं तच्छलितं तथा ॥" । वञ्चनार्थं देवादिबहुरूपधारणोपाया इत्यर्थः ५६ ॥ वस्त्रगोपनानि—वस्त्रेणाप्रकाश्यदेशसंवरणम् । यथा तद्रूपं मानमपि तस्मान्नापैति, त्रुटितस्यात्रुटितस्येव परिधानं महतो वस्त्रस्य संवरणादिनाऽल्पीकरणं च गोपनानि । सूत्रादिमयानां कौशेयादिरूपतया प्रदर्शनं वा ५७ ॥ द्यूतविशेषाः—निर्जीवसजीवादिभेदेन बहवो द्यूतभेदाः । रूपगं सजीवं, तद्धीनं निर्जीवम् । चतुरंकादिरूपमेत न्निर्जीवविधानम् ५८॥ आकर्षक्रीडा—दूरस्थक्रीडकान्याकृष्य यत्र क्रीडा काष्ठपुत्तलिकाचालनरूपा । यद्वाऽऽकाशे दीर्घडोरकया प्रेषितस्य शणपत्रादिनिर्मितयंत्रस्याकर्षणादिना क्रीडा, पाशकक्रीडा वा । दुर्विज्ञेयतया पुनर्वचनं सजीवद्यूतविधानं वा । पाशके चतुरंके सति द्रव्यं दशधा विभज्य लापयेत् । एकांकपाते एकं जेता गृह्णीयात्, द्व्यंके त्र्यंशान्, त्र्यंके षडंशान्, चतुरंके पतिते दश भागानेव पूर्वोक्तयोजनया गृह्णीयादिति द्यूतविदां स्थितिः ५९ ॥ बालक्रीडनकानि—बालानां कंदुकवीटापुत्रिकादिभिः क्रीडनानि । तानि च देशकालभेदादनंतानि ६० ॥ वैनायिकी—हस्त्यादिशिक्षा । आदिना वाजिग्रहः ६१ ॥ वैजयिकी—विजयप्रयो जना दैव्यपराजितादिः, मानुषी सांग्रामिकी शस्त्रविद्या ६२ ॥ व्यायामिकी—व्यायामप्रयोजना मृगयादिः । एतास्तिस्र आत्मोत्कर्षरक्षणाजीव्यार्थाः ६३ ॥ इत्येताश्चतुःषष्टिकला व्याख्याताः । उत्सादनात्केशमार्ज नस्य पृथग्गणने संख्यापूर्तिः ६४॥ "कला स्यान्मूल्यैर्वृद्धौ शैल्यादावंशमात्रके । षोडशांशे च चंद्रस्य कलना कालमानयोः ॥ भूमौ भक्त्यां कृपायां च कादंबिन्यामथो कला ॥" इति मेदिनीनिरुक्ती । गुरु दक्षिणाया आवश्यकत्वमाह—" याजने हि ददतं वै ते तमयाजयंस्तस्माद्ददद्याज्यः, प्रतिगृह्णंतो वै ते तमयाजयंस्तस्मात्प्रतिगृह्णता याज्यमुभये राध्नुवंति " इति श्रूयते । तद्वदध्यापनेऽपि—"याजने प्रतिग्रहवज्जीविकारूपे दद देवाऽध्याप्यः । प्रतिगृह्णतैवाध्याप्यम् " इति धर्मः । अत्र भारतस्मृतिमप्याह—"यश्चाधर्मेण वै ब्रूयाद्यश्चाधर्मेण पृच्छति । तयोरन्यतरः प्रैति विद्वेषं चाधिगच्छति ॥ " इति । अस्यार्थः—यो दक्षिणाया अग्रहणेना धर्मेण ब्रूयादध्यापयेत् । यश्चाधर्मेण तस्या असमर्पणेन पृच्छत्यधीते अन्यतरोऽदाताऽप्रतिग्रहीता वा प्रैति म्रियते । विद्वेषं चान्यतरोऽदानादप्रतिग्रहाद्वाऽधिगच्छति । मद्दत्तदक्षिणाया अग्रहे तवाधर्मः स्यान्मम च त्वयि द्वेषः स्यादहमनेन कृतार्थो न कृत इति भावः ॥ * ॥ ततश्च कौतुकविशेषार्थं कला अप्युपदिदेशेत्याह—अहोरात्रैरिति । यावतीः कलाः सञ्जगृहतुरिति—चतुःषष्टिकलासंग्रहे एतावंत्यहोरात्राणि । एवमखिलवेदादिसंग्रहणे ऽप्यहोरात्राणि ज्ञेयानि । कलानां नामानि तु तैरेवं लिखितानि । केचित्तु कलाः कल्पसंहितोक्ताः सुधियामेव प्रत्येकमहोरात्रशिक्षणार्हाः क्षुद्रसिद्धिरूपाः परचित्ताद्यभिज्ञतादूरश्रवणदर्शनचिंतारत्नामृतविशेषनिर्माणाद्या अन्या एवाहुः । यद्वा—तत्सर्वं कलाश्चाहोरात्रचतुःषष्ट्या संजगृहतुरित्यन्वयः । तथा च विष्णुपुराणे—" सरहस्यं धनुर्वेदं ससंग्रहमधीयताम् । अहोरात्रचतुःषष्ट्या तदद्भुतमभूद्द्विज ॥ " इति । श्रीहरिवंशे च—" तौ च श्रुतिधरौ वीरौ यथावत्प्रतिपद्यताम् । अहोरात्रैश्चतुःषष्ट्या सांगवेदमधीयताम् ॥ " इति । छंदयामासतुः कामप्यभीप्सितां दक्षिणां गृह्णात्वित्युक्त्वा तत्प्राप्तीच्छां कारयामासतुरित्यर्थः । ' अभिप्रायवशौ छंदौ ' इत्यमरः ॥ ३६ ॥

१ श्रीधरस्वामिभिरेवेति तात्पर्यम् ।

द्विजस्तयोस्तं महिमानमद्भुतं संलक्ष्य राजन्नतिमानुषीं मतिम् ॥ संमंत्र्य पत्न्या स महार्णवे मृतं बालं प्रभासे वरयांबभूव ह ॥ ३७ ॥ तथेत्यथारुह्य महारथौ रथं प्रभासमासाद्य दुरंतविक्रमौ ॥ वेलामुपव्रज्य निषीदतुः क्षणं सिंधुर्विदित्वाऽर्हणमाहरत्तयोः ॥ ३८ ॥ तमाह भगवानाशु गुरुपुत्रः प्रदीयताम् ॥ योऽसाविह त्वया ग्रस्तो बालको महतोर्मिणा ॥ ३९ ॥ समुद्र उवाच ॥ नैवाहार्षमहं देव दैत्यः पंचजनो महान् ॥ अंतर्जलचरः कृष्ण शंखरूपधरोऽसुरः ॥ ४० ॥ आस्ते तेनाहृतो नूनं तच्छ्रुत्वा सत्वरं प्रभुः ॥ जलमाविश्य तं हत्वा नापश्यदुदरेऽर्भकम् ॥ ४१ ॥ तदंगप्रभवं शंखमादाय रथमागमत् ॥ ततः संयमनीं नाम यमस्य दयितां पुरीम् ॥ ४२ ॥ गत्वा जनार्दनः शंखं प्रदध्मौ सहलायुधः ॥ शंखनिर्ह्रादमकर्ण्य प्रजासंयमनो यमः ॥ ४३ ॥

प्रभासे क्षेत्रे महार्णवे मृतं बालं वरयामास ॥ ३७ ॥ ईश्वराविति विदित्वा समुद्रस्तयोरर्हणमाजहार ॥ ३८ ॥ ३९ ॥ पंचजनस्त्वसुरोऽहार्षीत् स च महान्ममासाध्य इत्यर्थः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥

तयोः रामकृष्णयोः । अतिमानुषीं मनुष्यदेहे असंभवाम् । स सांदीपनिः ॥ * ॥ प्रभासे मृतं, तीर्थयात्रायां पितृभ्यां सह तत्र महाशिवक्षेत्रे गतस्य तत्र बालतया जले क्रीडतः शंखासुरेण ग्रसनादिति ज्ञेयम् ॥ ३७ ॥ गुरूक्तिं तथेत्यंगीकृत्य । अथांगीकारोत्तरम् । महान्तौ लोकापेक्षयाऽलौकिकौ पूज्यौ रथौ ययोस्तौ, न तु योधमहारथावनंतबलत्वेन तत्त्वासंभवात् । वेलां सिंधुतीरम् "वेला काले च सीमायामब्धेः कूलविकारयोः । अक्लिष्टमरणे रागे ईश्वरस्य च भोजने ॥" इति मेदिनी । तयोः रामकृष्णयोः । विदित्वा पूर्वावतारीयपुरुषार्थस्मरणेन तावेताविति ज्ञात्वा ॥ * ॥ महारथौ वीरप्रवरौ, अनेन सर्वायुधसाहित्यादिकमुक्तम् । दुरन्तविक्रमावनन्तपराक्रमौ । वेलां समुद्रतीरम् । निषेदतुरुपविष्टौ । 'निषीदतुः' इति पाठस्त्वार्षः । अर्हणममूल्यरत्नादिकम् ॥ ३८ ॥ तमब्धिम् । यो गुरुपुत्रः, असौ प्रदीयतामिति ॥ * ॥ भगवानित्यैश्वर्यं प्रदर्शयन्नित्यर्थः । असौ प्रकर्षेणाऽविकृतशरीरत्वादिना दीयतां देहवत्त्वात्तथाशक्तेरिति भावः । इह प्रभासे ॥ ३९ ॥ शङ्खाकारमत्स्यरूपधरः ॥ * ॥ समुद्र उवाचेति क्वचिदस्ति क्वचित्तु न, टीकाकृद्भिस्तद्वाक्यत्वेन न स्पष्टीकृतः । न चेत्यर्धकं क्वचिन्नास्ति । देव हे क्रीडापरेति, तत्सर्वं जानन्नपि यदेवमाज्ञापयति सेयमेका तव क्रीडेति भावः । अत्र दैत्य इत्यस्यैवासुर इति टीका । अंतारित्यर्धकम्, आस्त इति शेषः । " आस्ते तेनाहृतो नूनं तच्छ्रुत्वा सत्वरं प्रभुः " इत्यर्धकं क्वचिदस्ति । एतदभावे तूत्तरत्र ' प्रभुः ' इत्यध्याहार्यम् । कृष्णेति—सर्वाकर्षकशक्तेस्तव तस्य निग्रहो न दुष्कर इति भावः ॥ ४० ॥ तं पञ्चजनम् ॥ * ॥ जलमिति श्रीशुकोक्तिः । सक्षोभमन्तः प्रविश्य अर्भकं तदस्थीन्यपीत्यर्थः । तदन्वेषणं च यद्यप्यस्थीन्यपि प्राप्स्यामि तदपि गुरुप्रसादेन जीवयिष्यामीति समुद्रं प्रति लौकिकलीलाव्यञ्जनार्थम् । एकवचनादेकाक्येव श्रीकृष्णः प्रविष्ट इति ज्ञेयम् । तथा च विष्णुपुराणे—" इत्युक्तेन्तर्जलं गत्वा हत्वा पञ्चजनं तु तम् । कृष्णो जग्राह तस्यास्थिप्रभवं शङ्खमुत्तमम् ॥ " इति । तच्च रथरक्षार्थं बलदेवस्य तीरे स्थापनात् ॥ ४१ ॥ तस्य पञ्चजनस्य । अंगप्रभवं शरीरसम्भूतम् । ततो दैत्यहननोत्तरम् ॥ * ॥ तदंगप्रभवमिति—तत्त्वतो विप्रशापापेक्षया नित्यपार्षदेन शङ्खेन दैत्यस्यानुकरणात्, जयविजयवत् । अत एवेच्छया श्रीकृष्णहस्ते तु वाद्ययोग्यसूक्ष्माकारोऽप्यभवदिति ज्ञेयम् । अवन्तीखंडमते तु—" ततः पञ्चजनं हत्वा ग्राहरूपं महासुरम् । तन्मध्यस्थं स जग्राह शंखं ग्रस्तं हि यत्पुरा ॥ तस्योदरे यदा बालं नाप्तवाँस्तं जनार्दनः । यमालयगतं मत्वा तदा वरुणमब्रवीत् ॥ भगवन्यादसामीश रथो मे दीयतां महान् । येनाहं विहितात्मा हि पश्येयं संगरे यमम् ॥ पुराजिरे हता दैत्या दानवा बलगर्विताः । त्वया येन रथेनाद्य मह्यं स दीयतां रथः ॥ " इत्यादि । दीयतामिति तत्र नित्रासनिश्चयात् ॥ ४२ ॥ प्रजाः संयच्छति नियच्छतीति प्रजासंयमनः ॥ * ॥ जना

तयोः सपर्यां महतीं चक्रे भक्त्युपबृंहिताम् ॥ उवाचावनतः कृष्णं सर्वभूताशयालयम् ॥ लीलामनुष्य हे विष्णो युवयोः करवाम किम् ॥ ४४ ॥ श्रीभगवानुवाच ॥ गुरुपुत्रमिहानीतं निजकर्मनिबंधनम् ॥ आनयस्व महाराज मच्छासनपुरस्कृतः ॥ ४५ ॥ तथेति तेनोपानीतं गुरुपुत्रं यदूत्तमौ ॥ दत्त्वा स्वगुरवे भूयो वृणीष्वेति तमूचतुः ॥ ४६ ॥

सपर्या पूजाम् । सर्वेषां भूतानामाशया अंतःकरणानि तान्यालयो निवासो यस्य तम् ॥ ४४ ॥ निजं कर्मैव निबंधनं नितरां बंधनं यस्य तथाभूतमपि मदाज्ञापुरस्कारेणानयतस्ते न दोष इत्यर्थः ॥ ४५ ॥ ४६ ॥

र्दनः सर्वनिजजनाभीष्टपूरकः । अत एव हलायुधेनापि सह, एतन्नाम्ना तस्य हलप्रकटनमपि तदा ज्ञेयम् । शंखप्रध्मानानंतरम् अवंतीखण्डे त्वेवम्—"तेन शब्देन वित्रस्ताः कृतान्तालयवासिनः । नरकान्तर्गता मर्त्याः पापाचारपरायणाः ॥ सुखमापुः प्रशान्ताश्च बहवः कृष्णदर्शनात् । शस्त्राणि कुण्ठतां प्रापुर्यंत्राणि विविधानि च ॥ विदीर्णानि तदा व्यास वासुदेवस्य दर्शनात् । असिपत्रवनं नाम शीर्णपत्रमजायत ॥ रौरवं नाम नरकमरौरवमभूत्तदा । अभैरवं भैरवाख्यं कुम्भीपाकमपाचकम् ॥ शृंगाटकमशृंगाटं लोहसूच्यप्यसूचिताम् । जगाम जगतामीशे प्राप्ते तत्र जनार्दने ॥ हस्तमात्रतरा जाता तदा वैतरणी नृणाम् । नारकास्ते तदा याते तत्र विश्वेश्वरे विभौ ॥ पापक्षयात्तदा सर्वे विमुक्ता नारका नराः । पदमव्ययमासाद्य दृष्ट्वा विष्णुं तमोऽपहम् ॥ विमानायुतसाहस्रैरारूढास्ते समंततः । समीक्ष्य पुंडरीकाक्षं मुक्तास्ते सर्वपातकात् ॥ ततः शून्यं मुने यातं सर्वं निरयमंडलम् । दर्शनात्तस्य देवस्य विष्णोर्विश्वस्वरूपिणः ॥" इति । प्रजासंयमन इति भयङ्करत्वमुक्तम् । तथाऽत्र युद्धं च सूचितं, श्रीविष्णुपुराणे—'जित्वा वैवस्वतं यमम्' इत्युक्तेः । अवन्तीखण्डे बहुशो वर्णितमेतत् ॥ ४३ ॥ तयोः रामकृष्णयोः । अवनतोऽतिनम्रः ॥ * ॥ सर्वेति—तस्य तत्र निष्कपटतामपि जानंतामित्यर्थः । विष्णोर्व्यापकत्वेन विश्वप्रभो इत्यात्मनस्तत्सेवकत्वं सूचितम् । लीलाप्रधानमनुष्याकारयोः 'लीलामनुष्य हे' इति क्वचित्पाठः । किन्तु 'लीलामनुष्ययोर्विष्ण्वोः' इति पाठः स्वामिसंमतो लक्ष्यते एकसंबोधनस्याग्रह एव क्वेत्यत्र करिष्यमाणसमाधानत्वात् । किं करवाम आज्ञापयेति शेषः ॥ ॥ ४४ ॥ इत्यर्थ इति । अपराधिनो विनापराधसमयातनाभोगत्यागे यद्यप्यधिकारिणस्तव दोषस्तथापि परनियंतुर्ममाज्ञयाऽकर्तव्यमपि कर्तव्यमेवेति भावः ॥ * ॥ निजकर्म प्रारब्धाख्यं निबंधनमवश्यभोग्यं यस्य तथाभूतमपि । हे महाराजेति तदत्यंताभिक्रममभिप्रेत्य कृपया तत्प्रोत्साहनाय सादरं संबोधनम् । तदाज्ञानुवर्ती सन् । अयं भावः—प्रारब्धस्यावश्यकत्वमपि मदाज्ञयैव, अधुना च गुरुपुत्रानयनं मदाज्ञयैव किन्तु विशिष्य साक्षान्मया क्रियमाणत्वादियमेव बलवती, यथा यावदायुः कारावासायाज्ञप्तः कश्चिन्नृपेण, स यदि तं पक्षसमाप्तौ मोक्तुमिच्छेत्तदा पूर्वाज्ञां बाधित्वा तं मुञ्चत्येवेति तद्वदत्रापि ज्ञेयम्। मच्छासनपुरस्कृत इत्यत्र मदाज्ञया तमानयतस्तव को दोष इति **विश्वनाथः** ॥ ४५ ॥ तेन यमराजेन । तं गुरुम् । भूयो वृणीष्व पुनराज्ञापय ॥ * ॥ तथेत्युक्त्वा यमेन तेनोप समीप आनीतम् । गुरुपुत्रमिति यादृशो मृतस्तादृशतच्छरीरकमेवेत्यर्थः । अवन्ती खण्डे तु—"तच्छ्रुत्वा धर्मराजस्तु पुत्रं सांदीपिनेस्तदा । ससर्ज बालरूपं च तद्वन्मानं तदुद्भवम् । पश्यतां सर्वदेवानां तदद्भुतमिवाभवत् ॥" इत्युक्तम्। तच्च कृष्णप्रभावैरेव ज्ञेयम्। मच्छासनपुरस्कृत इत्यनेनैव क्रोडीकृतत्वात् । यतो वक्ष्यते एकादशे—"मर्त्येन यो गुरुसुतं यमलोकनीतं त्वाञ्चानयच्छरणदः परमास्त्रदग्धम्" इति। तत्र तेनैव शरीरेणेति तट्टीका च। अतस्तत्प्रभाव एव विवक्षित इति । तथा च श्रीविष्णुपुराणे—"तं पाञ्चजन्यमापूर्य गत्वा यमपुरीं हरिः। बलदेवश्च बलवाञ्जित्वा वैवस्वतं यमम्॥ तं बालं यातनासंस्थं यथापूर्वं शरीरिणम् । पित्रे प्रदत्तवान्कृष्णो बलश्च बलिनां वरः॥" इति। अत्र यातनासंस्थमिति प्राचीनावस्थोक्ता,—सर्वेषां यातनाशान्तेः। अस्य वैकुंठगमनं तु भगवदिच्छया। अथ समुद्राहृतं रत्नादिकं तस्मै दत्तमिति च ज्ञेयम् । तथा च श्रीहरिवंशे—"तदा सांदीपिनेः पुत्रं तद्रूपवयसं तदा । प्रादात्कृष्णः प्रतीतात्मा सह रत्नैरुदारधीः ॥" इति । स्वशब्देन गुरौ महाभक्तिर्बोध्यते । अतः परामपि

गुरुरुवाच ॥ सम्यक्संपादितो वत्स भवद्भ्यां गुरुनिष्क्रयः ॥ को नु युष्मद्विधगुरोः कामानामवशिष्यते ॥ ४७ ॥ गच्छतं स्वगृहं वीरौ कीर्तिर्वामस्तु पावनी ॥ छंदांस्ययातयामानि भवंत्विह परत्र च॥४८॥गुरुणैवमनुज्ञातौ रथेनानिलरंहसा॥आयातौ स्वपुरं तात पर्जन्यनिनदेन वै॥४९॥समनंदन्प्रजाः सर्वा दृष्ट्वा रामजनार्दनौ ॥ अपश्यंत्यो बह्वहानि नष्टलब्धधना इव ॥५०॥ इति श्रीभा० म० द० पू० गुरुपुत्रानयनं नाम पंचचत्वारिंशोऽध्यायः॥४५॥

वत्सेति प्राधान्येनैकस्य संबोधनम् । गुरोर्निष्क्रयो गुरुदक्षिणा । युष्मद्विधयोः शिष्ययोर्गुरोर्मम कामानां मध्ये को नु कामोऽवशिष्यते न कोऽपीति । पत्न्यभीप्सितया दत्तया पुत्रदानलक्षणया दक्षिणयैवालमित्यर्थः ॥ ४७ ॥ हे वीरौ ॥ ४८ ॥ अनिलवद्रंहो वेगो यस्य तेन । पर्जन्यो मेघस्तद्वन्निनदो यस्य तेन ॥ ४९ ॥ नष्टमदृष्टं तत्पुनर्लब्धं धनं याभिस्ता इवेति ॥५०॥ इति श्रीभा० म० दशमस्कंधे पूर्वार्धे टीकायां पंचचत्वारिंशोऽध्यायः ॥ ४५ ॥

दक्षिणां वृणीष्वेति भूयः पुनरूचतुस्तच्च युक्तमेवेत्याशयेनाह–यदूत्तमाविति।तादृशधर्मप्रचारार्थं यदुकुलेऽवतीर्णत्वादिति भावः॥४६॥ ''निष्क्रिया प्रतिकारे स्यात्क्रियाऽभावे स्त्रियाम्'' इति धरणिः । ईश्वरानुचराणां सर्वकामाप्तिर्भवति कथं न तद्गुरोरिति भावः ॥ * ॥ वत्सेति स्नेहविशेषात्कृष्णं प्रति संबोधनम् । युष्मद्विधानामपि किमुत युवयोरित्यर्थः ॥ ४७ ॥ वीरौ सुभटौ । वां युवयोः । ''अयातयामः सफले प्रहारादर्वाक्कर्मणि'' इति धरणिः । इह साफल्यमध्यापनादिना परत्र तदुक्ताचरणेनोत्तमफलदत्वादित्यर्थः । अत्रार्थे मानम्–''यो वा अविदितार्षेय च्छंदोदैवतविनियोगेन ब्राह्मणो न मंत्रेण वा यजते याजयति अध्यापयति वा स्थाणुं गच्छति श्वभ्रं वा वार्च्छेत्प्रमीयते पापीयान्भवति यातयामान्यस्य छंदांसि भवन्ति । अथ मंत्रेमंत्रे वेद सर्वमायुरेति अयातयामान्यस्य छंदांसि भवन्ति । तस्मान्मंत्रेमंत्रे विद्यात्'' इति श्रुतेरेवार्थो यजुर्वेददीपे कात्यायनेन धृतः । तथाह– ''द्रष्टार ऋषयः स्मर्तारः परमेष्ठ्यादयो देवता मन्त्रान्तर्भूता अग्न्यादिका हविर्भाजः स्तुतिभाजो वा छंदांसि गायत्र्यादीनि एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयति वा तस्य ब्रह्म निर्वीर्यं यातयामं भवत्यन्तराश्रु गर्तं वा पद्यते स्थाणुं वार्च्छति प्रमीयते वा पापीयान्भवति'' इति ॥ * ॥ स्वगृह इति–यद्यप्येतन्मद्गृहमपि युवयोरेव गृहं तथापि तत्र केवलनिजाभिमानात् स्वीये माथुरे गृहे इत्यर्थः । 'स्वगृहम्' इति पाठः क्वचित् । हे वीराविति–तादृशदानशौर्यदयासु वीरत्वात्त्रिविधवीरतायुक्तौ युवामिति भावः । तत्र तदादीन्प्रणम्य गच्छन्तावाशिषाभिनंदयति–कीर्तीरिति ॥ ४८ ॥ एवमाशीःप्रदानपूर्वकम् । तातेति कृष्णलीलाकर्णनाविष्टत्वेन प्रियत्वद्योतनाय राज्ञ आमंत्रणम् 'नित्यं विष्णुजनप्रियः' इत्युक्तत्वात् । ''तातस्तु प्रियपित्रोः स्याद्विस्तृते चात्मजे गुरौ'' इति धरणिः ॥ * ॥ 'स्वगुरुणा' इति पाठोऽपि क्वचित् । स्वपुरमिति तत्र ममतास्नेहो दर्शितः । अत एवानिलरंहसेति शीघ्रगमनम् । अनिलरंहस्त्वादेव पर्जन्यो गर्जन्मेघस्तद्वन्निनदो यस्य तेन । अतो विदूरादेव । तच्छब्दश्रवणेन सर्वे तदभिमुखं जग्मुरिति ज्ञेयम् । हे तातेति प्रहर्षात् ॥ ४९ ॥ बह्वहानि बहूनि दिनानि ॥ * ॥ सर्वाः पौर्य्यः जानपदाश्च । तत्र जानपदाः काश्चित्पथि दृष्ट्वा काश्चिच्च पुर्यामागताः सत्य इति ज्ञेयम् । तद्विशेषश्च श्रीहरिवंशे–''ततः प्रत्युत्थिताः सर्वे यादवा यदुनंदनौ । सबलौ हृष्टमनस उग्रसेनपुरोगमाः ॥ श्रेण्यः प्रकृतयश्चैव मंत्रिणः सपुरोहिताः । सबालवृद्धा सा चैव पुरी समभिवर्तत ॥ नंदितूर्याण्यवाद्यंत तुष्टुवुश्च जनार्दनम् । रथाः पताका नालिन्यो राजन्ते स्म समंततः ॥ प्रहृष्टमुदितं सर्वमन्तःपुरमशोभत । गोविंदागमनेऽत्यर्थं यथैवेन्द्रमखे तथा ॥ मुदिताश्चाप्यगायन्त राजमार्गेषु गायनाः । जयाशीःप्रथिता गाथा यादवानां प्रियंकराः ॥ गोविन्दरामौ संप्राप्तौ भ्रातरौ लोकविश्रुतौ । स्वे पुरे निर्भयाः सर्वे क्रीडन्ति सह बांधवैः ॥ न यत्र कश्चिद्दीनो वा मलिनो वा विचेतनः । मथुरायामभूद्राजन्गोविन्दे समुपस्थिते । वयांसि साधुवाक्यानि प्रहृष्टा गोहयद्विपाः । नरनारीगणाः सर्वे भेजिरे मनसः सुखम् ॥

१ 'निष्क्रियः' इति पाठाभिप्रायेण । २ अडभाव आर्षः ।

श्रीशुक उवाच ॥ वृष्णीनां प्रवरो मंत्री कृष्णस्य दयितः सखा ॥ शिष्यो बृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः ॥ १ ॥

षट्चत्वारिंशके घोषमुद्धवं प्रेष्य तद्गिरा ॥ यशोदानन्दयोश्चक्रे कृष्णः शोकापनोदनम् ॥ १ ॥ कामचारं द्विजातिः सन्परित्यज्यातिसंयतः ॥ गुरोर्ज्ञानमनुप्राप्य सख्या गोपीरुपादिशत् ॥ २ ॥ गोपीनां सांत्वनमपि रहस्यं सन्मंत्रिसाध्यमिति तदर्थमुद्धवं विशिनष्टि । वृष्णीनामिति । बुद्धिसत्तमो बुद्धयाऽतिश्रेष्ठः ॥ १ ॥

शिवाश्च वाताः प्रववुर्विरजस्का दिशो दश । दैतेयानि[1] प्रहृष्टानि सर्वेष्वायतनेषु च ॥ यानि लिंगानि लोकस्य बभुः कृतयुगे पुरा ॥ तानि सर्वाण्यदृश्यन्त पुरीं प्राप्ते जनार्दने ॥" इति ॥ ५० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे पूर्वार्धे पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥ ॥ तद्गिरा उद्धववाचा ( १ ) । कामचारं यथेच्छाचरणम् । द्विजातिः कृतोपनयनः । अतिसंयतः जितेंद्रियः । सख्या उद्धवेन ( २ ) । भगवद्वशीकरणे भक्तिरेव मुख्येति वक्तुं हरेर्गोपीष्वनुकंपित्वमाह—तदर्थं सान्त्वनार्थम् । बुद्ध्या सत्तमः पंडितशिरोमणिः ॥ * ॥ आर्तैकशरणं कृष्णमार्तान्व्रजजनांश्च तान् । तच्चार्ता श्वासकं भक्तमार्त्या वंदे दुराशया ॥ ( १ ) ॥ एवमात्मनः प्राथमिकावश्यकसमाप्त्या तथा 'आयास्य' इति, 'द्रष्टुमेष्यामः' इति स्ववाक्यव्यभिचारतर्कतस्तेषामार्तिविशेषशंकया च व्रजं गन्तुमर्होऽपि यच्छ्रीभगवान्व्रजं नाजगाम, तत्र श्रीनंदयशोदादिप्रेमबद्धतया पुनस्तदागमनाभावमाशंकमानानां श्रीवसुदेवदेवक्यादीनां गुरुत्वेनालंघ्यवाक्यानामनुज्ञैव कारणं लक्ष्यते, "ज्ञातीन्वो द्रष्टुमेष्याम विधाय सुहृदां सुखम्" इत्युक्तत्वात् । श्रीव्रजराजादिभिश्च तद्विधगुरुजनानामिच्छां रक्षामप्युल्लंघ्य तदागमनस्य लिंगातिक्रमशंकया स्फुटमप्रार्थितत्वात् । जरासंधादिमहाशत्रुभ्यो रक्षा चास्मद्व्रजे न स्यात्किन्तु दुर्गादिसंपत्तिमत्यां पुर्यामेव स्यादिति स्वयमपि विचारितत्वाच्च । अतः श्रीवसुदेवादिभ्यो गोपनानुसारेणोद्धवं प्रति 'भक्तमेकान्तिनं क्वचित्' इति वक्ष्यते । "अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया । गतांश्चिरायिताञ्शत्रुपक्षक्षपणचेतसः ॥" इति वक्ष्यमाणानुसारेण जरासंधादिदुर्जननिर्जयादिकृत्यशेषोऽपि कारणांतरम् । अन्यथा तैर्जनानां व्रजजनानामपि महानुपद्रवः स्यात् । अत औदासीन्यव्यञ्जनाय नंदादीन्स्वनिकटेऽपि नाजुहाव । किञ्च—युगपदुभयत्र पितृत्वादिव्यवहारस्याभिरुचितलीलावेशादीनां समञ्जसतायां दुर्घटता स्यात् । निजप्रेयसीनां चानयनेऽनानयने चासमञ्जसत्वमिति । अत एव पूर्वमपि वयं च स्नेहदुःखिताञ्ज्ञातीन्वो द्रष्टुमेष्याम इत्येवोवाच न त्वाह्वयिष्याम इति । अतस्तादृशानपि वो वयमेव द्रष्टुमेष्यामो न तु यूयमत्रागच्छतेति व्यञ्जनामभिप्रेत्यैव तयोर्दिदृक्षया स्वयं नंदादयोऽतिनिकटा अपि व्रजान्नागतास्तत्तदुपद्रवापातात् । पुरे व्रजे च युगपत्प्रकटा स्थितिश्च न स्यात्, तज्ज्ञाने श्रीनंदादीनामस्मदीयत्वे ज्ञानहान्या बंधुभावहानिश्च स्यात् । यथैव वक्ष्यते—' यथा दूरचरे प्रेष्ठे ' इत्यादि । तस्मात्तथा स्थितिमपि न चकार । अप्रकटा स्थितिस्तु तस्य सर्वदाऽस्त्येव । तथैव प्रतिपादयिष्यते—" मा शोचतं महाभागौ ' इत्यादौ, " भवतीनां वियोगो मे न हि सर्वात्मना क्वचित् " इत्यादौ च । किन्त्वसौ प्रकटलीलाविर्भाविनां तेषामनुभवगोचरो न भवति । प्रकटलीलायामपि मध्येमध्ये यत्तस्य व्रजस्थं कञ्चित्कंचित्प्रति गुप्तमागमनं तदप्युत्कंठाप्रधानानां स्फुरणभ्रमकरत्वाद्विश्वासाय न भवति । तस्माद्दन्तवक्रवधान्ते प्रश्नोत्तरखंडे वर्णयिष्यमाणं श्रीभागवतमते च व्यञ्जयिष्यमाणं यावत्तत्र निजगमनं संपद्यते तावत्तेषां यथा केनापि व्याजापदेशेन तत्तद्विश्वासास्पदं स्यान्महाराजत्ववैभवश्रवणं स्यात्तथा समाधातुं स्वयमगत्वा स्वस्यागमने केवलश्रीरामगमनं च दुःखकरं मत्वा स्वतुल्येन श्रीमदुद्धवाख्येन प्रियसखेन तादृशं संदिश्य श्रीव्रजवासिनः सान्त्वयामासेति क्रमप्रोक्तां लीलां वक्तुमारभतेऽध्यायद्वयेन—वृष्णीनामिति । वृष्णीनामसंख्यानामूर्द्ध्वोर्द्ध्वमहानुभावानां विविधभावानामपि सर्वेषां यादवानां सम्मत आदृतवचनाचरणः । ' प्रवरः ' इति पाठेऽपि तथैवाभिप्रायः । इति परममाहात्म्यं परमसामञ्जस्यं चाभिप्रेतम् । तेन च व्रजजनानामपि तादृशां सान्त्वने सामर्थ्यम् । किञ्च—'मंत्री गुप्तयुक्तिप्रदोऽमात्यविशेषः ' इति विश्वास्यत्वेन बुद्धिनैपुण्येन च तत्सामर्थ्यम् । तेन च पूर्वलिखितयुक्तिरपि श्रीभगवता तस्मिन्स्वयमेव कदाचिद्व्यञ्जिताऽस्तीति गम्यते । न केवलमेतावदेव किन्तु कृष्णस्य दयितो दयावि

---

[1] 'दैवतानि' इति पा० ।

तमाह भगवान्प्रेष्ठं भक्तमेकांतिनं क्वचित् ॥ गृहीत्वा पाणिना पाणिं प्रपन्नार्तिहरो हरिः ॥ २ ॥ गच्छोद्धव व्रजं सौम्य पित्रोर्नौ प्रीतिमावह ॥ गोपीनां मद्वियोगाधिं मत्संदेशैर्विमोचय ॥ ३ ॥ ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः ॥ ये त्यक्तलोकधर्माश्च मदर्थे तान्बिभर्म्यहम् ॥ ४ ॥

॥ २ ॥ ३ ॥ गोपीनां विशेषतः संदेशे कारणमाह । ता इति । मय्येव संकल्पात्मकं मनो यासां ताः । अहमेव प्राणो यासां ताः । मदर्थे त्यक्ता दैहिकाः पतिशेषविषयः, इत्यनिर्वचनीयगुणत्वम् । तेनात्मीयतया स्वीकृतत्वं चोक्त्वात्मगम्यस्थानप्रस्थापने श्रीगोपिकास्वपि संदेशे योग्यत्वञ्च । एवमंतरंगलोकदृष्ट्या यथोत्तरश्रेष्ठत्वेन तन्महिमानं चोक्त्वा तद्योग्यतावैशिष्ट्यम् । तथा सखा असंकोचप्रेम्णा दत्तसख्यपदवीकोऽपि । इति श्रीकृष्णेन गुगरूत्वयआदौ साम्यं सर्त्रयादेवभ्यस्तस्य परमासंकोचविस्रंभास्पदत्वं चोक्त्वा बहिरंगलोकदृष्ट्याप्याह—बृहस्पतेः साक्षादेव शिष्यः, न तु शिष्यादिद्वाराऽध्यापनादित्यर्थः । तच्च नीतिशास्त्रमारभ्य श्रीभागवतपर्यन्तस्येति ज्ञेयम्, बृहस्पतेरपि तत्र संकर्षणसंप्रदायान्तःपातात् । इति परमवाग्मित्वमुक्त्वा तेषां श्रीकृष्णाजित्वरशुद्धप्रेमवाक्यानां प्रत्युत्तरे तस्य तु यत्किञ्चित्सामर्थ्यं व्यञ्जितम् । सर्वत्र हेतुः—बुद्धिसत्तम इति । एवं श्रीभगवत इव षड्गुणा दर्शिताः । एतदेव च मनसि विचारितं श्रीभगवता नोद्धवोऽण्वपि मन्न्यूनः, इत्युद्धवनामा श्रीवसुदेवस्य भ्रातुर्देवभागस्य पुत्रस्तत्रास्तीति शेषः । यद्यपि हरिवंशे—“ उद्धवो देवभागस्य महाभागः सुतोऽभवत् । पंडितानां परं प्राहुर्देवश्रवसमुद्धवम् ॥ ” इति । द्वयोरपि भ्रात्रोरुद्धवनामानौ पुत्रौ कथ्येते, तथाप्ययं देवभागसुत एव ज्ञेयः । महाभागत्वं खलु तादृशकृष्णकृपायोग्यत्वं न तु पंडितमात्रत्वम् । तदेवमेव—“ कच्चिदंग महाभाग सखा नः शूरनदनः ” इति । स एव व्रजेश्वरेण तथा संबोधयिष्यते । श्लेषेण साक्षादुद्धवो मूर्तिमानुत्सव इति ॥ १ ॥ तमुद्धवम् । क्वचिद्रहसि ॥ * ॥ तस्य श्रीकृष्णदयितत्वादौ हेतुं तत्परतां च विशेषणैर्दर्शयँस्तादृशतद्वर्णनोद्देश्यमाह—तमिति । प्रेष्ठं बाल्यमारभ्यैवातिशयेन प्रीतिकर्तारम् । भक्तं परमादरेण सेवातत्परं च “ यः पञ्चहायनो मात्रा प्रातराशाय याचितः । तन्नैच्छद्रचयन्यस्य सपर्यां बाललीलया ॥ ” इत्यादितृतीयोक्तेः । अत एवैकांतिनं तदेकापेक्षकम् । यथोक्तं श्रीव्रजेन्द्रेण—“ एकान्तिनो यस्य न कञ्चनार्थं वांछन्ति ये वै भगवत्प्रपन्नाः ॥ ” इति । श्रीवैष्णवेऽपि—“ विहाय पितृदेवादीन्परिनिष्ठां गतो हरौ । तद्गाढप्रेमभिः पूर्ण एकान्तीति निगद्यते ॥ ” इति । अत्र सर्वयादवापेक्षामतीत्य तस्यैकान्तित्वं ज्ञेयम् । तथाभूतं तमाह । किमर्थम्—प्रपन्नानां तवास्मीति सकृद्याचमानानामपि, किमुत तदेकजीवनानां य आर्तिं हरति सः । तेषामार्तिं हर्तुमित्यर्थः । तस्य तत्तज्ज्ञानतादृशानुग्रहादौ योग्यं पदं—भगवानिति । सर्वज्ञदयादिगुणानां मर्यादावारांनिधिरित्यर्थः । नन्वपरिहार्यनानास्निग्धजनवेष्टितेन श्रीभगवता तादृशसंदेशो दुष्करस्तत्राह—क्वचित् । कथंचिल्लब्धे । तदेवं द्वितीयस्थाने हंत तादृशं संदेशं कया मुद्रयोवाच तत्राह—गृहीत्वेति । तच्च निजेष्टप्रयोजने तस्य रागोत्पादनेच्छातः परमगोप्यत्वेन शनैर्निकटे विवक्षातः, तदुक्तिप्रवृत्त्या प्रेमभरोदयस्वभावत्वाच्च ॥ २ ॥ मत्संदेशैर्मदाज्ञावचनैः ॥ * ॥ न इति बहुत्वं तत्पितृकत्वेनात्मनो बहुमननात् । किं वा—मत्पितृत्वेन भवादृशामपि तौ पितराविंत्यभिप्रायेण । इति तयोस्तस्य स्नेहं वर्धयति । ‘ नौ ’ इति क्वचित्पाठः । कृष्णरामयोरित्यर्थः । पित्रोर्मद्विच्छेददुःखितयोः प्रीतिं सुखमा सम्यक् बहुस्वचातुर्येण बलादिव वह प्रापय, मद्विना तयोस्तयोः प्रीतेर्दुःसाध्यत्वात् । यद्वा—प्रवाहन्यायेन कुरु यथा तत्पश्चादपि तयोः प्रीतिस्तिष्ठेदेवेत्यर्थः । ननु तत्र मम वराकस्य का शक्तिरित्याशंक्य संबोधयति—हे उद्धवेति । उद्धव एव त्वमसीति पूर्वोक्तसद्गुणनिधित्वं सूचयति । उद्धवशब्दस्य श्लेषार्थश्चोक्त एव । किञ्च—हे सौम्य हे शान्तमूर्ते, मनोज्ञेति वा । अस्तु तावत्तच्चातुर्यं त्वद्दर्शनमात्रेण च तयोः प्रीतिर्भवितेति भावः । इदं प्रोत्साहनार्थम् । गोपीनां तु मद्वियोगेनाधिस्तं विशेषेण मोचय । दृढबंधनवद्धृदि संलग्नमपुनःस्पर्शतया त्याजय । एवमाधिमोचनमात्रमेव तासां न तु प्रीतिं कर्तुं शक्ष्यसीत्यर्थः । तच्च संदेशैर्बहुभिरेव न तु तत्तद्वाक्चातुर्यादिना नापि द्वित्रैर्वा ॥ ३ ॥ ततः पतिपुत्रादित्यागेन । किं किं जातम् । अतोऽत्राक्षेपे । यद्वा—लोको देहस्तद्धर्मा अशनवसनानुलेपादयः । यद्वा—लोकाः स्वर्गादयस्तदर्थं धर्मा यागादयः । यद्वा—लोकानां जनानां धर्मः प्रवृत्तिलक्षणः । निवृत्तिमार्गे वर्तमाना इत्यर्थः । यद्वा—त्यक्ता दत्ता लोकेभ्यो धर्मा मदर्चनादिरूपा यैस्ते, मद्धर्मोपद

मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः ॥ स्मरंत्योंग विमुह्यंति विरहौत्कंठ्यविह्वलाः ॥ ६ ॥

पुत्रादयो याभिस्ताः । ततः किमत आह । ये त्यक्तलोकधर्मा इति । मन्निमित्तं त्यक्तौ लोकधर्मौविहामुत्रसुखे तत्साधनानि च यैस्तानहं बिभर्मि पोषयामि संवर्धयामि सुखयामीत्यर्थः ॥ ४ ॥ तासां वियोगाधिं दर्शयति द्वयेन । मयि ता इति । विरहेणौत्कंठ्यं तेन विह्वलाः परवशाः ॥ ५ ॥

ष्टारः । यद्वा—अत्यक्तो लोकधर्मः स्वविहितधर्मो वर्णाश्रमाचारलक्षणो यैस्ते, मत्प्रीतये ये स्वधर्मनिष्ठा इत्यर्थः । बिभर्मि स्वसायुज्यमावहामित्यर्थः ॥ * ॥ गोपीनां विशेषतः संदेशे द्वाभ्यां विशेषावस्थावर्णनेन कारणं वक्तुं प्रथमतः साधारणावस्थां वर्णयति—ता इति । विशेषणत्रयेण क्रमेण तासां स्वं विना धर्माद्यशेषार्थेषु देहेषु लोकेष्वपि नैरपेक्ष्यमुक्तम् । अन्यत्तैः । तत्रादिग्रहणाद्भोजनपानादयश्च दैहिकाः । यद्वा—मन्मनस्का इति बाह्यसर्वप्रियार्थानादरः । मत्प्राणा इति ततोऽपि प्रियाणामन्तरीणसर्वार्थानामनादरः । मदर्थ इत्यादिना “ भोक्तृत्वे सर्वदुःखानां पुरुषः प्रकृतेः परम् ” इत्यात्मपर्यवसायिसर्वभोगानादरात्मानादरश्च विवक्षितः । तत्रतत्र हेतुमाह—मामेव दयितं प्रियं मनसा गता निश्चितवत्यः, न तु बाह्यान्विषयान् । तथा प्रेष्ठं ततोऽपि प्रियतमम् मामेव न तु ततोंतरीणप्राणादीन्, मद्वियोगे तत्तदनादरात् । तथा निरुपाधिप्रेष्ठमात्मानमपि मामेव न तु देहिनम्, मद्वियोगे तस्यापि शून्यायमानत्वात् । मद्विनाभूतानां तासामात्मान्यत्र प्रीतिमात्रं न स्पृशतीत्यर्थः । तदेवं त्रिभिर्योगैः पदैर्मामेव पतिं निश्चितवत्य इत्यर्थः । न तु किंवदन्तीप्राप्तमन्यदित्यर्थः । तथैव ता एव वक्ष्यन्ते—‘ अपि बत मधुपुर्यामार्यपुत्रोऽधुनास्ते ’ इतीदं पद्यार्धं बहुत्र तत्त्ववादिनां टीकायामपि ध्रियते । किन्तु स्वामिपादैरनभिमतमिव लक्ष्यते मध्ये प्रविष्टस्य सुदुर्गमस्याप्यव्याख्यानात् । य इति सामान्येन निर्देशः, अधिकाराद्यनपेक्षया भरणस्यावश्यकताबोधनार्थम् । चकारात्तानपि किं पुनः प्राणाद्युपेक्षिकास्ता इत्यर्थः । यद्वा—मम मनो यासु ताः । किञ्च—मम ता एव प्राणा यतो मदर्थ—इत्यादि । तत्र हेतुः—मामेव इत्यादि । कैमुत्येन हेतुः—य इत्यादि । अहं ब्रह्मादिध्येयोऽपि बिभर्मि अंतर्धारयामि, चिंतयामीत्यर्थः । तथा चादिपुराणे—“ भक्ता ममानुरक्ताश्च कति सन्ति न भूतले । किन्तु गोपीजनः प्राणाधिकप्रियतमो मम ॥ ” इति । अतस्तासामाधेर्मदन्तःप्रवेशेन सदाहमप्याधिमानित्यर्थः । यद्वा—ये ताभिस्त्यक्ताः पत्यादिलोकाः, भोजनादिदेहधर्माः, लज्जादिसाध्वीधर्माश्च तानप्यहं बिभर्मि रक्षामि, किमुत ताः ॥ **विश्वनाथस्तु**—मामेम न तु स्वस्वपतिमन्यं दयितं प्रियं मनसा ज्ञातवत्यः, न केवलदयितमेव अपि तु प्रेष्ठम् । न च प्रेष्ठमेव किन्त्वात्मानम् । ताभिरहमेव स्वस्वजीवात्मा च निश्चित इत्यर्थः । स चाहमत्र मथुरायामतस्ताभिः स्वस्य देहा निर्गतात्मान एव मन्यन्ते, केवलं मदीययोगमाययैव दुस्तर्क्यया शक्त्या जीव्यन्त इति भावः । येऽन्येऽपि साधकभक्ता अपि मन्निमित्तं लोकधर्मांस्त्यजन्ति तानपि बिभर्मि किं पुनस्ताः ॥ ४ ॥ तासां गोपीनाम् । ता गोप्यः । औत्कंठ्यं रागित्वम् । प्रेयसां गेहादीनां मध्ये प्रेष्ठे तेभ्योऽपि प्रियतमे । विगतं ह्वलं चलनं यासां ताः ॥ * ॥ ननु वा भवन्मनस्कादिरूपास्ता एवं लब्धभवत्का एव कथमनु शोचन्तीति चेत्—सत्यम्, अन्तरनुसंधाने तादृश्य एव ताः, किं तु बहिरवधाने जाते परमन्यग्रा भवन्तीत्याह—मयीति । गोकुलस्त्रीत्वेन तावन्मदीयदर्शनमात्रजीविनाः, तत्रापि ताः अनिर्वचनीयस्वभावाः । द्वयोः प्रकर्षे तरब्बीयसुनौ बहूनां तु तमबिष्ठनाविति प्रियं तावत्सर्वं ममतास्पदं, ततोऽपि प्रियः प्रेयान् अहंतास्पदमात्मा ते च यद्येकस्य बहवः संभवन्ति तदा तेषां कोटिसंख्यानामपि प्रेष्ठे तानप्यतिक्रम्य ये मत्संबंधिनः प्रियास्तेभ्योऽप्यधिकप्रियमित्यर्थः । एवंभूते मयि ‘कुटिलकुंतलं श्रीमुखं च ते’ इति तद्व्याख्यानुसारेण निकटस्थेऽप्यार्तिप्रदे, संप्रति तु दूरस्थे इत्यर्थः । स्मरन्त्यो मम दूरस्थत्वं भावयन्त्यः, तद्भावनारंभवत्य

१ त्यक्तदैहिका इत्यस्याग्रे “ मामेव दयितं प्रेष्ठमात्मानं मनसा गताः ” इत्याधिकः पाठोऽस्त्येष्ट इति भाति ।

**धारयंत्यतिकृच्छ्रेण प्रायः प्राणान्कथंचन ॥ प्रत्यागमनसंदेशैर्बल्लव्यो मे मदात्मिकाः ॥ ६ ॥**

**गोकुलान्निर्गमनसमये शीघ्रमागमिष्यामीति ये प्रत्यागमनसंदेशास्तैः । मे मदीया बल्लव्यो गोप्यः । मदात्मिका इति । तासामात्मा यदि स्वदेहे स्यात्तर्हि विरहतापेन दह्येतैव तस्य मयि वर्तमानत्वात्कथंचिज्जीवंतीति भावः ॥ ६ ॥**

एव मुह्यन्ति मूर्च्छां प्राप्नुवन्ति । एवं तथाभावनायाः स्वल्पकालत्वं मूर्च्छायास्तु चिरस्थायित्वं व्यञ्जितम् । ततश्च हा कष्टं मद्भावनमपि कर्तुं न शक्नुवन्तीति भावः । वर्तमानप्रयोगेण स्मरणस्य मोहस्य च पौनःपुन्यं दर्शितम् । मोहे हेतुः—विरहेति । अतो लालास्रवादेरयमपस्माराख्यः सञ्चारी भावः । अतः " कुजगतिं गमिता न विदामः कश्मलेन कबरं वसनं च " इति पूर्वमपि तथावस्थास्पृष्टानामेव मया त्यक्तानां, संप्रति तु लब्धतदतिशयानां मयि भावस्य सर्वतः प्रचारादपि सांप्रतं तत्र गमने मम लज्जापि जायत इति भावः । अंगेत्यार्त्या संबोधनम् । श्लेषेण हे मदंगतुल्येति, तासां सान्त्वनाय प्रोत्साहनाय च । अत्र **विश्वनाथः**—ननु तासां यदि त्वमेव मनःप्राणादयः, प्रेष्ठ आत्मा च तर्हि ताः कथमत्र नायातास्तत्र स्थातुमेव कथं शक्नुवन्ति तत्राह—मयीति । ताः खलु गोकुलस्त्रियः गुञ्जा-गैरिक-मुरली-मयूरपिच्छालंकृतेन गोपवेशेनैव मया सह तत्र गोकुल एव विलासे प्राप्तनिष्ठा मयाप्यत्र नेतुमनभिप्रेताः कथमत्र वृष्णिपुर्यामागच्छेयुरिति भावः । ततश्च प्रेयस्यः मयि प्रेष्ठे दूरस्थे सतीति प्रियं तावत्सर्वं ममतास्पदं, ततोऽप्यधिको ममतास्पदमात्मा प्रेयान्, ते च यद्येकस्य बहवः संभवन्ति तेषामपि कोटिसंख्यानां प्रेष्ठ इति । यद्यात्मकोटिभ्योऽपि केचित्पदार्थाः प्रियाः संभवेयुस्तेषामपि मध्ये योतिप्रियस्तद्रूपे मयीत्यर्थः । अत एव विमुह्यन्ति विशिष्टां मूर्च्छां प्राप्नुवन्तीत्यर्थः । मदीयया दुस्तर्क्यया शक्त्या जीवमाना अपि न जीवयितुमेव शक्यंत इति भावः ॥५॥ तासां बल्लवीनाम् । विरहतापेन मद्वियोगाग्निना । तस्यात्मनः । इति भाव इति—अन्यत्र वर्तमानस्यान्यत्रत्यवह्निना दाहो न भवतीत्याशयः॥* ॥ अतिकृच्छ्रेणेति—तासां मत्प्राप्त्याशया प्राणधारणमिवातिकष्टं, प्राणत्यागस्तु सुगम एवेति। ननु केन प्रकारेण प्राणान्धारयन्तीत्यत आह—प्रतीति । गोकुलान्निर्गमनसमये शीघ्रमागमिष्यामीति ये प्रत्यागमनसंदेशास्तैः । अतो मत्प्राप्त्याशैव बलवती निर्गच्छतोऽपि प्राणान्बध्नातीति भावः । तत्र का भवन्ति तास्तत्राह—बल्लव्यः, यद्यपि ता बल्लवानामेव स्त्रियस्तथापि मे मदीया एव । तासां महामाधुर्यमयरूप-रस-गंध-शब्द-स्पर्शादिगंधमपि तत्पतयः स्वप्नेऽपि न लभंते, किं त्वस्मद्भार्या इमा इत्यभिमानमात्रमेवेत्यतो रसशक्त्यैव स्वपुष्ट्यर्थमननादित एव ता नित्यपरकीयाः कृता अपि मद्भोग्या मदीया एव, यतो मदात्मिकाः मत्स्वरूपशक्तेर्ह्लादिन्या अपि महासारप्रेमवृत्तित्वान्मत्स्वरूपभूता अपि सर्वोत्कृष्टह्लादरूपत्वान्मदाकर्षणसमर्थाः, अत एवात्मारामस्यापि मम ताभी रमणसुखमत्यधिकम्, अत एव मयात्मनः सकाशादप्यधिकं ता अनुकंपनीया इत्यनुकंपार्थकः कप्रत्ययः प्रयुक्तः । श्लेषेण—ममात्मा मनोरमणार्थी यासु ताः, मय्येवात्मा तथाभूतो यासां ता इति वा । मत्संभोगान्मदीया एवेत्यर्थः ॥ अत्र **तोषिणी**—अथ तासां दशमीं दशामपि शंकते—अत्यायासेन प्राणान्धारयन्ति निर्गच्छन्तोऽप्यवस्थापयन्ति । अतोऽग्रे कति दिनानि धारयितुं शक्यन्तीति भावः । ननु कोऽसावायासो येन धारयंति तत्राह—कथञ्चन केनापि प्रकारेण यत्नेन । तदेवं स्ववाक्चलनलज्जया कारणं व्यक्तमनुक्त्वा पश्चाद्गत्यंतराभावात्स्पष्टमेव निर्दिशति— । प्रतीतिसंदेशस्य बहुत्वं मध्येमध्ये संदेशान्तराणामपि प्रेरितत्वात् । इत्थं प्रथमोक्तमत्प्रत्यागमनादिनसंभावनप्रपञ्चः, ततो विलंबतर्कतो मूर्च्छा, ततस्तस्यामेवोद्भूतस्वाभाविकतत्स्मरणाच्चेतना, पुनस्तत्संभावनादिपौनःपुन्यादायासेनैव धारयन्तीत्यर्थः । मे बल्लव्य इति—ब्राह्मणस्यास्य ब्राह्मणीयमितिवन्मम गोपरूपस्य गोपीरूपा भार्या इत्यर्थः । एवं हि ' पित्रोर्नः प्रीतिमावह ' इत्यनेन गोपाभिमानित्वं स्वयमेव व्यंजितम् । न केवलं साधारणलोकरीत्या तादात्म्यव्यवहारस्ताभिर्मम, किन्तु मदात्मिका मत्स्वरूपभूतशक्तय इत्यर्थः । 'मन्मनस्काः' इत्यादिकं तूक्तमेव । ब्रह्मसंहितायाम्—" आनंदचिन्मयरसप्रतिभाविताभिस्ताभिर्य एव निजरूपतया कलाभिः । गोलोक एव निवसत्यखिलात्मभूतो गोविंदमादिपुरुषं तमहं भजामि ॥ " इति । तस्मात्परदारतया कल्पनं तासां वाग्निर्गलताप्रकटनाय । लीलाशक्त्या कृतमिति प्रातीतिकमात्रम् ।

श्रीशुक उवाच ॥ इत्युक्त उद्धवो राजन्संदेशं भर्तुराहृतः ॥ आदाय रथमारुह्य प्रययौ नंदगोकुलम् ॥ ७ ॥
प्राप्तो नंदव्रजं श्रीमान्निम्लोचति विभावसौ ॥ छन्नयानः प्रविशतां पशूनां खुररेणुभिः ॥ ८ ॥

संदेशं ' भवतीनां वियोगो मे न हि सर्वात्मना क्वचित् ' इत्यादिकम् ॥ ७ ॥ निम्लोचत्यस्तं गच्छति सति । छन्नं यानं रथो यस्येति तदा गोपीभिरज्ञातत्वेन नंदसंगं स

परशय्यासंबंधश्च ' नासूयन्खलु कृष्णाय ' इत्यादौ प्रख्यात एवेति भावः । यद्यपि मदीयत्वभावमयेन प्रेम्णा मद्वाक्ये विश्वासानपगमान्मत्प्रत्याशां कदाचिदपि त्यक्तुं न शक्नुवन्ति तथापि प्राय इति काश्चिन्न धारयंत्यपीति संभाव्यते । अतः प्रत्यागमनपर्यवसानैरेव संदेशैरधुनापि ताः सान्त्वनीया इति भावः । यद्यप्यत्र सर्वेऽपि व्रजवासिनस्तदेकजीवनत्वात्सान्त्वनार्हाः ' एषां घोषनिवासिनाम् ' इत्यादिषु ' यद्धामार्थसुहृत्प्रियात्मतनयाः ' इत्यादिभ्यः, 'अहो भाग्यमहो भाग्यम्' इत्यादिभ्यः, " दुस्त्यजश्चानुरागोऽस्मिन्सर्वेषां नो व्रजौकसाम् " इत्यादिभ्यः, कालियह्रदप्रवेशोत्थानयोः पशूनां स्थावराणामपि दुःखसुखवर्णनाच्च । अतो मनसि चिन्तितं स्वयं भगवता ' तस्मान्मच्छरणं गोष्ठम् ' इत्यादि, तत्रापि श्रीमदुपनंदादयस्तत्रापि श्रीदामादयस्तदर्हास्तत्रतत्र तथातथा प्रशस्तत्वात् । अतः श्रीव्रजराजेन वक्ष्यते—" अपि स्मरति नः कृष्णो मातरं सुहृदः सखीन् । गोपान्व्रजं चात्मनाथं गावो वृंदावनं गिरिम् ॥ " इति । तथापि यस्तेषामनुल्लेखस्तस्मादिदं गम्यते—केषुचिच्छ्रीपित्राद्यंतःपातित्वेन सान्त्वनं, केषुचिदभिप्रायविशेषेण सान्त्वनाभाव एव सान्त्वनमभिप्रेतमिति । तथाहि— श्रीमति गोकुले प्रेमा खलु विविधो दृश्यते—उत्कण्ठाप्रधानो विस्रंभप्रधानो विवेकशून्यश्चेति, स चान्यत्रापि गरिष्ठः सन् प्रेष्ठस्फूर्तिसाक्षात्कारमेव जनयति । यथा **श्रीलीलाशुकचरणै**रुक्तम्—" अग्रे समग्रयति कामपि केलिलक्ष्मीमन्यासु दिक्ष्वपि विलोचनमेव साक्षि " इति । तत्र च **श्रीजयदेवचरणै**रपि वर्णितम्—" श्लिष्यति चुम्बति जलधरकल्पं हरिरुपगत इति तिमिरमनल्पम् " इति । अत्रैव च वक्ष्यते श्रीव्रजराजेन—'मनो याति तदात्मताम्' इति । अत्रोत्तरोभयभावानां साक्षात्कारबुद्धिजनिकैव सा भवेत्, विस्रंभाविवेकयोरन्यत्वप्रतीतिजननायोग्यत्वात् । प्रथमभावानां तु साक्षात्कारेऽप्यप्रतीतिः स्यात्किमुत स्फूर्तौ, उत्तरकाले तु सर्वथोत्कण्ठाया विकल्पस्वभावत्वात् । यथा द्वारकाजलविहारे पट्टमहिषीणां वर्णयिष्यते । अत उक्तमुत्कण्ठाप्रधानप्रेमाणः पितरौ, प्रेयस्यश्च वियोगमानिन्य एवासन्, 'यथैवोक्तम्' इत्यादिना वक्ष्यते च । 'इति संस्मृत्य' इत्यादिना, 'इति गोप्यो हि' इत्यादिना च । अथ ये विवेकशून्यप्रेमाणो गवादयः, ये च विस्रंभप्रधानप्रेमाणः श्रीदामादयस्ते संयोगमानिन एवासन्, गवादीनां स्वानुभवेनैव निश्चयात् । श्रीदामादीनान्तु मां तु मथुरात इहागत्यैकान्ते मिलतीति रहो मिथः संवादेन तद्दार्ढ्यात् । यथैवैषां हर्षोऽपि वर्णयिष्यते—'वासितार्थेऽभियुद्ध्यद्भिः' इत्यादिना । तस्मात्पित्रोः प्रेयसीनां च सान्त्वनमेव सान्त्वनमन्यथा समाधानाभावात् । श्रीदामादिषु सान्त्वनाभाव एव सान्त्वनं सान्त्वनेन प्रत्युत संदेहापत्तेरिति । तदेवं द्विविधानामुत्कण्ठादिप्रधानानां सान्त्वनाऽसान्त्वनव्यवस्थायां सिद्धायामन्येषां तत्तदनुगतभावानां तथैव तद्व्यवस्था । यथा—"अक्रूर आगतः किं वा यः कंसस्यार्थसाधकः" इति वचनोपलक्षितानां दुःखं, वृक्षाणां पक्षिणां च तथातथा वर्णयिष्यमाणानां प्राचीनतत्स्पर्शनादिना संसारविमुक्तानां सुखमिति कालियह्रदप्रवेशनिर्गमयोः स्थावराणामपि किमुत मृगपर्यन्तप्राणिनाम् । दुःखसुखयोर्व्यक्तिस्तु तत्तदनिष्टेष्टतापरमातिशयभयलीलाविशेषश्लिष्टकालस्य तादृशस्वभावत्वादेव जातेति मंतव्यम् । यत्र भुवि दिवि च मंगलामंगलनिमित्तानि जातानि इति । **केचित्तु**—सखीनां गमनागमनाभिप्रायेण सान्त्वनमिति व्याचक्षते तन्न, श्रीगोपेन्द्रस्य प्रश्ने सखीनित्यस्य स्वारस्यात् । तदेवमग्रिमग्रन्थोऽपि व्याख्येयः ॥ ६ ॥ नंदगोकुलं नंदग्रामम् ॥ * ॥ भर्तुरिति तस्य तद्भावेन भक्तिभरो द्योत्यते । रथमारुह्येति शीघ्रगमनं बोधयति । प्रकर्षेण प्रकृष्टमनोरथाचरणादिना ययौ । नंदयतीति नंदस्तस्य गोकुलमिति तद्वद्गोकुलस्यापि श्रीकृष्णप्रेम्णा नंदकत्वमभिप्रेतम् ॥ ७ ॥ विभावसौ सूर्ये 'सूर्यवह्नी विभावसू' इत्यमरः । यानं

वासिताऽर्थेऽभियुध्यद्भिर्नादितं शुष्मिभिर्वृषैः ॥ धावंतीभिश्च वास्राभिरूधोभारैः स्ववत्सकान् ॥ ९ ॥ इतस्ततो विलंघद्भिर्गोवत्सैर्मंडितं सितैः ॥ गोदोह शब्दाभिरवैर्वेणूनां निस्वनेन च ॥ १० ॥ गायंतीभिश्च कर्माणि शुभानि बलकृष्णयोः ॥ स्वलंकृताभिर्गोपीभिर्गोपैश्च सुविराजितम् ॥ ११ ॥ अग्न्यर्कातिथिगोविप्रपितृदेवार्चनान्वितैः ॥ धूपदीपैश्च माल्यैश्च गोपावासैर्मनोरमम् ॥ १२ ॥ सर्वतः पुष्पितवनं द्विजालिकुलनादितम् ॥ हंसकारंडवाकीर्णैः पद्मषंडैश्च मंडितम् ॥ १३ ॥ तमागतं समागम्य कृष्णस्यानुचरं प्रियम् ॥ नंदः प्रीतः परिष्वज्य वासुदेवधियाऽर्चयत् ॥ १४ ॥

लब्धवानिति सूचयति ॥ ८ ॥ व्रजं वर्णयति पंचभिर्वासितार्थ इत्यादिना । वासिताः पुष्पवत्यो गावस्तन्निमित्तमभितो युध्यद्भिः शुष्मिभिर्मत्तैर्वृषैर्नादितम् । वास्राभिर्धेनुभिः । स्ववत्सकान्प्रति ॥ ९ ॥ विलंघद्भिरुत्पतद्भिः गोदोहशब्दैः सहाभितो रवाः मुंच मा मुंच नय आनय देहि गृहाणेत्यादयो यस्मिंस्तम् । वेणूनां निस्वनेन च मंडितम् ॥ ॥ १०॥ गायंतीभिर्गोपीभिर्गोपैश्च गायद्भिः सुविराजितम् ॥ ११॥ अग्न्याद्यर्चनान्वितैर्गोपगृहैर्धूपादिभिश्च मनोरमम् ॥ १२॥ षंडैः समूहैः॥ १३॥ आर्चयत्पूजयामास ॥ १४॥

रथः । तदा प्रवेशसमये । 'यानं स्याद्वाहने गतौ' इति मेदिनी ॥ * ॥ श्रीमान् स्वशोभया रथशोभया च विराजमानः । 'श्रीमन्' इति पाठे तु संबोधनम् ॥ ८ ॥ 'वासिता वृषकामिनी' इति यादवः । 'शुष्मं तेजसि सूर्ये च' इति मेदिनी । शुष्मं तेजोबलवीर्यरूपं विद्यते येषां ते शुष्मिणस्तैः । वासयति दुग्धं स्वस्यामिति वास्रा 'धेनुर्वास्रा रोहिणी च' इति कोशांतरात् ॥ * ॥ पञ्चभिर्व्रजं वर्णयति—मदीयव्रजस्य शोभामुद्धवः पश्यत्विति भगवदिच्छाशक्तिप्रेरिता योगमाया निर्वेद-विषाद-दैन्यादिसंचारिभिर्विधुरं कृष्णवियुक्तप्रकाशं संवृत्य हर्षौत्सुक्यचापलोत्साहादिभिरतिमनोहरं कृष्णसंयुक्तप्रकाशं प्रथमं समये सामान्यत एवोद्धवं दर्शयामासेति ज्ञेयम् ॥ ९ ॥ मुञ्चादिक्रियाणां वत्सं क्षीरञ्चेति यथायथं शेषः ॥ * ॥ आदिना उपेहि, अपसर, तरस्व, मा त्वरस्वेत्यादीनां ग्रहः ॥ १० ॥ शुभानि मंगलकराणि ॥ * ॥ गोपीभिः प्रेयसीभ्य इतराभिः 'मदर्थे त्यक्त दैहिकाः' ( ४ ) इत्युक्तेः । गोपैश्च श्रीदामादिभिरन्यैश्चालंकृतैरिति ध्येयम् ॥ ११ ॥ माल्यैः पुष्पैः ॥ * ॥ एवं लौकिकशोभां वर्णयित्वा वैदिकशोभामपि वर्णयति—अग्नीति । नित्यहोमोपस्थानादिनाग्न्यर्कयोः, ग्रास दानादिना गवाम्, अतिथ्यादीनां चतुर्णां सत्कारादिना । यद्वा—अग्न्यादयः पञ्च भगवत्पूजाधिष्ठानान्येव, पित्रादयश्च स्वगृहस्थानामवश्यार्च्या एवेति, वैष्णवानां ते च तदीयत्वेनैवेति तेषामर्चनान्वितैः । यद्यपि महाभाग वैतरण्युपास्यानां व्रजवासिनां विधिकैंकर्यं नास्ति तथापि श्रीभगवत इव तेषां च कर्मकरणमिदं लीलयैवेति ज्ञेयम् । किन्तूभयथा वैश्याभीरतया द्विजत्वमेवैषां दर्शितम् । तदुक्तं श्रीकृष्णरामनामकरणे—'कुरु द्विजातिसंस्कारम्' इति । 'वैश्यस्तु वार्तया जीवेत्' इत्यादौ वार्ता चतुर्विधा । तत्र 'वयं गोवृत्तयोऽनिशम्' इति च । अंतर्गृहशोभां वर्णयति—धूपेति ॥ १२ ॥ "षं ( खं ) डोऽर्थे मणिदोषे च समूहेक्षुविकारयोः" इति धरणिः ॥ ॥ * ॥ बहिःप्रदेशशोभां वर्णयति—सर्वत इति । पद्मषण्डैः सरोवरादिगतैः ॥ १३ ॥ तमुद्धवम् ॥ * ॥ आगतं स्वगृहद्वारि प्राप्तं सन्तम् । समागम्य श्रुत्वाभ्यंतरतः सन्निकृष्टमागम्य । अनुचरं भक्तमतः प्रियं कृष्णस्यात्मनो वा । वासुदेवधिया वैष्णवस्य तदधिष्ठानतदभेदेन ॥ अत्र **विश्वनाथः**—अथोद्धवः कृष्णवियुक्तप्रकाशस्थं नंदालयं प्रविवेशेत्याह—तामिति । समागम्याभ्यंतरतः समीपमागत्य, स्वपुत्रसारूप्यावलोकनेनोद्धवस्य

१ शब्दादिरवैरिति पाठाभिप्रायेण ।

भोजितं परमान्नेन संविष्टं कशिपौ सुखम् ॥ गतश्रमं पर्यपृच्छत्पादसंवाहनादिभिः ॥ १५ ॥ कच्चिदंग महाभाग सखा नः शूरनंदनः ॥ आस्ते कुशल्यपत्याद्यैर्युक्तो मुक्तः सुहृद्वृतः ॥ १६ ॥ दिष्ट्या कंसो हतः पापः सानुगः स्वेन पाप्मना ॥ साधूनां धर्मशीलानां यदूनां द्वेष्टि यः सदा ॥ १७ ॥ अपि स्मरति नः कृष्णो मातरं सुहृदः सखीन् ॥ गोपान्व्रजं चात्मनाथं गावो वृंदावनं गिरिम् ॥ १८ ॥

कशिपौ शय्यायां संविष्टम् ॥ १५ ॥ १६ ॥ साधूनामिति । कर्मणि षष्ठ्यः ॥१७॥ गावो गाः । गिरिं गोवर्धनम् ॥ १८ ॥

च स्वद्रष्टृजनमात्रोत्सवदायित्वशक्त्या च श्रीनंदस्य बाह्यव्यवहारानुसंधानसंभाषणादिसामर्थ्योदयो ज्ञेयः । वासुदेवधियाऽतिथिरूपेण मदिष्टदेवो नारायण एवागत इत्यार्चयत्पाद्यादिना ॥ १४ ॥ संविष्टं शायितम् । 'स्वप्नः संवेश इत्यपि' इत्यमरः ॥ * ॥ पूर्वं परमान्नेन पायसेनोत्कृष्टान्नेन वा भोजितम्, ततः कशिपौ शय्यायां कायं प्रसार्य विश्रान्तवंतम्, ततश्च सेवकद्वारा पादसंवाहनादिना गतश्रमम्, सुप्तं सुखोपविष्टं पर्यपृच्छदित्यर्थः ॥ अत्र **विश्वनाथः**—भोजितं परमान्नेनेति—यद्यपि मथुराप्रस्थानावधि व्रजस्थजनानां सर्वमेव महानसममार्जितमलिप्तं तृणपत्रधूलिभिः परिपूर्णं लूतातंतुवितानमयमेवाभूत्, परस्परप्रतिवेशिजनदत्तैर्दधिदुग्धतक्रादिभिरेव प्राणान्धारयन्तो हे हताः स्म इति वादिनः सर्वे विषीदन्त्येव, तदपि तद्दिने हंतहंत मद्गृहमायातोऽयमुद्धवोऽद्य मा क्षुध्यात्विति व्रजराजस्याशयमभिज्ञाय कश्चित्परिजनो ब्राह्मणः खण्डतण्डुलपयोभिरेकपुरुषमात्रभोज्यं परमान्नं पपाचेति ज्ञेयम् । पादसंवाहनं सेवकद्वारैव उद्धवस्य तद्भ्रातृपुत्रत्वात् ॥ १५ ॥ मुक्तो बंधनक्लेशात् ॥ * ॥ तत्र श्रीकृष्णस्य विश्लेषदुःखवृद्धिमाशंक्य सहसा स्पष्टं प्रष्टुमशक्यत्वादादौ तत्प्रश्नभूमिकारूपं वसुदेवकुशलं पृच्छति—कच्चिदिति । श्रीकृष्णस्य सन्निहितत्वाद्भवान्महाभागतायां योग्य एव, वयं तादृशतायामयोग्यास्तेन परित्यक्तु योग्या एवेति भावः । शूरनंदन इति—तेन तत्पितुर्भाग्योदयोऽपि विवक्षितः । तच्च श्रीकृष्णस्य तत्त्रायमाणत्वाभिप्रायेण । मुक्तः आपद्भ्यः । अपत्याद्यैर्युक्त इत्यनेन च सामान्यतः सर्वेषां तथा श्रीकृष्णस्यापि कुशलं पृष्टम् ॥ १६ ॥ सानुगः केश्यादिसहितः । स्वेन स्वकीयेन 'स्व आत्माऽऽत्मीययोरपि' इति हलायुधः । यदूनामिति द्वितीयार्थे षष्ठी । यद्वा—कर्मेति पदमध्याहार्यम् । यदूनां कर्म कृत्यं यो द्वेष्टीति ज्ञेयम् ॥ * ॥ क्षणं निजधैर्यार्थं मुक्तत्वस्य मुख्यकारणमेव साक्षात्कृष्णप्रस्तावव्यवधानतया प्रस्तौति—दिष्ट्येति । स्वेनेति तद्धनने दोषः परिहृतः । पाप्मानमेवाह—साधूनां सदाचाराणामत एव धर्मपराणाम् । तत्र श्रीकृष्णगमनमस्माभिरप्यनुज्ञातमिति भावः ॥ १७ ॥ न इति सामान्येनोक्तं, पुनर्विशेषत आह—मातरमिति ॥ * ॥ ततश्च धैर्ये चिरमक्षमः साक्षादेव प्रष्टव्यमेव पृच्छति—अपीति । कृष्णः सर्वचित्ताकर्षको मत्पुत्रः किं स्मरति किं नः विस्मृतवानस्तीत्यत्र न इति बहुत्वमुपनंदाद्यपेक्षया । सा च समानास्निग्धत्वविवक्षया । मातरमिति तन्मात्रनिर्देशस्तु तस्या अत्यन्तदुःखदर्शनव्यग्रतया तदेकस्फुरणात् । सुहृदः संबंधिगोपालतन्मातुलादीन् । सखीन् श्रीदामादीन् । गोपीनिति साधारणान्, एकशेषत्वेन गोपीरपि, ताश्च तादृशीः । आत्मा कृष्ण एव नाथो यस्य तम् । व्रजस्य तन्नाथत्वेन सर्वेषां तन्नाथत्वं सिद्ध्यतीत्यस्यैव विशेषणं दत्तम् । गावो गाः गौरवानुसारेण यथाक्रमवन्न्यूनोक्तिः । वृन्दावनाद्गिरेरगुरुत्वं तदन्तर्भूतत्वात् । अथ वा—प्रथमत आत्मस्फूर्तेरेव लभ्यत्वात्पूर्वं न इत्युक्तम् । ततश्चोत्तरोत्तरस्यासंकोचस्थानत्वातिशयेन सान्निध्यातिशयात्स्मरणातिशयसंभावनया सखिपर्यंतानुक्रमोक्तिः । अथ विशेषस्मरणासंभावनया सामान्यत्वेनापि द्वयोस्तद्विषयत्वं पृच्छति पदद्वयेन । तत्रापि सामान्योक्तिः—व्रजश्चेति । तत्रतत्राऽसंभावनया पुनर्विशेषोक्तिः—गाव इति । अहो अहरहस्तमपि त्यक्त्वा यत्संगे यत्र चारमत, ता गास्तद्वृंदावनञ्च किं स्मरति । तत्र च विचित्रक्रीडासुखसंपत्कल्पद्रुमं स्वयं प्रवर्तितपूजनं सप्ताहं स्वकरे धृतं गिरिं वा स्मरति । मारितेऽप्येकस्मिन्कंसे तत्पत्नीद्वयानुवर्तिनामन्यत्र च तद्भयपित्रादीनां परःकोटीनां दुरुद्यमभाजां प्रतिघातार्थं, स्वजनानामपि यदूनां ततस्तत आनीय सुखवासार्थं व्यग्रचित्तत्वादात्मनः स्मरणमपि तस्य तत्रतत्र प्रतिरुद्धस्य न सुघटते, किमुतान्येषामिति भावः ॥ अत्र **विश्वनाथः**—ततः साश्रुगद्गदं पृच्छति—अपीति । मातरमिति—तन्मातुर्दुरवस्था त्वयैव दृश्यतामिति

**अप्यायास्यति गोविंदः स्वजनान्सकृदीक्षितुम् ॥ तर्हि द्रक्ष्याम तद्वक्त्रं सुनसं सुस्मितेक्षणम् ॥ १९ ॥**

**अप्यायास्यत्यागमिष्यति किम् सकृदपि ॥ १९ ॥**

तर्जन्या तां दर्शयति । आत्मनाथमिति—संप्रति निःशोभं व्रजं पश्येति भावः ॥ अत्र **क्रमसंदर्भः**—" अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया । गतांश्चिरायिताञ्शत्रुपक्षक्षपणचेतसः ॥ " इति वक्ष्यमाणानुसारेण जरासंधादिदुर्जयनिर्जयादिकृत्यशेषेऽपि कारणांतरमन्यथा तैस्तेषां व्रजजनानामपि महानुपद्रवः स्यात् । अत्रौदासीन्यव्यञ्जनाय स्वनिकटेऽपि तान्नाजुहाव । किञ्च—युगपदुभयत्रापि पित्रादिव्यवहारस्याभिरुचितलीलावेशादीनां समञ्जसताया दुर्घटत्वं स्यात् । निजप्रेयसीनाञ्चानयनेनाप्यसमञ्जसत्वमिति । अत एव पूर्वमपि 'वयञ्च स्नेहदुःखितान् । ज्ञातीन्वो द्रष्टुमेष्यामः ' इत्येवोवाच न त्वाहरिष्याम इति । अतस्ताद्दशानपि वो वयमेव द्रष्टुमेष्यामो न तु यूयमत्रागच्छतेति व्यञ्जनामभिप्रेत्यैव तयोर्दिदृक्षया स्वयं नंदादयोऽपि निकटादपि व्रजान्नागतास्तत्तदुपद्रवापातात् । पुरे व्रजे च युगपत्प्रकटा स्थितिर्न युक्ता तज्ज्ञाने श्रीनंदादीनामस्मदीयत्वज्ञानहान्या बंधुभावहानिश्च स्यात् । पुत्रादिरूपस्य स्वस्य महाराजताश्रवणेन तूत्कण्ठातिशयप्रेमानंदबुद्धिः स्यात् । यथा वक्ष्यते—' यथा दूरचरे प्रेष्ठे ' इत्यादि । तस्मात्तथा स्थितिमपि न चकार । अप्रकटा स्थितिस्तु तस्य तत्र सदैवास्त्येव तथैव प्रतिपादयिष्यते ॥ १८ ॥ तर्हि गोविंदागमनावसरे । तद्वक्त्रं गोविंदमुखम् । गोविंद इति गोप्रियत्वमाह । तदर्थमायास्यति चेत्—तर्हीति ॥ * ॥ अप्यायास्यतीति—किंस्विदुद्धव तन्मनोऽभिप्रायं जानासीति भावः । ननु जानाम्येव स आयास्यति, युष्मान्सान्त्वयिष्यति, निश्चलमत्र स्थास्यतीति, तत्रास्मत्सान्त्वनं दूरे वर्ततां, निश्चलवासोऽपि मा भवतु किन्तु तद्दर्शनमात्रमहं याचे इत्याह—गोविन्द इति । स्वजनानस्मान्विरहमहाज्वरपीडितानद्य श्वो वा मरिष्यतो द्रष्टुमपि सकृदपि किमायास्यति गोविन्द इति । परःपरार्धान्गास्तदुपलक्षितानि कोटिशः स्वर्णमुद्रा मुक्ताहीरकादिरत्नबहुराजतकानकपात्रविविधवस्त्रालंकारचन्दनागुरुकुङ्कुमाद्यनेकगृहद्रव्याणि विन्दतां लभताम् । आवयोर्मृतयोरेतेषु वस्तुषु कोऽन्यः स्वत्वं कल्पयेदत एतानि गृहीत्वा यत्र तस्य वस्तुमिच्छा तत्र वसत्विति भावः । ननु किमेवं द्योतयसि तमागतप्रायं विद्धीति, तत्र विलम्बमसहमान आह—कर्हीति । ' तर्हि ' इति च पाठः । द्रक्ष्याम इति—सलोप आर्षः । तच्चंद्रकोटितिरस्कारि वक्त्रं, तां निरुपमां नासाम्, तदमृतमधुरं स्मितम्, ते कमलदलाकारे सुदीर्घनयने तस्मिन्नन्तकाले उपसन्ने दृष्ट्वैव म्रियेमहीत्याकांक्षा महती वर्तत इति भावः ॥ अत्र **तोषिणी**—ननु धीमान्कृतज्ञोऽसौ सदा स्मरत्येव किन्तु ' विधाय सुहृदां सुखम् ' इत्युक्तेः कार्यवशात्किञ्चिन्मात्र एव विलम्बः स्यादित्याशंक्य तत्स्मरणस्य फलं द्वयमन्यत्पृच्छति—अपीति । गोविंदः गोकुलपालक इत्यागमनस्यावश्यकतोक्ता । स्वशब्देन स्नेहपात्रतयेक्षणावश्यकता च । आस्तां पौनःपुन्याशा सकृदपि तथैवास्तां सान्त्वनाद्याशा, ईक्षितुमपि किमायास्यतीति । तत्रेक्षितुमिति स्वेषां महाव्याधितानामिव तापः सूचितः । सकृदिति—तत्राप्यसंभावितजीवनानामिव यन्मात्रेणास्मासु मरिष्यमाणानां पुनर्दर्शनाभावदुःखं यथाकथञ्चिज्जीविष्यतां च पुनर्दर्शनासंभावनदुःखमुभयेषाञ्चापाततस्तृष्णाया असह्यतादुःखं नंक्ष्यतीति भावः।तस्मिन्नपि तदागमने द्वयं फलान्तरं सवैयग्र्यमभिव्यनक्ति—कर्हीति । कदाऽऽगमनं स्यात्कदा द्रक्ष्याम इत्यर्थः । अन्यत्पूर्ववत् ॥ **संदर्भस्तु**—'मा शोचतं महाभागौ' इत्यादौ " भवतीनां वियोगो मे न हि सर्वात्मना क्वचित् " इत्यादौ च किन्त्वसौ प्रकटलीलाविर्भाविणां तेषामनुभवगोचरो न भवति तस्माद्दन्तवक्त्रवधान्ते पाद्मोत्तरखण्डे वर्णयिष्यमाणं भागवतमते च व्यञ्जयिष्यमाणं यावत्तत्र निजगमनं संपद्यते तावत्तेषां यथा केनाप्यपदेशेनासावनुभवगोचरः स्यान्महाराजत्वे च वैभवश्रवणं स्यात्तथा समाधातुं स्वयमगत्वा स्वस्यागमने केवलं श्रीरामगमनं च दुःखकरं मत्वा स्वतुल्येन श्रीमदुद्धवेन प्रेयस्त्वेन तादृश्यं संदिश्य श्रीव्रजवासिनः सान्त्वयामासेति क्रमप्राप्तां लीलां वक्तुमारभतेऽध्यायद्वयेन—' वृष्णीनाम् ' ( १ ) इति । ' ये त्यक्त— ' ( ४ ) इति । यच्छब्दसामान्यनिर्देशस्तन्निर्देशश्च विप्रत्वाद्यनपेक्षार्थः । चकारात्तानपि किमुत तन्मनस्का इति । धारयन्तीति ( ६ )—अतः प्रत्या

दावाग्नेर्वातवर्षाच्च वृषसर्पाच्च रक्षिताः ॥ दुरत्ययेभ्यो मृत्युभ्यः कृष्णेन सुमहात्मना ॥ २० ॥ स्मरतां कृष्णवीर्याणि लीलापांगनिरीक्षितम् ॥ हसितं भाषितं चांग सर्वा नः शिथिलाः क्रियाः ॥ २१ ॥ सरिच्छैलवनोद्देशान्मुकुंदपदभूषितान् ॥ आक्रीडानीक्षमाणानां मनो याति तदात्मताम् ॥ २२ ॥ मन्ये कृष्णं च रामं च प्राप्ताविह सुरोत्तमौ ॥ सुराणां महदर्थाय गर्गस्य वचनं यथा ॥ २३ ॥

श्रीकृष्णोपकारस्मरणादिभिरनुपमानंदेनाभिभूयमान आह दावाग्नेरित्यादिना । वाताद्वर्षाच्चेति । वृषात्सर्पाच्चाघासुरात् अन्येभ्यश्च दुरतिक्रमेभ्यो मृत्युभ्यः श्रीकृष्णेन रक्षिताः स्म ॥ २० ॥ किं च । स्मरतामिति । लीलयाऽपांगेन निरीक्षितम् । अंग हे उद्धव ॥ २१ ॥ न केवलं शिथिला एव किं तु शनैःशनैरुपरमंतीत्याह । सरिच्छैलेति । सरितश्च शैलाश्च वनोद्देशाश्च तान् । आक्रीडान् क्रीडास्थानानि तदात्मतां मुकुंदरूपताम् ॥ २२ ॥ सुराणामर्थायेह प्राप्तौ महद्गंभीरं गर्गस्य वचनं यथा ॥ २३ ॥

गमनपर्यन्तैरेव संदेशैरधुनापि ताः सान्त्वनीयाः । एतत्पश्चाद्वर्णितमेव ॥ १९ ॥ वातवर्षादिन्द्रकृतात्, वृषसर्पाच्चेति समाहारद्वंद्वः । अन्येभ्यः केश्यादिभ्यः । मृत्युभ्यो मृत्युहेतुभ्यः ॥ * ॥ ततः सधैर्यमिव स्वेषु तत्क र्तृकात्मदुःखाद्यनपेक्षिस्नेहशतं निजसान्त्वनार्थमिव स्मरन्, प्रत्युत तेन हृदि विदीर्यमाण इव विलपति—दावाग्नेरिति । अहो परमबाल्यादेव तेनास्माकं रक्षा मुहुरेव कृताऽस्ति, कति वा वर्णयामः । यत्र दावाग्नेरपि स्वय मनुकंपावेशेन पातुमारम्भः ॥ **विश्वनाथस्तु**—ननु नैव मरिष्यथ बहुकालमेव तं स्वसूनुं लालयन्तो जीविष्यथेति, अधुना तु मृत्युहस्तान्न मुच्यामहे इति वक्तुमतीतान्मृत्यून्स्मरति—दावाग्नेरिति । सुमहात्मना सुष्ठु महानात्मा कारुण्यप्रभावादिनिरुपाधिप्रेमास्पदादिस्वभाव औत्पत्तिको गुणो यस्य तेन । किन्त्वधुना सुमहोग्रदावानलात्कथं तेन रक्ष्यामह इति न जानीम इति भावः ॥ २० ॥ अन्यदाह—किञ्चेति । क्रिया गृहादिविषयाः ॥ * ॥ एवं पद्यद्वयेन माधुर्यप्रभावौ स्मृतौ, तत्रोभयथापि वैयग्र्यं लब्ध्वा एतदेव प्रात्यहिकमात्मदुःखं निवेदयति—स्मरतामिति । कृष्णेति—कृष्णस्येत्यर्थः । "सुपां सुलुक्—"इत्यादिना सुपो लुक् । अत एव लीलेत्यादावप्यन्वयः । वीर्याणि दावाग्निमोक्षणादिरूपस्वभावमयचरितानि । न केवलं तान्येवापि तु माधुर्यमयचरितानि चेत्याह—लीलेति । लीला नेत्रयोः स्वाभाविकविलासः, तत्पूर्वकमपांगेन लज्जास्वभावान्नेत्रैकदेशेनैव निरीक्षितम्, सर्वत्रैव स्निग्धस्वभावतया सावधानमीक्षणम्, तथा तत्रैव हसितं तत्रैव भाषितञ्च स्मरतां तद्व्यसनमापन्नानां सर्वा भोजनादिक्रियाः शिथिलाः अंतर्व्यग्रतया बहिः प्रयत्नशून्याः, ईश्वरेणैव प्रवर्तिता इत्यर्थः । क्रियाभिरन्यचित्ततया वाऽस्वस्थास्तिष्ठेम तदपि न सिद्ध्येदिति भावः ॥ **विश्वनाथः**—ननु तदीयमुखचन्द्रस्मरणसुधयैव सर्वे संतापाः शाम्यन्तीति—सत्यम्, तत्स्मरणं सर्वसन्तापहरणमपि संप्रति दुरदृष्टवशादस्माकं सर्वसन्तापकरमेवाभूदित्याह—स्मरतामिति । क्रियाः शिथिलाः स्नानभोजनाद्या अभ्यासवशाज्जायमाना अपि शिथिलीभवंति । अत एव जीवाम इति भावः ॥ २१ ॥ तदात्मतां तस्मिन्नेव व्याप्ततताम् ॥ * ॥ ननु गृहावस्थाने पुत्रस्मरणमधिकं स्यात्तत्त्यागाय गाः पालयतां यमुना तीरे भ्रमतामित्याशंक्य तेनाप्यप्रतिकारं निवेदयति—सरिदिति । उद्देशाः प्रदेशाः, तान् मुकुंदस्याजगररक्षणादिभ्योऽस्मदादिमुक्तिदातृत्वेन तन्नाम्ना व्रजे विख्यातस्य पदैश्चरणचिह्नैः श्रीपृथ्वीदेव्यापि स्नेहादद्यापि निजांके तथैव रक्ष्यमाणैर्विभूषितान् । तथाऽऽक्रीडान् तत्तत्क्रीडाचिह्नमनोहरान् । ईक्षमाणानां प्राणिमात्राणां किमुतास्माकं मनस्तदात्मतां तत्स्फूर्तिमयतां याति । अस्माभिः किं कर्तव्यमिति भावः ॥ २२ ॥ गंभीरं दुर्ज्ञेयार्थम् 'प्रागयं वसुदेवस्य' इत्याद्युक्तरूपम् । यद्वा—महते भूभारसंहारलक्षणायार्थाय प्रयोजनाय । इह च सामानाधिकरण्ये महतष्टेराकाराभावश्छांदसः ॥ * ॥ एवं हठात्पुनरागतेन माधुर्यस्मरणेन लब्धचित्ताः स्वस्थाः पुत्रबुद्ध्या स्नेह एवात्यन्तार्तिहेतुरित्याशंक्य तदाच्छादनाशया विश्लेषविशेषमयप्रीतिजातिस्वभावात्तन्माहात्म्यकीर्तनेच्छया वा पुनः प्रभावान्स्मरति—मन्य इति चतुर्भिः । इह मद्गृहे, प्राप्तौ स्वाच्छन्द्येनैव जन्मानुकृतवन्तौ, सुरोत्तमौ नारायणसमौ क्वावपि मन्ये संभावयामि ।

कंसं नागायुतप्राणं मल्लौ गजपतिं तथा ॥ अवधिष्टां लीलयैव पशूनिव मृगाधिपः ॥ २४ ॥ तालत्रयं महासारं धनुर्यष्टिमिवेभराट् ॥ बभंजैकेन हस्तेन सप्ताहमदधाद्गिरिम्॥२५॥प्रलंबो धेनुकोऽरिष्टस्तृणावर्तो बकादयः ॥ दैत्याः सुरासुरजितो हता येनेह लीलया॥२६॥श्रीशुक उवाच ॥ इति संस्मृत्यसंस्मृत्य नंदः कृष्णानुरक्तधीः ॥ अत्युत्कंठोऽभवत्तूष्णीं प्रेमप्रसरविह्वलः॥२७॥यशोदा वर्ण्यमानानि पुत्रस्य चरितानि च ॥ शृण्वंत्यश्रूण्यवास्राक्षीत्स्नेहस्नुतपयोधरा ॥ २८ ॥ तयोरित्थं भगवति कृष्णे नंदयशोदयोः ॥ वीक्ष्यानुरागं परमं नंदमाहोद्धवो मुदा ॥ २९ ॥ उद्धव उवाच ॥ युवां श्लाघ्यतमौ नूनं देहिनामिह मानद ॥ नारायणेऽखिलगुरौ यत्कृता मतिरीदृशी ॥ ३० ॥

न केवलं तद्वचनानुसारेणैव किं तु व्यवहारसंवादादपीत्याह । कंसमिति ॥ २४ ॥ इभराड्यष्टिमिव तालत्रयप्रमाणं धनुर्बभंज ॥ २५ ॥२६॥२७॥२८ ॥ २९॥ ३०॥

इति पुत्रभावस्यैव सहजत्वमंतर्गतत्वं च बोधयति ॥ २३ ॥ तस्य गर्गस्य वचनानुरोधेन न सुरोत्तमावपि तु व्यवहरणं व्यवहारः कृतिरूपः, संवदतीति संवादः सम्यग्वक्ता व्यवहार एव संवादो व्यवहारसंवादस्तस्मात् । अवधिष्टां नाशयामासतुः ॥ * ॥ मल्लौ चाणूरमुष्टिकौ । तथाशब्देन मल्लयोर्गजपतेश्च नागायुतप्राणत्वमुक्तम् । अवधिष्टां हतवन्तौ । यौ यश्च यथास्वमिति शेषः । मृगाधिप इत्येकत्वं प्रत्येकदृष्टान्तत्वात् ॥ २४ ॥ तालोंगुष्ठमध्यमे विस्तृते यत्परिमाणं जायते सः, तादृशतालत्रयपरिमाणम् "प्रादेशतालगोकर्णाः सांगुष्ठे वितते करे । तर्जन्यादियुते" इति कोशात् । केचित्तु 'तालो हस्तचतुष्टयम्' इत्याहुः । महासारं बहुपुरुषधार्यत्वाद्गुरुतरम् । यष्टिमिक्षुदंडम् 'यष्टिर्वोष्विक्षुदंडयोः' इति शाश्वतः ॥ * ॥ तालः षष्टिहस्तप्रमाणपरिमि ( श ) तकस्तालवृक्षः । एकेन वामेनैव ॥ २५ ॥ येनेत्येकत्वं प्राधान्यात् ॥ * ॥ ० ॥ २६ ॥ इतीत्थम् । प्रेमप्रसरेण स्नेहाधिक्येन । विह्वलो विवशः । अत्युत्कण्ठानुरागो यस्य स तथा ॥ * ॥ कृष्णानुरक्तधीरिति—स्मृत्यारूढेण महैश्वर्येणापि हंतहंत एतादृशैश्वर्यवता पुत्रेण गुणरत्नाकरेण दुरदृष्टवशाद्विश्लिष्टोऽभूवमिति कृष्णेऽनुरक्तेत्र धीर्न तु वसुदेवस्येवैश्वर्यगंधेनापि संकुचितानुरागा शिथिलितसंबंधा धीर्यस्य सः । प्रेमप्रसरविह्वल इति—जातिप्रमाणाधिक्यवतः प्रेम्णोऽगस्त्यस्याग्रे खल्वैश्वर्यस्य समुद्रोऽपि कियाननिति भावः । एवं कृष्णस्य पिता नंदो गांभीर्यस्य बलात्कृतिं धृत्वा लौकिक्या रीत्योद्धवं संमानयितुं सम्यगीक्षितुं परिचेतुं कुशलं प्रष्टुं कृष्णस्य प्रभावमयचरितं वक्तुं शशाक ॥२७॥ अवास्राक्षीन्निरंतरममुचत् ॥ * ॥ माता श्रीयशोदा स्वधैर्यसिंधुभ्रमिनिमज्जनोन्मज्जनवती तत्तत्किमपि कर्तुं न शशाकेत्याह—यशोदेति । मथुराप्रस्थानदिनमारभ्यैव शतशः स्त्रीपुंसस्वजनैः प्रबोध्यमानापि पुत्रमुखं विनाऽन्यत्किमप्यहं न द्रक्ष्यामीति प्रतिक्षणमेव प्रतिजनानां पुरो मुद्रितनेत्रैवाश्रूणि अव समंतात् निजवस्त्रादिकमाप्लाव्यास्राक्षीत्—विससर्जैव न तूद्धवं परिचेतुं वात्सल्यविषयीकर्तुं स्वयं किञ्चित्प्रष्टुं पुत्रं प्रति किञ्चित्संदेष्टुं च शक्तेत्यर्थः।स्नेहेन पुत्रविषयकेण स्नुतपयसौ पयोधरौ यस्याः सा । श्लेषेण स्नुतानां पयसां धरा॥२८॥परमं परां काष्ठां प्राप्तम्॥*॥ तयोः कीदृशभावौ तौ[2] भवेतामिति सविस्मयं परिचिन्त्यमानयोः श्रीनंदयशोदयोरित्थं पूर्वोक्तप्रकारेणानुरागं तृष्णातिशयमयस्नेहं भगवति सर्वेश्वरे वीक्ष्य विशेषेण साक्षात्कृत्य,तत्रापि कृष्णे परमपूर्णाविर्भावे तस्मिन्वीक्ष्य, तत्रापि परमं सर्वोत्कृष्टं वीक्ष्य उद्धवो नंदं तस्यैव प्राधान्यात्संवादे प्रवृत्तत्वाच्च । श्रीयशोदायास्तु परमवैयग्र्येण तत्प्रवृत्त्यशक्त्या तमेवाह । उच्चैः सांत्वयितुमिति शेषः ॥ २९ ॥ यद्धेतोर्नारायणे मतिः कृताऽतो युवां श्लाघ्यतमावित्यन्वयः ॥ * ॥ तच्च मुदाऽहो मम भाग्यं ममैतज्जन्मैव सार्थकं जातं यदीदृशाऽनुरागो दृष्ट इति तयोर्दुःखदर्शनेऽप्युद्धवस्यानंदः । हर्षेण तदंशाविष्कारेणैवोपलक्षितो न तु तद्दुःखदर्शनमयदुःखांशाविष्कारेणेति भावः । तस्य हि तदैश्वर्यस्फूर्तेरेव प्राधान्यात् । तदनुरागस्यापि महिमांशस्फूर्तिरेव प्रथमतो जाता न तु वैयग्र्यांशस्फूर्तिः । केवलवैयग्र्यांशस्फूर्तेर्योग्यत्वे तु सान्त्वनानधिकारिणं मन्यमानो भगवानपि

१ रामकृष्णयोः । २ तौ देवकीवसुदेवौ ।

**एतौ हि विश्वस्य च बीजयोनी रामो मुकुंदः पुरुषः प्रधानम् ॥ अन्वीय भूतेषु विलक्षणस्य ज्ञानस्य चेशात इमौ पुराणौ ॥ ३१ ॥**

**अखिलगुरुत्वमेव जनकत्वेन नियंतृत्वेन चाह । एताविति । रामो मुकुंदश्चेत्येतौ विश्वस्य बीजयोनी निमित्तोपादाने । ननु पुरुषप्रधानयोर्बीजयोनित्वं प्रसिद्धमत आह । पुरुषः प्रधानमिति । पुरुषोंशः प्रधानं शक्तिः । अतः प्रधानपुरुषावप्येतावेवेत्यर्थः । एवं जनकत्वमुक्तम् । किं च । अन्वीय भूतेषुभूतेष्वनुप्र**

न तं प्रास्थापयिष्यदिति भावः । अतः प्रथमतस्तन्महिमवर्णनद्वारैव प्रोत्साह्य तौ सान्त्वयितुमिच्छँस्तज्जातीयश्रीनंदवाक्यावसरं प्राप्य तथैवाह—युवामिति द्वाभ्याम् । इह श्रीकृष्णावतारावतीर्णतदीयमहाभक्तगणपूर्णे जगति देहिनां तत्पर्यन्तानां सर्वेषां मध्ये ये श्लाघ्याः श्रीनारदादयः श्रीगोकुलवास्यन्तास्तेषामपि मध्ये श्रेष्ठौ । हे मानदेति—एवं युवाभ्यामेव तदीयानामस्माकं मानो दत्तः । यतः श्रीकृष्णसंबंधिन एवंविधा जाता इति लोकैः कीर्तयिष्यत इति भावः । यद्यस्मान्नारायणे नरस्य महत्स्रष्टृप्रभृतिपुरुषावतारसमूहस्याऽप्याश्रयेऽखिलगुरौ परमव्योमनाथादितोऽपि महत्तमप्रकाशे उभयथा परमोपादेयपरमदुर्लभपरमभाग्यदुष्प्रापाश्रयमात्र इत्यर्थः । तस्मिन्नीदृशी पुत्रभावतया तद्वश्यतातिशयकारिणी मतिः कृता विद्यते । युवाभ्यामेवेति शेषः ॥ ३० ॥ निमित्तोपादानत्वे आक्षिपति—नन्विति । अतोऽत्र । अतः पुरुषप्रधानयोरप्यनयोरंशशक्तित्वात् । इत्यर्थ इति—अंशांशिनोः शक्तिशक्तिमतोश्चाभेदोपचारादेतावेवेत्याशयः । यद्वा—पाठक्रमादर्थक्रमो बलीयान्—“ अग्निहोत्रं जुहोति”, “ यवागूः पचति ” इति वत् । ‘ रामो मुकुन्दः पुरुषः प्रधानम् ’ इह रामः प्रधानम् । ‘ यस्याद्य आसीद्गुणविग्रहो महान्यत्संभवोऽहम् ’ इति पञ्चमस्कन्धे रुद्रोक्तेः संकर्षणस्य प्रधानत्वमुक्तम् । प्रधानादेव महत्तत्त्वोत्पत्तिस्ततोऽहंकारोत्पत्तिश्च सांख्यैर्मन्यत इति मुकुंदस्य पुरुषत्वम् । ‘ स एव पुरुषः साक्षात् ’ इत्यादि बहुश उक्तेः स्फुटमेवेति । एवमित्थम् । नियंतृत्वमाह—किञ्चेति । तदुपहितस्य भूतोपाधिकस्य । जानातीति ज्ञानं जीवस्तस्य नियंतृत्वे हेतुमाशंकते—कुत इति । इत्यर्थ इति—अनादिभावस्य कारणता कारणस्य नियंतृता च प्रसिद्धेति भावः । यद्वा—एतौ रामो मुकुंदश्च प्रधानं सर्वोत्तमः । कुतः—यतः पुरुषः, अन्येषामर्वाचीनत्वात्पुराणः पुरातनः । किञ्चानयोरवतारप्रयोजनं दैत्यहननमेव न किन्तु स्वोपदिष्टज्ञानरक्षणमपीत्याह—अन्वीयेति । इमौ पुराणौ पूर्णानंदौ रामकृष्णौ विलक्षणेषु विविधलक्षणेषु नानाविधव्यावर्तकधर्मेषु भूतेषु अन्वीयावतीर्य विज्ञस्य व्यासाद्यात्मनोपदिष्टविशिष्टज्ञानस्यासुरजनकृतनाशं विज्ञायेशाते समर्थयेते, रक्षत इत्यर्थः ॥ * ॥ हि एव, एतावेव । मुकुन्दश्चेति चकारान्वयः । ए ( भू ) तेषु प्राणिषु अन्वीय तद्विलक्षणस्य ज्ञानस्य शुद्धचिन्मात्रस्वरूपस्य जीवस्येशाते । चकाराद्भूतानाञ्च । संधिरार्षः । इमाविति पुनरुक्तिस्तयोरेव तादृशतां निर्धारयति । अन्यत्तैः । तत्रानादित्वात्कारणत्वमिव स्वातंत्र्येणेति वैशिष्ट्यं ज्ञेयं जीवादेरप्यनादित्वात् । यद्वा—नारायणत्वमखिलगुरुत्वमप्याह—एताविति । अंशांशिनोरभिन्नत्वाद्येन रामेण सहैकरूपो यो मुकुन्दस्तावेतौ रामकृष्णाभिधतया पृथक्तया दृश्यमानावेव च विश्वस्य, चकारादवतारादीनामपि बीजयोनी द्वावपि निमित्तोपादानरूपौ विश्वस्य तत्तद्रूपतया नाम्नापि पुरुषः प्रधानमिति विख्यातौ इमावेव तदेतद्द्वयरामकृष्णरूपेण पुराणावनादिसिद्धौ सन्तौ भूतेषु जीवेष्वन्वीय तत्तदुपाधावन्तर्यामिरूपेणानुप्रविश्य विलक्षणस्य ज्ञानस्य चाद्वयज्ञानस्वरूपस्य ब्रह्मणोऽपीशाते, प्रकाशनाप्रकाशनयोः समर्थौ भवतः । “ प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहम् ॥ ” इति, “ विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ” इति, ‘ ब्रह्मणो हि प्रतिष्ठाहम् ’ इत्यादिश्रीभागवतगीतोक्तेः । “ मदीयं महिमानं च परं ब्रह्मेति शब्दितम् । वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदि ॥ ” इति च । अत्र **विश्वनाथः**—नारायणत्वमखिलगुरुत्वञ्चाह—एताविति । अंशांशिनोरभिन्नत्वात् ‘ बहुमूर्त्येकमूर्तिकम् ’ इत्यक्रूरोक्तेश्च । एतौ द्वावप्येक एव नारायण इत्यर्थः । विश्वस्य बीजयोनी द्वावपि निमित्तोपादानरूपौ द्वावेव पुरुषः द्वावेव प्रधानं शक्तिशक्तिमतोरैक्यादिति भावः, ‘ प्रकृतिर्ह्यस्योपादानम् ’ इत्याद्येकादशस्कन्धोक्तेः । भूतेष्वन्वीयान्तर्यामितया प्रविश्य विलक्षणज्ञानस्येशाते प्रदानसमर्थौ, भक्तेभ्यो भक्तिज्ञानस्य, ज्ञानिभ्यो ब्रह्मज्ञानस्य च कृपया दातारौ स्याताम् । “ तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुप

यस्मिञ्जनः प्राणवियोगकाले क्षणं समावेश्य मनो विशुद्धम् ॥ निर्हृत्य कर्माशयमाशु याति परां गतिं ब्रह्ममयोऽर्कवर्णः ॥ ३२ ॥ तस्मिन्भवंतावखिलात्महेतौ नारायणे कारणमर्त्यमूर्तौ ॥ भावं विधत्तां नितरां महात्मन्किं वाऽवशिष्टं युवयोः सुकृत्यम् ॥ ३३ ॥ आगमिष्यत्यदीर्घेण कालेन व्रजमच्युतः ॥ प्रियं विधास्यते पित्रोर्भगवान्सात्वतां पतिः ॥ ३४ ॥

विश्व भूतानां तदुपहितस्य विलक्षणस्य च नानाभेदस्य ज्ञानस्य जीवस्य चेशाते ईश्वरौ नियंतारौ भवतः । कुतः । पुराणावनादी । अनादित्वात्कारणत्वं ततश्च नियंतृत्वमित्यर्थः ॥ ३१ ॥ ननु सृष्टयादिकर्मावेशान्मनुष्यादिजन्मदर्शनाच तस्यान्येभ्यः को विशेष इत्याशंक्याह यस्मिन्निति द्वाभ्याम् । यस्मिन्क्षणमपि मनः समावेश्य कर्माशयं कर्मवासनां निर्हृत्य त्यक्त्वा ब्रह्ममयः स्वरूपज्ञानवानर्कवर्णः शुद्धसत्त्वमूर्तिः सन्परां गतिं तत्पदं याति ॥३२॥ अखिलस्यात्मा च हेतुश्च तस्मिन् कारणमर्त्यमूर्तौ केनापि कारणेन मनुष्याकृतौ तथापि महात्मन्महात्मनि परिपूर्णे भवंतौ भक्तिं कुरुतः । अतः कृतकृत्यावित्यर्थः ॥ ३३ ॥ प्रस्तुतमाह । आगमिष्यतीति । पित्रोर्युवयोः ॥ ३४ ॥

यान्ति ते ॥" इति, 'मदीयं महिमानञ्च' इत्यादितदुक्तेः । चकारादाविलक्षणज्ञानस्य प्राकृतस्य स्वर्गादिसाधनस्यापि कार्मिभ्यो दातारौ ॥ ३१ ॥ पुनरीशतामाक्षिपति—नन्विति । तस्य श्रीकृष्णस्य । विशुद्धं तद्भक्त्यादिना पूतम् । तत्पदं श्रीकृष्णसायुज्यम् ॥ * ॥ तत्र तयोश्चेतःप्रसक्तिमदृष्ट्वा तदेव पुनः कैमुत्येन विवृणोति—यस्मिन्निति द्वयेन । यस्मिन् कृष्णे । एकस्य निर्देशो द्वयोरभेदाभिप्रायेण । जनः यः कश्चिदपि जीवः मरणसमये क्षणमपि विशुद्धं केवलं न त्वन्येंद्रिययुक्तम् । यद्वाऽविशुद्धमपि मनः समावेश्य यथाकथञ्चिल्लब्धपदं कृत्वाऽऽशु सद्य एव ब्रह्ममयः श्रीभगवत्पार्षदतया चिच्छक्तिवृत्तिः शुद्धसत्त्वस्यैव तादृशमूर्तित्वेन स्वरूपप्रकाशचतुरः प्राधानिकवत्तिरोहिततदंशोऽतोऽर्कवर्णः स्वयमेव प्रकाशमानोऽन्यांश्च प्रकाशयन्नित्यर्थः । 'आदित्यवर्णं तमसः परस्तात्' इतिवत् । **विश्वनाथस्तु**—परां गतिं वैकुण्ठलोकम् । ब्रह्ममयश्चिन्मयशरीरः सन्नर्कवर्णः सूर्यतुल्यतेजा इत्याह ॥ ३२ ॥ तस्मिञ्छ्रीकृष्णे । कारणेन भूभरहरणादिना हेतुना । महात्मन्निति सप्तमी । भावमतिप्रेमाणम् । यतः श्रीकृष्णभक्तावतो हेतोः । इत्यर्थ इति—'समुद्रान्ता इवापगाः' इति न्यायेन हरिभक्त्यंताः सर्वविधय इति । तद्भक्त्वाद्युवां कृतार्थावेवेति भावः ॥ * ॥ आखिलेति—अथात्मा स्वांशानामीश्वररूपाणां विभिन्नांशानाञ्च जीवानां :मूलरूपः हेतुश्च सर्वप्रकाशक इति ज्ञेयः । तत्र हेतुः—नारायण इति । ननु स चतुर्भुजस्तत्राह—सर्वकारणं यत्तत्त्वं तदेव मर्त्याकारा मूर्तिर्यस्य तस्मिन्नराकृतिपरब्रह्मणीत्यर्थः । भावमदृशानुरागम् । नितरामित्यनेन श्रीवसुदेवदेवकीभ्यामपि तदुत्कर्षं बोधयति । हे महात्मन् तादृशानुरागशीलत्वात्परमोत्कृष्टस्वभाव श्रीव्रजेश्वर । वाशब्दो भ्रूक्षेपे । तयोर्युवयोः । किं कतरत् अवशिष्टं किन्तु सर्वं परिपूर्णमेव, केवलं युष्मत्संतोषकं तस्यैव कृत्यमवशिष्यत इति स्वशब्दार्थः । 'युवयोः' इति पाठेऽपि स एवार्थः ॥ अत्र **विश्वनाथः**—अखिलानामात्मा च हेतुश्च कारणञ्च मनुष्यमूर्तिश्च तस्मिन्युवयोः कृत्यं किमवशिष्टमिति । तुकारेण तस्य कृष्णस्यैव युष्मत्सान्त्वन-प्रीणन-वशीभवनादिकृत्यमवशिष्यत इति ज्ञाप्यते । 'स्वकृत्यम्' इति पाठेऽपि स एवार्थः ॥ ३३ ॥ प्रस्तुतं प्रकृतम् । अदीर्घेण शीघ्रम् । अच्युत इति वाक्यच्युतिवार्जितत्वमाह ॥ * ॥ तथाप्यजातशान्तीं प्रत्युत हन्त त एव हितेऽपि तदुत्कर्षमेवं कथयन्तीति तद्गुणाचिंतनेनात्यन्तार्तौ तौ वीक्ष्याधुना तु तद्वैयग्र्यस्पृष्ट आह—आगमिष्यतीति । अच्युतः सत्यसंकल्पादिना तन्नामासौ । प्रियमव्यभिचारिसंगमरूपम् । अवश्यप्रियविधाने हेतुः—पित्रोः, यथा युवाभ्यां पितृभावमयेन महाप्रेम्णा वशी

१ 'तु तयोः स्वकृत्यम्' इति पा० ।

हत्वा कंसं रंगमध्ये प्रतीपं सर्वसात्वताम् ॥ यदाह वः समागत्य कृष्णः सत्यं करोति तत् ॥ ३५ ॥
मा खिद्यतं महाभागौ द्रक्ष्यथः कृष्णमंतिके ॥ अंतर्हृदि स भूतानामास्ते ज्योतिरिवैधसि ॥ ३६ ॥

'यात यूयं व्रजं तात वयं च स्नेहदुःखितान् ॥ ज्ञातीन्वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम् ॥ ' इति यदाह कृष्णस्तत्सत्यं करिष्यतीति ॥ ३५ ॥ कालविलंबनमसहमानौ प्रत्याह । मा खिद्यतमिति । हे महाभागौ खेदं मा कुरुतम् । अंतिके इदानीमेव समीपे वा । कुत इत्यत आह । अंतर्हृदीति । तर्हि सर्वैः किमिति न

कृत्य पुत्रत्वेन संपादितोऽसौ तथा तेनापि पितृत्वेनैवाभिमतयोर्युवयोरित्यर्थः । 'ये यथा मां प्रपद्यन्ते' इत्यादेः । यतो भगवानपि सात्वतानां भक्तानां पतिः पालकस्तदभीष्टसुखसंपादकः । यद्वा—भगवानपि यादवानां पतिरपि तादृशप्रेमवशत्वादिति भावः । अत्र **विश्वनाथः**—भो वत्स उद्धव त्वमतिबुद्धिमाञ्श्रुतः किन्तु मुग्ध एवासि यदावामपि स्तौषि । हंतहंत तादृशो गुणार्णवः पुत्रो यद्गृहादन्यत्र गतस्ततोऽधिको मंदभाग्योऽधमो दुःखी त्रिभुवनमध्ये कोप्यस्ति ? इत्यावां सर्वैर्निंदनीयावेवेति तदुक्तिमाशंक्य साश्वासमाह—आगमिष्यतीति । अच्युतः 'वो द्रष्टुमेष्याम' इति महावाक्यच्युतिरहितः । सात्वतानां यदूनां पतिः पालक एव केवलमत्रैव स्थित्वा भविष्यति, युवयोस्तु प्रियं मनोभीष्टं करिष्यति ॥ ३४ ॥ प्रतीपं प्रतिकूलम् ''प्रतीपो नृपतौ पुंसि प्रतिकूले तु वाच्यवत्'' इति धरणिः । किञ्च—करोतीति वर्तमानार्थकलटा श्रीमदुद्धवः स्वात्मानम् ''नोद्धवोऽण्वपि मन्यूनो यद्गुणैर्नार्दितः प्रभुः'' इति तृतीयस्कंधोक्तिं स्वविमर्शरूपां श्रीकृष्णस्य स्फुटयितुं साक्षादेव कृष्णरूपत्वेनाह ॥ * ॥ ननु तस्यागमनमत्र न प्रतीमस्तत्राह—हत्वेति । यद्वा—पितृत्वं विलंबकारणञ्च तद्वाक्येनैव प्रतिपादयति—हत्वेति । करोतीति—''वर्तमानसामीप्ये वर्तमानवद्वा'' करिष्यते इत्यर्थः । किं वा—तत्तस्माद्धेतोरस्माभिस्सह सत्यं शपथं करोति कुर्वन्नेवास्ते इत्यर्थः । 'सत्यं शपथतथ्ययोः' इत्यमरः । वस्तुतस्तूद्धवेनादृष्टस्तत्रैव ताभ्यां तदैव लालितः स प्रकाशांतरेण वर्तत एवेत्युद्धवमुखात्सत्यैव वाग्निरगात् ॥ ३५ ॥ इदानीमेव कालक्षयं विनैव 'अंतिकं शीघ्रसामीप्ये' इति यादवः । प्रकटमप्याह—मा खिद्यतमिति । द्रक्ष्यथः पश्यथः । इह वर्तमाने लृट्[१] । अत एव श्रीमदनुभूतिस्वरूपचरणैः कारकप्रक्रियायाम् ''छन्दसि स्यादिः सर्वत्र'' इत्यत्र स्यादिपदं त्याद्युपलक्षकमुक्तम् 'एकसंबंधिज्ञानमपरसंबंधिस्मारकम्' इति न्यायेन । स्यादित्याद्युभयावयवत्वाद्विभक्तेरिति । अत्र हेतुमाशंकते—कुत इति । तत्राक्षेपे । तद्यथा ज्योतिर्यथा । इति भाव इति—'भक्त्याहमेकया लभ्यः' इति श्रीमुखोक्तेरित्यर्थः । 'काष्ठं दार्विंधनं त्वेधः' इत्यमरः ॥ * ॥ हंतहंत धिगावां ययोरभाग्यस्य प्राबल्यमेव सत्यवचसोऽपि पुत्रस्यात्रागमने प्रतिबंधकीभवतीति खिद्यन्तौ प्रत्याह—मेति । नन्वन्तिके यद्द्रक्ष्यावस्तत्कस्मिन्दिने श्वः परश्वो वा पञ्चमे दिने दशमे दिने वा संप्रति निर्जिगमिषून्प्राणान्केनाश्वासेन स्थापयिष्यावस्तावत्, न चेदागमिष्यति तदेव निश्चित्य ब्रूहि, निर्यान्तु प्राणा मास्तु तन्निरोधनकष्टमावयोरित्युक्तवति श्रीनंदे उद्धवः स्वहृदि पराममर्श—हंतात्र कमुपायमनुतिष्ठामि प्राकृतपुत्रवियोगातुराः खल्वेवं प्रबोध्यन्ते—भोभो किमिति सांसारिकमोहमग्ना भवथ, मिथ्याभूतपुत्रकलत्रादिष्वासक्तिमनर्थहेतुं परित्यज्य भगवत्यासक्तिः क्रियतामिति । यस्य तु भगवत्येव पुत्रीभूते आसक्तिः सोऽयं नंदः कथं प्रबोधयितव्यः । न च वसुदेवस्येवास्य पुत्रभाव ऐश्वर्यप्रदर्शनया शिथिलयितुं शक्यः, प्रत्युतानयोर्गाढत्वमेवापद्यते । हंत प्राकृतमपि पुत्रं गृहे खेलन्तमदृष्ट्वा तत्पितरौ दुःखेन म्रियेते । आवयोस्त्वतिभाग्यवशात्परमेश्वरोऽपि पुत्रीभूतो गृहे खेलति स्म, आवयोः क्षणमपि लालनमप्राप्य खिद्यते स्म, स्वगृहे तं पुत्रमदृष्ट्वा कथं जीविष्यावः, धिगावां यत्तादृशोऽपि पुत्राद्वियुक्तावित्येवंविधाऽनयोर्मनोनिष्ठा । देवकीवसुदेवौ त्वेतत्पारमैश्वर्यानुभवे सति हंतावयोरयमाराध्य एव न तु पुत्र इत्येतत्परिष्वंगलालनादावपि शंकेते । तेन केवलमेषामेक एव कृष्णे ममताग्रंथिर्दृढः । किन्तु परमेश्वरस्यापि तस्यैतेषु दृढैव ममता ''गृहीत्वा पाणिना पाणिं पित्रोर्नौ प्रीतिमावह'' इत्येतदर्थे तस्यापि व्याकुलता मया दृष्टैव । ''दुस्त्यजश्चानुरागोऽस्मिन्सर्वेषां नो व्रजौकसाम् । नंद ते तनयेऽस्मासु तस्या

१ ''छन्दसि बहुलम्'' इति पाणिनीयाः ।

नह्यस्यास्ति प्रियः कश्चिन्नाप्रियो वाऽस्त्यमानिनः ॥ नोत्तमो नाधमो वाऽपि समानस्यासमोऽपि वा ॥ ३७ ॥
न माता न पिता तस्य न भार्या न सुतादयः ॥ नात्मीयो न परश्चापि न देहो जन्म एव च ॥ ३८ ॥

दृश्यते तत्राह । ज्योतिरिवैधसीति । तद्यथा मथनं विना न दृश्यते तथा भक्तिं विना कृष्णोऽपीति भावः ॥ ३६ ॥ अहो आस्तामेतत्तस्य त्विहागमनं स्वस्यातिप्रियान्पि त्रादीन्विहाय न संगच्छत इति मन्येहं तत्राह । नह्यस्येति । अस्य प्रियादयो नहि संति । तत्रेमौ हेतू । अमानिनः समानस्येति च निरभिमानित्वाद्रागादिर हितत्वाच्चेत्यर्थः ॥ ३७ ॥ ३८ ॥

प्यौत्पत्तिकः कथम् ॥'' इति गोपवागपि स्मृत्वा स्मर्यत एव । यदि पुनर्मथुरां गत्वा श्वस्तमानयेयं तदा कंसभार्याद्वयोपजापकुपिते जरासंधे मथुरां हंतुमागमिष्यति सति तत्र वसुदेवादीन्यादवान्को रक्षेत्, यदि तद्रक्षार्थं कृष्ण एव पुनर्मथुरां गच्छेत्तदैते म्रियेरन्, यदि चातश्चतुःपञ्चवर्षान्ते आयास्यतीति ब्रवीमि तदा तावत्कालपर्यन्तं धैर्यदिधीर्षाप्येतैर्दुष्करा, चतुःपंचदिनान्ते आयास्यतीत्यलीकोक्त्याश्वासने तस्मिन्नेवावधिसमाप्तिदिने मदु क्तेरलीकत्वे व्यक्ते म्रियेरन्, तस्मादुपायांतराभावादधुना श्रीकृष्णस्य परमात्मत्वेन सर्वत्रौदासीन्यं तथा निर्विशेषब्रह्मस्वरूपत्वेन जन्म-कर्म-शरीर-पित्रादिसंबंधराहित्यं तदनुकूलाध्यात्मयोगश्च प्रपञ्च्यानयोः प्रेमा संकोच नीयः । तेनतेनाप्यप्रमेयो दुष्पारो दुर्निवारः प्रेमा यदि प्रत्युत वर्धेतैव तदा मथुरां गत्वा कृष्णवसुदेवोग्रसेनादिमहासदस्यनयोः प्रेम्णो निरुपमां कीर्तिं कीर्तयित्वा सर्वान्विस्माप्य मया कृष्ण एवोपालंभनीय इति मनसि कृत्वा प्रथमं कृष्णस्य परमात्मत्वं द्योतयन्नाह—अंतरिति । तर्हि सर्वैः किमिति न दृश्यते तत्राह—ज्योतिरिति । तद्यथा मंथनं विना न दृश्यते तथैव कृष्णोऽपि । तस्माद्युवाभ्यां तस्मिन्पुत्रे कृष्णे वैष्णवैरिव भक्तिः कर्तुं न शक्यते कथं स साक्षात्स्वगृहे द्रष्टव्य इति द्योतिते सति येन तेन प्रकारेण पुत्रः स्वगृहमायातु पुत्रेऽपि[1] तस्मिन्भक्तिः कर्तव्येति नंदयशोदाभ्यां मनसि विचारितमत एव " मनसो वृत्तयो नः स्युः कृष्णपादांबुजा श्रयाः " इत्युद्धवं प्रत्युपरिष्टाद्वक्ष्यते ॥ ३६ ॥ एतत् भक्तिं विना स नाप्यते इत्येतत् । आस्तां तिष्ठतु । तस्य कृष्णस्य । तत्राक्षेपे । तत्र प्रियाद्यभावे । अमानिनः अहंममाभिमानहीनस्य प्रियादयो न, समानस्य सर्वत्रैकरूपस्य चोत्तमादयो न भवन्तीति भावः ॥ * ॥ अथापि प्रेमाणमसंकुचंतमालक्ष्य भो व्रजराज कृष्णः साक्षात्परं ब्रह्मैव संभवतीत्याह—त्रिभिः । अस्य प्रियादयो न सन्ति, तत्र हेतुः—अमायिनः, समस्य चेति । नै मातेत्यादिः प्रकटार्थः । नंदं ज्ञापयितुमभीप्सितः अप्रकटोऽर्थस्त्वन्य एव । तत्रतत्र सदसन्मिश्राः सात्त्विकतामसराजस्यो योनयस्तास्वस्य जन्म नास्ति, जन्माभावादेव तदुत्तरकालभवं कर्मापि नास्ति, तादृशजन्मा देहोऽपि नास्ति, तेन देहेन क्रीडापि नैव, अर्थः प्रयोजनञ्च नैव । या गुणातीताः शुद्धसत्त्वरूपा यशोदादेवकीकौसल्याद्यास्तासु जन्म तदनंतरं कर्म च तज्जन्मा देहश्च क्रीडा च अर्थश्चास्ति, तद्रूपा मात्राद्याः संतीति भावः । किन्त्वयं नंदं ज्ञापयितुमनभीप्सितः । सोऽपि एवं ब्रह्मस्वरूपोऽपि साधूनां स्वभक्तानां दुःखत्राणाय कल्पते योग्यो भवत्येव, भक्तवात्सल्यादिति भावः ॥ अत्र **तोषिणी**—अत्रास्तामेतत्, न वयं अंतर्हृदीत्यादिकं बुद्ध्यामहे इत्यर्थः । यथा जीवानां तेनतेन लौकिकप्रकारेण प्रियादयः कर्मान्ताश्चतुर्दश भावाः स्युस्तथास्यामी न सन्तीत्याह— नहीति त्रिकेण । अस्तीती सर्वत्र निषेधे योज्यम् । अस्य श्रीकृष्णस्योपकारादिना प्रियोऽतिशयेन नह्यस्ति प्रकाशेनापि नास्तीत्यर्थः । अपकारेणाप्रियोऽपि नास्ति कश्चिदिति यथासंभवमग्रेऽपि योज्यम् । तथा सौंदर्यपांडित्यादिगुणदृष्टिहेतोरुत्तमः स्तुत्यो न, कौरूप्य—कौबुद्ध्यादिदोषहेतोरधमो निंद्यो न, तादृशगुणदोषाभावदृष्टिहेतोः आ सर्वतः सम उपेक्षाबुद्धिविषयो न—॥ ३७ ॥ तदेवाह—न मातेति ॥ * ॥

१ अत्राग्रिमपद्यत्रयस्यापि सारांशतो व्याख्यानं प्रसङ्गाद्बोध्यम् ।

न चास्य कर्म वा लोके सदसन्मिश्रयोनिषु ॥ क्रीडार्थं सोऽपि साधूनां परित्राणाय कल्पते ॥ ३९ ॥
सत्त्वं रजस्तम इति भजते निर्गुणो गुणान् ॥ क्रीडन्नतीतोऽत्र गुणैः सृजत्यवति हंत्यजः ॥ ४० ॥

सोऽपि जन्मकर्मादिरहितोऽपि क्रीडाप्रयोजनः सन्स साधूनां परिपालनाय सदसन्मिश्रयोनिषु सात्त्विकराजसतामसयोनिषु । यद्वा देवादिमत्स्यादिनृसिंहादियोनिषु कल्पते आविर्भवतीत्यर्थः ॥ ३९ ॥ ननु जन्मकर्मादिरहितस्य कुत एतदित्यत आह । सत्त्वमिति । क्रीडामतीतोऽपि क्रीडन् । तथापि मायागुणैः सर्वं घटत इत्यर्थः ॥ ४० ॥

धातुद्वारोत्पादनहेतोर्न माता न पिता च, अतः सुतादयोऽपि न विवाहसंबंधहेतोर्भार्यापि न, सर्वकारणादिहेतोरात्मीयो न, तदभावहेतोः परोऽपि न, अभिन्नदेहदेहिस्वरूपादन्यत्रास्मत्त्वाभिमानहेतोर्देहो न, अन्यादृशदेहस्वाकाराज्जन्मैव च न, कुतो देह इत्यर्थः—॥ ३८ ॥ सात्त्विका ऋषयस्तामसाः सर्पादयो राजसा मनुष्याः, एतदर्थे देवादिग्रहणार्थमाह—यद्वेति । इत्यर्थ इति—समर्थार्थकक्लृपधातोराविर्भावोऽप्यर्थः । समर्थस्यैव प्राय आविर्भावो नासमर्थस्येति भावः ॥ * ॥ अपूर्वोत्पत्तियोग्यत्वाभावात्कर्म शुभाशुभमदृष्टञ्चेति न सर्वत्र यथायथं हेतुः । पूर्वत्र अमानिनस्तदभिमानशून्यस्य समस्य च विकाररहितस्येति प्रायः सर्वत्रैव नञः प्रयोगस्तान्निषेधनिर्धारणार्थः । आद्यो वा शब्दः समुच्चये । अन्ये च तत्संभावनायामपि तन्निरासार्थाः । जन्म एव चेति चशब्दः क्वाचित्कः । किन्तु तस्यैवंभूतस्य साधुत्वेन प्रियादयः साधुद्रोहित्वेनाप्रियादयश्च सन्तीत्याभिप्रेत्याह—सदिति । सज्जातिरियमसज्जातिरियमित्यूह्यादरानादरावननुसंधाय तासु तदनुकारिस्वरूपविग्रहेण प्रकटीभूय, साधूनां साधुत्वेनैव प्रियादितया स्वीकृतानां सर्वतो रक्षणाय योग्यो भवतीत्यर्थः । ननु संकल्पेनैव तत्स्यात्किं तत्तत्प्रादुर्भावेण तत्राह—क्रीडार्थः ' लोकवत्तु लीलाकैवल्यम् ' इति न्यायेन क्रीडाप्रयोजनः सन्नित्यर्थः । अयमभिप्रायः—अन्यलेपस्तास्मिन्न भवत्येव किन्तु परमसद्गुणाशिरोमणये तस्मै साधुत्वञ्च रोचते । साधुत्वस्य च तदेकनिष्ठायामेव मुख्या वृत्तिः, ' धर्मः प्रोज्झितकैतवोऽत्र 'इत्यत्र मोक्षेच्छापर्यन्तस्य कैतवतास्वीकारात्, " न किञ्चित्साधवो धीरा भक्ता ह्येकान्तिनो मम । वांछंत्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥ साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् । मदन्यं ते न जानन्ति नाहं तेभ्यो मनागपि ॥ " इति स्पष्टत्वात् । तदेकनिष्ठता च तत्प्रेमतारतम्यैकतारतम्या, तद्द्वैविध्येन त्रिविधा च, प्रेमैकहेतुत्वात्तस्याः । यथा चोक्तम्—' यथाश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ' इति, " येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम् " इत्यादि । तच्च तत्प्रेम निर्गुणम् " सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् । तामसं मोहदैन्योत्थं मन्निष्ठं निर्गुणम् स्मृतम् ॥ सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी । तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा ॥" इति भगवता निर्णीतत्वात् । अतस्तादृशसाधुमात्रापेक्षी भगवान् "मद्भक्तानां विनोदार्थं करोमि विविधाः क्रियाः" इति पाद्मोक्ततदुक्तानुसारेण तत्सुखमयस्वसुखाय क्रीडति यत्तत्तस्य स्वभाव एवेति स्थिते 'ये यथा मां प्रपद्यन्ते' इति न्यायाद्यथावसरं प्रियादिरूपतामपि प्राप्नोति । संप्रति च वसुदेवदेवक्यादिभ्योऽपि युवयोः शुद्धवात्सल्यप्रेमातिशयवत्त्वात्तानुपेक्ष्य युवयो रक्षामिच्छन् युवयोः प्रेमभिराकृष्यमाणो युवयोरेव पुत्रत्वमात्मनि बहुमन्यमानो युवयोरग्रे तदुचितमनोहरलीलाप्रकाशनलालसो व्रजमागमिष्यत्येवेति । तदुक्तं स्वयमेव—" गच्छोद्धव व्रजं सौम्य पित्रोर्नः प्रीतिमावह " इति ॥ ३९ ॥ अत्राशंकते—नन्विति । एतत् आविर्भावकल्पनम्, वस्तुतो निर्गुणोऽपि मायया सत्त्वादिगुणान् लीलार्थमादत्ते । यद्यपि क्रीडातीतस्य क्रीडनं न संगच्छते तथापीति । इत्यर्थ इति—स्फटिकरागवदुपाधिसंबंधेन क्रीडा संपनीपद्यत एवेति भावः ॥ * ॥ ननु यदि तस्य सर्वत्र साम्यात्प्रियाप्रियादयो न सन्ति तर्हि कथं तेन केचित्सुखिनः केचिद्दुःखिनश्च जगत्यत्र सृष्टास्तत्र गुणकृतमेव सुखदुःखादिकं न तत्कृतमित्याह—सत्त्वमिति । निर्गुणोऽपि स्वमायाशक्त्या वीक्षणादिना गुणाँस्तदीयान्स्वीकुरुते । किमर्थम्—क्रीडन् क्रीडितुम् । अतीतः क्रीडातीत इति । क्रीडापि तस्य नास्तीति नंदं बोधयितुमभीप्सितोऽर्थः । वस्तुतस्तु गुणानतीतः सन्नत्र मायिकलोकमध्ये कृष्णरामाद्यवतारेण स्वभक्तैः सह क्रीडितुमित्यर्थः । अतो गुणैर्जगत्सृजति । यत एव प्राक्कल्पगतजीवाः स्वस्वशुभाशुभ

यथा भ्रमरिकादृष्ट्या भ्राम्यतीव महीयते ॥ चित्ते कर्तरि तत्रात्मा कर्तेवाहंधिया स्मृतः ॥ ४१ ॥ युवयोरेव नैवायमात्मजो भगवान्हरिः ॥ सर्वेषामात्मजो ह्यात्मा पिता माता स ईश्वरः ॥ ४२ ॥ दृष्टं श्रुतं भूतभवद्भविष्यत्स्थास्नुश्चरिष्णुर्महदल्पकं च ॥ विनाऽच्युताद्वस्तु तरां न वाच्यं स एव सर्वं परमार्थभूतः ॥ ४३ ॥

अत्राविद्योपाधेर्जीवस्य कर्तृत्वं दृष्टांतीकुर्वंस्तस्याविद्ययैव कर्तृत्वमिति सदृष्टांतमाह । यथेति । भ्रमरिका परिभ्रमणं तयोपलक्षितया दृष्ट्या मही भूरपि भ्राम्यतीति तथा प्रतीयते एवं चित्ते कर्तरि सति तत्र चित्ते विक्षिप्तेऽहंधिया आत्माध्यासेनात्मा कर्ता स्मृतो यथा तद्वदिति ॥ ४१ ॥ किं च युवयोरेव नायमात्मजः किं तु सर्वेषामपि तत्रापि नात्मज एव किन्तु शत्रुमित्रादिरूपोऽपीति सर्वात्मत्वनिरूपणेन तयोर्मोहनिवृत्तये संबंधमनैकांतिकीकरोति । युवयोरेवेति द्वाभ्याम् ॥४२॥ अच्युताद्विना तरां नितरां तत्त्वतो

कर्मसाधनफलसिद्ध्यर्थं बुद्धीन्द्रियादीनि प्राप्य सुखिनो दुःखिनश्च भवन्तीति तत्र तस्य को दोषः, न हि तस्य प्रिया अप्रियाश्चेति भावः । तोषिणी तु—तैर्व्याख्यातं, तत्र तथापि तत्सान्निध्यबलेन तन्मायागुणास्तत्र कुर्वन्ति, तत्तस्मिन्नारोप्यत इत्यर्थः । यद्वा—इतः क्रीडा च तस्य स्वभाव एव यत्र प्राकृतसत्त्वादीनप्यनुरक्तीकरोतीति दर्शयति । गुणेभ्यः सत्त्वादिभ्यो निष्क्रान्तस्तत्संसर्गरहितोऽपि क्रीडन् निजभक्तसुखमयनिजसुखक्रीडाहेतोः सत्त्वं रजस्तम इति गुणानपि भजते, तर्हि तैराविष्टो भवति नहिनहीत्याह—गुणैः स्वरूपभूतैर्ज्ञानादिभिस्ताननतिक्रान्तस्तदंनाविष्ट इत्यर्थः । अत एव अजः, जन्मादिविकाररहितत्वेन तन्नामेत्यर्थः । प्राकृतसत्त्वादिमयीं क्रीडामप्याह—सृजतीति ॥ ४० ॥ अत्र प्रकृते । तस्य जीवस्य । तया भ्रमरिकया । तत्र कर्तृत्वाभिनिवेशवति । आत्मा जीवः । तद्वदीशेऽपि स्रष्टृत्वादिकं मायाकृतमेव न स्वाभाविकमसंगत्वात्तस्येत्याशयः ॥ * ॥ जगत्स्रष्टृत्वमपि परमेश्वरे तत्र वस्तुतो नास्ति तस्यापि गुणकृतत्वादित्याह—यथेति । भ्रमरिका परिभ्रमणं वातादिधातुवैगुण्यात्तद्युक्तया दृष्ट्या जनेन मही कुंभकारचक्रवद्भ्राम्यतीव ईयते प्रतीयते । यथा च जीवेन चित्तेऽपि कर्तरि सति तत्रैवाहंधिया चित्तमेवाहमिति बुद्ध्या आत्मा कर्ता स्मृतः स्मर्यते, तथैव गुणकृतैव जगत्सृष्टिरीश्वरे प्रतीयत इति शेषः । एवञ्च स्वरूपेणैव तस्य जगत्स्रष्टृत्वं नास्ति, किन्त्वस्वरूपभूताया अपि मायायास्तच्छक्तित्वेन तदभेदाज्जगत्स्रष्टृत्वमस्यापीति ज्ञेयम् ॥ ४१ ॥ पुत्राभिनिवेशं नैजत्वेनाविष्टमालक्ष्य तन्निवृत्तये सर्वरूपतां निरूपयितुमाह—किञ्चेति । अयं कृष्णः । तत्रापि सर्वात्मजत्वेऽपि न केवलमात्मज एवेति । आदिना सुहृदादयो ग्राह्याः । अनैकान्तिकीकरोति व्यभिचारयति ॥ * ॥ अतः प्रेमविशेषवशत्वेनैव युवयोः पुत्रोऽसौ ततः कथंचिदन्यत्र गतोऽप्यागमिष्यत्येव, यदि च प्रातीतिकेन जन्यजनकभावेन तस्मिन्पुत्रत्वं मन्यसे तदा सर्वात्मकत्वेन न केवलं युवयोरेव अपि तु सर्वेषां, न केवलं पुत्र एवापि तु पित्रादिरपि । तत्रतत्र च साक्षात्तदालंबनकप्रेमविशेषाभावान्न कदाचिदनुगच्छेदिति बोधयति—युवयोरेवेति द्वाभ्याम् । अयं मद्विधस्येश्वरः । भगवान्सर्वैश्वर्ययुक्तः । हरिर्दुःखहर्ता । यद्वा—तस्मात्प्रेमविशेषसद्भावमात्रस्य तस्मिन्पुत्रत्वापादकत्वाद्युवयोरेवायमात्मजः, नैव न तु सर्वेषामात्मजः, हि यस्मात्सर्वेषामात्मा परमात्मा, पिता जनयिता, स्थाता धाता, ईश्वरः कर्मदाता चेति ॥ अत्र **विश्वनाथः**—अतो जगत्स्रष्टरि तस्मिन्परमेश्वरे पुत्रादिभावना सुखदुःखदत्वादिभावना च कर्तुं नोचिता, तदपि परमेश्वरोऽपि स कृष्णो ममैव पुत्र इति यदि मन्यसे, तदा शृणु तत्त्वमित्याह—युवयोरेव नात्मजः किन्तु येये तस्मिन्नात्मजभावं कुर्युस्तेषां सर्वेषामेवात्मजः । आत्मा आत्मवत्प्रेष्ठः येये तस्मिन्नात्मैवायमिति भावं कुर्युस्तेषामात्मा । एवं पित्रादिभाववतां स पित्रादिः । ईश्वर इतीश्वरत्वात्तस्मिन्किमपि नायुक्तमिति भावः ॥ ४२ ॥ तरामिह निर्लोप आर्षः । अत एव स्वामिचरणैर्व्याख्यातं—नितरामिति । परमार्थरूपो नित्याप्रतिहतरूपः ।:स एव श्रीकृष्ण एव ॥ * ॥ भो व्रजराज, वस्तुतस्तु युष्मदादिकं सर्वमिदं जगदिच्छाशक्तिसृष्टत्वात्तदात्मकमेव जानीहि ब्रूहि च तदनुरूपमित्याह—दृष्टमिति । अच्युताद्विना वस्तु नतरां

एवं निशा सा ब्रुवतोर्व्यतीता नंदस्य कृष्णानुचरस्य राजन् ॥ गोप्यः समुत्थाय निरूप्य दीपान्वास्तून्समभ्यर्च्य दधीन्यमंथन् ॥ ४४ ॥

वाच्यं निर्वचनार्हं वस्तु नास्तीति ॥ ४३ ॥दीपान्निरूप्य प्रज्वाल्य । वास्तून्देहल्यादीन् ॥ ४४ ॥

नैव वाच्यम् । प्रकृतिप्रत्ययपौर्वापर्यभाव आर्षः ॥ ४३ ॥ एवमुक्तरीत्या । कृष्णानुचरस्योद्धवस्य । समभ्यर्च्य वास्तुदेवताः मार्जनालेपनाक्षतादिभिः ॥ * ॥ एवं पूर्वोक्तप्रकारेण । तत्र श्रीनंदस्य तत्प्रकारो यथाकथञ्चित्स्वपुत्रा गमनमात्रतात्पर्यकः, श्रीमदुद्धवस्य तत्प्रकारस्तु सान्त्वनमात्रतात्पर्यकः "वीक्ष्यानुरागं परमं नंदमाहोद्धवो मुदा" इत्याद्युक्तेः । यथायमनयोर्भावः सर्वेषां श्लाघनीयः, एतादृशभावमूलकं चेदं विरहदुःखम्, तच्च संप्रति परमदुःसहं जातम्, श्रीकृष्णागमनञ्च न संप्रति घटते तस्माद्भावश्लाघासहितेनैव तत्त्वोपदेशेन भावमेवैतं यत्किञ्चिद्विश्लथ्यमानं विधाय तद्दुःखञ्च तादृशं विधेयमिति सान्त्वनमात्रतात्पर्यकः । ब्रुवतोस्सतोरिति शतृप्रत्ययेन तु द्वयोरपि पुनःपुनस्तादृगुक्तिं बोधयति । सा तयोः सल्लाँपसंबंधिनी दीर्घापि निशैव विशेषेण निरवशेषाऽतीता, न च श्रीगोपेन्द्रस्य शोको नाप्युद्धवस्य तदर्थवाक्प्रयोगो विरराभेत्यर्थः । कृष्णानुचरस्येति–तदादेशानुसारेणाशेषवा क्चातुर्यवतोऽपीत्यर्थः । ततश्च प्रातःकृत्यार्थं त्वरया श्रीमदुद्धवो बहिर्निर्गत इति ज्ञेयम् । तदागमनज्ञानेन च गोप्यः प्रातर्गृहकृत्यं कर्तुं प्रवृत्ता इत्याह–गोप्य इति । गोप्योऽत्र विस्रंभप्रधानांतःपातिन्यः साधारण्यो वा । दधिमंथनमिदं प्रायः कृष्णाय नवनीतप्रेषणापेक्षया । अत्र **विश्वनाथः**–एवं तयोर्ब्रुवतोरेव सा निशा व्यतीता, न तु नंदयशोदयोः सान्त्वनं कर्तुमुद्धवः शशाक, नाप्युद्धवस्य प्रबोधनं तौ जगृहतुरिति भावः । अत्र व्रज राजो मनस्येवं विचारयामास–अयं कृष्णः परमेश्वर एवेति यन्मां प्राबोधयदुद्धवस्तत्किमप्यहं न जानामि, अस्य नामकरणसमय एव नारायणसमोऽयमिति गर्गमुखादश्रौषमेव, नारायणस्य समः स्तं विना कोऽन्यस्तस्मात्तथा पूत नाघबकादिमारणाद्गोवर्धनधारणाद्दावानलोपशमनाद्वरुणलोकपालप्रणमनान्नारायणत्वमस्यान्वभूवमेव । नारायण एव परमात्मा स एव परं ब्रह्मेत्येतदपि जानाम्येव, न तदप्ययमावयोरेव पुत्र इत्यत्राराधितोऽस्मदनुभव एव प्रमा णम् । 'तस्मान्नन्दात्मजोऽयं ते' इति श्रीगर्गमुनिवाक्यमपि परमेश्वरेऽपि तस्मिन्नाराध्यबुद्धिमकृतवतोरपि स्वभुक्तशेषतांबूलचर्वितादिकं समर्पितवतोरप्यावयोर्मनःप्रसादान्यथानुपपत्तिरपि कृष्णजन्मनः प्रागावयोरिष्टदेवो नारा यणो ध्यातुं शक्य एवासीदधुना तु ध्यानमात्र एव स्फुरत्याविर्भवति चेत्यावयोर्मनःप्रसादालिंगम् । अत आवयोः पुत्रे तस्मिँस्तत्तद्व्यवहृतिर्न दोषः । तथा कृष्णस्यावां पितरावेवेत्यत्र कृष्णस्यानुभवः प्रमाणम्, आवयोस्तांबूल चर्वितप्रदानांकारोहणपरिष्वंगचुंबनादिलक्षणलालनस्याप्राप्तौ सत्यां तस्य मुखम्लानेर्बहुशो दृष्टत्वात् । आवयोः पितृत्वे सत्येव परमेश्वरोऽपि स विविधानुशासनभर्त्सनबंधनादिकमंगीकुरुते स्म । अन्यथा परब्रह्मणः सर्वव्याप कस्य परमेश्वरस्य कथं बंधनमिति । किन्तु सांप्रतं मथुरायाञ्च कंसादिवधानंतरं हे कृष्ण त्वं परमेश्वर एवेति सर्व एव ब्रुवते स्म । तत्र देवकी तु अहं ते मातेति, वसुदेवोऽहं ते पितेति, केचिदन्ये वयं ते पितृव्या इति, केचिच्च वयं ते भ्रातर इति, आत्मीया इति, बँधव इत्याद्युक्त्वा बहव एव तं यदा स्वस्वगेहं प्रति नेतुं निमंत्रयन्तो मथुरायामेव रोद्धुं प्रावर्तन्त तदा मत्पुत्रो महाभव्याशिरोमणिः स महासंकटे तत्तन्मुखापेक्षया जले पतितः[1] स्वीयं व्रजमपि गंतुमपारयन्सर्वत्रैव दाक्षिण्यादेवैमब्रवीदित्यहमनुमिमे[2] । अहं खलु परमेश्वर एव सर्वस्रष्टा, मम का माता, कः खलु पिता, क आत्मीयः, को वाऽपरः, किन्तु यूयं सर्वशास्त्रं पश्यत यो मे भक्तिं करिष्यति तस्यैवाहं नान्यस्य गृहं यास्यामि, स एव मे पित्रादिरिति । अयं तूद्धवो बालक एव बुद्धिमानपि मत्पुत्रस्य तस्य महागंभीरहृदयहृदमवगाढुमसमर्थस्तद्वाचं तां श्रुत्वा कृष्णस्यायमेवाशय इति मत्वा तत आगत्यात्र मां तथैव बोधयति । किञ्च–मत्पुत्रेण चातुर्यात्सम्यगेवैतदुक्तम्–यो मे भक्तिं करिष्यति स एव मे पित्रादिस्तस्यैव गृहे वसामीत्यतोऽहमप्युद्धवद्वारा संदेशमिमं संप्रेषयिष्यामि–हे कृष्ण त्वच्चरणे मे भक्तिर्भवेत्तथा कृपया प्रसीद, यथा त्वदीय श्रवणकीर्तनस्मरणप्रणमनादिभक्त्या त्वामहं प्राप्नुयामिति, ततश्च सर्वयादवसभासु मत्संदेशमिमं प्रथयित्वा–भोभो यदुवंश्याः भवन्तोऽत्र मद्भक्तिं कर्तुं न शक्नुवन्ति नन्दस्तु करोत्यतः स एव पिता बंधुः प्रियश्च

---

१ प्रणयोल्लंघनसंकोचरूपजले निमग्न इत्याशयः । २ वक्ष्यमाणाहं खल्वित्यादिरीत्या ।

ता दीपदीप्तैर्मणिभिर्विरेजू रज्जूर्विकर्षद्भुजकंकणस्रजः ॥ चलन्नितंबस्तनहारकुंडलत्विषत्कपोलारुणकुंकुमाननाः ॥४५॥ उद्गायतीनामरविंदलोचनं व्रजांगनानां दिवमस्पृशद्ध्वनिः ॥ दध्नश्च निर्मंथनशब्दमिश्रितो निरस्यते येन दिशाममंगलम् ॥ ४६ ॥ भगवत्युदिते सूर्ये नंदद्वारि व्रजौकसः ॥ दृष्ट्वा रथं शातकौंभं कस्यायमिति चाब्रुवन् ॥ ४७ ॥ अक्रूर आगतः किं वा यः कंसस्यार्थसाधकः ॥ येन नीतो मधुपुरीं कृष्णः कमललोचनः ॥ ४८ ॥

दीपप्रकाशेन दीप्तैः मणिभिः कांच्यादिषु स्थितै रत्नैस्ता गोप्यस्तदा विरेजुः । कथंभूताः । रज्जूर्विकर्षत्सु भुजेषु कंकणानां स्रजो यासां ताः । चलंतो नितंबाः स्तना हाराश्च यासां ताः । कुण्डलैस्त्विषंतः स्फुरन्तः कपोला यासां ताः अरुणानि कुंकुमानि येषु तान्याननानि यासां ता एव ताश्च ताश्च ॥ ४५ ॥ ४६ ॥ तदा व्रजौकसो गोप्यः ॥ ४७ ॥ सक्रोधमाहुः । अक्रूर इति । अर्थं साधितवानित्यर्थसाधकः । तदाहुः । येन नीत इति ॥ ४८ ॥

तद्गृहमेव यामीत्युक्त्वा स शीघ्रमिहागच्छेदिति तदन्ते व्रजराजस्तमपि परामम‍र्श, दैन्यसञ्चारिप्राबल्येन विसस्मारैव । अथ प्रकृतमनुसरामः–ब्राह्मे मुहूर्ते समुत्थाय दीपान्प्रज्वाल्य देहल्यादीनादिना क्षेत्रपालादीन् ॥ ॥ ४४ ॥ ता गोप्यः ॥ * ॥ दीपैर्हेतुभिर्दीप्तैस्तत्प्रतिबिंबेन विशेषितैः विरेजुः स्वत एव रेजुः, पुनश्च तादृशमणिदीप्तिभिर्विशेषतो रेजुरित्यर्थः । यद्वा–दीपादपि दीप्तैरतो विशेषतो रेजुः, अतो दीपज्वालनं तु मंगलतयैव । विराजमाने हेत्वन्तरं–रज्जुरित्यादि । स्रक्श्रोणिकुंडलस्यापि चलनं प्रकरणवशाज्ज्ञेयम् । अरुणेति बाह्लीकदेशोद्भवानि कुंकुमानि व्यज्यन्ते ॥ ४५ ॥ दिवं स्वर्गम् । येन ध्वनिना । दिशां दिक्षु स्थितानामशुभं नश्यतीत्यर्थः । एतेन तासां ध्वनिस्तदा सर्वदिक्षु दिवि च प्रसृत्य तत्रत्यकर्णदेशमागत्य तेषामशुभं नाशयतीत्यर्थः ॥ * ॥ संततश्रीकृष्णावेशयुक्तानामपि तासां व्रजव्यवहाररक्षणाय श्रीकृष्णैकरक्षिततत्तत्संस्कारवशाद्दधिमंथनेऽपि तदावेशं सूचयँस्तत्र च योग्याऽवसरतया गानेनाऽतिशयं दर्शयँस्तेन जगतोऽपि मंगलं जातमित्याह–उदिति, उच्चैरित्यावेशो दर्शितः । अरविन्दलोचनमिति सौन्दर्यप्रधानं गानं व्रजांगनानामिति तादृशप्रसिद्धेर्गाननैपुण्यञ्च । एवं प्रेम्णोच्चैर्गानात्तासां बाहुल्याच्च गीतध्वनेर्व्यापकता ज्ञापिता । अत एव दिवमस्पृशत् । तत्र हेत्वन्तरञ्च–दध्न इति । निर्मंथनं निरंतराविलोडनम् । चकारात्कंकणादेश्च शब्दः मिश्रितः । दिशां दशदिग्वर्तिनां सर्वेषामेव लोकानाममंगलमैहिकामुष्मिकाऽशेषदुःखं तन्मूलञ्च कर्म निरस्यते सवासनं दूरतः क्षिप्यते ॥ ४६ ॥ तदा सूर्योदये । शातकौंभं सुवर्णबहुलम् । 'शातकौंभं सुवर्णे च घटपुंजेऽश्वमारके' इति मेदिनी ॥ * ॥ भगवतीति तमोनाशनादिशक्त्यभिप्रायेण भगवत्पूजाधिष्ठानादिना वा । तादृशी स्तुतिश्च तदुदयस्य सर्वेषां व्रजवासिनां श्रीकृष्णवार्ताप्राप्तिसुखमयहेतुतया संतोषेण । व्रजौकसः पुरुषाः, स्त्रीणां वक्ष्यमाणत्वात् । तदेति तच्छब्दप्रयोगश्च सदा व्रज एव निवासात्तद्रथाऽपरिचये हेतुः । किञ्च–शातकौंभं स्वर्णपरिवृतमिति वैलक्षण्यमुक्तमतोऽयं कस्येत्यब्रुवन् । चकारादनुक्तञ्चान्यत्किंचित्समुच्चिनोति ॥ ४७ ॥ स्वयमाक्षिप्य समादधिरे–कंसेत्यादिना । येनाक्रूरेण ॥ * ॥ अथोत्कण्ठाप्रधानान्तःपातिनीनां कासाञ्चिद्वाक्यमाह–अक्रूर इति द्वाभ्याम् । मधुपुर्यधिकारित्वदैत्यत्वाभ्यां कंसोऽपि मधुस्तस्य पुरीमिति, तस्यां तन्नयनाऽयोग्यता । कृष्ण इति नास्मत्पुत्रादिरन्योऽपि किन्तु स्वयमेव कृष्ण इति, तत्रापि कमललोचन इति विशेष्यसौन्दर्यविशेषसर्वतापहारितागुणविशेषस्मरणेन निजहृदयार्तिविशेषं निवेद

किं साधयिष्यत्यस्माभिर्भर्तुः प्रेतस्य निष्कृतिम् ॥ इति स्त्रीणां वदंतीनामुद्धवोऽगात्कृताह्निकः ॥ ४९ ॥ इति श्रीभा० महा० दशम० पू० नंदशोकापनयनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ छ ॥ श्रीशुक उवाच ॥ तं वीक्ष्य कृष्णानुचरं व्रजस्त्रियः प्रलंबबाहुं नवकंजलोचनम् ॥ पीतांबरं पुष्करमालिनं लसन्मुखारविंदं परिमृष्टकुंडलम् ॥ १ ॥ शुचिस्मिताः कोऽयमपीच्यदर्शनः कुतश्च कस्याच्युतवेषभूषणः ॥ इति स्म सर्वाः परिवव्रुरुत्सुकास्तमुत्तमश्लोकपदांबुजाश्रयम् ॥ २ ॥

कंसं घातयित्वा पुनः किमर्थमागत इत्याशंक्य स्वयमेव कारणं संभावयंति । किमिति । तदा तथा साधितेन कार्येण प्रीतस्य तुष्टस्य भर्तुः । पाठांतरे प्रेतस्य मृतस्य कंसस्य निष्कृतिमौर्ध्वदेहिकमस्माभिः कृत्वा साधयिष्यते किम् । अस्मद्रक्तमांसैः तिलोदकं पिंडांश्च कृत्वा दत्त्वा तस्यौर्ध्वदैहिकं संपादयिष्यति किमिति भावः । इत्येवं वदंतीनां स्त्रीणां ततस्तस्मिन्नवसरे कृताह्निकः कृतस्नानादिनियम उद्धव आगत इति ॥ ४९ ॥ इति दशमस्कंधे पूर्वार्धे टीकायां षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ छ ॥ सप्तचत्वारिंशकेऽथ कृष्णादेशेन गोपिकाः ॥ बोधयित्वोद्धवस्तत्त्वमनुज्ञाप्यागमत्पुरीम् ॥ १ ॥ १ ॥ अपीच्यं सुंदरं दर्शनं यस्य सः । अच्युतस्येव वेषो भूषणानि च यस्य

यन्ति । अत एव तादृशस्य व्रजाद्बहिरपि नयनमयुक्तं किमुत मधुपुर्यामिति भावः । यद्वा—क्रुद्धा आहुः—यः कंसस्यार्थं साधितवानिति सः ॥ ४८ ॥ निष्कृतिं प्रीतिम् "स्यान्निष्कृतिरौर्ध्वदैहप्रीत्यानृण्येषु कृत्रिमे" इति धरणिः । प्रेतस्य परलोकं गतस्य । किमिति वितर्के । इत्यर्थ इति—मृतोद्देशेन मांसेन श्राद्धं बहुतृप्तिकरं भवतीत्यर्थः । ततस्तासां कथनोत्तरम् । तास्मिन्नवसरे कथनोत्तरक्षणे ॥ * ॥ यद्यपि स्वभर्तुः कंसस्यैवार्थसाधनाय श्रीकृष्णं नीतवाँस्तथापि दैवात्तस्मिन्घातिते स्वार्थसाधनाय तत्रैव श्रीकृष्णं रक्षित्वा यत्पुनरत्रागतस्तन्नूनमेवमभिप्रायेणैवेत्याभिप्रेत्याहुः—किमित्यर्धेन । पूर्वं प्रीतस्य पश्चाद्दैवादन्यथात्वं प्राप्तस्येत्यर्थः । पाठान्तरे प्रेतस्यापि निष्कृतिमानृण्यमिति । ततस्तादृशोक्तिश्रवणात् । **विश्वनाथस्तु**—कंसं घातयित्वा किमर्थमागतः पुनरित्याशंक्य कार्यं संभावयन्ति—तदा साधितेन कार्येण प्रीतस्य । 'प्रेतस्य' इति पाठे मृतस्य निष्कृतिमस्माभिः कृत्वा साधयिष्यति, अस्मन्मांसैः पिंडान्कृत्वा दास्यतीत्यर्थः । इति वदन्तीनां समीपमगात् ॥ ४९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे पूर्वार्धे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ अथ तत्त्वबोधानंतरम् । ता अनुज्ञाप्य पृष्ट्वा ( १ ) । व्रजांगनाव्यामोहोक्तिभंग्या श्रीकृष्णभक्तिमत्राध्याये वक्ति— । तमुद्धवम् । परिमृष्टे देदीप्यमाने कुंडले यस्य स तम् ॥ * ॥ व्रजस्त्रिय इति—व्रजेऽपि श्रेष्ठत्वेन याः प्रसिद्धा भगवत्प्रेयसीरूपास्त्रियस्ता इत्यर्थः । 'व्रजस्त्रियः कृष्णगृहीतमानसाः' इत्यादिष्वपि तथैव, तत्प्रसंगे तच्छब्दप्रयोगात् । उद्धवं वीक्ष्य तं च कृष्णानुचरं वीक्ष्य तदाकारतया निभाल्य । तत्र हेतुः—प्रलंबबाहुमित्यादि । तत्र पुष्करमाला तु प्रस्थापनसमये श्रीभगवतैव स्वकंठात्प्रसादीकृतेति गम्यते । व्रजेऽप्येतादृशतत्समनिवेशरूपा एव तदनुचरा इत्यनुमानात्तदनुचरत्वेन वितर्क्येत्यर्थः ॥ १ ॥ 'पीच—वैरूप्ये' पीचनार्हः पीच्यो न पीच्योऽपीच्यः 'अपीच्यः सुंदरेऽनिंद्ये' इति धरणिदेवः । तम् उद्धवम् । परिवव्रुः परिवेष्टितवत्यः ॥ * ॥ अतः सुविस्मिताः—अन्यत्रापि कथमेतादृशोऽस्तीति तदेतदाहुः कोयमिति । 'शुचिस्मिताः' इति पाठे तस्य प्रसादायारोपितस्मिता इत्यर्थः । दृश्यते इति दर्शनं रूपम् । वेषो वस्त्रतिलककेशबंधादिः, भूषणं कटककुंडलादि । यद्वा—अच्युतवेषभूषणे एव वेशभूषणे यस्य तम् "त्वयोपभुक्तस्रग्गंध

---

१ प्रीतस्य' इति पा० ।

तं प्रश्रयेणावनताः सुसत्कृतं सव्रीडहासेक्षणसूनृतादिभिः ॥ रहस्यपृच्छन्नुपविष्टमासने विज्ञाय संदेशहरं रमापतेः ॥ ३ ॥ जानीमस्त्वां यदुपतेः पार्षदं समुपागतम् ॥ भर्त्रेह प्रेषितः पित्रोर्भवान्प्रियचिकीर्षया॥४॥अन्यथा गोव्रजे तस्य स्मरणीयं न चक्ष्महे॥स्नेहानुबंधो बंधूनां मुनेरपि सुदुस्त्यजः॥५॥

सः । कोऽयं कुतो वा कस्य चेति वदंत्यस्तं परिवव्रुः ॥ २ ॥ ३ ॥ पार्षदं सेवकम् ॥ ४ ॥ पित्रोः प्रियचिकीर्षयेत्यत्र हेतुः । स्नेहानुबंध इति ॥ ५ ॥

वासोलंकारचर्चिताः '' इत्येतद्वाक्यानुसारात् । तत्राप्यापाततोऽसंकोचे हेतुः—उत्सुकाः , कालाक्षमत्वेन विचारशून्याः । पश्चादपि तत्र हेतुः—उत्तमश्लोकः श्रीकृष्णस्तत्पादाम्बुजमेवाश्रयो यस्य तम् । यद्वा—उत्तमश्लोकपदांबुजयोः संवाहनाद्यर्थमुपधानवदाश्रयस्तस्य तथा तदात्मीयतां निर्धार्येत्यर्थः । **विश्वनाथस्तु—**शुचि शुद्धं स्मितं यासामिति कृष्णस्मारकवेश (ष) दर्शनात्थेन हर्षेण स्मितम् । 'सुविस्मिताः' इति पाठे कृष्णस्यैव पीतांबरमिदं तदंगोत्तीर्णमेव कमलमाला च कथमनेन प्राप्ते इति विस्मयः । अपीच्यं सुंदरं दर्शनं यस्य सः । कोऽयं, कुतः, कस्य वा मनुष्य इति वदंत्यः कृष्णवृत्तांतप्राप्तिसंभावनयोत्सुकाः ॥२॥ ताः किं चक्रुरित्यत आह—तमिति । तम् उद्धवम् । रमापते राधापतेरित्यनेन तस्यां तस्याऽऽसक्तिर्नान्यत्रेति सूचितम् ॥ * ॥ ततश्च तमिति तमुद्धवं रहसि रमापतेः संदेशहरं विज्ञाय स्वयमेव पूजांगत्वेन दत्त आसन उपविष्टं सन्तं प्रश्रयेणावनताः सद्यः पुनः सव्रीडहासेक्षणसूनृतादिभिः सुसत्कृतं संतमपृच्छन्निति क्रमः कर्तव्यः।अत्रासन इति सामीपिकार्थमेवाधिकरणं ज्ञेयम् । तद्विधासु तस्य महाभक्तेरेव निर्णीयमानत्वात्,यतः सैरन्ध्र्यादिषु तस्य तादृशता वर्णयिष्यते इति कैमुत्यलाभाच्च । प्रश्रयेणावनता विनयनम्रशिरसः । व्रीडो व्रीडा, हासः प्रसादस्ताभ्यां युक्तमीक्षणमवलोकनं सूनृतं च स्वागतं कुशलञ्चेत्यादिप्रियवाक्यं तदादिभिस्तत्पुरःसरासनपाद्यादिभिः सुसत्कृतमादृतम्, ततश्च रहसि विजातीयभावाऽगोचरे तत्रासने उपविष्टं सन्तं तादृशरहःस्थलगमनोपवेशादिहेतो रमापतेः संदेशहरं विज्ञाय अस्मास्वपि कमपि संदेशमानीतवानयमिति निश्चित्यापृच्छन् । रमापतेः 'जयति तेऽधिकं जन्मना—' इत्याद्यनुसारेण तादृशतत्संपत्तिदर्शनेन ज्ञातस्य तासामेवाभिप्रायस्य प्रकटनमिति विशेष्य व्याख्येयम् ॥ **विश्वनाथस्तु—**प्रश्रयेति व्याख्यातचरम् । व्रीडा स्त्रीस्वभावोत्था मूर्द्धादेरीषदावरणलक्षणा लज्जा, सा ह्यादरणीय जनसामान्यदर्शने सहसैव भवेत्, हासः स्वप्रियदास एवायमिति निश्चयेन मुखप्रसादस्ताभ्यामीक्षणं संपूर्णावलोकनम् । आदिना यथासमयं यथोपस्थितञ्च पाद्याद्यातिथ्यं रहसि विजातीयजनागोचरस्थले, तादृशस्थले सहसैवागमनेन तं संदेशहरं विज्ञाय । रमापतेरिति गोपीपक्षपातिनः शुकस्यासूयाद्योतनम्—संप्रति मथुरायां स्पष्टमेव परमेश्वरः, तं सुखयितुं रमैवागमिष्यति किमेतासु संदेशप्रेषणदंभेने त्याकारकम् ॥ ३ ॥ यदुपतेरित्यनेनापि गोपीपतित्वाभावं सूचयंति । भर्त्रेहेति राधोक्तिः, न हि भर्तॄणां वनितात्यागो योग्य इति भावः । पित्रोर्नंदयशोदयोः ॥ * ॥ जानीम इत्यत एवालं प्रश्नेनेति । यदुपतेरिति स गोपजातिरपि संप्रति यदूनां पतिरभूदिति बृहत्पदप्राप्तस्य स्वयं कथमत्राजिगमिषा संभवेदिति भावः । अत एव भवान्प्रेषितः, पित्रोः प्रियचिकीर्षया न तु स्वस्य, तेन यशोदानंदाभ्यां पितृभ्यां गोपजातिव्यञ्जकाभ्यामस्य किं प्रयोजनमिति भावः । नंदयशोदे रुदित्वा म्रियेते कृष्णो मथुरायां राज्यं करोतीति लोकनिंदाभयादेव त्वं प्रेषित इति मन्यामहे, किन्तु भोश्चतुरवर्य तेन सुबुद्धिशेखरेण प्रेषितः पित्रोः प्रियचिकीर्षया त्वं चात्रायातोऽतः प्रयाहि नंदयशोदयोः समीपम्, तौ हि त्वां प्राप्यानंदेन कृष्णं तं विस्मारिष्यत इति धन्यैव तस्य विवेकतीक्ष्णतेत्याद्या बहव एव व्याजस्तुतिमयात्यंततिरस्कृतवाच्यध्वनेः पल्लवाः ॥ ४ ॥ अन्यथा नंदयशोदाप्रियचिकीर्षामंतरा । तस्य कृष्णस्य । चक्ष्महे पश्यामः । मुनेरपि शमनिष्ठावतः संन्यासिनोपि, वसिष्ठादिषु तथा श्रवणात् । सुदुस्त्यजोऽतिशयेन त्यक्तुमशक्यः । सुरत्रातिशयेऽनेकार्थत्वात् । न हि कृष्णः संन्यासीति भावः ॥ * ॥ तौ विना तु तस्य यदुपतेः गोव्रजे तन्मात्रवनगोपावासे स्मरणयोग्यमपि न पश्यामः, किमुत तत्स्मरणपथगतमित्यर्थः । यत्तु तयोरपि स्मरणं तदपि तयोरेव स्नेहस्य गुणो न तु तस्येत्याहुः—स्नेहेति । बंधूनामिति—बंधुषु पित्रादिषु स्नेहानुबंधः स मुनेस्संन्यासिनोपि दुस्त्यजः कृच्छ्रेणैव विस्मर्तुं शक्यते न तु सहसा त्यक्तव्य इति ततोपि काठिन्यमित्यर्थः । **विश्वनाथस्तु—**स्मरणीयं स्मरणयोग्यं

अन्येष्वर्थकृता मैत्री यावदर्थविडंबनम् ॥ पुंभिः स्त्रीषु कृता यद्वत्सुमनस्स्विव षट्पदैः ॥ ६ ॥ निःस्वं त्यजंति गणिका अकल्पं नृपतिं प्रजाः ॥ अधीतविद्या आचार्यमृत्विजो दत्तदक्षिणम् ॥७॥ खगा वीतफलं वृक्षं भुक्त्वा चातिथयो गृहम्॥दग्धं मृगास्तथाऽरण्यं जारो भुक्त्वा रतां स्त्रियम्॥८॥

अन्यथा गोव्रजे तस्येत्यत्र हेतुः । अन्येष्विति । अर्थकृता कार्यनिमित्ता । विडंबनं मैत्र्यनुकरणमात्रं न तु तात्त्विकी मैत्री । पुंभिरिति दृष्टांतो ॥ ६ ॥ अस्यैवान्यार्थनिदर्शनैः प्रपंचः निःस्वमित्यादिना । निःस्वं निर्धनम् । दत्ता दक्षिणा येन तं याज्यम् ॥ ७ ॥ पक्षिणो विगतफलं वृक्षम् । रतामनुरक्तामतृप्तामित्यर्थः ॥ ८ ॥

जनं कमंपि न चक्ष्महे पश्यामः, स्मृतयोर्यशोदानंदयोः पित्रोरपि तेन यद्येवमनादरः कृतस्तदास्मदादीनां तदीयस्मृत्येकभूमिकायामप्यारोहणयोग्यता कुत एव स्यादिति भावः । मुनेः कृतसंन्यासस्यापि दुस्त्यजः । षष्ठ्यार्षी । कृष्णेन तु परस्त्रीपुंजेषु रममाणेनापि दुस्त्यज एव इत्यहो कृष्णस्य वैराग्यतीव्रतेति भावः ॥ ९ ॥ अन्येषु पितृव्यतिरिक्तेषु गोपीजनेषु यावदर्थं प्रयोजनावसानपर्यंतमनुकरणमात्रं यस्याः सेति तीर्थः । मैत्र्या इति शेषेण यावदर्थविडम्बनामिति स्वामिनः । तात्त्विकी यथार्था । यद्वत् यथा स्त्रीषु यावदर्था नृणां मैत्री भवतीति तात्पर्यम् । सुमनस्सु पुष्पेषु ॥ * ॥ ननु कृष्णस्य पितृभ्यां भ्रात्रादिभिश्च निष्प्रयोजनत्वान्मैत्री मास्तु, युष्माभिः स्त्रीभिस्तु लंपटत्वात्तस्य प्रयोजनमस्त्येवेति यूयमेव स्मरणीया भवथेति तत्राहुः—अन्येष्विति । अर्थकृता प्रयोजनवती निंद्यैव मैत्री, यावदर्थविडम्बनम् ‘ यावत्तावच्च साकल्ये ’ इत्यभिधानात्सर्वार्थविडंबनरूपाया मैत्र्याः कर्ता, यश्च मैत्र्याः प्रतियोगी यश्च प्रयोजकः यश्चोपकरणं तेषां सर्वेषामप्यर्थानां विडंबनं तिरस्कारस्तद्रूपेत्यर्थः । स्वस्य प्रयोजनसद्भावे मैत्र्याः सत्त्वं, प्रयोजनाभावे मैत्र्या अभाव इत्यर्थः । पुंभिः सुमनःस्विव पुष्पसदृशीषु सौंदर्यसौरभ्यसौकुमार्यमाधुर्यवतीष्वपि स्त्रीषु, श्लेषेण शोभनमनस्कासु अचंचलचित्तास्वपि मैत्री तद्वत्कृता यद्वत् षट्पदैः कृतेत्यन्वयः । षट्पदा हि सौरभ्यादिगुणवंत्यपि पुष्पाणि सकृत्पीत्वैव स्वचापल्यदोषाद्यथा त्यजंति तथैव पुमांसः स्वसंभोगार्हमाधुर्यादिमतीरपि एकनिष्ठा अपि स्त्रीः संभुज्य त्यजंतीति प्रयोजनसद्भावेपि मैत्र्या अभाव इत्यतिनिंदा । **तोषिण्यां** तु—अन्येषु मैत्री अर्थकृता प्रार्थनीयपदार्थोपाधिका न तु बंधुष्विव स्वाभाविकीत्यर्थः । सा च यावदर्थविडंबनम्—यावत्तेर्थास्तावदेव तस्या मैत्र्या अनुकरणमात्रम्, अस्मासु तु न काचिद्बंधुता मिथुनता संबंधश्च न स्थिरः स्यादिति शालीनतया दृष्टान्तोपदेशेनैवाहुः—पुंभिरिति । दृष्टान्तस्यैव दृष्टान्तः सुमनःस्विति । श्लेषेण शोभनचित्तेष्विति न तेषां तत्र दोषः किन्तु चापल्यात् षट्पदानामिति भावः ॥ ६ ॥ अस्यैव यावदर्थविडम्बनस्यैव । निस्स्वं निर्धनम् । गणिका वेश्याः ‘ पण्यस्त्री गणिका वेश्या ’ इत्यमरः । अकल्पं रक्षणाद्यसमर्थम् । अधीता विद्याः शास्त्राणि यैस्ते छात्राः । आचार्यमध्यापकम् । याज्यं यजमानम् ॥ * ॥ मिथुनतासंबंधश्च यदि धर्मप्रधानतः स्यात्तदा स्थिरोपि स्यात्केवलग्राम्यधर्ममयश्चेदस्थिर एव स्यादित्यर्थांतरन्यासव्याजेन तदेव पर्यवसाययंति—निःस्वमिति युग्मकेन । निःस्वं निर्द्रनीभूतम् । अकल्पं पालनासमर्थीभूतम् । ऋत्विजो याजकाः । **विश्वनाथस्तु—**तत्र स्वप्रयोजनाभाव एव मैत्र्या अभाव इत्यत्र दृष्टान्तान्दीपकन्यायेनाह—निःस्वं गणिकास्त्यजंति, तेन यावद्धनप्राप्तिस्तावन्न त्यजंतीत्येवमग्रेपि व्याख्येयम् ॥ ७ ॥ खे गच्छंतीति तथा । गृहं गृहस्थसद्मप्रणयकोपातिरेकं बोधयितुं दृष्टान्तबाहुल्यम् । जीर्य्यति यशः परलोकश्चानेनेति जारः । इत्यर्थ इति—रतिरनुरागो विद्यतेऽस्या इति रता ताम्, मत्वर्थीयाऽचायमर्थो लभ्य इति स्वाम्यभिप्रायः । “रतिः स्त्री स्मरदारेषु रागे सुरतगुह्ययोः” इति मेदिन्याम् । रागेऽनुराग इत्यर्थः ॥ * ॥ रतां रमणवतीमपि स्त्रियं त्यजन्ति, तेन यावत्तस्या यौवनं तावन्न त्यजंतीति पूर्ववदर्थाभावाद्यत्किंचित्प्रयोजनाभावेऽपि मैत्र्या अभावः प्रतिपादितः । तेन तस्य स्वप्रयोजनसिद्धिः पुरस्त्रीभिरेव भवतीति कथं वयं स्मरणीया भवामेति कृष्णस्य स्वेषु प्रेमाभावो दर्शितः । तत्रापि जारा इति बहुवचनेन स्त्रियमित्येकवचनेन च बहुजारपरायाः कामोपाधिकप्रीतिमत्यास्तैस्त्यागः संभवत्वस्माकं तु बह्वीनामपि तदेकनिष्ठत्वमेव केवलं, प्रेमापि न च कैशोर एव कामोपाधिकः किन्त्वाबाल्यादेवेत्यतो निरुपाधिक एव, तदपि कृष्णेन वयं

इति गोप्यो हि गोविंदे गतवाक्कायमानसाः ॥ कृष्णदूते व्रजं याते उद्धवेत्यक्तलौकिकाः ॥ ९ ॥ गायंत्यः प्रियकर्माणि रुदत्यश्च गतह्रियः ॥ तस्य संस्मृत्यसंस्मृत्य यानि कैशोरबाल्ययोः ॥ १० ॥ काचिन्मधुकरं दृष्ट्वा ध्यायंती कृष्णसंगमम् ॥ प्रियप्रस्थापितं दूतं कल्पयित्वेदमब्रवीत् ॥ ११ ॥

त्यक्तलौकिकास्त्यक्तलोकव्यवहाराः ॥९॥ प्रियस्य कर्माणि गायंत्यस्तथा तस्य बाल्यकैशोरयोर्बाल्ये कैशोरे च वयसि यानि कर्माणि तानि संस्मृत्यसंस्मृत्य गतह्रियो निर्लज्जाः सत्यो रुदत्यश्च तमपृच्छन्निति पूर्वक्रिययैव संबंधः ॥ १०॥ प्रियेण श्रीकृष्णेन मां प्रसादयितुं प्रस्थापितोऽयं दूत इति कल्पयित्वाऽब्रवीत् । यद्वा तस्मिन्नप्युद्धवे प्रियप्रस्थापितं

त्यक्तास्तस्मात्तद्दृष्टान्तोपि तत्र न संभवेदित्यभिव्यज्य निरुपमं नृशंसत्वमेव द्योतितम् ॥ ८ ॥ इतीत्थम् । लोकव्यवहाराः पुरुषसमक्षं नग्नांगाच्छनादिरूपाः । गोविंद इत्याद्यलुक्समासः ॥ * ॥ इति पूर्वोक्तवचन प्रकारेण । त्यक्तलौकिकाः स्वमुखेनैवौपपत्यस्पष्टीकरणादनादृतलोकसंकोचा बभूवुः । क सति—कृष्णस्य सर्वेषामप्याकर्षकतया तन्नाम्नस्तस्य निजप्रेष्ठस्यान्यत्र गतस्य सतो दूते तत्राप्युद्धवे समायाते सति, तत्र हेतुः—हि यस्माद्गोविन्दे पूर्वमेव गोकुलेंद्रे, श्लेषेण सर्वेन्द्रियव्यापके गतानि वागादीनि यासां ताः । तत्र कायेन गतिर्निजांगानां समर्पणात्तदर्थकमात्रकर्माचरणात्तदाविष्टतया कायस्य विस्मरणाच्च । तस्मात्तासामिदानीमीदृशभवनं युक्तमेवेति भावः । इत्थमेव च पूर्वमनन्यतया स्वयं वृतवत्य इति व्याख्यातम् ॥ ९ ॥ तस्य कृष्णस्य । तम् उद्धवम् । त्यबंतद्विरुक्तिश्छांदसी ॥ * ॥ ततश्च गतह्रियः सत्यः यानि कैशोरबाल्ययोः प्रियकर्माणि तानि मुहुः स्मृत्वा गायन्त्योऽपि बभूवुः, रुदत्यश्च बभूवुरित्यर्थः । कैशोरस्य प्रथमोक्तिस्तासां स्वरसोद्दीपनत्वेन, बाल्यं कौमारपौगंडात्मकं तदीयस्मरणमाबाल्यस्नेहेन ॥ १० ॥ काचिन्मुग्धा । मधुकरे दूतत्वारोपणम संभवं मन्वानो वक्ति—यद्वेति । मधुकरापदेशेन भ्रमरव्याजेन । इत्यर्थे इति—अन्योक्त्योद्धवमेव भ्रमरीकृत्यावददिति भावः ॥ * ॥ अथ "महाभावविशेषस्य गतिं कामप्युपेयुषः । भ्रमाभा कापि वैचित्री दिव्योन्माद इतीर्यते ॥ तद्भूर्णाश्चित्रजल्पाद्यास्तद्भेदा बहवो मताः । प्रेष्ठस्य तु ( सु ) हृदालोके प्रणयक्रोधजृंभितः । भुवि रागमयो जल्पश्चित्रजल्पस्तदुद्भवः ॥" इति रसग्रंथानुसारेण तास्वेव कस्या अपि दिव्योन्मादमयश्चित्रजल्पं वक्तुमाह—काचिदिति । कापि परमप्रेष्ठा, सा च श्रीराधेत्यर्थः । श्लेषेण के प्रेमसुखे आसमंताच्चिज्ज्ञानं यस्याः, कं सर्वेषां प्रेमसुखमाचिनोति क्षणेक्षणे वर्द्धयति या सेति च मुख्यत्वात्सैव, तथैव सैषा तन्नाम्नैव प्रतिपादिता । वासनाभाष्येपि तादृशी सा पीतपरागपिंजरश्मश्रुं कञ्चिद्भ्रमरमकस्माद्दृष्ट्वा तं दूतं कल्पयित्वा वक्ष्यमाणभंगीमयमिदमब्रवीत् । ननु महाविरहदुःखेऽस्मिन्कुतो मानस्तत्राह—प्रियसंगमं ध्यायन्ती, स्फूर्तिस्वप्नयोर्यः प्रियसंगमस्तमेव गुप्तं मुहुरागतस्यैव तस्य साक्षात्तथा स्मरंती । ननु तथापि यद्यन्यनायिकया प्रियस्य तत्र प्रसंगस्स्यात्तदा संभवत्यपि मानस्त त्राप्याह—कल्पयित्वेति, या भ्रमरमपि दूतं कल्पयंति सा तदपि कल्पयेदिति भावः । वक्ष्यति च 'सपत्न्याः कुचलुलित—' इति । प्रियेण स्वविषयकपरमप्रेमवता तेन प्रस्थापितं दूतं वितर्क्येदं चित्रजल्पाख्यं श्लोकमब्रवीदतो यत्तत्र वासनाभाष्यस्थापितमाग्नेयवचनम् " गोप्यः पप्रच्छुरुषसि कृष्णानुचरमुद्धवम् । हरिलीलाविहारांश्च तत्रैकां राधिकां विना ॥ राधा तद्भावसँल्लीना वासनाया विरामिता । सखीभिः साभ्यधाच्छुद्धविज्ञानगुणजृंभितम् । इज्यान्तेवासिनं वेदचरमांशविभावनैः ॥ " इति, तदेतत्पूर्वं तस्याः निर्वेदाख्यं जातमासीदित्यपि ज्ञेयम् । तन्मूलतया प्रणयरोषमयोऽयमपि भावविशेषो जज्ञे, विचित्रसंचारिमयत्वात्तादृशावस्थायाः । अतस्तद्भावमयदशामीदृशानन्तर्यपर्यालोचनया वासनाया विरामिता, पुनस्तत्संगमसंभावनरहिता बभूव, ततश्च तज्जातीयवार्तामसहमाना तदाच्छादनाय देहान्तरेष्वपि तद्दुःखपारावारमपश्यंती मुक्तिरेव वरमिति प्रतिपादनाय वा वेदचरमांशस्य ज्ञानकांडस्य विभावनैरुदाहरणैः शुद्धेत्यादि यथा स्यात्तथैवाभ्यधात् संवादमाचचार । न केवलं सा किन्तु सख्योऽपत्याह—सखीभिरिति योज्यम् । अथ वा वेदचरमांशस्तादृशभावप्रकाशको वेदः, वासना तादृशभावेतरः सर्व एव भावः शुद्धविज्ञानं च तादृशभावमयानुभव उच्यते, "यं सर्वे वेदा आमनंति मुमुक्षवो ब्रह्मवादिनश्च " इति मुक्तावस्थोपरि सामान्यभक्तेरपि प्राशस्त्याम्नायात्, 'वाञ्छन्ति यद्भवभियो मुनयो वयञ्च ' इति श्रीगोपिकामात्राणामपि

गोप्य ऊचुः ॥ मधुप कितवबंधो मा स्पृशांघ्रिं सपत्न्याः कुचविलुलितमालाकुंकुमश्मश्रुभिर्नः ॥
वहतु मधुपतिस्तन्मानिनीनां प्रसादं यदुसदसि विडंब्यं यस्य दूतस्त्वमीदृक् ॥ १२ ॥

दूतमिति दूतदृष्टिं कृत्वा मधुकरापदेशेनोद्धवमेवाप्रस्तुतप्रशंसयाब्रवीदित्यर्थः ॥ ११ ॥ हे मधुप कितवस्य धूर्तस्य बंधो नोऽस्माकमंघ्रिं मा स्पृश । मा मां नमस्कारेण प्रार्थयस्वे त्यर्थः। तत्किमित्यपेक्षायां कृष्णवर्णस्य तस्य श्मश्रूणां लोहितत्वे कारणमुत्प्रेक्षमाणाह। सपत्न्याः कुचविलुलिता कुचाभ्यां विलुलिता संमर्दिता या कृष्णस्य वनमाला अत एव तस्याः कुंकुमं येषु तैः श्मश्रुभिरुपलक्षितः। किन्तु तन्मानिनीनां तासामेव मानिनीनां प्रसादं मधुपतिर्वहतु किमस्मत्प्रसादनेन तस्य। यदुसदसि विडंब्यमुपहासास्पदम् । कुतः ।

सर्वस्पृहणीयभावत्वाच्च, ' इत्यच्युतांघ्रिं भजतोऽनुवृत्त्या ' इत्याद्येकादशानुसारेण यथा भक्त्यैवानुभावोदयाच्च ॥ **विश्वनाथस्तु**—ह्लादिनीशक्तिसारवृत्तिरूपस्य प्रेम्णोपि या सप्तमी भूमिका महानुभावस्तन्मयी काचित्, सा च वृषभानुनंदिन्येव मथुरांगनासु कृष्णकर्तृकसंगमं ध्यायन्ती ध्यानेन कल्पयन्ती, अत उद्धूतमाना प्रियेण श्रीकृष्णेन मां प्रसादयितुं प्रस्थापितो यं दूत इति कल्पयित्वा कमपि मधुकरमब्रवीत् । यद्वा—मधुकरापदेशेनोद्धवमेवाब्रवीत् ॥ ११ ॥ अत्र गोप्यश्चित्रजल्पेन भ्रमरमुद्दिश्योद्धवमाहुः । चित्रजल्पश्च रसरत्नाकरे—" चित्रजल्पो दशांगोयं प्रजल्पः परिजल्पितः । विजल्पोज्जल्पसंजल्पा अवजल्पोभिजाल्पितः ॥ आजल्पः प्रतिजल्पश्च सुजल्पश्चेति कीर्तितः । " इति । तत्र प्रजल्पमाहैका—मधुपेति । ' उन्मत्तः कितवो धूर्तः ' इत्यमरः । इत्यर्थ इति—त्यक्तासु को नमस्कारः, किं तत्प्रार्थनेन वेति भावः । तद्वारणम् । किं कुत इति । तस्य भ्रमरस्य । श्मश्रूणां मुखरोम्णाम् । लोहितत्वे रक्तत्वे । अत एव संमर्दनादेव । तस्याः सपत्न्याः । कुपिताह—किन्त्विति । तासामेव मथुरास्थानामेव । मधुपतिर्यदुपतिः, एकदेशन्यायेन मधुरापतिर्वा ' मधुरा मथुरा प्रोक्ता ' इति कोशात् । तस्य कृष्णस्य । उपहासास्पदत्वे हेतुमाशंकते—कुत इति । ईदृशो भ्रमरोऽर्थात्तद्वत् । अत्र प्रजल्पलक्षणमाह—" असूयेर्ष्यामदयुजा योवधीरणमुद्रया । प्रियस्याकौशलोद्गारः प्रजल्पः स तु कीर्तितः ॥ " इति । इह सपत्नीर्ष्यामदाभ्यां भ्रमरावधीरणं, भ्रमरदूतत्वेन कृष्णाकौशलमपि ध्वनितम् ॥ * ॥ " स्वतः प्रेमजवार्ताया गोविन्दे लीनचेतसः । राधायाः केन वागर्थो वेद्यः स्यात्तत्कृपां विना ॥ " । स्वचरणकमलसौरभलोभेन भ्रमन्तं भ्रमरं वीक्ष्य दिव्योन्मादवती श्रीवृषभानुनंदिनी प्रजल्पति—हे मधुप भ्रमर कितवस्य धूर्तस्य ' एवं मदर्थोज्झित—' इत्यादिना, ' न पारयेहम् ' इत्यादिना, ' आयास्ये ' इति दौत्यकेन च मिथ्यावचनवृंदेन वञ्चकस्य कृष्णस्य बंधो बंधुतारूपदौत्यकारिन् अंघ्रिं मा स्पृश । ननु किमिति नमस्कर्तुं न ददासि, तत्राह—हे मधुप मद्यप ' मधु मद्ये पुष्परसे ' इत्यनेकार्थवर्गः । मद्यपस्पर्शेन चरणस्यापावित्र्यं स्यादतो नमश्चिकीर्षा चेद्दूरमपसृत्य नमस्कुर्वीति भावः । नन्वदुष्टे मयि किमिति मिथ्या मद्यपत्वपरिवादमर्पयसीति, तत्र नायं परिवादः किन्तु यथार्थमेव वच्मीत्याह—मम सपत्न्याः कुचयोः कृष्णवक्षःसंघर्षणाविलुलिता विमार्दिता या माला किं वा कुचाभ्यामेव विलुलिता या कृष्णवनमाला तत्संबन्धि कुंकुमयुक्तैः श्मश्रुभिर्मा स्पृशेति भ्रमरस्य स्वाभाविकश्मश्रुपीतिम्नि एव तथारोपः । तेन च मानिनीं मामनुनेतुमिहायातस्त्वमथ च तथाभूतकुंकुमश्मश्रुप्रक्षालनं विनैवेति विवेकाभाव एव मद्यपलक्षणम् । एतद्दर्शनया मानो वर्द्धयत एव न तु निवर्त्यत इति बुध्यस्वेति भावः । ननु यथा तथास्तु त्वं तावत्प्रसीदेति तत्राह—हे मधुप मद्यपालक तत्र गत्वा निजप्रभोः पेयं मद्यमेव पालय पिब च, तत्कर्मैव त्वं कर्तुं शक्नोषि न तु दौत्यं निर्बुद्धित्वादिति भावः । नन्वेवं चेदलं मया, संप्रत्यहं पुनर्मथुरामेव यामि स एव गोपेन्द्रनंदनः स्वयमेत्य त्वां प्रसादयत्वित्यत आह—वहत्वित्यादि। मधूनां यादवविशेषाणां पतिः संप्रति सोऽभूत्—व्रजेश्वरीगर्भजातत्वेन गोपजातिरपि भाग्यवशात्क्षत्रियजातिरभूदतस्तन्मानिनीनां क्षत्रियस्त्रीणां प्रसादं वहतु प्राप्नोतु, ता एव सद्यः प्रसादयतु किमस्माभिर्निकृष्टाभिर्गोपस्त्रीभिरिति भावः । तत्र बहुवचनेन वहधातुप्रयोगेण च मधुस्त्रीणामानंत्यात्सर्वासामेव तद्भुक्तत्व।

सकृदधरसुधां स्वां मोहिनीं पाययित्वा सुमनस इव सद्यस्तत्यजेऽस्मान्भवादृक् ॥
परिचरति कथं तत्पादपद्मं तु पद्मा ह्यपि बत हृतचेता उत्तमश्लोकजल्पैः ॥ १३ ॥

यस्य दूतस्त्वमीदृगीदृशोऽविवेकीति ॥ १२ ॥ ननु किमित्येवं तमवजानीथ किं वस्तेनापकृतमत आह । सकृदिति । भवादृक् त्वादृशः कृष्णवर्णो दुर्मनाः सुमनस इव कुसुमानि यथा त्यजति तद्वत् ( शोभनमनसोऽस्मान्सद्यस्तत्यजे ) अहो बताकृतज्ञस्य तस्य पादपद्मं श्रीः कथं सेवते । विदितं मयेत्याह । अपीति । बतेति खेदे । उत्तम

देकस्यां प्रसादितायामन्यस्यां मानोत्पत्तेस्तस्यामपि प्रसादितायामन्यस्यामित्येवं तासां प्रवाहरूपेण प्रसादं प्राप्नोत्वित्यस्मत्सान्निधावागमने तस्यावसर एव नास्तीति भावः । ननु तदीयसर्वसौभाग्यनिधे देवि मैवं वादीर्यदि त्वयि तस्य मनो नास्ति तर्हि कथमहं तेन दूतः प्रस्थापितस्तत्राह—यस्य दूतस्त्वमीदृक् क्षत्रियजनसुरताचिह्नधारी, तस्य यदुसदसि विडंब्यं विडम्बनमेव यदुस्त्रीणां तत्कृतधर्मलोपस्य व्यक्तीभावेन कुपितैस्तत्पतिभिस्तस्य विडम्बनमेव करिष्यत इति भावः । यद्वा—यस्य त्वमीदृग्दूतस्तस्य यत् यदुसदस्तत्राधिकरणे एव विडंबनं भाविगोपेन तन्नारीणां भुक्तत्वाद्यदूनां निन्दैव सर्वदेशे भविष्यतीत्यर्थः । श्लेषेण यस्य दूतस्त्वमीदृक् स च मधुपतिर्मधूनां मद्यानां पतिर्मद्यप एव, यतो मद्यस्य विक्षेपेणैव त्वादृशो भ्रमरो दूतः कृत इति । अत्र कितवेत्यसूया, सपत्न्या इत्यादिनेर्ष्या, अंघ्रिं मा स्पृशेति मदः, वहत्वित्यादिनाऽवधीरणम्, यदुसदसीत्यादिनाकौशलोद्गार इत्ययं प्रजल्पः । तदुक्तमुज्ज्वलनीलमणौ—"असूयेर्ष्यामदयुजा योवधीरणमुद्रया प्रियस्याकौशलोद्गारः प्रजल्पः स तु कीर्त्यते ॥" ॥१२॥ न हि कृष्णेन किंचिद्वोऽपराद्धमित्याक्षिपति—नन्विति । अवजानीथावज्ञां कुरुत । वो युष्माकम् । अपकृतमपराधः कृत इति । अतोत्राह पारिजल्पेन—सकृदिति । दुर्मनाः सकपटः । तद्वत् सोस्मांस्तत्यजे । अहो बतेति अत्यद्भुते निपातद्वयम् । तस्य कृष्णस्य । इति भाव इति—लक्ष्मीस्तु क्षीरसागरस्य जडत्वेन तदुद्भूताऽकुशला वयं नराणामतिनिपुणत्वेन तत्रापि गोपानां गोपारिचर्यात्राप्तातिपुण्यानां कुले जातत्वान्न तादृश्य इत्याशयः । पारिजल्पितलक्षणन्तु—" प्रभोर्निर्दयताशाठ्यचापलाद्युपपादनात् । स्वविचक्षणताव्यक्तिर्भंग्या स्यात्पारिजल्पितम् ॥" इति । इह तथैवोपपादितम् । सुमनसां त्यागो यथा तद्गंधमादाय भवतोपि नोचितस्तथा वयमपि सुमनोभिस्तुल्याः शरीरदौर्गन्ध्यादिरहिताः सुकुमाराश्च, यथा घ्राणेंद्रियतर्पकत्वेन पुष्पाणि सेव्यानि तथा तरुण्योपि तरुणैः सेव्या एव । सुमनःपदेन मालती वा ग्राह्या "सुमनाः पुष्पमालत्योः स्त्री देवबुधयोः पुमान्" इति यादवः । यद्वा—भवं संसारमापश्यतीति भवादृक्, अतीव गृहासक्तः सुमनसो देवान् ज्ञानिनश्च यथा त्यजति तत्सेवां नाद्रियत इति भावः । भवं न पश्यतीति भवादृक् विरक्तो ज्ञानी सुमनस इव हृद्यान्स्त्रीपुत्रादींस्त्यजति तद्वदेति ॥ * ॥ ननु भ्रमरजातेर्ममायं स्वाभाविक एव श्मश्रुपीतिमा . न तु सुरतकुंकुममिदम्, तस्य च त्वदेकतानमानसस्य मधुपुर्यां कामपि स्त्रियं स्वप्नेप्यपश्यतः कोऽपराधो यतस्त्वमीदृशं मानमाविष्करोषीति तत्राह—सकृदिति । पायनस्याऽसकृत्त्वेपि सकृदित्युक्तिरनुरागेण । तत्र तृष्णाधिक्यं व्यंजयति—अधर एव सुधा तामित्यत एव एतावद्भिरपि संतापैर्न म्रियामहे इति भावः । एता मद्दत्तैः कष्टैर्यदि मरिष्यन्ति तदाहं काम्यः कष्टं दास्यामि तस्मान्मरणाभावाय स्वाधरसुधां पाययामीति स पुरैव विचारयामासेति भावः । अतः सकृदेव पाययित्वा सद्यस्तत्क्षण एवास्मांस्तत्याज । अतोस्मत्सुखदानतात्पर्ये सति सुधापायनस्यासकृत्त्वं स्यादिति त्वमेव विचारयेति भावः । तत्रापि पाययित्वेति णिचा तस्य बलात्कारो दर्शितः । नन्वेवं चेत्साध्व्यो भवत्यः कथं तस्मै स्पृहयन्ति तत्राह—मोहिनीं बुद्धिभ्रंशिनीम् । अतस्तेनास्मदादयो लोकद्वयत एव भ्रंशिता इति " विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् " इति न्यायोपि कृष्णेन न गणित इति भावः । किञ्च—तस्य प्रीत्यप्रीती द्वे एवातिचित्रे इत्याह—सुमनसो देवश्रेणीरिव विष्णुः कृष्णोऽस्मान्सुधां पाययित्वा सुमनसो मालतीर्भवादृक् भ्रमर इवास्मांस्तत्याज, पायनत्यागयोः कर्मणि कर्तरि च पृथक्पृथग्दृष्टान्तः । देवपक्षे—हे अधर निकृष्टेति संबोधनम् । ' सुपर्वाणः सुमनसः ' इत्यमरः । ननु तस्य युष्मत्कर्मकत्यागेषु युष्माकमेव कोऽपि दोषः

किमिह बहु षडंघ्रे गायसि त्वं यदूनामधिपतिमगृहाणामग्रतो नः पुराणम् ॥
विजयसखसखीनां गीयतां तत्प्रसंगक्षपितकुचरुजस्ते कल्पयंतीष्टमिष्टाः ॥ १४ ॥

श्लोकस्य जल्पैर्मिथ्याकथाभिः प्रलापैः प्रायो हतचेताः । वयं तु न लक्ष्मीवदविचक्षणा इति भावः ॥ १३ ॥ झंकारान्बहुधा कुर्वंतमस्मत्प्रसादलाभाय कृष्णं गायतीति मत्वाऽऽह । किमिहेति । पुराणं पुरातनं बहुशोऽनुभूतम् । विजयसखस्य श्रीकृष्णस्य सांप्रतं याः सख्यस्तासामग्रतस्तत्प्रसंगो गीयताम्, संदेशः कथ्यतामित्यर्थः । इष्टाः कृष्णस्य प्रियाः तेन गीतेन पूजिता इति वा । तेनालिंगितेन क्षपिता कुचरुक्स्तनगतविकारो यासां तास्तवेष्टमपेक्षितं दास्यंतीति ॥ १४ ॥

कारणमस्ति तस्य वेति तत्राह—सुमनस इवास्मान्स भवादृक् तत्याज, भ्रमरो यन्मालतीस्त्यजति तत्र दोषः कस्येति त्वयैव विचार्यतामिति भावः । 'सुमनो मालती जातिः' इत्यमरः । सौरभ्यसौकुमार्यपावित्र्य सर्वोत्कर्षादिभिः सुमनःसाधर्म्याच्छोभनमनस्कत्वाच्च वयं सुमनस इति व्रजे प्रसिद्धा एव । स च भ्रमरसाधर्म्याच्चपलः स्वसुखमात्रार्थी प्रसिद्ध एवेति नेदं कवितामात्रमिति ध्वनिः । ततश्च चाञ्चल्यदोषादेव मालती र्वल्लीरपि त्यक्त्वा निकृष्टेष्वपि पुष्पेषु विषज्जति अविषज्जति वा भ्रमर इव कृष्णे कथं वयं मानिन्यो न भवाम इत्यनुध्वनिः । ननु कृष्णस्य निर्दोषत्वं शास्त्रप्रसिद्धमेव, शास्त्रज्ञेन गर्गेण 'नारायणसमः' इत्युक्तत्वात्, तत्र भवतु स नारायणः, परवंचनादिदोषाणां प्रत्यक्षत एव दृष्टत्वात्ते कथमपलपनीया भवंत्विति विमृश्य सविचिकित्समाह—परिचरतीति । पद्मा लक्ष्मीः । लक्ष्मीपरिचर्यायामपि हेतुं स्वयमेवोद्भावयन्त्याह—अपि बतेति । उत्तम श्लोक इति ये जल्पाः स्तावकलोकानां स्तुतिमात्राणि तैर्हृतं चेतो यस्याः सा । तेन लक्ष्मीरतिऋज्वी वयं तु वैचक्षण्यवैदग्धबुद्धिवैचित्र्यादिगुणानां विधात्रा दत्तत्वात्कथं तादृशीभवितुं प्रभवाम इति भावः । अत्र पाययित्वेति मोहिनीमिति च तस्य शाठ्यं, सद्यस्त्यागान्निर्दयत्वं, भवादृगिति चापल्यं, लक्ष्म्या आर्जवव्यञ्जनया स्वविचक्षणत्वम्, आदिनाऽकृतज्ञत्वप्रेमशून्यत्वादिकं सर्वत्रैवानुस्यूतमित्ययं परिजल्पः । तदुक्तम्—"प्रभो र्निर्दयताशाठ्यचापल्याद्युपपादनात् । स्वविचक्षणताव्यक्तिर्भंग्या स्यात्परिजल्पितम् ॥" ॥ अत्र **तोषिणी**—तस्य कैतवमेव दर्शयन्ती माने कारणमाह—। अत्रेर्ष्याधिक्येनागृहीतमपि कर्तुर्नाम वाक्यस्य पूरयितव्यतया मधु पतिरिति पूर्वस्मादेवाकृष्यते, तत्संगतत्वाद्भवादृगिति मधुप एव लभ्यते । अत्रेयं योजना—मधुपतिरसौ स्वामसाधारणीमधरसुधामस्मान्सकृत्पाययित्वा बलाच्छलात्साध्वीरस्मान् पानायापाद्य सद्यस्त त्याज । कीदृशीम्—मोहिनीं, बुद्धिं भ्रंशयित्वा निजदुरंतलालसासंपादिनीम् । तत्र तस्य तथा पायने नास्त्येव दृष्टान्त इति । त्यागे तु सोऽयं दृष्टान्तः क्रियते—भवादृगिति । भवद्विधमधुप जातीयः सुमनस इवेति । अयमर्थः—भवद्विधमधुपजातिस्तदनन्यजीविकत्वात्तासु बह्वषु तत्रतत्र रसमल्पमल्पं प्राप्य बुभुक्षाशांत्यभावात्तांतां सुमनसं स्वसुखार्थं यत्त्यजति तद्युक्तमेव । मधुपतिस्तु सुधामयाधरत्वादन्यरसा पेक्षामतीतः, किन्तु दुःशीलत्वाच्छोभनमनसां दुःखदानमेव स्वसुखतया मन्यते, तस्माद्भवतापि तास्मिन्कितवे बंधुता कार्येति । अथ वा—भवादृगित्युभयत्र संबंधनीयः । तत्र दृष्टान्तपक्षे मधुपजातीयः, दार्ष्टांतिकपक्षे विदूरसौरभग्रहणसमागमनपरितोभ्रमणमधुरास्फोटरटनसहचुंबनादिभिर्भवद्वद्दुश्चे (दुचे) ष्टमानोपीति योज्यम् । ननु 'जयति तेऽधिकम्' इत्यादिभवद्वाक्यरीत्या पद्माया अपि तदासक्तायाः संप्रति तत्रापि तदुपासनं दृश्यते, भवत्या कथमसौ निंद्यते तत्राह—परिचरतीति । सकलपद्माधिकारिण्यपि पद्मा तत्पादपद्मं कथं परिचरतीति न बुध्यते । तदेतदुक्त्वा क्षणं विभाव्याह—अपि बतेति । अपीति संभावनायाम् । बतेति खेदे । हीति प्रसिद्धौ । उत्तमश्लोकस्येव ये तस्य जल्पाः प्रलोभनमयानि भाषितानि तैर्हृतचेताः सती तत्परिचरतीति ज्ञातमित्यर्थः । तदेवं तस्या अविचक्षणत्वं व्यज्य स्वस्य तु विचक्षणत्वं व्यंजितम् । तस्मात्कितवे तास्मि न्नस्माकमपि मान एव युक्त इति भावः । तत्राऽसकृत्पायनमप्युत्कंठतया विस्मृत्य सकृदेव पाययित्वेति तस्याऽनाया एव वंचनाकरीं सामग्री दर्शयित्वा स्वस्य त्रासातिशयः प्रकटितस्तास्मिन्नीर्ष्याद्यतिशयश्च सूचि तस्तथापि मोहिनीमित्युक्त्वा स्वलालसाव्यवच्छेदं प्रत्याख्याय मोहाद्यतिशयश्च व्यंजित इत्याद्यूह्यम् ॥ १३ ॥ विजल्पेनाह—किमिति । विजयः सखीष्वेव यस्य, स्वसखीनामेव विरहादिना घातकस्येति तत्तानामुक्तिः ।

अग्रतोग्रे, यदुपतिर्गीयताम् । सेविसर्गपाठे तत्प्रसंगो वा । "इष्टमाशंसितेऽपि स्यात्पूजिते प्रेयसि त्रिषु । सततंतौ पुमान् क्लीवे संस्कारे कृतकर्मणि ॥" इति मेदिनी । यथा पूजिताः पूजकस्य तदीयस्य चेष्टं कुर्वति तथा प्रिया नेत्यरुच्याऽऽह पूजिता वेति । निर्विसर्गपाठे तेन कृष्णेन, प्रसंगेनालिंगितेन, क्षपिताऽपास्ता, रुक् कामक्लेशः । विजल्पलक्षणम्—"व्यक्तयाऽसूयया गूढमानमुद्रांतरालया । अंघद्विषि कटाक्षोक्तिर्विजल्पो विदुषां मतः ॥" इति । कटाक्षोक्तिर्यदुपतिपुराणविजयसखादिशब्दैः सूचितात्रेति । किञ्च, यद्वा—स्वपुरतो वर्ण्यमानप्रियकथया प्रबुद्धमदनकलिका पुनरपि श्रोतुमना असहमानेवाधिक्षेपं कोपनार्थमधिकं वक्तीति कृत्वो द्भवमुद्दिश्याह—षट्सु संधिविग्रहादिषु कपिलादिदर्शनेषु वांघ्रिवक्रगातिर्यस्य स तथा । यद्वा—षट्सु विषयेषु भगवद्भक्तिपरिपंथिषु कामादिषु अंघ्रिः पादो यस्य तत्संबुद्धौ हे उद्धव 'अंघ्रिः स्याद्गतिपादयोः' इति निरुक्तिकारः । 'अघि—गतौ' रिप्रत्ययः । त्वमगृहाणां गृहाश्रमरहितानाम्, वनचारिणामित्यर्थः । नोस्माकमिहाग्रतः—पुरमणति प्राप्नोतीति पुराणस्तम् 'अण—गतौ' मथुरागतं यदूनां पतिं किं बहु कर्णबिलपूरं गायसि, न शब्दायस्वेत्यर्थः । तस्य गृहांतर्वर्तित्वेन वनमध्यवासिपुरतो गायनमनुचितमित्यर्थः । तर्हीदं कस्याग्रे युक्तमिति तत्राह—विजयेति । कृष्णसखीनां मथुरांगनानामग्रतस्तस्य प्रसंगो गीयताम् । तत्र गातुस्तव फलसिद्धिरप्यस्तीत्याह—क्षपितेति । तत्प्रसंगेन क्षपिता निरस्ता कुचानां रुक् संतापरूपा यासां ताः, इष्टाः कृष्णप्रिया मथुरांगना उद्धात्रे ते तुभ्यमभीष्टं धनादिकं कल्पयंतीत्यन्वयः । 'तत्प्रसंगम्' इति पाठे तु गायतामित्यात्मनेपदमार्षम् । भवान् गायताम् । यद्वा—यदुपतिविषया या गीतिस्तां गायेति परस्मैपदमेव । तस्य प्रसंगेन प्रकृष्टाऽऽलिंगनेन विजयसखसखीनामग्रतो यदुपतिं गायताम् । पुंसां ते कृष्णेष्टाः स्त्रिजना अभीष्टं कल्पयन्तीति वा ॥ * ॥ तदेवं तदीयसरोषवचनसरोजविक्षेपेणापसृत्य पुरतो रुवन्तं मधुपमस्मत्प्रसादनायैव श्रीकृष्णं बहुधा गायत्यसाविति वितर्क्य तमवज्ञातुमन्यथोत्प्रेक्षते—हे षडंघ्रे । तज्जातिस्वभावादेव गानस्वभावः, तस्माद्यद्गायसि तदिह व्रजे परमदुःखिते किं किमिति गायसि, तत्रापि बहु किं गायसि, तत्रापि यदूनामधिपतिं किं गायसि । यदूनां महाराजवंश्यानामसंख्यानामधिपतिः, अत्रत्यास्तु गोपास्तत्रापि संप्रति तेनानादृताः, अतस्तत्परिपाल्यमाना यदव एव गानजीविनस्तवेष्टं विधातुमर्हन्ति न त्वेते इति स्वल्पं वा बहु वा तत्रैव गातव्यमिति भावः । षडंघ्रे इत्यनेन पशुश्चतुष्पात् त्वं तु षट्पदः, तेन सार्धपशुत्वेन बुद्ध्यभावातिशयादेव गायसि न तु विचारादित्यसूया । ननु व्रज एव सर्वाधिकप्रेमवानसौ ततो व्रज एव श्रेष्ठ इत्याशंक्य पुराणं बहुशोऽनुभूतं, तत्तत्सर्वं कापट्येनैवानुष्ठितवानिति निश्चितम् । यद्वा—चिरमतिक्रान्तं संबंधं पूर्वमेव व्रजस्य तत्तदासीन्नाधुनेति भावः । यद्वा—'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः' इति द्वयात्मकत्वे पुराणं पुरव णम् तदैव व्रजस्य सुखरूपमासीदधुना तु केवलं कर्षति धात्वर्थसत्तारूपेणैवावशिष्टमित्यर्थः । किञ्च—हंत कुरु च नाम व्रजेऽपि गानमस्माकमग्रतः किं गायसि, तत्रापि बह्वित्यादि । कथंभूतानाम्—अगृहाणाम् । तेन स्वोच्छिष्टमोहनरसविशेषसकृत्पायनमात्रपूर्वकत्यागाद्विदूष्य त्याजितगृहाणाम् । अतो यदुपुरेऽपि तत्प्रेयस्य एव विशिष्टं तव गानस्थानमित्याह—विजयते सर्वं वशीकरोतीति विजयः श्रीकृष्णः सखा त्वद्बंधुस्तस्य सखीनां सह खेलतीनामग्रतः । तत्प्रसंगस्तस्य विजयस्य सांप्रतमस्मत्परित्यागपूर्वकयादवकुलाधिपत्यफलतत्पुरवनिताशतवशीकरणलक्षणस्य प्रसंगस्तत्सुखदः प्रस्तावो गीयताम् । तेन ता इ (ह) ष्टास्तेन त्वयैव वा संमानितास्तवेष्टं द्रुतमेव कल्पयिष्यंति । यद्वा—कल्पयन्ति सदा कुर्वत्य एवासते । अधुना त्वस्मद्दुःखस्थां दृष्ट्वा तद्वर्णनपूर्वकेण तासां सौभाग्यज्ञापनेन त्वया मानिताः सत्यो विशेषेण कल्पयिष्यन्तीत्यर्थः । यद्वा—क्षयितकुचरुजः संप्रति श्रीकृष्णेनैव खण्डितकामपीडाः, दुखान्ते लोकाः समुल्लासाद्वंदिभ्यो बहु ददतीति समात्सर्यकौटिल्यम्, धाष्टर्यप्रदर्शनेन सकटाक्षोपहासश्च ॥ **विश्वनाथस्तु**—भ्रमरजातिस्वभावेन झंकारान्कुर्वन्तं तं—मत्कृतेन तिरस्कारेणात्तसंरंभोऽयं स्वीयं गानगुणं प्रकाशयतीति मत्वाह—इह गोपीसभासु किं गायसि अज्ञस्य तव गाने नैताः प्रसीदंतीति भावः । तदपि पुनःपुनर्गायसि, तत्रापि यदुपतिं यदूनां पतित्वेन ख्याप्यमानं, तत्रापि नोस्माकमग्रतः । कीदृशीनाम्—अगृहाणां तेनैव त्याजितगृहाणामिह वनप्रदेश उपविष्टानां तुभ्यं चैकमुष्टिभिक्षादातेप्यसमर्थानाम् । ननु स्वांगोत्तीर्णपुरातनवस्त्रमाल्यादिकं किञ्चिद्देहीति चेत्तुभ्यं सर्वथैवानभिज्ञाय न ददामीत्याह—पुराणं गायसि तस्य यदुपतित्वे पुराणं प्रमाणयसीत्यर्थः । हे षडंघ्रे इति पूर्ववत्सार्द्धपशो कुत्र किं वा गातुमुचितमिति बुद्ध्यभावान्न जानासि, पशुत्वात्पुराणं वा कथं जानास्यतः कथं भिक्षां प्राप्स्यसीति भावः । किन्तु तव पशुत्वात्तुभ्यं वयं न कुप्यामः, किन्तु मानोपजीविनस्तत्र गानस्थानमुपदिशामः शृण्वित्याह—विजयेति । कामयुद्धे विशिष्टो जयो यस्य, विगतो जयो वा यस्य, स

१ 'तत्प्रसङ्गः क्षपित—' इति पाठे । २ 'या प्रेयसि' इति पाठो ज्यायान्प्रतिभाति व्यक्त्यन्तरस्याप्येतद्विषयत्वेऽबाधात् ।

**दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः कपटरुचिरहासभ्रूविजृंभस्य याः स्युः ॥**
**चरणरज उपास्ते यस्य भूतिर्वयं का अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः ॥ १९ ॥**

भो मातर्मैवं वोचस्त्वामनुस्मृत्यानंगविक्लवस्त्वां प्रसादयितुं मामादिष्टवानित्यत आह । दिवीति। दिवि भुवि रसातले च याः स्त्रियः स्युस्ताः का नाम तस्य दुरापा न काश्चन। तदित्यव्ययं तस्येत्यर्थः।कपटेन रुचिरेण हासेन भ्रविजृंभो यस्य तस्य।हे कपट इति वा।किं च।यस्य चरणरजः श्रीः सेवते तत्र वयं काः।अपि च यद्यप्येवं तथापि कृपणपक्षे

चासौ सखा चेति विजयसखस्तस्य सखीनां—तव सखा कामयुद्धे या जयति याभिर्वा विजीयते तासामेवाग्रतस्तत्प्रसंगः सुरतजयपराजयाबिरुदावली गीयताम् । श्लेषेण पूर्वं सुबलसख आसीत्संप्रति विजयोऽर्जुनस्तस्य सखाऽभव दिति भाविवार्तापि तस्या मुखात्स्वयं निःसृतेति ज्ञेयम् । ततश्च ताः क्षापितकुचरुजः खंडितकुचज्वालास्तवेष्टं वांछितं कल्पयिष्यंति, त्वया च त्वद्गानश्रावणया इष्टाः पूजिताः सत्यः । अत्रोत्तरार्द्धेऽसूयामानगर्भः सर्वत्रैवोपहासात्मकः कटाक्षः कृष्णे पर्याप्नोतीत्ययं विजल्पः । तदुक्तम्—" व्यक्तयाऽसूयया गूढमानमुद्रांतरालया । अघद्विषि कटाक्षोक्तिर्विजल्पो विदुषां मतः " इति ॥ १४ ॥ स्वयमाक्षिप्य समादधे—आदिष्टवाना ज्ञतवान्। उज्जल्पेनाह—दिवीति । तस्य कृष्णस्य । स्वन्यूनतां द्योतयंत्याह—किंचेति । तत्र तस्य।अत्रापि विमृश्याह—अपि चेति । यद्यप्येवं लक्ष्मीसेव्यस्य दृष्टौ वयं—सितोपलाशिनस्तत्किट्टाशनमिव वन्या न योग्यास्तथापि । इति भाव इति—कृष्णपार्श्वे गत्वेत्थं त्वया वाच्यमित्याशयः । उज्जल्पलक्षणम्—"हरेः कुहकताख्यानं गर्वगर्भितयेर्ष्यया । सासूयश्च तदाक्षेपो धीरैरुज्जल्प ईरितः ॥" इति ॥ तीर्थस्तु—ननु त्वामित्थं वदंती प्रगल्भा मत्तकाशिन्यसि त्वदर्थं कृष्ण आयास्यतीति चेदत्राह—याः स्त्रियः कपटरुचिरहास्ययुक्तो यो भ्रूविजृम्भस्तस्य विषयास्ता दिव्यादिषु कास्तस्य दुरापा न का अपि, कपटरुचिरहासभ्रूभंगरूपाकर्षणमंत्रावित्त्वात्तस्येति भावः । कमानन्दं पटयति गमयतीति कपटः, रुचिं राति ददातीति रुचिरस्तत्संबुद्धौ वा । तथा कपटेति पृथक्संबुद्धिर्वा । कपटे हेतुः—चरणेति । भूतिर्लक्ष्मीर्यस्य हरेश्चरणरज उपास्ते । तदनुग्रहार्थमिति शेषः । ननु भवंत्योपि तथा कुर्वंत्वित्यत्राह—वय मिति । तत्र वयं वनचारिण्यः काः स्याम न का अपि । पुनरपि शृणु—कृपणस्य किंपचानस्यास्मद्विधस्य जनस्य पक्षेंतिके उत्तमश्लोकशब्द एव कर्णविषयो न तु वाच्योर्थश्चक्षुर्विषय इत्यर्थः । यद्वा—उत्तमश्लोकशब्दो दीनपक्षपाती श्रुतः सोप्यस्मद्विषयो नाभूदित्यर्थः ॥ * ॥ ननु भोः कृष्णप्रेयसीशिरोमणे तत्र स्थितः स रात्रिन्दिवमेव त्वां ध्यायन्कामशरार्दितः खिद्यति त्वं चेत्प्रसीदसि तदैव तस्य निस्तार इति तत्र सासूयमाह— दिवीत्यादि । कृष्णस्य स्त्रीभिर्विना कालो न यातीत्यहं सुष्ठु जानामि, तत्र यदि मथुरायाः स्त्रियो न मिलंति तदा सोऽस्मान्ध्यायतु प्रसादयतु तत्र नेतुं त्वादृशं दूतं प्रस्थापयतु । न च गोपजातिं तं पुरस्त्रियः क्षत्रियजातयः कथमंगीकरिष्यन्तीति वाच्यम्, यतो दिवि भुवीति । तदित्यव्ययम् । तस्य कादुरापाः, यदि स स्वर्गे गच्छेत्तदा देव्योपि, रसायां रसातलादिषु नागपत्न्योऽपि स्वस्वपतीं स्त्यक्त्वा तमागच्छेयुर्मथुरांगनानां का वार्तेति भावः । न च तत्तदंगनाप्राप्तौ तस्य किञ्चित्पणादिकमपेक्षितव्यमित्याह—कपटेनापि रुचिरौ सर्वासां मनोहरौ भ्रूविजृंभहासौ यस्य तथाभूतस्यैव तस्य या देव्यादयः स्युर्न तु स्वस्वपतीनामित्यर्थः । सकपटहासमूल्येनैव ताः स्वयमेव क्रीता भूत्वा स्वस्वपतिं त्यजंति, कपटपदेन कृष्णस्तु सकृदेव भुक्त्वा त्यजति, नवप्रियत्वादिति भावः । देव्यादयो दूरे वर्तन्ताम्, भूतिर्लक्ष्मीर्नारायणस्यापि स्त्री चरणरज उपास्ते तदंगसंगार्थमिति नागपत्नीवाक्यं वयं पौर्णमासीमुखादश्रौष्म, अतो वयं काः कस्यां गणनायां तिष्ठामो यतो मानुष्यस्तत्रापि गोप्यस्तत्रापि वृंदावनीया इति भावः । इदं दैन्यमयवाक्यमपि समस्तकोद्भूननस्वरविशेषेण गर्वगर्भितामीर्ष्यामेव व्यनक्ति,सा चेर्ष्या स्वेषां लक्ष्म्यादितोपि प्रेमाधिक्यं रूपलावण्याधिक्यञ्चानुव्यनक्ति । अपि च किञ्च । उत्तमश्लोकशब्दो हि कृपणपक्षे एव संततहीनदीनजनान्यो दयते स उत्तमश्लोक इत्युच्यते।

---

१ पत्युः । २ 'कदर्ये कृपणक्षुद्रकिम्पचानामितम्पचाः' इति कोषात् ।

विसृज शिरसि पादं वेद्म्यहं चाटुकारैरनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुंदात् ॥
स्वकृत इह विसृष्टापत्यपत्यन्यलोका व्यसृजदकृतचेताः किं नु संधेयमस्मिन् ॥ १६ ॥

कृपणानुकंपिनि पुंस्युत्तमश्लोकशब्दो भवतीति तथा कथनीयं त्वयेति भावः ॥ १५ ॥ पादमूले प्रविशंतं क्षमापयिष्यंतमिव मत्वाऽऽह । विसृजेति । शिरसि न्यस्तं पादं विसृज । तथाऽप्यमुंचंतमाह । वेद्मीति । मुकुंदादभ्येत्य ततः शिक्षित्वेत्यर्थः । दौत्यैर्दूतकर्मभिश्चाटुकारैः प्रियोक्तिरचनाभिरनुनयः सांत्वनं तत्र विदुषः प्रार्थनाचतुरस्य ते तव सर्वमहं वेद्मि।मुकुंदवत्त्वमप्यविश्वसनीय इति भावः । ननु तेन किमपराद्धं तत्राह।स्वकृत इति।स्वकृते तदर्थमेव विसृष्टा अपत्यपत्यन्यलोकाः अपत्यानि पतयश्चेहलोकोऽन्यलोको धर्मसाध्यश्च स्वर्गादिः याभिस्ता नोऽस्मान् अकृतचेता असंयतचित्तश्चंचलो यो व्यसृजत्तत्याज अस्मिन्किं नु संधेयं किमनुसंधातव्यं किं तथ्यं ज्ञातव्यमित्यर्थः ॥ १६ ॥

कृष्णे.तत्तल्लक्षणाभावान्मिथ्यैवोत्तमश्लोकशब्द इत्यर्थः । यद्यस्मद्विधान्कृपणजनानात्मनाऽदुःखयिष्यत्तदा स्वस्मिन्कथमुत्तमश्लोकशब्दवाच्यत्वमधास्यदिति वाऽऽक्षेपध्वनिः । अत्र पूर्वार्द्धे दिवि भुवीत्यादिना कुहकताख्यानम् , चरणरज इति तृतीयचरणे गर्वगर्भितेर्ष्या, अपि चेति चतुर्थे चरणे सासूय आक्षेप इत्ययमुज्जल्पः । तदुक्तम्—"हरेः कुहकताख्यानं गर्वगर्भितयेर्ष्यया । सासूयश्च तदाक्षेपो धीरैरुज्जल्प" ईर्यते इति ॥ १९ ॥ संजल्पेनाह—विसृजेति । न्यस्तं स्थापितम् । विसृज अपाकुरु । तथापि तथोक्तेऽपि । ततस्तस्मात् । इत्यर्थ इति—अभ्याङ्संबंधादिणः शिक्षार्थत्वम् 'धात्वर्थं बाधते कश्चित्' इत्युक्तेरिति तात्पर्यम् । सर्वं कृत्यम् । इति भाव इति—भृत्येपि स्वामिनो धर्मः प्रायः स्यादिति न्यायेनेति भावः । स चाक्षिपति—नन्विति । तेंन कृष्णेन । तत्राक्षेपे । असंयतचित्तोऽवशीकृतचित्तः । यः कृष्णः । अस्मिन्कृष्णे । अनुसंधातव्यं योक्तव्यम्, न किमपीति । संजल्पमाह—"सोल्लुंठया गहनया कयाप्याक्षेपमुद्रया । तस्याकृतज्ञताद्युक्तिः संजल्पः स तु कीर्तितः ॥" इति । अर्थांतरम्—प्रणतकृष्णशिरस्थितस्वपादस्मरणातिरेकविवशा स्वपादमुद्धवशिरसि स्थितं मत्वाह—विसृजेति । तव शिरसि स्थितं मम पादं विसृज मुंच, अहं त्वां वेद्मि । अनुनयः सांत्वनम् । किं ते दौत्येनेतो मुकुंदं याहि, किमित्येवं कोपगर्भं वचनं वदसीति तत्राह—स्वकृत इति । कृष्णार्थं त्यक्तपुत्रभर्तृबंधुजना अस्मानिह वने व्यसृजदिति । य इतोऽकृचेता अकृतज्ञः, कृतघ्न इत्यर्थः । दूतोऽहं त्वां संदधामीत्यत्राह—किन्न्विति । "उमाप्रणामसंक्रांतचरणालक्तकः शशी । संध्यानुग इवाभाति यस्य पायात्स वः शिवः ॥" इत्याद्युक्तेरीश्वरेपीयं लीला जनमोहनार्थेति ॥ * ॥ सौरभलोभेन चरणतले प्रविशन्तमपि भ्रमरं—ननु लक्ष्मीकोटिनिर्मंछनीयनखद्युते देवि सत्यं त्वय्यपराद्ध एव कृष्णस्तस्मात्त्वं कृपयैव क्षमस्वेति प्रणमन्तं तं मत्वाह—शिरसि धृतं मम पादं विसृज त्यज, इतो दूरीभवेत्यर्थः । वेद्म्यहमिति—लक्ष्म्यादिकेव नाहं प्रतार्येति भावः । मुकुंदात्सकाशादभ्येत्य चाटुकारैः प्रियोक्तिरचनारूपैर्दौत्यैर्दूतकर्मभिरनुनयाविदुषस्तस्मादनुनयप्रकारं शिक्षितवतस्तव सर्वं शीलादिकं वेद्मि । कर्माणि वा षष्ठी, त्वां वेद्मीत्यर्थः । ननु स्वामिनि ! त्वत्प्राणकोट्यधिकेन तेन सह विग्रहेणालं प्रत्युत मया तीर्थेन संधिरेव कर्तुं युज्यत इति तत्राह—स्वकृत इति । तैर्व्याख्यातम् । तत्र रासमुरलीवादनसमयेंतर्गृहानिरुद्धगोपीभिरपत्यानि त्यक्तानि तदानीं तानि त्यक्त्वैव निस्सृतत्वात्, अस्माभिः पतयः, धन्यादिकन्याभिः पित्रादय इति यथासंभवं ज्ञेयम् । ता गोपीर्यो व्यसृजत् । कीदृशः—अकृतचेताः, न विद्यते कृते उपकृते चेतो यस्य सः, अकृतज्ञ इत्यर्थः । नु अहो ईदृशे तस्मिन्कठोरे किलु संधेयं संधातुमर्हमपि तु नैवेत्यर्थः । अत्र पूर्वार्द्धे सोल्लुंठाक्षेपमुद्रा, उत्तरार्द्धेऽकृतज्ञता । आदिना निर्दयत्वपरद्रोहित्वप्रेमशून्यत्वानीत्ययं संजल्पः । तदुक्तम्—"सोल्लुंठया गहनया कयाप्याक्षेपमुद्रया । तस्याकृतज्ञताद्युक्तिः संजल्पः कथितो बुधैः ॥" ॥ अत्र **तोषिणी**—अहमित्यन्या न जानंतु नाम अहं तु विचक्षणा जानाम्येवेत्यर्थः । 'दूत्यैः' इति क्वाचित्कः, अर्थस्तु स एव । मुकुंदादित्यस्माकं सर्वासां स्पृहादित्यागं ददातीति तथानाम्न इत्यनेन धूर्तत्वं क्रूरत्वञ्चाभिप्रेतम् । तदीयत्वेन दूतस्य च धूर्तस्वभावत्वेन तस्य तु परमाविश्वसनीयत्वमुक्तम् । यद्वा—कमलबुद्ध्या पुन

मृगयुरिव कपींद्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम् ॥
बलिमपि बलिमत्त्वाऽवेष्टयद्ध्वांक्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ॥ १७ ॥

किं च कृष्णस्य पूर्वाणि कर्माण्यनुसंदधाना बिभेम्यहमस्मादित्याह । मृगयुरिवेति । मृगयुर्लुब्धक इव यः कपींद्रं वालिनं विव्यधे अविध्यत् । लुब्धधर्मा क्रौर्यवान् । अलुब्धधर्मेति वा । लुब्धको हि तन्मांसमत्तुकामो विध्यत्ययं तु न तथाऽतो वृथा कठिन इत्यर्थः । तथा स्त्रियं च शूर्पणखां स्त्रीजितः सीतापरतंत्रः काम एव यानं प्राप्तिसाधनं यस्यास्तां विरूपां छिन्नकर्णनासिकामकरोद्दाशरथिरूपेण । तथा बलिमपि वैरोचनिं तद्दत्तं बलिमत्त्वा भक्षयित्वा गृहीत्वेत्यर्थः । ध्वांक्षवत्काकवदवेष्टयद्ववंध वामनरूपेण । बलिमत्त्वाऽधोऽक्षिपत् । विष्टपाय इति पाठे बलिं पूजां गृहीत्वा विष्टपात्स्वर्गादधोऽक्षिपदित्यर्थः । तत्तस्मादसितस्य कृष्णस्य सख्यैरलम् । न किंचित्कार्यमित्यर्थः । एवं चेत्किमिति तं नित्यं गायथ तत्राह । दुस्त्यजस्तु तस्य कथारूपोऽर्थ इति ॥ १७ ॥

रुपसृत्य पादोपारि तं मुहू रुवन्तं भ्रमरमवेक्ष्य—भो देवि मा दोषं कार्षीः सकृदपि मे विज्ञप्तिं कृपया श्रोष्यिति याचमानमिव च तं मत्वाह—विसृजेति । तत्र सोल्लुंठमाह—त्वां मुकुंदं च युवयोः शीलं च सर्वमहं वेद्मि तस्मान्मे पादं ते त्वदीयैश्चाटुकारैः सह विसृज, मत्पादं चाटुकारांश्च युगपत्त्यजेत्यर्थः । कथंभूतैः—अनुनयविदुषो मुकुंदादभ्येत्य कृतैर्दूतकृत्यैः । ननु स्वामिनि तेन प्रेष्टेन सह विग्रेहणालं सकृदपराधं क्षांत्वा मया तीर्थेन संधिरेव कर्तुं युज्यत इति तत्राह—स्वेति । पतयश्चापत्यानि चान्ये च गृहादयो, लोकाश्च सर्वे ऐहिकामुष्मिकभोगसहायाः । न कृतं चेतोऽस्मासु—एता अनन्यगता इति मनो येन सः । यद्वा—स्वकृते स्वार्थम् अस्मान् विसृष्टापत्यपत्यन्यलोका अकृत अकार्षीत्, इताश्च प्राप्ताश्च व्यसृजत् । नु अहो ईदृशेऽस्मिन्कठोरे शठवरे किं संधेयमपि तु नैवेत्यर्थ इत्याक्षेपः ॥ १६ ॥ संधेयत्वे दोषमाह—किंचेति । अनुसंदधाना विमृशति—अस्मात्कृष्णात् । लुब्धको व्याधः । "मृगयुः पुंसि गोमायौ व्याधे च परमेष्ठिनि" इति मेदिनी । लुब्धकानां त्विदमुचितमपि स तु न तथेत्याह—अलुब्धधर्मेति । तन्मांसं वानरपशुमांसम् । विध्यति हिनस्ति । अयन्तु कृष्णस्तु । न तथा न वानरमांसाशी । अतो वानरमांसाशित्वाभावात् । इत्यर्थ इति—वानरमांसस्याभक्ष्यत्वात्तदर्थमपि तद्धननं नोचितं कुतोऽन्योऽन्यथेति भावः । तथा तद्वत् । तथा ततोपि पूर्वतरावतारचरितमस्य शृणु—बलिमिति । तद्दत्तबलिं तत्समर्पितत्रिलोकीरूपपूजाम् । अत्त्वा गृहीत्वा । ध्वांक्षपक्षे तद्दत्तबलिं पुरुषार्पितबलिमत्त्वा तच्छिरस्येव स्वमलं त्यजतीतीत्यर्थः कार्यः । "ध्वांक्षो मत्स्यात्खगे काके तर्कोटे भिक्षुकेऽपि च" इति मेदिनी । तस्मात् सदातनकौटिल्यस्वभावत्वात् । एवंचेत् सख्यानिच्छा चेत् । तस्य कृष्णस्य । कथार्थः चरितव्यवहारः । दुस्त्यजस्त्यक्तुमशक्यः, पारवश्यापादकत्वादिति भावः । एतच्चावजल्पेनोक्तम् । स च—"हरौ काठिन्यकामित्वधौर्त्याद्यासक्त्ययोग्यता । यत्र सेर्ष्यं भियेवोक्ता सोऽवजल्पः सतां मतः ॥" इति । वस्तुतस्तु कपेः सुग्रीवस्य ई लक्ष्मीं द्रावयतीति कपींद्रस्तमपराधिनमित्यर्थः । बलिमिति—'बल—परिवर्तने' धातुः । बलति परिवर्तयतींद्रश्रियमिति बलिस्तेन परकीयं त्रैलोक्यं स्वीयं कृतमिति चौर्याख्यापराधं दृष्ट्वा दुष्टशिक्षणं कृतवानिति ॥ * ॥ किञ्च—न केवलं तस्य तादृशचेष्टितादेव बिभेम्यपि तु श्यामतास्वभावादपीति तद्गुणयोगेन तदभेदबुद्ध्या धीरोदात्तत्वादिगुणतया प्रसिद्धेष्वपि श्रीरामवामनादिरूपेषु दोषं दर्शयन्ती तद्रूपं कैमुत्यं दर्शयति—मृगयुरिवेति । मृगयुर्व्याध इव निर्दयो गुप्तश्च सन् एको योऽसितः सोऽपि कपीनामवध्यानामीशमपि वालिनं विव्यधे । प्रसिद्धस्य मांसादिलुब्धस्य धर्माः क्रौर्यादयो यत्र तादृशः । अलुब्धधर्मा तद्धर्मरहितोऽपि वा । तदप्यास्ताम् । य एव स्त्रियं तत्रापि कामयानां कामयमानामपि साक्षाद्विश्रवःप्रभवां विरूपां छिन्नकर्णनासामकृत ।

१ 'प्रिये' इति पा० ।

यदनुचरितलीलाकर्णपीयूषविप्रुट्सकृददनविधूतद्वंद्वधर्मा विनष्टाः ॥ सपदि गृहकुटुंबं दीनमुत्सृज्य दीना बहव इह विहंगा भिक्षुचर्यां चरंति ॥ १८ ॥

अपि च जानीम एव तत्कथाऽपि त्रिवर्गलतामूलोन्मूलनीति तथापि न त्यक्तुशक्नुमः । किं कुर्म इत्याह।यदनुचरितेति । यस्यानुचरितमेव लीला तदेव कर्णपीयूषं तस्य विप्रुट् कणिका तस्याः सकृददनं सेवनं तेन विधूता निरस्ता द्वंद्वधर्मा रागादयो येषां तेऽत एव विनष्टा असत्तुल्या दीनं दुःखितं गृहं कुटुंबं विहाय दीना भोगहीना विहंगा अपि भिक्षुचर्यां प्राणवृत्तिमात्रं चरंत्यतस्त्याज्यस्तथापि त्यक्तुं न शक्नुम इति निंदापरत्वेऽयं तावच्छ्रौतोर्थः । दुस्त्यजत्वेऽपि पारमार्थिकोऽयमर्थः । विधूतद्वंद्वधर्मा इत्यंतः समासः पूर्ववत् । ततस्ते च ते अविनष्टाश्चेति समासः । इतरे पुनर्द्वंद्वधर्माणो विनष्टा एव । सपदि तत्क्षणमेव दीनं तुच्छं गृहसहितं कुटुंबं विहाय दीना इवाकिंचनाः । धीरा इति वा पाठः । बहवो विहंगा हंसा इव सारासारविवेकचतुरा भिक्षुचर्यां पारमहंस्यं चरंति तस्मादेवं परमपुरुषार्थरूपत्वाद्दुस्त्यज एव तत्कथार्थ इति ॥ १८ ॥

तस्य च क्षत्रियजातितया तत्तत्संभवेन्नाम योऽन्योऽसितो ब्राह्मणजातितया तत्रापि ब्रह्मचारितया शांत्यादिशुभयोग्योऽपि, बलिं परमधर्मात्मानमपि, तत्रापि बलिं तस्य पूजामुपहारमत्त्वा भुक्त्वा गोप्यवदात्मसात्कृत्यापि छलेन दानपूर्तिममत्वा विष्टपात् त्रैलोक्यराज्यादक्षिपत् भ्रंशयामास, तत्राप्यधोऽक्षिपत् भूविवरे विचिक्षेप । पाठान्तरे त्ववेष्टयत् बबंध, पराजयतेति । काको यथा बलिं जग्ध्वापि लोकं वेष्टयति स्वजातीयानन्यानाहूय तद्गृहमावृणोति तद्वत् । अत्र विव्यध इत्यादिभिः काठिन्यम्, स्त्रीजित इति कामित्वम्, बलिमपीति धौर्त्यमभिप्रेतम् । तत् तस्मात् । असितमात्रस्य सख्यैर्बहुषु सख्यप्रकारेष्वेकेनाप्यलं न तु प्रयोजनमित्यर्थः । ननु तस्य कथं कथा रूपोऽर्थो मुनिभिरपि न त्यज्यते तत्राह—दुस्त्यज इति । सोऽयं तस्य कोपि दुरन्तो मोहनः स्वभाव इति भावः । इति भियेव सेर्ष्योक्तिः । ननु ‘ नाख्येयं परदूषणम ’ इति निषेधः, सत्यम, निषिद्धत्वाद्वक्तुमयुक्तमपि तद्दैगुण्यं तस्य परमन्याय्यकारित्वादुत्पद्यमानेन रोषावेशेन त्यक्तुं न शक्यते इत्याह—तद्दैगुण्यरूपकथाप्रयोगो दुस्त्यज इति ॥ **विश्वनाथस्तु**—नन्वति कोमलमनाः स त्वामेव ध्यायंस्तत्रास्माभिर्दृश्यते इति, तत्र त्वमर्वाचीनो दासस्तस्य तत्त्वं न जानासि, न केवलं स ह्यस्मिन्नेव जन्मनि कठोरः किन्तु पूर्वपूर्वजन्मस्वपीति पौर्णमासीमुखादस्माभिः श्रुतत्वादित्याह—यदा स क्षत्रियजातौ रामचन्द्रोऽभूत्तदा क्षत्रियधर्मं परित्यज्य व्याध इव वालिनं विव्याध, निर्दयो गुप्तः सन्नित्यर्थः । तत्रापि लुब्धस्य व्याधस्यापि धर्मरहितः, न हि व्याधो वानरान्हिनस्ति तन्मांसस्याभक्ष्यत्वेन केनाप्यक्रेयत्वादिति भावः । अन्यमधर्मं शृण्वित्याह—स्त्रियं शूर्पणखां तमेव कामयमानां छिन्न कर्णनासामकृत, अन्यः कोप्येनां मा भुंक्तामिति क्रौर्येणेति भावः । न च जटाबहुलधारित्वाद्वैराग्येणेत्यत आह—स्त्रिया सीतया जितः । ततोपि पूर्वजन्मनि स ब्राह्मणोभूत्तदापि ब्राह्मणधर्मं शांत्यकैतवादिकं परित्यज्य बलि मित्यादि पूर्ववत् । तस्मात्कृष्णवर्णस्य सख्यैरस्माकं गौरीणामलम्, तत्संबन्धिनः सख्यस्य यावन्तो भेदास्तेषामेकोपि न भद्र इति बहुवचनेन द्योतितम् । असिताः खल्वशुद्धचित्ता भवन्ति तेभ्यो भयस्यावश्यंभावित्वादिति भावः । नन्वभीक्ष्णं परानिन्दां कुर्वती किं शुद्धचित्तासीति तत्राह—तस्य कथायाः प्रतिजन्मचरित्रस्यार्थो व्याख्या दुस्त्यजः । सोस्मानेव दुःखयति अस्माभिस्तत्कथाया अप्यर्थो न वक्तव्य एव किम् । अत्र निन्दा भवतु यथार्थभाषणत्वेनानिंदा वा भवतु असौ त्यक्तुमशक्य एवेति भावः । यद्वा—सोऽस्माभिस्त्यक्त एव किन्तु तत्कथारूपोऽर्थो वस्तुविशेषस्तु दुस्त्यज एव । कर्तृपदानुक्त्या सर्वैरेव मुन्यादिभिरपीत्यर्थः । अत्र विव्यध इति काठिन्यम्, स्त्रीजित इति कामित्वम्, बलिमपीति धौर्त्यम् । असितसख्यैरित्यासक्त्ययोग्यता भयमीर्ष्या चेत्ययमवजल्पः । तदुक्तम्—“हरौ काठिन्यकामित्वधौर्त्यादासक्त्ययोग्यता । यत्र सेर्ष्याभियेवोक्ता सोऽवजल्पः सतां मतः॥” इति ॥ १७ ॥ अन्यदाह—अपि चेति । तत्कथा कृष्णकथा । त्रिवर्गलता धर्मार्थकामरूपा वल्ली तस्या मूलनिकृंतनी । तथापि जानंत्योपि वयं त्रिवर्गस्थाः । अभिजल्पेनाह—यदिति । यस्य कृष्णस्य । अनुचरितमवतारच रितमेव । लीला विलासः । तदेव लीलैव । कर्णपीयूषं श्रवणामृतम् । अत एव विनष्टरागादित्वादेव । “ लीला प्रियस्यानुकृतिः श्लिष्टा वाग्वेषचेष्टितैः । लीला विलासः केलिश्च क्रिया शृंगारभावजा ॥ ” इति कोशः ।

“ पृषंति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियः ” इत्यमरः । प्राणवृत्तिमात्रमित्यनेन ज्ञानार्थमेव तेषां देहधृतिर्न तु भोगार्थेत्युक्तम् । अतः अस्य लीलाकर्णनस्य दीनतापादकत्वात् । तावदधुना । श्रौतः श्रुतिविहितः । पारमार्थिको वास्तवः । अयं वक्ष्यमाणः । ततश्च पूर्ववत् समासोत्तरम् । ते चेत्यादि कर्मधारयः । इतरे गृहस्थाः । इवेन न तु दीना इत्युक्तम्, किन्त्वत्युदारास्त्यक्तुमशक्यस्य त्यागित्वात् । इवाऽध्याहाराऽपेक्षया ‘धीराः’ इति पाठः सम्यक् । विहंगपदं लक्षणया हंसपरम् । पारमहंस्यं संन्यासम् । तथा च श्रुतिः—“ प्रव्रजंत्येतद्ध स्म वै पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्मा लोकः ” इति । “ ते ह स्म पुत्रेषणायाश्च वित्तेषणायाश्च लोकेषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरंति ” इति च । ‘ दीनो दुःखितदुर्गततुच्छमूषिकवाचकः ’ इति स्वामी । अभिजल्पलक्षणम्—“ भंग्या त्यागौचिती तस्य खगानामपि खेदता । यत्र सानुनयं प्रोक्ता तद्विद्यादभिजल्पितम् ॥ ” इति ॥ * ॥ वयं साक्षात्तेन सह सख्यं कृतवत्यो तद्दुःखिन्योऽभूम तत्र किं चित्रं, तल्लीलाकथापि सर्वजगत्संतापिनी ध्याह—यस्यानुचरितं प्रतिक्षणचेष्टितमेव लीला सैव कर्णपीयूषं शब्दमात्रेणैव सुखदं, किं पुनरर्थत इति भावः । तस्या अपि विप्रुट् तस्या अपि सकृदप्यदनं किञ्चिदास्वादनं तेनापि विधुता विशेषेण खंडिता द्वंद्वधर्माः स्त्रीपुंसादिपरस्परसख्यरूपधर्मा येषां ते । तत्कथां स्त्री चेच्छृणोति सद्य एव पतिस्नेहं त्यजति, पतिश्चेत्स्त्रीस्नेहमेवं पुत्रश्चेत्पितरं मातरञ्च, माता चेत्पुत्रमित्येवं परस्परत्यागाद्विशेषेण नष्टा इति तेषां नाशे तथा न दुःखं यथा वैराग्य इति संसारिकलोकानुभव एव प्रमाणमिति भावः । किञ्च—ते जनाः स्निग्धमनसोऽपि कठोरस्य कृष्णस्य लीलाश्रवणादतिकठोरा निर्दया कृतघ्नाश्च भवंतीत्याह—सपदि कथाश्रवण क्षणमात्र एव । गृहकुटुम्बं पितृश्वश्र्वादिपर्यंतम् । दीनमन्यस्योपार्जकस्याऽभावात्, श्वो यद्भोक्तं तद्धनरहितमपि । यद्वा—तद्विच्छेदकातरम् उत्सृज्य, मृत्यवे कुशत्वारिसंयोगेन संप्रदायैवेत्यर्थः । हंतहंत ते स्त्रीपुत्रादयो म्रियन्तां नाम स्वयमपि सुखिनो न भवंतीत्याह—दीना गृहं त्यक्त्वा गच्छंतश्चित्तविक्षेपाद्वराटकमात्रमपि ग्रंथौ न गृह्णंतीति भावः । ‘ धीराः ’ इति पाठे भार्यादिरोदनदर्शनेप्यक्षुभ्यन्तो महाकठोरा इत्यर्थः । न च ते एकद्वा द्वित्रा वा चतुःपंचा वा किन्तु बहवः परःशताः परःसहस्राश्च । ननु ततस्ते कया जीविकया जीवंति तत्राह—विहंगाः पाक्षिण इव गोधूमादिकणभिक्षापरिपाटयैव जीवंति, न तु केनापि दत्तया स्थूलभिक्षयापीति भावः । इहेति—अत्रैवाऽस्मद्दुःखस्थाने वृंदावने एवागत्यास्मत्संगादपि महादुःखिनो भवंतीति भावः । तेन तत्कथाया बहुमत्स्यंडिकामयधत्तूरबीजचूर्णत्वम्, कथावाचकस्य साधुवेशच्छन्नमहावातुकत्वम्, पुराणपुस्तकस्य जालत्वम् । अत एव ते वनाद्वनं भ्रमन्तोऽपि स्वकक्षगृहीतपुस्तका एव दृश्यन्ते । व्यासादीनां जालनिर्मातृत्वं, कृष्णस्य परमेश्वरत्वेन तत्तदादेष्टृत्वमेतदर्थमेव कृष्णेन परमेश्वरता गृहीता गोप्य इव सर्वे लोका दुःखाब्धौ पतंत्विति तस्य विचारः, ईदृशपरदुःखदर्शनमेव तस्य सुखमत ईदृशपरदुःखदानजन्यफलभागी यथा स न तथा व्यासादय इति परःशता एव ध्वनयोऽस्य पद्यस्य सर्व एव सिद्धांततो व्याजस्तुत्या भक्तेः सर्वोत्कर्षव्यंजका ज्ञेयाः । अत्र खगसदृशीकृत्य सज्जनानां खेदनात्तस्य त्याग एव समुचित इत्यनुतापमयं वाक्यमित्ययमभिजल्पः । तदुक्तम्—“भंग्या त्यागौचिती तस्य खगानामपि खेदनात् । यत्र सानुशयं प्रोक्ता तद्भवेदभिजल्पितम् ॥” इति ॥ **तोषिणी** तु—यस्यानुचरितं स्वस्यानुकूलं कर्मैव लीला बालचेष्टितवत्स्वच्छन्दखेलामात्रमिति निन्दैव, लोकहितार्थकर्मणा सह लीलायाः प्रतियोगित्वात् । तदेव कर्णपीयूषं शब्दतः कर्णसुखदं न त्वर्थतो मनः प्रीतिकरमित्यर्थः । तस्यापि विप्रुट् न तु बाहुल्यम्, तस्या अपि सकृदप्यदनं दूरदेशात्कथंचित्किञ्चिदास्वादनं तेन विशेषेण धुता द्वंद्वधर्मा मिथुनाचाराः शीतौष्ण्यादिभोगा वा यैस्तथाभूतास्सन्तः विहंगा आकाश गामित्वाद्दूरादागत्य हंसादयः पक्षिणोऽपि तत्रापि बहवः एव न तु द्वित्राः सपदि ललिश्रवणोत्तरमेव दीनमपि गृहस्य कुटुम्बं तातजननीभार्यादिकं त्यक्त्वा स्वयमपि दीना त्रिनष्टाश्च सन्त इह तल्लीलास्थाने वृन्दावने समागत्य भिक्षुचर्यामेव चरन्ति । ‘धीराः’ इति पाठे तेषां दुःखेनाक्षुभिताः कठोरचित्ताः सन्त इत्यर्थः । ‘बहव इव’ इति पाठस्तु सर्वटीकाकारासंमतः, श्रीस्वामिभिरपि स्तुतिपक्ष एव हंसा इवेति गौणवृत्तिद्योतनायैव इव शब्दो दत्त इति । अयं भावः—येऽमी पक्षिणो दृश्यन्ते नूने न प्राचीनास्तेषां तद्वियोगे जीवनासंभवात्, ततोऽमी आगंतुका एव । अत्र तादृशमागमनमदिशी भिक्षुचर्या च तेनैव संभवति यथा भवदागमनं दौत्येनैवेति । यद्वा—तस्य निष्ठुरता किं वाच्या, तच्चरितलवमपि ये केचिच्छृणुयुस्तेपि निष्ठुराः स्युरित्याह—यदिति । अर्थः पूर्ववत् । यद्वा—तर्हि कथं मां गातुं निषेधसि तत्राह—यदिति । अर्थः पूर्ववत् । विशेषतश्च इह बहव एव विहंगास्तदावेशात्तद्गानशीला भिक्षुचर्यां चरन्ति तत्र को वा वराको भवान्, तत्र च ते प्रायो व्राजपत्यर्लीलामेव गायंति तथापि न रोचन्ते, भवांस्तु यादुपत्यलीलामिति कथंतरां रोचन्तां नामेति ॥१८॥

वयमृतामिव जिह्मव्याहृतं श्रद्दधानाः कुलिकरुतामिवाज्ञाः कृष्णवध्वो हरिण्यः॥ददृशुरसकृदेतत्तन्नखस्पर्शतीव्रस्मररुज उपमंत्रिन्भण्यतामन्यवार्ता॥१९॥

ननु किमेवं ब्रूषे पूर्वं त्वयैव साकं रहसि किमेवं नावोचयथाद्येत्यत आह । वयमिति ।उपमंत्रिन् दूत । आस्तामियं वार्ता । यतः कुलिकस्य मृगयो रुतं गीतमज्ञा यथा ऋतं सत्यमिति श्रद्दधानाः कृष्णस्य हरिणस्य वध्वो भार्या हारिण्यः शरैः क्षताः सत्यो रुजो ददृशुः । एवं जिह्मस्य कुटिलस्य तस्य व्याहृतमृतमिव श्रद्दधानाः स्पृहयंत्यो वयमसकृदेतद्ददृशिम । किं तत् । तस्य नखैः स्पर्शस्तेन तीव्रः स्मरस्तेन रुजः पीडाः । तस्मादन्या वार्ता भण्यतां कथ्यतामिति ॥ १९ ॥

पुनराशंकन्ते—नन्विति । एवमयोग्यम्, द्वितीयैवंपदस्याप्ययमेवार्थः । किंशब्दद्वयं कुत इत्यर्थे । इयं वार्ता एकान्तवार्ता । यतो यस्मात् । "कुलिकं मृगयौ योगभेदे वल्मीककाकयोः । पटोलेन्दुकुलश्रेष्ठसमूहेषु च वाच्य वत् ॥" इति धरणिः । एतत्पदार्थं पृच्छति—किं तदिति । तस्य कृष्णस्य। 'रुक् पीडारोगकान्तिषु' इति धरणिः। तस्मात् तस्य संयोगस्य पीडाहेतुत्वात् । वस्तुतस्तु तच्छ्रवणस्यानंदजनकत्वादन्यस्य सर्वस्माद्विलक्षणस्य कृष्णस्य वार्ता भण्यतामिति ध्येयम् । तस्य कुलिकस्य नखस्पर्शात्तीव्रो दुःसहः स्मरस्पर्शो यस्य शरस्य तेन रुजः पीडा इति वा । "स्मरः कामस्पर्शनयोः स्मरणेऽवगतौ हरौ" इति निरुक्तिकारः । "जिह्मं तु कुटिले मंदे क्लीबं तु गरपादपे" इति मेदिनी । इहाऽऽजल्पेनोक्तिः । लक्षणन्तु—"जैह्म्यं तस्यार्तिदत्वं च निर्वेदाद्यत्र कीर्तितम् । भंग्यान्यसुखदत्वं च स आजल्प उदाहृतः ॥ " इति । तस्य प्रियस्य ॥ * ॥ वयमिति तैरवतारितं, तत्रैवमिति जानीम एवेत्यादि पूर्वपद्यावतारिकात्मकं पूर्वपद्यार्थमित्यर्थः, उत्तरैवंशब्दोपि तदर्थः । पूर्वः किं शब्द आक्षेपे, उत्तरस्तु प्रश्ने । आस्तामिति—तद्वाक्यं यदि प्रमाणं स्यात्तदैव त्वया प्रष्टव्यं न त्वन्यथा, यतस्तद्वा क्यप्रामाण्यबुद्ध्यैव वयं दुःखसागरे मग्ना इत्यर्थ इति । यद्वा—अहो तल्लीलाश्रवणमात्रेण बहवो व्यसनं प्राप्ताश्चेत्कथं तत्कपटोक्त्या महादुःखं वयमत्रभूमेति किमाश्चर्यमित्याह—वयमिति । यद्वा—ननु देवि प्रथमतः प्रियसंदेशं शृणु ततो विचारय ततस्तुष्य कुप्य वा तत्राह—वयमिति । जिह्मस्य पूर्वोक्तस्य कितवस्य तद्वंधोरसकृद्व्याहृतम् 'न पारयेहम्' इत्यादिकम् 'आयास्ये' इत्यन्तं वचनसहस्रम् ऋतं सत्यमिवासकृच्छ्रद्दधानाः यथा महतां वाक्यं सत्यं तदिव निश्चिन्वाना मुहुर्व्यभिचारेपि मुहुः श्रद्दधाना इत्यर्थः । ततो मोहेन कृष्णस्य तस्यैव वध्वोऽपि सत्यस्ततोऽसकृन्नखस्पर्शेन मुहुः स्वस्मिंस्तच्चिह्नदर्शनात्तीव्रस्मररुजः[1] तीव्रा स्मररुक् यासां तथा भूताश्च सत्यः एत देतादृशं दुरवस्थानमेव न तु कदापि स्मरसुखं ददृशुर्ददृशिम, प्राप्तवत्य इत्यर्थः । 'तिङां तिङो भवंति' इति छांदसवार्तिकात् । स्वतस्तून्मोदनास्मत्प्रयोगाननुसंधानादतः परोक्षप्रयोगोऽपि तदानीं बोधावरणं सूचयति । यत एवं तस्मात् । वयमज्ञा एवेति तत्र दृष्टान्ता हरिण्यः । कुलिकरुतमिवेति—यथा हरिण्यः कुलिकरुतं सत्यमिवास्मदनुकूलमेवेदं न पुनरन्यथारूपमिति मन्यमानाः भवद्वंधुनखसदृशकुलिकबाणस्पर्शेनास्मत्स्मररुक्सदृशरुजः सत्य एतदस्मदीयदुरवस्थासदृशं दुरवस्थानं ददृशुः, प्राप्नुवंतीत्यर्थः । उभयत्र तद्योग्यतार्थं विशेषणमज्ञा इति । ननु भवत्यस्तावत्कुलवध्वस्तास्तु पशुजातीया मनुष्यभक्ष्यास्तां दुरवस्थां प्राप्तुमर्हत्येवेति तासु कथं स्वसाम्यं निर्दिशसीत्याशंक्य स्वपक्षान्तःपात्यमानानां तासां पक्षपातमाचरंती श्लाघामाह—कृष्णवध्व इति । तद्भर्तारोऽप्यात्मानं परमोत्कृष्टकृष्णनामतयाख्यापयन्ति ततस्तद्वंधुतस्तेषां को निष्कर्षो येन तासामपि निष्कर्षः स्यात्, ततो यथा तादृशीषु तासु कुलिक एव दुःखदायी स्यात्तथास्मासु भवद्वंधुरेवेति भावः । ततो हे उपमंत्रिन् दांभिकतया तूष्णीं स्थितरयास्य तन्मांत्रिणः प्रतिनिधे । यद्वा—"तत्रोपमंत्रिणोऽराजन्नानाहास्यरसैर्विभुम्" इत्यत्र तथा व्याख्येयानुसारेण हे भंडविद्यापण्डित अन्या वार्ता भण्यतामुपहासस्त्यज्यतामित्युन्मादवचने तासां या कृच्छ्रादर्थसंगतिस्तदुत्कर्षाय सा भाती त्यनुक्तं मुनिभिस्त्वयेति ॥ **विश्वनाथस्तु**—ननु एवं चेत्परमविज्ञाभिर्भवतीभिः कृष्णे कथं सख्यं तत्राह—वयं तस्य 'न पारयेऽहं निरवद्यसंयुजाम्' इत्यादिकं जिह्मव्याहृतमपि ऋतमिव सत्यमिव श्रद्दधाना

[1] 'सुप्तिङुपग्रह–' इत्यादिबाहुलकात् ।

**प्रियसख पुनरागाः प्रेयसा प्रेषितः किं वरय किमनुरुंधे माननीयोऽसि मेंग ॥**
**नयसि कथमिहास्मान्दुस्त्यजद्वंद्वपार्श्वं सततमुरसि सौम्य श्रीर्वधूः साकमास्ते ॥ २० ॥**

**परावृत्य गत्वा पुनरागतं प्रत्याह । प्रियसखेति । हे प्रियस्य कृष्णस्य सखे प्रेयसा कृष्णेन पुनः प्रेषितः किं त्वमागतोऽसि । अगं हे दूत मे माननीयः पूज्योऽसि । अतो भवान् किमनुरुंधे प्राप्तुमिच्छतीत्यर्थः । तद्वरय वृणीष्व । एवं संमानितं प्रत्याह । नयसीति । इहात्र सतीः अस्मान् दुस्त्यजं द्वंद्वं मिथुनीभावो यस्य तस्य प्रेयसः पार्श्वे समीपं कथं नयसि नेष्यसि।तथाहि।हे सौम्य श्रीर्नाम वधूः साकं सहैव सततमास्ते।तत्राप्युरसि वक्षस्येव ॥ २० ॥**

अज्ञा अभूम, कुलिकस्य व्याधस्य रुतं श्रद्दधाना हरिण्यः कृष्णवध्वः कृष्णसारस्त्रिय इव । ततः किमत आह—एतत्कुलिकरुतं ददृशुः, रुतस्य दर्शनाऽसंभवात्तत्फलं शरावातं ददृशुरित्यर्थः । तथा वयमपि तन्नखस्पर्शेन तीव्राः स्मररुजः कंदर्पपीडा ददृशिमेत्यर्थः । असकृदिति—एकवारं तत्फलदर्शनेऽपि पुनरपि विश्वासात्पुनरपि तत्फलदर्शनादज्ञताधिक्यं हरिणीनां तथैवास्माकमपि लब्धपुनःपुनर्मानोत्थदुःखदशानाम्। तस्मात् हे उपमंत्रिन् विदूषक अन्यवार्ता भण्यताम्, तस्य तद्वार्तायाश्च दुःखदत्वादन्यकथैव संप्रत्यस्माकं सुखदेत्यर्थः । अत्र तस्य कौटिल्यं तद्वार्तायाश्च दुःखदत्वमन्यवार्तायाश्च सुखदत्वमित्ययमाजल्पः । तदुक्तम्—"जैह्मयं तस्यार्तिदत्वञ्च निर्वेदाद्यत्र कीर्तितम् । भंग्याऽन्यसुखदत्वञ्च स आजल्प उदीरितः ॥" इति ॥ १९ ॥ परावृत्य ततोऽन्यत्र पर्यावृत्य । प्रियेति—यद्वा—प्रहाविष्टेवात्मनः कृष्णैकचित्ततां दर्शयंत्याह प्रतिजल्पेन । "पुनरप्रथमे प्रश्ने व्यावृत्ताववधारणे" इति हलायुधः । पूज्यः प्रेष्टबंधुत्वात् । अतः पूज्यत्वात् । इत्यर्थ इति—किमर्थमस्मत्तः स्वीकर्तुमिच्छसीति भावः । तदवांछितम् । आत्मनो नेतुमागत इति भ्रांतधीराह—इह सतीः अत्र स्थिता अस्मान् । तस्य कृष्णस्य । सततशब्द आपेक्षिक इति तदाह—साकमिति, अर्धांगीकृत्यास्ते । सपत्न्या लक्ष्म्याः कदापि वियोगाभावात्स्वनीतानां दर्शनमपि दुर्लभं किं पुनः संभाषणं किन्तरां तच्चित्ताऽऽदानं किन्तमां सुरतलीलानुभव इत्यास्तामयं प्रसंगः । प्रतिजल्पलक्षणम्—"दुस्त्यजद्वंद्वभावेऽस्मिन्प्राप्तिर्नार्हेत्युदाहृतम् । दूतसंमाननेनोक्तं यत्र स प्रतिजल्पकः॥"इति॥*॥ अथोन्मादेन तत्रैव भ्रमन्तं भ्रमरमनुसंधाय क्षणमंतर्हिता वा तमपश्यन्ती सखेदं परामर्शं—हंत हंत मम तीक्ष्णया गिरा संतप्तेनानेन दूतेन मथुरां गतेनावेदितसर्ववृत्तान्तः कृष्णो मामुपेक्षांचक्रे इति कलहांतरितां दशां प्राप्ता प्रेमांबुधिना सद्गुणमौलिना मत्कान्तेन पुनरपि स एव प्रेषितो दूतोऽत्रायातीति तद्वर्त्म निरीक्षमाणाऽकस्मात्तं विलोक्य सादरमाह—हे प्रियसख मत्प्रियस्य सखे पुनरागाः मद्वाक्यशरताडितोपि साद्गुण्येन मदपराधमगणयित्वैवागाः, आः जानामि प्रेयसामप्यतिप्रेमवता मदपराधकोटीरप्यगणयता तेनैव किं प्रेषितः, तर्हि वरय वृणु किमनुरुंधे अनुरुत्से, कामयस इत्यर्थः । यद्वा—कमनुरोधं ते संपादयामीत्यर्थः । तत्र मथुरा गमनमेव वृणोमीति चेद्यामि मथुरामित्युक्त्वापि पुनः पुरस्त्रीवेष्टितं तं तत्र पश्यंत्या मेऽवश्यं मानो भावीति परामृश्याह—नयसीति । दुस्त्यजं द्वंद्वं मिथुनीभावो यस्य तस्य पार्श्वम् । नन्वेकाकी स तत्र वर्तत इति सशपथं ब्रवीमीति तत्राह—हे सौम्य आर्यबुद्धिरसीति भावः । श्रीरेव वधूः साकं सहैव तत्रापि सततं तत्राप्युरसि, पुरुषायितत्वेनैवेति भावः । अथमर्थः—श्रियो देवीत्वेन नानारूपधारित्वशक्तेः कृष्णो यदाऽन्यां स्त्रियं भुंक्ते तदा रेखारूपतां हित्वा प्रकटमेव युवतिर्भूत्वा तं रमयतीति । अत्र दूतं संमान्यापि तदुक्तिमंगीकृत्याप्यनौचित्यं ज्ञापयन्ती नांगीकुरुत इत्ययं परिजल्पः । तदुक्तम्—"दुस्त्यजद्वंद्वभावेऽस्मिन्प्राप्तिर्नार्हेत्यनुत्रतम् । दूतसंमाननेनोक्तं यत्र स परिजल्पकः ॥" इति ॥ **तोषिणी** तु—ततो भ्रमरस्वभावतो व्यवधानमपि प्राप्तं वा प्रदेशान्तरगतं वा निजोन्मादमूर्च्छयोरेकतरतस्तत्रैव स्थितमप्यननुसंहितं वा क्षणं तमदृष्ट्वा सहजप्रेमोत्कण्ठास्वभावतस्तदुपेक्षा माशंक्य मंक्षु कलहांतरितावस्थामिव प्राप्नुवन्ती दैवात्तं पुनरागतं चान्यमेव वा तमेवानुसंहितं वा दृष्ट्वा हृष्यन्त्याह—द्वयेन । तत्र सस्तुतिकमाहार्द्रेन । ईदृशोपकारपरत्वात् प्रियसख अभिरुचितमित्रेति । प्रेयसेति च परमो

अपि बत मधुपुर्यामार्यपुत्रोऽधुनाऽऽस्ते स्मरति स पितृगेहान्सौम्य बंधूंश्च गोपान् ॥
क्वचिदपि स कथा नः किंकरीणां गृणीते भुजमगुरुसुगंधं मूर्ध्न्यधास्यत्कदा नु ॥ २१ ॥

तेन संमंत्रिता सती ब्रूते । अपि बतेति । बत हर्षे । हे सौम्य गुरुकुलादागत्यार्यपुत्रः कृष्णोऽधुना किं मधुपुर्यां वर्तते । पितृगृहं बंधूंश्च किं स्मरति कदाचिदपि प्रसंगवशान्नोऽस्माकं वार्ताः किं ब्रूते । अगुरुवत्सुगंधं भुजं नो मूर्ध्नि कदा नु धास्यतीति ॥ २१ ॥

ल्लासात् । किमनुरुन्धे कामयसे । पूर्ववत्तिङ्प्रत्ययः । यद्वा—कामये एतमेव कामयिष्ये, कर्तुमिच्छामीत्यर्थः । हन्त युष्माकं मधुपुरीगमनमेव वृणोमि तत्र ससांत्वं सयुक्तिकं सम्यक् प्रत्याख्यानमाहार्द्रेन । दुस्त्यजं द्वंद्वमस्म द्विजातीयतत्रत्यनागरीभिर्मिथुनीभावो येन तस्य त्वद्बंधोः पार्श्वे कथं कया युक्त्या नयसि । ननु भगवद्गमने सर्वास्ताः स्वयं न्यक्करिष्यन्ते, सत्यम्, तद्वराक्यः काः किं त्वस्मद्व्रजतस्तेन सहैव गता सा लक्ष्मीरेव तत्र स्वैर रमणाय तं रक्षतीति तां प्रत्यपि सेर्ष्यमाह—श्रीरिति । सा तस्य वधूः श्रीरादरबाहुल्येन कं सुखं यथा स्यात्तथा उरस्यास्ते वसति, तदेतच्च लक्ष्मीरेखामेव तन्मूर्तितयोत्प्रेक्ष्योक्तम् 'गोप्यः किमाचरदयं कुशलं स्म वेणुः' इति वत् । श्लेषेण तस्या विपरीतस्थितिव्यञ्जनया धाष्टर्यातिशयश्च दर्शित इति मत्सरासूये । अयं भावः—यद्यप्यत्रापि सा तदविच्युतैवासीत्तथापि श्रीमन्नन्दव्रजस्वाभाव्येन तस्य तदा प्रेममात्रादरान्न तत्र तादृशस्तदादरो वृत्तः, तत्र तु सम्पत्तिमात्रपुरुषार्थत्वान्महानेव तदादर इत्यतो वयं कथं तत्र यास्याम इति, तस्मादत्रैव तमानयेति निगूढोऽभिप्रायः । एवमीर्ष्यासूया स्पृहा च ॥ २० ॥ तेनोद्धवेन । संमंत्रिता संबोधिता । अपि बतेत्यव्ययद्वयं संप्रश्ने । गुरुकुलादुदुज्ज यिनीतः । आर्यस्य पूज्यस्य वसुदेवस्य पुत्रः । "आर्यो वेदानुगे पूज्ये श्वशुरे वैश्यजे गुरौ । ब्राह्मणादिषु वर्णेषु चाश्रमेषु चतुर्षु च ॥" इति धरणिः । स कृष्णः । पितुर्नंदस्य गेहान् भार्याम्, बहुत्वं पूजायाम्, यशोदामित्यर्थः । बन्धूंति स्नेहेनेति बंधवः स्त्रीजनाः, गोप्य इत्यर्थः । चकाराद्गोगृहगिरीणां ग्रहः । यद्यागमिष्यत्तदाधास्यन्न संदेहोऽत्रातस्तदागमनं पृच्छामीति वा । अत्र च सुजल्पेनोक्तम्—"यत्रार्जवात्सगांभीर्यं सदैन्यं सहचापलम् । सोत्कंठं च हरेः पृष्टः स सुजल्पो निगद्यते ॥" इति ॥ * ॥ हंतहंत मयोन्मत्तया किं प्रजल्प्यते प्रष्टव्यन्तु न पृच्छ्यत इत्यनुसंतप्य ससंभ्रममाह—अपि बतेति । मधुपुर्यामास्ते—व्रजमित्र तामपि त्यक्त्वाऽन्यत्र किं न यियासतीति भावः । इतः समीपवर्तिन्यां तत्र पुर्यां तस्य स्थितिरत्रागमनसंभवनामप्युत्पादयतीत्यभिप्रायेण । यद्वा—सुखमास्ते इत्यनुक्तेरस्मत्प्रणयस्मरणव्याकुलोऽनुरोधवशादेव तत्रास्ते, यत आर्यस्य यदुभिर्दुर्विनीतैः प्रतार्यमाणत्वा त्सारल्यसमुद्रस्य श्रीव्रजराजस्य तदेकप्राणस्य पुत्रः; हंतहंत मत्पितापि मां व्रजं नेतुं नाऽशकदहं तत्र गन्तुं कमुपायं करोमीति स्वविलंबमसहमानस्त्वां प्रस्थापयति स्मेति भावः । तेन मधुपुर्यामास्त इति तस्य को दोषः, यत आर्यस्यातिसरलस्य स्वपरिणामदर्शित्वेनापि शून्यस्य नंदस्य पुत्रः, तादृशं पुत्रं तादृशः पिता यत्त्यक्त्वा व्रजमायास्यतीति को जानाति, यद्यज्ञास्यद्व्रजराज्ञी सा तावदक्रूररथारूढैव स्वपुत्रं कंठे कुर्वत्येव यथुरामयास्यत्तामनुगोपिकाश्रेण्यश्चेति व्रजराजस्यायत्तत्वमेवास्माकं सर्वनाशे कारणमभूदिति भावः । अतस्तादृशस्यापि पितुरपि सरलस्य वसुदेवेन महाप्रतारकेणाच्छिद्य गृहीतपुत्रस्य व्रजमागत्य मूर्छया पतित्वा स्थितस्य गृहान् कोशागारबंधनागारशयनागारादीन् संप्रत्यमार्जितालिप्तेन तृणधूलिलितापत्रलूतातंतुवृताञ्शून्यायितान्स्मरति कच्चित्, गेहान्तरेषु बंधून्संप्रति मूर्छितान्काचिदितीति । यदा तस्य मनोभिरुचितं कैंकर्यं कर्तुं पुरस्त्रियो न जानंति तदैव तत्सुखमनुपलब्धवतीभिस्ताभिः सुखानुपलंभकारणं पृष्टो नोऽस्माकं कथां गृणीते । वनमालागुम्फने स्थासकसंपादने वीटिकानिर्माणे वीणावादने रागतालादिसृष्टौ गीतनृत्यरासादौ सौंदर्यलावण्यवैद

१ प्रियः इति पा० ।   २ 'चर्चा तु चार्चिक्यं स्थासकः' इति कोशाच्चन्दनादिनाः देहविलेपनसम्पादने इत्यर्थः ।

ग्ध्यादिषु प्रश्नोत्तरविलासे संयोगलीलायां प्रेमस्नेहमानप्रणयादिषु यथास्मद्व्रजस्था गोप्यो मां सुखयंति न तथा यूयमिति गच्छत भो यदुस्त्रियः स्वपतीनेवालमलं युष्माभिः, अहन्तु प्रातर्व्रजमेव गच्छन्नस्मीत्युक्त्वाऽत्रा गत्याऽगुरुसुगंधभुजमस्माकं मूर्ध्नि कदाऽधास्यत् धास्यति । तेन च समाश्वासितम्—भोः प्राणप्रेयस्यः सशपथमिदमहं ब्रवीमि भवतीस्त्यक्त्वा न क्वापि यास्यामि त्रिभुवनमध्ये क्वापि युष्मत्सादृश्यगंधलेशमपि नोपलब्धवानस्मीति व्यंजयिष्यति । अत्र प्रथमे पादे आर्जवं, द्वितीये स्वप्रसंगानुख्यापनेन गांभीर्यं, तृतीयचतुर्थयोर्दैन्यचापलोत्कंठा इत्ययं सुजल्पः । तदुक्तम्—"यत्रार्जवात्सगांभीर्यं सदैन्यं सहचापलम् । सोत्कंठं च हरिः पृष्टः स सुजल्पो निगद्यते ॥ " इत्येवं दशविधो दिव्योन्मादप्रभेदश्चित्रजल्पो ज्ञेयः । स च दिव्योन्मादो महाभावोत्कंठभागस्य मोहनस्य विलासविशेषो वृंदावनेश्वर्या वर्णितः । " प्रायो वृंदावनेश्वर्यां मोहनोऽयमुदञ्चति । एतस्य मोहनाख्यस्य गतिं कामप्युपेयुषः ॥ भ्रमाभा कापि वैचित्री दिव्योन्माद इतीर्यते । उद्घूर्णाश्चित्रजल्पाद्यास्तद्भेदा बहवो मताः ॥ प्रेष्ठस्य सुहृदालोके गूढरोषाभिजृंभितः । भूरिभावमयो जल्पो यस्तीव्रोत्कंठितांतिमः । चित्रजल्पो दशाङ्गोऽयं प्रजल्पः परिजल्पितः ॥ विजल्पोज्जल्पसंजल्पा अवजल्पोऽभिजल्पितः । आजल्पः प्रतिजल्पश्च सुजल्पश्चेति कीर्तितः ॥ " इति । प्रेयस्या चित्रजल्पस्य माधुरीपिपासया कृष्ण एव भ्रमररूपमधादिति केचित् । एवमेवात्र **तोषिणी**—अहो किंकिं मया प्रजल्पितं प्रष्टव्यन्न पृष्टमिति । पर्यवसाने सार्जवं सगांभीर्यं सदैन्यं सचापल्यं सोत्कंठं सगद्गदबाष्पधारं पृच्छति—अपीति । अपिः प्रश्ने । अस्य चरणत्रयमयवाक्यत्रयेणाप्यन्वयः । बत भो दूत आर्यपुत्र इति रूढ्या वृत्त्या आर्यस्य श्रीगोपेंद्रस्य पुत्र इति । तच्छब्देन स एवास्माकं वास्तवः पतिरन्यस्तु लोकप्रतीतिमात्रः बाल्यमारभ्यान्यत्रास्मदीयभावाभावादिति व्यंजितम् । तदुक्तम्—' इति गोप्यो हि गोविंद—' इत्यादिनेत्यार्जवम् । तत्र मधुपुर्यामास्त इति प्रागयं प्रश्नश्चिरात्संदेशस्याप्यनागमनान्न तु केवलतयातिदूरगुरुकुलगमनश्रवणात्, तच्छ्रवणे सति व्यग्रतया प्रथमं तदेव पृच्छ्येत न तु मानभंगीप्रसंगं लभेत, यस्मादेव व्रजनखेदनापि तन्न पृष्टम्, तदश्रवणञ्च प्रथमलब्धगायत्रीपुरश्चरणार्थगुप्त वासव्याजेन तत्प्रत्याख्यानात् । स च व्याजः शत्रुभिरतिक्रान्तभयाद्व्रजस्थानामेषां महादुःखस्य च शंकित्वादिति ज्ञेयम् । तदेवमन्यत्रागमनाज्ञानेपि सोऽयं प्रश्नस्तूपालंभात्मकं गांभीर्यं व्यनक्तीति गांभीर्यम् । ननु देवि तत्रासौ सुखमास्त एवेति चेत्तर्हि तत्रत्यान्पित्रादीन्किं स्मरतीत्यन्यत्पृच्छति—स्मरतीति । एवमग्रेऽपि व्याख्येयम् । पूर्वपूर्वस्मिन्नतृप्त्योत्तरोत्तरः प्रश्नो ज्ञेयः । तत्र पित्रादिस्मरणगर्भिततद्गृहस्मरणं पृच्छति—स मधुपुर निवासी व्रजजनैकजीवातुर्वा आर्यपुत्रः । पितुर्व्रजेंद्रस्य । गेहानिति जन्मभूमित्वादिना स्मरणयोग्यतोक्ता । बहुत्वं व्रजस्यैतस्ततो गमनेन पुत्रसुखार्थं स्थानेस्थाने विचित्रगृहनिर्माणाच्छ्रीनंदीश्वराख्ये शैल एव दिव्यप्रासादबाहु ल्याद्वा । गेहशब्देन तस्य पितृमातृतल्लालनं तत्र स्वकीयबाल्यलीलादिकमुपलक्ष्यते । बंधून् ज्ञातीनुपनंदादीन् क्वचित्कस्मिंश्चित्स्थानेऽवसरे वा स श्रीदामप्रियसखः अस्मत्प्रियनाथो वा गृणीते स्वमुखेनोच्चारयेदपि । तत्र योग्यतामाह—किंकरीणां बहुधा कृतसेवानामिति दैन्यम् । कथा इति बहुत्वं किंकरीणां बहुत्वात्प्रत्येकं कथावैचित्र्यात्स्वत एव बाहुल्याच्च । 'कथाम्' इति पाठे एकामपि । अगुरुसकाशादपि सुष्ठु गंधो यस्य तादृशं भुज मिति ध्यानविशेषेण साक्षात्प्रयुक्तोऽपि लोकरीत्या शोकशमक इव च भवतीति स्वयं भगवता विचार्य प्रचुर्यते स्म । तत्र "न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह" इति, 'नात्यंतिकं विगणयंत्यपि ते प्रसादम्' इति । साधारणभक्तेरपि ज्ञानस्य तत्फलस्य च हेयतां शुद्धमत्प्रेममाधुर्यस्य सर्वातिशयितां स्वानुभवेनैव निश्चिन्वतीनां तासां स्फुरिष्यतीति विचार्य प्रेमानुभवप्रमाणकसिद्धान्तमयस्तासां प्रतीयते ( न्यस्तः ), तथापि तासां तच्च स्फूर्तिमात्रप्रतीत्या समुत्कंठाक्लेशपरकाष्ठामाशंक्य ताभिरस्यामवस्थायामनुभूयमानो नित्यलीलारूपस्तृतीयस्त्वर्थः सत्यं शांतये स्यात्, तदनुसंधानञ्च मदुपदेशप्रभावेण भविष्यतीति विचार्यैव निर्दिष्ट इति ज्ञेयम् । तत्र 'भवती नाम्' इत्यर्द्धकं मुख्यवाक्यम् । अस्य प्रथमार्थस्त्वेवम्—मे मया भवतीनां वियोगः क्वचिदपि नहि स्यात्, तत्र हेतुः—सर्वात्मना सर्वेषामात्मना उपादानरूपेणांतर्यामिरूपेण चेति । अथ द्वितीयः—सर्वत्रैव बहिरंतश्च सदा मत्स्फूर्तेः सर्वात्मना **सर्वत्र** प्रयत्नेन सर्वथैव मया सह वियोगो नास्तीति, तदेव सदृष्टांतमाह—यथेति । तत्राहमपि भवतीनां मनआदीनि, गुणाः सौशील्यादयः मनआदीनां गुणाः सौशील्यादयः मनआदीनां गुणवृत्तय एव वाऽऽश्रयो यस्य सः तेषामेवाश्रयरूपो वा तथाभूतोऽहं तत्रतत्र सदा वसन् परिस्फुरामीत्यर्थः । अथ तृतीयः—सर्वात्मना सर्वेण प्रकाशेन वियोगो नास्ति किं त्वेकेनानेन प्रापञ्चिकप्रकटप्रकाशेनैव सांप्रतोऽयं वियोगोऽन्येन तदप्रकटप्र

---

१ प्रियः ।

काशेन न तु संयोग एवेत्यर्थः । कथं तत्राह—यथा खादीनि भूतानि स्वस्वकार्येषु वाय्वादिषु अप्रकटप्रकाशेन वर्तंत एव तथाहञ्च तत्र वर्त इत्यर्थः । किमाकारस्तत्राह—भवतीनां बुद्ध्याद्याश्रयाकारः श्यामसुंदरवेणुविलासि रूप एव सन्नित्यर्थः । एतदुक्तं भवति—वृंदावने मथुरायां द्वारकायामपि नित्यैव तस्य स्थितिः श्रूयते। तत्र वृंदावने यथा स्कान्दे—"ततो वृंदावनं रम्यं वृंदादेवीसमाश्रितम् । हरिणाधिष्ठितं तच्च ब्रह्मरुद्रादिसेवितम् ॥" इति । "वत्सैर्वत्सतरीभिश्च सदा क्रीडति माधवः । वृंदावनांतरगतः सरामो बालकैर्वृतः॥" इति । पाद्मपातालखण्डे—"अहो अभाग्यं लोकस्य न पीतं यमुनाजलम् । गोगोपगोपिकासंगे यत्र क्रीडति कंसहा ॥" इति, "यमुना जलकल्लोले सदा क्रीडति माधवः " इति च । बृहद्गौतमीये—"इदं वृन्दावनं रम्यं मम धामैव केवलम् " इत्यारभ्य, "सर्वदेवमयश्चाहं न त्यजामि वनं क्वचित् । आविर्भावस्तिरोभावो भवेन्मेत्र युगेयुगे ॥ तेजोमयमिदं रम्यम दृश्यं चर्मचक्षुषा ।" इति । श्रीगोपालतापनीश्रुतौ—"गोविन्दं सच्चिदानंदं वंदावनभूरुहतलासीनं सततं समरुद्गणोहं परया स्तुत्या परितोषयामीति जन्मजराभ्यां भिन्नः स्थाणुरयामच्छेद्योयं योऽसौ सौर्ये तिष्ठति योऽसौ गोषु तिष्ठति योऽसौ गाः पालयति योऽसौ गोपेषु तिष्ठति" इत्यादि । मथुरायां यथाऽऽदिवाराहे—"अहोऽतिधन्या मथुरा यत्र सन्निहितो हरिः" इति । पाद्मपातालखंडे—"अहो मधुपुरी धन्या यत्र तिष्ठति कंसहा" इति । वायुपुराणे—"चत्वारिंशद्योजनानां ततस्तु मथुरा स्मृता । यत्र देवो हरिः साक्षात्स्वयं तिष्ठति सर्वदा ॥" इति । गोपालतापनीश्रुतौ—"संप्राप्य मथुरां रम्यां सदा ब्रह्मादिसेविताम् । शंखचक्रगदाशार्ङ्गै रक्षितां मुशलादिभिः ॥ यत्रासौ संस्थितः कृष्णस्त्रिभिः शक्त्या समाहितः । रामानिरुद्धप्रद्युम्नै रुक्मिण्या सहितो हरिः ॥ " इति । अत एवोक्तम्—"मथुरा भगवान्यत्र नित्यं सन्निहितो हरिः" इति । द्वारकायां यथैकादशस्कंधांते—"द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत्क्षणात् । वर्जयित्वा महाराजश्रीमद्भगवदालयम् ॥ नित्यं सन्निहितस्तत्र भगवान्मधुसूदनः । स्मृत्याशेषाशुभहरं सर्वमंगलमंगलम् ॥" इति । अत्र श्रीविष्णुपुराणे त्वयं विशेषः—'यदुदेवगृहं त्वेकं नाप्लावयत्' इति, 'कृष्णक्रीडाकरं स्थानम्' इति च, सर्वत्र 'जयति जननिवासः' इत्यादिकमुदाहरणीयमत एव तस्य नित्यैव तत्र स्थितिर्वर्तते । अथ च जन्मादिलीलायां गमनत्यागौ श्रूयेते इति प्रकाशभेदेनैवोभयविधत्वं व्यवतिष्ठते । तथाहि—'न चांतर्न बहिर्यस्य' इत्यादिदामोदरलीलादृष्ट्या मृद्भक्षणलीलादौ । श्रीव्रजेश्वर्यादीनां तथानुभूत्या च श्रीकृष्णविग्रहस्य मध्यमत्व एव विभुत्वं दृश्यते । तच्च विरोधिधर्मद्वयमेक एतास्मिन्नासंभवमचिंत्यशक्तित्वात्, तस्य च 'श्रुतेश्च शब्दमूलत्वात्' इत्येतन्न्यायसंमतत्वात् । तदेवं विभुत्वे सति युगपदनेकस्थानाद्यधिष्ठानार्थं रूपांतरसृष्टिः पिष्टपेषिता, किन्तु युगपन्मध्यमत्वविभुत्वप्रकाशिकया तयैवाचिंत्यशक्त्या तदिच्छानुसारेणैक एव श्रीविग्रहोऽनेकधा प्रकाशते बिंब इव स्वच्छोपाधिभिः, किन्तु तत्रोपाधिमात्रजीवनत्वेन साक्षात्स्पर्शाद्यभावेन वैपरीत्यनियमेन विश्वस्य परिच्छिन्नत्वेन च प्रतिबिम्बत्वम्, अत्र तु स्वाभाविकशक्तिस्फुरितत्वेन साक्षात्स्पर्शादिभावेन यथेच्छमुदयेन तद्विग्रहस्य विभुत्वेन च बिंबत्वमेवेति विशेषः । तत्र तेषां प्रकाशानां तयैवाचिंत्यशक्त्या पृथक्पृथगेव क्रियादीनि भवन्ति, अत एव युगपदाविर्भूतानां प्रकाशभेदालंबिनीनां निमेषोन्मेषादिक्रियाणामविरोधः, अत एव विभोरपि परस्परविरोधिक्रियागुणाश्रयस्यापि तत्तत्क्रियाकर्तृत्वं यथार्थमेव, तद्यथार्थत्वे बहुशः श्रीभागवतादिवर्णितं विदुषां तदुद्भवं सुखं नोत्पद्यत इति तदन्यथानुपपत्तिश्चात्र प्रमाणम् । इदमेवाभिप्रेत्य भगवता नारदेन "चित्रं बतैकतदेकेन वपुषा युगपत्पृथक्" इत्यादौ वपुष एकत्वेऽपि पृथक्प्रकाशत्वमुक्तम् । तेषु प्रकाशेषु पृथक्पृथक्क्रियाधिष्ठानात्वं तादृशमुन्यादावपि न संभवतीति चित्रत्वं च । वक्ष्यते च एष एव प्रकाशः क्वचिदात्मशब्देन क्वचिद्रूपादिशब्देन च । यथात्रैव 'न हि सर्वात्मना क्वचित्' इति, अन्यत्र 'कृत्वा तावंतमात्मानम्' इति, 'तावद्रूपोहमव्ययः' इति, 'कृष्णेनेच्छाशरीरेण' इति च । तत्र नानाक्रियाद्यधिष्ठातृत्वादेव लीलारसपोषाय तेषु प्रकाशेष्वप्यभिमानभेदं परस्परमननुसंधानञ्च प्रायः स्वेच्छयांगीकरोति भगवानित्यपि गम्यते । एवं तच्छक्तिमयत्वात्तत्परिकरेष्वपि ज्ञेयम् । तत्र तेष्वपि प्रकाशभेदो यथा कन्याषोडशसहस्रविवाहे श्रीवसुदेवदेवक्यादिषु, वक्ष्यते च टीकाकृद्भिः । अनेन देवक्यादिबंधुजनसमाजोऽपि प्रतिगृहं यौगपद्येन सूचित इति तेषु श्रीकृष्णे च प्रकाशभेदादभिमानभेदो यथा नारददृष्टयोगमायावैभवे ॥ तत्र सौरभमनुभजंतीवोत्कंठावेशं द्योतयति—मूर्ध्न्यधास्यदिति दैन्यात् किंकरीत्वमेवं सर्वविघ्ननिवारणपूर्वकं धास्यतीत्यर्थ इति चापलम् । कदेति—तत्रानिश्चयेन परम वैकल्यं सूचयति । अत्रापि वितर्के । नु शब्दो विचारतोप्यनिश्चयं सूचयतीति परमोत्कंठा दर्शिता । पूर्वमार्यपुत्र इत्युक्त्या च स्वस्य तद्वधूत्वं स्थापयित्वा संप्रति किंकरीत्वस्थापनप्रार्थना दैन्यादेव, तात्पर्यन्तु तद्वधूत्व एव यथा 'नंदगोपसुतं देवि' इति संकल्प्यापि 'श्यामसुंदर ते दास्यः' इति कुमारीभिरुक्तन्तद्वत्, 'तस्याहं गृहमार्जनी' इत्यादिकालिंद्यादिवचनवच्च । अन्यत्तैः । यद्वा—बत खेदे, अधुनापि मधुपुर्यामास्ते किम्, एतावन्तं

श्रीशुक उवाच ॥ अथोद्धवो निशम्यैवं कृष्णदर्शनलालसाः ॥ सांत्वयन्प्रियसंदेशैर्गोपीरिदमभाषत ॥ २२ ॥ उद्धव उवाच ॥ अहो यूयं स्म पूर्णार्था भवत्यो लोकपूजिताः ॥ वासुदेवे भगवति यासामित्यर्पितं मनः ॥ २३ ॥ दानव्रततपोहोमजपस्वाध्यायसंयमैः ॥ श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ॥ २४ ॥ भगवत्युत्तमश्लोके भवतीभिरनुत्तमा ॥ भक्तिः प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभा ॥ २५ ॥ दिष्ट्या पुत्रान्पतीन्देहान्स्वजनान्भवनानि च ॥ हित्वाऽवृणीत यूयं यत्कृष्णाख्यं पुरुषं परम् ॥ २६ ॥

श्रीकृष्णदर्शनोत्सुका गोपीः प्रियस्य संदेशैः सांत्वयन् प्रथमं तावदिदमभाषत ॥ २२ ॥ तदाह षड्भिः । अहो इति । स्म नूनं यूयं पूर्णार्थाः कृतार्थाः ॥ २३ ॥ श्रेयोभिः श्रेयःसाधनैः ॥ २४ ॥ अनुत्तमा अतिश्रेष्ठा सर्वोत्कृष्टेत्यर्थः । सा भवतीभिः प्रवर्तितेति ॥ २५ ॥ अवृणीत वृतवत्यः ॥ २६ ॥

कालं तत्र स्थातुं नार्हति किन्तु शीघ्रमागन्तुमर्हतीति भावः । सौम्याश्च ते बंधवश्च तान् । अतिसुप्रकृतित्वादिना स्मरणयोग्यतोक्ता॥२१॥ अथ भ्रमरगीताकर्णनोत्तरम् । एवं भ्रमरमुद्दिश्य गीतम् । इदं वक्ष्यमाणम् ॥ * ॥ एवं पूर्वोक्तप्रकारं साक्षात्परंपरयाप्यश्रुतचरप्रेमवचनं निशम्य,अथ प्रेमविकारशान्तेरनंतरं सांत्वयन्सांत्वयितुमिदं श्रीकृष्णैश्वर्यं तत्प्रेममाहिमज्ञापनमयतया तादृशप्रेमविकारस्तंभनाय तासां श्लाघामयतया दैन्यशमनाय च तथा वक्ष्यमाणं प्रयुक्तमन्यथा श्रवणाशक्तेः गोपीसंभ्रमेण श्रीराधां साक्षादसंभाष्यमाणां श्रावयन्नन्याः॥२२॥तद्वक्ष्यमाणम् । इतिशब्दो हेतौ, यतो वासुदेवे मनोर्पितमिति हेतोः ॥ * ॥ ० ॥२३॥ शास्त्रतो नियमकरणं व्रतम्,स्वाध्यायो वेदाभ्यासः, संयम इन्द्रियनिग्रहः । अन्यैस्तीर्थाटनसत्संगादिरूपैः । विशेषेण विधिर्येषां संध्याग्निहोत्रादीनां ते विविधाः "अच् प्रत्यन्वव–" इत्यत्राजिति योगविभागादच् । "अहरहः संध्यामुपासीत" "यावज्जीवमग्निहोत्रं जुहुयात्" इत्यादिश्रुतिभिः । अन्यैरित्युक्तेर्विविधपदवैय्यर्थ्यशंकावारणायायमर्थः॥*॥तदेव कैमुत्येन प्रतिपादयति–दानेति। दानाद्यात्मकानि यानि श्रेयांसि।अन्यैश्च योगसांख्यज्ञानादिभिः कृष्णेर्पितैस्सद्भिः 'नैष्कर्म्यमप्यच्युतभाववर्जितम्' इत्याद्युक्तेः । कृष्णे स्वयं भगवति भक्तिः श्रवणादिरुचिमात्रं साध्यते " स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे " इति, 'धर्मः स्वनुष्ठितः पुंसां विष्वक्सेन–' इत्यन्वयव्यतिरेकाभ्याम् । तत्र दानं विष्णुवैष्णवसम्प्रदानकम्, व्रतमेकादश्यादि, तपः कृष्णार्थे भोगत्यागादि, होमो विष्णुमंत्रैः, जपोऽष्टादशाक्षरादीनाम्, स्वाध्यायो गोपालतापन्यादिपाठः, संयमः कृष्णेतरेभ्यो मनोनिवृत्तिरिति । श्रेयांसि भक्त्यंगानि ज्ञेयानि, अन्येषां दानादीनां भक्तिहेतुत्वाभावस्य प्रतिपादितत्वात् ॥ २४ ॥ दुर्लभेति भक्तेरवश्यकर्तव्यतामाह ॥ * ॥ भवतीनां तु महाभावात्मिका भक्तिर्नित्यसिद्धैव, ततः सा किं श्लाघ्या, किन्तु तच्छिक्षया लोकानां भाग्यमेव श्लाघ्यमित्याह–भवतीभिर्भगवति सर्वनिजैश्वर्यप्रकटके अत उत्तमश्लोके तास्मिन्ननुत्तमा सर्वतोपि श्रेष्ठा महाप्रेमलक्षणा प्रवर्तिता स्वदर्शनश्रवणप्रभावेण लोकेषु प्रचारितेतिवत् । यथा वक्ष्यते–' सर्वात्मभावोऽधिकृतः ' इत्यादि, यथा च प्रोचे–' विक्रीडितं व्रजवधूभिः ' इत्यादि, एतद्दिष्ट्या भद्रं जातमित्यर्थः ॥ **विश्वनाथस्तु**–प्रागियं नासीदतः परं तु भवतीनां रागात्मिकां भक्तिमनुसृत्यैव रागात्मिका भक्तिः क्रियमाणा लोके प्रचरिष्यतीत्यर्थः । प्रवर्तितेति " आशंसायां भूतवच्च " इति भविष्यति निष्ठा । दिष्ट्या लोकानामतिभाग्येन ॥ २५ ॥ यत्कृष्णाख्यं पुरुषमवृणीत तद्दिष्ट्येति योज्यम् ॥ * ॥ भक्तिप्रवर्तनरीतिमेव स्पष्टयति–यद्यस्मात्पुत्रादर्स्ति तत्नमन्यान्निजकृष्णैकालंबनस्वाभाविकभावबलेन हित्वाऽवस्तुबुद्ध्या परित्यज्य कृष्ण इत्याख्या ख्यातिर्यस्य तं परं पुरुषं नराकृतिपरब्रह्मरूपं यूयमवृणीत वास्तवकांततया स्वीकृतवत्यस्तद्दिष्ट्या भद्रं, लोकानां महद्भाग्यमित्यर्थः । भवतीनां तादृशाचारितं

सर्वात्मभावोऽधिकृतो भवतीनामधोक्षजे ॥ विरहेण महाभागा महान्मेऽनुग्रहः कृतः ॥ २७ ॥ श्रूयतां प्रियसंदेशो भवतीनां सुखावहः ॥ यमादायागतो भद्रा अहं भर्तू रहस्करः ॥ २८ ॥ श्रीभगवानुवाच ॥ भवतीनां वियोगो मे नहि सर्वात्मना क्वचित् ॥ यथा भूतानि भूतेषु खं वाय्वग्निर्जलं मही ॥ तथाहं च मनःप्राणभूतेंद्रियगुणाश्रयः ॥ २९ ॥

सर्वात्मभाव एकांतभक्तिः । अधिकृतः प्राप्तः । भगवत्प्रेमसुखप्रदर्शनेन ममैव महाननुग्रहः कृत इति ॥ २७ ॥ भर्तुः कृष्णस्य रहस्करो रहस्यकार्यकर्ता ॥२८॥ भवतीनां मे मया सह वियोगो नास्ति । कुतः । सर्वात्मना सर्वस्योपादानकारणेन । अत एव सर्वेषु मनआदिकार्येष्वहमनुगतत्वेन स्थित इति सदृष्टांतमाह । यथेति । भूतेषु चराचरेषु महाभूतानि । वाय्वग्निर्वायुसहितोऽग्निः वायुश्चाग्निश्चेत्यर्थः । यथा तथाऽहं चेति । मनआदीनि कार्याणि गुणाः कारणं तेषामाश्रयत्वेनानुगत इत्यर्थः ॥ २९ ॥

दृष्ट्वा श्रुत्वा चान्ये तथा प्रवर्तेरन्निति ॥ विश्वनाथस्तु–पुत्रादीन्ममताहंतास्पदान् यद्वृणीत स्वभोक्तृत्वेन तन्ममातिभाग्यम्, ईदृक्प्रेमवतीदर्शनादिति भावः ॥ २६ ॥ विरहेणेत्यस्यैवायं प्रपञ्चः भगवत्प्रेमसुखदर्शनेनेति ॥ * ॥ ननु वयं यद्धर्मं त्यक्त्वा परपुरुषं वृतवत्यस्तत्र भवतः किं भाग्यमभूदत आह–सर्वात्मेति । अधोक्षजेऽन्यैः प्रत्यक्षीकर्तुमप्यशक्ये श्रीकृष्णे प्रेमैव तावद्दुर्लभः, भवतीनां सर्वात्मभावः सर्वात्मना सर्वेणैव स्वरूपेण सहितः परिपूर्णो यो भावः स महाभाव इत्यर्थः । सूर्यो यथा सर्वांस्तापसंक्रमणेन व्याप्नोति, चन्द्रो यथा सर्वाञ्शैत्यसंक्रमणेन व्याप्नोति तथा यः सर्वान्स्वधर्मसंक्रमणेनातति व्याप्नोतीति सर्वात्मा स चासौ भावश्चेति स इति श्लेषेण तल्लक्षणमपि प्रकटीकृतम् । यदुक्तम्–" अनुरागः स्वसंवेद्यदशां प्राप्य प्रकाशितः । यावदाश्रयवृत्तिः स्याद्भाव इत्यभिधीयते ॥ " इति । स च महाभावः प्रेम्णः सप्तमो विलासः । भवतीनां न त्वन्यासां लक्ष्म्यादीनामपीत्यर्थः । यदि कीदृशः–अधिकृतः अधिकारविषयीकृतः । तत्राधिकारो भवतीभ्य एव परमेश्वरेण दत्तो नान्याभ्य इति भावः । अत एव विरहेण कर्त्रा मे मम महाननुग्रहः कृतः दिव्योन्मादचित्रजल्पादिमहाभावभेदान्दर्शयित्वेत्यर्थः । यदि भवतीनां विरहो नाऽभविष्यत्तदा कृष्णो मां न प्रास्थापयिष्यत्, अहं चैतदाश्चर्यं नाद्राक्ष्यामिति स्वभाग्यपरावविरुक्त इति **विश्वनाथः** ॥ भवतीनां तु सर्वात्मना परिपूर्णत्वेन यो भावो महाभावपर्यन्तदशां प्राप्तः प्रेमा यस्त्वधो क्षजेऽपि कृतः अधिकारितया प्रवर्तितस्तद्दृशाकारीत्यर्थः । अतः सोऽपि भवतीनां न दूर इति भावः । किन्तु मह्यमेतादृशप्रेममहिमदर्शनार्थमेवैतद्भवतीष्वभ्युदितमिति मन्यतामित्याह–विरहेण कर्त्रेति पूर्ववदिति **क्रमसंदर्भः** ॥ **तोषिण्यपि**–तस्मिन्सर्वात्मभावः " आततत्वाच्च मातृत्वादात्मा हि परमो हरिः " इति न्यायेन सर्वत्र स्फुरति, स भवतीष्वेकदर्शनाद्भवतीभिरेव क्रियत इत्यर्थः । अतः सोऽपि भवतीनां न दूर इति भावः । अत एव हे महाभागास्ततो विरहो नामायं बहिरंग एवेति न तत्रांतःकरणवेशो युज्यत इति, किन्तु मह्यमेतादृशप्रेममहिमेति पूर्ववत् ॥ २७ ॥ इदानीं कृष्णसंदेशं वक्तुमुपक्रमते–श्रूयतामिति । यं संदेशम् ॥ * ॥ एवमाश्वास्य किञ्चित्स्वास्थ्यमुपलभ्य वक्तव्यमाह । यद्वा–तथापि कैवल्यहासमदृष्ट्वा व्यग्रः संस्तत्संदेशेनैव स्वास्थ्यं भवतीति संभाव्य तमेव वक्तुमारभते–श्रूयतामिति । प्रियस्य संदेशः । ननु तेन संदेशेनालं येनाशु तत्प्राप्तिर्न स्यात्तत्राह–भवतीनां परमोत्कंठितानां सुखावह आश्वेव तत्प्राप्तिनिर्धारणात् । तदर्थमेवात्रागतोस्मि न त्वन्यार्थमिति तस्मिन्नादरं जनयति–यमिति । ' अन्यथा गोव्रजे तस्य ' इत्यादिकमनेन प्रत्युत्तरितम् । भर्तुरित्यात्मनस्तद्दूतत्वं बोधितम् । तत्र च रहस्कर इत्यात्मनः परमाप्तत्वेन तत्संदेशदानयोग्यत्वम्, तथा संदेशस्य गोप्यत्वम् । किञ्च–भद्रा हे साध्व्य इति तासामेव तत्संदेशैकपात्रत्वं, तथा संदेशस्यापि भद्रत्वमादरार्थं सूचितम् ॥ **विश्वनाथस्तु**–ननु किमस्मच्छ्लाघयैतया चास्मान्सांत्वयितुं त्वमिहायतः किञ्चिदस्ति वा कृष्ण संदेशादिकमस्मद्दुःखोपशमकं तद् ब्रूहीत्यत आह–श्रूयतामिति । भर्तुः कृष्णस्य । रहस्करो रहस्यकार्यकर्ता ॥ २८ ॥ अवियोगे हेतुमाशंकते–कुत इति । अत एव सर्वोपादानत्वादेव । उपादानकारणत्वं सदृष्टा

न्तमाह—यथेति । अनुगतानि कानि—भूतानीत्यत आह—खमित्यादि । इत्यर्थ इति—कारणस्य मृदादेः कार्येषु घटादिष्वनुगतत्वप्रसिद्धेरिति भावः ॥ * ॥ अत्र प्रथमो ज्ञानोपदेशरूपः परमविज्ञान्प्रति तत्प्रेम्णोऽन्या धर्षणयिमहाबलवत्त्वज्ञापनार्थकः, मंदधियः प्रति तत्प्रेममाहात्म्याच्छादनार्थकश्च । तथाहि—मया गोपीभ्यो दातुमुद्धवद्वारा ज्ञानामृतं प्रेषितं तदपि तासां प्रेमाग्निं निर्वापयितुमसमर्थं प्रत्युत तत्तापेनैवालीढं बभूवेत्यहो तासां प्रेमप्राबल्यं यन्महायोगेश्वरेण मयाप्युपदिष्टो ज्ञानयोगो वैय्यर्थ्यमगात्तथा रासारंभे कर्मयोग इत्यंतरंगविज्ञभक्तान् प्रेम्णः प्राबल्यं प्रकाशयामास, तथा महाप्रेमवतीष्वपि गोपीषु सर्वहितकारिणा परमेश्वरेण मोक्षसिद्ध्यर्थं ज्ञानोपदेशः कृत इत्यन्यान्पंडितंमन्यान्मंदधियः प्रति प्रेम्णो माहात्म्यमाच्छादयामास परमरहस्यत्वादिति । एवं भक्तविबुधान्प्रेमामृतस्य प्रदानेन पुष्णात्यभक्तासुरांस्त्वप्रदानेन वंचयतीत्युभयमेव मोहिनी सधर्मणः शास्त्रस्याऽस्य प्रयोजनं ज्ञेयम् । अथ प्रकृतमनुसरामः—भगवानुवाचेत्युद्धववाक्यम् । तत्रोवाचेति लिटो महाप्रेमवतोऽपि मत्प्रभोरेतादृशवचनस्य प्रयोजनं मम दुर्गमत्वात्परोक्षमेवेति ज्ञापितम् । भवतीनां मे मया सह वियोगो नास्त्येव, कथं रुदित्वारुदित्वा मर्तुमीहध्व इति भावः । कुतः—सर्वेषामात्मना परमात्मना, अहं हि परमात्मा भवाम्यत्र सर्वशास्त्राणि सर्वे गर्गादयो मुनयश्च वरुणादयो देवाश्च प्रमाणम्, तस्मात्परमात्मरूपेण भवतीनां देहेष्वहं वर्त एवेत्यतो मया सह सदा संयोग एव भवतीति भावः । अत्र च यथा रासारंभे धर्मोपदेशवाक्येष्वप्याभ्यंतरी शृंगारकथा स्वोपालंभेन दोषनिवृत्त्यर्था स्थापिता । तथाहि—दिनांतरे भोः कृष्ण कामुकशिरोमणे त्वया रासकेलिदिने कथमस्मासु धर्मोपदेशः कृत इति प्रेयसीभिः सोपालंभमुक्ते सति भो अविदुष्यः मया तु तद्दिने संभोगमकृत्वोपदेश एव कृतः कथं मुग्धाभिर्भवतीभिर्धर्मोपदेश एवावधारित इत्युक्त्वा 'रजन्येषा घोररूपा' इत्यादिवाक्यानां संभोगकथारूपं द्वितीयमर्थं कृष्णो व्याचष्ट स्म । तथैव सुदूरप्रवासान्ते भाविनि संयोगे—भोः प्राणनाथ कथमस्मासु महाविरहिणीषूद्धवद्वारा त्वया ज्ञानोपदेशः कृत इत्युक्त्वा 'भवतीनां वियोगो मे' इत्यादिवाक्यानां द्वितीयं प्रेमरीतिमयमर्थं व्याख्यास्यतीत्यत एतेषु वाक्येषु वर्तमान एवेति द्वितीयः प्रेमरीतिमयोऽर्थो व्याख्येयः । स यथा भवतीनां मया सह विरहो न सर्वे णात्मना किं त्वेकेन देहेनैव, आत्मशब्दस्य देहजीवमनोबुद्धिवाचित्वात्, प्रेमा ह्यात्मधर्म एव ममात्मबुद्धींद्रियादयो भवतीष्वेव स्थिता देह एव मया मथुरामानीतः, भवतीनामप्यात्ममनोबुद्धींद्रियादयो मय्येव वर्तंते केवलं देहा एव तत्र व्रजे स्थिताः, किन्त्वहं सर्वशास्त्रेषु सर्वैः प्रेमाधीन एव निरूपितोऽत एव प्रेम्णि मम नास्ति स्वातंत्र्यम्, प्रेमवतामस्माकं परस्परं देहविच्छेद एव विप्रलंभस्तमारुह्य प्रेमा संप्रत्यतिवार्धितुमिच्छत्यतो मया सोत्कंठेनापि स्वदेहः सांप्रतं कथं व्रजमानेतुं शक्यः,किन्तु स एव प्रेमा स्वाभीप्सितां वृद्धिं प्राप्य विप्रलंभं द्रवयित्वा यदा संभोगभूमिकामारोक्ष्यति तदैव तदधीनेन स्वदेहो व्रजमानेतव्य इति देहेनापि वियोगोऽपयास्यतीति भावः । किन्त्वह मुपादानकारणत्वादपि सर्वभूतेषु वर्त एवेत्याह—यथेति । भूतेषु चराचरेषु, भूतानि महाभूतानि, तान्येव कानीत्यत आह—खमिति । वाय्वग्निर्वायुसहितोऽग्निः यथा वर्तते तथाह—मनआदीनि कार्याणि गुणास्तेषां कारणम् सर्वेषामपि परमकारुण्येनाश्रयः, तत्रतत्रानुगतो वर्त एवेत्यर्थः । पक्षे मां सदा प्रेम्णा ध्यायन्तीनां भवतीनां मनःप्राणबुद्धींद्रियगुणाञ्शब्दादींश्चाश्रयामीति सः । आश्रित्य तत्रतत्र स्फुरन्नेवाहं सदा वर्त इत्यर्थः ॥ **तोषिण्यां** तु—तत्र च श्रीभगवानुवाचेति—तत्तदक्षरैरेवाहं तद्वक्ष्यामीति भावः । तत्र च सुतोहं किलविलपितिवाह्लिटा परोक्षनिर्देशः । तदर्थन्तु नाहं विवेक्तुं शक्नोमि किन्तु भवत्य एव विचारयंत्विति व्यनक्ति । तथैव भवतीनामहमित्यादि, तत्रापातप्रतीतो ज्ञानरूपः प्रथमार्थो रहस्यार्थांतरगोपनाय, तत्र ह्येकत्र " दीव्यंतमक्षैस्तत्रापि प्रियया चोद्धवेन च । पूजितः परया भक्त्या प्रत्युत्थानासनादिभिः ॥ " इति । तत्रान्यत्र "मन्त्रयन्तञ्च कस्मिंश्चिन्मंत्रिभिश्चोद्धवादिभिः " इति । तत्र भावभेदादभिमानभेदो लक्ष्यते—अयमेतदवस्थोस्मीति । एवं षोडशसहस्रकन्याविवाहे कुत्रचिच्छ्रीकृष्णसमक्षं कर्म कुर्वत्यास्तद्दर्शनसुखं भवति, तत्परोक्षं तद्दर्शनोत्कंठेति । यथा योगमायावैभव एव क्वचिदुद्धवेन संयोगः क्वचिद्वियोग एव इति विचित्रता । तदेवं तत्र प्रकाशभेदे सति तद्भेदेनाभिमानक्रियाभेदे चावस्थिते सति । स च प्रकाशो द्विविधो ज्ञेयः । प्रकटोऽप्रकटश्च । तत्र प्रकटः प्रापञ्चिकेष्वभिव्यक्तिः, अप्रकटस्तेष्वनभिव्यक्तिः । तत्र पूर्वमष्टादशेऽध्याये यो गोलोकतया दर्शितः श्रीवृंदावनस्यैव प्रापञ्चिकेष्वप्रकटप्रकाशविशेषस्तत्र तदानीमपि स्थितेन श्रीकृष्णस्याप्रकटोत्थेन प्रकाशविशेषेण तासामप्यप्रकट प्रकाशैः संयोगः श्रीवृन्दावनप्रकटप्रकाशे प्राक्स्थितेन संप्रति मथुराप्रकटप्रकाशं गतेन श्रीकृष्णस्य प्रकटप्रकाशेन तु तासां प्रकटप्रकाशैर्वियोग इति तदेव सदृष्टान्तमाह—यथेति । तत्र प्रथमार्थे खं वाय्वग्निर्जलं महीति खादीनि भूतानि, यथा भूतेषु वाय्वादिपार्थिववस्त्वंतरेषूपादानतयानुगतानि तथाहं सर्वेष्वित्यर्थः । अथ द्वितीयः—यथा भूतानि भूतेषु कार्यरूपेषु भूतानि कारणरूपाण्याश्रयत्वेन वर्तंते तथाहमपि भवतीनां ये मनआदयो

**आत्मन्येवात्मनात्मानं सृजे हन्म्यनुपालये ॥ आत्ममायानुभावेन भूतेंद्रियगुणात्मना ॥ ३० ॥**

**ननु कारणत्वे सर्वानुगतत्वे च कार्यकारणभेदः स्यादत आह । आत्मन्येवेति । ननु नित्यसिद्धस्य कुतः सृष्ट्यादिरूपता अत आह । भूतेंद्रियगुणात्मना । बुद्धींद्रियेति वा पाठः । तद्रूपेणेति । ननु निर्विकारस्य कुतस्तद्रूपतेति तत्राह । आत्ममायानुभावेनेति ॥ ३० ॥**

गुणाश्च धैर्यादयस्तेषां मत्स्फूर्त्येकजीवनानामाश्रय इत्यर्थः । अथ तृतीयः—तत्कथं तत्राह—यथा खादीनि भूतानि स्वस्वकार्येष्वप्रकटप्रकाशेन वर्तंत एव तथाहं तत्र वर्त इत्यर्थः । किमाकारस्तत्राह—भवतीनां मनआद्याश्रयाकारः श्यामसुंदरवेणुविलासरूप एव सन्नित्यर्थः ॥ २९ ॥ भगवतः "एको देवः सर्वभूतेषु गूढः" इत्यादिश्रुतिसिद्धमेकत्वमाक्षिप्य समाधत्ते—नन्वित्यादिना । अतोऽत्राक्षेरे । पुनराशंकते—नन्विति । भूतादिरूपेण आत्मनीति । एतेन कार्यकारणसाधनाधारत्वं स्वस्यैवोक्तम् । पाठान्तरे गुणशब्देन भूतग्रहणमपि । किंत्विन्द्रियपदेनैव बुद्धेर्ग्रहात्पूर्वपाठो मम सम्यग्भातीति । तद्रूपेणेति—बुद्ध्यादिरूपेण । भूतादिरूपत्वे शंकते—नन्विति । आत्मनो मायानुभावेनाचिंत्यशक्तिप्रभावेण ॥ * ॥ आत्मन्येवेति । तत्र प्रथमार्थः—नन्वेकस्योपादानत्वमंतर्यामित्वञ्च दुर्घटं घटादौ मृत्तिकादेरंतर्यामित्वसंभवात्मतान्तरेप्युपादानरूपाणां परमाणूनामचेतनानामन्य एवेश्वरश्चेतनो नियामकस्तत्राह—आत्मन्येवेति । आत्मन्येवाधिष्ठाने । आत्मना निमित्तरूपेणात्मानमुपादानरूपं भूतेन्द्रियगुणात्मना भूतरूपेणेंद्रियरूपेण गुणरूपेण जीवरूपेण च सृजामि प्रकटयामि । 'बुद्धींद्रिय—' इति पाठे भूतान्युपलक्षणीयानि । न त्वात्मा खल्वेक एव तस्याधिष्ठानादित्वं युगपत्कथं सिद्ध्यतीत्याशंक्य सर्वाशंकानिरासार्थमाह—आत्ममायानुभावेनाचिंत्यशक्तिप्रभावेण । 'श्रुतेस्तु शब्दमूलत्वात्' इति न्यायेन चिन्तामण्यादिष्वपि तादृशत्वदर्शनेन चेति भावः । द्वितीयो यथा—ननु सत्यमस्मासु तथैव त्वं स्फुरसि त्वयि तु न वयं, संयोगो नाम च स्वप्राप्तिव्यातिरिक्तो मिथो मेलनमेव तत्राह—आत्मनि चित्ते निर्विकारेप्यात्मना मनसा संकल्पविकल्पात्मकेनात्मानं प्रयत्नं भवत्संयोगविलासात्मकमेकं सृजे करोमि "आत्मा देहमनोबुद्धिस्वभावधृतिब्रह्मसु । प्रयत्ने च" इति विश्वप्रकाशः । न केवलं सृजेऽनुपालयामि चिरकालं व्याप्य संवर्धयामि च तथा हन्मि विलासांतरार्थं तं दूरीकरोमि च, एवमन्यमपि जानीतेत्यर्थः । कीदृशेनात्मना—आत्मनः स्वस्य मायाया यदा भवतीषु, यद्वा—अत्मनि स्वस्मिन्भवतीनां वा माया ( दया ) तस्या अनुभावः प्रभावो यत्र तादृशेन । पुनः कीदृशेन—भूतानि सिद्धानि साक्षात्स्थितान्येव इन्द्रियाणि चक्षुरादीनि गुणा रूपादयः आत्मनोऽहंकारास्पदानि यत्र तादृशेन । 'बुद्धी—' इति पाठे ननु मनोरथमात्रमिदं भवतः कथं सत्यं स्यात्तत्राह—बुद्धिगुणा विकारादय इंद्रियगुणा दर्शनादयश्चात्मनस्तदात्मतां प्राप्ता यत्र तादृशेन विचारसिद्धप्रत्यक्षसंवलितेनेत्यर्थः । तस्मादुभयानुभवाद्बहिः प्रातीतिकोयं वियोगो नादरणीय इति भावः । तृतीयो यथा—प्रकाशः कथं संभवति तत्राह—आत्मनि विग्रह स्वरूपेधिष्ठाने आत्मना तेनैव करणभूतेनात्मानं तत्प्रकाशविशेषं सृजे 'तदाऽऽत्मानं सृजाम्यहम्' इतिवदाविर्भावयामि । अनुपालयेऽभीष्टलीलापर्यंतं रक्षामि । हन्मि तदवसानेंतर्द्धापयामि । ननु कथं तेनैव सृजसि तत्राह—आत्ममायाऽचिंत्यशक्तिस्तस्या अप्यनुभावो यत्र तादृशेन तेन । पुनः कीदृशेन—भूतानि नित्यसिद्धानि, इंद्रियाणि गुणा रूपादयश्चात्मा स्वरूपं च यस्य तादृशेन । 'बुद्धी—' इति पाठे बुद्ध्योंतःकरणानि इंद्रियाणि च गुणाश्चात्मनः स्वरूपभूतान्येव यत्र तादृशेन । अतस्तत्रतत्र प्रकाशमात्रमेव स्यान्न तु विकार इति भावः ॥ **विश्वनाथस्तु**—किञ्चाहमेव कर्ताऽधिकरणं कर्म चेत्याह—आत्मन्यधिष्ठाने आत्मनैव करणेनात्मानमेव जगद्रूपं सृजे सृजामि । ननु त्वं सच्चिदानंदरूपः जगदिदं ततो भिन्नं प्रतीयते तत्राह—आत्मनो मम या शक्तिस्तस्या अनुभावः कार्यं तेन भूताद्यात्मना सृजामि, तस्या मद्बहिरंगशक्तित्वाज्जगतोऽस्य मद्रूपत्वं न तु मत्स्वरूपत्वमिति भावः । पक्षे भवतीनामात्मनि मनसि आत्मना प्रयत्नेनात्मानं स्वं सृजाम्याविर्भावयामि, संभोगादिलीलार्थं मुहूर्तमनुपालयामि, ततो

## आत्मा ज्ञानमयः शुद्धो व्यतिरिक्तोऽगुणान्वयः ॥ सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्तिभिरीयते ॥ ३१ ॥

नन्वात्मनो भूतादिरूपत्वे तद्दोषप्रसंगः स्यात्तत्राह । आत्मेति । आत्मा तु शुद्धः । कुतः। अगुणान्वयः न गुणेष्वन्वेतीति तथा।तत्कुतः।व्यतिरिक्तः।तदपि कुतः।ज्ञानमयो ज्ञान स्वरूपः । नन्वहंप्रत्यये स्वसंवेद्यमेवात्मनो नानावस्थावत्त्वमिति कुतस्तस्य शुद्धतेति तत्राह । सुषुप्तीति । मायाकार्यमनोवृत्तिभिर्विश्वतैजसप्राज्ञरूपेण प्रतीयते । न

हन्म्यंतर्द्धापयामि । केन प्रयत्नेन—आत्ममायाप्रभावेण, मम योगमायाप्रभाव एव मम प्रयत्न इति भावः । आत्मानं कथंभूतम्—भूतान्यंगानि इंद्रियाणि गुणाः सौंदर्यादय आत्मनो बुद्ध्यादयस्तेषां द्वंद्वैक्यं, तेन सहितम् ॥ ३० ॥ आत्मनो जडत्वं शंकते—नन्विति । तेषां भूतादीनां दोषो जडत्वादिरूपस्तस्य प्रसङ्गः प्रसक्तिः । तत्राक्षेपे । शुद्धत्वे हेतुमाशंकते—कुत इति । अन्वेति संगं प्राप्नोतीति । व्यतिरिक्तः सर्वस्माद्भिन्नः । अत्र हेतुमाशंकते—तदपीति, व्यतिरिक्तत्वमपि । शुद्धरूपतामाक्षिपति—नन्विति । अहं करोम्यहं शृणोम्यहं वदामीत्यनेकावस्थता । तत्राक्षेपे । इत्यर्थ इति—मायाकृतं नानात्वमेकस्यौपाधिकमेव न स्वाभाविकमित्यर्थः ॥ * ॥ ननु तर्हि तव स्वरूपं किं लोकैः कथं वा ज्ञेयमिति चेन्मत्स्वरूपन्तु गुणातीतमंतर्यामिसंज्ञं सर्वत्र प्रतीयत एवेत्याह—आत्मा परमात्मा ज्ञानं मायातीतं चित्तन्मयः, गुणैः सृष्ट्यादिकर्त्र्याचिंत्यशक्त्या तत्संबंधाभावाच्छुद्धः, शरीरमध्यवर्तित्वेपि तद्व्यतिरिक्तो गुणाधिष्ठातृत्वेऽपि न गुणानन्वेतीति सः । स तु सर्वैरप्यनुमानगम्य इत्याह—सुषुप्तेति । ईयतेऽनुमीयते । तदुक्तं पक्षे—'गुणप्रकाशैरनुमीयते भवान्' इति, " भगवान्सर्वभूतेषु लक्षितः स्वात्मना हरिः । दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः ॥" इति च । आत्माऽहं ज्ञानमयोऽत्र स्थितोपि युष्मद्विषयकातिशयज्ञानवान्न तु कदाचिदपि युष्मान्विस्मरामीत्यर्थः । शुद्धो मथुरास्थोऽपि मथुराजनाऽऽसंगदोषरहितः, यतो व्यतिरिक्तो युष्मद्वियोगखिन्नः, कथमन्या रोचयामीति भावः । यतो गुणान्वयः, युष्मद्गुणसौंदर्यमधुरकटाक्षावलोकादीनन्वेमि ध्यानेन निरंतरं प्राप्नोऽमीत्यर्थः । एवंभूतो युष्माभिरपि सदैवाहमनुभूय इत्याह—सुषुप्तेति । तत्र सुषुप्तेन ममात्मनोनुभूतचरस्य रूपगुणादिसामान्यं, स्वप्नेन तद्विशेषं, जागरणेन तु हास्यलास्यादिसंभोगमाधुर्यमयः साक्षादात्मैवेयतेऽनुभूयत एव।।**तोषिणी** तु—आत्मा ज्ञानमय इति प्रथमार्थः । नन्वेतावन्तं कालं तवात्मानं घनश्यामवर्गं परिमितसर्वांगं परमाश्चर्यैकररूपवन्तमेव मन्यामहे स्म, संप्रति भवता त्वचिंत्यशक्तिमयस्तत एव सर्वेषामुपादानतयांतर्यामितया च व्यापक एव स इत्यस्माकं भवता सह न वियोग इत्युपदिश्यते, स च न केनापि दृश्य इत्यरूपश्चेत्यवगम्यते । तत्तद्रूपता च तत्र भवदेकगम्येति भवतु नामायं सन्देशः, वयं तु स्वंस्त्रमात्मानं परिच्छिन्नदेहरूपमेवानुभवामः, ततः कथंचिज्जातीयेनानेन तादृशस्य भवदात्मनः संगमनुभविताः स्मस्तत्राह—आत्मा ज्ञानमय इति । सर्वैरप्यात्मा सुषुप्त्यादिभिर्मनोवृत्तिभिस्तत्तद्रूपासु तत्तद्वृत्तिषु प्रतीयत एव, सुषुप्तावपि ' सुखमहमस्वाप्सम् ' इति प्रत्यभिज्ञानात्, किमुतान्ययोरिति भावः । यतो ज्ञानमयः प्रकृतिज्ञानस्वरूपत्वात्स्वयंप्रकाशः, यतोऽसौ तत्तद्गुणानुगतोपि व्यभिचारिणीभ्यस्तत्तद्वृत्तिभ्यो व्यतिरिक्तत्वाच्छुद्ध इत्यर्थः । तस्माज्ज्ञानरूपेण सर्वेषामुपादानेन व्यापकेन मदात्मना ज्ञानरूपस्य निजात्मनस्तादात्म्यभावनया सुखिन्यो भवत, किमनया बहिर्योगदुःखमयभावनयेति भावः । 'मायावृत्तिभिः ' इति पाठेपि स एवार्थः । द्वितीये त्वर्थे यो मम तादृशविग्रहरूपात्मा भवतीभिर्निर्धारितः स तु सुषुप्त्यादिवृत्तिषु भवतीभिरीयतेऽनुभूयत एव, मत्समाधेरेव भवतीषु सुप्रतवद्भासमानत्वात् । यथोक्तम्—"जाग्रत्स्वप्नसुषुप्तेषु योगस्थस्य च योगिनः । या काचिन्मनसो वृत्तिः सा भवेदच्युताश्रया ॥" इति । तमेवात्मानं विशिनष्टि—ज्ञानमयो नानाविद्याविदग्धः, शुद्धो दोषरहितः, व्यतिरिक्तो विशेषेण सर्वोत्तमः, गुणान्वयः सर्वगुणशालीति । तृतीयेप्यर्थे भवतीभिर्यत्सुषुप्त्यादिषु स्वीयमनआद्याश्रयस्तादृशो यो ममात्मानुभूयते स च गौतमीयतंत्राविस्थस्य " नवीननीरदश्यामं नीलेंदीवरलोचनम् । बल्लवीनंदनं वंदे कृष्णं गोपालरूपिणम् ॥" इति वर्तमानवन्दनात्मकस्य सार्वदिकानुशीलनीयस्य श्रीगोपालस्तवराजादेर्दृष्ट्या नित्यताद्विध एव ज्ञेय

येनेंद्रियार्थान्ध्यायेत मृषा स्वप्नवदुत्थितः ॥ तन्निरुंध्यादिंद्रियाणि विनिद्रः प्रत्यपद्यत ॥ ३२ ॥
एतदंतः समाम्नायो योगः सांख्यं मनीषिणाम् ॥ त्यागस्तपो दमः सत्यं समुद्रांता इवापगाः ॥ ३३ ॥

स्वत इत्यर्थः ॥ ३१ ॥ एतत्कुतः । मनोनिरोधे तदभावादिति व्यतिरेकं दर्शयितुं मनोनिरोधं विधत्ते । येनेति । उत्थितः पुमान्यथा मिथ्याभूतमेव स्वप्नं ध्यायत्येवं बाधितानपींद्रियार्थान् शब्दादीन्येन मनसा ध्यायेत ध्यायेच्चिंतयेत् । ध्यायंश्च येनेंद्रियाणि प्रत्यपद्यत प्राप तन्मनोविनिद्रोऽनलसः सन्निरुंध्यान्नियच्छेदिति ॥ ॥ ३२ ॥ तावता च कृतार्थो भवतीत्याह । एतदंत इति । एष मनोनिरोधः अंतः समाप्तिः फलं यस्य सः । समाम्नायो वेदः । स तत्र पर्यवस्यतीत्यर्थः । योगोऽष्टांगः । सांख्यमात्मानात्मविवेकः । त्यागः संन्यासः । तपः स्वधर्मः । दम इंद्रियदमनम् । मार्गभेदेऽप्येकत्र पर्यवसाने दृष्टांतः । समुद्रांता आपगा नद्य इवेति ॥ ३३ ॥

इति भावः ॥ ३१ ॥ कुतो मायिकं नानात्वमित्याशंक्य सहेतुकं तदाह–मनइत्यादिना । व्यतिरेकमभावः । एवं स्वप्नवत् । येन मनसा ॥ * ॥ येनेति तैर्व्याख्यातम् । तत्र चिंतयेत् चिंतयाति । प्राप प्राप्नोतीत्यर्थः । द्वितीयोर्थो यथा–ननु सत्यं साक्षात्कारनिभा सा स्फूर्तिः, किन्तु न सदेति बाहिर्दृष्ट्या वियोगस्फूर्तेरपाये क उपायः–बाहिर्वृत्तितो मनोनिरोध एवेति योगशास्त्रप्रक्रियामुपदिशति–येनेति। तृतीयेपि–हंत यद्यस्मिन्प्रकाशे वियोग एव च तद्दृष्टिश्चास्माकं हातुमशक्या भवतश्च नागमनं तर्हि कथमिव कालं क्षिपाम इत्याशंक्य ममागमनं यावन्मनोनिरोधः क्रियतामित्यभिप्रेत्याह–येनेति ॥ अत्र **विश्वनाथः**–उपदिष्टोयं ज्ञानयोगो मनोनिरोधे सति फलतीति मनोनिरोधं विधत्ते–येन मनसेंद्रियार्थान्विषयान्ध्यायेत, उत्थितः प्रबुद्धो जनः स्वप्नवत्स्वप्ने यथा मृषाभूतानप्यर्थान्ध्यायेत्, तन्मनइंद्रियाणि च निरुंध्यात्, यतो विनिद्रः सावधान एव जनः प्रत्यपद्यत प्रतिपन्नो ज्ञानवानभूदिति पूर्वाचारः प्रमाणितः । पक्षे–उत्थितो मूर्च्छातः प्रबुद्धो भवद्विधो जन इन्द्रियार्थान्मद्दर्शनस्पर्शनाधरपानाऽऽलिंगनादीन्विषयान् मदाविर्भावजनितत्वात्सत्यानेव येन मनसा स्वप्नवन्मृषाभूतानेव ध्यायेत तन्मनो निरुंध्यात्तिरस्कुर्वीत, तदप्रामाण्यादिति भावः । यतो विनिद्रो निद्रारहित एव भवदादिः इंद्रियाणि स्वनेत्रादीनि प्रत्यपद्यत प्रत्यक्षत एव निरंजननीरागानिश्चंदनादीनि अपद्यत ज्ञातवानेव, युष्माभिरनुरागांधाभिर्महाविरहोत्कंठाविगतविचाराभिर्मत्कर्तृकयुष्मत्कर्मकनानाविधसंभोगोऽपि यन्मृषाभूत एव मन्यते एतदेव मे महद्दुःखमत एव तत्तत्सत्यापनार्थकमेतत्संदेशप्रेषणं ममेति भावः ॥ ३२ ॥ तावता मनोनिरोधमात्रेण । इत्यर्थ इति–अन्यथा वेदाभ्यासादि निष्फलमेव । तथा च वक्ष्यत्येकादशे श्रीकृष्णः–"दानं स्वधर्मो नियमो यमश्च श्रुतं च कर्माणि च सद्व्रतानि । सर्वे मनोनिग्रहलक्षणान्ताः परो हि योगो मनसः समाधिः ॥" इति । अष्टांगो यमादिसमाध्यन्तः । अपां समूह आपः प्रवाहस्तेन गच्छन्तीत्यापगाः ॥ * ॥ मनोनिरोधार्थका एव सर्वशास्त्रोक्ताः सर्वेऽप्युपाया इत्याह–एतदंत इति । एष मनोनिरोध एवांतः समाप्ति फलं यस्य स इति तैर्व्याख्यातम् । पक्षे–मनोनिरोधे सत्येव संसारतरणं तथैव भवतीनामपि मद्विरहतरणं मनोनिरोधादेव यत्स्वलु मनः सत्यमपि मत्संगं भवतीरलीकत्वेन प्रत्याययतीति भावः । अर्थस्तूभयत्र तुल्य एव ॥ **तोषिणी** तु–समाम्नायः शास्त्रं ज्ञापकम्, योगादीनि साधनानि, तत्र सत्यं विविधकर्मस्वपि सदा शाठ्यवर्जनम्, यागः सांख्यञ्च सर्वेषामेव सामान्यधर्मः, त्यागादयः क्रमेण यतिवनस्थब्रह्मचारिगृहस्थधर्माः । यद्वा–त्यागो

**यत्त्वहं भवतीनां वै दूरे वर्ते प्रियो दृशाम् ॥ मनसः सन्निकर्षार्थं मदनुध्यानकाम्यया ॥ ३४ ॥**

**ननु किमन्यानिवास्मानात्मविषयया प्रलोभयसि वयं तु सर्वसुंदरसकलगुणगणालंकृतेन त्वया विरहं नैव सहामहे इति चेदत आह। यत्त्वहमिति। दृशां दूरे यद्वर्ते तन्मदनुध्यानार्थम् ।**

दानं गृहिधर्मः, सत्यं समदर्शनं यतिधर्मः । यद्वा—सर्व एवैते मुख्याः सामान्यधर्मा इत्यर्थत्रयेपीदं समानम् ॥ ३३ ॥ न हि वयं संन्यासिन्यो यतो ब्रह्मज्ञानेन संतोषं करिष्याम इति कृत्वा शंकन्ते—नान्वित्यादिना । अतोऽत्र । यदहं वर्ते । मदनुध्यानकाम्यया निरन्तरमदुपासनेच्छया । संनिकर्षः सामीप्यम् ॥ * ॥ तदेवमप्रकटप्रकाशे वियोग एव नास्ति प्रकटप्रकाशेऽपि बहिः प्रातीतिकप्रायिक एव च कदाचित्स्फूर्तैरपि साक्षात्कारपदवीप्राप्तत्वात् , स च केनापि मम स्वाभाविकेन दुराग्रहेणास्तीति ज्ञायतामित्यभिप्रेत्य तमेवाग्रहं दर्शयति—द्वाभ्याम् । तुशब्दो भिन्नोपक्रमे । कंसवधलक्षणमहाकार्यानुरोधेनैव तावदत्रागतं संप्रति कार्यावशेष परित्यागपूर्वकागमनयोग्यत्वेऽपि यदहं भवतीनां या दृशो नेत्राणि तासामेव दूरे वर्ते न तु भवतीनामपि, अप्रकटप्रकाशे तत्र विद्यमानत्वात्, तत्रापि केवलं वर्ते न तु सुखेनास्मीत्यर्थः । तत्खलु मत्कर्तृकं यदनुध्यानं तत्काम्यया तद्धेतोरेव, ध्यानं भवत्कर्तृकम् "क्षणं युगशतमिव यासां येन विनाभवत्" इति प्रसिद्ध्या पूर्वत एव सिद्धम् । मद्विषयमनुध्यानं तदनुगतं तत्सदृशतां प्राप्तं मत्कर्तृकं भवद्विषयं प्रेयसीकर्तृकस्याग्रे वक्ष्यमाणत्वात्, तन्मम मनस्युदियादिति वांछेत्यर्थः । तच्च किमर्थं तत्राह—मनसो यः सन्निकर्षः भवतीनां सान्निध्ययोग्यता तदर्थमित्यर्थः । यतस्तां विना मम चेतसि सदैव लज्जा जायत इति भावः । उक्तञ्च स्वयमेव—'न पारयेहं निरवद्यसंयुजाम्' इत्यादि । एवमीदृशभवदुपासनयैव तद्योग्यता स्यादितीदृशमपि दुःखं सहे इति वाक्यार्थः । उक्तं हि मुनिभिः—"न विना विप्रलंभेन संभोगः पुष्टिमश्नुते । कषायिते हि वस्त्रादौ भूयान्रागोऽभिवर्द्धते ॥" इति ॥ अत्र **विश्वनाथः**—भो उद्धव एतेन संदेशेनास्मांस्त्वं द्विगुणं ज्वालयसि स्म तस्मात्तं संदेशप्रेषकं कालदेशपात्रानभिज्ञं किं ब्रूमस्त्वां वा परामर्शशून्यं किमाक्षिपामः, एतद्ब्रह्मज्ञानं खल्वस्यां व्रजभूमौ कः क्रेष्यति यस्य भावस्त्वयैतावद्दूरमानीतः, किमेते गोपीजना जन्मावधि श्रीकृष्णसौंदर्यामृतपायिनः संप्रति ब्रह्मज्ञानं निंबरसं पास्यन्ति, महादुर्भिक्षे हि वरमिह स्त्रियः प्राणाञ्जहति तदपि घासं नाश्नन्ति, शृणु रे महामूर्ख शृणु—इदं ब्रह्मज्ञानं खलु संसाररोगस्यौषधं महामुनिचिकित्सकानां हृदयपर्णशालायां तिष्ठति, किमिदं कृष्णप्रेममहारोगस्य भेषजं भवति, ते[1] चिकित्सका अपि किमिमं रोगं तावत्कदापि परिचिन्वन्तोपि सांदीपिनिमुनेः सकाशाच्चिकित्साशास्त्रमधीत्य त्वामुद्धवमध्याप्यास्मभ्यं प्रेमज्वालोपशमकमौषधं प्रेषयामासुः, गच्छाधुनैवास्मत्प्रेषित इदमौषधं नीत्वा, स एवैतत्पीत्वास्मद्विषयकस्य प्रेमरोगस्य ज्वालां न्यवर्तयत् पुनरपि रोगशेषं निवर्तयतु, अस्माकं प्रेमानलमहाज्वालैव शतजन्मपर्यन्तं वर्ततां न चैतदौषधस्पर्शोपि, किमरे दावानलोपशमकोप्यंबुराशिर्वज्रानलमुपशमयितुं शक्नोति, किञ्चास्य संदेशस्यान्तरस्मात्किञ्चिदनुकूलोऽप्यर्थो यो यथाकथंचिद्भासते स किं तदभिप्रेतो घुणाक्षरन्यायेनायातो वेति न तत्र विश्वासिम इति ससंरंभं ब्रुवाणासु तासु—भोः स्वामिन्यः क्षणमवधत्त ब्रह्मज्ञानादन्यमपि संदेशमानीतवानस्मीत्युक्त्वा तत्र श्रोतुं श्रद्धानास्ताः प्रति कृष्णवाक्यमाह—यत्त्वहमिति । यद्भवतीनां दृशां प्रियोऽप्यहमधुना दृशां दूरे वर्ते तन्मदनुध्यानकाम्ययैव, तच्चानुध्यानं मनसः सन्निकार्षार्थमतोऽधुना भवतीनां मनसः समीप एव वर्ते । एकत्रोपलक्षणमेतत्—मम दृशां प्रिया अपि भवत्यो यदधुना दृशां दूरे स्थितास्तन्मनसः समीप एव वर्तध्व इत्यप्यर्थः । तेन च दृक्समीपवर्तित्वे मनोदूरवर्तित्वं, मनः समीपवर्तित्वे दृग्दूरवर्तित्वमासक्तिविषयीभूतस्य बंधनं भवति, अत्रापि मनोदृशोर्मध्ये मनस एवाभ्यर्हितत्वान्मनःसमीपवर्तित्वमेव मदभीप्सितं तदेव भवतीनामप्यभीप्सितं भवत्विति भावः । अत एवोक्तम्—" दूरस्थोऽपि समीपस्थो यो यस्य हृदि वर्तते । यो यस्य हृदये नास्ति समीपस्थोऽपि

---

१ बहुत्वं व्यङ्ग्योत्त्योत्तरत्र 'सः' इति दर्शनात् । अनुरागपारवश्याद्वा विरोधः परिहरणीयः ।

यथा दूरचरे प्रेष्ठे मन आविश्य वर्तते ॥ स्त्रीणां च न तथा चेतः सन्निकृष्टेऽक्षगोचरे ॥३५॥मय्यावेश्य मनः कृत्स्नं विमुक्ताशेषवृत्ति यत् ॥ अनुस्मरंत्यो मां नित्यमचिरान्मामुपैष्यथ ॥३६॥ या मया क्रीडता रात्र्यां वनेऽस्मिन्व्रज आस्थिताः ॥ अलब्धरासाः कल्याण्यो माऽऽपुर्मद्वीर्यचिंतया ॥३७॥

तच्च ध्यानं मनसः सन्निकर्षार्थमिति ॥३४॥ एतदुपपादयति त्रयेण । यथा दूरचर इति ॥ ३५ ॥३६॥ उपैष्यथेति माधुर्यमात्रमिति चेदत आह । या इति । हे कल्याण्यः

दूरतः ॥ " इति । दूरत इति सप्तम्यर्थे तसिः ॥ ३४ ॥ एतत् मनःसामीप्यम् । दूरे चरति गच्छतीति तथा तस्मिन् । चात्पुरुषाणामिति । सन्निकृष्टे निकटस्थे । अक्षगोचरे इन्द्रियविषये ॥ फलसंदेहा त्प्रियतमस्मरणं मत्स्मरणसदृशं न, फलनिश्चयादित्यौंशयेनाह–मर्यीति । विमुक्ता त्यक्ता अशेषाः वृत्तयः संकल्पादयो येन तत्तथा । कृत्स्नम्–सर्वभावेन कृंतत्यज्ञानामिति कृत् ज्ञानम्, तेन स्नस्यत आदीयत इति कृदुपपदात् 'स्नसु–आदाने' इति धातोरौणादिको डः । ज्ञानज्ञेयमित्यर्थः ॥ * ॥ एतदेव स्त्रीपुंसानामनुभवदर्शनायोपपादयति–यथेति । स्त्रीणां चेति चकारात्पुंसां च, दूरवर्तिन्यां प्रेष्ठायां यथा मन आविश्य वर्तते न तथा सन्निकृष्टायामक्षिगोचरीभूतायाञ्चेत्यर्थः । हंहो उद्धव एषोऽपि संदेशः संप्रति त्वया स्वहृदयसमूढ एव स्थाप्यताम्–संप्रति कृष्णेन याः स्त्रियः संभुज्यन्ते कदाचित्तासां दशां दूरवर्तिनि कृष्णे भविष्यति सति ताभ्य एव तदानीं त्वया दातव्यः, संप्रति व्रजस्थास्तु नास्य ग्राहिकाः, यासां पूर्वं व्रजवर्तिन्यपि दृग्गोचरीभूतेऽपि तस्मिन्कृष्णे एकैकनिमेषेणैकैकयुगकालं व्याप्य स दृग्दूरवर्तित्कृत एवाभूत्तदा तदैव सहस्रशोविवाहेषु सहस्त्रकृत्व एव मनःसन्निकर्षः खल्वभूदेवासामिति सावहेलमाचक्षाणासु तासु–भोः स्वामिन्यः यद्येषोऽपि न रोचते तर्ह्यस्मादप्यन्यं संदेशं श्रुणुत मया तु बहव एव संदेशा आनीता इति प्रोच्य पुनः कृष्णवाक्यमाह–मर्यीति । विशेषेण मुक्तास्त्यक्ता गृहपत्यादिविषया अशेषाश्च स्ववृत्तयो येन तथाभूतं मनः मयि कृष्णे आविश्य मां नित्यमनुस्मरन्त्यो यद्वर्तध्वे तदचिरादेव मामुप स्वसमीप एव वर्तमानमेष्यथ प्राप्स्यथ । ननु भवतु नाम भवतो भावसिद्धिस्तत्रास्माकं किमित्याशंक्याह–भवतीनामपि तदाधिक्यं स्यादिति कामनयापीत्याह–यथेति । स्त्रीणामन्यासामपि किमुत भवतीनां चेत्युक्तार्थसमुच्चये । अतो मिथःप्रेमवर्धनाभिलाषेच्छोर्दुर्निग्रहोऽयं मम दुराग्रहो भवतीभिः क्षन्तव्य इति भावः । तदेतावत्संदिश्य पुनर्विचारयति स्म मया यत्त्रिधा समाधानं कृतं तच्च प्रकटलीलामयं ते संभावनया तान् मंस्यन्ते मनोनिरोधे च नोत्सहिष्यन्ते तर्हि प्रकटलीलायामेव साक्षान्मत्प्राप्तिः समाधानाय कल्पेतेति तदेतद्विचार्य सोऽपि मम दुराग्रहो भवतीनामाग्रहेण चिरादेव नंक्ष्यतीत्याह–मय्यावेश्येति । पद्येऽस्मिन्नुत्तरत्र च मयीत्याद्यस्मच्छब्दप्रयोगस्य द्विस्त्रिरावृत्त्या तत्राप्यादित एव कृष्ण इति विशिष्टसर्वत्राप्युन्नेयमिदमित्यधिकारनिर्मित्या कृष्णपदं यथायथं योज्यं,तच्चावश्यकत्वायान्याकारप्राप्तिपरिहाराय च गम्यमिति स्थिते सोऽयमत्रार्थः–यद्यस्माद्विमुक्तं तदाशेषवृत्तिकं मनो मयि कृष्णे यथाकथंचिदाश्रयितव्ये स्वदायकतया प्रसिद्धेऽस्मिन्कृष्णतया प्रसिद्धाकारे आवेश्य निरंतरं मां कृष्णतया प्रसिद्धाकारमेव स्मरन्त्यः स्थ तस्मादचिरादेव मां कृष्णतया प्रसिद्धाकारमुप समीप एष्यथ प्राप्स्यथैव, न तु ममात्र स्वातंत्र्यमिति भावः । नन्वेवं चेत्पुनरपि तथा दुराग्रहो भवतः स्यात्तत्र सचाटु प्राह–नित्यमिति । सहासेनैव तथाकरवम्, किन्वित ऊर्ध्वं न कारिष्यामीति भावः ॥ ३५ ॥ ३६ ॥ माधुर्यमात्रं प्रियोक्तिमात्रम् । अत्र स्वानुभूतमर्थमाह–या इति । मद्वीर्यं मत्स्वरूपम् "वीर्यं तेजोबलप्रख्यस्वरूपेषु च रेतसि" इति धरणिः ॥ * ॥ तत्रतत्र प्रमाणं दर्शयति–या इहास्मिन्प्रकटप्रकाशात्मके वृंदावने रात्र्यां तस्यां क्रीडता मया कृष्णतया प्रसिद्धाकारेण सहालब्धरासाः । तत्र हेतुः–व्रज आस्थिता रुद्धा इत्यर्थः । ता अपि मद्वीर्यचिंतया मम कृष्णतया प्रसिद्धाकारस्य

---

१ प्रियतमस्मरण फलसन्देहो मत्स्मरणे च फलनिश्चय इति तयोरसाम्यमित्याशयाऽऽशयः ।

श्रीशुक उवाच ॥ एवं प्रियतमादिष्टमाकर्ण्य व्रजयोषितः ॥ ता ऊचुरुद्धवं प्रीतास्तत्संदेशाऽऽगतस्मृतीः ॥३८॥ गोप्य ऊचुः॥दिष्ट्याऽहितो हतः कंसो यदूनां सानुगोऽघकृत् ॥ दिष्ट्याऽऽप्तैर्लब्धसर्वार्थैः कुशल्यास्तेऽच्युतोऽधुना॥३९॥ कच्चिद्गदाग्रजः सौम्य करोति पुरयोषिताम् ॥ प्रीतिं नः स्निग्धसव्रीडहासोदारेक्षणार्चितः ॥ ४० ॥

याः स्वभर्तृभिः प्रतिबद्धा वने क्रीडता मया सहालब्धक्रीडास्तास्तदैव मत्कृतलीलानुस्मृत्या मामापुः प्रापुः ॥ ३७ ॥ तस्य संदेशेनागता स्मृतिर्यासां ताः । प्रथमार्थे द्वितीया ॥ ३८ ॥ यदूनामहितः शत्रुः अघकृद्दुःखदः । दिष्ट्येत्यानंदे । आप्तैः प्राप्तैर्हितैर्वा सह ॥ ३९ ॥ अन्या ऊचुः । कच्चिदिति । नोऽस्माकम् उचिताम् अस्मासु करणीयां

सर्वातिक्रमिमद्गुणप्रभावेण मा मां कृष्णतया प्रसिद्धाकारमापुरेव, अप्रकटप्रकाशात्मके वृंदावन इति भावः । कल्याण्य इति संबोध्य भवत्यस्तु साक्षादेव प्राप्स्यन्ति न तु 'जहुर्गुणमयं देहम्' इति रीत्येति व्यंजितम् ॥ अत्र **विश्वनाथः**—अत्रार्थे भवतीनां मध्येंतर्गृहनिरुद्धा यां गोप्यस्ता एव प्रमाणमित्याह—या इति । ताः स्वमनोरथाऽसिद्ध्या मद्विच्छेदमहापीडया च मर्तुकामा अपि कल्याण्यः कल्याणवत्यो जीवत्य एव मद्वीर्यचिंतया तदैव मामापुः, तत्रैवाविर्भूय रममाणेन मया सार्द्धमेव तस्यां रात्रौ व्रजे स्थितास्तत्पररात्रिषु रासमपि प्राप्ता इत्यर्थः ॥ ३७ ॥ तस्य कृष्णस्य । ता गोप्यः ॥ * ॥ ता अंतर्गृहनिरुद्धचर्या एवोचुः । तेन संदेशेनागता स्मृतिर्यासां ताः । द्वितीयाऽऽर्षी । आं ! सत्यमेव तस्यां रात्रौ तेन रममाणेनैव सह वयमास्मेति स्मरन्त्यः स्वानुभवं प्रमाणीकृत्योद्धवं प्रीतास्ता एव लौकिकरीत्योद्धवं पप्रच्छुः ॥ अत्र **तोषिणी**—एवमिति—यदायदा यच्छ्रुतं तदातदा तत्रार्थत्रयस्यापि ताभिस्तारतम्येनानुसंहितत्वात्, प्रथमार्थे—प्रेयसि तस्मिन् पूर्वम् 'यत्पत्यपत्यसुहृदाम्' इत्यादिषु याः सर्वतनुभृतां निरुपाधिप्रेमास्पदत्वादिना परमात्मता स्थापिता संप्रति तेन ज्ञानमयेन संदेशेन तदात्मिका स्मृतिर्यासां ताः । तंत्रेण तु तेन ज्ञानमयेनापि संदेशेन न गता स्मृतिर्निजभावोचितानुसंधानरूपा यासां ताः । तत्र हेतुः—प्रीताः, तस्मिन्स्वाभाविकतादृशप्रेमवत्य इत्यर्थः । प्रियतमादिष्टमिति—सोऽप्येवमस्मासु नोपदिशेदिति विभाव्येति भावः । द्वितीयार्थे, तेन प्रेमसाक्षात्कारसूचकेन संदेशेनागता स्मृतिः साक्षात्कारस्य स्मरणं यासां ताः । तृतीयार्थे, तेनाप्रकटप्रकाशे संयोगं सूचयता संदेशेन गता स्मृतिर्जातिस्मरवत्तत्तत्संस्काररूपा यासां ताः । अंत्यार्थद्वये, अत एव प्रीताः प्राप्तपरमानंदाः । अत एव विश्वासे हेतुः—प्रियतमेति । अथ 'मय्यावेश्य मनः कृत्स्नम्' इति चतुर्थपक्षे, सा स्मृतिस्तु पूर्वं स्ववर्गवज्जातपूर्वानुरागतया दृष्टानां तासां रासे तु तत्रादृष्टानामप्येतावन्तं कालं स्वीयश्रीकृष्णानुरागावेशेनाऽननुसंहितानामनेन तु संदेशप्रभावेणानुसंधानरूपेति ज्ञेयम् । अत्रैवं श्रीभगवतोऽभिप्रायः—मम संप्रति गमनादिकं नसंभवत्येवेति सांत्वनसंदेशे प्राप्ते प्रथमत आगमनप्रतिज्ञैव समंजसा, भाविनि कालविलंबे तु न केवलं सा समंजसेति विविधसमाधानसंधायकविविधार्थसंबंधे संदेशोऽपि योग्यः यस्य, पर्यवसानार्थेन मुहुस्तत्रत्यनित्यविहारानुसंधानमपि भवेत्, कदाचिद्बहिरनुसंधाने तु मद्दर्शनतृष्णा च मुहुस्तत्स्फुरणरसास्वादचमत्कारहेतुः स्यात्, आयत्यां मत्साक्षात्कारे परमचमत्कारः स्यादिति ॥ ३८ ॥ आप्ता जगति बहवः सन्ति तद्व्यावृत्त्यर्थमाह—हितैरिति ॥ * ॥ अथागतस्मृतितया किंचिदाश्वासयुक्तानां पुनरननुसंहितप्रकटप्रकाशतया जातविरहस्फूर्तीनां वाक्यानि दर्शयितुमाह—गोप्य ऊचुरिति ॥ अहो अस्माकं निजसुखेन सिद्धे नासिद्धेन वा किं, तस्य सुखमेवास्माकं परममंगलमित्यभिप्रेत्यादौ तदभिनन्दान्ति—दिष्ट्येति । लब्धसर्वार्थैरिति तेषामप्यशेषसुखसिद्ध्या तदर्थचिंता निरस्ता । अतः कुशली सुखी । **अच्युत** इति कथमपि सुखच्युतिराहित्याभिप्रायेण । अधुनेति पूर्वमसौ कंससंबंधेन बहुधा दुःखं प्राप्तोऽस्तीति भावः । दिष्ट्या एतदेव भद्रमिति वा । अहितस्तद्द्वेष्टा, यदूनामघकृच्च । आप्तैस्तत्र प्राप्तैर्युदुभिः ॥ ३९ ॥ अन्याः सापत्न्यमसह

कथं रतिविशेषज्ञः प्रियश्च वरयोषिताम् ॥ नानुबध्येत तद्वाक्यैर्विभ्रमैश्चानुभाजितः ॥ ४१ ॥ अपि स्मरति नः साधो गोविंदः प्रस्तुते क्वचित् ॥ गोष्ठीमध्ये पुरस्त्रीणां ग्राम्याः स्वैरकथांतरे ॥ ४२ ॥ ताः किं निशाः स्मरति यासु सदा प्रियाभिर्वृंदावने कुमुदकुंदशशांकरम्ये ॥ रेमे क्वणच्चरणनूपुररासगोष्ठ्यामस्माभिरीडितमनोज्ञकथः कदाचित् ॥ ४३ ॥

मित्यर्थः । प्रीतिं कच्चित्पुरयोषितां करोति । स्निग्धं च तत्सव्रीडहासेनोदारं सुंदरमीक्षणं तेनार्चितस्ताभिरस्माभिर्वा ॥ ४० ॥ अन्या ऊचुः । कथमिति । तासां वाक्यैर्विभ्रमैश्चानुभाजितः पूजितः ॥ ४१ ॥ पुनरन्या ऊचुः । अपीति । किमनया चिंतयाऽस्मान् कच्चित्प्रस्तुते प्रसंगे ग्राम्या अविदग्धाः स्मरति किम् ॥ ४२ ॥ अन्या ऊचुः। ताः किमिति । कुमुदैः कुंदैः शशांकेन च रम्ये वृंदावने क्वणंति चरणनूपुराणि यस्यां तस्यां रासगोष्ठ्यामस्माभिः प्रियाभिरीडिता मनोज्ञाः कथा यस्य स तदा यासु निशासु

मानाः । गदोऽग्रजो यस्य स तथा, गदस्यातिशययोद्धृत्वेन क्रूरस्वभावत्वात्तदनुजोऽपि तादृश एवेति । सौम्येति निजार्तिश्रावणाथ तमाह्लादयंत्य आहुः । अस्माभिर्वेति पूर्वकालापेक्षयोक्तम् ॥ * ॥ अत्र **विश्वनाथः**–अन्याः सेर्ष्यमाहुः । गदाग्रज इति–गदो देवरक्षितायाः प्रथमात्मजो देवकीपुत्रमात्मानं मत्वा तदनुजताभिमननेन संप्रति तदग्रजोभूदिति गोकुलसंबंधस्तस्य शिथिलीभूत इति द्योतयांचक्रुः । नोऽस्माकं स्निग्धं च तत्सव्रीडहासेनोदारं यदीक्षणं तेनार्चितोस्माभिः स संप्रति पुरयोषितां प्रीतिमुत्पादयति सहासावलोकादिभिस्ता अचर्यति किम् ? शिवशिव अस्मदर्चनीयः स तासामर्चकोऽभूदित्यस्माकमेव दौर्भाग्यमिति भावः ॥ **तोषिणी** तु–अत्र वक्तृभेदेऽपि संगतिरुत्तरोत्तरमैकमत्येनोक्तकार्यैव । तथाहि–अथ सुखस्थितिप्रकारं प्रेमलालसौत्कंठ्येनैव पृच्छन्त्यस्तदीयविलासस्फूर्तेः पुरस्त्रीणां स्मरणात्सापत्न्यस्वभावेनेर्ष्यामंकुरयन्ति–कच्चिदिति । सप्तम्यर्थे षष्ठी पुरस्त्रीणामिति । स्वेषु स्नेहशैथिल्यं पुरस्त्रीषु तदाधिक्यञ्च सूचितमिह ॥ ४० ॥ अन्यास्तदागमने ससंदेहाः । विभ्रमैः श्रृंगारचेष्टाभिः, नायास्यतीति भावः ॥ * ॥ अयि मुग्धाः किमिदमपि जिज्ञासध्वेऽत्र सन्देह एव नास्तीत्यन्याः सोल्लुंठसान्तःकोपमाहुः–कथमिति । रतिविशेषज्ञः स सांप्रतं पुरयोषितां प्रियोऽभूत्कथं नानुबध्येत नासक्तो भवेत्, तासां वाक्यैस्तादृशैर्विभ्रमैश्चानुभाजितः निरंतरं ता भजन्नसौ तैर्भाजितः भजनं कारित इत्यर्थः । तेन वयं ग्रामयोषितः रतिविशेषं च महामत्ताय तस्मै न दित्सामहे, तादृशीमनुकूलां वाचं विभ्रमांश्च न जानीम इत्यतो वयं तेन ताः प्राप्य त्यक्ता एवेति निश्चिनुध्वमिति पृच्छयत इति भावः ॥ ४१ ॥ स्वस्मरणेन तदागमनं संभावयंत्योऽन्याः । अनया पुरस्त्रीकृततदादरादिरूपया । स्वैरकथांतरे स्वच्छन्दविषयव्यवहारविशेषे । प्रस्तुते प्रसक्ते सति ॥ * ॥ अपीति–सख्यः सत्यमेव वयं त्यक्तुमर्हत्वात्तेन त्यक्ता एव । किञ्च–लोके हि अतिनिकृष्टा अपि संभुक्तत्यक्ता अपि केनचिद्गुणांशेन दोषांशेन वा स्मृत्यारूढाः कदाचिद्भवंतीति पृच्छयत इत्याहुः–। ग्राम्या अविदग्धाः । स्वैरकथांतरे गाननर्मप्रहेलीकावित्वादिरचनाकथामध्ये । भोः पुरस्त्रियः यूयं यथा गानादि जानीध्वे तथाऽस्मद्गोष्ठे गोप्योपि प्रायः किञ्चिज्जानंति । यद्वा–ता ग्राम्या एवं नैव जानन्तीति किमस्मानुल्लिखतीत्यर्थः । गोविन्दो गोकुलेन्द्र इति स्मरणार्हतोक्ता । साधो इति–अत्र कदापि किञ्चिन्मिथ्या न वाच्यमिति संबुद्ध्यभिप्रायः ॥ ४२ ॥ अन्याः सौंदर्याभिनिविष्टाः । तदा रासावसरे । ता निशाः ॥ * ॥ भोभो गोप्यः वक्रोक्त्याऽलं, तासां तस्य च निन्दया, स्पष्टमेव किं न ब्रूध्वे, अन्यद्वैदग्ध्यादिकमस्मद्दौर्भाग्यवशात्कृष्णेन विस्मर्यतां नाम स्ववासः कथं विस्मृत इत्यन्याः सरोदनमाहुः–ता इति । कुमुदकुन्दशशांकैर्वृंदावनीयपुलिनस्य सर्वशुक्लीकृतत्वाद्रम्ये प्रियाभिरस्माभिः सह रेमे । ईडिता विमानचारिणीभिस्स्वर्गांगनाभिरपि स्तुता कथा यस्य स इति तेन पुरांगना वराव्यः का वा कथा जानान्ति, मथुरायां क्व वैतादृशपुलिनं तदभिमतानि नृत्यगीतवादित्राणि चूडामुकुटस्थासक्वनमालावीटिकादिरचना वा तत्र काः कर्तुं जानंतीति मथुरायां स्थित्या कृष्ण

अप्येष्यतीह दाशार्हस्तप्ताः स्वकृतया शुचा ॥ संजीवयन्नु नो गात्रैर्यथेंद्रो वनमंबुदैः ॥ ४४ ॥ कस्मात्कृष्ण इहायाति प्राप्तराज्यो हताऽहितः ॥ नरेंद्रकन्या उद्वाह्य प्रीतः सर्वसुहृद्वृतः ॥ ४५ ॥ किमस्माभिर्वनौकोभिरन्याभिर्वा महात्मनः ॥ श्रीपतेराप्तकामस्य क्रियेताऽर्थः कृतात्मनः ॥ ४६ ॥

रेमे ताः कदाचित्किं नु स्मरति वा न वेति ॥ ४३ ॥ स्वनिमित्तेन शोकेन तप्ता नोऽस्मान्गात्रैः करस्पर्शादिभिः संजीवयन्किं नु इहैष्यतीति ॥ ४४ ॥ अन्या ऊचुः । कस्मादिति । अनन्यगतित्वेन पूर्वमत्रावसत्संप्रति महदैश्वर्यं प्राप्तः कस्मादिहागमिष्यतीति ॥ ४५ ॥ अन्यास्तु परमार्थमूचुः किमस्माभिरिति । व्रजमेव ओको गृहं यासां ताभिर्वनचरीभिरन्याभिर्वा राजकन्याभिर्महात्मनो धीरस्य किं च श्रीपतेः । तदपि आस्ताम् । स्वत एवाप्तकामस्यात एव कृतात्मनः पूर्णस्य किं कोऽप्यर्थः क्रियेत न कश्चि

स्य सर्वमेव सुखमस्तीभूतमिति तदीयानंदाभावमेत्र स्मृत्वा वयं दुःखेन म्रियामहे, वयमिव तत्र काश्चित्तदभिमता विलासिन्यस्स्युश्चेत्ताभिः सह रासलास्यवेणुवाद्यादिविनोदं च श्रृणुयाम चेत्तदात्र तद्विरहेऽपि वयं सुखेनैव वर्तेमहीति ध्वनितम् ॥ अत्र **तोषिणी**–अहो नागरीगणप्राप्त्याऽस्मान्वा न स्मरतु तद्रासक्रीडारात्रीरपि कच्चित्स्मरतीति पृच्छन्तीत्ययमर्थः । यः खल्वस्माभिर्दुर्भिक्षभिक्षुकीभिरिव सांप्रतमीडिता मनोज्ञा तस्य युष्माकं च मनोरमा कथा ‘ दिष्ट्याहितो हतः कंसः’ इत्यादिरूपा यस्य स तवेश्वरः साक्षान्नामनिर्देशेन लघूकर्तुं शंकनीयस्ताः सांप्रतिकीभ्यः पराभ्यश्च विलक्षणास्तत्र च बहुत्वाद्विस्मर्तुमपारणीया निशाः किं कदाचिदपि स्मरति । यासु कुमुदादिभी रम्यत्वाद्विलक्षण एव वृंदावने तदा तदानीं याः काश्चन तस्य प्रिया आसन् । एवा भवतास्तासु दृश्यमाना दुःखावस्था तासु न संभवतीत्यस्मादृशीभ्यः सर्वाभ्योप्यन्याभिरेव ताभिः सह तस्य तासाञ्च क्वणच्चरणनूपुरतयाऽतिमनोहरायां रासगोष्ठ्यां रेमे स्वयं चिक्रीडेति ॥ ४३ ॥ स्वशब्दोऽत्र कृष्णार्थकः । संजीवन्संतोषयन् । अयीति कोमलामंत्रगे ॥ * ॥ ननु स्मरत्येवेति चेत्तर्हि तस्यात्रागमनं नैव प्रतीम इत्याशयेन रासस्मरणजनितोत्कंठाभरेण तदागमनसंदेशं विस्मृत्यैव पृच्छन्ति–अयीति । दाशार्हः दाशार्हाणां राजा, तत्पालनार्थं व्यग्रोपीति भावः । स्वकृतया शुचेति तत्स्पर्शैकप्रतीकारत्वमन्यथाऽस्निग्धहृदयाविज्ञत्वं स्त्रीवधादभीरुत्वञ्च ज्ञापितम् । गात्रैः सम्यग्जीवयन्निति तत्स्पर्शानाममृतमयत्वम् । तत्र तु वर्तमानप्रयोगेण समागमकाल एव करस्पर्शादिकं विलंबासहत्वं च । यथेति तात्कालिकं तदेकसाध्यत्वञ्च दृढीकृतम्, गर्जनादिनेव संदेशादिना च तापापनोदनं निराकृतम् ॥ **विश्वनाथस्तु**–भोः सख्यः अत एव तस्मात्पुरादुद्विग्नः कृष्णः शीघ्रमत्रागमिष्यतीति तदागमनमाशास्यमाना अन्यास्तत्समभात्रा आहुः–अयीति । स्वनिमित्तेन शोकेन तप्ता अस्मान्स्वगात्रैर्दर्शितैः संजीवयन् किं नु इहैष्यतीति ॥ ४४ ॥ अन्या व्यवहारनिपुणाः । अनन्यगतित्वेनान्याश्रयाऽभावेन । अत्र गोकुले । “राज्यं राज्ञां समूहे च प्राकाश्ये नृपकर्मणि । पंक्तिकृत्ये महैश्वर्ये मुख्यामात्ये नृपस्य च ॥” इति निरुक्तिकारः । प्राप्तं राज्यं महैश्वर्यं मुख्यामात्यत्वं वा येन स तथा ॥ * ॥ तच्छ्रुत्वाऽन्या वाम्यमयस्वभावाः–भोः सख्यः कृष्णस्य रासादिभिः किं सुखं तावन्मुग्धा यूयं किमपि न जानीध्वे तदभिमतसुखं मन्मुखाच्छृणुतेति वक्रोक्त्याऽऽहुः–कस्मादिति । अत्र गोचारणक्लिष्टस्तत्र प्राप्तराज्योऽभूत्, अत्र गोपजातिभिस्तत्रापि परकीयाभिः किं सुखं, तत्र तु नरेन्द्रेत्याद्युद्वाह्येति । क्वचित्पुराणे मथुरास्थस्य कृष्णस्य रुक्मिण्युद्वाहः कल्पभेदेन ज्ञेयः । प्राप्य मथुरामित्यधिकृत्य “रामानिरुद्धप्रद्युम्नै रुक्मिण्या सहितो विभुः ” इति गोपालतापिन्यां च श्रूयते ॥ अत्र **तोषिणी**–नन्वेष्यत्येवेति चेन्न घटेतेत्याहुः–कस्मादिति । तदेव दर्शयन्ति–प्राप्तेत्यादिना । ननु तथापि भवतीनां विरहार्त एष्यत्येव तत्रान्यथा संभावयन्ति–नरेंद्रेति । प्रीत इति–अस्मद्द्रोपजातेस्तस्य तेनैवाभीष्टक्षत्रियजातित्वसिद्धेः कांताविशेषलाभाच्च । ननु तथा सत्यपि मातापित्रादीनामत्रत्यानां परमसुहृदां प्रीत्यर्थमेष्यत्येव, तत्राहुः–सर्वेति । सर्वे ते लब्धाः परेष्वधुना कापेक्षेत्यर्थः । यद्वा–तत्रत्यैः सुहृद्भिरत्रागच्छन्नसौ निवारयितव्य इति भावः ॥ ४६ ॥ अन्या आप्ताः । न केवलं धीर एव किन्तु

**परं सौख्यं हि नैराश्यं स्वैरिण्यप्याह पिंगला ॥ तज्जानतीनां नः कृष्णे तथाऽप्याशा दुरत्यया ॥ ४७ ॥ क उत्सहेत संत्यक्तुमुत्तमश्लोकसंविदम् ॥ अनिच्छतोऽपि यस्य श्रीरंगान्न च्यवते क्वचित् ॥ ४८ ॥ सरिच्छैलवनोद्देशा गावो वेणुरवा इमे ॥ संकर्षणसहायेन कृष्णेनाऽऽचरिताः प्रभो ॥ ४९॥**

**दिति ॥ ४६ ॥ यतोऽघटमानापि या कृष्णस्य संगतिः सैवास्मान्व्याकुलयत्यतो नैराश्यमेव परमं सुखं तच्चातिदुष्करमित्याहुः परं सौख्यमिति । स्वैरिणी कामचारिणी ॥ ॥ ४७ ॥ संविदमेकांतवार्ताम् ॥ ४८ ॥ किं च तद्विस्मृतौ न तावद्दुःखमस्ति साऽपि नास्माकं संभवतीत्याहुः सरिच्छैलेति त्रिभिः । आचरिताः सेविताः ॥ ४९ ॥**

सर्वसौंदर्याधिष्ठानभूतलक्ष्मीपतिरपीत्याहुः—किं चेति । तदपि श्रीपतित्वमपि । आस्तां तिष्ठतु, न तयापि तस्य किञ्चित्कृत्यमस्तीत्याहुः—स्वतः स्वभावत एवाप्तकामस्य प्राप्ताखिलाभीष्टस्य । अत एवाप्तकामत्वादेव । अर्थः प्रयोजनम् ॥ * ॥ नरेन्द्रकन्योद्वाहस्य हेतुत्वमाक्षिप्य तास्वपि कारुण्यं व्यंजयन्त्य इव तस्य नैरपेक्ष्यमेव हेतुं सेर्ष्यमाहुः—किमिति । तत्र हेतुः—महात्मनः, महांस्तदुपर्यपि वर्तमान आत्मा चित्तं यस्य । यतः श्रीपतेः श्रियः सर्वैराश्रयितुमभीष्टाया अपि तत्रतत्र तदनुगामिन्या लक्ष्म्याः पत्युः । अत एवाप्तकामस्य यथेष्टविषयपूर्णस्य । अत एव कृतात्मनः लब्धधृतेरिति । ततः काचिदपि कन्यका तस्य विवाहाय नाहर्तव्येत्युद्धवं प्रति च निगूढः प्रयत्नः सूचितः ॥ अत्र **विश्वनाथः**—भोः सहचर्यः प्रेमशून्ये कृष्णे ईर्ष्यासूयादिकं त्यज्यतामिति वदंत्यस्तस्य सर्वत्रौदासीन्यमन्या आहुः—किमिति । ननु श्रीपतित्वात्तस्यां तस्य प्रेमास्ति चेन्न, आत्मकामस्य कृतात्मनः पूर्णस्वरूपस्य तयापि किं कोर्थः क्रियेत क्रियते । 'युगपर्याप्तयोः कृतम्' इत्यमरः । पर्याप्तिः परिपूर्णता । अन्यत्पूर्ववत् ॥ ४६ ॥ यतो यस्मात् । अघटमाना भवितुमशक्या या । तच्च नैराश्यम् । पिंगला तन्नाम्नी वेश्या । तथापि नैराश्यं परं सुखमिति ज्ञाने सत्यपि । आशा तृष्णा । दुरत्यया त्यक्तुमशक्या ॥ * ॥ तर्हि तत्प्राप्त्याशा त्यज्यतामिति चेन्न, सा सर्वथैव त्यक्तुमशक्येत्याहुः—परमिति । तदपि कृष्णे आशा कृष्णविषया ह्याशा दुरत्यया सर्वैरेव दुस्त्यजा । पिंगलायाः खलु पुरुषान्तर एवाशाऽऽसीदतः सा तया त्यक्तेति भावः ॥ अत्र **तोषिणी**—परं परमम् । हि एव नैराश्यमेव । स्वैरिणीत्वेन तथा वक्तुमनर्हापीत्यपिशब्दार्थः । न च मंतव्यं तद्वयं न विद्म इत्याहुः—तन्नैराश्यमेव सुखमिति जानतीनामपीत्यन्वयः । तथापि तादृश्याशा दुरत्यया कथमपि त्यक्तुं न शक्येत्यर्थः । कुतः—कृष्णे चित्ताकर्षके श्रीव्रजेन्द्रनंदन इत्यर्थः । तत्राप्यघटमानायाः श्रीकृष्णसंगतेराशैवास्मानाकुलयतीत्युन्नेयम् । स्वैरिण्यपीत्यनेन " तास्तन्मनस्कास्तत्प्राणास्तदर्थे त्यक्तदैहिकाः । तमेव दयितं प्रेष्ठमात्मानं मनसा गताः ॥" इति वयं स्वैरिण्यस्तु न मन्तव्या इति व्यज्य श्रीभगवता 'बल्लव्यो मे मदात्मिकाः' इतिवत्तथा स्वयमपि 'जारो भुक्त्वा रतां स्त्रियम्' इत्यर्थान्तरन्यासीकृत्य तस्मिंस्तत्परिहारवत् '—मधुपुर्यामार्यपुत्रोऽधुनास्ते' इति साक्षादुक्तिवच्च परमसाधुशिरोमणावुद्धवे संकोचः परिहृत इति च ज्ञेयम् ॥ ४७ ॥ न केवलमस्माकमेव कृष्णाशा दुस्त्यजा किं त्वन्यस्यापीत्याहुः—क इति । यस्य कृष्णस्य ॥ * ॥ तदेवाभिव्यंजयंति—क इति । को जनो लोकमात्रं किं पुनः स्त्रीत्यर्थः । उत्सहेत अध्यवसायमपि कुर्यात् किं पुनस्त्यजेदिति, संत्यक्तुम् अदार्ढ्यज्ञानैरप्यवज्ञातुं किं पुनर्विस्मर्तुम् । उत्तमाः श्लोका गुणरूपादिवर्णा अपि यस्य तस्य संविदम् 'न पारयेहम्' इत्यादिरूपाम् । संत्यक्तुमिति संशब्देन मानादावप्यंतस्त्यागो निषिद्धः । कुतः—तदाह—अनिच्छत इति । 'नाहमात्मानमाशासे' इत्यादिवन्नवनवप्रियानुरागेण प्रियामनपेक्षमाणस्यापि श्रीर्लक्ष्मी रेखारूपेण वर्तमाना अंगाद्वक्षसः क्वचित्कदाचिदपि न च्यवते नापयाति॥**विश्वनाथस्तु**—लोभी खलु लोभ्यं वस्तु प्राप्नोतु न प्राप्नोतु वा किन्तु तत्रौत्सुक्यं त्यक्तुं नोत्सहत इत्याहुः—क इति । उत्तमश्लोकस्य कृष्णस्य संविदं सौंदर्यमाधुर्याद्युपलब्धिं त्यक्तुं क उत्सहेत,न कोपि । अन्यत्समम् ॥ ४८ ॥ अतिदुःखिता आहुः—किञ्चेति । तद्विस्मृतौ कृष्णविस्मरणे । सापि तद्विस्मृतिरपि । इम इति—तदाविष्टमनस्त्वात्प्रत्यक्षीभूता इवेति प्रतीयते तासामिति भावः । प्रभो इति—तद्दूतत्वात्त्वमप्यस्माकं प्रभुरेवेत्य

पुनःपुनः स्मारयंति नंदगोपसुतं बत ॥ श्रीनिकेतैस्तत्पदकैर्विस्मर्तुं नैव शक्नुमः ॥ ५० ॥ गत्या ललितयोदारहासलीलावलोकनैः ॥ माध्व्या गिरा हृतधियः कथं तद्विस्मरामहे ॥ ५१ ॥ हे नाथ हे रमानाथ व्रजनाथार्तिनाशन ॥ मग्नमुद्धर गोविंद गोकुलं वृजिनार्णवात् ॥ ५२ ॥

॥ ५० ॥ हे उद्धव तं कथं विस्मरामेति ॥ ५१ ॥ ५२ ॥

भिप्रायः । यद्वा—त्वं प्रभुरसीत्यतो गोपीवच्छ्रीकृष्णावेशं कुर्विति शुकोक्तिः ॥ * ॥ किञ्च—तद्विस्मृतौ सत्यामाशापि हीयते सा त्वस्माकं नैव घटत इत्याहुः—सरिदिति त्रिभिः । आचरिता अनुशीलिताः, श्रीनिकेतैर्ध्वजवज्रादिचिह्नशोभायुक्तैः, शिलादिष्वद्यापि वर्तमानैः । तोषिण्यवतरणिका पूर्ववत् । वनोद्देशेन व्रजोपि गृह्यते तदंतर्वर्तित्वात्तस्येति सर्वाण्यत्रस्थानानीत्यर्थः । वेणुरवा इदानीमपि कैश्चित्क्रियमाणाः, इमे तु स्फूर्त्या प्रत्यक्षा इव क्रियन्ते । तत्र गाव इत्यत्र लिंगं विपरिणमनीयम् । आचरिता इति व्याख्यातमेव । अन्यकृतवेणुरवस्यापि तदनुशीलित्वं जात्यैक्यात् । संकर्षणसहायेनेति—तत्रतत्र शोभादिपरिपोषात्तेनापि सहागमनमीहितम् । पुनःपुनरिति स्मरणाऽविच्छेदेऽपि स्मरणविशेषाणां पुनःपुनरतिशयिता ध्वनिता । प्रभो इति परमदैन्येन । यद्वा—हे प्रभो सर्वदा समर्थेति त्वमेवात्र न्यायकर्ता भवेति भावः ॥ ४९ ॥ नंदगोपसुतमिति तस्य तत्रत्यत्वेऽप्यन्तर्हितलीलत्वात्तथोक्तिर्लोकदृष्ट्येति ज्ञेयम् । बताश्चर्ये । सार्धेनान्वयः।ननु सरिदाद्यवलोकनं श्रीकृष्णं स्मारयत्यन्यदा तन्नास्तीत्यागतमिति तत्राह—तत्पदकैः, तस्य कृष्णस्य प्रशस्तपदैः । प्रशस्तता तत्र कथमितिचेदाह—श्रीनिकेतैर्ध्वजवज्रादिश्रीविशिष्टैः ॥ * ॥ श्रीनंदाभिधस्य गोपस्य राज्ञः सुतमिति भवद्विधोपदेशात्प्रयत्नशतैरीश्वरत्वेन स्मर्ययिष्यमाणमपि तद्रूपं तथैव स्मारयन्तीति ज्ञानाद्यवसरो व्यंजितः । ननु तत्रतत्रानुसंधानमात्रं बलात्त्यक्त्वा तं विस्मरत, तत्राहुः—श्रीनिकेतैर्ध्वजाद्यसाधारणलक्षणैः । श्रियः सर्वस्याः संपदः शोभाया वा निकेतैस्तस्य पदकैः, सर्वत्रोदितैस्तल्लीलाभेदेन पदचिह्नानां प्रकारैः । स्थूलादित्वात्प्रकारे कन् । तदानीमपि तेषामनुवृत्तिः प्राग्व्युत्पादितैव ॥ ५० ॥ माध्व्या मनोहरया । तत्तम् ॥ * ॥ ननु वस्त्रेण नेत्रमावृत्य बुद्ध्या मनोऽन्यत्र नीत्वा सर्वं तदीयं विस्मृत्य स विस्मर्यतां तत्राहुः—गत्येति, अनया देहचेष्टामात्रमुपलक्षितम् । उदारहासश्च लीलावलोकनानि च तैरिति तदयिभाव विशेषः । बहुत्वं तेषां प्रत्येकपरंपरया । माध्व्या शब्दतोऽर्थतश्च मधुरया । एवं विविधचेष्टया हृतबुद्धयस्तद्गत्यादिकं तदीयसौहृदं वा कथं केनोपायेन विस्मरामोऽपि तु न कथमपीत्यर्थः । यद्वा—पुनरन्यो वा तदुपाय उपदिश्यतामित्यर्थः ॥ अत्र **विश्वनाथः**—ननु शरदादिषु कुत्राप्यगत्वा चैलेनाक्ष्यावृत्य धिया मनोऽन्यत्र प्राप्य स विस्मर्तव्यस्तत्राहुः—धीर्नास्त्येव तेनैव हृतत्वादित्याह—माध्व्या मधुमय्या । हे उद्धव ॥ ५१ ॥ स्वजपनीयमंत्रं प्रकाशयंत्य आहुः—हे नाथ सर्वैश्वर्ययुक्त । रमयापि स्वाभीष्टावाप्तये नाथ्यते प्रार्थ्यत इति तथा । व्रजनाथानां गोपीनां गोपानां वार्तिनाशन । यद्वा—व्रजं नाथयंत्युपतापयंतीति व्रजनाथाः कंसादयस्तानार्त्या पीडनेन नाशयतीति तथा । भिन्नपदे वा । गोकुलं तद्वासिनः । त्वद्वियोग एव वृजिनं दुःखं तदर्णवात्, न हि गोविन्दस्य गोकुलोपेक्षोचितान्यथा नाम्नोऽन्वर्थता न स्यादित्यभिप्रायः ॥ * ॥ ततश्चाऽस्माकं दुःखमस्योपदेशान्नापगच्छेदिति तमुद्धवमनादृत्य समुत्थिततया मथुराभिमुखीभवंत्यः समुन्नतनादेन स्वकान्तमेव संबोधयंत्यः सदैन्यरोदनमाहुः । तत्र च तस्य गोकुलप्रियतास्मरणेन गोकुलदुःखासहनतया स्वदुःखमप्यनादृत्य गोकुलरक्षामेव प्रार्थयन्ते—हे कृष्णेति । सर्वतदीयाद्भुतरूपगुणक्रीडाक्रोडीकारितया संततं निजांतःस्फुरता विशेषनाम्ना प्रथमतः संबोधनम् । हे रमानाथेत्यादिना विशेषेण नामभिरिति ज्ञेयम् । हे कृष्णेत्यत्र हे नाथेति क्वचित्पाठे

१ हे कृष्ण हे रमानाथेति पा० ।

**श्रीशुक उवाच ॥ ततस्ताः कृष्णसंदेशैर्व्यपेतविरहज्वराः ॥ उद्धवं पूजयांचक्रुर्ज्ञात्वात्मानमधोक्षजम् ॥ ५३ ॥**

**श्रीकृष्णमधोक्षजं ज्ञात्वा तं च स्वात्मानं ज्ञात्वा ॥ ५३ ॥**

प्रथमतः स्वीयभावस्फूर्तिः, हे सर्वासामस्माकमासां स्वामिन्नित्यर्थः । हे रमानाथेति रमापर्यंतनाथ्यमानकृपादृष्टितया परमदुर्लभ । तत्र च 'तस्मान्मच्छरणं गोष्ठं मन्नाथम्' इत्याद्यनुसारेण व्रजस्य नाथ । आर्तिनाशनश्च सन् निर्वाहिततादृशसंकल्प । अतोऽधुना तु दुःखसमुद्रे मग्नं गोकुलं सर्वांस्तत्रत्यान्प्राणिन उद्धर । 'वृजिनार्णवात्' इति क्वचित्पाठः । सकृन्निजदर्शनेन सर्वं दुःखमपास्य पुनर्जीवयन्सुखी कुर्वित्यर्थः । तत्र च हे गोविंदेति संबोध्य गोकुलेंद्रतयाभिषिक्तस्य तव गोविन्दतापालनार्थमप्यवश्यमेवेदं कृत्यमिति सूचितवत्यः । "स्वेषामात्मवियोगार्तिमप्यवज्ञाय वल्लभाः । व्रजस्य हर्तुं वृण्वाना निरस्येत्कथमच्युतः ॥" इति ॥ अत्र **विश्वनाथः**—तत उद्धवमप्यनादृत्य परमार्त्या मथुराभिमुखीभवन्त्यः कृष्णोद्देशेनैव संबोधयन्त्यः सगद्गदमाहुः—हे कृष्ण अयोग्यानामप्यस्माकं चित्ताकर्षक । हे रमानाथ रमयापि नाथ्यमानाद्भुतमाधुर्यरसविलासादिमहासंपत्ते । हे व्रजनाथ व्रजस्थानां नाथेति । हे आर्तिनाशन पूर्वं गोवर्द्धनं धृत्वेंद्रकृतार्तिमनाशयद्भवानित्यर्थः । संप्रति तु त्वद्विरहादेव सर्वतोऽप्यधिके वृजिनस्यार्णवे एवाद्यश्वो वा नश्यदेव गोकुलमिति स्वयमेवागत्योद्धर । हे गोविंद स्वपालितचरीः स्वीयगवीर्विन्दस्व, अलं दूतप्रस्थापनयेति भावः ॥५२॥ ततः प्रार्थनोत्तरम् । ता गोप्यः । अधोक्षजं ब्रह्म । तमधोक्षजमेवोद्धवोपदेशात आत्मानं ज्ञात्वा निरस्तवियोगतापाः ॥*॥ अत्र **तोषिणी**—अतः पुनरपि तासां वैयग्र्यं दृष्ट्वा कथितैः 'भवतीनां वियोगो मे' इत्यादिकैः 'मय्यावेश्य मनः कृष्णे' इत्याद्यंतैर्महामंत्रैरिव कृष्णसंदेशैर्व्यपेतो विरहोत्थज्वरो महासंतापो न तु तत्प्राप्त्यैकनाश्यो विरहो यासां तादृश्यः सत्यः संप्रत्येवोद्धवं यथा स्वावस्थमातिथ्योचितं पूजयांचक्रुरिति पूर्वमारब्धापि पूजा दुःखेन वितथा जातेत्यधुना तु विशेषेणैवेत्यर्थः । ननु संदेशमात्रेण कथं व्यपेतविरहज्वरत्वन्तत्राह—ज्ञात्वेति । तत्र प्रथमार्थे यस्यात्मनो ज्ञानं संदिष्टं तमात्मानमधोक्षजं श्रीकृष्णमेव मत्वा न त्वन्यम्, तत्रायमभिप्रायः—" अनुवादमनूक्त्वा तु न विधेयमुदीरयेत् " इति न्यायादत्र तदुपदेशाज्ज्ञातत्वेन तस्यात्मत्वमनूद्य पुनरधोक्षजापरपर्यायश्रीकृष्णत्वमेवाभिधीयते । तत्रात्मशब्देन सर्वात्मोच्यते, अधोक्षजशब्देन रूढिवृत्त्या प्रसंगसंगत्या च श्रीकृष्ण एव प्रतिपाद्यते, तत्रैव योगवृत्त्या सर्वेन्द्रियाधिकारित्वम्, तत्र च सति मया सर्वात्मनेति यत्पूर्वमुपदिष्टं तत्खलु लक्षणया निर्विशेषस्वरूपत्वेनैवेत्याविद्यावादिनः । परमविशेषवत्परमस्वरूपत्वेनैवेत्याचिन्त्यशक्तिवादिनः । तादृशविशेषवत्त्वेपि मे मयेत्युक्तेः कृष्णतया विलक्षणेनेति प्रकरणदर्शिनः । तथैव " कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् " इत्यादौ स्वाभाविकपरमप्रेमास्पदत्वोचित्तं सर्वात्मत्वं स्थापयित्वा "देहीवाभाति मायया" इत्यत्र देहिशब्दोक्तजीवत्वं निषिद्धमिति तत्र व्याख्यातमेव । तत्र यद्यपि गोवर्द्धनमखप्रवर्तनाय कर्मवादादिवदभीष्टमप्यत्र प्रथमार्थे परमरहस्यांतरार्थद्वयाच्छादनाय स्वस्मादुपरततया विरहसंतापमयकालक्षपणाय च श्रीभगवता निर्विशेषत्वमेव प्रतिपादितं, प्रथमतस्ताभिरप्यपेक्षितं तथापि पुनस्ताभिस्तच्छ्रवणाद्विलक्षणस्वरतिस्वाभाव्येन श्रीकृष्णस्यैव सदा सर्वत्र स्फुरणान्निजसर्वेन्द्रियप्रवर्तकत्वेनाभिगमाच्च । तत्र श्रीकृष्णत्वमेव पर्यवसाय्यते स्म तदेवास्माभिरप्यनूद्य विधेययोरात्माधोक्षजशब्दयोः क्रमबलाद्दृश्यते, अन्यथाऽद्वैतावेशे सति पूज्यपूजकत्वाननुसंधानात्ताभिरुद्धवस्य पूजनं न प्रसज्येत च । द्वितीयेऽर्थे—यथाऽसावस्माननुभवति सदा तथा वयमपि तमित्यविनाभावस्फूर्तेरात्मानमधोक्षजतादात्म्यापन्नं मत्वेति व्याख्येयम् । तृतीयेऽर्थे—यथा तेन संदिष्टं तथैवात्मानं मत्वेत्यर्थः । 'मय्यावेश्य मनः कृष्णे' इति । चतुर्थपक्षे तु—यथा कृष्णेनादिष्टं तथात्मानमचिरात्कृष्णं प्राप्स्यंतं तथैवाधोक्षजं च कृष्णमचिरात्स्वं प्रापयिष्यन्तं ज्ञात्वा निश्चित्येत्यर्थः । चशब्दं विनापि तदर्थः स्वयं गम्यते 'ब्रह्मेति परमात्मेति भगवान्' इतिवत् । किन्तु "ततस्ताः कृष्णसंदेशैर्ज्ञात्वात्मानमधोक्षजम् " 'व्यपेतविरहज्वराः' 'उद्धवं पूजयांचक्रुः' इति क्रममकृत्वा यदुद्धवमित्याद्यनन्तरम् 'ज्ञात्वात्मानमधोक्षजम्' इति पठितं तत्खलु यथा श्रीनंदस्य गर्गदर्शने 'तं दृष्ट्वा' इत्यादि 'आनर्चाधोक्षजधिया' इति तदाश्वासने च 'वासुदेवधियार्चयत्' इत्यातिथ्यौचित्यं तथैव संगच्छते, यदत्रापि विशेषणद्वयेन तासां तत्र परमात्मदृष्टिरेव निर्दिष्टेति ॥ **विश्वनाथस्तु**—ततश्च तासु दुःखेनाशामपि शिथिलयित्वा मर्तुमुद्यतासु अन्यानप्यतिरहस्यान्संदेशानुक्त्वो

उवास कतिचिन्मासान्गोपीनां विनुदञ्छुचः ॥ कृष्णलीलाकथा गायन्रमयामास गोकुलम् ॥ ५४ ॥
यावंत्यहानि नंदस्य व्रजेऽवात्सीत्स उद्धवः ॥ व्रजौकसां क्षणप्रायाण्यासन्कृष्णस्य वार्तया ॥ ५५ ॥

विनुदन्नपनयन् ॥ ५४ ॥ ५५ ॥

द्धवस्ता आनन्दयामासेत्याह—ततस्ता इति । ततस्तदनन्तरं ये कृष्णसंदेशाः पूर्वसंदेशेभ्यो भिन्नास्तैरित्यन्वयः । ते च संदेशाः श्रीशुकेनाविवृता अपि फलतो ज्ञेयाः । यथा—भोः प्राणप्रेयस्यः संप्रेषितस्योद्धवस्याग्रे युष्माभिश्च क्षूंषि मुद्रयितव्यानि ततश्च पूर्वं यथा गोपालबालकाश्चक्षुर्मुद्रणेन मुंजाटवीदावानलादुद्धृतास्तथैव विरहानलाद्भवतीरुद्धरिष्यामि, पश्यत मे योगबलमिति संदेशश्रवणेन ता यदैव चक्षूंषि मुद्रयामासुस्तत्क्षणमध्य एव शतकोटिवर्ष समयं योगमायया प्रवेश्य तत्र ताभिः सह रासवृन्दावनविहारद्यूतमधुपानजलविहारहिन्दोलनादिविलासानन्यालक्षितान्कृष्णस्तावच्चक्रे यावद्भिः सा विरहपीडा सम्यगेव विस्मृता भवेत् । ततश्च तासामंगान्यानन्दसमुदितान्यालक्ष्य मुहूर्तानन्तरं—भोः स्वामिन्यः सांप्रतं चक्षूंष्युन्मीलयतेत्युद्धवेनोक्ते सति ताश्चक्षूंष्युन्मील्याधोक्षजम्—अधः कृतेभ्योऽक्षिभ्यो निमीलितेभ्यो नेत्रेभ्यः परःसहस्रानन्दप्राप्त्या पुनर्जातमिवात्मानं स्वं ज्ञात्वा पूजयांचक्रुः । प्रतिक्षणं यतमानोऽप्यहं यन्न शक्नोमि तत्रायं काल एव कर्मैव व्याख्यातलक्षणं प्रेमैव वा प्रतिबन्धक इत्यहं शंके । इत्येवं प्रकारकैः संदेशैर्व्यपेतो विरहज्वरः स्वेषु तत्प्रेमाभावनिश्चयलक्षणः संतापो यासां ताः । अधोक्षजं कृष्णमात्मानम् आ अतुल्यं विरहसंतापजर्जरं ज्ञात्वा । किं वा—आत्मानम् आत्मनः स्वानेव आप्राणा यस्य तथाभूतमधोक्षजं कृष्णं ज्ञात्वोद्धवं पूजयांचक्रुरिति—भो उद्धव साधूक्तमतः परं कष्टेनापि स्वप्राणा आत्मानं स्वस्वजीवात्मानमधोक्षजं परमात्मानं ज्ञात्वेति । प्रकटोर्थोऽसुरमोहनार्थ एव न तु वास्तवः शास्त्रस्यास्य मोहिनीसाधर्म्यात् । न हि केनापि प्रेमरसास्वादिना भक्तेनैकात्म्यज्ञानं कदापि रोचितम्, आभ्यः प्रेमिभक्तमुकुट शिखामणिभ्यस्तत्कथं रोचताम्, "तत्कथामृतपाथोधौ विहंरतो महामुदः । कुर्वन्ति कृतिनः केचिच्चतुर्वर्गं तृणोपमम् ॥" इत्यार्षशास्त्रतात्पर्याभिज्ञैः स्वामिचरणैरप्युक्तम् । नापि बलवताप्यात्मज्ञानेन संपूर्णः प्रेम काप्यावरीतुं शक्यो दृष्टः, वसुदेवार्जुनयोरपि महैश्वर्यदर्शनोद्दीपितदास्यभक्त्यैव वात्सल्यसख्यभावावृतौ न तु ब्रह्मज्ञानेन । यत्तु 'ते तु ब्रह्मह्रदं नीता मग्नाः कृष्णेन चोद्धृताः' इति व्रजौकसां ब्रह्मरसनिमग्नत्वं श्रूयते तदपि ब्रह्मज्ञानस्य तदरोचकत्वज्ञापनार्थमेव, त एव तत्रोद्धृता इति पदं प्रयुक्तं यथा संसारकूपाज्जीवा उद्ध्रियंते तथैव व्रजौकसस्ते ब्रह्मरसादुद्धृता इति, किञ्चासामुत्पन्नात्माभेदज्ञानवत्त्वे "गोप्यो हसंत्यः पप्रच्छू रामसंदर्शना दृताः । कच्चिदास्ते सुखं कृष्णः पुरस्त्रीजनवल्लभः ॥" इति । "कथं नु गृह्णंत्यनवस्थितात्मनो वचः कृतघ्नस्य बुधाः पुरस्त्रियः" इत्याद्यग्रिमवचनानि साभिमानान्यज्ञानद्योतकानि संभवेयुरिति विवेचनीयम् ॥ ५३ ॥ अपनयन् दूरीकुर्वन् । कृष्णस्य लीला यासु ताः ॥ * ॥ ततश्च श्रीगोपीप्रमुखानां श्रीकृष्णस्फूर्तौ साक्षात्कारत्वप्रतीत्या तन्नित्यलीलायां मानसप्रत्यक्षमयप्रवेशेन 'मय्यावेश्य मनः कृष्णे' इति तद्वाश्वासने च प्रायो विच्छिन्न एव शोक इत्याह—उवासेति त्रिभिः । विनुदन् बहिर्विरहानुसंधानेन विस्मृतौ सत्यां पुनःपुनस्तैः संदेशैरपनुदन् । एतदुपलक्षणत्वेन श्रीनंदयशोदयोरपि तथा तदपनयनं ज्ञेयम् । यत्त्वन्यद्गोकुलं तज्जनवृंदं तत्स्फूर्त्यैव तत्साक्षात्कारप्रतीतिमयं तदपि माथुरीगोकुलसंबंधिनीश्च श्रीकृष्णस्य लीला कथा गायन् रमयामास तल्लीलानां साक्षादेव स्फोरणेन प्रीणितवान् ॥ ५४ ॥ क्षणप्रायाणि क्षणकल्पानि, क्षणो (द्वा) दशपलात्मकः

सरिद्वनगिरिद्रोणीर्वीक्षन्कुसुमितान्द्रुमान् ॥ कृष्णं संस्मारयन्रेमे हरिदासो व्रजौकसाम् ॥ ५६ ॥ दृष्ट्वैवमादि गोपीनां कृष्णाऽऽवेशात्मविक्लवम् ॥ उद्धवः परमप्रीतस्ता नमस्यन्निदं जगौ ॥ ५७ ॥ एताः परं तनुभृतो भुवि गोपवध्वो गोविंद एव निखिलात्मनि रूढभावाः ॥ वांछंति यद्भवभियो मुनयो वयं च किं ब्रह्मजन्मभिरनंतकथारसस्य ॥ ५८ ॥

सरिद्वनगिरिदर्यादिषु प्रत्येकं श्रीकृष्णलीलासंप्रश्नादिभिर्व्रजौकसां तं संस्मारयन्रेमे॥५६॥कृष्णावेशेनात्मनो मनसो विक्लवं वैक्लव्यं दृष्ट्वा। ता गोपीर्नमस्यन्नमस्करिष्यन्नुत्तमस्यात्मनो गोपस्त्रीनमस्कृतिरन्याय्या भवतीति दर्शयितुं तासां महत्त्वं पंचभिर्जगौ उवाच ॥ ५७॥ एता इति । एताः परं केवलं तनुभृतः सफलजन्मानः रूढभावाः परमप्रेमवत्यः। यदिति । यं रूढं भावं भवभियो मुमुक्षवो मुनयो मुक्ता अपि वांछंति वयं च भक्ता अपि । अतोऽनंतस्य कथासु रसो रागो यस्य तस्य ब्रह्मजन्मभिर्विप्रसंबंधिभिः शौक्लसावित्रयाज्ञिकैस्त्रिभिर्जन्मभिः किं कोऽतिशयः । यत्र तत्र जातः स एव सर्वोत्तम इत्यर्थः । यद्वा अनंतकथासु रसो यस्य तस्य ब्रह्मजन्मभिश्चतुर्मुखजन्मभिरपि किं न किम

कालः ॥ * ॥ तदेव विवृणोति—यावंतीति।क्षणप्रायाणीति—उद्धवस्यान्वर्थनामत्वाद्भगवताप्यानंददातृत्वस्वशक्त्यर्पणाच्चेति गम्यते ॥५५॥ संप्रश्नैरत्र किं कृतं—भगवतात्र किं कृतमित्येवंरूपैः । पार्श्वद्वयोन्नतनिम्नानिम्नपत्रकुसुमितवृक्षनिविष्टा स्थली द्रोणी, सानुविशेषो वा । हरिदासो हरिसेवको ज्ञातात्मतत्त्वो वा “दासो भृत्ये तथा शूद्रे ज्ञातात्मनि च धीवरे” इति मेदिनी ॥ * ॥ सम्यक्स्मारयन् साक्षात्कृतनिर्विशेषं कुर्वन्नित्यर्थः । तादृशानामपि तेषां स्मरणे यत्सम्यक्त्वं तत्तथैव पर्यवस्यतीत्यत एव स्वयमपि रेमे । गत्वादिवत्स्फूर्तिविशेषाद्द्रुमाणामपि कुसुमितत्वमुक्तम् ॥ ५६ ॥ एवमादि पूर्वोक्तभ्रमरोद्देश्यकगानादिप्रार्थनांतरूपम् । अन्याय्याऽयोग्या । तासां गोपीनाम् । उत्कृष्टो धवः स्वामी श्रीकृष्णो यस्य स उद्धवः ‘धवः पतिर्धवो भीरुः’ इत्यनेकार्थध्वानिमंजर्याम् । उद्धुनोति द्रावयति निजसंगिनामज्ञानमिति वा ॥ * ॥ एवं यद्यपि सर्वेषामेव व्रजवासिनां श्रीकृष्णे सर्वविलक्षणः प्रेमा तथापि श्रीगोपीषु तस्य परमचमत्कारमयी भक्तिर्जातेति । दृष्ट्वेत्यादि—एवमुक्तप्रकार आदिर्यस्य तच्चरितमिति शेषः । कृष्णावेशेनात्मनो विक्लवो दिव्योन्मादादिर्यत्र तदननुभूतं दृष्ट्वा परमप्रीतः तद्दर्शनात्स्वभाग्यस्फुरणे चासां गुणानुमोदनेनैव वात्यंतहृष्टो नमस्यन्नमस्कर्तुं स्तोत्रतया जगौ, आवेशेन सुस्वरं तुष्टाव । किं वा—झटिति प्रणमन्नेव जगौ, प्रत्यहं गमनागमनसमये किंचिद्व्यवहितदूरे स्थित्वेति ज्ञेयम् ॥ ५७ ॥ एता गोप्यः अपि वांछाम इत्यर्थः । यतो भगवत्प्रेमैवोत्कर्षहेतुरतो हेतोः । अनन्तस्य हरेः । अतिशय आधिक्यम । यत्र तत्र यस्मिन्कस्मिन्वंशे । स एव भगवद्भक्त एव । इत्यर्थ इति—‘विप्राद्द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठम्’ इत्याद्युक्तेः । ननु ‘ब्राह्मणो जन्मना श्रेयान्’ इत्याद्युक्तेः “ब्रह्म ब्राह्मण आत्मना” इति श्रुतेश्च तान्निन्दात्र प्रतीयतेऽतोर्थांतरमाह—यद्वेति । इत्यर्थ इति—“ स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिंचितामेति ततः परं हि माम् । अव्याकृतं भागवतोऽथ वैष्णवं पदं यथाहं विबुधाः कलात्यये ॥” इति शंकरोक्तेः ॥ * ॥ गोपीमाहात्म्यविद्वर्यं सर्वभागवतोत्तमम् । तमुद्धवं प्रपद्येऽहं तद्गीतार्थविलुब्धधीः ॥ ननु भवद्भिः क्षत्रियैर्ब्राह्मणा एव नमस्या इति स्थिते ‘ क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः ’ इति कस्यचिद्दुर्मतमाशंक्य तासामेव सर्वोत्तमतनुत्वं स्थापयंस्त्रिभिः प्रथमं तावद्भगवन्महाप्रेमप्रकाशाकरत्वेन स्थापयति, तत्राह—एता इति द्वाभ्याम् । एताः श्रीनन्दव्रजवासिन्यः श्रीभगवत्प्रेयस्यः परं केवलं संप्रति भगवदवतारसहभावसम्पन्नतदुक्तिसाधकासिद्धनित्यसिद्धालंकृतायां भुवि तनुभृतः परमोत्तमतनुधारिण्य इति स्त्रीत्वादिदृष्ट्या नावमन्तव्याः । कथम्—तत्राह—अखिलात्मनि सर्वांशिनि स्वरूपत्वादेव सर्वेषां तावन्निरुपाधितादृशपरमप्रेयसीयोग्ये, तत्रापि गोविन्दे परमरूपगुणसीमताविख्यातगोकुलेन्द्रतया प्रकाशमाने रूढभावा उद्भूतमहाभावाः, तत्राप्येवमित्यनुभवैकवेद्येनानिर्वाचनीयप्रकारेणेत्यर्थः । तस्मात्तादृशभावतेजोमय्यस्तनवो यासां सर्वोत्तमा इति भावः । तत्र प्रमाणानि तु समनंतरमेव

क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः कृष्णे क्व चैष परमात्मनि रूढभावः ॥
नन्वीश्वरोऽनुभजतोविदुषोऽपि साक्षाच्छ्रेयस्तनोत्यगदराज इवोपयुक्तः ॥ ५९ ॥

**पीत्यर्थः ॥५८॥ किं च इश्वरप्रसादो महत्त्वे कारणं तस्य च न जातिराचारो ज्ञानं वा कारणं किं तु केवलं भजनमेवेत्याह । क्वेमा इति । साक्षाद्भजतः पुंसः । ननु अहो**

दर्शयिष्यन्ते।तदर्थं तादृशभावमहिमानमाह—यद्भावमात्रमास्तां तावद्दूरतस्तद्विशेषवार्ता मुमुक्षवो मुक्ताश्च वाञ्छन्ति, वयमपिनित्यतत्संगिनो भक्ता महिमदृष्ट्या केवलं वाञ्छामो न तु प्राप्नुमः, दूरतस्त्वन्ये भावस्यास्य यन्निदानं तन्माधुर्यविशेषानुभवस्तदलाभादिति भावः । टीकायामत इत्यस्याप्येतदेव तात्पर्यम् । अन्यत्तैः । यद्वा—ईदृशभावाभावेन ब्रह्मजन्मभिरप्यलमित्याह—अकारप्रश्लेषेण अनन्तस्य परममाधुरीभिरप्यपारस्य तस्य कथास्वपि अरसो रुचिमात्रस्याभावो यस्य तस्येति तेषाम् । द्वितीयपक्षेऽपि 'अरसः' इत्येव पाठो युज्यते, अन्यथा पूर्वं चतुर्मुखजन्माभिर्वेतिमात्रमवक्ष्यतेति ॥ अत्र **विश्वनाथः**—सर्वोत्कृष्टमाहात्म्यमाह—पञ्चभिः । अनंतकथासु रसो रागो यस्य तस्य ब्रह्मजन्मभिर्विप्रसंबंधिभिः शौक्रसावित्रयाज्ञिकैस्त्रिभिर्जन्मभिश्चतुर्मुखजन्मभिर्वा किं कोतिशयो न कोपि, यतोऽनंतकथासु राग एव सर्वोत्कर्षप्रतिपादको नान्य इति भावः । यद्वा—अनंतकथासु रागाभाव एव तत्तत्सर्ववैफल्यप्रतिपादक इति भावः ॥९८॥ अन्यदाह—क्वेमेति । इमा गोप्यः । द्वौ क्वावन्वयानुपपत्तिं वक्तः । कथम्—तत्राह—वनचरीरिति । तदाश्रये वनगमनमप्युचितमेव तत्राह—व्यभिचारेति । अनियतभर्तृभिरप्यतृप्तास्तर्हि कृष्णोऽपि कश्चिद्गोपः स्यात्तत्राह—परमात्मनीति । रूढभावः परप्रेमा । अनुभजतः स्वयोग्यतानुरोधेन भक्तिं कुर्वतः । अविदुषः शास्त्रानभिज्ञस्य पुंसः । साक्षाच्छ्रेयः तदीप्सितम् । नन्वित्यनेन "भक्त्या त्वनन्यया शक्यो ह्यहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन" इत्यैतिह्यं प्रमाणयति । "प्रश्नावधारणैतिह्यसमीहानुमते ननु" इति यादवः ॥ * ॥ तस्माज्जनानां महोत्कर्षे भक्तिरेव कारणं न तु तपोज्ञानादिकम् । या च भक्तिः स्वयं सर्वोत्कृष्टापि सर्वलोकप्रतिष्ठितत्वेन सर्वोत्कृष्टेऽपि स्थले न तिष्ठति, सर्वलोकविगीतत्वेनातिनिकृष्टेऽपि स्थले तिष्ठति, स्थित्वा च तदेव स्वास्पदं सर्वोत्कृष्टं सर्वपूज्यं सर्वदुर्लभपदवीकं च करोतीति सविस्मयं सरोमाञ्चमाह—क्वेति द्वाभ्याम् । इमाः स्त्रिय इति स्त्रीत्वेन गोपसंततित्वेन च जात्या विगीताः । वनचरीर्वनचर्य इति वनभ्रमणशीलत्वात् । स्वभावेनाऽपि व्यभिचारदुष्टा इत्याचरणेनापि विगीता इमाः क्व, कृष्णे परमात्मनि वैकुंठनाथादिभ्य आत्मभ्योपि परमे सर्वांशिनि पूर्णस्वरूपे रूढभावो भक्तेरपि परममहान् विलासो महाभावः क्वेत्यत्यंतासंभवे क्वद्वयप्रयोगः । अहो अत्याश्चर्यमिति विमृश्य क्षणं विभाव्य ज्ञाततत्त्वो नैतदित्याश्चर्यमित्याह—ननु निश्चये । नु भो इति स्वमन एव संबोध्योक्तिः । ईश्वरो भगवान् भजतो जनस्य नपि भजनसिद्धस्याविदुषोपि त्वंतत्पदार्थज्ञानरहितस्यापि साक्षाच्छ्रेयः संसारमुक्तिपूर्वकस्वप्रेमरसास्वादरूपं मंगलं सर्वमुक्तैरपि दुर्लभं वस्तु तनोति, यथाऽगदराजोऽमृतमुपयुक्तः पीतः सन् तत्स्वरूपमजानतोऽपि जनस्य श्रेयः सर्वव्याधिप्रशमनपूर्वकमपूर्वास्वादविशेषं तनोति, किं पुनरासां भक्तिसिद्धनित्यसिद्धाशिरोमणीनां तत्स्वरूपरूपगुणैश्वर्यमाधुर्यमहाविदुषीणां तत्परिचर्योपकरणीकृतस्वीयबुद्धीन्द्रियसर्वगात्रयौवनालंकारपरिच्छदानां नारदादिसर्वभक्तदुर्लभं रूढभावं न तनुयादिति भावः । रूढभावलक्षणमुज्ज्वलनीलमणौ दृश्यमिह विस्तराभिया नोक्तम् । व्यभिचारदुष्टा इति स्त्रीणां त्रैविध्याद्व्यभिचारस्त्रिविधः । पतिमुपपतिं च रमयंत्या एकः, स हि लोकशास्त्रयोर्विगीतः । पतिं त्यक्त्वोपपतिमेकमेव रमयंत्या अन्यः, स हि लोकशास्त्रविगीतत्वेप्येकपुरुषमात्रप्रीतिमत्त्वेन रसशास्त्रसंगीतः । स्वपतिं त्यक्त्वोपपतिबुद्ध्या भगवंतमेव रमयंत्या अपरः, स ह्यनभिज्ञलोकविगीतत्वेप्यभिज्ञलोकसंगीतत्वाल्लोकशास्त्रयोः परमार्हणीयत्वाच्च यद्यपि न व्यभिचारस्तदपि व्यभिचारसाधर्म्यादेव व्यभिचार उच्यते व्रजसुंदरीणाम् । अहोऽत्र व्यभिचारेण दुष्टा इत्येति व्याख्येयम् । मम तु व्यभिचारो दुष्टो द्वेषविषयो यासां ताः, साक्षात्परमपतिश्रीपरमेश्वररतत्वात्परमसाध्व्य इत्यर्थः शोभनः प्रतिभाति । प्रसंगसंगतिस्तु यथा कथंचिदुन्नेया ॥ तोषिण्यान्तु—तदेवं प्रथमपद्येन बहिर्मुखान्विगृह्य तदेवात्र क्वेमा इत्यादिपद्ये प्रथमचरणेन साभ्यसूयमनुयुज्यते । यत्र च "निगृह्यानुयोगे च" इति वाक्यस्य टेः प्लुतो विभाषितोस्ति । यथाह काशिकायाम्—'स्वमता

**नायं श्रियोंग उ नितांतरतेः प्रसादः स्वर्योषितां नलिनगंधरुचां कुतोऽन्याः ॥**
**रासोत्सवेऽस्य भुजदंडगृहीतकंठलब्धाशिषां य उदगाद्व्रजवल्लवीनाम् ॥ ६० ॥**

**उपयुक्तः सेवितः अगदराजोऽमृतं यथेति ॥५९॥ अत्यंतापूर्वश्चायं गोपीषु भगवतः प्रसाद इत्याह । नायमिति । अंगे वक्षसि उ अहो नितांतरतेरेकांतरतिमत्याः श्रियोऽपि नायं**

त्प्रच्योंवनं निग्रहः अनुयोगस्तस्य मतस्याविष्करणं तत्र निगृह्यानुयोगे यद्वाक्यं वर्तते तस्य टेः प्लुतो विभाषा अनित्यः शब्द इति केनचित्प्रतिज्ञातम् । तदुपपत्तिभिर्निगृह्य साम्यसूयमनुयुंक्ते—अनित्यः शब्द इत्यात्थ' इत्यादि । इह च तद्वदेव परोक्षेप्यनुयोगगर्हितं सिद्धान्तमाह—केति । कृष्णे क चेत्याद्यर्थस्य सद्भावे सति केमाः स्त्रिय इत्याद्यर्थस्य संभावना नैव घटत इत्यर्थः । अत्र च तदेव पूर्वपद्यवद्द्वितीयेन चरणेन दार्ढ्यार्थं स्वसिद्धान्तं समुद्य परार्द्धेनाज्ञानेनाप्युपयुक्तस्यामृतादेर्दिव्यतनुताकारित्वमीश्वरशक्तेः कैमुत्यातिशयं साधयतीति व्याख्येयम् । प्रथमचरणे स्थितस्य निकृष्टभूमिकया च कस्य केत्यस्य प्रतियोगितया द्वितीयचरणे क चेति निर्दिष्टम् । यदि कृष्णविषयकरूढभावात्मिका परमोत्कृष्टभूमिका ताभिर्लब्धा तदा तासां निकृष्टभूमिकास्थितिः कुत्र स्थिता 'एताः परं तनुभृतः' इति तदीयतनुव्यवसायभावानां श्लाघितत्वात् । 'यन्नामधेयश्रवणानुकीर्तनात्' इत्यादेः 'विप्राद्द्विषड्गुणयुताद्' इत्यादेः "भक्तिः पुनाति मन्निष्ठा श्वपाकानपि संभवात्" इत्यादेश्चात्र कैमुत्यलाभात्, ध्रुवस्यापि पार्थिवदेहस्य सद्यो हिरण्मयत्वश्रवणात् । किञ्च—स्वतंत्रश्रीमदुद्धवेन तासु तादृशनिकृष्टवचनं न प्रयोक्तव्यमुपक्रमोपसंहारादिषु तस्य परमानादरात् । वस्तुतस्तु व्यभिचारस्तासां नास्त्येव 'गोपीनां तत्पतीनाञ्च' इति श्रीशुकसिद्धान्तात्, अत्र श्रीमदुद्धवेनैव पूर्वमखिलात्मनि तत्र च परमात्मनीति तस्य सूचनात् । न च तासां स्वाभाविकोऽनाचार आशंक्यः 'आर्यपथञ्च हित्वा' इति वक्ष्यमाणानुसारेण स्वतः सदाचारताप्राप्तेः । न तु स्त्रीत्वं दूषणीयं लक्ष्म्यादेरपि स्त्रीत्वात् । न चेमा इति निन्दावचनम् 'आसामहो' इत्यादावासामित्यनेनेदन्तानिर्देशेन स्तुतेरेव व्यंजयिष्यमाणत्वात् । न च वनचरीत्वं निंद्यं वनस्यास्य 'तद्भूरिभाग्यम्' इत्यादिना ब्रह्मणापि प्रार्थ्यमानत्वात् । 'आसामहो' इत्यादिना स्वयमपि । उत्तरार्द्धे तु अगदराजस्तावद्देहमेव दिव्यं करोतीत्येकेनैवांशेन दृष्टान्तः, तादृशागदराजादिस्वभावमूलकारणमीश्वरस्वभावस्तु सर्वमपि श्रेयः स्वमविदुषोपि जगतः कुर्यादेव किमुत तासां तदीयगुणग्रामविद्वद्वराणामिति । तस्मात्परकीयाभ्यसूयाख्यसंचार्यनुवादस्य तदुत्तरस्थया 'कृष्णे क च' इत्यादिवाक्यमय्या संचारिलक्षणया मत्याराध्यत्वेनोक्तत्वाद्गुणत्वमेव । तदुक्तं काव्यप्रकाशे—"संचार्यादेर्विरुद्धस्य वाक्यस्योक्तिर्गुणावहा" इति । अत्र च यथा—'तिष्ठेत्कोपवशात्स्वभावपिहिता दीर्घं न सा कुप्यति' इत्यत्र पिहितेत्यनंतरं नैव घटत इति निर्देशं विनापि 'उत्तरा प्रतिपत्तिः पूर्वां बाधते' इति न्यायेनान्वयो लभ्यते तद्वदप्यत्र तं विनापीति न किंचिदसमंजसम् । अथ वा—ननु भवतीप्रभृतयो यूयमप्युत्तरोत्तरं महांत ( हत्य ) एव कथं तद्वयंजयथ तत्राह—केमा इति । स्त्रिय इति जात्यैव सुकोमलत्वं दर्शितम् । तत्र चेमा इति विशेषतश्चमत्कारनिर्देशः । अत्रेमाः स्त्रियः इति सर्वोत्तमत्वं दर्शितम् । वनञ्च प्रस्तुतत्वाच्छ्रीवृंदावनं, तच्च श्रीकृष्णस्यैकांतविहारास्पदं तच्चारिण्य इति सामान्यतस्तन्माहिमा सूचितः । ता इमाः कृष्णविषये क तमाश्रित्य कस्यामूर्द्ध्वभूमिकायां वर्तते तथेदृशगाढतदासक्त्या भाव एव व्यभिचारः । अत्र परमविस्मितमानसः सरोमाञ्चं साभिनयं हेतुमाह—परमात्मनि सर्वेषामेव निरुपाधिपरमप्रेमयोग्येऽपि तादृशतयानुभवितुं परमदुर्लभे तस्मिन्नेष ईदृशतयाऽऽशु दृश्यमानो रूढभावः परां कोटिमारूढो महाभावो न त्वस्मासु तल्लेशोपीत्यर्थः । न चासामेव तस्मिन्नेतादृशसौहृद्यं न तु तस्यास्विति वाच्यं, तस्य परमेश्वरस्य परमहृदयतया साधारणेष्वपि दृश्यते किमुतैतास्वित्याह—नन्वीश्वर इति । ननु निश्चये । अनुसादृश्ये । भजनानुकरणमपि कुर्वतोऽविदुषस्तन्माहात्म्यमजानतोऽपि दैन्यान्मादृशस्यापीत्यर्थः । साक्षादव्यवधानेन श्रेयः एतासां दर्शनादिप्रसादमयं परमहितं तनोति किमुतासां तन्माधुरीपरमोत्कर्षानुभवित्वेन तन्माहात्म्य परमकाष्ठाभिनिविष्टानामिति भावः ॥ ५९ ॥ अत्यंतापूर्वोऽनन्यलभ्यः । अयं तदनुरागलक्षणः । कुतोऽन्या इति—"बहुलं छन्दसि" इति विभक्तिव्यत्यासः । कुतोऽन्यासामित्यर्थः ।

१ प्रत्यावनमिति पा० ।

आसामहो चरणरेणुजुषामहं स्यां वृंदावने किमपि गुल्मलतौषधीनाम् ॥
या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुंदपदवीं श्रुतिभिर्विमृग्यम् ॥ ६१ ॥

प्रसादोऽनुग्रहोऽस्ति । नलिनस्येव गंधो रुक्कांतिश्च यासां तासां स्वर्गांगनानामप्सरसामपि नास्ति । अन्याः पुनर्दूरतो निरस्ताः । रासोत्सवे कृष्णस्य भुजदंडाभ्यां गृहीत आलिंगितः कंठस्तेन लब्धा आशिषो याभिस्तासां गोपीनां यः प्रसाद उदगादाविर्बभूव ॥ ६० ॥ किं च आस्तां तावद्गोपीनां भाग्यं मम त्वेतावत्प्रार्थ्यमित्याह । आसा

अन्यपदेन यक्षादिस्त्रीग्रहः । यः प्रसादः ॥ * ॥ ननु परमव्योमनाथकृष्णयोरभेद एव निरूप्यते–तत्र पूर्वस्य च सदा वक्षःसंगिनी लक्ष्मीः सर्वभक्तशिरोमणिस्तस्या भावः कथं नाभिनंद्यते । किञ्च–' यथा दूरचरे प्रेष्ठे ' इत्यादिरीत्या वियोगमयभावस्योत्कर्षः सर्वत्र लभ्यते ततो यदि संयोगेऽप्यासां तेनाधिक्यं स्यात्तथा वर्ण्यतां संयोगे तु लक्ष्म्या एव तदाधिक्यं गम्यते । किञ्च–लक्ष्मीर्हि स्वरूपशक्तिस्तदपेक्षया स्वरूपेणामू न्यूनाः स्युः कथमेता एव स्तुतेर्विषयीक्रियन्ते तत्र सप्रौढयाह–नायमिति । अंगे मदीशस्य श्रीकृष्णस्य मूर्तीविशेषे तस्मिन्सक्ता या श्रीस्तस्या अप्ययमेतावान्प्रसादस्तदंगसुखोल्लास उ निश्चित्तं न विद्यते । कीदृश्या अपि तस्याः–नलिनस्य दिवा स्वर्णकमलस्येव गंधो रुक्कांतिश्च यासां तासां स्वर्योषिताम् । 'स्वश्चूडामणिं सुभगयंतमिवात्मधिष्ण्यम्' इत्युक्तदिशा दिव्यसुखभोगास्पदलोकगणशिरोमणिवैकुंठस्थितानां योषितां भूलीलाप्रभृतीनां मध्ये नितांतरतेः परमप्रेमयुक्तायाः । तदेवं सति कुतोऽन्याः सर्वा एव स्त्रीजातयो दूरत एव परास्ता इत्यर्थः । तं प्रसादमेव दर्शयति–रासेति । व्रजसुंदरीणां नित्यास्थित एव यो यावान् रासोत्सवे उदगात् प्राकट्यं प्राप । कीदृशीनाम्–अस्येत्यासां समीपे 'यन्मर्त्यलीलौपयिकम्' इत्यनुसारेण परमव्योमनाथादप्युत्कृष्टस्य मया सांप्रतं साक्षादिवानुभूयमानस्यापि श्रीकृष्णस्य यौ भुजदंडौ ताभ्यां गृहीतः स्वल्पस्यापि विश्लेषस्य भयादिव कंठः कंठालिंगनं यत्कृतमित्यर्थः । तेन लब्धा आशिषो मनोरथा याभिस्तासाम् । तस्माल्लक्ष्मीतोऽपि सर्वथा वैलक्षण्यादासां स्वरूपेण चास्मिन्प्रेयसीभावेन च वैलक्षण्यं दर्शितम् । अत एव लक्ष्मीविजयवाक्येस्मिन् ' व्रजसुंदरीणाम् ' इत्युक्त्वा सौंदर्यादीनामप्याधिक्यं दर्शितम् । ' यस्यास्ति भक्तिः ' इत्यादिरीत्या भक्तितारतम्येन तारतम्याद्युक्तमेव चेदम् । ' व्रजबल्लवीनाम् ' इति पाठे तु व्रजस्य तासाञ्च तादृशी प्रसिद्धिः सूचिता ॥ अत्र **विश्वनाथः**–यथा सर्वावतारश्रेष्ठे एव कृष्णे गोचारणवानरबालकसहभोजित्वदधिचौर्यपरस्त्रीचौर्यादिलोकविगानं गृहीत्वैव सर्वसंगीतः सर्वोत्कर्षसीमानं प्राप, तथैव सर्वह्लादिनीशक्ति शिरोमणिभूता अपीमाः स्त्रियो गोपस्त्रीत्ववनचारित्वव्रजलोकविख्यातव्यभिचारादिविगानं गृहीत्वैव लक्ष्म्यादिभ्योऽपि परमसौभाग्यसीमानमापुरित्याह–नायमिति । अयं प्रसादः उ अहो अंगे नारायणस्य वक्षसि वर्तमानायाः श्रियोऽपि नितांतरतेः प्राप्तात्यंतरमणाया अपि कदापि नोदगात्कुतः पुनः स्वर्योषितामुपेन्द्राद्यवतारपत्नीनाम् । नलिनस्येवेति पूर्ववत्समासः । तेन भक्तिमज्जनानां मध्ये सर्वोत्कर्षकोट्यां गोप्य एव स्थिताः साक्षाच्छ्रेयसोऽपि मध्ये सर्वोत्कर्षकोट्यां रास इति सूचितम् ॥ ६० ॥ किंचित्प्रार्थयितुमाह–किञ्चेति । आशंसा इच्छा । स्वजनं भर्त्रादिकम् । धर्मं श्रुतिस्मृतिविहितं नियतस्वभर्तृसंगरूपम् " नैका द्वौ पती विंदेत " इति श्रुतेः । श्रुतिभिर्वेदशिरोभिः । विमृग्यामन्वेषणीयाम् ॥ * ॥ तस्मादासां भावे परमदुर्लभे मनोरथस्याप्यनौचित्यात् ' वाञ्छन्ति यद्भवभियो मुनयो वयञ्च ' इति यन्मयोक्तं तदविचारादेव । सांप्रतं तु सविचारमाशासे एतदेव मे भूयादित्याह–आसामिति । इमा यासामुपरि चरणौ विन्यस्यंति तासामतिक्षुद्रजातीनां गुल्मलतौषधीनां मध्ये किमप्यहं स्याम् । ननु भजनस्य सर्वोत्कृष्टा काष्ठा का खल्वेतासु वर्तते यामेवालक्ष्य त्वमासामेव चरणरेणून्वांछन्न तु लक्ष्म्यादीनामपीत्यत आह–या इत्यादि । लोकधर्मधैर्यलज्जामर्यादादित्रोटनपूर्वकं महारागेण भजनमेव मया न क्वापि दृष्टमत एव प्रतिरजानि

या वै श्रियाऽर्चितमजादिभिराप्तकामैर्योगेश्वरैरपि यदात्मनि रासगोष्ठ्याम् ॥
कृष्णस्य तद्भगवतश्चरणारविंदं न्यस्तं स्तनेषु विजहुः परिरभ्य तापम् ॥ ॥ ६२ ॥

मिति । गोपीनां चरणरेणुभाजां गुल्मादीनां मध्ये यत्किमप्यहं स्यामित्याशंसायां लिङ् । कथंभूतानां गोपीनाम् । या इत्यादि । आर्याणां मार्ग धर्मं च हित्वा मुकुंदस्य पदवीं मार्गम् ॥६१॥ पुनस्ता एव विशिनष्टि । या वा इति । योगेश्वरैर्ब्रह्मादिभिरप्यात्मन्येवार्चितं तद्रासमंडले स्तनेषु न्यस्तं परिरभ्य यास्तापं विजहुस्तत्यजुरिति ॥६२॥

यदायदा स्वकुलधर्मादिमर्यादा व्रजशलाका अपि महारागबलेन त्रोटयित्वा कृष्णमभिसरन्ति तदा कृष्णपार्श्वं प्रति गमने वर्त्मावर्त्मविचारो नासामिति तृणादिरूपस्य मम मूर्ध्नि चरणानर्पयिष्यंति, अधुना तु कोटिशः सकाकु प्रार्थिता अपि नैता मन्मूर्ध्नि चरणानाधित्संतीत्यतस्तदैव मम धन्यजन्मता भविष्यतीति भावः ॥ अत्र **तोषिणी**—अथ पूर्वोक्तरीत्या तस्य नित्यप्रेयसीनामपि तासां जन्मादिलीलाविस्मृततादृशानां तादृशीनामपि तस्मिन्नुद्बुद्धलोकधर्मातिक्रमिरागाणां तादृशीनामपि श्रुतिदुर्लभतत्पदवीभाजामनुमतिं वाञ्छंस्तच्चरणरज एव तत्र साधनं निश्चिन्वन्प्रचुरतत्स्पर्शयोग्यं तत्र स्थावरजन्माप्याशास्ते—आसामिति । अहो इत्यत्यन्तदुर्लभलालसाखेदे । वृन्दावन इति सदा तत्रैव तासां सान्निध्यात् । गुल्मः स्तम्बः 'अप्रकाण्डे स्तम्बगुल्मौ' इत्यमरः । वृक्षादीनामनुक्तिरप्युच्चत्वेन सम्यक् तज्जोषणाऽसिद्धेः । गुल्मादीनामनुक्रमेणोक्तिर्नीचनीचतया रजसां सम्यक्प्राप्तेरुत्तरोत्तराभिलाषाधिक्याद्दैन्याच्च । गुल्मादीनां यथोत्तरं न्यूनत्वमूह्यम् । परमदीनतयात्मनोऽतिनीचत्वमननेन तृणत्वमात्रप्रार्थने पर्यवसानात् । गीतमपि तासां माहात्म्यं पुनरत्यौत्सुक्येन गायति—या इति । मुकुन्दस्य पदवी तत्प्राप्त्येकोपायः पूर्वमुक्तो रूढभाव एव । मुकुन्देति मुक्तिं ददातीति निरुक्त्या तादृशभावस्य दुर्लभतां सूचयति । 'मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम्' इति प्रेममात्रदानकार्पण्यसूचनात् । कीदृशीम्—श्रुतिभिः कर्त्रीभिर्विमृग्यां परमपुरुषार्थतयान्वेषणीयाम् । किं कृत्वा भेजुः—स्वजनमार्यपथञ्च हित्वा, लोकमर्यादां वेदमर्यादाञ्च त्यक्त्वेत्यर्थः । तत्तु दुस्त्यजं पूर्वोक्तैः श्रीप्रभृतिभिः सर्वैरत्याज्यम् । ते खलु सर्वलोकसर्वमहावेदपुरुषार्थसारबुद्ध्यैव भजंतीत्यतो न तेषु रागौत्कण्ठ्यमेव कारणमित्येता एव समोर्द्ध्वरागा इति भावः । तदेवमिति मुकुन्दपदवीमिति तत्रापि श्रुतिभिर्विमृग्यामिति तस्यानित्यत्वं सर्वोत्तमत्वं च गम्यते । तत्रापि तास्ता भेजुरिति तं शीघ्रं ग्रहीष्यंत्येव, गृहीतश्चासौ नात्मानं मोचयितुं शक्ष्यतीति नित्यसंगित्वं बोध्यते, परमान्तरंगेणाप्युद्धवेन तासां चरणसम्बन्धेन यथाकथंचिज्जन्मप्रार्थनात्, तत्रापि वृन्दावन एव तत्सम्भवमननात्तासां तस्य च तत्तद्विवत्वं बोध्यते ॥ ६१ ॥ ता गोप्यः । या गोप्यः । आप्तकामैः सत्यसंकल्पैः । योगेश्वरैः सनकादिभिः । आत्मनि हृदये । यच्चरणारविन्दम् । तापं कामसन्तापम् ॥ * ॥ न केवलं तादृशतल्लाभसाधनस्य तादृशरासस्यैवोत्कर्षेण तासां माहात्म्यमपि तु भगवल्लाभस्यापीत्याह—या इति । वै प्रसिद्धम् । सर्वलोकचमत्कारकरं यथा स्यात्तथा कृष्णस्य भगवतः 'कृष्णस्तु भगवान्स्वयम्' इत्यादावसमोर्द्ध्वरूपत्वेन प्रसिद्धस्य तस्य तत्तादृशभावैकभाव्यंप्रपदारविन्दम् 'गोप्यस्तपः किमचरन्' इत्यादिरीत्या प्रकृष्टाविर्भावं पदारविन्दं परिरभ्य 'यत्ते सुजातचरणाम्बुरुहं स्तनेषु' इत्यादिरीत्या परमस्नेहमयरागेणालिंग्य तापं विजहुः, तादृशतत्प्राप्तितः पूर्वं यः कश्चिद्भावः स सर्वोऽपि तादृशभावानां खल्वनुभवेन तापमेव तत्सर्वं तत्यजुरित्यर्थः । पदमात्रोपादानेन भक्तिव्यञ्जनया तादृशश्रीकृष्णस्य परमदुर्लभता सूचिता । तत्रापि लिट्प्रयोगेण तत्त्यागस्य स्वपरोक्षतां सूचयित्वा स्वपर्यन्तमहाभगवतागम्यत्वं सूचितम् । श्रीभगवतोऽपि ताभिः परिरंभे रागं दर्शयति—न्यस्तं तेन बलादिवार्पितम् । तत्र समयवैशिष्ट्यमप्याह—रासगोष्ठ्यां रासोपक्रमसभायां तस्यां परमापूर्वलीलायां प्रवर्तमानायामित्यर्थः, 'संस्पर्शनेनांककृतांघ्रिहस्तयोः' इति तदानींतनप्रसिद्धेः । ततश्च 'तासामाविरभूत्' इति 'त्रैलोक्यलक्ष्म्यैकपदं वपुर्दधत्' इत्याद्यनुसारेणात्रत्यसमयांतरादपि परमापूर्वाविर्भावत्वमिति भावः । कथंभूतम्—श्रिया वैकुण्ठलक्ष्म्यापि मनस्येव सदार्चितं

वंदे नंदव्रजस्त्रीणां पादरेणुमभीक्ष्णशः ॥ यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥ ६३ ॥ श्रीशुक उवाच ॥ अथ गोपीरनुज्ञाप्य यशोदां नंदमेव च ॥ गोपानामंत्र्य दाशार्हो यास्यन्नारुरुहे रथम् ॥ ६४ ॥ तं निर्गतं समासाद्य नानोपायनपाणयः ॥ नंदादयोऽनुरागेण प्रावोचन्नश्रुलोचनाः ॥ ६५ ॥ मनसो वृत्तयो नः स्युः कृष्णपादांबुजाश्रयाः ॥ वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु ॥ ६६ ॥

एवं महत्त्वं प्रतिपाद्य नमस्करोति । वंद इति ॥ ६३ ॥ अनुज्ञाप्यानुज्ञां याचित्वा आमंत्र्य पृष्ट्वा ॥ ६४ ॥ ६५ ॥ नोऽस्माकं मनसो वृत्तयः कृष्णपादांबु

भावविशेषेण बोध्यमानमेव वर्तते न तु तथा प्राप्तम् ‘ यद्वांछया श्रीर्ललनाचरत्तपः ’ इत्युक्तेः । अत एव सुतरामजादिभिर्ब्रह्मरुद्रादिभिराधिकारिकैराप्तकामैराप्तकामभक्तैर्योगेश्वरैः सर्वयोगानामीश्वरैः शुद्धयोगभक्तिभिरपीति । मनस्येवार्चितं न तु साक्षात्स्प्रष्टुं शक्यम् । पूजार्थत्वाद्वर्तमाने क्तः । तस्मात्सर्वदुर्लभचरणारविंदस्य तस्याभिरेव तादृशतया लब्धत्वादचिरादेवाकृष्य वशयितव्य इति भावः । यदात्मनीति चरणारविंदमिति क्वचित्पाठः ॥ ॥ ६२ ॥ एवमुक्तरीत्या । यासां नंदव्रजस्त्रीणाम् । हरिकथैवोद्गीतमुच्चैर्गानं भुवनत्रयं पुनाति स्मरणादिना देवाश्शेषो मनुष्याश्च यल्लीलां गायन्तीति भावः ॥ * ॥ तस्मादास्तां ममातिक्षुद्रस्य साक्षान्नमस्कारसाहसमेतत्स जातीयत्वादन्यासामपि पादरेणुमेव नमस्करोमि । न च साक्षादेव ता इति सकंपसगद्गदं चाटुमाह—वंद इति । यासामिति—याभिः कर्त्रीभिरित्यर्थः । हरिकथाया उद्गानम् ‘उद्गायतीनामरविंदलोचनम्’ इत्येतत्प्रकारम् । यद्वा—यत्संबंधिहरिकथाया उद्गानं तत्तन्महानुभावैरनुगानं संबंधपरम्परया भुवनत्रयमूर्द्ध्वाधोमध्यलोकं सर्वमपि पुनाति एतद्विपरीतोदासीनसर्वभावापहारतः शोधयति ‘मद्भक्तियुक्तो भुवनं पुनाति’ इतिवदविद्यामालिन्यादिति **विश्वनाथः** ॥ प्रकरणेऽस्मिन्व्यासादिमहावक्तॄणां तात्पर्यमिदम्—सर्वभागवतानां श्रीकृष्णसंबंधिनः खलु परमश्रेष्ठास्तस्यैव स्वयं भगवत्त्वात्, तत्रापि तल्लीलापरिकरा एवांतरंगा अन्येषां तदनुगतत्वात्, तेष्वपि श्रीमानुद्धवः ‘त्वं तु भागवतेष्वहम्’, ‘भक्तमेकांतिनं क्वचित्’, ‘नोद्धवोऽण्वपि मन्न्यूनः’, ‘अहं भर्तू रहस्करः’, ‘कृष्णस्य दयितः सखा’ इत्यादिदर्शनात्तस्यापीदृशी तद्भावस्पृहा, तास्वादराधिको न पट्टमहिषीष्वपि, केन वा तासां चरणारविंदं नानुगमनीयम् । तत्रापि राधेति । अभीक्ष्णश इति शस्प्रत्ययेन प्रतिक्षणमेव न तु त्रिकालं पञ्चकालं वेत्यर्थः । यावदनायासेन तत्तत्प्राप्त्यनुकूलतृणादिजन्मभाग्यं तेनाभूत्तावदिति भावः । तं श्रीमदुद्धवं वन्दे । कृष्णप्रेष्ठवरोऽपि यः गोपीपादाब्जधूलिस्पृक्तृणजन्माप्ययाचत ॥ ६३ ॥ अथ प्रार्थनोत्तरम् । यास्यन्, मथुरामिति शेषः ॥ * ॥ अथ कालान्तर एव । चः समुच्चये । आज्ञाप्य तेषां चित्तसमाधानपूर्वकमाज्ञां प्रार्थ्य । गोप्यादिनिर्देशक्रमोऽयं तदादीनां प्रेम्णो यथापूर्वं प्रकर्षमनुभूय तत्क्रमादेवानुज्ञा प्रार्थितेति व्यनक्ति, पूर्वोक्तयुक्त्या सांत्वनायां मुख्यत्वात् । गोपांस्त्वामंत्र्य यथायथं व्रजेश्वराद्यनुज्ञाश्रावणसहितं संबोध्य—हे अमुक तेषामनुज्ञा जाता संप्रति गच्छाम इति जनं संतोष्येत्यर्थः । दाशार्ह इति—तत्कुलोद्भवत्वेनैव नीतिज्ञः । किं पुनः सः, वैशिष्ट्येनेति भावः ॥ ६४ ॥ तम् उद्धवम् ॥ * ॥ रथारोहणपरिपाटीमाह—रथारोहणार्थं निर्गतं निर्गत्य व्रजद्वारि स्थितं सन्तम् । नानेति—निजमुद्रालक्षितं पुत्रार्थं श्रीव्रजेश्वर्या दत्तं नवनीतक्षीरलड्डुकादिकं तथा श्रीबलदेवरोहिण्यर्थं देवक्यर्थं च श्रीव्रजदेवीभिश्च प्राणेश्वरार्थं निजलिंगाचिह्नितं गुंजाहारादिकं च श्रीदामादिभिश्च प्रियसुखार्थं तत्परिचितवन्यपुष्पमूलफलादिकं श्रीव्रजेश्वरेणापि कस्तूरीगतमौक्तिकं श्रीवसुदेवार्थं घृतपक्वान्नादिकमुग्रसेनार्थं च गोरसादिकं सर्वैश्च श्रीमदुद्धवार्थं वस्त्रालंकरणादिकमित्येवं पृथक्पृथङ्नानाविधैरुपायनैर्युक्तपाणयः सन्तः प्रकर्षेण गद्गदत्वादिगुणयुक्ततयाऽवोचन् ॥ **विश्वनाथस्तु**—नानेति—कृष्णस्य पौगंडकैशोरविलाससमय एव यानि संचितानि बहुरत्ननानास्वर्णमुद्रामुक्तालंकारादीनि यौवने सति कृष्णस्य परिधास्यमानानि तदा तु तद्वियोगात्तेषु ममतात्यागात्तान्येवोपायनत्वेन कल्पितानि ज्ञेयानि ॥ ६५ ॥ वृत्तयो व्यापाराः ‘वृत्तिर्व्यापारजीवने’ इति कोशात् । तत्प्रह्वणादिषु कृष्णनमस्कारादिषु स्यादित्यन्वयः ॥ * ॥ भो आयुष्मन्नुद्धव आवयोर्माता

कर्मभिर्भ्राम्यमाणानां यत्र क्वापीश्वरेच्छया ॥ मंगलाचरितैर्दानै रतिर्नः कृष्ण ईश्वरे ॥ ६७ ॥



जाश्रयाः स्युः । अभिधायिनीरभिधायिन्यः ॥ ६६ ॥ कृष्णे रतिः स्यादिति ॥ ६७ ॥

पित्रोस्तादृशेऽपि महारूपगुणशीलसमुद्रबालके महाकठोरत्वमासीदधुनापि वर्तत एव तदानीं यद्बहुतरस्नेहलालनादिकं कृतं तत्सर्वं कृत्रिममेवेत्यधुनाऽवगतं यत्तद्विरहेऽप्यावाभ्यां जीव्यते, पिता खलु जगत्येको दशरथः स एव, यः खलु पुत्रं रामं विदूरविगतं श्रुत्वैव प्राणांस्तत्याज, आवयोस्तस्मिन्पुत्रे कृष्णे प्रेमगंधोपि नास्तीत्यत एवाभिज्ञचूडामणिरस्मत्पुत्रः स्वस्यानरूपौ पितरौ परित्यज्य परमेश्वरत्वेनातर्क्यचरित्रत्वादन्यावेव देवकीवसुदेवौ पितरौ चकार, तद्विगावां त्रिजगत्यतिदुर्भगौ यशोदानंदौ, तदपि कस्मिंश्चिदपि भाविजन्मनि तास्मिन्रतिः स्यादिति प्रार्थयते द्वाभ्याम् । मनस इति—महानुरागमहावर्त एवायमत एव मनआदींद्रियाणां प्रतिक्षणमेव कृष्णरूपादिनिमग्नत्वेऽपि मनसो वृत्तयः कृष्णपादांबुजाश्रयाः स्युरिति । रतिः स्यादिति प्रार्थनायां लिङ् । दैन्यसंचारिणो महाप्राबल्यं दर्शयति । किञ्च, सख्यवात्सल्योज्ज्वलप्रेमवतां स्वभाव एवायं यद्विरहवैवश्येन विषयालंबनस्य स्वस्मिन्नौदासीन्यज्ञानेन च जनिते महादैन्ये स्वस्वभावविच्युतिर्दास्यभावग्रहणं च, यथा मयि कृष्णे नाद्यावधि न नः विश्वस्तमौदासीन्यादेवेति मत्वा बलदेवेन 'प्रायो मायास्तु मे भर्तुः' इत्युक्तेः, 'दास्यास्ते कृपणाया मे' इति वृंदावनेश्वर्या, 'क्वचिदपि स कथां नः किंकरीणां गृणीते' इति श्रीगोपीभिः । 'मनसो वृत्तयो नः स्युः' इति श्रीनंदाद्यैः, न तु सुखसमयेऽपि देवकीवसुदेवाभ्यामिव 'युवां न नः सुतौ' इत्यादिकमैश्वर्यज्ञानजनितस्वसंबन्धत्यागपूर्वकं कदाऽप्युक्तम् ॥ ६६॥ यत्र क्वापि योनिषु । कर्मभिरित्यचेतनस्य कर्मणः कथं प्रवर्तकत्वन्तत्राह—ईश्वरेच्छयेति । ननु देवः फलं ददातीति मीमांसको न सहते, तथाहि—नवमाध्याये विचारितं किं यागेनाराधिताया देवतायाः फलमपूर्वमुतापूर्वद्वारकं यागस्य फलसाधनत्वमिति संशयः । तत्र भंगुरस्य यागस्य कालांतरभाविफलं प्रति साधनत्वायोगादवश्यं द्वारं किञ्चित्कल्पनीयं, देवताप्रसादश्च श्रुतियुक्तिभ्यां तद्वारं स्यात् । "तृप्त एवैनमिंद्रः प्रजया पशुभिस्तर्पयति " इति श्रुतिः । युक्तिरप्युच्यते—क्रियया व्याप्तुमिष्टतमत्वात्कर्मकारकं प्रधानं तेन च कर्मणा व्याप्यत्वात्संप्रदानं ततोपि प्रधानम्, इंद्रादिर्देवता च संप्रदानत्वात्पूजामर्हति, यागश्च पूजारूपत्वादतिथेर्भोजनमिव देवताया अंगं स्यात्तस्माद्राजादिवद्देवः फलं ददातीति पूर्वपक्षः । अत्रोच्यते—यागदेवतयोर्योयमंगांगिभाव उपन्यस्तः स तु शब्दाकांक्षानुसारेण विपर्येति । तथाहि—यजेतेत्याख्यातेन भावनाभिधीयते, सा च किं केन कथमिति भाव्यकरणेति कर्तव्यतालक्षणमंशत्रयं क्रमेणाकांक्षति, तत्र यागस्य समानपदोपनीतत्वेप्ययोग्यत्वान्न भाव्यता, स्वर्गस्य तु वाक्यतात्पर्याद्युपनीतस्यापि पुरुषार्थत्वेन योग्यत्वात्स्वर्गो सा स्यात्तस्य च स्वर्गस्य साधनाकांक्षायां यागः करणत्वेनान्वेति, तच्च करणं साध्यरूपत्वात्स्वनिष्पादकं सिद्धम्, द्रव्यदैवतमिति कर्तव्यत्वेन गृह्णाति, ततो यागोंगी देवता तदंगमेवं च सति नातिथिवद्देवता यागेनाराध्यते या तु श्रुतिः—"स्तृप्त एवैनम्" इति नासौ स्वार्थे तात्पर्यवती प्रत्यक्षादिविरोधात्, न हि काचिद्देवता विग्रहवती हविर्भुक्त्वा तृप्ता सती फलं प्रयच्छतीति प्रत्यक्षेणोपलभ्यते, प्रत्युत तदभावः प्रत्यक्षेणायोग्यानुपलब्ध्या वा प्रमीयते, किञ्चाश्वमेधे "स्ते गां दंष्ट्राभ्यां मंडूकाः कांक्षान् " इत्यादावश्वावयवानां दंष्ट्रादिद्रव्याणां हविषां भोक्तृत्वेन मंडूकादयस्तिर्यंचो देवताविशेषाः श्रूयन्ते, न च तेषां फलदातृत्वं संभाव्यते । " ओषधीभ्यः स्वाहा वनस्पतिभ्यः स्वाहा मूलेभ्यः स्वाहा " इत्यचेतनानामोषधीवनस्पतितदवयवानां देवतात्वं श्रूयते तत्कुतो हविर्भोक्तृत्वं कुतस्तरां तृप्तिः कुतस्तमां फलदातृत्वम्, तस्माद्विग्रहादिमतां देवतानामभावान्न देवताप्रसादो यागस्य फलद्वारं किन्तु श्रूयमाणफलसाधनत्वान्यथाऽनुपपत्तिकल्प्यमपूर्वं तद्वारम् । अभ्युपगतेष्वपि देवेष्वपूर्वस्यैव फलद्वारत्वमवश्यं वक्तव्यं मंत्रार्थवादेतिहासपुराणेषु देवतानामपि तपश्चरणानुष्ठानब्रह्मास्त्रादिमंत्रप्रयोगेभ्यः समाहितविध्यनुकीर्तनात्तस्माद्देवो न फलप्रद इति सिद्धम् । औपनिषदास्तु ईश्वरस्य फलदातृत्वं मन्यन्ते । तथाहि—तदीये शास्त्रे तृतीयेऽध्याये विचारितम्—किं धर्मः फलं ददात्याहोस्विदीश्वर



१ ज्ञापयति ।

एवं सभाजितो गोपैः कृष्णभक्त्या नराधिप ॥ उद्धवः पुनरागच्छन्मथुरां कृष्णपालिताम् ॥ ६८ ॥ कृष्णाय प्रणिपत्याह भक्त्युद्रेकं व्रजौकसाम् ॥ वसुदेवाय रामाय राज्ञे चोपायनान्यदात् ॥६९॥ इति श्रीभागवते महापुराणे दशमस्कंधे पूर्वार्द्धे भ्रमरगीतोद्धवप्रतियाने सप्तचत्वारिंशोऽध्यायः ॥४७॥

॥ ६८ ॥ व्रजवासिनां भक्त्युद्रेकं कृष्णादिभ्य आह । उपायनानि चाददादिति ॥ ६९ ॥ इति श्रीभा० म० दशमस्कन्धे पूर्वार्धे टीकायां सप्तचत्वारिंशोऽध्यायः ॥४७॥

इति संशयः । तत्र मीमांसकोक्तन्यायेन धर्मः फलप्रद इति पूर्वपक्षः । सिद्धान्तस्तु—किं धर्मोऽन्यानधिष्ठित एव फलप्रदः, किं वा केनचिच्चेतनेनाधिष्ठितः । नाद्यः, अचेतनस्य तारतम्यानभिज्ञस्य यथोचितफलदातृत्वायोगात्, द्वितीये तु येनाधिष्ठितः स एव फलदातास्तु, न चैवं धर्मवैयर्थ्यमिति शंकनीयं वैषम्यनैर्घृण्यपरिहाराय धर्मापेक्षणात्, असति तु धर्मे कांश्चिदुत्तमं सुखं कांश्चिन्मध्यमं कांश्चिदधमं च प्रापयतीश्वरः कथं विषमो न भवेत्कथं वा विचित्रं दुःखं प्रापयन्निर्घृणो न भवेत् । धर्माधर्मानुसारेण तत्प्रापणे गुरुपितृराजादीनामिव न वैषम्यनैर्घृण्ये प्राप्नुतः । न हि दुष्टशिक्षां शिष्टपरिपालनञ्च कुर्वतां गुर्वादीनां वैषम्यनैर्घृण्ये विद्येते । यदुक्तम् "स्ते गाम्" इति मंडूकादीनाम् "तिरश्चामोषधिवनस्पत्यादी च" इति स्थावराणां फलप्रदत्वमयुक्तमिति तत्तथैवास्तु, ईश्वरस्य फलदातृत्वे कः प्रत्यूहः । यदपि "तृप्त एवैनमिंद्रः प्रजया पशुभिस्तर्पयति" इति तत्रापींद्रे देवतायामवस्थितोऽन्तर्यामी फलप्रदत्वेन विवक्षितः ."अंतः प्रविष्टः शास्ता जानानाम्" इति श्रुतेः, "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इति स्मृतेः । तस्मादीश्वरप्रसाद एव फलद्वारम् । न च जैमिनीयौपनिषदयोर्मतयोर्विरोधोस्ति, परस्परं विवक्षाविशेषेण तत्समाधानात् । यथा देवदत्तस्यैव पक्तृत्वेऽपि सम्यगभिज्वलनविवक्षितत्वात्काष्ठानि पचंतीति व्यवहारः । तथा परमेश्वरस्यैव फलप्रदातृत्वेऽपि तारतम्यापादननिमित्ततया प्राधान्यविवक्षितत्वाद्धर्मः फलप्रद इति व्यवहारः किं न स्यात्तस्मादविरोधात्फलप्रद ईश्वर एवेत्यलमतिप्रसंगेन । अतः कर्मफलप्रदः श्रीकृष्ण एव । रतिरत्यंतासंगः ॥ * ॥ कृष्णभक्त्या महानुरागमय्या कृष्णपालितामित्यत एवोद्धवेन व्रजभूमावत्यनुरक्तेनापि तत्र गतं संप्रति मथुरा कृष्णेन पाल्यते व्रजः कथं न पाल्यत इत्युपालब्धुमेवेति मुनेराशयः ॥ अत्र **तोषिणी**—कृष्ण ईश्वररूपेऽपि, कृष्ण एव तादिच्छयेत्यनुक्त्वा ईश्वरेच्छया पृथगीश्वरपदोक्तिः स्वभावानुसारेण । कर्मभिरिति नरलीलापन्नत्वादात्मनि साधारण्यमननेन । मंगलाचारितैः पुण्यकर्मभिः । दानस्य पृथगुक्तिस्तेषां स्वेषु प्राचुर्यात् । अथ च वाक्यद्वयमिदं वियोगमयपितृवात्सल्येनापि संभवतीति ॥ ॥ ६७ ॥ एवमित्थम् । कृष्णभक्त्या कृष्णदूतत्वात्तत्रापि कृष्णभक्तिरेव तेषामित्यर्थः । लोकदृष्ट्योग्रसेनपालितायामपि परमार्थत आह—कृष्णपालितामिति । तस्य सर्वदा तत्पालकत्वादिति भावः ॥ * ॥ एवमध्यायद्वयोक्तक्रमेण । सभाजितः पूजितः । कृष्णभक्त्या कृष्णासक्त्यैवेति पूर्ववत् । ननु'आसामहो' इत्यादिरीत्या तादृशवृंदावनासक्तश्चेत्कथं मथुरां पुनरागच्छत्तत्राह—कृष्णपालिताम्, संप्रति कृष्णेन सा पाल्यते तत्प्रियतमभृत्यैस्तत्रानागमनं कर्तुं कथं शक्ष्यत इति भावः ॥ ६८ ॥ भक्त्युद्रेकं प्रीत्याधिक्यम् । नन्दादिभिः पृथक्पृथग्दत्तानि उपायनान्युपहारान् ॥ * ॥ प्रथमं निजान्तःपुरस्थिताय कृष्णाय प्रणिपत्य प्रणिपातपूर्वकं तत्कृतालिंगनकुशलप्रश्नादिकं पूर्वं वृत्तं निर्वाह्य क्रमतस्तत्कृतप्रश्नविशेषमुपलभ्य व्रजौकसां तत्पित्रादीनां भक्त्युद्रेकं प्रेमातिशयं तत्तद्वचनचेष्टात्मकं यथावसरं यथायोग्यं सर्वमेवाह, तच्च साक्षात्तद्दर्शनादेवं तेषां प्रीतिर्दुःखशोकनिवृत्तिश्च सम्यग्भवति न तु तच्चातुर्येण तत्संदेशैर्वेत्यभिप्रायात्मकमिति ज्ञेयम् । तदनन्तरं यथावसरं वसुदेवादिभ्यः पूर्ववद्यथाक्रमं तेषां भक्त्युद्रेकं यथायुक्तमाह, तदनन्तरं यथावसरं तस्मै तेभ्यश्चोपायनान्यदादिति विवेचनीयम् ॥ **विश्वनाथस्तु**—व्रजौकसां भक्त्युद्रेकं मथुरौकोभ्यः सकाशादित्यर्थस्तेन—भोः प्रभो कृष्ण त्वं भक्तिवश्यो भक्तिप्राप्यो भक्तिदृश्य इति सर्वशास्त्रार्थस्तेषां च मया त्वदीयसर्वभक्तेभ्योऽपि सकाशाद्भक्त्युद्रेक एव दृष्टः, यतः—"श्वेतीकृताखिलजनं विरहेण तवाधुना । गोकुलं कृष्ण देवर्षेः श्वेतदीपभ्रमं दधे ॥" । त्वत्पितुर्नन्दस्य तु महानुरागभमिरियं त्वयैव बोद्धुं शक्या । तदुक्तम्—'मनसो वृत्तयो नः स्युः' इति पद्य

श्रीशुक उवाच ॥ अथ विज्ञाय भगवान्सर्वात्मा सर्वदर्शनः ॥ सैरंध्र्याः कामतप्तायाः प्रियमिच्छन्गृहं ययौ ॥ १ ॥ महार्होपस्करैराढ्यं कामोपायोपबृंहितम् ॥ मुक्तादामपताकाभिर्वितानशयनासनैः ॥ धूपैः सुरभिभिर्दीपैः स्रग्गंधैरपि मंडितम् ॥ २ ॥ गृहं तमायांतमवेक्ष्य साऽऽसनात्सद्यः समुत्थाय हि जातसंभ्रमा ॥ यथोपसंगम्य सखीभिरच्युतं सभाज यामास सदासनादिभिः ॥ ३ ॥

अष्टचत्वारिंशकेऽथ कृष्णः कुब्जामरीरमत् ॥ अक्रूरस्य गृहं गत्वा तं गजाह्वयमादिशत ॥ १ ॥ सैरंध्रीकाममापूर्य पूरयित्वा मनोरथान् ॥ अक्रूरस्य ततः कृष्णस्तेन पार्थानसांत्वयत् ॥ २ ॥ १ ॥ महार्हैरनर्घ्यैरुपस्करैर्गृहोपकरणैरन्वितम् । कामोपायैस्तदुद्दीपकैः सुरतबंधादिलेख्यैरादर्शादिभिरुपबृंहितम् ॥ २ ॥ यथा यथोचितम् ।

द्वयम्, त्वन्माता तु गद्गदरुद्धकण्ठा नैव किमपि वक्तुं शशाकेति श्रुत्वा कृष्णो विगलितधैर्यो मध्येसभमप्युच्चै रुरोद । त्वत्प्रेयसीनां वाडवानलस्तु रजन्यां कुत्रचिद्रहस्येवोद्घाट्य दर्शयितव्यः । त्वत्प्रेयसीशिरोमणेस्तु दिव्योन्मादचित्रजल्पादिदिङ्मात्रमेवाविष्कृतं यदवधाय कृष्णस्तां रात्रिं सर्वां जज्वालैवेति ॥ ६९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे पूर्वार्द्धे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ अथोद्धवागमनोत्तरम् । तमक्रूरम् (१)। ततः सैरन्ध्रीकामपूर्त्युत्तरम् । अक्रूरस्य मनोरथान्पूरयित्वा । तेनाक्रूरेण ( २ ) । अथेत्युक्तार्थम् । सर्वं दर्शनं ज्ञानं यस्य स तथा ॥ * ॥ सैरन्ध्रीमपि संत्यक्तुमहं शक्नोमि नोद्धव । किमुत व्रजलोकांस्तानिति व्यञ्जन्निमामगात ॥ श्रीसैरन्ध्र्यै नमस्तस्यै यत्कृपाकृष्टमानसः । स्वयं गृहं गतो वस्तुमसंकोचं रमापतिः ॥ अथेति सार्धद्वयकम् । भगवाञ्श्रीकृष्णः अथेत्युद्धवस्यागमनहेतोर्विज्ञाय बहूनि दिनानि व्याप्य तन्मुखाद्व्रजौकसां पित्रादीनां प्रत्येकं सान्त्वनप्रायं विशेषेणानुभूय कदाचित्सैरन्ध्र्या गृहं ययौ । कीदृश्याः—कामतप्तायाः स्वार्थाभिलाषविशेषेण दह्यमानायाः । तर्हि किमेषोऽपि कामी ? नेत्याह—प्रियमिच्छन् मत्प्रीत्यर्थमसावंगरागं मह्यमर्पितवती तस्मादहमस्याः प्रीतिविशेषमेव कृत्वाऽनृणः स्यामिति विचारयन्नित्यर्थः ॥ अत्र **विश्वनाथः**—विज्ञाय उद्धवोक्तं विशेषतो ज्ञात्वा तत्र समाधानं पूर्वमेव कृतवानित्याह—भगवान् महातर्क्यैश्वर्ययुतत्वान्मथुरायां स्थितोऽपि प्रकाशान्तरेण व्रजमगादेवेत्यर्थः । सर्वात्मत्वादेव सर्वमनोरथं पूरयितुमित्यर्थः । किन्तूद्धवसमाधानार्थं सर्वदर्शनः तदोद्धवं प्रति स्वीयप्रकाशद्वैतविरहप्रकाशेऽप्याविर्भावादिकमतिरहस्यमपि ज्ञापयामासैवेत्यर्थः । ततश्च पूर्वं यत्प्रतिश्रुतं तद्दातुं तेन सह कुब्जाया गृहं जगामेत्याह—सैरन्ध्र्या इति । ननु कुतस्तस्यास्तादृशमपि वांछितं विधित्सितवाञ्ज्ञातवांश्च तत्राह—सर्वेति । सर्वात्मत्वेन सर्वहितकारित्वात्तदपि कर्तुमुचितम् । सर्वदर्शनत्वेन तदपि ज्ञातमित्यर्थः ॥१॥ उपबृंहितमुपचितम् । सुरतसम्बंधिलेख्यानि वृषभबंधविपरीतरत्यादिचित्राणि । सुरभिभिर्घ्राणेंद्रियतृप्त्युत्पादकैः 'सुरभिर्घ्राणतर्पणः' इत्यमरः । सार्द्धेनान्वयः ॥*॥ महार्हेति—संभोगोत्सवोपयोगिबहूपकरणान्वितमित्यर्थः । कामोपाया मधुतांबूलादयः । उपस्कारानेव प्रपञ्चयति—मुक्तादामानि गृहस्य पताकोपरीति ज्ञेयम् ॥ २ ॥ तं कृष्णम् । जातः संभ्रमो वेगो यस्याः सा तथा । सदासनं सिंहासनं, बहुमूल्यनेपालकंबलादिमयं वा । आदिना पुष्प

तथोद्धवः साधु तयाऽभिपूजितो न्यषीददुर्व्यामभिमृश्य चासनम् ॥ कृष्णोऽपि तूर्णं शयनं महाधनं विवेश लोकाचरितान्यनुव्रतः ॥ ४ ॥ सा मज्जनालेपदुकूलभूषणस्रग्गंधतांबूलसुधासवादिभिः ॥ प्रसाधितात्मोपससार माधवं सव्रीडलीलोत्स्मितविभ्रमेक्षितैः ॥ ५ ॥ आहूय कांतां नवसंगमह्रिया विशंकितां कंकणभूषिते करे ॥ प्रगृह्य शय्यामधिवेश्य रामया रेमेऽनुलेपार्पणपुण्यलेशया ॥ ६ ॥

सद्भिरासनादिभिः ॥ ३ ॥ ४ ॥ प्रसाधितो योग्यतामापादित आत्मा देहो यया सा । सव्रीडं यल्लीलयोद्गतं स्मितं तद्येषु विभ्रमेषु भ्रूविक्षेपादिविलासेषु तद्युक्तैरीक्षितैरुपलक्षिता ॥ ५ ॥ अनुलेपार्पणादन्यत्तस्याः पुण्यं नास्तीति दर्शयितुं पुण्यलेशयेत्युक्तं न तु पुण्यस्याल्पत्वविवक्षया ॥ ६ ॥

मालादिग्रहः ॥ * ॥ अवेक्ष्य दूरे दृष्ट्वा । सम्यगुल्लासेनोत्थाय । हि पादपूरणे । उल्लासकार्यमाह—जातसंभ्रमा, सम्भ्रमः चित्तत्वरा । अच्युतमिति प्रतिज्ञातच्युतिरहितम् ॥ ३ ॥ यथा कृष्णस्तथैव । तया सैरन्ध्र्या । अभिमृश्य स्पृष्ट्वा । सर्वेश्वरसमक्षं समासनोपवेशनानौचित्याद्भूमावेवोर्व्यां चासने न तु सिंहासन इति भावः । महाधनमनर्घ्यम् । लोका अत्र रसिकास्तदाचरितानि दासीसंगादीनि । वस्तुतस्तु लोकाचरितानि स्वोक्तिपालननिजजनाभिप्रेतार्थपूरणादीनि ॥ * ॥ तथेत्युक्तसमुच्चये । उद्धवश्च साधु यथा स्यात्तथाऽभितः पूजितः उर्व्यां न्यषीददिति भक्त्यासनमभिमृश्य स्पृष्ट्वेति तस्याः प्रीत्यर्थं वंदित्वेत्यर्थो वा । महाधनममूल्यरत्नादिमयमित्यर्थः । तूर्णं विवेशेति पूजायाः पूर्वमासने निविष्टस्ततः उत्थाय सद्यो गृहान्तःशय्यायां स्वयमुपविवेशेत्यर्थः । तत्र हेतुः—लोकानामाचरितानि स्वैरस्त्रीगृहमध्ये रत्यर्थं स्वेच्छयैवाशु तच्छय्यानिवेशादीनि सर्वाण्येवानुसृतः । स्वीकृतलौकिकलीलत्वादेवात इदमपि रात्रावेव बोद्धव्यम् ॥ **विश्वनाथस्तु**—उर्व्यां न्यषीदत् कृष्णप्रियादत्तासने दासस्योपवेशनानौचित्यात्तदाज्ञापालनार्थं केवलं हस्तेनैव पस्पर्शेत्यर्थमाह ॥ ‘ शयनमन्तर्गृहे शय्यासुप्तिसद्मसु वर्तते ’ इति ॥ ॥ ४ ॥ सा कुब्जचरा । सुधेव स्वादुरासव ओषध्यर्कस्सुधासवस्तदादिभिरुत्तमांजनादिभिः ॥ * ॥ आलेपश्चंदनपंकः । गंधो वह्निसंपर्कजश्चंदनादिनिर्यासः । सुधावदासवो मधु । उपससार समीपे शनैर्गता । माधवं लक्ष्मीकान्तमिति, अहो दीनविषयकृपापारवश्यं कियद्वर्णनीयमिति भावः । प्रसाधितो रतियोग्यतां प्रापितः ॥ ५ ॥ नवस्य “ यद्यप्यसौ पार्श्वगतो रहो गतस्तथापि तस्यांघ्रियुगं नवंनवम् ” इत्याद्युक्तेर्नित्यनूत्नस्य श्रीकृष्णस्य संगमेऽहो अयं ब्रह्माद्याशास्यमानलोकश्रीरमापतिः क्वाहं क्वेति या लज्जा तया विशंकितां संकुचिताम् । शय्यामिति कर्मप्रवचनीययोगे सप्तम्यर्थे द्वितीया । भगवतेऽनुलेपार्पणस्यातीव पुण्यत्वात् । “ काश्मीरद्रवपाटीरकर्पूरादिभिरन्वितम् । अनुलेपं हरेर्दत्त्वा ह्यश्वमेधफलं लभेत् ॥ ” इत्यादिपुराणात् ॥ * ॥ नवसंगमह्रिया विशंकितामित्यनेन तस्याः प्राचीनतत्स्पर्शप्रभावेण तदेव शरीरं परमदिव्यकुमारीभावाय संपन्नमित्येतद्व्यंजितम् । कंकणभूषित इति सुकोमलांगित्वात्कंकणोपर्य्येव प्रगृह्येत्यर्थः । तादृशानुग्रहे भक्तिरेव हेतुरित्याह—अनुपलेपेति, तैर्व्याख्यातम् । यद्वा—अनुलेपार्पणलक्षणं पुण्यं लान्ति आत्मसात्कुर्वंतीत्यनुलेपनलास्तेषामाशिषाऽनुलेपार्पकभक्तवर्गश्रेष्ठयेत्यर्थः । स्वयं भगवति श्रीकृष्णे तत्रापि साक्षात्तत्रापि समयविशेषेऽनुलेपार्पणात् ॥ **विश्वनाथस्तु**—नवसंगमेति विशंकितेति पदाभ्यां मन्दधियः प्रति तस्या अनन्यभोग्यत्वं ज्ञापितम् । तत्र तस्या महासुंदर्य्याः कुब्जत्वमेव रक्षकमासीदिति भावः । अनुलेपार्पणलक्षणस्तत्प्रापकः पुण्यलेशो यस्या इति, न तु

साऽनंगतप्तकुचयोरुरसस्तथाक्ष्णोर्जिघ्रंत्यनंतचरणेन रुजो मृजंती ॥ दोर्भ्यां स्तनांतरगतं परिरभ्य कांतमानंदमूर्तिमजहादतिदीर्घतापम् ॥ ७ ॥ सैवं कैवल्यनाथं तं प्राप्य दुष्प्रापमीश्वरम् ॥ अंगरागार्पणेनाहो दुर्भगेदमयाचत ॥ ८ ॥ आहोष्यतामिह प्रेष्ठ दिनानि कतिचिन्मया ॥ रमस्व नोत्सहे त्यक्तुं संगं तेंबुरुहेक्षण ॥ ९ ॥ तस्यै कामवरं दत्त्वा मानयित्वा च मानदः ॥ सहोद्धवेन सर्वेशः स्वधामागमदर्चितः ॥ १० ॥

कुचादीनां रुजो मृजंती । जिघ्रंती च चरणमित्यर्थः ॥ ७ ॥ काममेव प्राकृतदृष्ट्या अयाचत । न च गोप्य इव सा तन्निष्ठेति दुर्भगेत्युक्तम् । कृतार्थत्वे तु तस्या न संदेहः ॥ ८ ॥ ९ ॥ काम एव वरस्तं दत्त्वा । मानयित्वा चालंकारादिदानैः ॥ १० ॥

साधनसिद्धानां व्रजांगनानां माथुरीणामिव पुण्यपुंज इति भावः ॥ ६ ॥ सा सैरंध्री । दोर्भ्यां बाहुभ्याम् । स्तनावंतरे मध्ये यस्य तत्स्तनांतरं वक्षस्थलं तद्गतं प्राप्तं कांतं कमनीयं, कशब्दोपलक्षितवेदस्याप्तं तात्पर्यविषयं वा । काम्यते सर्वैरिति कमनी रमा तया यायते प्राप्यते कमनीया सा मूर्तिर्यस्य, अनेन लक्ष्मीयोग्यमतीव दुर्लभं वस्तु तदिति ध्वनितम् । अतिदीर्घतापं संसारम्, लोकदृष्ट्या कामार्तिं वा ॥ * ॥ अनंगतप्तेत्यस्योरसाऽक्षिभ्यामप्यनुषंगः । अनंगतप्तेत्यसमस्तत्वेपि संप्लुतत्वात् । अनंतस्यापरिच्छिन्नमाधुर्यतया च तस्य तथा नाम्नश्चरणेन स्वयं तेन वा तत्रतत्र निहितेन रुजः कामपीडा मृजंती अपसारयन्ती, एतच्च रतान्ते ज्ञेयम् । स्तनांतरगतं स्तनरूपावकाशं प्राप्तम् 'अंतरमवकाशावधि' इत्यमरनानार्थात् । अत एवानंदमूर्तिं तत्रापि कान्तं मधुरभावविशेषमयमत एवात्यंतदीर्घमपि तदप्राप्तितापं सद्यो जहौ ॥ ७ ॥ सोक्तार्था । प्राकृतदृष्ट्या संसारिकदृष्ट्या । कामं निधुवनलीलाम् । तन्निष्ठा कृष्णन्निष्ठा । यत्स्मरणं कृतार्थताऽऽपादकं तत्संगस्य तत्र का कथेत्यर्थः । यद्वा—दुर्गतं भं भयं यस्मात्स दुर्भः कृष्णस्तं गच्छतीति दुर्भगा, दुःखेभ्यो बिभ्यतीति दुर्भा विरक्तास्तैर्गम्यते इति दुर्भगो हरिः सोस्ति प्रियत्वेनास्या इति दुर्भगा । मत्वर्थीयाजंताट्टाप् । इदं वक्ष्यमाणम् ॥ * ॥ ईश्वरं परमस्वतंत्रमत एव परमदुष्प्रापम् । एवमुक्तप्रकारेण । तत्रापि केवलः शुद्धभक्तस्तस्य भावः कैवल्यमेकान्तरतिः 'कैवल्यसंमतपथस्त्वथ भक्तियोगः' इत्यत्र कैवल्यमित्येत्र संमतः पंथा भक्तियोग इति स्वामिव्याख्यानात्, यथा वर्णविधानमपवर्गश्च भवतीति पंचमस्कन्धपद्यानुसाराच्च तस्य नाथं तत्प्रदानप्रभुं तत्तया प्राप्य प्रकर्षेण लब्ध्वा दुर्भगा पूर्वं कुब्जात्वदासीत्वलक्षणदौर्भाग्ययुक्तापि न तु श्रीगोपीव स्वतः श्रीविजयितत्तद्गुणयुक्ता । अहो आश्चर्यम् । इदं वक्ष्यमाणं सुदुर्लभं पदमयाचत । अस्या दुर्भगावस्थत्वस्य प्राचीनत्वेन निर्देशः । "किमनेन कृतं पूर्वमवधूतेन भिक्षुणा" इत्यादिवत् ॥ ८ ॥ ० ॥ * ॥ तदेवाह—सहेति । आहोष्यतामिति पाठः सर्वत्र स तु पुनरुक्तः अयाचतेत्युक्तत्वात् । याचनमेव विवृणोति—सहेति । इह मद्गृहे मया सहोष्यतां त्वया । तत्र प्रयोजनमाह—रमस्वेति । तत्रापि मया सहेति योज्यम् । ननु ममान्यत्र कृत्यानि बहुतराणि संतीति चेत्तत्राह—नोत्सह इति । अतस्त्वं यत्र यास्यसि तत्रैवाहं यायामन्यथा प्राणांस्त्यक्ष्यामीति भावः ॥ **विश्वनाथस्तु**—कैवल्येनैव नाथमयाचत केवलया मयैव सह रमस्व न त्वन्यया कयाचिदपीति प्रार्थयामासेत्यर्थः । तथाभूतवरस्य कृष्णेनाप्रदास्यमानत्वाद्दुर्भगा । तत्रापि कतिचित्तु दिनानि इहांतर्गृह एवोष्यतां न तु बहिर्निष्क्रम्यतां भोजनपानादिसिद्धिरेतद्गृहमध्य एव सर्वा वर्तत इति भावः ॥ ९ ॥ तस्यै सैरंध्र्यै । सर्वेश इति तद्गृहगमने तत्संगे च दोषाभावमाह ॥ * ॥ कामवरं दत्त्वेति मत्कर्तृकसंपूर्णसंभोग

१ सहोष्यतामिति पा० ।

**दुराराध्यं समाराध्य विष्णुं सर्वेश्वरेश्वरम् ॥ यो वृणीते मनोग्राह्यमसत्त्वात्कुमनीष्यसौ ॥ ११ ॥**
**अक्रूरभवनं कृष्णः सहरामोद्धवः प्रभुः ॥ किंचिच्चिकीर्षयन्प्रागादक्रूरप्रियकाम्यया ॥ १२ ॥**

**मनोग्राह्यं विषयसुखम् । तस्यासत्त्वात्तुच्छत्वात् ॥ ११ ॥ किंचिच्चिकीर्षयन् हस्तिनापुरप्रस्थापनं कारयितुमिच्छन्नित्यर्थः । अक्रूरप्रियकाम्यया च ॥ १२ ॥**

एव तवाभिप्रेतः स च सामान्यस्त्रीसत्त्वेऽपि ते सेत्स्यतीति प्रतिश्रुत्येत्यर्थः । मानयित्वा तत्र तां संमतां कृत्वा, निरंतरं रमणं तु त्वदिष्टं न संभवेत्किंवदन्तीभयादिति चोक्त्वाऽगमत् । गमनागमनयोरुद्धवसाहित्यं लोकवितर्काऽभावाय, तस्य महाशिष्टशिरोमणित्वेन सर्वत्र ख्यातत्वात् । कुब्जेयं भूशक्तेर्विभूतिर्ज्ञेया पूर्वव्याख्यानात् ॥ **तोषिणीकारास्तु**—कामः 'सहोष्यताम्' इत्यादिना तया प्रार्थितः स्मरोपभोगः स एवाभीष्टोऽर्थ आगत्यागत्य रंस्य इति तत्संकल्पात्मकस्तामिति श्रीगोपीविच्छुद्धप्रेमाविशेषो भावो दर्शितः । 'यत्ते सुजातचरणाम्बुरुहम्' इत्यादिरीत्या तासां तदीयसुखैकस्वसुखदत्वादस्यास्तु स्वसुखमात्रोद्देशात् । किन्तु "लक्ष्मीसहस्रकोटीनामप्याविर्भावने प्रभोः । सैरंध्र्याः स्वीकृतिः सेयं व्यनक्ति स्म परां कृपाम् ॥" । तत्र च तस्य स्वाभाविककरुणैव कारणमित्याह—मानद इति । उद्धवेन सहित इति यथा तेन सह गतस्तथैवागतः, तच्च लोकाचारितमनुसृत्य तस्य परमधर्मनिष्ठस्य संगेनापलापार्थमित्र । वस्तुतस्तु परमप्रणयेनेति भावः । स्वधाम श्रीवसुदेवांतर्गृहम् । तत्रतत्र च तस्य लीलेच्छैव कारणमित्याह—सर्वेश इति । ऋद्धिमत्[1] सर्वविधप्रियजनसेवोपकरणसंपन्नमिति तद्गमनयोग्यतोक्ता । अत्रेयं माथुरहरिवंशकथा श्रूयते—पूर्वजन्मनीयं राजकन्यासीत्तत्र नारदाद्भगवद्गुणगानश्रवणेन तस्मिञ्जातानुरागा बभूव, पश्चाच्च नारदात्तस्या योग्यवरे राज्ञा पृष्टे स उवाच तामेव कन्यां पृच्छामस्तस्याः कोभिप्रायस्ततश्च पृष्टा सोवाच—यं भवान्सर्वोत्तमत्वेन गायति स मे वर इति, ततश्च नारदेन तत्प्राप्तावसंभावनायां दर्शितायामपि जन्मकोटिभिरपि वरयिष्यामीति तद्वचनं श्रुत्वा विवाहस्य तत्प्राप्तिसाधनमुपदिष्टा सा चिरं तपस्तप्तवती, तदाऽऽकाशवाणी जाता—जन्मांतरे कुब्जा सती यत्स्पर्शेण सौंदर्यं लप्स्यते सोऽहं ते पतिः स्यामिति, ततश्च कंसमंत्रिवरवैश्यगृहे सा तथैव जाता, कंसेन सा प्रार्थ्य निजगंधयुक्तौ निर्दिष्टेति । एवमंगरागार्पणेनाहो इति यथाधुनिकदृष्टमेव कल्पभेदकथामयं वेति ॥ १० ॥ मनसाप्यग्राह्यम् । कुत्सिते शब्दादिविषये मनीषा बुद्धिर्यस्य स तथा ॥ * ॥ तदेवं तत्कथां समाप्य तस्या लौकिककामिनीवत्प्रतीयमानत्वेऽपि निंदां निराकुर्वन्प्रशंसामेव व्यनक्ति—दुराराध्यमिति । विष्णुं सर्वव्यापकं परिपूर्णं स्वयं भगवन्तमित्यर्थः । अतः सर्वेषामीश्वराणां महत्स्रष्ट्रादिपुरुषाणामपीश्वरमाविर्भावादिहेतुम् । 'सर्ववरेश्वरम्' इति पाठे तु सर्वेषां वराणां वरणीयार्थानां मुक्तिभक्तिपर्यन्तानामीश्वरं प्रदानसमर्थमत एव दुराराध्यं तादृशमपि सम्यगाराध्य यो मनोग्राह्यं वस्तु स्वप्रीतिजनकत्वेन प्रार्थयते असावेव जनः कुमनीषी कुमतिः, तत्र हेतुरसत्त्वात् । अतितुच्छानित्यानर्थकार्यर्थवरणात् । एषा तु वाङ्मनसागोचरमानंदमूर्तिंश्रीभगवन्तमेव तादृशत्वेन प्रार्थितवती परमसुबुद्धिरेवेत्यर्थः । तथैव प्रार्थितं श्रीप्रह्लादेन—"या प्रीतिरविवेकानां विषये ह्यनपायिनी । त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु ॥" इति विष्णुपुराणे ॥ **विश्वनाथस्तु**—मनोग्राह्यं स्वेंद्रियसुखं तेन कृष्णेंद्रियसुख एव सर्वथा दृष्ट्या यद्यानुषंगिकं स्वेंद्रियसुखं स्यात्तदा न दोषः । भक्तिमात्रैककामित्वेऽपि संसारध्वंसत्वादिति ज्ञेयम् ॥ ११ ॥ इत्यर्थ इति—किञ्चित्पदं सर्वसाधारणवाचि तेनेष्टार्थावबोधः, इष्टं च हस्तिनापुरप्रेषणमेवेति भावः । अक्रूरप्रियं च "आगच्छ याम गेहान्नः सनाथान्कुर्वधोक्षज" इत्याद्युक्तलक्षणम् ॥ * ॥ श्रीसैरंध्र्या इवाक्रूरायापि दत्तं वरं संपादयंस्तद्गृहं गत इत्येतदंशेन प्रसंगसाजात्याल्लीलाक्रमाच्चाह—अक्रूरेति । रामोद्धवाभ्यां सहित इति । 'आर्यसमन्वितः' इति भगवता पूर्वं तथैवांगीकारात्तथाग्रजं विना स्वातंत्र्येण तादृशकार्यविधा

---

[1] 'स्वधामाऽगमदृद्धिमत्' इति पा० ।

स तान्नरवरश्रेष्ठानाराद्वीक्ष्य स्वबांधवान् ॥ प्रत्युत्थाय प्रमुदितः परिष्वज्याभिनंद्य च ॥ १३ ॥ ननाम कृष्णं रामं च स तैरप्यभिवादितः ॥ पूजयामास विधिवत्कृतासनपरिग्रहान् ॥ १४ ॥ पादावनेजनीरापो धारयञ्छिरसा नृप ॥ अर्हणेनांबरैर्दिव्यैर्गंधस्रग्भूषणोत्तमैः ॥ १५ ॥ अर्चित्वा शिरसाऽऽनम्य पादावंकगतौ मृजन् ॥ प्रश्रयावनतोऽक्रूरः कृष्णरामावभाषत ॥ १६ ॥ दिष्ट्या पापो हतः कंसः सानुगो वामिदं कुलम् ॥ भवद्भ्यामुद्धृतं कृच्छ्राद्दुरंताच्च समेधितम् ॥ ॥ १७ ॥ युवां प्रधानपुरुषौ जगद्धेतू जगन्मयौ ॥ भवद्भ्यां न विना किंचित्परमस्ति न चापरम् ॥ १८ ॥

आराद्दूरत एव ॥ १३ ॥ १४ ॥ आ अप इति छेदः । अप आ सर्वतो धारयन्नित्यन्वयः ॥ १५ ॥ १६ ॥ वां युवयोरिदं कुलं गृहं वा भवद्भ्यामुद्धृतं समेधितं च ॥ १७ ॥ वामिदं कुलमित्यादिव्यवहारदृष्ट्योक्त्वा परमार्थमाह । युवामिति । जगन्मयौ युवाम् । कुतः । जगद्धेतू । तदपि कुतः । प्रधानपुरुषौ तदात्मकौ । अतो भवद्भ्यां विना परं कारणमपरं कार्यं च नास्ति ॥ १८ ॥

नानौचित्याच्च । रामोद्धवसाहित्यं सर्वत्रैव तस्य तदनुगतत्वात्कार्यवरस्य विधानार्थं मंत्रिवरस्यापेक्ष्यत्वाच्च ॥ **विश्वनाथस्तु**—अक्रूरप्रियकाम्ययैव किञ्चिच्चिकीर्षयन् दासस्य स्वविषयकप्रभुनिदेशस्यैव प्रियत्वमननात् ॥ १२ ॥ सोऽक्रूरः । तान्कृष्णादीन् । ननामेत्यग्रिमेणाप्यन्वयः ॥ * ॥ श्रीकृष्णस्य तदीयं पांडवीयञ्च सौहृदांशं प्रकाश्यैव तत्र गतत्वात्प्रथमतोऽक्रूरस्यापि तादृशो भावो जात इत्याह—स इति । नरवरेषु श्रेष्ठान् आरात्तदर्थं चन्द्रशालिकाद्युपवेश्य स्थापयित्वा दूरादेव स्वयं विलोक्य प्रमुदितः सन् प्रत्युत्थाय प्रत्युद्गम्य चेति ज्ञेयम् । ततः परिष्वज्य शुभाशंसनादिनाभ्यनन्दत् । ‘ अभिनंद्य च ’ इति पाठे युग्मकम् ॥ १३ ॥ सोऽक्रूरः । तैः कृष्णादिभिः ॥ * ॥ पश्चादातिथ्यकरणे भक्त्यंशमवलंब्य स्वभावादरेणैवैश्वर्यस्फूर्तिस्तदनुक्रमेणैव कृष्णं रामञ्च ननामेत्यन्वयः । उद्धवं तु “ वैष्णवे बन्धुसत्कृत्या ’ इति रीत्या बन्धूचित्तमेव सच्चकारेति ज्ञेयम् । तत्रापि पूर्वयुक्त्या तैः श्रीकृष्णादिभिरभिनंदित एव ‘ अभिवादितः ’ इति पाठांतरम् ॥ १४ ॥ अर्हणेन योग्यपूजोपकरणेन । तदेवाह—अंबरैरित्यादि ॥ मृजन्मृदु पीडयन् ॥ * ॥ पादेति युग्मकम् । पादाववनिज्येते याभिस्ताः । धारयन्निति “ वर्तमानसामीप्ये वर्तमानवद्वा ” । अर्हणेन चतुर्विधान्नतांबूलपर्यंतार्हणद्रव्येण ॥ तदनंतरं पूर्वतोऽपूर्वैर्ऽम्बरादिभिरर्चयित्वा शिरसाऽऽनम्य पादसंवाहनारंभे भक्त्या तौ शिरसा स्पृष्ट्वा । पादाविति—कृष्णरामयोः सह विश्रांतयोरेकमेकमित्यर्थः । तथाभिप्रेत्यैव श्रीकृष्णेन तथा विश्रांतत्वात् । मृजन्संवाहयन्नित्यर्थः । श्रीकृष्णरामावुत्तानशायिनौ ॥ १५ ॥ १६ ॥ उद्धृतं दुःखात् । समेधितं यथेप्सितप्रदानेन ॥ * ॥ सम्यगेधितं विचित्रवैभवैः ॥ १७ ॥ जगन्मयौ जगद्व्यापिनौ । तत्र हेतुमाशंकते—कुत इति । तदपि जगद्धेतुत्वमपि । तदात्मकौ प्रधानपुरुषरूपौ । संकर्षणस्य प्रधानकार्याहंकाराधिष्ठातृत्वेन प्रधानरूपत्वं, पञ्चमस्कन्धे तु श्रीरुद्रेण स्फुटमेव प्रधानत्वमुक्तं संकर्षणस्य प्रधानकार्यकारित्वात् । तथाहि—“ यस्याद्य आसीद्गुणविग्रहो महान्यत्संभवोऽहं त्रिवृता स्वतेजसा ” इति । सांख्यैरपि प्रधानादेव महत्तत्त्वोत्पत्तिस्ततोऽहंकारोत्पत्तिश्च मन्यते, श्रीकृष्णस्य पुरुषत्वम् “ स एष आद्यः पुरुषः पुराणो न यत्र कालो विशते न वेदः ” इत्यादिवाक्यैर्बहुत्रोक्तमिति । यतः प्रकृतिपुरुषरूपावतो हेतोः । नास्तीति निखिलप्रपञ्चस्य प्रकृतिपुरुषात्मकत्वात् । “ अणुर्बृहत्कृशः स्थूलो योयो भावः प्रसिध्यति । सर्वो ह्युभयसंयुक्तः प्रकृत्या पुरुषेण च ॥ ” इति वक्ष्यमाणत्वात् ॥ * ॥ इदं कुलं वामिति किमुच्यते जगदपि युष्मदीयमित्याह—युवामिति । एकस्यापीश्वरस्य द्विधाविर्भावादित्वेन बहिरंगांतरंगशक्तिभ्यां प्रधानपुरुषौ सन्तौ जगद्धेतू जगदुपादाननिमित्तकारणे, अत एव ताभ्यामेवांशाभ्यां जगन्मयौ, तत्तादात्म्येनापि स्थिताविव्यर्थः । तदुक्तमेकादशे—“ आसीज्ज्ञानमथो अर्थ एकमेवाऽविकल्पितम् । तन्मायाफलरूपेण द्विधा

आत्मसृष्टमिदं विश्वमन्वाविश्य स्वशक्तिभिः॥ ईयते बहुधा ब्रह्मञ्छ्रुतप्रत्यक्षगोचरम् ॥१९॥ यथा हि भूतेषु चराचरेषु मह्यादयो योनिषु भांति नाना॥ एवं भवान्केवल आत्मयोनिष्वात्मात्मतंत्रो बहुधा विभाति ॥ २० ॥ सृजस्यथो लुंपसि पासि विश्वं रजस्तमःसत्त्वगुणैः स्वशक्तिभिः ॥ न बध्यसे तद्गुणकर्मभिर्वा ज्ञानात्मनस्ते क्व च बंधहेतुः ॥ २१ ॥

ननु प्रत्यक्षादिसिद्धं कथं नास्तीत्युच्यतेऽत आह । आत्मसृष्टमिति । हे ब्रह्मन्परमेश्वर । ब्रह्मेति वा पाठः । रजआदिस्वशक्तिभिरात्मनैव सृष्टमिदं विश्वमन्वाविश्य कारणत्वा दननुप्रविष्टोऽप्यनुप्रविश्येव स्थितः श्रुतप्रत्यक्षगोचरं यथा भवति तथा बहुधा भवानेव प्रतीयते॥ १९॥एकस्यैव बहुधा प्रतीतिं सदृष्टांतमाह। यथा हीति । योनिषु स्वस्यैव रूपांत रेणाभिव्यक्तिस्थानेषु चराचरेषु भूतेषु यथा महीप्रमुखानि कारणान्येव नाना भांति तथात्मयोनिषु स्वकारणेषु भूतभौतिकेषु भवान्केवलोऽपि बहुधा विभाति । ननु जीवोऽपि नरमृगादिशरीरेषु बाल्युवाद्यवस्थासु च तथातथा प्रतीयत इत्याशंक्य तद्व्यवच्छेदार्थमात्मतंत्रग्रहणम् ॥ २० ॥ ननु सृष्ट्यादिकर्तृत्वेन सगुणत्वेन च मम किं जीववद्बंध उक्तो नहिनहीत्याह । सृजसीति । तद्गुणकर्मभिर्वा तैर्गुणैः कर्मभिर्वेत्यर्थः । यतः क्व च ते बंधहेतुः कदाचिदपि बंधहेतुरविद्या तव नैवास्ति । कुत इत्यत आह । ज्ञाना

समभवद्बृहत् ॥ ” इति । अतो भवद्वयं विना भूतं कारणं कार्यं च किञ्चिन्नास्तीति जगदेव युवाभ्यामुद्धार्यं समेध्यञ्चेति भावः ॥ १८ ॥ प्रत्यक्षसिद्धस्यापलापो न युक्त इत्याशंकते—नन्विति । नपुंसकानां संबोधने न लोपविकल्पत्वाद्वितीयपाठोपि साधीयान् । अन्वाविश्याणुत्वमहत्त्वानुरूप्यतया प्रविश्य “ तत्सृष्ट्वा तदेवानुप्राविशत् ” इति श्रुतेः । श्रुतप्रत्यक्षयोर्गोचरम्—श्रुतं श्रुतिः “ वाचारंभणं विकारः—”इत्यादिरूपा, प्रत्यक्षत्वयं घटोऽयं पट इत्यादिनिर्दोषार्थेन्द्रियसन्निकर्षलक्षणम् । यद्वा—श्रुतस्य प्रत्यक्षं साक्षात्कारो येषां ते श्रुतप्रत्यक्षा ज्ञानिनस्तेषां गोचरं वा ॥ * ॥ तादृशतत्कार्यस्य विश्वस्य तद व्यतिरेकेण तदभिन्नत्वं साधयन्पुनरंतर्यामितया तद्व्याप्तत्वेन च साधयति । आत्मकार्यं स्वसृष्टं बहुधा देवगंधर्वमनुष्यगवादिरूपेण चेयतेऽवगम्यते, यतो विश्वमिदं श्रुतप्रत्यक्षगोचरं श्रवण दर्शनविषयीभूतम् । अजहल्लिंगस्यापि गोचरशब्दस्य क्लीबत्वमार्षम् ॥ १९ ॥ “ योनिः प्राकव्यनिलये भगणे त्वाकरेषु च ” इति धरणिः । भांति प्रतीयन्ते । तथातथा नरमृगादि रूपो बाल्युवादिरूपो वा । तद्व्यवच्छेदार्थं जीवत्वापाकरणार्थम् ॥ * ॥ एवं केवलः शुद्धोऽचिंत्यशक्त्या विकाररहित एव आत्मयोनिष्वात्माभिव्यक्तिस्थानेषु आत्मा भवान्बहुधा विभाति । आत्मतंत्रः स्वतंत्रः ॥ २० ॥ स्वतंत्रत्वेपि पुनराशंकते—नन्विति । नहिनहीति संभ्रमे वीप्सा । इत्यर्थ इति--तत्पुरुषभ्रमवारणार्थमयमर्थः कार्य इति । यतो हेतोर्बंधहेतुर्नास्ति अतो न बध्यसे इत्यन्वयः । इति भाव इति— “नेश्वरस्याऽशुभं धत्ते स्वे महिम्नि स्थितस्य च” इत्युक्तेः, लौकिकींद्रजालादिमायायामपि तथा दर्शनात् ॥ * ॥ ननु भवत्वचिंत्यशक्तित्वाच्चिंतामण्ययस्कांतादिवदुपादाननिमित्तत्वेप्यविकारित्वं, कथं नाम वीक्षणादिचेष्टामयस्रष्टृत्वादि ? कथं वा तेन न बद्धस्तत्राह—सृजसीति । सिद्धान्तमाह—ज्ञानात्मनः चिच्छक्तिमात्रविलासप्रयत्नस्य मायाविलासोऽपि यस्तव प्रयत्नः प्रतीयते सोऽपि तत्संबंधेनैवेत्यर्थः । एतदुक्तं भवति—मायिकप्रपंचेऽपि चिच्छक्ति विलासास्त्वदुक्त्यादिरूपा अनुगता दृश्यन्ते, तथा चैकादशे “सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी । तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा ॥” इत्यादि । अतो मायिकवैभवांतर्गतसाधकभक्तजनार्थमेव कुर्वति त्वय्यानुषंगिकमेवान्यसृष्ट्यादिकं भवतीति पासीति पश्चान्निर्देशस्य तात्कालिकत्वेन दृष्टान्ततया विन्यासात् । यथोक्तं प्रथमे श्रीकुन्त्या—“तथा परमहंसानां मुनीनाममलात्मनाम् । भक्तियोगविधानार्थं कथं पश्येमहि

देहाद्युपाधेरनिरूपितत्वाद्भवो न साक्षान्न भिदाऽऽत्मनः स्यात् ॥ अतो न बंधस्तव नैव मोक्षः स्यातां निकामस्त्वयि नोऽविवेकः ॥ २२ ॥

त्मन इति । मायाया आश्रयानावरकत्वादिति भावः ॥ २१ ॥ किञ्च आस्तां तावद्बंधशंका यतोऽविद्योपाधेर्जीवात्मनोऽपि न वस्तुतो बंधोऽस्तीत्याह । देहाद्युपाधेरिति । अनिरूपितत्वान्मिथ्यात्वादित्यर्थः । आत्मनो भवो जन्म तन्मूला भिदा च साक्षात्स्वरूपतो न स्यादिति । ननु मम बंधाभावं वदता त्वया किं मोक्षोंगीकृतः ओमिति चे त्तर्हि बंधाभावे मोक्षासंभवादापन्नो बंधोऽपीत्याशंक्याह । अत इति । यतो नाविद्या अतो न बंधो मोक्षश्च । एवमुभौ न स्यातामित्यर्थः । ननु उलूखले मां बद्धं श्रुतवान्यमु नाह्रदे मुक्तं दृष्टवानस्यतः कथमुभयं नास्तीत्यत आह । निकाम इति । स्वाभिप्रायानुरूपस्त्वयि नोऽस्माकमविवेक एव परमेवंभूत इति । यद्वा नोऽविवेक एव तवोभौ स्याता

त्रियः ॥" इति । तदेवं मायाविलास एव विकारित्वं न तु चिच्छक्तिविलासे, तत्र तन्निषेधात् । यथोक्तं द्वितीये वैकुंठवर्णने–'न यत्र माया ' इति, 'न च कालविक्रमः ' इति च । तथा मायाविलासानासक्तेः तेन न बंधोऽतो न दोष इति भावः ॥ अत्र **विश्वनाथः**–अतस्त्वमेक एव सर्वे ( जगदी ) श्वर इत्याह–सृजसीति । तत्तदभिधैस्तैस्तैर्गुणैः कर्मभिश्च जीव इव त्वं, न बध्यसे । ननु कुतोऽहं न बध्ये तत्राह–ज्ञानात्मनः ज्ञानस्वरूपस्य, परब्रह्मणस्तव बंधहेतुरविद्या क्व, जीवस्येव तव सा नास्तीत्यर्थः ॥ अत्र **तोषिणी**–तैर्व्याख्यातं, तत्रोलूखलबद्धश्रवणान्नराकृतिमूर्तौ संसारबंधोपि संभाव्यते, यमुनाह्रदे दृष्टदेवाकृतिमूर्तौ तत्तदैश्वर्यसामग्री दर्शनान्मुक्तत्वं च प्रतीयत इत्याभिप्रायः ॥ २१ ॥ तव तु बंधो दूरापास्त इत्याह–किञ्चेति । तन्मूला जन्मकारणम् । भिदा भेदः । अनिरूपितत्वाद्विचारे क्रियमाणे निरूपयितुमशक्यत्वात् । विचारश्च–देहः कुतो जातः शुक्रशोणिताभ्यां, ते चान्नादन्नञ्चादृष्टसहकृतजलादित्येवमादिरूपस्तेन परमकारण एव पर्यवसानं लभ्यते नान्यत्रेति । बंधाभावेऽपि शंकते–नन्विति । ओमित्यंगीकारेऽव्ययम् । तत्राप्याक्षिपति–बंधाभावे इति । 'बद्ध एव मुक्तो भवति नाबद्धः' इति न्यायात् । तथा च मोक्षाऽभावे बंध एवापन्न आयात इति । एवमुक्तरीत्या । उभौ बंधमोक्षौ । इत्यर्थ इति–सर्वदा विमुक्तस्य कथं बंधाशंका तदुत्तरा मोक्षशंका चेत्यर्थः । बंधमोक्षाव भिनीय दर्शयति–नन्वित्यादिना । मुक्तं कालियादिति शेषः । यत उभौ प्रत्यक्षसिद्धावतो हेतोः । अतोऽत्र । "निकामस्त्वनुकूले निश्चयातिशययोरपि " इति धरणिः । परं केवलमेवंभूतो बंधमोक्षादिप्रदर्शक इति । न हि वनस्थाग्निना गृहदाहो युज्यत इत्यतो भवदधिकरणकाविवेको भवतामेव बंधादिप्रदो न मम । त्वर्यात्युक्त्या ममैव प्रतीयत इत्यरुच्याह–यद्वेति । वस्तुतस्तव न स्तस्तावस्माकमेवाविवेकः स यो विद्यमानधर्मारोपः खपुष्पसौर भ्यादिवदिति भावः ॥*॥ अनिरूपितत्वादनिर्वचनीयत्वादित्यर्थः । यद्वा–यदि वा स्यातां तादृशौ तदा नोऽस्माकं प्रियवर्गाणां नितरां काम एव तौ द्वौ स्याताम् । प्रेमविजातिविशेषोचितमनोरथविशेषं प्राप्यैव तादृश्यो लीलास्तवोदयंते, यथा श्रीयशोदाया वात्सल्यमनोरथविशेषेणार्भकभावमयलीलाविशेषोदयाद्बंधनादिप्राप्तिलीलोदय इति भावः । ननु कथं प्रकटैश्वर्येऽपि मयि तेषां तादृशभावः संभवति तत्राह–न तिष्ठति विवेक ऐश्वर्यदर्शनेऽपि तदनुसंधानं यस्मात्तादृशोऽपि निष्काम इति । यतः " अहं भक्तपराधीनो ह्यस्वतंत्र इव द्विज । साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥ " इत्युक्तेस्तवापि तादृशो भावः स्यादिति भावः ॥ अत्र **विश्वनाथः**–ननु मे यद्यविद्या नास्ति तदात्मदेहोऽयमविद्यात्मकः कुत आयातस्तत्राह–देहादीति । तव देहाद्युपाधेरनिरूपितत्वादिति तव देहादिरुपाधि राविद्यक इति कैरपि शास्त्रज्ञैर्न निरूपित इति । अत एव तव न भवो जीववत्संसारो जन्म वा नैव स्यात्, तवापि देहादिराविद्यको यदि भवेत्तदा त्वमपि स्वतंत्रोऽपि जीवतुल्य एव जन्मादिमान्स्या इत्यर्थः । अतस्तव देहादेरुपाधित्वाभावाज्जीववत्साक्षात्पैतृकधातुसंबंधं जन्म न स्यात्किं त्वाविर्भावात्मकमेव जन्म भवेत्तथात्मनो देहाद्भिदा भिन्नत्वं जीवस्येव तव नास्ति, त्वद्देहोऽपि त्वमेवेत्यर्थः । " देहिदेहविभागोऽत्र नेश्वरे विद्यते क्वचित् " इति पाद्माद्युक्तेः । अतस्तव ब्रह्मत्वादेवाविद्याविद्याभ्यामतीतस्य नैव बंधो नैव मोक्षः । उलूखले मात्रा निबद्धस्य कालियह्रदान्मुक्तस्य मम बंधमोक्षौ स्त इति चेत् स्याताम् ,तौ तु तेन निषिध्येते इति भावः । कुतस्त्वयि स बंधः स मोक्षश्च, नोऽस्माकं भक्तानां निकामो ध्येयत्वादभीष्टा एव, यतो विवेकः स बंधो मोक्षश्च

त्वयोदितोऽयं जगतो हिताय यदायदा वेदपथः पुराणः ॥ बाध्येत पाखंडपथैरसद्भिस्तदा भवान्सत्त्वगुणं बिभर्ति ॥२३॥ स त्वं प्रभोऽद्य वसुदेवगृहेऽवतीर्णः स्वांशेन भारमपनेतुमिहासि भूमेः ॥ अक्षौहिणीशतवधेन सुरेतरांशराज्ञाममुष्य च कुलस्य यशो वितन्वन् ॥ २४ ॥ अद्येश नो वसतयः खलु भूरिभागा यः सर्वदेवपितृभूतनृदेवमूर्तिः ॥ यत्पादशौचसलिलं त्रिजगत्पुनाति स त्वं जगद्गुरुरधोक्षज याः प्रविष्टः ॥ २५ ॥ कः पंडितस्त्वदपरं शरणं समीयाद्भक्तप्रियादृतगिरः सुहृदः कृतज्ञात् ॥ सर्वान्ददाति सुहृदो भजतोऽभिकामानात्मानमप्युपचयापचयौ न यस्य ॥ २६ ॥

मिति ॥ २२ ॥ ननु तर्हि ममावतारास्तच्चरित्राणि च शुक्तिरजतवदविद्याकल्पितान्येव किं नहिनहि इयं तु तव लीलेत्याह द्वयेन । त्वयोदित इति ॥ २३ ॥ सुरेतरांशाये राजनस्तेषामक्षौहिणीशतानां वधेन भूमेर्भारमपनेतुम् इह वसुदेवगृहे स्वांशेन रामेण सहावतीर्णोऽसि ॥ २४ ॥ अत एवंभूतस्य तवागमनेन कृतार्थोऽस्मीत्याह त्रयेण । अद्येति । हे ईशाद्य नो वसतयो गृहास्तपोवनादपि बहुपुण्याः । कुतः । या वसतीस्त्वं साक्षात्प्रविष्टः । कथंभूतः । यस्य तव पादसलिलमेव गंगा त्रिजगत्पुनाति यश्च त्वं सर्वदेवादिपंचयज्ञदेवतामूर्तिः स त्वं जद्गुरुरिति ॥ २५ ॥ स्वमनोरथः परिपूरित इति तुष्यन्नाह । कः पंडित इति । ऋतगिरः सत्यवाचः । त्वत्तोऽपरं शरणं कः समीयाद्गच्छेत ।

विवेक एव मायिकत्वाभावाज्ज्ञानस्वरूपो न तु तावदज्ञानसंज्ञौ भवबंधमोक्षावित्यर्थः ॥ २२ ॥ मत्संबंधि निखिलं कल्पितमेवेत्याशंकते—नन्विति । तच्चरित्राणि अवतारचरितानि । भीत इवाह—नहिनहीति । इयमवतारादिरूपा । लीला विलासः । उदितः प्रकाशितः । अयं धर्माधर्मादिबोधकः । हिताय स्वर्गापवर्गाय ॥ * ॥ अतः स्वभक्तितात्पर्यपर्यवसानं वेदमार्गं पुष्णंस्तदभिव्यक्तिस्थानं सत्त्वगुणमपि पुष्णातीत्याह—त्वयेति । त्वयेश्वरेणोदित उक्त इति भ्रमादिदोषचतुष्टयराहित्यात्प्रामाण्यमवश्यपाल्यत्वञ्च । न चेत्थं कृत्रिम इत्याह—पुराणोऽनादिः, तवानादित्वेन त्वत्त एवानादितो मुहुराविर्भावित्वेन चेति भावः । स यदायदा तादृशत्वदपेक्षार्हभक्तवृंदाभावात्त्वदौदासीन्येनासद्भिर्बाध्येताऽतिशयेन पीडितः स्यात्तदा दैवाच्छ्रीप्रह्लादस्येव कस्यचिद्भक्तजनस्यैकस्य बहूनां वा प्राकट्ये सति तत्पोषणार्थं स्वयमवतीर्य सात्त्विकगणवर्द्धनेन वेदपथं पुष्णन्स्वयमेव सत्त्वगुणं भवान्बिभर्ति पुष्णातीत्यर्थः ॥ २३ ॥ यः पाखंडनिवृत्त्यर्थं सत्त्वं बिभर्ति स इत्यर्थः । स्वांशेन निजैश्वर्येण । अमुष्य यदूपपदस्य ॥ * ॥ तदेवमुपोद्घातानंतरम् 'दिष्ट्या पापो हतः कंसः' इत्येवानुदिष्टं प्रकृतमेवानुवर्तयति—स इति, एवमुक्तमाहात्म्यो मुहुरवतीर्य सन्मार्गप्रवर्तकः । विभो हे सर्वैश्वर्यपरिपूर्ण वसुदेवस्य यादवश्रेष्ठस्य, श्लेषेण वसुर्भक्तिलक्षणो धर्मस्तेन दीव्यति द्योतत इति तथा तस्य ॥ २४ ॥ एवंभूतस्य पृथ्वीभारनाशकस्य । अतः कुलयशोविस्तारकत्वादहं कृतार्थोऽत्यंतकीर्तिमानस्मीति । बहुपुण्यत्वे हेतुमाशंकते—कुत इति । पंचयज्ञाश्चोक्ताः । सर्वे देवा ब्रह्माद्याः, पितरोऽर्यमाद्याः,भूताः कीटपतंगाद्याः, नरोऽतिथयः, वेदा ऋगाद्यास्तेषां मूर्तिरेकत्र घनीभावः । वेदमूर्तित्वादेव जगतां गुरुर्हितोपदेष्टा ॥*॥ यादवेषु चाहं त्वया नितरामनुगृहीत इत्याह—अद्येति । हे ईश सर्वेश्वर भूरिभागा बलिप्रभृतिभ्योपि बहुमाहात्म्याः, यतो वेदादयो मूर्तय इव मूर्तयोऽधिष्ठानानि यस्य यज्ञरूपांशावतारे, यस्य च तव वामनांशावतारे पादशौचसलिलमपि त्रिजगत्पुनाति स त्वं जगद्भ्यः सर्वेभ्यः स्वाविर्भावेभ्योऽपि गुरुर्महान्, या मद्वसतीरेव प्रविष्टः न त्वद्याप्यन्ययादवगृहानित्यर्थः । जगद्गुरुत्वादेव हे अधोक्षज सर्वज्ञानातीत ॥ २५ ॥ शरणं रक्षितारम् । 'शरणं गृहरक्षित्रोः' इत्यमरः । यतो हेतोर्ददात्यतः क इति संबंधः, बल्यादिभ्यः स्वात्मार्पणदृष्टेः । उपचयाऽपचयौ वृद्धिह्रासौ, महत्त्वाल्पत्वे इति यावत् । सारथ्यवीरासनादिष्वपि निजजनेच्छया प्रवृत्तिदर्शनादिति भावः ॥ * ॥ भक्तस्तद्द्वेषादिनापि पूतनादिभ्योऽपि तादृशपददानात्प्रीतिविषयत्वेन प्रसिद्धो यस्य तस्मात् । तथोक्तं श्रीमदुद्धवेनापि—' अहो बकीयम् '

दिष्ट्या जनार्दन भवानिह नः प्रतीतो योगेश्वरैरपि दुरापगतिः सुरेशैः ॥ छिंध्याशु नः सुतकलत्रधनाप्तगेहदेहादिमोहरशनां भवदीयमायाम् ॥ २७ ॥ इत्यर्चितः संस्तुतश्च भक्तेन भगवान्हरिः ॥ अक्रूरं सस्मितं प्राह गीर्भिः संमोहयन्निव॥२८॥श्रीभगवानुवाच ॥ त्वं नो गुरुः पितृव्यश्च श्लाघ्यो बन्धुश्च नित्यदा ॥ वयं तु रक्ष्याः पोष्याश्च अनुकंप्याः प्रजा हि वः ॥ २९ ॥ भवद्विधा महाभागा निषेव्या अर्हसत्तमाः ॥ श्रेयस्कामैर्नृभिर्नित्यं देवाः स्वार्था न साधवः ॥३०॥

यतो भवान् भजतः पुंसो भक्तस्य सर्वानभितः कामांश्च ददात्यात्मानमपि ॥२६॥ नोऽविवेकिनाम् । तत्रापीह गृह एव ॥ २७ ॥ २८ ॥ वो युष्माकं प्रजाः पुत्रा हि वयमिति ॥ २९ ॥ ननु नृभिर्देवाः सेव्या इति प्रसिद्धं तत्राह ! देवा इति । स्वार्थाः स्वकार्यसाधनपराः । साधवस्तु केवलं परानुग्रहपराः । परमार्थतस्तु साधव एव देवा इति इत्यादि । तत्प्रियत्वेऽपि कथमप्यनवधानादिना तत्पालनप्रतिज्ञाव्यभिचारः स्यादित्याह—ऋतगिरः सत्यसंकल्पात्, कदाचित्तस्य परमभक्तांतरे वेशेऽपि संकल्पस्यैव तत्कार्यसाधकत्वादिति भावः । न चोपकारात्मकस्य भजनस्याप्यपेक्षा किन्तु कथंचिदाश्रयणमात्रस्येत्याह—सुहृद इति । न चोपकारानभिज्ञतेत्याह—कृतमुपकारं जानाति बहु मन्यत इति कृतज्ञस्तस्मात् । तच्चोपकाराभासस्यापि बहुमन्यमानत्वे पर्यवस्यतीत्याह—सर्वानिति । यस्य विषयलाभालाभादिनोपचयापचयौ न स्तः स भजतो भजनमात्रं कुर्वतः पुष्पपत्रादिनापि सेवमानाय सर्वान्कामान्ददाति, तत्र सुहृदः सौहृद्ययुक्ताय यत्ते आत्मानमपि ददाति तदधीनं करोति तस्मान्मदीयगृहागमनमपि तव नाश्चर्यमिति भावः ॥ **विश्वनाथस्तु**—त्वदपरं त्वत्तोऽन्यम् । ऋतगिरः सत्यवाक्यात्, कंसं हत्वा त्वद्गृहं यास्यामीति स्ववाक्यं सत्यं कृतमिति भावः । सुहृदः हितकारिणः, येन दासस्य हितं स्यात्तत्त्वमेव ज्ञात्वा करोषीत्यर्थः । कृतज्ञात्कदाचित्कमपि किञ्चिदपि भक्तेन विस्मृतमपि त्वं जानास्येवेत्यर्थः । यो भवान्सुहृदे शोभनांतःकरणाय भजते जनाय निष्कामायेत्यर्थः । सर्वानवांछितानपि कामान्ददाति, न च तावतोऽपि दत्त्वा निवर्तस इत्याह—आत्मानं स्वमपि ददाति, अत्र भवानित्यध्याहार्यम् । ननु स्वपर्यंतदानं नाम महानुपचयस्तत्राह—यस्य तवोपचयापचयौ न स्तः । कोटिब्रह्मांडवर्तिद्रव्येषु कोटिसंख्यब्रह्माद्यैस्तुभ्यमुपहृतेष्वपि तव न कोप्युपचयः, त्वया भक्ताय स्वपर्यंतवस्तुजातप्रदानेऽपि न कोप्यपचयः, अतर्क्यानंतशक्तित्वादिति भावः ॥ २६ ॥ सुतादिदेहांतेषु मोहरशनामज्ञानकृतां बंधहेतुभूतामहंताममतामित्यर्थः । सा केति भवदीयमायां त्वदाज्ञाकरीं वंचकशक्तिम् ॥ * ॥ तादृशतत्कृपां श्लाघमानः सलज्जः सन्निजतदेकनिष्ठतांतरायराहित्यं प्रार्थयते—दिष्ट्येति । जनार्दनेति—हे ब्रह्मादियाच्यमानदर्शन । तदेव दर्शयति—योगेति । योगेश्वरैः सनकाद्यैः, सुरेशैर्ब्रह्माद्यैः, गतिर्ज्ञानं, प्रतीतः प्रत्यक्षं प्राप्तः, एतद्दिष्ट्या अहो अस्माकं भाग्यमहिमेत्यर्थः । आप्ताः सुहृदः ॥२७ ॥ इतीत्थम् । भक्तेनाक्रूरेण । गीर्भिर्लोकविषयाभिः । संमोहयन्नुत्पन्नं तत्त्वज्ञानमन्यथा कुर्वन्निव ॥ * ॥ सम्यग्निजाज्ञाप्यार्थानुकूलतया स्तुतः 'स त्वं प्रभो' ( ४८–२४ ) इत्यादिभिः श्रुतत्वात् । गीर्भिरिति तद्वैशिष्ट्यं बोधयति, शुद्धप्रेममयलौकिकलीलाभिरुचेः 'त्वन्नो गुरुः' ( २९ ) इत्यादिलक्षणाभिर्गीर्भिः संमोहयन्मूर्छयन्निव चेतनायामपि विवेकलोपात् ॥ **विश्वनाथस्तु**—मोहयन् स्वैश्वर्यज्ञानं लुम्पन्नित्याह । तत्र शक्तिद्योतकं भगवान्सर्वैश्वर्यादिसंपन्नो हरिर्मनोहारिलीलश्चेति ॥ २८ ॥ पितृव्यः पितृभ्राताऽत एव गुरुः 'पितृव्यः पितृवन्मान्यः' इत्युक्तेः । वयं नित्यदा नित्यं रक्ष्या इत्यादि । एतेनास्य सेव्यत्वमुक्तम् ॥ * ॥ नोऽस्माकमिति विनयेनात्मनः साधारण्यापादनार्थम् । श्रीबलदेवाद्यपेक्षया गुरुरुपदेष्टा, बंधुश्च हिताचरणेन, तत्र श्लाघ्यः परमोत्तमत्वात्, किं वास्य पदस्य सर्वैरेवान्वयः, नित्यमित्यर्थः । आपद्भ्यो रक्ष्या भोजनादिना पोष्याः सदुपदेशादिनाऽनुकम्प्याश्च, हि यतो वः प्रजा वयम् ॥ अत्र **विश्वनाथः**—प्रजाः पुत्रतुल्याः । व्यवहारदृष्ट्या त्वमस्माकमादरणीय एव, परमार्थदृष्ट्या तु त्वं परमवैष्णवत्वात्पूज्य एवेत्याह ॥ २९ ॥ पुनराशंकते—नन्विति । तत्राक्षेपे । अर्हेषु पूज्येषु

१ चतुर्थ्यन्तम्पाठमभ्युपगम्य ।

न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ॥ ते पुनंत्युरुकालेन दर्शनादेव साधवः ॥ ३१ ॥ स भवान्सुहृदां वै नः श्रेयाञ्छ्रेयश्चिकीर्षया ॥ जिज्ञासार्थं पांडवानां गच्छस्व त्वं गजाह्वयम् ॥ ३२ ॥ पितर्युपरते बालाः सह मात्रा सुदुःखिताः ॥ आनीताः स्वपुरं राज्ञा वसंत इति शुश्रुम ॥ ३३ ॥

त एव सेव्या इत्यर्थः ॥ ३० ॥ तर्हि मृच्छिलादिमयाः किं देवादयो नैव स्युरित्यत आह । न हीति । अम्मयानि जलरूपाणि तीर्थानि मृन्मयाः शिलामयाश्च देवा न भवंतीति न अपि तु भवंत्येव । तथाऽपि साधूनां तेषां च महदंतरमित्याह । ते पुनंतीति ॥ ३१ ॥ किंचिच्चिकीर्षयन्प्रागादिति यदुक्तं तत्कार्यमादिशति । स इति । नः सुहृदां मध्ये भवाञ्छ्रेयाञ्छ्रेष्ठोऽतः पांडवानां श्रेयश्चिकीर्षया गजाह्वयं गच्छस्व गच्छेति । यद्वा स्वेति पृथक् पदम् । हे स्व आत्मीयेत्यर्थः ॥ ३२ ॥ राज्ञा धृतराष्ट्रेण । वसंते

सत्तमा आतिश्रेष्ठाः । भवद्विधास्त्वत्तुल्यभक्तिमंतः । इत्यर्थ इति—स्वपूजां प्राप्य फलदातृत्वाद्देवानां वणिक्साम्यम्, स्वार्थमनपेक्ष्य फलदातृत्वात्सेव्यत्वमिति भावः ॥ * ॥ भवद्विधा इति—। अर्हन्त इत्यर्हास्तेषु सत्तमाः । ननु नृभिर्देवाः सेव्या इति प्रसिद्धिस्तत्राह—देवाः खलु स्वार्थसाधनपरा न तु तथा साधवस्ते तु परानुग्रहकातरा एवेति भावः ॥ अत्र **विश्वनाथः**—अतो महत्तमत्वाच्च विशेषतोऽस्माकं त्वमेव सेव्य इत्याशयेनाह—भवद्विधा इति, किं पुनः साक्षाद्भवंत इत्यर्थः । अतो देवेभ्योपि भवद्विधा महत्तमा इति भावः । नृभिर्नित्यं नितरां सम्यक्सेव्याः, अतो महाभागाः महान्भागः परमभागवतत्वादिप्राप्तिहेतुर्भाग्यं येषां ते, महत्तमा इत्यर्थः, अतोऽर्हत्तमाः । नृभिरिति प्रायो मनुष्याणामेव श्रेयःसाधकत्वात् । अत्र च स्वस्याऽपितृव्यतयोक्तो यादवतया मनुष्यतामननात् । श्रेयस्कामैरिति बहुत्वेन मुक्तिभगवद्भक्तिपर्यंतानि श्रेयांसि गृह्यन्तेऽतो भगवद्भागवतव्यतिरिक्तानां देवादीनां न तावती शक्तिः । स्वल्पफलदायकत्वेऽप्यस्ति दोषांतरमित्याह—देवा इति । अतो देवेभ्योऽपि भवद्विधा देवादिजातिनिरपेक्षतया महत्तमा इति भावः । साधवः 'तितिक्षवः' इत्यारम्य 'त एते साधवः' इतिपर्यंतेन तृतीयस्कन्धे वर्णिता बोध्याः ॥ ३० ॥ तर्हीहाक्षेपेऽव्ययानामनेकार्थत्वात् । आक्षिप्य समाधत्ते 'द्वौ नञौ प्रकृतार्थं गमयतः' इति वामनोक्तेः । आपः स्वरूपं येषां तानि । तथा मृच्छिलयोर्विकारास्तथा । ते तीर्थादयः । उरुकालेन बहुकालसेवया । सर्वदा परनिष्ठचेतस्त्वात्साधूनां महत्त्वमाह—दर्शनादेवेति । देवानां मृच्छिलामयत्वे श्रुतिः—"संस्रवभागास्थेषाबृहन्तः प्रस्तरेष्ठाः परिधेयाश्च देवाः इमां वाचमभिविश्वे गृणंत आसद्यास्मिन्बर्हिषि मादयध्वं स्वाहा वाट्" इति । हे विश्वे सर्वे देवा यूयं संस्रवतीति संस्रवो घृतम्, उपलक्षणमेतत् तद्भागवंतः, इषा भागेन इच्छया वा बृहन्तो वर्द्धयन्तः, प्रस्तरे पाषाणे तिष्ठंति प्रस्तरेष्ठाः उपलक्षणमेतत्पार्थिवतैजसानाम्, केन—स्वाहा वेदमंत्रेण । परि सर्वदा धेया धारणयोग्या ध्येया इत्यर्थः । इमां वाचमभिगृणंतः । इमां काम्—वहति प्रापयति भागं देवेभ्य इति वाट् पूजकः, त्वं वाट् भवेत्याध्याहृत्य योज्यम् । अस्मिन्बर्हिषि यज्ञेऽर्चने यूयमासाद्य प्राप्य मादयध्वं तृप्यध्वमित्यर्थो वाचा कृतः ॥ * ॥ अतो यदि देवाः साधारणाः सेवितुं साक्षाल्लभ्यन्ते तदापि न साम्यं साक्षात्तु दुर्लभा एव, ततः प्रतिमारूपेणैव सेव्यन्ते । तत्र तु तदपेक्षयातिनिकर्ष इति वक्तुं प्रसंगतस्तीर्थानामपि साधारणानां तमाह—न हीति, शिरश्चालने नञ् । ते तत्तद्रूपतीर्थदेवाः । एकशेषत्वेऽपि क्लीबत्वाभाव आर्षः । पुनंति चित्तमलतः शोधयन्ति तच्चिरकालसेवयैव न तु साधुवत्प्रथमक्षणदर्शनादेवेति । अतः साधूनां देवादिभ्यो महदंतरमिति भावः । प्रतिमापूजनाद्ब्रह्मत्वं च गत्वाऽमृतत्वं च गच्छतीति सामवेदीयप्रतिमोपनिषदि प्रतिमार्चनमपि मोक्षहेतुरुक्तस्तच्च क्त्वाप्रत्ययेन पूर्वकालविहितेन पूजनानंतरं चिरकालेनैव हरिं नत्वा ग्रामं गच्छतीतिवज्ज्ञेयम् । एवकारेण साधूनां दर्शनसमकालमेव पावकत्वमुक्तम् ॥ ३१ ॥ सोऽर्हत्तमः । यतः श्रेष्ठोऽतो हेतोः । गमेः परस्मैपदित्वादार्षत्वाश्रयणस्यापि वक्रत्वेनर्जुपंथा एव श्रेयानित्यादाह—यद्वेति । इत्यर्थ इति—'स्वः स्वकीये धनेऽपि च' इति कोशात् ॥*॥ एतावता यद्विवक्षितं तदाह—स साधुत्वेनोक्तमाहात्म्यः पितृव्यत्वेनास्मत्प्रियतरः साधुत्वेन परोपकारकश्च नः सुहृदां यादवानां मध्येऽतिप्रशस्यश्च भवान् । वै प्रसिद्धम् । पाडवानां या जिज्ञासा धृतराष्ट्राश्रये ते कथमवतिष्ठंत इति पर्यालोचनं तदर्थम् ॥ ३२ ॥ राज्ञा सह ऋषिभिरानीताः वसंतः सन्ति । निजैश्वर्यमाच्छाद्य वदति—शुश्रुम इति ॥*॥ जिज्ञासामेव स

तेषु राजांबिकापुत्रो भ्रातृपुत्रेषु दीनधीः ॥ समो न वर्तते नूनं दुष्पुत्रवशगोंधदृक् ॥ ३४ ॥ गच्छ जानीहि तद्वृत्तमधुना साध्वसाधु वा ॥ विज्ञाय तद्विधास्यामो यथा शं सुहृदां भवेत् ॥ ३५ ॥ इत्यक्रूरं समादिश्य भगवान्हरिरीश्वरः ॥ संकर्षणोद्धवाभ्यां वै ततः स्वभवनं ययौ ॥ ३६ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्धे कुब्जारमणादिनिरूपणं नामाऽष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ श्रीशुक उवाच ॥ स गत्वा हास्तिनपुरं पौरवेंद्रयशोंकितम् ॥ ददर्श तत्रांबिकेयं सभीष्मं विदुरं पृथाम् ॥ १ ॥ सहपुत्रं च बाह्लीकं भारद्वाजं सगौतमम् ॥ कर्णं सुयोधनं द्रौणिं पांडवान्सुहृदोऽपरान् ॥ २ ॥ यथावदुपसंगम्य बन्धुभिर्गांदिनीसुतः ॥ संपृष्टस्तैः सुहृद्वार्तां स्वयं चापृच्छदव्ययम् ॥ ३ ॥

निवसंतीति । शुश्रुम श्रुतवंतो वयम् ॥ ३३ ॥ दुष्टा ये स्वपुत्रा दुर्योधनादयस्तद्वशेन गच्छतीति तथा । यतोंधदृगंधनेत्रः ॥ ३४ ॥ ३५ ॥ ३६ ॥ इति श्रीमद्भागवते म०दशमस्कन्धे पूर्वार्धे टीकायामष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ छ ॥ ॥ ऊनपंचाशत्तमे तु गत्वाऽक्रूरो गजाह्वयम् ॥ राज्ञः स्वभ्रातृपुत्रेषु बुद्ध्वा वैषम्यमागमत ॥ १ ॥ पौरवेंद्राणां यशोभिस्तत्कृतदेवब्राह्मणायतनादिभिरंकितम् ॥ १ ॥ बाह्लीकपुत्रः सोमदत्तः । भारद्वाजो द्रोणः । गौतमः कृपः ॥ २ ॥ स्वयम् अव्ययं कुशलम्

कारणं स प्रयोजनश्चाह—त्रिभिः। उपरते शांते तादृशाऽऽदरणीयजनेष्वश्लीलवचनानर्हताख्यापनाय, बाला इत्यानयनसमयापेक्षया, राज्ञेत्यन्धस्यापि तस्याधुना दैवाद्राज्यप्राप्तिर्जातेति सूचितम् । शुश्रुम इति लौकिकलीलामाधुर्यमग्रे नूनमिति च ॥ ३३ ॥ तेषु पाण्डवेषु । अम्बिकापुत्रः धृतराष्ट्रः । दीनधीः मंदबुद्धिः । अन्धदृगिहान्धपदमेव दृष्ट्युपघातं वक्ति, पुनर्दृग्ग्रहणम् 'परिणतगजप्रेक्षणीयम्' इतिवद्विशेष्यमात्रपरतयैवेति ज्ञापनायेति ध्येयम् ॥ * ॥ नूनं वितर्के । समो न वर्तते, तत्कुतः—अम्बिकापुत्रः, पांडोर्वैमात्रेयत्वादित्यर्थः । हेत्वन्तरम्—दुष्पुत्रवशगः, तत्कुतः—दीनधीः क्षुद्रबुद्धिः । तदपि कुतः—अंधदृक् तदादीनां सामुद्रिके बहुदोषश्रवणात् ॥ ३४ ॥ तद्वृत्तं धृतराष्ट्रवर्तनम् । तत् तद्वृत्तं तथा विधास्याम इति । शं सुखम् । सुहृदां पार्थानाम् ॥ * ॥ अधुनैव गच्छ तस्य राज्ञो वृत्त वर्तनं साध्वसाधु वेति जानीहीत्यर्थः । तत्तथा ॥३५॥ इतीत्थम् । ततोऽक्रूरगृहात् ॥ * ॥ भगवान्समग्रैश्वर्यादिपूर्णोऽपि हरिर्मनसैव दुष्टसंहारसमर्थोऽपि ईश्वरः सर्वनियंतापि इति पूर्वोक्तानुनयप्रकारेणैव सम्यक्पुरस्कारपूर्वकमादिश्य ततोऽक्रूरगृहात्संकर्षणोद्धवाभ्यां सह, न त्वनुव्रजनार्थमक्रूरेणापीति तत्प्रस्थापनत्वरा दर्शिता । स्वेति तस्मिन्भवने तदनंतरं स्वेच्छाविलासः सूचितः । वै संबोधने। तच्च लीलामाधुर्यानुभववैशिष्ट्याय ॥३६॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे पूर्वार्धेऽष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ऊनपंचाशत्तमे एकोनपञ्चाशत्तमे । राज्ञो धृतराष्ट्रस्य । वैषम्यं दौर्जन्यम् ( १ ) । सोऽक्रूरः । तत्र हास्तिनपुरे ॥ * ॥ स इति युग्मकम् । प्रथमं राज्ञो दर्शनं योग्यं, ततः कुलश्रेष्ठत्वाद्भीष्मस्य । तद्दिने तयोरेकत्र स्थितिरासीदित्युक्तम्—सभीष्ममिति । तत आत्मीयत्वाद्विदुरस्य, ततः तत्संगेन स्वभगिन्याः पृथायाः—॥ १ ॥ अपरान् कुरून् । सहपुत्रमिति "वोपसर्जनस्य" इति वैकल्पिकत्वान्न सादेशः ॥ * ॥—ततः कुलवृद्धत्वाद्बाह्लीकस्य, ततः पांडवान्वेषणे तदुपाध्यायस्य भारद्वाजस्य, ततस्तत्सहचारित्वेन गौतमस्य, ततः सहाध्यायित्वेन कर्णादीनां सर्वेषामेव बालकानामिति पाठक्रमः । तत्र पाण्डवानां पश्चाद्भावः स्वस्य मध्यस्थत्वख्यापनेन धर्मोपदेशाय । प्रथमश्चशब्दोऽनुक्तसमुच्चये सर्वत्र योज्यः; द्वितीयस्सूक्तार्थो ब्राह्मणस्यापि भारद्वाजस्य क्षत्रियमध्यपातात् । क्वचित् 'भारद्वाजं सगौतमम्' इति पाठः । अपरान् शकुन्यादीन् ॥ २ ॥ गांदिनीसुतोऽक्रूरः ।

उवास कतिचिन्मासान्राज्ञो वृत्तविवित्सया ॥ दुष्प्रजस्याल्पसारस्य खलच्छन्दानुवर्तिनः ॥ ४ ॥ तेज ओजो बलं वीर्यं प्रश्रयादींश्च सद्गुणान् ॥ प्रजानुरागं पार्थेषु न सहद्भिश्चिकीर्षितम् ॥ ५ ॥ कृतं च धार्तराष्ट्रैर्यद्गरदानाद्यपेशलम् ॥ आचख्यौ सर्वमेवास्मै पृथा विदुर एव च ॥ ६ ॥ पृथा तु भ्रातरं प्राप्तमक्रूरमुपसृत्य तम् ॥ उवाच जन्मनिलयं स्मरंत्यश्रुकलेक्षणा ॥ ७॥ अपि स्मरन्ति नः सौम्य पितरौ भ्रातरश्च मे ॥ भगिन्यो भ्रातृपुत्राश्च जामयः सख्य एव च ॥ ८ ॥ भ्रात्रेयो भगवान्कृष्णः शरण्यो भक्तवत्सलः ॥ पैतृष्वसेयान्स्मरति रामश्चांबुरुहेक्षणः ॥ ९ ॥

पृच्छत् ॥ ३॥ दुष्प्रजस्यासत्पुत्रस्याल्पसारस्य मंदधृतेः खलानां कर्णादीनां छंदमिच्छामनुवर्तितुं शीलं यस्येति तथा तस्य ॥ ४ ॥ तेजः प्रभावम् । ओजः शस्त्रादिनैपुणम् । वीर्यं शौर्यम् । न सहद्भिरसहमानैर्धार्तराष्ट्रैश्चिकीर्षितमित उपरि कर्तुमिष्टम् ॥ ५॥ कृतं च गरस्य विषस्य दानादि । अपेशलमन्याय्यम् । तेज ओज इत्यादि सर्वमस्मै कथयामास ॥ ६ ॥ तत्कथनात्पूर्वतरं पृथाया वृत्तमाह । पृथा त्विति । अश्रूणां कला लेशा ययोस्ते ईक्षणे यस्याः सा ॥ ७ ॥ अपि किम् । जामयः कुलस्त्रियः ॥ ८ ॥ पैतृष्वसेयान्मत्पुत्रान् ॥ ९ ॥

तैर्धृतराष्ट्रादिभिः ॥ * ॥ यथावद्वृद्धादीन्प्रणामादिनोपसंगम्य स्नेहाधिक्येन मिलित्वा सुहृदां यादवानां वार्तां कुशलवृत्तं सम्यग्यथाविध्यातिथ्यादिपूर्वकं सस्नेहं पृष्टः ॥ ३ ॥ राज्ञो धृतराष्ट्रस्य । “ छन्दो वशेऽप्यभिप्राये ” इति मेदिनी । “ खलं भूस्थानकल्केषु नीचक्रूराधमे त्रिषु । खलो वस्त्रप्रभेदे स्याद्वृत्ते चर्मणि घातके ॥ ” इति च ॥ * ॥ कतिचिन्मासानिति बहुदिनवासात्तस्य कौटिल्यातिशयो व्यञ्जितः । वृत्तमेव कारणद्वारा सूचयति—दुष्प्रजस्येति ॥ ४ ॥ तेजो ज्योतिर्लक्षणा दीप्तिः । ओजः पराभिभवसामर्थ्यम् । बलं शारीरं, रूपं वा । इत उपरि तत्प्रभावाद्यसहनादूर्ध्वं कर्तुमिष्टं तन्निष्कासनमारणोपायादि । धार्तराष्ट्रैर्यत्कृतं तत्पृथाविदुरावाचख्यतुरित्यर्थः । द्वयोरन्वयः । अस्मै अक्रूराय ॥ * ॥ तेज इति युग्मकम् । आदिना लज्जाधैर्यादिग्रहः । गरदानं श्रीभीमाय, आदिना जलनिक्षेपादिकृतम्, चिकीर्षितं तु लाक्षागृहादि । किमुत पृथा यतः पितृव्यत्वेनोभयत्र समो विदुरः सोपीत्यर्थः ॥ ५ ॥ ६ ॥ तत्कथनाद्धार्तराष्ट्रकृतान्यायोक्तेः । तम् अक्रूरम् । जन्मनिलयं पितृगृहम् ॥ * ॥ अश्रूणि कलयतः निरंतरं मुंचत इत्यश्रुकले ईक्षणे नेत्रे यस्याः सेति वा ॥ ७ ॥ नोऽस्मान् । ‘जामिः स्वसृकुलस्त्रियोः ’ इत्यमरः ॥ * ॥ न इति पुत्राद्यपेक्षया बहुत्वम् । सौम्य हे शांतप्रकृते भवादृशां बंधुवात्सल्यसाधुत्वादिति भावः । पितरौ शूरतत्पत्न्यौ । जामयः श्रीदेवक्यादयः । सख्यः समशीला अन्याः ॥ ८ ॥ कृष्णस्य चत्वारि विशेषणानि संबंधसामर्थ्यदयालुतास्त्रीयरक्षकताबोधकानि ॥ * ॥ तत्रैव विशेषतः पुनः पृच्छति—भ्रात्रेय इति, तादृशप्रश्ने निजयोग्यतोक्ता । न चासौ मम भ्रात्रेयोऽन्यसाधारणः , किन्तु भगवान्, तत्र शरण्यः रक्षितृत्ववाचकेन शरण्यपदेन तद्धर्मो लक्ष्यते, ततश्च तत्र साधुरित्यर्थः । ‘सर्वात्मना यः शरणं शरण्यं गतो मुकुंदम्’ इतिवत् । तत्र प्रवृत्तौ हेतुः—भक्तवत्सलः, अत एव संभावयामीत्याह—स्मरति, किमिति शेषः । पैतृष्वसेयानिति स्नेहविशेषमात्रत्वेन स्मरणीयविशेषतां बोधयति । अंबुरुहेक्षण इति परमसौंदर्यम्, एवं दिदृक्षया तस्मिन्सहजवात्सल्यम् । ततः करिष्यमाणा निजरक्षाप्रार्थनापि तद्विलास एव ज्ञेयो न तु कामनामात्रेण । ‘विपदः सन्तु नः शश्वत्’

सपत्नमध्ये शोचंतीं वृकाणां हरिणीमिव ॥ सांत्वयिष्यति मां वाक्यैः पितृहीनांश्च बालकान् ॥ १० ॥ कृष्णकृष्ण महायोगिन्विश्वात्मन्विश्वभावन ॥ प्रपन्नां पाहि गोविंद शिशुभिश्चावसीदतीम् ॥ ११ ॥ नान्यत्तव पदांभोजात्पश्यामि शरणं नृणाम् ॥ बिभ्यतां मृत्युसंसारादीश्वरस्याऽऽपवर्गिकात् ॥ १२ ॥ नमः कृष्णाय शुद्धाय ब्रह्मणे परमात्मने ॥ योगेश्वराय योगाय त्वामहं शरणं गता ॥ १३ ॥

शोचंतीं मां वाक्यैः सांत्वयिष्यति किम् ॥ १० ॥ हे महायोगिन्महान्योग उपायो मायाख्योऽस्यास्तीति । हे विश्वात्मन् सर्वान्तर्यामिन् । हे विश्वभावन विश्वपालक । प्रपन्नां शरणागताम् । अवसीदतीं क्लिश्यंतीम् ॥ ११ ॥ आपवर्गिकान्मोक्षप्रदात् ॥ १२ ॥ शुद्धाय धर्मात्मने । ब्रह्मणेऽपरिच्छिन्नाय । परमात्मने जीवसखाय ।

इत्याद्युक्तेः । एतानि विशेषणानि द्वयोरेव योग्यानि, रामस्य पश्चान्निर्देशस्तदनुगत्यैव तद्भावात् ॥ ९ ॥ वृकाणां व्याघ्राणाम् । सपत्नमध्ये शत्रुमध्ये "सपत्नोऽरौ च पतिते पत्नीसहचरे त्रिषु" इति निरुक्तिः ॥ * ॥ ननु स्मरन्नेव मामत्र प्राहिणोदित्याशंक्याह–सपत्नेति । अनेनात्मनः परमार्तत्वं व्यंजितम् । वृकाणामित्यनंतरं मध्य इत्यध्याहार्यम् । वाक्यैः प्रियवचनैः, पूर्ववत्तत्तद्वचनशुश्रूषया ॥ १० ॥ वीप्सेहादरे । संबुद्धित्रयं सर्वसामर्थ्यमाह । गोविन्देति सर्वथा दीनदयालुतामाह ॥ * ॥ ननु तत्रत्येषु स्वेषु निजकृत्यं विधायात्रागत्य सांत्वयिष्यत्येवेति चेदनन्तरं तद्दर्शनामृतं लभेमहि तावत्तत्र स्थितोऽप्यसावस्माकं प्राणरक्षां कुर्यादिति परमसामर्थ्यं निरूपयंती परमार्त्या साक्षादिव तं संबोध्य त्रिभिः सकरुणं वदंती प्रागुपसन्नापद्रक्षां प्रार्थयते–कृष्णेति । पूर्वं मुख्यनाम्ना सम्बोधनं, तत्र वीप्सा झटित्याभिमुख्याय, तत्र तादृशसामर्थ्यव्यंजकं संबोधनं–महायोगिन् हे परमोपाययुक्तेति । न च त्वयि विज्ञापनापेक्षास्ति सर्वज्ञानादिप्रवर्तकत्वादित्याह–हे विश्वात्मन् । न च ज्ञात्वापि कथंचिदुदास्से जगत्पालकत्वादित्याह–विश्वभावनेति । तत्र च प्रपन्नवात्सल्यं दर्शयति–हे गोविन्द गोवर्धनोद्धारण प्रकाशिततन्नाम न्निति । न च तत्र विलम्बः कार्य इत्याह–शिशुभिः सह शत्रुसंकटे निरंतरं दुःखं प्राप्नुवतीञ्च ॥ अत्र **विश्वनाथः**–महायोगिन्निति मथुरायां स्थितोऽपि ममैतां खेदोक्तिं शृण्विति भावः । किञ्च–विश्वात्मन्निति मम हृद्यपि स्थितस्त्वं शृणोष्येवेति भावः । विश्वभावनेति विश्वमपि त्वं पालयसि मत्पालने कोऽत्र तेऽतिभार इति भावः । हे गोविंद मन्नेत्रगोचरी भव, त्वामहं पश्येयमिति भावः ॥ ११ ॥ आपवर्गिकात् मोक्षहेतुभूतात्, सर्वकर्मफलप्रापकाद्वा "अपवर्गः क्रियासाध्यफलाप्तौ त्यागमोक्षयोः" इति वैजयंती । मृत्युग्रस्तः संसारो मृत्युसंसारः । मध्यपदलोपी समासः । तस्मात्तथा ॥ * ॥ न चैतदर्थमन्यः प्रार्थनीयो यतः सर्वदुःखमूलात्संसारादपि सर्वेषामपि त्वच्चरणमेव निस्तारकमिति मम निश्चय इत्याह–नेति । अन्यद्ब्रह्मज्ञानादपि 'येन्येऽरविंदाक्ष' इत्याद्युक्तेः । नृणां जीवानाम् । मृत्युसंसारादनादिमृत्युपरंपराप्राप्तेः । नान्यत्पश्यामीत्यत्र हेतुमाह–ईश्वरस्येति । "मदीयं महिमानं च परं ब्रह्मेति शब्दितम् । वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदि ॥" इति श्रीमत्स्यदेवोक्त्यनुसारेण, "यो मामव्यभिचारेण भक्तियोगेन सेवते । स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥", 'ब्रह्मणो हि प्रतिष्ठाहम्' इत्यादिश्रीभगवद्गीतानुसारेण च प्रसिद्धमहैश्वर्यस्येत्यर्थः । अत एवापवर्गिकात् । अपवर्गदानार्हादिति **चक्रवर्ती** ॥ यद्वा–ईश्वरस्य महादेवस्यापि वृकासुरादिभवमहाभयतो मोक्षप्रदात् ॥ १२ ॥ "शुद्धो द्वितीये धर्मे च निर्दोषे पावने सिते" इति धरणिः ॥ * ॥ निजाभीष्टयोग्यमेव तं प्रणमंती शरणं याति–नम इति । शुद्धायेति धर्मात्मतयाऽवश्यं शरणागतरक्षाभिप्रेता । ब्रह्मणे इत्यादिपदद्वयेन तत्र च सदा सर्वत्र रक्षायोग्यता । योगेश्वरायेति तदर्थं स्वतः सर्वार्थपूर्णता । योगायेति चान्यतो ज्ञानाऽनपेक्षा । यद्वा–कृष्णाय स्वयं भगवते, परिपूर्णैश्वर्यादियुक्तायेत्यर्थः । निर्विशेषज्ञानिनामपि परिच्छिन्नतत्त्वज्ञानमात्ररूपाय । परमात्मनेंतर्यामित्वमात्रैश्वर्यज्ञानिनामपि तद्रूपाय त्रिष्वपि विशेषणम् । शुद्धाय मायास्पर्शरहिताय । योगेश्वराय निजतथातथानुभावानुभवोपायदात्रे, शक्तिशक्तिम

श्रीशुक उवाच ॥ इत्यनुस्मृत्य स्वजनं कृष्णं च जगदीश्वरम् ॥ प्रारुदद्दुःखिता राजन्भवतां प्रपितामही ॥ १४ ॥ समदुःखसुखोऽक्रूरो विदुरश्च महायशाः ॥ सांत्वयामासतुः कुंतीं तत्पुत्रोत्पत्तिहेतुभिः ॥ १५ ॥ यास्यन्राजानमभ्येत्य विषमं पुत्रलालसम् ॥ अवदत्सुहृदां मध्ये बन्धुभिः सौहृदोदितम् ॥ १६ ॥ अक्रूर उवाच ॥ भोभो वैचित्रवीर्य त्वं कुरूणां कीर्तिवर्धन ॥ भ्रातर्युपरते पांडावधुनाऽऽसनमास्थितः ॥ १७ ॥ धर्मेण पालयन्नुर्वीं प्रजाः शीलेन रंजयन् ॥ वर्तमानः समः स्वेषु श्रेयः कीर्तिमवाप्स्यसि ॥ १८॥ अन्यथा त्वाचरँल्लोके गर्हितो यास्यसे तमः ॥ तस्मात्समत्वे वर्तस्व पांडवेष्वात्मजेषु च ॥ १९ ॥

योगेश्वरायाणिमादियुक्ताय । योगाय ज्ञानात्मने ॥१३॥ प्रपितामही प्रपितामहः पांडुस्तस्य भार्या अरुदद्रुरोद ॥ १४ ॥ पृथया सह समं दुःखं सुखं च यस्य सः । तस्याः पुत्राणामुत्पत्तिहेतुभिर्जनकैर्धर्मानिलेंद्रादिभिस्तत्कथनैरित्यर्थः ॥ १५ ॥ बंधुभिः रामकृष्णादिभिः । सौहृदेनोदितमुक्तं यत्तदवददिति ॥ १६ ॥ भ्रातर्युपरत इति । पांडोः पुत्रेषु सत्सु राजासनं त्वमास्थित इति कटाक्षः ॥१७॥ भवतु तथाप्येवं वर्तमानः श्रेयोऽवाप्स्यसीत्याह । धर्मेणेति ॥१८॥ तमो नरकमिहैव महद्दुःखमिति भावः॥१९॥

तोरभेदांशेन स्वयं तत्तद्रूपाय च तुभ्यमिति शेषः । अतो नासाध्यं तव किंचिदिति भावः ॥ १३ ॥ इत्येवमादिगुणपूर्णम् । प्रपितामही कुंती । स्वेषु जन आविर्भावो यस्य तम्, भक्तार्तिहरमित्यर्थः ॥ * ॥ इत्येवम् । स्वजनं पित्रादिकम्, जगदीश्वरं जगदीशतया कृष्णं चानुस्मृत्य मुहुः स्मृत्वा । यद्वा—च अपि बंधुतां स्वजनं प्राप्तमपि कृष्णं जगदीश्वरतयानुस्मृत्य । किं वा—जगदीश्वरमपि स्वजनं निजबंधुतयानुस्मृत्य तदप्राप्त्या दुःखिता सती प्रकर्षेण सगद्गदमरुदत् । भवतां प्रपितामहीति तस्यास्तादृशप्रणयवत्याः साक्षात्कृष्णपितृष्वसुः प्रपौत्रत्वेन तस्य भाग्यं सूचयन्हर्षं वर्द्धयति । अतः परमादरेण भवच्छब्दप्रयोगस्तत्र बहुत्वञ्च । अतः प्रहर्षेण संबोधयति—राजन्निति । श्रीकृष्णसंबंधित्वेन देदीप्यमानोऽसीति भावः ॥ १४ ॥ तस्याः कुन्त्याः । तत्कथनैस्तेषां कथनैः । इत्यर्थ इति—कुंतिराजगृहदुर्वासःपरिचर्यावाप्तदेवतोषिणीविद्याप्रभावागतधर्मादिदेवांशोद्भूततदात्मजप्रभाववर्णनैरित्याशयः ॥ * ॥ चस्त्वर्थे । विदुरस्तु महद्यशः स्वभावतः पांडवपक्षपातादिसत्ख्यातिर्यस्य सः । तत्पुत्रेति तैर्व्याख्यातम् । तत्र देववरेभ्य उत्पन्नत्वात्तेषां कदाचिदप्यशुभं नास्तीत्यादिकथनैरित्यर्थः । अथ वा—तत्पुत्रोत्पत्तेर्हेतवो भूभारावतारार्थमवतीर्णस्य कृष्णस्य लीलासहाय्यानि तैः ॥ १५ ॥ यास्यन् गन्तुमिच्छन्, अक्रूरः । यद् वचः ‘साम्यं हि कार्यं सर्वत्र’ “विदुषां महतां चायं धर्मो यद्दीनपालनम्” इत्यादिरूपं तादित्यर्थः । सौहृदेन सुहृद्भावेनोदितम् ॥ * ॥ पुत्रेषु तेषां राज्यादिसिद्धये लालसा महामनोरथो यस्य तम् । सुहृदां भीष्मादीनां मध्ये तस्य लज्जोत्पादनेन निजोक्तिग्रहणार्थम् ॥ १६ ॥ कीर्तिवर्धनेत्यत्रापि विपरीतलक्षणया छेदकेत्यर्थो लभ्यते । यद्वा—“ वर्धनं वृद्धिवर्धिष्णुच्छेदे घन्यां तु वर्द्धनी ” इति मेदिनी । कटाक्ष इति—न हि पांडुपुत्रेषु सत्सु तव राज्याधिकारोस्तीति । वैचित्रवर्येत्यपि तथा ज्ञेयं, पाणिग्रहीतृपुत्राभावत्वेन व्यासात्मजत्वादिति । अधुनेत्यनेन पूर्वमपि तव ज्येष्ठत्वेऽप्यंधत्वान्न राज्यमासीदिति ध्वनितम् ॥ * ॥ प्राक् सोल्लुंठं सामप्रायमाह—भोभो इति । वीप्साऽत्यंताभिमुख्यार्थं वाच्यार्थाप्रियत्वेन तस्य वैमुख्यसंभवात् ॥ १७ ॥ भवतु राज्यम् । तथापि प्राप्तराज्यत्वेपि । एवं मदुक्तप्रकारेण । उर्वीं भूमिम् । स्वेषु निजात्मजपांड्वात्मजेषु । श्रेयः पारत्रिकं सुखम् ॥ * ॥ शीलेन सद्वृत्तेन । स्वेषु स्वपुत्रपांडवादिषु । श्रेयः कुशलं कीर्तिञ्च ॥ १८ ॥ अन्यथा वैषम्यमाचरन् । नरकं तत्समम् । इति भाव इति—प्रबलविरोधात्पुत्रनाशेनेहैव महन्नरकस्थवद्दुःखमनुभविष्यसीति भावः । तस्मादैहिकामुष्मिकदुःखभयात् । “ तमो

नेह चात्यंतसंवासः कर्हिचित्केनचित्सह ॥ राजन्स्वेनापि देहेन किमु जायात्मजादिभिः॥२०॥ एकः प्रसूयते जंतुरेक एव प्रलीयते ॥ एकोनु भुंक्ते सुकृतमेक एव च दुष्कृतम् ॥ २१ ॥ अधर्मोपचितं वित्तं हरंत्यन्येऽल्पमेधसः ॥ संभोजनीयापदेशैर्जलानीव जलौकसः ॥ २२ ॥ पुष्णाति यानधर्मेण स्वबुद्ध्या तमपंडितम् ॥ तेऽकृतार्थं प्रहिण्वंति प्राणा रायः सुतादयः ॥ २३ ॥ स्वयं किल्बिषमादाय तैस्त्यक्तो नार्थकोविदः ॥ असिद्धार्थो विशत्यंधं स्वधर्मविमुखस्तमः॥ २४ ॥

नन्वात्मजानात्मजादिषु कथं समत्वं स्यात्तत्राह नेह चेति षड्भिः । अत्यंतं नित्यं संवासः सम्यक्स्थितिः ॥ २० ॥ तत्र तावदुत्पत्तिमरणयोः सुखदुःखयोश्च केनापि साहित्यं नास्तीत्याह । एक इति ॥ २१ ॥ किं च यदा च सह संवसंति तदाऽपि क्लेशोपार्जितवित्तापहारितया पुत्रा नाम शत्रव एव ज्ञेया इत्याह । अधर्मेति । संभोजनीयाः पोष्याः पुत्रादय इति व्यपदेशैरन्ये शत्रवोऽल्पमेधसो मूढस्य वित्तं हरंति । जलौकसो मत्स्यस्य जीवनभूतानि जलानि यथा तत्पुत्रादयो हरंति स्वत्वेनाश्रयन्ते तद्व दिति ॥ २२ ॥ किं च यानेवं पुष्णाति ते धनमादाय मृता जीवंतोऽपि वा तं जीवंतं मृतं वा परित्यजंतीत्याह । पुष्णातीति । स्वबुद्ध्या स्वीया इत्यभिमानेन । रायोऽर्थाः । अकृतार्थमप्राप्तभोगम् ॥ २३ ॥ स पुनः पापैकपाथेयो नरकं विशतीत्याह । स्वयमिति । पुरुषार्थकशलो न भवतीति नार्थकोविदः । असिद्धार्थोऽपूर्णमनोरथः ॥ २४ ॥

राहुस्तमोऽघं च दुःखैनोव्यसनेष्वपि ” इति यादवः ॥ * ॥ अथ सस्मितं सपरिहासमाह—अन्यथेति । तमः महादुःखम्, अत्र पुत्रवियोगादिजममुत्र नरकादिजमित्यर्थः ॥ १९ ॥ साम्यस्य दौर्घट्यमाह—नन्विति । सर्वस्यानित्यत्वात्स्नेहः कुत्रापि योग्यतामंतरेण न कार्य इत्याह—नेहेति । इह लोके । किं बहुना, स्वदेहोऽपि नात्यंतसंगीत्याह—स्वेनापीति,—कैमुत्यं दर्शितम् ॥ * ॥ इह लोके । चकारादमुष्मिंश्च लोके । कर्हिचित्कदाचिदपि । ‘ कस्यचित् ’ इति क्वचित्पाठः । हे राजन्निति राजत्वेऽपि तदपरिहार्यमिति भावः । स्वेनात्मतया प्रतीतेनापि । अतः पुत्रादिव्यवहारस्यानित्यत्वात्तत्राऽनासक्तिं विधाय धर्मरक्षार्थं स्वेषु साम्येन वर्तनमेव युक्तमिति भावः ॥ २०॥ तत्र प्रासिद्धे संसारे । तावदिति वाक्यालंकारे । एकोऽसहायः । अनु देहपातोत्तरम् । सुकृतं शुभकर्मफलं स्वर्गादि । दुष्कृतमशुभकर्मफलं नरकादि ॥ * ॥ प्रसूयते प्रसूतो भवति । प्रमीयते मृत्युना हिंस्यते, प्रम्रियत इत्यर्थः । ‘प्रलीयते’ इति पाठेऽपि स एवार्थः । युग्मद्वयेऽप्युत्तरत्रैवैवकारः संपदि न करोतु नाम कोऽपि बंधुः साहाय्यं विपदि कुर्यात्सर्वथा तत्र च न करो तीत्यभिप्रायेण । च उक्तसमुच्चयार्थः उभयत्र युग्मेपि योज्यः । अनु तत्तत्पुत्रादिसहभावात्पश्चादेव मरणं जन्मांतरं च लब्ध्वा पूर्वपूर्वकर्म भुंक्ते ॥ २१ ॥ सहवासेऽपि संबंधिनो न सुखदा इत्याह—किंचेति । संभोजयितुं योग्याः संभोजनीया एते मया रक्ष्या इति व्यपदेशैर्मिथ्याहेतुभिः । यद्वा—संभोजनीयाः पुत्रादयो वयमिति व्याजोक्तिभिः संभोजनीयेति पृथक्पदम् । संन्विरर्षः । तत्पुत्रा मत्स्यानां पुत्राः । अन्यपदमुभयत्र पुत्रादिपरम् । तद्वन्मूढस्या प्यन्य इति “अपदेशः पुमाँल्लक्ष्ये निमित्तव्याजयोरपि” इति मेदिनी ॥ * ॥ जलान्यत्र क्षयिष्णूनि ज्ञेनानि, महासंबद्धेन तेषां क्षयदौर्गंध्यापातान्महामत्स्यस्य पूर्वमेव मरणापत्तेः ॥ २२ ॥ इतोऽप्यन्यत्स्नेहाविषयत्वादाह— किंच । यान् पुत्रादीन् । एवमकार्येण, स्वत्वभ्रांत्या । ते पुत्रादयः । तम् अज्ञं नरम् । ‘राः पुंसि स्वर्गवित्तयोः’ इति मेदिनी ॥ * ॥ अधर्मेण स्वधर्मातिक्रमेण निषिद्धाचरणेन च उपचितं स्वयं यत्नत उपार्जितमपि अन्ये पुत्रादयोऽल्पमेधसो जनस्येति तत्तद्विचाराभावात् । तत्र वै पोषणं तस्यैव वर्द्धनं न तु तेन प्राणादिपोषणमिति लक्षणं प्रहिण्वंति त्यजंति ॥ २३ ॥ सोऽज्ञः ' पथि भोज्यं पाथेयं, पापमेवैकं केवलं पाथेयं यस्य स तया ‘पाथेयं शंबले पांथे’ इति धरणिः । तैः पुत्रादिभिः । नार्थकोविदः स्वप्रयोजनाऽकशलः । नञर्थेन नशब्देन ‘सुप्सुपा’ इति

तस्माल्लोकमिमं राजन्स्वप्नमायामनोरथम् ॥ वीक्ष्यायम्यात्मनात्मानं समः शांतो भव प्रभो ॥ २९ ॥ धृतराष्ट्र उवाच ॥ यथा वदति कल्याणीं वाचं दानपते भवान् ॥ तथाऽनया न तृप्यामि मर्त्यः प्राप्य यथाऽमृतम् ॥ २६ ॥ तथाऽपि सूनृता सौम्य हृदि न स्थीयते चले ॥ पुत्रानुरागविषमे विद्यु त्सौदामनी यथा ॥ २७ ॥ ईश्वरस्य विधिं को नु विधुनोत्यन्यथा पुमान् ॥ भूमेर्भारावताराय योऽवतीर्णो यदोः कुले ॥ २८ ॥

स्वप्नश्च माया च मनोरथश्च तत्तेन तुल्यमात्मना बुद्धया विवेकयुक्तया आत्मानं मनः आयम्य नियम्य शांतः सन्समो भवेति ॥ २९ ॥ हे दानपते अक्रूर । न तृप्याम्यलमिति न मन्ये ॥ २६ ॥ सूनृता प्रिया वाक्चलेऽस्थिरे हृदि न स्थीयते न तिष्ठतीत्यर्थः । सुदामा पर्वतस्तत्र भवा विद्युदिव । तस्मिन्स्फटिकशिलामये सहसैवातिस्फुरिता विद्युद्यथा लीयते तद्वदित्यर्थः । यद्वा सुदामा माला तस्या इयं सौदामनी मालाकारेत्यर्थः ॥ २७ ॥ नन्वेवं जानतोऽपि कथमयं मोह इति चेदत आह । ईश्वरस्येति । विधिं विधानं

समासः । अंधमंधकारयुतम् । तमो नरकम् ॥ * ॥ अंधं तमो महानरकम् । नार्थकोविदः धर्मार्थयथार्थानभिज्ञः ॥ २४ ॥ अनेन प्रकृते किमायातं, तत्राह—तस्मादिति । यतोऽधर्मेण पुत्रादि पालनं नरकहेतुस्तस्माद्धेतोः । लोकं शरीरं, जगद्वा । स्वप्नेति लुप्तोपमा, स्वप्नवत् । मायापदेनेंद्रजालं तद्वत् मनोरथः मनोराज्यवत् । प्रभो इति तस्य निजोक्तिस्वीकारार्थं श्लाघामात्रम् । सम इति स्वपरबुद्धिं विहाय निजभ्रातृपुत्रेषु तुल्यतया वर्तस्वेत्यर्थः ॥ * ॥ वीक्ष्य दृढं ज्ञात्वा । आत्मना बुद्ध्या आत्मानं मनः । शांतः लोभाद्युपरतः । समः स्वपुत्रेषु पांडवेषु च तुल्यभावो भव । यद्वा—समः सन् शांतः सुखी भव, अन्यथा दुःखमेवेति भावः । यद्वा—भगवन्निष्ठो भवेत्यर्थः । परेष्विव पांडवेषु स्नेहेनैव तादृशत्वसिद्धेरित्युपदेशसारः । तत्र च तव शक्तिरस्त्येवेति संबोधयति—प्रभो इति । स्वोक्तग्रहणार्थमियं चातुरी । तदैव राजत्वसिद्धिः, अयमेव राज्ञो मुख्यधर्मश्चेति भावेनाह—हे राजन्निति ॥ २९ ॥ कल्याणीं कल्याणकरीम् । अनया वाचा । अमृतं देवान्नम् "अमृतं व्योम्नि देवान्ने यज्ञशेषे रसायने । अयाचिते जले ह्यग्नौ मोक्षणे हेम्नि गोरसे ॥ क्लीबे ना त्वमरे स्त्री तु गुडूच्याम्" इति यादवः ॥ * ॥ कदापि समो न भवितास्मीति मनसि द्रढयित्वा शाठ्येन तद्दोषपरिहारार्थं[1] प्रभो इत्यस्य प्रत्युत्तरतया निजस्वातंत्र्यं निषेद्धुं तत्र श्रीकृष्ण स्यैव दोषं वक्तुं प्राक् तत्संतोषार्थं तदुक्तमभिनंदति—यथेति । यथा यदभिप्रायेण, तथा तदभिप्रायेणैव, न त्वभिप्रायांतरं बुद्ध्वेत्यर्थः । दानपते इति सदुपदेशदानाभिप्रायेण ॥ **विश्वनाथस्तु**—अभिज्ञंमन्योऽक्रूरो मामपि तत्त्वमुपदेष्टुं प्रगल्भते, किमिदमहं न जानामीत्यंतर्मदपूर्णोऽपि महागांभीर्यं प्रकाश्य बहिर्महासाधुरित्याह—यथेति । दानपत इति मथुरायामन्नदानेन बुभुक्षून्यथा तर्पयसि तथैवात्र हस्तिनापुरेऽनाभिज्ञं मां ज्ञानदानेन तर्पय सीति भावः ॥ २६ ॥ यद्यपि यथा वदसि तथैव कर्तुं योग्यं तथापीति । 'विषमं तु नतोन्नतम्' इति धरणिः । "सूनृतं मंगलेऽपि स्यात्प्रियसत्ये वचस्यपि" इति मेदिनी । इत्यर्थ इति—कर्मकर्तरि प्रयोगस्त्वत्रा कर्मकत्वान्नास्त्यत आर्षत्वाश्रयेण यगादीति बोध्यम् । तद्वत् यथा सुदाम्नि गिरौ विद्युदुद्यत्येव लीयते तथा मद्धृदि त्वद्वाचोऽप्युक्तिसमकालमेव लीयंत इत्यर्थः । तडिद्दृष्टांतस्य व्यधिकरणत्वात्सामानाधिकरण्येनाह— यद्वेति । तस्या मालाया इयं दीप्तिः विद्योतत इति विद्युत् संज्ञायां कर्तरि क्विब्वा । 'स्याद्विद्युत्तडिद्दीप्त्योः' इति धरणिः ॥ * ॥ सुदामा मेघः 'सुदामा भूधरे मेघे' इति विश्वः । चपले मेघे चपला विद्युदिवेत्यर्थः ॥ २७ ॥ अत्राक्षिपत्यक्रूरो—नन्विति । अयं त्वदुक्तः पुत्रानुरागरूपः । ईश्वररचनाया एव मायात्वप्रसिद्धेरिति यावदर्थः । विधुनोति उपसर्गवशादत्र धुनोतेः करणार्थता, करोतीत्यर्थः । "उपसर्गेण धात्वर्थो बलादन्यत्र नीयते । विहाराहारसंहारप्रतिहारप्रहारवत् ॥" इत्युक्तेः । य ईश्वरः ॥ * ॥ विधिं विधानेच्छाम्, सा च मायाख्येति तैर्व्याख्यातम् । अन्यथा प्रकारांतरेणापि कर्तुं कोऽपि न शक्नोत्यतस्तां को

[1] परिहारेत्यपि पाठः ।

यो दुर्विमर्शपथया निजमाययेदं सृष्ट्वा गुणान्विभजते तदनुप्रविष्टः ॥ तस्मै नमो दुरवबोधविहारतंत्रसंसारचक्रगतये परमेश्वराय ॥ २९ ॥ श्रीशुक उवाच ॥ इत्यभिप्रेत्य नृपतेरभिप्रायं स यादवः ॥ सुहृद्भिः समनुज्ञातः पुनर्यदुपुरीमगात् ॥ ३० ॥ शशंस रामकृष्णाभ्यां धृतराष्ट्रविचेष्टितम् ॥ पांडवान्प्रति कौरव्य यदर्थं प्रेषितः स्वयम् ॥ ३१ ॥ इति श्रीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां पारमहंस्यां दशमस्कन्धे पूर्वार्धे पांडववृत्तनिरूपणं नामैकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ समाप्तमिदं दशमस्कंधपूर्वार्द्धम् ॥ ॥ श्रीकृष्णार्पणमस्तु ॥

मायामिति यावत् ॥ २८ ॥ अतस्तमेव नमस्यति । य इति । दुर्विमर्शपथया अवितर्क्यमार्गया गुणान्कर्माणि तत्फलानि च विभजते विविच्य ददाति । दुरवबोधो यो विहारस्तस्य क्रीडा स एव तंत्रं प्रधानं मुख्यं कारणं यस्य संसारचक्रस्यात एव तस्य गतिर्यस्मात्तस्मै नम इति ॥ २९ ॥ अभिप्रेत्य ज्ञात्वा ॥ ३० ॥ ३१ इति श्रीमद्भागवते महापुराणे दशमस्कंधपूर्वार्धे भावार्थदीपिकायां टीकायामेकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ समाप्तमिदं दशमस्कंधपूर्वार्द्धम् ॥

विधुनोत्यतिक्रमेत, न कोपीत्यर्थः । अत्र त्वमेव प्रमाणम्, एतावता शिक्षणेन मां विवेकं ग्राहयितुं नाऽशक इति भावः । स चेश्वरः संप्रति युष्मद्गृहे वर्तत इत्याह—भूमेरिति । तेन तत्र गत्वा स एव निवेद्यतां यन्मम विधेयम्, स मैवं प्रेरयेदिति भावः ॥ २८ ॥ यतस्तन्मायाऽपाकर्तुमशक्याऽतो हेतोः । तमीश्वरम् । दुरवबोधो ज्ञातुमशक्यः । अत एव दुर्ज्ञेयविहारैककारणत्वादेव । तस्य संचारचक्रस्य । “तंत्रं कुटुंबकृत्ये स्यात्सिद्धान्ते चौषधोत्तमे । प्रधाने तंतुवाये च शास्त्रभेदे परिच्छदे ॥ श्रुतिशाखांतरे हेतावुभयार्थप्रयोजके । इतिकर्तव्यतायाञ्च” इति मेदिनी ॥ * ॥ अस्माभिर्बहिरंगैः परमस्वतंत्रोऽसौ दूरत एव नमस्कार्य एवेत्याह—य इति। तैर्व्याख्यातम् । तत्रावतारिकायां निजवैषम्यहानेच्छाहेतोरिति शेषः । अवितर्क्यमार्गया ज्ञानातीतप्रवृत्तिकत्वात्परिहर्तुमशक्यया । न चोच्चनीचसुखदुःखविसर्गे तस्य वैषम्यमित्याह—कर्माणीति । कर्माणि पूर्वकर्मानुसारेण विधिनिषेधलक्षणानि । शास्त्रमुखेन व्यवस्थापयति—फलानि सुखदुःखलक्षणानि चोत्पादयतीत्यर्थः । न चैवं तस्यैश्वर्यं कर्माधीनमित्याह—दुरवबोधेति । अनादित्वादनंतानि जीवानां नानाकर्माणि तद्विहारेच्छानुसारेणैवोदयंत इति भावः । अतः परमेश्वराय वशीकृतसर्वत्वेन तन्नाम्ने ॥ विश्वनाथस्तु—गुणान्विभजते शांतघोरविमूढरूपत्वेन विभक्तान्करोति । दुरवबोधो दुर्गमः विहारतंत्रः लीलासिद्धांतो यस्य, संसारचक्राद्स्माद्गतिरुद्धारो यस्मात्स च स च तस्मै । धृतराष्ट्रं प्रबोधयेति त्वां मत्प्रबोधार्थं प्रेरयति, मा प्रबुद्धस्त्वेत्यबोधार्थं मां च प्रेरयतीत्येवं विषमा लीलास्य, ततश्चास्यास्सिद्धान्तं को जानीयादिति भावः । न च त्वं तु संसारचक्रे पतित एवेत्यपि वाच्यम्, ममापि तस्मादेव गतिर्भाविनीति भावः ॥ २९ ॥ इतीत्थम् । नृपतेर्धृतराष्ट्रस्य । सोऽक्रूरः । सुहृद्भिर्विदुरादिभिः ॥ * ॥ इतीदृशं वैषम्यापरित्यागलक्षणम् । नृपतेरिति समत्वेन युधिष्ठिरराज्ये स्वराजत्वहानिशंकयेति भावः । सुहृद्भिः पांडवादिभिः ॥ ३० ॥ यदर्थं धृतराष्ट्रविचेष्टितज्ञानार्थम् । कौरव्येति—त्वमपि तद्वंश्यत्वात्तत्परायणो भवेत्यभिप्रायः ॥ * ॥ पांडवान्प्रति विचेष्टितम् अंतःक्रौर्यबहिर्मार्दवाभ्यां विविधं चेष्टितम् । यदर्थं यद्विचेष्टितज्ञानार्थं प्रेषितः, ताभ्यामेव । हे कौरव्येति—त्वत्पूर्वजानां कुरूणां क्षयकारणं तदेव, तच्च त्वया ज्ञायत एवेति भावः ॥ ३१ ॥ इति श्रीखरडपत्तनवास्तव्यपण्डितवंशीधरशर्मविरचिते श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे पूर्वार्द्धे एकोनपंचाशत्तमोध्यायः ॥ ४९ ॥ ॥ समाप्तं चेदं दशमस्कन्धपूर्वार्द्धम् ॥

अथ श्रीधरीयटीकया वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाशटीकया चोपेते श्रीमद्भागवते दशमस्कन्धोत्तरार्द्धप्रारंभः ॥

१७०

श्रीशुक उवाच ॥ अस्तिः प्राप्तिश्च कंसस्य महिष्यौ भरतर्षभ ॥ मृते भर्तरि दुःखार्ते ईयतुः स्म पितुर्गृहान् ॥ १ ॥ पित्रे मगधराजाय जरासंधाय दुःखिते ॥ वेदयांचक्रतुः सर्वमात्मवैधव्यकारणम् ॥ २ ॥ स तदप्रियमाकर्ण्य शोकामर्षयुतो नृप ॥ अयादवां महीं कर्तुं चक्रे परममुद्यमम् ॥ ३ ॥ अक्षौहिणीभिर्विंशत्या तिसृभिश्चापि संवृतः ॥ यदुराजधानीं मथुरां न्यरुणत्सर्वतोदिशम् ॥ ४ ॥

ॐ नमो भगवते वासुदेवाय ॥ ततः पंचाशत्तमे तु जरासंधभयादिव ॥ कारयित्वांबुधौ दुर्गं तन्निनाय निजं जनम् ॥ १ ॥ कपटान्कपटैरेव हत्वा दैत्यानयत्नतः ॥ अजयच्च जरासंधं धर्मेणैव तु धार्मिकम् ॥ २ ॥ अस्तिप्राप्तिसंज्ञिके ईयतुर्जग्मतुः ॥ १ ॥ २ ॥ कंसे शोकः कृष्णे चामर्षस्ताभ्यां युतः ॥ ३ ॥ न्यरुणद्रुरोध ॥ ४ ॥

ॐ स्वस्ति श्रीगणेशाय नमः ॥ श्रीकृष्णं राधिकानाथं वृंदाबननिकुंजगम् ॥ गोपगोपीगवां सेव्यं वन्दे सर्वार्थसिद्धये ॥ १ ॥ ततोऽक्रूरागमनोत्तरम् । द्वपदं भयाभावमाह । दुर्गं शत्रुभिः दुःखेन गम्यं राज्ञामावासयोग्यं स्थलविशेषे प्रासादविशेषम् "दुर्गो ना नीलि ( ली ) कठिनदुर्गमेषु च वाच्यवत्" इति धरणिः । "राज्ञां स्थानं भवेद्दुर्गं बह्वम्बुतृणधान्यकम् । सर्वसांग्रामिकोपेतं सर्वतो वीर्यसंयुतम् ॥ वर्तुलं चतुरस्रं वा भूमिष्ठं वातितुंगकम् । वार्क्षपार्वततौयादिभेदेन बहुधा मतम् ॥ वौर्यैं वर्तुलमत्युच्चं गोलोत्क्षेपणरंध्रयुक् । निरंतरिक्षं दुर्गांगं कथितं युधि कोविदैः ॥" इति संहितायां दुर्गलक्षणम् । तत् तत्र । निनाय प्रापयामास ( १ ) । कपटांस्तृणावर्तबकादीन् । धर्मेण युद्धधर्मेण । धार्मिकं युद्धधर्मविदं, शैवधर्मविदं वा ( २ ) । सच्छास्त्रस्याऽसच्छास्त्रेणेव श्रीकृष्णस्य जरासंधेन सह संग्रामं वर्णयति । सदसतां तत्त्वनिर्णयेन भक्तिद्वेषाभ्यामु दूद्राभ्यां विहितमोक्षावाप्तिर्भवति, तत्र कथां प्रसञ्जयितुमाह—अस्तिप्राप्तिशब्दाभ्यामविद्याया द्वे रूपे संशयाविपरतिनामनी कथ्येते । कंसस्य 'कसि—हिंसायाम्' हिंसात्मनोऽधर्मस्य महिष्यौ महि महिमानं धर्मस्य सिनुत इति महिष्यौ 'षिञ्—बंधने' अस्मादौणादिको डट्, संबंधिन्यौ । भर्तरि स्वनिर्वाहके कंसनाम्न्यधर्मे कृष्णनाम्ना धर्मेण मृते मारिते । निपातनाण्णि चो लोपः । स्वपितुः स्वपोषकस्य जरासंधस्य जरा व्यर्थवयोहानिहेतुभूता कौलिकमार्गेण शैवत्वावेशरूपा, तस्यां संधा मरणापत्तावपि न मुंचामीति प्रतिज्ञा यस्य तस्य । गृहान् प्रमितिविषयानीयतुः प्राप्य स्थिते । शब्दशक्तिनिपुणैरयमर्थोऽध्यात्मविषयतया ज्ञातव्यः । एवमन्यत्रापि ध्येयम्, ग्रंथविस्तरभिया न प्रदर्श्यत इति । भरतर्षभेति भरतवंश्यत्वात्त्वैतद्रर्वामीत्यभिप्रायः ॥ * ॥ ० ॥ १ ॥ मगधराजाय द्विजातिनिषिद्धकुलधर्मेण राजमानाय 'मगधस्यक्तनीवृतोः' इति कोशात् । आत्मनो वैधव्यस्य वैरूप्यस्य प्रतिपादनासामर्थ्यलक्षणं कारणम् ॥ * ॥ ० ॥ २ ॥ स जरासंधः । तदप्रियं जामातृमृतिरूपममंगलम् । नून् कौलिकान् नयान् पिबति, नरान्पातीति नृपः । अयः शुभावहः सताम् अदो नाशकोऽसत, मित्ययादः श्रीकृष्णस्तं वांति शरणं गच्छन्तीत्ययादवा वैष्णवास्तद्रहिताम् ॥ * ॥ नृपः सर्वनरपतिः, सम्राडित्यर्थः । नृपेति क्वचित्पाठः । न विद्यंते यादवा यस्यां तामयादवाम् । क्वचित् ' अयादवीम् ' इति पाठः ॥ ॥ ३ ॥ अक्षौहिणीलक्षणार्थमवांतरसंज्ञाप्यमरेणोक्ता—" एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका । पत्त्यंगैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥ सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः । अनीकिनी दशानीकिन्योऽक्षौहिणी ॥ " इत्यमरः । एको गज एको रथस्त्रयोऽश्वाः पञ्च पदातय इति दशसंख्या पत्तिः, त्रिगुणिता पत्तिः सेनामुखम्, तत्त्रिगुणितं गुल्मः, गुल्मं त्रिगुणितं गणः, त्रिगुणो गणो वाहिनी, त्रिगुणिता वाहिनी पृतना, त्रिगुणिता पृतना चमूः, त्रिगुणा चमूरनीकिनी, दशानीकिन्योऽक्षौहिणीति विवेकः । सर्वसंकलने २१८७० गजाः, २१८७० रथाः, ६५६१० हयाः, १०९३५० पदातय इति । ' विंशत्याद्याः सदैकत्वे ' इत्यमराद्विंशत्येत्येकत्वम् ॥ * ॥ अक्षौहिणीसंख्येयम्—" खबाणाग्निनवव्योमचंद्रसंख्याः १०९३५० पदातयः । खेन्दुषट्शरषट्संख्या ६५६१० अश्वा नागा रथा अपि ॥ खाद्रिनागेंदुद्वक्संख्या २१८७० इत्येषाऽक्षौ

१ वूर्य ( हुड ) संज्ञम् । २ 'हुडम्' इति पा० ।

निरीक्ष्य तद्बलं कृष्ण उद्वेलमिव सागरम् ॥ स्वपुरं तेन संरुद्धं स्वजनं च भयाकुलम् ॥ ५ ॥ चिंतयामास भगवान्हरिः कारणमानुषः ॥ तद्देशकालानुगुणं स्वावतारप्रयोजनम् ॥ ६ ॥ हनिष्यामि बलं ह्येतद्भुवि भारं समाहितम् ॥ मागधेन समानीतं वश्यानां सर्वभूभुजाम् ॥ ७ ॥

तस्य बलं सैन्यमुद्वेलं लंघितमर्यादं सागरमिव । तेन तस्य बलेन संरुद्धम् ॥ ५ ॥ किं बलमेव हन्मि न मागधम् । मागधं वा हत्वा बलं गृह्णामि । यद्वा समागधं सर्वं हन्मीति चिंतयामास । ननु प्रथमं कथं जेष्यामीत्येवं चिंतयितुं युक्तं तत्राह । कारणमानुष इति । भूभारावतारकारणेन मानुषो न तु तत्त्वत इति ॥ ६ ॥ एवं त्रिधा विचिंत्य

हिणी स्मृता ॥ " इति । यदुराजधानीमिति तस्या निरोधस्य च महत्त्वे हेतुः । सर्वादिङ्निरोधविशेषो हरिवंशे जरासंधोक्तौ—" सर्वतो नगरी चेयं जनौघैः परिवार्यताम् । अयोयंत्राणि युंज्यंतां क्षेपणीयाश्च मुद्गराः ॥ ऊर्द्ध्वं चापि निवार्यतां प्राप्ता वै तोमरास्तथा । " इति । किञ्च " मल्लः कलिंगाधिपतिश्चेकितानः सबाह्लिकः । काश्मीरराजो गोनर्दः केकयाधिपतिस्तथा ॥ द्रुमः किंपुरुषश्चैव पार्वतीयो ह्यनामयः । नगर्य्याः पश्चिमद्वारं शीघ्रमारोधयन्तु वै ॥ पौरवो वेणुदारश्च वैदर्भः सोमकस्तथा । रुक्मी च भोजाधिपतिस्सूर्याक्षश्चैव गालवः ॥ विन्दानुविन्दावावन्त्यौ दंतवक्रश्च वीर्यवान् । छागलिः पुरुमित्रश्च विराटश्च महीपतिः ॥ कौशल्यो मालवश्चैव शतधन्वा विदूरथः । भूरिश्रवास्त्रिगर्तश्च बाणः पञ्चनदस्तथा ॥ उत्तरं नगरद्वारमेते दुर्गसहा नृपाः । आरुह्य चापि मर्दन्तां वज्रप्रतिमगौरवाः ॥ उलूकः कैतवेयश्च वीरश्चांशुमतः सुतः । एकलव्यो बृहत्क्षत्रः क्षत्रधर्मा जयद्रथः ॥ उत्तमौजाश्च शल्यश्च कौरवाः केकयास्तथा । वैदेहो वामदेवश्च शाकल्यश्च सिनीपतिः । पूर्वं नगरनिर्व्यूहमेतेष्वायत्तमस्तु नः ॥ अहं च वरदश्चैव चेदिराजेन संगताः । दक्षिणं नगरद्वारं वारयिष्यामि दंशिताः ॥" इति ॥ ४ ॥ तस्य जरासंधस्य । उत्त्यक्ता वेला येन स तथा " वेला काले च सीमायामब्धेः कूलविकारयोः " इति मेदिनी ॥ * ॥ निरीक्ष्येति युग्मकम् ॥ ५ ॥ असंभाव्यमाशंकते—नन्विति । तत्राक्षेपे । तद्देशेति—तस्मिन्देशे काले च यदनुगुणमुचितम्, इहाधुना किं कार्यमिति विचारितवान्, स्वावतारप्रयोजनं भूभारहरणरूपं च चिंतयामासेति चानुकर्षोत्र ॥ * ॥ कारणं सर्वकारणं यत्तत्त्वं तद्रूप एव मानुषस्तदाकारो न तु प्राकृतरूप इति तल्लीलत्वेऽपि सर्वज्ञानादिशक्तिमत्त्वम् । तस्य देशस्य कालस्य चानुरूपं महासैन्येन श्रीमधुपुर्या निरोधादवश्यमत्रैव तद्धन्तुं योग्यम् । तत्राप्यधुना, विलंबं विनैवेत्यर्थः । किञ्चात्र केचिदाशंकन्ते—अष्टादशाक्षौहिणीकमहाभारतीययुद्धस्य श्रीव्यासदेवेन बहुमहत्त्वं वर्णितमिह चतुर्दशोत्तरचतुःशताक्षौहिणीकाहवस्य न किमपि तद्वर्णितमत्र को हेतुरिति । अत्रेदमवधेयम्—तत्र श्रीकृष्णभक्तानां श्रीभीष्मयुधिष्ठिरादीनां महद्युद्धनीत्यादिकौशलवर्णनं श्रोतृजनोद्धारायैव न तु पौत्रसंबंधेनेति, जरासंधादीनां कृष्णभक्तिहीनत्वात्तदीयसंग्रामस्य प्रचुरसैन्यत्वेऽपि न तन्महत्त्ववर्णनामिति । अत एवोक्तम्—" श्रुतस्य पुंसां सुचिरश्रमस्य नन्वंजसा सूरिभिरीडितोर्थः । तत्तद्गुणानुश्रवणं मुकुंदपादारविंदं हृदयेषु येषाम् ॥ " इति । यद्वा—अक्षाणां रथचक्राधाराणामूहः समूहो यस्यां सेनायां साक्षौहिणीति सेनाबाहुल्यमेवावयवशक्त्या ज्ञेयं, न तु वाचनिकम् । अत एवोक्तम्—"आजगाम जरासंधस्त्रयोविंशत्यनीकपः " इति । अनीकश्चाक्षौहिण्यवयव एव । तदुक्तममरसिंहेन—' दशानीकिन्योऽक्षौहिणी ' इति ॥ ६ ॥ एवमुक्तविधया । प्रथमं पक्षं बलहननरूपम् । तत् बलहननम् । एतद् उपस्थितम । वश्यानां निजायत्तानाम् ॥ * ॥ समाहितं सम्यक्सर्वतः समाहृत्य

१ सलोप आर्षः ।

अक्षौहिणीभिः संख्यातं भटाश्वरथकुंजरैः ॥ मागधस्तु न हंतव्यो भूयः कर्ता बलोद्यमम् ॥ ८ ॥ एतदर्थोऽवतारोऽयं भूभारहरणाय मे ॥ संरक्षणाय साधूनां कृतोऽन्येषां वधाय च ॥ ९ ॥ अन्योऽपि धर्मरक्षायै देहः संभ्रियते मया ॥ विरामायाप्यधर्मस्य काले प्रभवतः क्वचित् ॥१०॥ एवं ध्यायति गोविंद आकाशात्सूर्यवर्चसौ ॥ रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ॥ ११ ॥ आयुधानि च दिव्यानि पुराणानि यदृच्छया ॥ दृष्ट्वा तानि हृषीकेशः संकर्षणमथाब्रवीत् ॥ १२ ॥

प्रथमं पक्षं निर्धारितवांस्तदाह चतुर्भिः । हनिष्यामीति ॥ ७ ॥ बलोद्यमं कर्ता करिष्यतीति ॥ ८ ॥ नन्वत एव हंतव्यस्तत्राह । एतदर्थ इति । एतच्छब्दार्थं स्पष्टयति । भूभारहरणायेति ॥ ९ ॥अयमेतदर्थोऽवतार इत्युपलक्षणमित्याह । अन्योऽपीति । प्रभवतः उद्भवतः ॥ १० ॥ ससूतौ सारथिसहितौ । परिच्छदः परिकरो ध्वजकवचा

प्रोत्साह्य चानीतम् । वश्यानां वशे स्थितानाम्, अत एव श्रीभीष्मः पांडवाश्च नायाता इति ज्ञेयम् ॥ ७ ॥ भटाश्वरथकुंजरैरुपलक्षिताभिरक्षौरिणीभिः संख्यातं कृतसंख्यमिति पूर्वान्वयि । " भटः परमजातौ स्यात्पदातौ वीरविद्विषोः " इति निरुक्तिः । बलाय सेनानयनाय । यद्वा–' त्रयोविंशत्यनीकाख्यम् ' इति वक्ष्यमाणत्वात्त्रयोविंशतिधाविभक्तसेनापटलैरिति । सेनापटलेऽपि यौगिकोऽक्षाणां रथचक्रावयवानामूहः समूहो यस्यां सेनायां साऽक्षौहिणीति प्रयोगो नाऽसंगत इति ध्येयम्, अष्टादशकृत्वो लाक्षणिकसैन्याऽऽनयनस्य दौर्घट्यप्रतीतेः ॥ * ॥ भटादिभिरुपलक्षिताऽक्षौहिणीभिस्संख्यातं कथितम्, न तत्र प्रत्येकं तासां संख्या कर्तुं शक्यते बहुलत्वादाधिक्यमेव विवक्षितम्, चतुरंगिणीत्वादक्षौहिणीशब्दप्रयोगश्चेति प्रतीयते । अघटनघटनापटीयस्त्वान्मायया यथाश्रुतमपि संभाव्यत एवेति तत्त्वम् ॥ ८ ॥ ननु निश्चयेन यतः पुनरानयिष्यतीत्यत एव हेतोर्हंतव्यो भूमार इति । यद्वा–' न त्वतः ' इति पाठः स्वामिनां, लेखकप्रमादान्नन्विति जातः, तत्पक्षे, अत एव यतः पुनर्बलमानयिष्यति जरासंधोऽतोऽयं न हंतव्य इति व्याख्येयम् । एषोऽर्थः प्रयोजनं यस्य स एतदर्थः ॥ * ॥ एतदर्थम् एतस्मा इत्यर्थः । कस्मै ? तत्राह–भूभारहरणायेत्यादि । अवतारः प्रपंचे प्राकट्यम् । ' अयम् ' इति पाठः स्वामिसंमतः । ' हि ' इति क्वचित्पाठः । भूभारहरणं स्पष्टयति–संरक्षणायेति । संशब्देन स्वभक्तिप्रवर्तनादिना लोकद्वयेऽपि रक्षा सूचिता ॥ ९ ॥ अन्योपि रामादिरपि । विरामाय विनाशाय ॥ * ॥ अन्योऽपि किमुत सर्वैश्वर्यादिपूर्णोऽयमित्यर्थः । संभ्रियते प्रकाश्यते इत्यर्थः । तथा च श्रीगीतासु–" यदायदा हि धर्मस्य ग्लानिर्भवति भारत " इत्यादि ॥ १० ॥ एवमुक्तप्रकारेण । आकाशाद्वैकुंठात् " आकाशो ब्रह्मवैकुंठस्वर्लोकगगनेषु च " इति धरणिः । सद्यश्चिंतनावसरे । उपस्थितौ प्राप्तौ ॥ * ॥ एवमिति सार्द्धकम् । गां पृथ्वीं विन्दतीति गोविन्द इति, भूभारहरणार्थं साक्षादवतीर्णो भगवानित्यर्थः, तस्मिन् । आकाशादूर्ध्वलोकात्तदीयमहावैकुंठादित्यर्थः ॥ ११[1] ॥ पुराणानि शंखचक्रगदादीनि । यदृच्छयाऽकस्मादेव । " यदृच्छा निर्निमित्ते स्याददृताकस्मिकेऽथवा " इति धरणिः । तानि रथायुधादीनि । अथ रथावुपस्थित्युत्तरम् ॥ * ॥ दिव्यानि लोकातीतानि । यतः पुराणानि पुरापि नवानि नित्यानीत्यर्थः । यदृच्छया स्वैरितया, आनयनादिप्रयत्नं विनैवोपस्थितानि, तेषां भगवदभिप्रायज्ञत्वेन चेतनताभिप्रेता । यद्यपि " हलं संवर्तकं नाम सौनन्दं मुशलं तथा । धनुषां प्रवरं शार्ङ्गं गदां कौमोदकीं तथा ॥ " इति श्रीहरिवंशात्, तथा श्रीविष्णुपुराणे च चत्वार्येवायुधान्युक्तानि तथाप्यत्र श्रीभगवच्चक्रं श्रीबलदेवस्य धनुरादिकमपि ज्ञेयं

१ उत्तरपद्यावतरणे अयमेतदर्थोऽवतार इत्युपलक्षणमित्युक्तेः ।

पश्यार्य व्यसनं प्राप्तं यदूनां त्वावतां प्रभो ॥ एष ते रथ आयातो दयितान्यायुधानि च ॥ १३ ॥ यानमास्थाय जह्येतद्व्यसनात्स्वान्समुद्धर ॥ एतदर्थं हि नौ जन्म साधूनामीश शर्मकृत् ॥ १४ ॥ त्रयोविंशत्यनीकाख्यं भूमेर्भारमपाकुरु ॥ एवं संमंत्र्य दाशार्हौ दंशितौ रथिनौ पुरात् ॥१५॥ निर्जग्मतुः स्वायुधाढ्यौ बलेनाल्पीयसाऽऽवृतौ ॥ शखं दध्मौ विनिर्गत्य हरिर्दारुकसारथिः ॥१६॥ ततोऽभूत्परसैन्यानां हृदि वित्रासवेपथुः ॥ तावाह मागधो वीक्ष्य हे कृष्ण पुरुषाधम ॥ १७ ॥ न त्वया योद्धुमिच्छामि बालेनैकेन लज्जया ॥ गुप्तेन हि त्वया मंद न योत्स्ये याहि बंधुहन् ॥१८॥

दिस्तत्सहितौ ॥ ११ ॥ १२ ॥ त्वमेवावन् रक्षको नाथो विद्यते येषां ते त्वावंतस्तेषाम् ॥ १३ ॥ १४ ॥ दंशितौ बद्धकवचौ ॥ १५ ॥ स्वायुधाढ्यौ शोभनायुधसंपन्नौ ॥ १६ ॥ पुरुषा अधमा यस्मादिति वास्तवोऽर्थः । हे पुरुषोत्तमेति ॥ १७ ॥ गुप्तेन सर्वांतरत्वाद्दर्शनानर्हेण । हे अमंद । बध्नातीति बंधुरविद्या तां हंतीति तथा हे

योग्यत्वादन्यत्राऽऽगमनश्रवणाच्च । अत एवाग्रे “ एष ते रथ आयातो दयितान्यायुधानि च ” इति बहुत्वम् ॥ दृष्ट्वेत्यर्द्धकम् । हृषीकेशः विनैव वचनेन सर्वं प्रवर्तयितुं समर्थोऽपि संकर्षणं सर्वं दृष्टिमात्रेण नाशयितुं समर्थमपि । अथ कार्त्स्न्येनाब्रवीत् । लीलाकौतुकावेशेन युक्तिपूर्वकमेव बभाष इत्यर्थः ॥ १२ ॥ त्वावतामत्र समासे त्वदादेशस्य टेराकारश्छांदसः ॥ * ॥ पश्य अवधेहि । तत्किम्—व्यसनमिति ‘ व्यसनं विपदि भ्रंशेऽव्याशक्तौ ’ इति कोशात् । त्वम् नाथः विद्यसे येषां ते त्वावंतः । मतुप्यात्वमार्षम् । यद्वा—त्वमवन् रक्षको येषामिति शतर्यपि तथा । “ रक्षकोऽवस्त्राणकरो नाथः स्वाम्यधिपो गुरुः ” इति कोशात् ॥ १३ ॥ एतद्बलम् । ईशेति संबुद्धिः ॥ * ॥ निर्णयमाह—यानमिति । एतत्सैन्यं जहि । तन्मुख्यप्रयोजनमादिशति—व्यसनादिति । स्वान् सकलसाधुजनालंबनरूपान्परिकरान्सम्यगक्षतत्वादिनोद्धर । एतच्चावश्यकार्यमित्याशयेनाह—एतदर्थमिति । हि यस्मात् । यत एवान्येषां च साधूनां शर्मकृद्भवेदित्यर्थः । हे ईशेति प्रोत्साहनम् ॥१४ ॥ अनीकपदमक्षौहिणीपरम् । एवमित्थम् । ‘दंशितः कवचाचितः, इति मेदिनी ॥ * ॥ आवश्यकतार्थमेव सैन्यस्य हननस्य च वैशिष्ट्यमाह—त्रयोविंशतिरनीकान्यक्षौहिण्योऽनीकिन्यो वा, तदाख्यं तावत्संख्यम् । यद्वा—त्रयोविंशतिश्च ता अक्षौहिण्यस्त्रयोविंशत्यक्षौहिण्यस्ता एवानकिं सैन्यं त्रयोविंशत्यनीकम् । मध्यमपदलोपी समासः। त्रयोविंशत्यनीकमाख्या यस्य तथेति । भारं भारभूतम् । दाशार्हाविति मनुष्यलीलापरत्वमभिप्रेतम् । अत एव दंशितौ ॥१५॥ अल्पीयसाऽल्पप्रमाणेन । दारुकस्तन्नामा सारथिर्यस्य स तथा ‘दारुकः कृष्णसारथिः’ इति कोशात् ॥ * ॥ अल्पीयसेति जरासंधबलापेक्षया, तत्रापि हरिवंशोक्तविकद्रुदुर्मंत्रणया सर्वेषामागमनेन च । अत एवावृतौ आवरणशक्त्या चतुर्दिक्षु वेष्टितौ । स्वैर्निजायुधैराढ्यौ युद्धे संपन्नौ । तत्तदायुधदर्शनेनैव परसैन्यं क्षोभयंतावित्यर्थः । विशेषेण सर्वतो वैलक्षण्येन निर्गत्य, यतो दारुकसारथिः तत्सारथित्वोपलक्षणया दिव्यातिदिव्यतत्तद्व्याद्याशक्तिमान् । हरिरिति शंखध्वनिनैव परेषां वीर्यादिहरणाभिप्रायेण ॥ १६ ॥ ततः शंखध्वनेः । वित्रासेन वेपथुः कंपः । तौ रामकृष्णौ ॥ * ॥ अत एव विशिष्टत्रासेन वेपथुः । श्रीकृष्णं साक्षात्कालरूपं मत्वा तेन साकं युद्धं परिहर्तुमाह—ताविति सार्धेन ॥ १७ ॥ गुप्तेन निंद्येन ‘गुप—गोपनकुत्सनयोः’ गोपीजारेणेत्यर्थः । यद्वा—गुप्तेन नंदगोपपालितेन वैश्येनेत्यर्थः ॥ * ॥ बालेनैकेनेति—‘बालकेनैव’ इति च पाठः । ननु युद्धे शक्तिरेवापेक्ष्यते न तु वय इत्याह—गुप्तेनेत्यर्द्धकेन, कंसभयेन गोकुले निवासात् । ननु वैरिवञ्चनार्थं काले गुप्तिरेव योग्येत्यत आह—मंद हे अभद्र । कुतः—बंधुहन् । अतो याहि धर्मयुद्धादितोऽपसर । तत्त्वार्थस्तु व्याख्यातस्तैः । यद्वा—याहि स्वगृहम्, युद्धश्रमेण ते प्रयोजनाभावादिति भावः ॥ **विश्वनाथस्तु**—गुप्तेन कंसभयाद्गोकुलं

तव राम यदि श्रद्धा युध्यस्व धैर्यमुद्वह ॥ हित्वा वा मच्छरैश्छिन्नं देहं स्वर्याहि मां जहि ॥ १९ ॥ श्रीभगवानुवाच ॥ न वै शूरा विकत्थंते दर्शयंत्येव पौरुषम् ॥ न गृह्णीमो वचो राजन्नातुरस्य मुमूर्षतः ॥ २० ॥ श्रीशुक उवाच ॥ जरासुतस्तावभिसृत्य माधवौ महाबलौघेन बलीयसावृणोत् ॥ ससैन्ययानध्वजवाजिसारथी सूर्यानलौ वायुरिवाभ्ररेणुभिः ॥२१॥ सुपर्णतालध्वजचिह्नितौ रथावलक्षयंत्यो हरिरामयोर्मृधे ॥ स्त्रियः पुराट्टालकहर्म्यगोपुरं समाश्रिताः संमुमुहुः शुचार्दिताः ॥ २२ ॥ हरिः परानीकपयोमुचां मुहुः शिलीमुखात्युल्वणवर्षपीडितम् ॥ स्वसैन्यमालोक्य सुरासुरार्चितं व्यस्फूर्जयच्छार्ङ्गशरासनोत्तमम् ॥ २३ ॥

अविद्यानिरसनेति । याहि प्राप्नुहि ॥१८॥ अच्छेद्यदेहोऽसाविति स्वयमेव मत्वा परितोषात्पक्षांतरमाह । यद्वा मां जहीति ॥ १९ ॥ यथाश्रुतार्थग्रहणेन भगवत उत्तरम् । न वै शूरा इति । विकत्थंते श्लाघंते ॥ २० ॥ माधवौ मधुवंशभवौ । महता सैन्यसमूहेनावृतवान् । वायुरभ्रैः सूर्यं रेणुभिश्चाग्निं यथेत्यदर्शनमात्रमेवावरणमिति सूचितम् ॥ २१ ॥ २२ ॥ परस्यानीकानि सैन्यानि तान्येव पयोमुचो मेघास्तेषां शिलीमुखा बाणास्तेषामत्युल्वणं वर्षं तेन पीडितम् । व्यस्फूर्जयदुज्जृंभितवान् ॥ २३ ॥

गतस्य तव वैश्यपालितत्वेन वैश्यधर्मप्राप्तेः ॥ १८ ॥ श्रद्धा युद्धश्रद्धा ॥ * ॥ 'त्वं च' इति वा पाठः । चशब्दस्त्वर्थे । श्रद्धा युद्धेच्छा । यदीति मद्भयानुभवितैव यदि कथंचित्स्यादित्यर्थः । स्थैर्यमुच्चैर्बहुबलादात्मानमुद्वह प्रापय, न जातूद्विग्नो भव, न पलायस्वेत्यर्थः । 'धैर्यम्' इत्यपि पाठे स एवार्थः । यद्वा—मत् मत्तः पापात्मनः सकाशात्स्ववैकुंठं याहि । किं कृत्वा—शरैश्छिन्नं मम देहं हित्वा त्यक्त्वा, अत्रैव प्रक्षिप्येत्यर्थः ॥ १९ ॥ आतुरस्य जामातृमरणेन दुःखितस्य । मुमूर्षतः मर्तुमिच्छतः । "गीर्बुद्धी विपरीते स्त आसन्नमरणस्य नुः" इति शिष्टोक्तेः ॥ * ॥ आत्मना सह युद्धकौतुके तं प्रवर्तयितुं व्यक्तार्थमाश्रित्य सोल्लुंठमुत्तरमाह—नेति । वै प्रसिद्धम् । न च तव गालिप्रदानेन वयं क्षुभ्याम इत्याह—नेति । आतुरस्य वातादिदोषव्याकुलस्य, तत्रापि मुमूर्षतः संप्रत्येव मरिष्यतः वाचो न गृह्णीमो वस्तुबुद्ध्या न भावयामः, कुतः कोपं कुर्म इत्यर्थः । राजन्निति—यद्यपि राज्ञस्ते तदतीवानुचितमिति भावः ॥२०॥ तौ रामकृष्णौ । सैन्येन, यानध्वजैः रथध्वजैः वाजिभिरश्वैः, सारथिभिश्च सहितौ । 'वाजी त्वश्वे शरे खगे' इति हलायुधः ॥*॥ श्रीशुक उवाचेति क्वाचित्कः । जरासुत इति जराराक्षस्यासंहितदेहत्वात्तद्दत्तशक्तित्वेन मनुष्यातीतशक्तिरुक्ता । माधवाविति दाशार्हावितिवत् । वस्तुतस्तु, साक्षान्मायानाशकत्वेन, तत्कार्यप्रपञ्चनाशने तु किंचिदपि प्रयासादिनेत्यर्थः ॥२१॥ तालो वृक्षविशेषः । पुरं गृहम्, अट्टालकं गृहोपरीष्टकादिविरचितचतुरस्रस्थलम्, हर्म्यं धनिनां वासः, गोपुरं पुरद्वारम् । "पुरं नपुंसकं गेहे देहपाटलिपुत्रयोः । पुष्पादीनां दलावृत्तौ ना गुग्गुलौ न ना पुरि ॥" इति मेदिनी । "गोपुरं द्वारि पूर्द्वारि कैवर्ते मुस्तकेऽपि च" इत्यपि । 'हर्म्यादि धनिनां वासः' इत्यमरः । "इष्टिकादिविराचितं चतुरस्रं गृहोपरि । स्थलमट्टालिकं प्रोक्तमट्टः क्षौमं तदेव हि ॥" इति कोशात् ॥*॥ सुपर्णेति तत्तद्ध्वजादर्शनमपि सूचितम् । पुरस्याट्टालिकं दुर्गोपरिरचितमुच्चगृहम्, हर्म्यं चोच्चप्रासादः, गोपुरं पुरद्वारम्, द्वंद्वैक्यम् । उच्चारूढा अप्यलक्षयंत्यो लक्षणैरप्यतर्कयंत्यः शुचा शोकेनार्पिता व्याप्ताः । 'अर्दिताः' इति पाठे पीडिताः सत्यः संमुमुहुः । स्त्रीणां स्वभावत एव स्नेहार्द्रचित्तत्वादिति भावः ॥ २२ ॥ 'अलिबाणौ शिलीमुखौ' इत्यमरः । उज्जृंभितवान् उच्चैश्चकार ॥ * ॥ हरिरिति युग्मकम् । हरिरिति परसैन्यहरणात् । पदिनमत्र संपातेन वित्रासनमेव न तु छेदनम् 'मुकुंदोऽथाऽक्षतबलः' इति वक्ष्य

गृह्णन्निषंगादथ संदधच्छरान्विकृष्य मुंचञ्छितबाणपूगान् ॥ निघ्नन्रथान्कुञ्जरवाजिपत्तीन्निरंतरं यद्वदलातचक्रम् ॥ २४ ॥ निर्भिन्नकुंभाः करिणो निपेतुरनीकशोऽश्वाः शरवृक्णकन्धराः ॥ रथा हताश्वध्वजसूतनायकाः पदातयश्छिन्नभुजोरुकंधराः॥२५॥ संछिद्यमानद्विपदेभवाजिनामंगप्रसूताः शतशोऽसृगापगाः॥भुजाऽहयः पूरुषशीर्षकच्छपा हतद्विपद्वीपहयग्रहाकुलाः ॥२६॥ करोरुमीना नरकेशशैवला धनुस्तरंगायुधगुल्मसंकुलाः ॥ अच्छूरिकावर्तभयानका महामणिप्रवेकाभरणाश्मशर्कराः ॥ २७ ॥ प्रवर्तिता भीरुभयावहा मृधे मनस्विनां हर्षकरीः परस्परम् ॥ विनिघ्नताऽरीन्मुसलेन दुर्मदान्संकर्षणेनापरिमेयतेजसा ॥२८॥ बलं तदंगार्णवदुर्गभैरवं दुरंतपारं मगधेंद्रपालितम् ॥ क्षयं प्रणीतं वसुदेवपुत्रयोर्विक्रीडितं तज्जगदीशयोः परम् ॥ २९ ॥

तदाह । गृह्णन्निति । निषंगादिषुधेः शरान् गृह्णन् अथ तान्गुणे संदधत् गुणमाकृष्य निशितबाणसमूहान्मुंचन् । निघ्नन्प्रहरन् । पत्तिः पदातिः । निरंतरमिति ग्रहणादिक्रियाविशेषणम् । ज्वलत्काष्ठं भ्रमणे यथा चक्रवद्भवति तद्वद्यद्यस्फूर्जयदिति ॥ २४ ॥ हता अश्वा ध्वजाः सूता नायका रथिनश्च येषु ते ॥ २५ ॥ संछिद्यमाना द्विपदा इभा वाजिनश्च तेषामंगेभ्यः प्रसूता असृगापगा रुधिरनद्यः परस्परं प्रवर्तिता इति तृतीयेनान्वयः । प्रसिद्धनदीरूपकमाह । भुजा एवाहयो यासु ताः । पुरुषाणां शीर्षाण्येव कच्छपा यासु ताः । हता द्विपा एव द्वीपा अंतर्वर्तितटानि हया एव ग्रहा ग्राहास्तैश्चाकुला व्याप्ताः॥२६॥ करा ऊरवश्च मीना यासु ताः नराणां केशा एव शैवालं यासु ताः । धनूंष्येव तरंगा आयुधान्येव गुल्मास्तैश्च तैश्च संकुलाः । अच्छूरिकाश्चर्माणि चक्राणि वा तान्येवावर्तास्तैर्भयानकाः । महामणीनां प्रवेका उत्तमा आभरणानि च यथायथमश्मानः शर्कराश्च यासु ताः ॥२७॥भीरूणां भयावहाः । मनस्विनां धीराणां हर्षकर्यः किं च संकर्षणेनापि तद्बलं क्षयं प्रणीतम् ॥ २८ ॥ अंग हे राजन् । अर्णववद्दुर्गं दुर्गमं भैरवं भयंकरं च

माणत्वात् ॥ २३ ॥ तत् शरासनोऽज्जृंभणम् । ' निषंगः संगते तूणे ' इति मेदिनी । अथ ग्रहणोत्तरम् । तान्शरान् । गुणे मौर्व्याम् । ''अलातं दीप्तकाष्ठे स्यादगृहीते तु वाच्यवत् '' इति धरणिः ॥ * ॥ तद्द्वियात्रिशेषाभिव्यञ्जनं शुध्वित्याह--गृह्णन्निति । निषंगादिषुधेः सकाशादेकैकशरान् गृह्णन् अथानुगुणे तान्संदधत् । गुणमाकृष्य तान्मुँचंस्तैश्च रथादीन्निघ्नन् । निरंतरमिति ग्रहणादिसर्वक्रियाविशेषणम्, तेन ग्रहणयोजनकर्षणनिक्षेपणप्रहरणक्रियाः क्रमेणोद्भूता अपि सदैवोद्भवंत्य एव द्रष्टॄन्प्रति ताः क्षणार्थमध्ये शतकोटिकृत्व उद्भवंतीत्यर्थः । अत एव अलातचक्रदृष्टान्तः ॥ २४ ॥ निर्भिन्नकुम्भा विदलितमूर्धानः '' कुंभो राश्यंतरे हस्तिमूर्द्धांसे राक्षसांतरे '' इति मेदिनी । अनीकशः राशिशः ''अनीकोऽस्त्री रणे सैन्ये समूहे दुर्गेतेपि च '' इति धरणिः ॥ * ॥ ० ॥ २९ ॥ 'इभः स्तंबेरमः पद्मी ' इत्यमरः । ''द्वीपोऽस्त्रियामंतरीपं यदंतर्वारिणस्तटम्'' इति च । 'ग्रहो ग्राहे च रव्यादौ ' इति धरणिः ॥ * ॥ ० ॥ २६ ॥ '' जलनीली तु शेवालं शैवऽलोऽथ '' इत्यमरः । गुल्मा लवल्यः '' गुल्मः सेनाघट्टभिदोः सैन्यरक्षणरुग्भिदोः । स्तंबे स्त्रियामामलक्यां लवलीवस्त्रवेशयोः ॥'' इति मेदिनी । ''अच्छूरिका स्यात्पुलके वृत्तचक्रध्वनिष्वपि '' इति तीर्थः । '' प्रवेकस्तूत्तमे पुंसि वाच्यवत्स्याद्विवेक्तरि '' इति निरुक्तिः । ' आवर्तस्त्वंभसां भ्रमः ' इति । यथायथं । मणय अश्मानः पाषाणानि 'अश्मनी मणि पाषाणे' इति कोशात् । अलंकाराश्च शस्त्रभेदनाच्छर्करावज्जाताः, शर्कराः सिकता वालुका इति यावत् ''शर्करा खण्डविकृतावुपलाकर्परांशयोः ।: शर्करान्वितदेशेपि रुग्भेदे शकलेपि च ॥'' इति मेदिनी ॥ * ॥ अच्छूरिका चर्माणि चक्राणि वा । पञ्चमस्कन्धे ' अच्छूर्यमृतमणी ' इत्यादौ प्रयुक्तश्चक्र एव ॥ २७ ॥ परस्परमन्योन्यम् । न केवलं श्रीकृष्णेनैव नद्यः प्रवर्तिता इत्याह—किञ्चेति । यद्यपीह कृष्णेनेति नोक्तं[1] तथापि ' क्षयं प्रणीतं वसुदेवपुत्रयोः ' इत्यग्रिमपद्योक्तिविरोधात्तेनापीति बोध्यम् ॥ * ॥ दुर्मदान् दुष्टाहंकारान् । साक्षाच्छ्रीभगवता सह युद्धात् । यद्वा—निजबलादिना महामत्तानित्यर्थः । तेजः पराक्रमः ॥ २८ ॥ यतो दुरंतपारमतोऽर्णववदिति

१ यद्यपि 'हरिः परानीक–' ( २३ ) इत्यतः प्रकरणात्कृष्णेनासृङ्नद्यः प्रवर्तिता इति वक्तुं शक्यते तथापि स्पष्टतया नोक्तमित्याशयः । उत्तरवाक्यप्रामाण्यदानेऽप्यसौष्ठवाऽनुपलब्धेः ।

स्थित्युद्भवांतं भुवनत्रयस्य यः समीहतेऽनंतगुणः स्वलीलया ॥ न तस्य चित्रं परपक्षनिग्रहस्तथापि मर्त्यानुविधस्य वर्ण्यते ॥ ३० ॥ जग्राह विरथं रामो जरासंधं महाबलम् ॥ हतानीकावशिष्टासुं सिंहः सिंहमिवौजसा ॥ ३१ ॥ वध्यमानं हतारातिं पाशैर्वारुणमानुषैः ॥ वारयामास गोविंदस्तेन कार्यचिकीर्षया ॥ ३२ ॥ स मुक्तो लोकनाथाभ्यां व्रीडितो वीरसंमतः ॥ तपसे कृतसंकल्पो वारितः पथि राजभिः ॥ ३३ ॥

यतो दुरंतपारम् । अंतोऽत्र तलम् । पारमवधिः । दुःशब्दो निषेधे । विक्रमेणागाधं देशतश्च निरवधिकमित्यर्थः । किं च मगधेंद्रेण च पालितं बलम् । यदेवंभूतं रामकृष्णयोः कर्मोक्तं तत्परं केवलं तयोर्विक्रीडितं न तु पराक्रमः ॥ २९ ॥ न चेतदाश्चर्यमित्याह । स्थित्युद्भवांतमिति । तर्हि किमित्याश्चर्यमिव वर्णितं तत्राह । तथापीति । मर्त्याननुविधत्तेऽनुकरोतीति मर्त्यानुविधस्तस्य ॥ ३० ॥ किं च जग्राहेति । हतान्यनीकानि यस्य अवशिष्टा असव एव यस्य तं च तं च ॥ ३१ ॥ हता बहुशोऽरातयो येन तथाभूतमपि

योज्यम् । तलमिति 'तलं स्वरूपेऽनूर्द्ध्वे स्त्री' इति मेदिनी । इत्यर्थ इति व्याख्येयमिति । रक्षकप्रबलत्वेपि नाशोऽनायासमाह–किंचेति । तयो रामकृष्णयोः ॥ * ॥ विक्रीडितं लीलाविशेष एव परं केवलं न त्वावेशिकं युद्धमित्यर्थः ॥ २९ ॥ एतद्बलनाशनम् । यः कृष्णः । समीहते कुरुते । चित्राभावे तद्वत्कुतो वर्णितमित्याह–तर्हीति । यद्यपि हरेः परपक्षनिग्रहश्चित्रं न तथापीति । तस्य मनुष्यधर्ममनुकुर्वतो हरेस्तद्युद्धं वर्ण्यते, बुद्ध्यवतारार्थं प्रशस्यत इत्यर्थः ॥ * ॥ ननु जगदीशता चेत्तर्हि कथं क्षुद्रातिक्षुद्रैः स्वाननुरूपैर्जीवैः सह युद्धे रसः सिध्यति, न चेत्तर्हि तद्वर्णनेन किं तत्राह–स्थितीति । तर्हि किमत्याश्चर्यमिव वर्णितं तत्राह–तथापीति । मर्त्यः सन्ननुरूपमेव विधत्त इति मर्त्यानुविधस्तस्य । अयमर्थः–येन स्वाकारेण जगत्सृष्ट्यादिकं करोति तेनैव यदि जरासन्धं जयति तदा खल्वननुरूपत्वान्न रसः, यदि च मर्त्यः सन् जयति तदा मर्त्यस्य प्रतियोद्धा मर्त्य एवानुरूपस्तत्रातिप्रौढस्य जरासंधस्य जयाच्चमत्कार इति रस एव भवति । न च मर्त्यदेहस्यास्वरूपत्वमिति वाच्यम् 'परमात्मा नराकृतिः' "नराकृति परं ब्रह्म हरिः कारणमानुषः", 'यन्मित्रं परमानंदं पूर्णं ब्रह्म' इत्यादिश्रवणात्, 'अहं ब्रह्म परं धाम' इति गीतोक्तेश्च ॥ ३० ॥ अन्यदद्भुतमाह–किंचेति । ओजसा बलेन ॥ * ॥ सिंहस्सिंहमिति मर्त्यानुविधतया साम्याभिप्रायात् । 'महाबलम्' इति क्वचित्पाठः । तत्र महाबलत्वमपि मर्त्यानुविधाऽपेक्षयैव न तु ऐश्वर्यापेक्षया ॥ ३१ ॥ वारुणैर्नागादिरूपैः, मानुषै रज्ज्वादिभिः । वारयामास मोचयामास । तेन जरासंधेन । कार्यस्य पुनस्तदानींतनसेनावधस्य चिकीर्षया ॥ * ॥ मानुषीयैस्त्वत्यंतापमानार्थम् । गोविंद इति पूर्ववत् । अत एव तेन जरासंधेन यत्कार्यं हननार्थं भूभारसैन्यसंमेलनं तस्य कर्तुमिच्छया । महाराजोऽयं संबंधी च ततोऽधुना कृतापराधोऽपि त्यज्येतेति रामस्तमत्रायेतेत्यर्थः । अत्र प्रकरणप्राप्तस्य बन्धनस्य " भीत्रार्थानां भयहेतुः " इत्यनेनापादानत्वम्, गोभ्यो यवान्वारयतीतिवत् ॥ ३२ ॥ मुक्तो विसृष्टः । वारितो निवारितः ॥ * ॥ स मुक्त इति युग्मकम् । लोकनाथाभ्यामिति पूर्वोक्तरीत्या लोकहितार्थमेवेति भावः । अथ च महाशयत्वाज्झटिति तद्धनने त्वनाग्रहश्च दर्शितः । यतो वीरसंमतोऽतो बंधे ततोऽपि मोचने व्रीडितः । अत एव तपस उद्यतः, कथं यादवबलादपि पराजयो मम जातस्तत इतः क्षात्रधर्मं न करिष्यामि किन्तु तपसैव शरीरं त्यक्ष्यामीति बहिरभिमानज्ञापनायाऽन्तस्तु वीर्यातिशयलाभायेति

वाक्यैः पवित्रार्थपदैर्नयनैः प्राकृतैरपि ॥ स्वकर्मबंधप्राप्तोऽयं यदुभिस्ते पराभवः ॥ ३४ ॥ हतेषु सर्वानीकेषु नृपो बार्हद्रथस्तदा ॥ उपेक्षितो भगवता मगधान्दुर्मना ययौ ॥ ३५ ॥ मुकुंदोप्यक्षतबलो निस्तीर्णारिबलार्णवः ॥ विकीर्यमाणः कुसुमैस्त्रिदशैरनुमोदितः ॥ ३६ ॥ माथुरैरुपसंगम्य विज्वरैर्मुदितात्मभिः ॥ उपगीयमानविजयः सूतमागधबंदिभिः ॥ ३७ ॥ शंखदुंदुभयो नेदुर्भेरीतूर्याण्यनेकशः ॥ वीणावेणुमृदंगानि पुरं प्रविशति प्रभौ ॥ ३८ ॥ सिक्तमार्गां हृष्टजनां पताकाभिरलंकृताम् ॥ निर्घुष्टां ब्रह्मघोषेण कौतुकाबद्धतोरणाम् ॥ ३९ ॥ निचीयमानो नारीभिर्माल्यदध्यक्षतांकुरैः ॥ निरीक्ष्यमाणः सस्नेहं प्रीत्युत्कलितलोचनैः ॥ ४० ॥ आयोधनगतं वित्तमनंतं वीरभूषणम् ॥ यदुराजाय तत्सर्वमाहृतं प्रादिशत्प्रभुः ॥ ४१ ॥

जरासंधं बध्यमानं वारयामासेति ॥ ३२ ॥ ३३ ॥ पवित्रार्थानि धर्मोपदेशपराणि पदानि येषु तैर्वाक्यैः । नयनैर्नीतिभिः । प्राकृतैर्लौकिकैः । तत्र लौकिकन्यायमाहुः । स्वकर्मैति । यदुभिरल्पकैः कृत्वा ते महतः पराभवः केवलं कर्मबंधेन प्राप्तोऽतस्त्वया न लज्जितव्यमिति ॥ ३४ ॥ बार्हद्रथो जरासंधः ॥ ३५ ॥ मुकुंदोऽपि ययावित्यनुषंगः । न क्षतं बलं यस्य सः । तस्यैवामृतदृष्ट्या क्षतप्रतिसंधानादिति भावः । निस्तीर्णोऽनायासेनैव तीर्णोऽखिलार्णवो येन । साधुसाधु इत्यनुमोदितश्च ॥ ३६ ॥ प्रत्युद्यातैर्मथुरावासिभिर्जनैः उपसंगम्य मिलित्वा ॥ ३७ ॥ तदा प्रभौ पुरं प्रविशति सति शंखादयो नेदुः ॥ ३८ ॥ कथंभूतां पुरं तदाह । सिक्तमार्गामिति । ब्रह्मघोषेण वेदघोषेण निर्घुष्टां निनादिताम् । कौतुकेनोत्सवेन आ सर्वतो बद्धानि तोरणानि यस्यां ताम् ॥ ३९ ॥ निचीयमानो विकीर्यमाणः । प्रविवेशेति विपरिणताऽनुषंगः ॥ ४० ॥ आयोधनं ज्ञेयम् । पथि वनवर्त्मनि तपोर्थमाश्रिते ॥ ३३ ॥ तत्र नयेषु ॥ * ॥ पवित्रार्थपदैः क्षत्रियस्य वार्द्धक्य एव सति वैराग्ये तपः, युद्धादिको मुख्यो धर्मः लज्जया तत्त्यागोऽनुचित इत्यादिलक्षणैः । तवैतत्पराभवदुःखं ललाटे लिखितमेव तत्कथमन्यथा भवति ' अवश्यमेव भोक्तव्यम् ' इति स्मृतेः । अतः स्वकर्मभिरेवैतत्पराभवस्तथा च प्रारब्धाधीनत्वात्तत्र का लज्जा, कः खलु बुद्धिमानतिक्षुद्राद्यादवादपि दुर्बलं मंस्यते । यादवेन युद्धे तत्र जये सति न किमपि यशः, पराजयेपि न काचिल्लज्जा, जरासंधसिंहो हि कृष्णसारं जित्वापि न कमप्युत्कर्षमजित्वापि न कामपि निंदां प्राप्नोतीति वयं जानीमः । समपक्षेणापि सह युद्धे जयपराजयाभ्यां क्षत्रियैर्न गर्वदैन्ये धार्ये, किमुत स्वतोऽतिन्यूनेनेति शास्त्रम् ॥ ३४ ॥ ' नृपो बार्हद्रथस्तदा ' इत्येवपाठः सम्यक् । तीर्थस्तु—' नृपतिर्बारहद्रथः ' इति पपाठ, तत्रार्षत्वाश्रयणमृते निर्वाहो नास्ति ॥ * ॥ हतेष्विति त्रिकम् । बृहद्रथः राजचक्रवर्त्ययं तदपत्यमिति तन्नामविख्यापक इत्यर्थः । अत एव साभिमानत्वादुपेक्षितोऽपि दुर्मना दुःखितचित्तः ॥ ३५ ॥ अपिना पूर्वक्रिया गृह्यते । तस्यैव मुकुंदस्यैव । क्षतप्रतिसंधानं विक्षतीभवनम् । इति भावः—दृष्ट्या मृतिनाशकस्य विक्षतीकरणं नाद्भुतमित्याशयः । अरिबलार्णवः शत्रुसेनासमुद्रः ॥ * ॥ मुकुंद इति जरासंधमोचनाभिप्रायेण । निस्तीर्णेति मर्त्यानुविधत्वात् । मुकुन्दोपि मथुरां ययाविति । अनुमोदितः जयजयेत्यादिशब्दैर्वर्द्धितः ॥ ३६ ॥ प्रत्युद्यातैरानयनार्थं संमुखमागतैः ॥ * ॥०॥ ३७ ॥ प्रभौ सर्वेश्वरे श्रीकृष्णे ॥ * ॥ शंखेति युग्मकम् । अनेकश इत्यस्य सर्वैरेवान्वयः ॥३८॥ तोरणानि वंदनमालाः ॥ * ॥ हृष्टेति दिव्यवस्त्रादिधारणं सूचयति । कौतुकेनेति तृतीयालुक्छांदसः । अतः सर्वत्रान्वेति ॥ ३९ ॥ अंकुरैर्दूर्वांकुरैः । विपरिणतस्य शत्रन्तविशेषोर्लिङन्तत्वेन विपरिणतस्य । अनुषंगः पृष्ठपाठत आनयनम् । उत्कलितानि प्रफुल्लानि ॥ * ॥ कीदृशस्सन् प्रविवेश तत्राह—निचीयेति । प्रीत्या हर्षेणोत्कलितैर्विकासितैर्लोचनैः कृत्वा । अत्र विपरिणतानुषंग इति ' पुरं प्रविशति प्रभौ ' इति पूर्वोक्तशतृप्रत्ययस्य सप्तम्याश्च लिङ्त्वप्रथमत्वेन विपरिणामात् । यद्वा—निचीयमान इति परेण युग्मकम् ॥ ४० ॥ यदुराजायोग्रसेनाय ॥ * ॥ वीराणां भूषणं गात्रालंकरणम्, तेषामतिबहुलतयानंतं मूल्येनाप्यनि

एवं सप्तदशकृत्वस्तावत्यक्षौहिणीबलः ॥ युयुधे मागधो राजा यदुभिः कृष्णपालितैः ॥ ४२ ॥ अक्षिण्वंस्तद्बलं सर्वं वृष्णयः कृष्णतेजसा ॥ हतेषु स्वेष्वनीकेषु त्यक्तोऽयादरिभिर्नृपः ॥ ४३ ॥ अष्टादशमसंग्रामे आगामिनि तदंतरा ॥ नारदप्रेषितो वीरो यवनः प्रत्यदृश्यत ॥ ४४ ॥ रुरोध मथुरामेत्य तिसृभिर्म्लेच्छकोटिभिः ॥ नृलोके चाप्रतिद्वंद्वो वृष्णीञ्छ्रुत्वात्मसंमितान् ॥ ४५ ॥ तं दृष्ट्वाऽचिंतयत्कृष्णः संकर्षणसहायवान् ॥ अहो यदूनां वृजिनं प्राप्तं ह्युभयतो महत् ॥ ४६ ॥

रणभूमिस्तत्रस्थं वित्तम् । वीराणां भूषणम् ॥ ४१ ॥ तावतीति च्छेदः । तावति पराजये वर्तमानेऽप्यक्षौहिण्यो बलं यस्य सः । सप्तदशकृत्वः सप्तदशवारान्युयुधे ॥ ४२॥ आक्षिण्वन् क्षयं निन्युः ॥ ४३ ॥ अष्टादशमेऽष्टादशे संग्रामे भाव्ये तन्मध्येऽकस्मात्कालयवनः प्राप्तः ॥ ४४ ॥ आत्मसंमितान्स्वतुल्यान् ॥ ४५ ॥ वृजिनं दुःखम् ।

रूप्यमित्यर्थः । आहृतं जनैरानायितम् । यदुराजाय स्वयमेव तथात्वेन स्थापितायोग्रसेनाय । प्रकर्षेण राजयोग्यादरपूर्वकमदिशदुपहृतवान् । यतः प्रभुः स्वयं तद्वैभवानपेक्षः, स्वमर्यादापालनपरश्चेत्यर्थः ॥ ४१ ॥ एवं प्रथमयुद्धवत् । तावति तत्प्रमाणकेऽर्थात्पराजये सति ॥ * ॥ एवमिति प्रतिवारं त्रयोविंशत्यक्षौहिण्यः, तादृशं युद्धम्, वनगमनागमश्च ज्ञेयः । यद्वा—तावतत्यित्र पुंवद्भावाभाव आर्षः । तावत्यस्त्रयोविंशतिसंख्या अक्षौहिण्यो बलं सैन्यं ताभिर्वा युद्धसामर्थ्यं यस्य सः । कृष्णपालितैरिति पूर्ववदक्षतत्वादि बोध्यते ॥ ४२ ॥ तद्बलं जरासंधबलम् । अनीकेषु सैन्येषु । अरिभिः कृष्णादिभिः ॥ * ॥ वृष्णय एव न तु पूर्ववत् कृष्णरामौ, तत्र सात्यक्यादीनां प्राधान्यं क्रमशो ज्ञेयम् । कृष्णतेजसा वह्निना ज्वालानामिव श्रीकृष्णेन समवाय एव तेषां तेजो व्यवर्द्धतेत्यभिप्रायेण, न तु तदभावापेक्षया "नृलोके चाप्रतिद्वंद्वो वृष्णीञ्छ्रुत्वात्मसंमितान्" इति वक्ष्यमाणात् । अत एवारिभिर्वृष्णिभिरेव त्यक्तः श्रीकृष्णाभिप्रायेणेति भावः । यद्वारिभिर्हतेषु पूर्ववच्छ्रीभगवता त्यक्तः सन् ॥ ४३ ॥ मङ्त्रार्षः ॥ * ॥ प्रत्यदृश्यत सहसैव माथुराणां दृष्टिविषयो बभूवातिशीघ्रं प्राप्त इत्यर्थः । नारदेन प्रेरितोऽत्र विशेषो विष्णुपुराणे—"गार्ग्यं गोष्ठे द्विजं श्यालः षंढ इत्युक्तवान्द्विज । यदूनां सन्निधौ सर्वे जहसुर्यादवास्ततः ॥ ततः कोपसमाविष्टो दक्षिणापथमेत्य सः । सुतमिच्छंस्तपस्तेपे यदुचक्रभयावहम् ॥ आराधयन्महादेवं सोयश्चूर्णमभक्षयत् । ददौ वरं च तुष्टोऽसौ वर्षे द्वादशमे हरः ॥ सभाजयामास च तं यवनेशोप्यनात्मजः । तद्योषित्संगमाच्चास्य पुत्रोऽभूदलिसंप्रभः ॥ तं कालयवनं नाम राष्ट्रे स्वे यवनेश्वरः । अभिषिच्य वनं यातो वज्राग्रकठिनोरसम् ॥ स च वीर्यबलोन्मत्तः पृथिव्यां बलिनो नृपान् । पप्रच्छ नारदश्चास्मै कथयामास यादवान् ॥" इति । 'प्रेषितः' इति पाठेऽपि स एवार्थः ॥ ४४ ॥ न प्रतिद्वन्द्वः प्रतियोद्धा यस्य स तथा ॥ * ॥ अप्रतिद्वन्द्वः प्रतियोधरहितः । श्रुत्वा श्रीनारदादेव ॥ ४५ ॥ तं यवनम् ॥ * ॥ 'संकर्षणसहायवान्' इति मथुरातो दूरगमने तस्य संप्रति ग्रहणार्थं तेन सहेत्यर्थः । मर्त्यानुविधित्वादेवेति भावः । अत एवाह—अहो इत्यादि । अहो खेदे । हि निश्चितम् ॥ ४६ ॥

यवनोऽयं निरुंधेऽस्मानद्य तावन्महाबलः ॥ मागधोऽप्यद्य वा श्वो वा परश्वो वाऽऽगमिष्यति ॥ ४७ ॥ आवयोर्युध्यतोरस्य यद्यागंता जरासुतः ॥ बंधून्वधिष्यत्यथवा नेष्यते स्वपुरं बली ॥ ४८ ॥ तस्मादद्य विधास्यामो दुर्गं द्विपददुर्गमम् ॥ तत्र ज्ञातीन्समाधाय यवनं घातयामहे ॥४९॥ इति संमंत्र्य भगवान्दुर्गं द्वादशयोजनम् ॥ अंतःसमुद्रे नगरं कृत्स्नाद्भुतमचीकरत् ॥ ५० ॥ दृश्यते यत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुणम् ॥ रथ्याचत्वरवीथीभिर्यथावास्तु विनिर्मितम् ॥ ५१ ॥

उभयतो यवनाज्जरासंधाच्च ॥ ४६ ॥ तदाह द्वयेन । निरुंधे निरुणद्धि ॥ ४७ ॥ अस्य अनेन ॥ ४८ ॥ ४९ ॥ समुद्रमध्ये दुर्गं तन्मध्ये नगरम् । कृत्स्नाद्भुतं सर्वाश्चर्यमयम् । अचीकरत्कारयामास ॥ ५० ॥ त्वष्टा विश्वकर्मा तदीयं शिल्पनैपुणं च क्रियाकौशलम् । तदाह सार्द्धैस्त्रिभिः । रथ्येति । रथ्या राजमार्गाः पुरतः वीथ्य उपमार्गाः पश्चिमतः उभयतोऽपि चत्वराण्यंगणानि तन्मध्ये कोष्ठास्ततोऽप्यंतः सुवर्णभवनानि तदुपरि स्फाटिकाट्टालिकास्तदुपरि हेमकुंभा इति बहुभूमिकम् । यथावास्तु वास्तु गृहादि

तद् वृजिनम् । तावदधुना । श्व आगामिदिने । परश्वस्ततः परदिने ॥ * ॥ नितरां रुंधे आवृणोति । यतो महाबलोऽतोऽपसर्तुमपि न शक्यत इति भावः ॥ ४७ ॥ "छंदसि बहुलम्" इति तृतीयार्थे षष्ठी । तदेवाह—अनेनेति ॥ * ॥ आवयोः सगणयोरिति शेषः । बंधून् अयोद्धृंस्तत्रत्यवृद्धबालादीनिति भावः । व्रजस्थगोपांश्च तेषामवध्यत्वमनुसंधाय नेष्यत इति ॥ ४८ ॥ यतो जरासन्ध आयास्यति तस्माद्धेतोः । दुर्गमं मनुष्यागम्यम् । तत्र दुर्गे । समाधाय स्थापयित्वा ॥ * ॥ अथैव विधास्यामः, बहुत्वं श्रीरामस्य महत्त्वापेक्षम् । सम्यक् स्थिरतयाधाय स्थापयित्वा । घातयामह इति अन्यकर्त्रपेक्षया, रुद्रवचनपालनार्थम् । अत्र हरिवंशे त्वियमपि भगवतो हेतूक्तिः—"इयं च माथुरी भूमिरत्यगम्या परस्य तु । वृद्धिश्चैव पराऽस्माकं बलतो मित्रतस्तथा ॥ कुमारकोट्यो याश्चेमाः पदातीनां गणाश्च ये । एषामपीह वसतां संमर्दमुपलक्षये ॥" इत्यादि । अत्रेदं विमृशामः—यादवावासांतःपुर्योग्यसमुद्रांतःस्थद्वादशयोजनात्मकपरागम्यद्वारकातो मथुराभूमेर्विस्तीर्णत्वान्नायं केवलयादवानधिकृत्य श्रीभगवतः परामर्शः, किन्तु निगूढोऽयमभिप्रायः—संप्रति यादवजातिकतया तदादिसाहाय्येन लीलांतरमारब्धाः स्मः । अतः श्रीगोपानां स्वस्मिन्नेव निश्चितसज्जातिभावानां नित्यमेव वर्द्धमानैर्यादवैर्भाविनी संकीर्णता न युक्ता । दुष्टोपद्रवाऽऽशंका च तेषामप्युपस्थिता स्यात् । श्रीमदुद्धवद्वारा मदीयतत्रत्यलीलास्फोरणेन विरहदुःखसमाधानप्रायं च कृतवानस्मि तेषाम् । अतो दुष्टान्प्रति तेष्वौदासीन्यव्यंजनाय यादवानां गोपालकैरनैक्यप्रदर्शनाय च मर्त्यानुविधस्य मम विदूरगमनमेव युक्तमिति ॥ ४९ ॥ इतीत्थम् ॥ * ॥ समुद्रस्यांतर्द्वादशयोजनं, बहिश्चाष्टादशयोजनमन्यत्र ज्ञेयम् । एवं त्रिंशद्योजनं श्रीद्वारकापुरं ख्यातम् । योजनञ्चोक्तम्—"अष्टभिर्यवमध्यैस्स्यादंगुलं द्वादशांगुलम् । तालं त्रितालको हस्तो हस्तौ द्वौ किष्कुरुच्यते ॥ किष्कुद्वयं धनुर्ज्ञेयं धनुषो हि सहस्रकम् । क्रोशः क्रोशौ तु गव्यूतिर्गव्यूती द्वे तु योजनम् ॥" इति । अचीकरत् विश्वकर्मणा कारितवान् आविर्भावयामास ॥ ५० ॥ यत्र नगरे । त्वष्टरि विश्वकर्मणि स्थितं त्वाष्ट्रम् । शिल्पनैपुणं शिल्पविद्यापटुत्वम् । रथ्या राजमार्गः, चत्वरमंगणम् 'चत्वरं स्थंडिलेंगणे' इति मेदिनी । वीथी "आपणः पण्यवीथी च द्वयं वीथीति शब्दितम्" इति शाश्वतः । आपणो हट्टशून्यविक्रयमार्गः, पण्यवीथी हट्टयुतविक्रयमार्ग इति भेदः । स्वामिचरणास्तु—पुरतः पूर्वभागे राजमार्गाः, पश्चिमतः पश्चाद्भागे उपमार्गाः, उभयतोपि पार्श्वद्वयेऽपि अंगणानि, तन्मध्येंगणयोर्मध्ये, ततोप्यंतः कोष्ठेषु मध्ये, सुवर्णरसलिप्तानि गृहाणि, तदुपरि स्वर्णगृहोपरि, तदुपरि स्फाटिकाट्टालिकोपरि स्वर्णकलशा इति बह्व्यो भूमिकारचनाविशेषा यत्र तत्तथेति । यथावास्त्विति वास्तुशास्त्रानुसारेण गृहरचनायुतम् । तथाहि—"द्वात्रिंशदष्टाधिकविंशतिश्च सिद्धौ नखैः भूमिपतेर्द्विजातेः । दशांशयुक्तान्यपि क्षत्रियस्य वैश्यस्य वस्वंगुल उज्झितानि ॥ शूद्रस्य

सुरद्रुमलतोद्यानविचित्रोपवनान्वितम् ॥ हेमशृंगैर्दिविस्पृग्भिः स्फाटिकाट्टालगोपुरैः ॥ ९२ ॥ रजताऽऽरकुटैः कोष्ठैर्हेमकुंभैरलंकृतैः ॥ रत्नकूटैर्गृहैर्है-
मैर्महामरकतस्थलैः ॥ ९३ ॥ वास्तोष्पतीनां च गृहैर्वलभीभिश्च निामतम् ॥ चातुर्वर्ण्यजनाकीर्णं यदुदेवगृहोल्लसत् ॥ ९४ ॥

निर्माणस्थानं तदनतिक्रम्य विनिर्मितम् ॥ ९१ ॥ सुराणां द्रुमा लताश्च येषु तान्युद्यानानि विचित्रोपवनानि च तैरन्वितम् । हेममयानि शृंगाणि येषु तैः । दिविस्पृग्भिरत्युच्चैः स्फाटिका अट्टाला उपरिभूमिका गोपुराणि द्वाराणि च तैर्निर्मितमित्युत्तरेणान्वयः ॥९२॥ रजतारकुटैः रजतं च आरकुटं च पीतलोहं ताभ्यां निर्मितैः कोष्ठैरश्वशालान्नशाला दिभिः । कथंभूतैः । हेमकुंभैरलंकृतैः तथा रत्नकूटैः पद्मरागादिशिखरैः । हैमैः सौवर्णैः । महामरकतमयानि स्थलानि येषु तैर्गृहैश्च ॥९३॥ किं च नगरगृहादौ वास्तोष्पतीनां

च स्वस्वचतुर्विभागयुक्तानि चेत्थं प्रभवन्ति भेदाः । कश्चिज्जनो भूपसमानधर्मो गृहं विदध्याद्विधिनाप्यनेन ॥ अष्टाधिकं हस्तशतं शतं वा यन्नेत्रनंदप्रमितं पृथुत्वे । वेदाष्टहस्तं रससप्तकं च दैर्घ्ये सपादानि भवन्ति भेदाः ॥'' इत्येवं गृहशुद्धिपूर्वं गृहाणि कुर्यात् । ''प्राच्यां दिशि स्नानगृहमाग्नेय्यां पचनालयम् । शयनं याम्यदिग्भागे नैर्ऋत्यां शस्त्रमंदिरम् ॥ प्रतीच्यां भोजनगृहं वायुभागेन्नसंग्रहम् । भांडारसदनं सौम्ये त्वैशान्यां देवतालयम् ॥ पूर्वस्यां श्रीगृहं कुर्याद्वायव्यां पशुमंदिरम् । इंद्राग्न्योर्मथनं मध्ये याम्याग्न्योर्घृतमंदिरम् ॥ यमराक्षसयोर्मध्ये पुरीषत्यागमंदिरम् । राक्षसांबुपयोर्मध्ये विद्याभ्यासस्य मंदिरम् ॥ तोयेशानिलयोर्मध्ये रोदनं मंदिरं स्मृतम् ॥ वायव्योत्तरयोर्मध्ये संभोगस्यैव मंदिरम् ॥ उत्तरैशानयोर्मध्ये त्वौषधागारमुच्यते । पुरंदरेशयोर्मध्ये सर्ववस्तुसुसंग्रहम् ॥ सदनं कारयेदेवं क्रमादुक्तानि षोडश ।'' इत्येवमुक्तप्रकारेण गृहादिरचनाढ्यमित्यर्थः ॥ * ॥ कृत्स्नाद्भुतत्वमेव दर्शयति—दृश्यत इति चतुष्केण । हि एव । विज्ञानं शिल्पधीः, शिल्पाभिज्ञतेत्यर्थः । तन्नैपुण्यं हस्तक्रियासौष्ठवं दृश्यते पराकाष्ठापन्नतया विभाव्यते, इदानीं भगवत्प्रसादेन परमशक्तिलाभादिति भावः ॥ ॥ ९१ ॥ सुरद्रुमाः—संतानकल्पवृक्षहारिचंदनमंदारपारिजाताख्याः ''संतानः कल्पवृक्षश्च पुंसि वा हरिचंदनम् । पंचैते देवतरवो मंदारः पारिजातकः ॥'' इत्यमरः । यद्वा—आम्रजंबूकदंबादयो देवतरवः ''आम्रो जंबूः कदंबश्च बोधिः पालाशबिल्वकौ । प्लक्षोदुंबरमाधूकौ बहुपाप्पिचुमंदकौ । एते चान्ये च बहवो देववृक्षाः स्मृता बुधैः ॥'' इति । तथा सुरलताः—स्वर्णवल्लीमुक्तावल्लीविद्रुमवल्यादयो विष्णुक्रांतादयो वा । ''मुक्तावल्ली स्वर्णवल्ली तथा कल्पलतादयः । देववल्ल्यो बुधैः प्रोक्ता विष्णुकांतादयस्तथा ॥'' इति संहितोक्तेश्च ॥ * ॥ उद्यानोपवनयोः पुष्पफलप्रधानत्वेन भेदः । यदुदेवा यदुश्रेष्ठाः श्रीकृष्णबलदेववसुदेवोग्रसेनादयः । अत्रेवं वासस्थानं ज्ञेयम्—परितस्तावत्समुद्रः, पुरतः संक्रमार्थमालिः, समुद्राभ्यंतरे तीरे सुखविहारार्थं परितश्चत्वराणि, तदन्तर्दुर्गप्राचीरालिः, तत्कोणेषु तन्मध्येषु च रत्नकूटा यदुपरि हेमकूटाः, तदुपरि हेमकुंताः पताकाश्च ज्ञेयाः । दुर्गचतुर्दिक्षु गोपुराद्बहिरवलोकाय तदुपरि स्वच्छस्फाटिकाट्टालिकाः, दुर्गान्तःपुरश्चत्वराणि, तदंतरुद्यानोपवनानि, तदुपलक्षितकूपादीनि च, तदन्तर्वास्तोष्पतिगृहाः । तदन्तर्यथाभ्यंतरमश्वान्नगृहादयः, कोष्ठाः, तदन्तः पुरोभागे ब्राह्मणगृहाः, पश्चाच्छूद्रगृहाः, वामे च वैश्याः, दक्षिणे क्षत्रियगृहाः, मध्ये सुधर्मामग्रे विधाय श्रीकृष्णबलदेववसुदेवोग्रसेनगृहाः, गृहाणां मरकतस्थली, उपरि वलभ्यो हेमकुन्तादयश्च यथाशोभं सुधर्मामारभ्य यथा वीथय उपमार्गाश्च तत इति । पारिजातप्रस्थापनं तु तत्त्याग एव । यद्वा—अग्रे स्वयं भगवदानीतपारिजातादस्य न्यूनत्वेन भेदः कल्प्यः, सुरद्रुमलतोद्यानेति वर्णितत्वात् । सुधर्मायास्त्वेकत्वेन नान्या गतिरितींद्रस्तथा नाकरोदिति ज्ञेयम् । हरेर्हरये, अन्यथा प्रसह्य स्वयमेव हरेदिति विभाव्यैवेति भावः । ( इति सार्द्धत्रयाऽन्वयः ) ॥ ९२ ॥ '' कोष्ठः कुसूले चात्मीये मध्ये कुक्षौ गृहस्य च । संग्रहस्थापनस्थाने तृणागारादिकेऽपि च ॥ '' इति धरणिः ॥ * ॥ ० ॥ ९३ ॥ न केवलं मनुष्यावासशोभितं तदित्याह—किञ्चेति । ''वास्तोष्पतिर्बलारातौ देवमात्रे धराधरे । मुख्ये गेहे'' इति निरुक्तिः । '' शुद्धान्ते वलभीचंद्रशाले सौधोर्द्ध्ववेश्मनि '' इति रभसः ।

सुधर्मां पारिजातं च महेन्द्रः प्राहिणोद्धरेः॥ यत्र चावास्थता मर्त्या मर्त्यधर्मैर्न युंजते ॥ ५५ ॥ श्यामैककर्णान्वरुणो हयाञ्छुक्लान्मनोजवान् ॥ अष्टौ निधिपतिः कोशाँल्लोकपालो निजोदयान् ॥ ५६ ॥ यद्यद्भगवता दत्तमाधिपत्यं स्वसिद्धये ॥ सर्वं प्रत्यर्पयामासुर्हरौ भूमिगते नृप ॥ ५७ ॥ तत्र योगप्रभावेण नीत्वा सर्वजनं हरिः॥ प्रजापालेन रामेण कृष्णः समनुमंत्रितः ॥ निर्जगाम पुरद्वारात्पद्ममाली निरायुधः ॥ ५८॥ इति श्रीमद्भा० म० द० उ० दुर्गनिवेशनं नाम पंचाशत्तमोध्यायः ॥ ५० ॥

देवानां च गृहैर्वलभीभिश्चंद्रशालिकाभिश्च निर्मितम् । यदुदेवगृहैराजगृहैरुल्लसच्छोभमानम् ॥ ५४ ॥ पारिजातं च प्राहिणोत्प्रस्थापयामासेति शुकपरीक्षित्संवादात्पूर्वभावित्वा द्भूतनिर्देशः । मर्त्यधर्मैः क्षुत्पिपासादिषडूर्मिभिः ॥५५॥ निधिपतिः कुबेरः अष्टौ कोशान्निधीन् । " पद्मश्चैव महापद्मो कुंदकूर्मौ तथौदकः ॥ नीलो मुकुंदः शंखश्च निधयोऽष्टौ प्रकीर्तिताः " इति प्रसिद्धान् । निजोदयान्निजविभूतीः ॥ ५६ ॥ अन्ये च सिद्धादयो भगवता स्वाधिकारसिद्धये यद्यदाधिपत्यं दत्तमासीत्तत्सर्वं प्रत्यर्पयामासुरिति ॥ ५७ ॥ यथा कालयवनो न वेत्ति न चासौ जनस्तथा योगप्रभावेण नीत्वा त्वमत्र स्थित्वा प्रजाः पालयाहं पलायिष्य इति समनुमंत्रितः कृतानुमंत्र इत्यर्थः ॥५८॥ इति श्रीमद्भा० म० दशमस्कंधोत्तरार्धे भावार्थदीपिकायां श्री० टीकायां पंचाशत्तमोऽध्यायः ॥ ५० ॥

यदुदेवः श्रीकृष्ण उग्रसेनो वा ॥*॥०॥५४॥ ' स्यात्सुधर्मा देवसभा ' इत्यमरः । पारिजातं वांछितदं वृक्षम् । यत्र सुधर्मायाम् । सुधर्मां पारिजातं च पराजितः सन्देवराजः श्रीकृष्णाय ददौ न तु प्रत्येति । "अधिक्र मंत्यंघ्रिभिराहृतां बलात्सभां सुधर्मां सुरसत्तमोचिताम् । निर्जित्य संख्ये त्रिदशांस्तदाशिषो हरन्ति " इत्युक्तेः, " पारिजातं तदुत्पाट्य आरोप्य च गरुत्मति । सेंद्रान्देवान्विनिर्जित्य " इति वक्ष्यमाणत्वाच्च । अत एव प्राहिणोदित्युक्तं न तु समर्पयामासेति ॥ * ॥ ० ॥ ५५ ॥ हयान् सहस्रसंख्यान् " ददौ सहस्रसंख्यातानश्वान्देवाय तोयराट् " इति पुराणांतरात् । औदकः कुंदः खर्वः, यद्वा—तन्नामैव । क्वचित्तु नव निधयोपि— "महापद्मश्च पद्मश्च शंखो मकरकच्छपौ । मुकुंदकुंदनीलाश्च खर्वश्च निधयो नव ॥" इति शब्दार्णवात् ॥ * ॥ ० ॥ ५६ ॥ सिद्धा देवविशेषाः, आदिना गंधर्वकिंपुरुषादयश्च । आधिपत्यमधिपतित्वापादकं गायना वैश्वर्यम् । प्रत्यर्पयामासुर्निवेदयामासुः, गायनाद्यैस्तोषयामासुरिति भावः ॥ * ॥ हरौ क्रीडार्थं निजाशेषविभूतिसमाहरणकौतुकिनि भगवति, यतः भूमिगते तादृशविनोदार्थमेव पृथिव्यामवतीर्णे । एवं परमकौतुकेन संबोधनम्—नृपेति । यथा भवादृशां नृपाणामपि विभूतयो विनोदार्था एव तथा तस्यापि परमनृपतेः परमविभूतयो विनोदायैवेति संबुद्ध्यभिप्रायः । विशेषस्तु हरिवंशे दृश्यः ॥ ५७ ॥ तत्र नगरे । नीत्वा प्रापय्य । यद्वा— योगस्य प्रभावः सामर्थ्यं मथुरास्थिताखिलनिजनिजपदार्थराशेर्द्वारकायां भवनं तेनेत्यर्थः । अत्र मथुरायाम् । इत्यर्थ इति—उभयोः पलायने प्रजास्त्रस्ता भविष्यंतीति भावः । पुरद्वारान्मथुराद्वारतः ॥ * ॥ योगोऽचिंत्यैश्वर्यम्, तस्य प्रभावेण माहात्म्येन । तथा च पाद्मोत्तरखण्डे—" सुषुप्तान्मथुरायां तु पौरांस्तत्र जनार्दनः । उद्धृत्य सहसा रात्रौ द्वारकायां न्यवेशयत् ॥ प्रबुद्धास्ते जनाः सर्वे पुत्रदारसमन्विताः । हैमहर्म्यतलाविष्टा विस्मयं परमं ययुः ॥" इति । हरिरिति तथा नयनात् । त्वमत्र स्थित्वा प्रजाः पालयेति तैर्यद्व्याख्यातं तत्तु द्वारकानीतप्रजाभ्योऽवशिष्टबहिरंगप्रजागतमेव ज्ञेयम्, निजपार्श्वरक्षितसैन्यगतमेव वा । यद्वा—अस्य यादवाऽवध्यत्वान्मा शंकां कृथाः, त्वमत्र स्थित्वा पुरं पालय मुचकुंदेनैनमहं घातयिष्यामीत्येव मंत्रो ज्ञेयः । सम्यगनुरूपश्च मन्त्रः समनुमन्त्रः स जातोऽस्येति तारकादित्वादितच् । पद्ममालीति नारदोक्तलक्षणापेक्षया । निरायुध इति

श्रीशुक उवाच ॥ तं विलोक्य विनिष्क्रांतमुज्जिहानमिवोडुपम् ॥ दर्शनीयतमं श्यामं पीतकौशेयवाससम् ॥ १ ॥ श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकंधरम् ॥ पृथुदीर्घचतुर्बाहुं नवकंजारुणेक्षणम् ॥ २ ॥ नित्यप्रमुदितं श्रीमत्सुकपोलं शुचिस्मितम् ॥ मुखारविंदं बिभ्राणं स्फुरन्मकरकुण्डलम् ॥ ॥ ३ ॥ वासुदेवो ह्ययमिति पुमाञ्श्रीवत्सलाञ्छनः ॥ चतुर्भुजोऽरविंदाक्षो वनमाल्यतिसुंदरः ॥ ४ ॥ लक्षणैर्नारदप्रोक्तैर्नान्यो भवितुमर्हति ॥ निरायुधश्चलन्पद्भ्यां योत्स्येऽनेन निरायुधः ॥ ५ ॥ इति निश्चित्य यवनः प्राद्रवंतं पराङ्मुखम् ॥ अन्वधावज्जिघृक्षुस्तं दुरापमपि योगिनाम् ॥ ६ ॥

एकपंचाशत्तमेऽह्न्मुचुकुंददृशा हरिः ॥ यवनं मुचुकुंदेन स्तुतः सन्नन्वकंपत ॥ १ ॥ यवनेंद्रसुतात्कालयवनाद्यदुभीषणात् ॥ हरिर्हरगिरः स्वैरं पालनायापलायत ॥ २ ॥ यदा गार्ग्यः श्यालेन षंढ इत्युक्तस्तदा यादवैरुपहसिते क्रुद्धोऽसौ श्रीमहेशं प्रसाद्य यदुभीषणं पुत्रं वरं लब्धवान् । ततश्च यवनेंद्रेणापुत्रेण स्वक्षेत्रे पुत्रोत्पादनाय प्रार्थितो गार्ग्यः कालयवनमजीजनदिति पुराणप्रसिद्धम् । पुरद्वारा न्निष्क्रांतम् । उज्जिहानमुद्गच्छंतम् ॥ १ ॥ २ ॥ नित्यप्रमुदितमित्यादि मुखारविंदविशेषणम् ॥ ३ ॥ ४ ॥ नारदोक्तैरेतैर्लक्षणैरयं पुमान्वासुदेव एव नान्यो भवितुमर्हति । अयं च निरायुधोऽतोऽनेन पद्भ्यामेव चलन्निरायुधोऽहं योत्स्यामीति निश्चित्य तं पराङ्मुखं प्राद्रवंतमन्वधावदित्यन्वयः ॥ ५ ॥ ६ ॥

पलायनमननार्थम् ॥ ९८ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे उत्तरार्द्धे पञ्चाशत्तमोऽध्यायः ॥५०॥ मुचकुंदो राजा, तद्दृशा दृष्टया ( १ ) । यदून्भीषयते भययुक्तान्करोतीति तथा तस्मात् । हरगिरः शिववाचः ( २ ) । पुराणे विष्णुपुराणे प्रसिद्धम् । तथाहि—“ गार्ग्यं गोष्ठयां द्विजं श्यालः षंढ इत्युक्तवान्यदा । यदूनां सन्निधौ सर्वे जहसुर्यादवास्तदा ॥ सुतमिच्छंस्तपस्तेपे यदुचक्रभयावहम् । आराधयन्महादेवं सोऽयश्चूर्णमभक्षयत् ॥ ददौ वरं तु संतुष्टो वर्षे हि द्वादशे शिवः । संयोजयामास च तं यवनेशो ह्यनात्मजः ॥ तद्योषित्संगमाच्चास्य पुत्रोऽभूदलिसन्निभः । तं कालयवनं नाम राजानं प्राहुरुत्तमाः ॥” इति । गार्ग्यः शैशिरायणः । श्यालोऽपि यादवपुरोहितः, स च हस्तेन गार्ग्यलिंगं चालयन्यदोत्थानं न ददर्श तदा ‘ गार्ग्यः षंढः ’ इति प्रोवाचेत्यर्थः । तं कृष्णम् । उज्जिहीत इत्युज्जिहानस्तम् ‘ ओ—हाङ्—गतौ ’ शानच् ॥ * ॥ तमिति षट्कम् । विनिष्क्रांतमित्यादि—विशब्देन सम्यङ्निष्क्रम एव तस्य निश्चयोऽभूदिति ध्वनितम् । उज्जिहानमित्यादिना श्रीकृष्णमाधुर्यवर्णनं स्वप्रेमतस्तत्स्वभाववर्णनापेक्षयैव न तु यवनस्यानुभवापेक्षया, तत्र सति वैराऽसंभवात् “ नाहं प्रकाशः सर्वस्य योगमायासमावृतः ” इति श्रीगीतोक्तेश्च । यथा तिक्तादिरुचिस्वभावाः खंडादिमाधुर्यं नानुमोदन्ते इति तद्ग्रहणाभास एव तेषां, तद्वत्तदेवमहो पश्यंतोपि न पश्यंतीति भावः ॥ १ ॥ “ आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् ” इत्यमरः । कौस्तुभेनामुक्ता पिनद्धा कंधरा यस्य तम् ॥ * ॥ पृथुदीर्घचतुर्बाहुमिति श्रीनारदोपदेशानुसारेणोदयात्, तेन तथोपदेशश्च विलक्षणलिङ्गेन शीघ्रमसौ निश्चिनोत्विति । नवकंज इवारुणे ईक्षणे नेत्रे यस्य तम् ‘ अव्यक्तरागस्त्वरुणः ’ इत्यमरः ॥ २ ॥ सच्चिदानंदस्वरूपत्वान्नित्यप्रमुदितमिति ॥ * ॥ श्रीमत्कांतियुक्तम् । प्रशंसायां मतुप् । सुकपोलमित्यवयवसौष्ठवोपलक्षणम् । शुचिस्मितमिति विलासस्य स्फुरदित्यादिवेषस्य ॥ ३ ॥ अय प्रत्यक्षदृश्यः । द्वयोरन्वयः ॥ * ॥ षट्केऽपि वासुदेव इति सार्धमवांतरमन्वितम् । इत्येतैर्लक्षणैर्वासुदेव एवायमिति भवितुमर्हति नान्य इति संबन्धः । इति शब्दो वासुदेवपरामर्शकः ॥ ४ ॥ लक्षणैश्चिह्नैः ‘ चिह्नं लक्ष्म च लक्षणम् ’ इत्यमरः । यतोऽयं निरायुधोऽतो हेतोः ॥ * ॥ ० ॥ ५ ॥ इतीत्थम् । पराङ्मुखं पृष्ठं दर्शयन्तम् ।

कृष्णकृष्णाप्रमेयात्मन्प्रपन्नभयभंजन ॥ वयं त्वां शरण यामो भवभीताः पृथग्धियः ॥ २५ ॥ लाको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं त्वदुदिते भवदर्चने स्वे ॥ यस्तावदस्य बलवानिह जीविताशां सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ॥ २६ ॥ लोके भवाञ्जगदिनः कलयावतीर्णः सद्रक्षणाय खलनिग्रहणाय चान्यः ॥ कश्चित्त्वदीयमतियाति निदेशमीश किं वा जनः स्वकृतमृच्छति तन्न विद्मः ॥ २७ ॥

दुर्गे रुद्धा आसन् । तेषां च दुःखमावेदयदित्यन्वयः ॥ २४ ॥ कृष्णकृष्णेति षट्च्छ्लोकी राज्ञां विज्ञप्तिस्तत्र प्रथमेन शरणाश्रयणं त्रिभिर्भयानुवादो द्वाभ्यां प्रार्थन मिति ॥ २५ ॥ पृथग्दर्शिनो लोकस्य भवभयं विवृण्वंतो नमंति । लोक इति । विकर्म निषिद्धं काम्यं च तस्मिन्नितरां रतः । स्वे कुशले धर्मे । भवतोऽर्चने त्वयोदिते पंचरात्रे । सामान्यतश्च गीतासु । "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥ यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम् " इति । प्रमत्तोऽनवहितो यावदयं लोक स्तावदेवास्य लोकस्य यः सद्यो जीविताशां छिनत्ति तस्मै तुभ्यमनिमिषाय कालात्मने नम इति ॥ २६ ॥ सेयं लोकस्य गतिर्वयं तु त्वद्भक्ता अतोऽस्माकं कुत एतद्दुःख मापन्नमित्याश्चर्येणाहुः । लोक इति । भो ईश । जगत इन ईश्वरः त्वयि सद्रक्षणार्थमवतीर्णेऽपि चेदस्माकं दुःखं स्यात्तर्हि किमन्यः कश्चिज्जरासंधादिस्त्वदाज्ञामपि

धिपैः । महादेवं महात्मानमुमापतिमरिंदम ॥ " इति प्रथमस्कंधेऽपि राजानं प्रति द्वारकातः समागतेनार्जुनेनाप्युक्तम्—" तेनाहृताः प्रमथनाथमखाय भूपाः " इति लक्षसंख्यराजबलिभिर्महादेवयजने तस्य कामनेति कथा भारतादिप्रसिद्धास्तीति ॥ २४ ॥ षण्णां श्लोकानां समाहारः षट्च्छ्लोकी । विज्ञप्तिः प्रार्थना । तत्र षट्सु । तोषिण्यान्तु—किं तेषां वचनं तत्राह—कृष्णेति षड्भिः । हे स्वयंभगवन् । वीप्सादैन्यात् । अप्रमेयात्मन् सर्वातीतवैभव । एवं सर्वोत्तमत्वेपि प्रपन्नेति । अतस्त्वामेव शरणं यामः । किमर्थम्—भवात्संसारदुःखाद्भीताः भवभयत्राणार्थमित्यर्थः । तद्भयं कुतः—पृथग्धियः त्वत्तः पृथग्बुद्धयस्त्वद्भक्तिरहितत्वादित्यर्थः । विश्वनाथस्तु—तेषां विज्ञप्तिमाह षड्भिः । ते प्रथमं शरणमाश्रयन्ते, कृष्णकृष्णेत्यादरे द्वित्वम् । अप्रमेयात्मन्निति त्वत्स्वरूपमज्ञात्वापि प्रपन्नेति । प्रपन्नपालकत्वमेव ज्ञात्वा शरणं यामः । पृथग्धियः त्वद्भक्तौ प्रार्थनां परित्यज्य त्वत्तः पृथग्भूते स्वीयदुःखत्राण एव धीर्येषां ते ॥ २५ ॥ पृथग्दर्शिनो यथार्थज्ञानशून्याः । तस्मिन्निषिद्धे काम्ये च । तोषिणी—नन्वेतावन्तं कालं न भजध्वं कथं चाधुना जातैतादृशबुद्धयो जाताः स्थ तत्राहुः—लोक इति । अस्मद्विध इत्यर्थः । कुशल इति स्वार्थप्रदत्वं सर्वानर्थहरत्वं च । स्व इति सार्ववर्णिकस्वधर्मत्वम् । त्वदुचित इति अन्योदितधर्मांतरातिक्रमित्वम्, त्वदर्चन इति त्वदुदितधर्मांतरातिक्रमित्वं सूचितम् । यथैवोदितञ्च—" सर्वगुह्यतमं भूयः शृणु मे परमं वचः । इष्टोऽसि मे दृढम् " इति । 'ततो वक्ष्यामि ते हितम्' । " मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु " इत्यादि, तथापि तस्मिन्प्रमत्तः । जीवितस्याशां शरणस्यानुसंधाननिरसनेन विकर्मतयोक्ततद्विरुद्धकुकर्मणि प्रवर्तनीं कुशले च प्रमादकारिणीं दृढां वाञ्छां नासौ कथंचित्परिहर्तुं शक्येतेत्याहुः—बलवानिति । अनिमिषाय चेत्यनेन तस्याप्रमत्तता, तस्मै नम इति तद्भयेनैवाधुना त्वद्भजनोद्यमात् । यथोक्तम्—'मर्त्यो मृत्युव्यालभीतः पलायन्' इति । अत्र विश्वनाथः—भवभीतत्वं विवृण्वन्तो नमंति—लोकोऽस्मद्विधः कुशले कर्मणि प्रमत्तः किं पुण्यकर्माणि न त्वदुदिते किं ज्ञानयोगसाधकशमदमानियमादिकर्मणि न भवदर्चने त्वद्भजने । स्वे इति तदेव लोकस्य वास्तवं स्वं धनं भवदुःखनिवर्तकं त्वत्प्रेमसुखभोगप्रदायकं चेति भावः । किन्तु विकर्मणि स्त्रीपुत्रादिवैषयिकसुखसाधके कर्मणि नितरां रतः । किञ्च—तत्सुखमपि दुर्भगस्यास्य न सिध्यतीत्याहुः—यस्तावदिति । अनिमिषाय कालाय त्वच्छक्तिरूपाय नम इति । त्वदभक्तेन तेन तथाकरणं समुचितमेवेति भावः ॥ २६ ॥ अहो त्वद्भक्तानामीदृशी गतिरित्युपालभंत इवाहुः—

स्वप्नायितं नृपसुखं परतंत्रमीश शश्वद्भयेन मृतकेन धुरं वहामः ॥ हित्वा तदात्मनि सुखं त्वदनीहलभ्यं क्लिश्यामहेऽतिकृपणास्तव माययेह॥२८॥तन्नो भवान्प्रणतशोकहरांघ्रियुग्मो बद्धान्वियुंक्ष्व मगधाह्वयकर्मपाशात् ॥ यो भूभुजोऽयुतमतंगजवीर्यमेको बिभ्रद्रुरोध भवने मृगराडिवाऽवीः ॥ २९ ॥

लंघयति । किंच त्वया रक्ष्यमाणोऽपि जनः स्वकर्मजं दुःखं प्राप्नोत्येवेति न विघ्नः न चैतदुभयमपि युक्तमिति भावः ॥ २७ ॥ किं दुःखं तदाहुः । स्वप्नायितमिति । स्वप्नवज्ज्ञातं नृपसुखं नृपोचितं सुखम् । यतः । परतंत्रं विषयसाध्यम् । किंच संप्रति शश्वद्भयं यस्मिंस्तेन मृतकतुल्येन शरीरेण धुरं पुत्रदारादिचिंतां केवलं वहामः । अहो कष्टं नः ये वयमितः पूर्वमेव निष्कामाः संतस्त्वां नाश्रिता इत्याहुः । हित्वेति । त्वत् त्वत्तो यदनीहैर्निष्कामैर्लभ्यमात्मनि स्वतः सिद्धं सुखं तद्धित्वा क्लिश्याम इति ॥ २८ ॥ त्वन्मायाकृतं कर्मबंधं त्वमेव निवर्तयेति प्रार्थयंते । तन्न इति । वियुंक्ष्व मोचय । मागधो जरासंधस्तत्संज्ञकात्कर्मपाशात् । भवद्भिरेव विक्रम्य ततो निर्गम्य

सेयमित्यादिना । किमत्र संशये वितर्के वा । तदुभयं त्वदाज्ञालंघनम्, त्वद्रक्ष्यमाणस्य दुःखं चेत्युभयम् । किञ्च लोके भवानिति जगदिनः साक्षात्सर्वेश्वर एव कलयांशेन श्रीबलदेवेन अन्यो निगृह्यमाणः खलः किं कस्मादन्यस्मात्कारणादित्यर्थः । हे ईशेति । जरासंधादेरपि त्वदधीनत्वं तज्जनस्यापि कर्माधीनत्वं सूचितम्, तद्द्वयं न विघ्नः । अन्यत्तैः । तत्र चेदस्माकमित्यस्य स्थाने जनः स्वकर्मजमिति पाठोऽसभ्यः । तथा सद्रक्षणार्थमित्यत्र चकारपातश्च ज्ञेयः । विश्वनाथस्तु—किञ्च साक्षादेव त्वां त्वद्भक्तांश्च यः कश्चिद्द्वेष्टि स कथं कालसंहृतो न भवतीत्यस्माकं महान्विस्मय इत्याहुः—लोक इति । जगदिनः जगदीश्वरः । ‘ कलनाकालयोः कला’ इति नानार्थकोशात् । कलया कालेनावतीर्णः । यद्वा—बलदेवेन सह अन्यः खलः कश्चिज्जरासंधादिस्त्वदीयं निदेशमतिक्रामति । साधून्द्वेष्टि खलान्पालयतीत्यर्थः । तत्र खलनिग्राहके त्वय्यवतीर्णेऽपि यत्खलो वर्द्धते तत्किं स खलः स्वकृतमृच्छति स्वप्रारब्धकर्मफलं सुखं भुंक्ते । तथा सद्रक्षके त्वय्यवतीर्णेऽपि साधुजनस्तत्पीडितो यद्भवति तत्किं सोऽपि स्वकर्मफलं दुःखं भुंक्ते इदं न विद्मो निश्चेतुं न शक्नुमः, त्वत्तोऽपि कर्मयोगस्य जडस्य प्राबल्यमनुचितमिति भावः ॥ २७ ॥ तद्दुःखम् । ननु राज्यसुखं तु मरणलभ्यात्स्वर्गसुखादप्यधिकमिति चेदाहुः—स्वप्नायितमिति । विषयसाध्यमपि नानंदजनकमित्याह—किं चेति । इतो जरासंधबंधात् । तोषिणी—तथाप्यद्यापि वयं न तव मायया सम्यक्त्यक्ता इत्याहुः—स्वप्नेति । अन्यत्तैः । यद्वा—तव माययाऽतिकृपयाऽतिशयेन हतबुद्धयः सन्तः क्लिश्यामहे । तत्र हेतुः—मृतकेन स्वतोऽचेतनत्वेन तद्रूपेण देहेन या धूस्तां मृतकरूपं भारं वहाम इत्यर्थः । न केवलमृतकभारवाहित्वमेव क्लेशाय तत्रान्यच्चेत्याहुः—शश्वदिति । पुनःपुनर्भूतप्रेतादित इव रोगकालादितो भयं यस्मिंस्तेन । किमर्थं वहथ तत्राहुः—नृपस्य सुखं यस्मिंस्तद्यथा स्यात्तत्प्राप्त्यर्थमधुनापि तां न मुंचाम इत्यर्थः । तदेतदतीव गर्हितमिति भावः।न च तत्सुखे वास्तवत्वमपि यतः स्वप्नायितम् । न चैतावत्त्वमेव दोषायापि तु दुःखमयत्वमपीत्याहुः—परतंत्रं राज्याद्यनेकांगाधीनतामयम् । भवत्वपि तन्नाम यद्यन्यन्महासुखं स्वतः सिद्धं न स्यादित्याहुः—तत्सकलनिगमप्रसिद्धमनिर्वचनीयं परमपुरुषार्थरूपं हित्वेति । न चेदं वापरतन्त्रं किन्तु स्वत एवात्मनि प्रकाशमानत्वात्त्वत्तः सकाशादनीहैरेव भक्तैर्लभ्यमिति । अत्र विश्वनाथः—ननु तर्हि यूयं के मद्भक्ता मद्विद्वेषिणो वा तत्र न वयमुभये किन्तु सांसारिका जीवास्त्वां सांप्रतं प्रपन्ना इत्याहुः—स्वप्नेति । स्वप्नायितमचिरस्थायित्वात्स्वप्नतुल्यममात्यसुहृत्सेनाद्यधीनत्वात्परतंत्रं नृपसुखं नृपा वयमित्यभिमानमात्रेणैव सुखं वस्तुतस्तु धुरं संधिविग्रहाद्यायासबाहुल्यप्रदत्वाद्भारमेव शश्वद्भयं यस्मिंस्तेन मृतकतुल्येन शरीरेण वहामः । अहो कष्टं नः ये वयमितः पूर्वमेव निष्कामाः संतस्त्वां नाश्रिता इत्याहुः—तत् सकलसज्जनैः स्तुतत्वात्प्रसिद्धं न तु नृपसुखमिव तैर्निन्दितम् । आत्मनि स्वतः सिद्धमेव न तु परतंत्रं त्वत् त्वत्तः सकाशादेव न तु दुर्विषयेभ्यो जातम् । अनीहैर्निष्किंचनभक्तैर्लभ्यं न तु सकामैर्लब्धुं शक्यं सुखं हित्वा क्लिश्यामः ॥ २८ ॥ किमिदानीमावश्यकमित्याह—त्वन्मायेति । विक्रम्य पुरुषार्थं कृत्वा । ततः पाशात् । अतोऽत्र । यो जरासंधः । मतंगजानां गजानाम् । वीर्यं पराक्रमम् । ‘ अविर्नाथे रवौ मेषे ’ इति मेदिनी । तोषिणी—अतोऽस्माकं परमकृप

यो वै त्वया द्विनवकृत्व उदात्तचक्र भग्नो मृधे खलु भवंतमनंतवीर्यम् ॥ जित्वा नृलोकनिरतं सकृदूढदर्पो युष्मत्प्रजा रुजति नोऽजित तद्विधेहि॥३०॥ दूत उवाच ॥ इति मागधसंरुद्धा भवद्दर्शनकांक्षिणः ॥ प्रपन्नाः पादमूलं ते दीनानां शं विधीयताम् ॥ ३१ ॥ श्रीशुक उवाच ॥ राजदूते ब्रुवत्येवं देवर्षिः परमद्युतिः ॥ बिभ्रत्पिंगजटाभारं प्रादुरासीद्यथा रविः ॥ ३२ ॥ तं दृष्ट्वा भगवान्कृष्णः सर्वलोकेश्वरेश्वरः ॥ ववंद उत्थितः शीर्ष्णा ससभ्यः सानुगो मुदा ॥ ३३ ॥ सभाजयित्वा विधिवत्कृतासनपरिग्रहम् ॥ बभाषे सूनृतैर्वाक्यैः श्रद्धया तर्पयन्मुनिम् ॥ ३४ ॥ अपिस्विदद्य लोकानां त्रयाणामकुतोभयम् ॥ ननु भूयान्भगवतो लोकान्पर्यटतो गुणः ॥ ३५ ॥ न हि तेऽविदितं किंचिल्लोकेष्वीश्वरकर्तृषु ॥ अथ पृच्छामहे युष्मान्पांडवानां चिकीर्षितम् ॥३६॥ नारद उवाच ॥ दृष्टा मया ते बहुशो दुरत्यया माया विभो विश्वसृजश्च मायिनः ॥ भूतेषु भूमंश्चरतः स्वशक्तिभिर्वह्नेरिव च्छन्नरुचो न मेऽद्भुतम् ॥ ३७ ॥

तामिति चेदत आहुः। य इति। एक एवायुतमतंगजानां वीर्यं बिभ्रत्सन्स्वभवने भूभुजोऽस्मान् रुरोध। सिंहो मेषीरिव ॥ २९ ॥ किंच युष्मदीया वयमित्यस्मानधिकं बाधत इत्याहुः। यो वा इति। हे उदात्तचक्र उद्यतसुदर्शन यो वै द्विनवकृत्वोऽष्टादशवारांस्त्वया सह मृधे वर्तमाने तत्र सप्तदशकृत्वस्त्वया खलु भग्नः पराजितः पश्चादनंतवीर्यमपि नृलोके निरतं नरशरीरविनोदं भवंतं सकृज्जित्वोढदर्पः प्राप्तगर्वो युष्मत्प्रजा नो रुजति पीडयति तत्तत्र यद्युक्तं तद्विधेहीत्यर्थः ॥ ३० ॥ दूत आह। इतीति ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ भूयान्महान्गुणो लाभोऽयमस्माकं यत्सर्वलोकवृत्तांतज्ञानमिति ॥३५॥ ईश्वरः कर्ता येषां तेषु ॥३६॥ एवमविदुषेव सर्वज्ञेन

णानामनीहत्वाभावादात्मनि तन्न सिद्ध्येदिति स्वयमेव स्वं प्रकटयितुं तद्व्याघातकं बंधं विमोचयेत्याहुः—तन्न इति। तत्तस्मात्तन्मायया कृतकार्पण्याद्धेतोस्तद्द्रष्ट्रेत्यर्थः। नोस्मांस्तदेव विमोचय यतो भवान् प्रणतानां शोकहरमंघ्रियुग्मं यस्य तथाभूतः। यद्वाऽकारप्रश्लेषेण न विद्यते भवः श्रेयो येषु तान्परमार्तानित्यर्थः। मागधेति नाममात्रेणैव जरासंधस्तत्त्वतस्त्वस्माकं कर्मपाश एवायं मूर्तिमांस्तस्मादित्यर्थः। अन्यत्तैः। यद्वा—अन्यथा तस्येदृशी शक्तिर्न स्यादित्याशयेनाहुः—य इति। अत्र विश्वनाथः—तस्मात्त्वन्मायाकृतं कर्मबंधं त्वमेव निवर्तयेति प्रार्थयन्ते—तन्न इति स्वामिवत् ॥ २९ ॥ भगवत्कोपमुद्दीपयंत आहुः—किंचेति। यो जरासंधः। इत्यर्थ इति—यद्युक्तमित्यध्याहृत्य व्याख्येयमिति भावः ॥ ३० ॥ इतीत्थं प्रार्थयंतः ॥ ३१ ॥ प्रादुरासीत्तत्राजगाम ॥ ३२ ॥ तं देवर्षिम् ॥ ३३ ॥ ३४ ॥ अद्य त्रयाणां लोकानामकुतोभयम्, अपिस्विदिति वितर्के कुतोऽपि भयं नास्ति। ननु यतः पर्यटतो भगवतस्तत्र लोकान् लोकानां भूयान् गुणः। सर्ववृत्तांतश्रवणादिति वा योज्यम् ॥३५॥३६॥ श्रीभगवता लोकत्रयाकुतोभयं यत्पृष्टं तस्याज्ञातत्वेन पांडवतात्पर्यकत्वेन चोत्तरमदत्त्वा त्वस्मिन्सर्वदर्शित्वं यदुक्तं तत्तु तच्छक्तिमयत्वेनैवांगीकरोति—दृष्टा इति। माया मायिककार्याणि नानाब्रह्मांडगतानि तथा विश्वसृजस्तत्तदन्तर्यामिब्रह्मविष्ण्वादयो मायिनस्तच्छक्त्यंशधारिणश्च दृष्टाः। तच्च 'त्वं पर्यटन्नर्क इव त्रिलोकीम्' इति व्यासोक्त्यनुसारेण स्वस्य तत्र शक्तिभिस्त्वद्भक्तिमयमच्छक्तिभिरेव वा सर्वव्यापकवह्नेरिव छन्नरुच आच्छादितसर्वज्ञस्य स्वतो भूतेषु चरतो मम नाद्भुतमिति

तवेहित कोऽर्हति साधु वेदितुं स्वमाययेदं सृजतो नियच्छतः ॥ यद्विद्यमानात्मतयाऽवभासते तस्मै नमस्ते स्वविलक्षणात्मने ॥ ३८ ॥ जीवस्य यः संसरतो विमोक्षणं न जानतोऽनर्थवहाच्छरीरतः ॥ लीलावतारैः स्वयशःप्रदीपकं प्राज्वालयत्त्वा तमहं प्रपद्ये ॥ ३९ ॥ अथाप्याश्रावये ब्रह्म नरलोकविडंबनम् ॥ राज्ञः पैतृष्वसेयस्य भक्तस्य च चिकीर्षितम् ॥ ४० ॥ यक्ष्यति त्वां मखेंद्रेण राजसूयेन पांडवः ॥ पारमेष्ठ्यकामो नृपति स्तद्भवाननुमोदताम् ॥ ४१ ॥ तस्मिन्देव क्रतुवरे भवंतं वै सुरादयः ॥ दिदृक्षवः समेष्यंति राजानश्च यशस्विनः ॥ ४२ ॥ श्रवणात्कीर्तनाद्ध्याना त्पूयंतेंतेऽवसायिनः ॥ तव ब्रह्ममयस्येश किमुतेक्षाभिमार्शिनः ॥ ४३ ॥ यस्यामलं दिवि यशः प्रथितं रसायां भूमौ च ते भुवनमंगल दिग्वितानम् ॥ मंदाकिनीति दिवि भोगवतीति चाधो गंगेति चेह चरणांबु पुनाति विश्वम् ॥ ४४ ॥

जरासंधवधार्थमेव पांडवचिकीर्षितं पृष्टो नारदो माययमिति ज्ञात्वाह दृष्टा इति त्रिभिः । विश्वसृजश्च ब्रह्मणोऽपि मायिनो मोहकस्य ते स्वशक्तिभिर्विद्यादिभिर्भू तेष्वंतर्यामितया चरतो वर्तमानस्य यद्यहं भूतेषु वर्ते तर्हि भूतानि मां किं न पश्यंति तत्राह । वह्नेरिव च्छन्नरुच इति । स्वशक्तिभिरेव छन्ना रुक् प्रकाशो यस्य तस्य अतस्तवेदं प्रश्नादि न मेऽद्भुतम् ॥ ३७ ॥ इदं जगत् । कथंभूतम् । असदेव यत्तव मायया विद्यमानात्मतया भासते तज्जगत्सृजतः किंतु केवलं तुभ्यं नमनमेव शक्यमित्याह । तस्मै नम इति । कुतः । स्वेन रूपेण सर्वतो विलक्षणात्मने अचिंत्यायेत्यर्थः ॥ ३८ ॥ नन्वेवंभूतस्य किं मायाचेष्टितैरित्यत आह । जीवस्येति । अविद्यातमसावृतत्वेनानर्थ प्रापकाच्छरीरात्संसरतः तेनैव तपसा तस्माच्छरीराद्विमोक्षोपायमजानतः प्राज्वालयत्प्रदीपितवान् तं त्वा त्वाम् । यशःश्रवणादिभिर्जीवस्य मोक्षार्थमित्यर्थः ॥ ३९ ॥ आश्रावये श्रावयिष्यामि । नरलोकविडंबनं ब्रह्म त्वाम् । ब्रह्मन्निति पाठेऽपि हे ब्रह्मन्परमात्मन्नरलोकानुकारिणं त्वां श्रावयिष्यामीति ॥ ४० ॥ ४१ ॥ न चात्रैवानु मोदनं कार्यं किं तु तत्रागंतव्यमित्याशयेनाह । तस्मिन्निति ॥ ४२ ॥ तत्रागताश्च सर्वे त्वद्दर्शनादिना पूता भविष्यंतीत्याह । श्रवणादिति । अंतेवसायिनः श्वपचा अपि । ब्रह्ममयस्य ब्रह्मघनमूर्तेः । ईक्षा च अभिमर्शः स्पर्शनं च तौ विद्येते येषाम् ॥ ४३ ॥ कैमुत्यमतिशयेनाह । यस्येति । हे भुवनानां मंगलरूप दिवि पाताले भूमौ

तोषिणी । वृत्त्यभिप्रायेण बहुत्वं माया इति ॥ ३७ ॥ विद्यमानात्मतया स्वरूपस्थितिं लब्धवत्तया । इत्यर्थ इति । असदपि सत्कुर्वतस्तत्र मायावैभवमतर्क्यमिति भावः ॥ ३८ ॥ इत्यर्थ इति—" भवेऽस्मिन् क्लिश्य मानानामविद्याकामकर्मभिः । श्रवणस्मरणार्हाणि " इत्याद्युक्तेरिति भावः ॥ ३९ ॥ श्रावये भविष्यति लट् आङ्पूर्वः । ब्रह्मेति पूर्णब्रह्मस्वरूप । नलोपस्य संबुद्धौ विकल्पः ॥ ४० ॥ पारमेष्ठ्यकामः ब्रह्मपदकामः सर्वश्लाघ्य त्वकामो वा । " सर्वश्लाघ्ये पारमेष्ठ्यं हरौ ब्रह्मपदेऽपि च " इति निरुक्तिः ॥ ४१ ॥ यजतु राज्ञां धर्म एवायमिति चेत्तत्राह—न चेति । किं लाभस्तत्र गमने तत्राह—भवंतमिति ॥ ४२ ॥ अंतेवसायिनो मातंगादयश्चां डालाः ॥ ४३ ॥ अतिशयेन तात्पर्येण । " तात्पर्ये निश्चयाधिक्यजागरूकेष्वतिक्रमे । भवेदतिशयः " इति निरुक्तिः । इति भाव इति—यस्य नाम्ना त्रैलोक्यशोधकस्य तत्रागमने यदि तत्रत्याः पूता भविष्यंतीति किमु

श्रीशुक उवाच ॥ तत्र तेष्वात्मपक्षेष्वगृह्णत्सु विजिगीषया ॥ वाचःपेशैः स्मयन्भृत्यमुद्धवं प्राह केशवः ॥ ४५ ॥ श्रीभगवानुवाच ॥ त्वं हि नः परमं चक्षुः सुहृन्मंत्रार्थतत्त्ववित् ॥ तथाऽत्र ब्रूह्यनुष्ठेयं श्रद्दध्मः करवाम तत् ॥ ४६ ॥ इत्युपामंत्रितो भर्त्रा सर्वज्ञेनापि मुग्धवत् ॥ निदेशं शिरसाऽऽधाय उद्धवः प्रत्यभाषत ॥ ४७ ॥ इति श्रीभा० म० द० उ० भगवद्याने सप्ततितमोऽध्यायः ॥ ७० ॥ श्रीशुक उवाच ॥ इत्युदीरितमाकर्ण्य देवर्षेरुद्धवोऽब्रवीत् ॥ सभ्यानां मतमाज्ञाय कृष्णस्य च महामतिः ॥ १ ॥ उद्धव उवाच ॥ यदुक्तमृषिणा देव साचिव्यं यक्ष्यतस्त्वया ॥ कार्यं पैतृष्वसेयस्य रक्षा च शरणैषिणाम् ॥ २ ॥ यष्टव्यं राजसूयेन दिक्चक्रजयिना विभो ॥ अतो जरासुतजय उभयार्थो मतो मम ॥ ३ ॥

च प्रथितं यस्य यशो विश्वं पुनाति । कथम् । प्रथितं दिग्वितानं दिग्भवनानां वितानवदलंकरणम् । तथा चरणांबु च प्रथितं पुनाति । कथं तत्प्रथितम् । दिवि मंदाकिनीति अधश्च भोगवतीति इह च भूमौ गंगेति । तस्य तवागमनात्सर्वं मंगलं पवित्रं च भविष्यतीति भावः ॥ ४४ ॥ तत्रैवं नारदोक्ते तेषु वर्तमानेष्वात्मीयपक्षेषु यादवेषु जरासंधस्य विजिगीषया अगृह्णत्स्वमन्यमानेषु । वाचःपेशैः पेशलवाग्भिरित्यर्थः ॥ ४५ ॥ चक्षुष्ट्वे हेतुः । मंत्रार्थानां मंत्रसाध्यानां तत्त्ववित्परिपाकवेदिता ॥ ४६ ॥ ॥ ४७ ॥ इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्रीध० टीकायां सप्ततितमोऽध्यायः ॥ ७० ॥ अथैकसप्ततितम उद्धवस्य तु मंत्रतः ॥ इंद्रप्रस्थं गते कृष्णे पार्थानां परमोत्सवः ॥ १ ॥ राजसूयमिषं कृत्वा भीमदुर्योधनादिषु ॥ कलिमुत्पाद्य तद्द्वारा भूभारमहरत्प्रभुः ॥ २ ॥ देवर्षेर्मतं राजसूयगमनम् । सभ्यानां मतं राजरक्षा । कृष्णस्य तूभयम् ॥ १ ॥ यक्ष्यतो यागं करिष्यतः पैतृष्वसेयस्य पितृष्वसुः पुत्रस्य साचिव्यं साहाय्यं तच्च कार्यम् । तथा शरणार्थिनां राज्ञां रक्षा च कार्या ॥ २ ॥ तत्र प्रथमं

वक्तव्यमित्यर्थः ॥ ४४ ॥ तत्र तदा । तेषु सभ्येषु । इत्यर्थ इति–' पेशस्सौंदर्यचूर्णयोः ' इति धरणिः । वाचो वाण्याः पेशैः सौंदर्यैर्गांभीर्यमाधुर्याल्पाक्षरबह्वर्थादिभिरिति भावः । केशव इति–यथा गोकुलसुखार्थं केशिनं हतवांस्तथोद्धवस्य निजभक्तस्य कीर्त्युत्कर्षेण सुखार्थं तमाहेति भावः ॥ ४५ ॥ चक्षुश्चक्षुर्वत्प्रकाशकम् । यथाऽत्रानुष्ठेयं तथा ब्रूहि । अत्र राजमोक्षणराजसूयगमनरूपोभयकार्ये इत्यर्थः । त्वदुक्तौ श्रद्दध्मः श्रद्धां करिष्यामः । तदेव करिष्याम च " सर्वं वाक्यं सावधारणम् " इति न्यायागत एवकारः । उभयत्र भविष्यति लट्लोटौ ॥ ४६ ॥ इतीत्थम् । उपामन्त्रितः पृष्टः । मुग्धवदज्ञातवत् । ' मुग्धः सुन्दरमूढयोः ' इति विश्वः ॥ ४७ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धे सप्ततितमोऽध्यायः ॥ ७० ॥ एकेनाधिकसप्ततितम एकसप्ततितमस्तास्मिंस्तथा ( १ ) । तद्द्वारा भीमदुर्योधनद्वारा ( २ ) । एकांतभक्तानां भक्त्यतिशयजननाय हरे र्वैधुकृत्याचरणलक्षणं माहात्म्यमाह । तत्रादौ कृष्णकटाक्षसूचिततत्कार्यविशेष उद्धवस्त्वां नीतिं वक्ति–इतीति। महामतित्वादेव सर्वेषां मतं ज्ञातवानिति भावः॥ १ ॥ हे देवेति। विचित्रक्रीडापरस्य तवाभिप्रायं न कोपि ज्ञातुं शक्त इति भावः । ऋषिणेति ऋषेराज्ञैवादौ संपाद्येति भावः ॥ २ ॥ कार्यद्वयसाधनोपायं वक्ति–तत्र तयोर्मध्ये । ततस्तत्र गमनादनन्तरम् । ननु राजभिरादौ निमंत्रणात्तेषां मरणसंकटपाताच्चादौ तत्रैव तद्रक्षणार्थं गंतुमुचितं यज्ञक्रिया तु पश्चादपि स्यात्तत्राह–यष्टव्यमिति । यत्रैकेन कार्येणोभयकार्यसिद्धिः सैव युक्तिः समीचीनेति। सा च राजसूयार्थगमनरूपैव । दिग्विजयं विना राजसूयो न स्यात् जरासन्धवधं विना दिग्विजयो नेति । तथा चं

अस्माकं च महानर्थो ह्येतेनैव भविष्यति ॥ यशश्च तव गोविंद राज्ञो बद्धान्विमुंचतः ॥ ४ ॥ स वै दुर्विषहो राजा नागायुतसमो बले ॥ बलिनामपि चान्येषां भीमं समबलं विना॥५॥द्वैरथे स तु जेतव्यो मा शताक्षौहिणीयुतः॥ ब्रह्मण्योभ्यर्थितो विप्रैर्न प्रत्याख्याति कर्हिचित्॥६॥ ब्रह्मवेषधरो गत्वा तं भिक्षेत वृकोदरः ॥ हनिष्यति न संदेहो द्वैरथे तव सन्निधौ ॥ ७ ॥ निमित्तं परमीशस्य विश्वसर्गनिरोधयोः ॥ हिरण्यगर्भः शर्वश्च कालस्यारूपिणस्तव ॥८॥गायंति ते विशदकर्म गृहेषु देव्यो राज्ञां स्वशत्रुवधमात्मविमोक्षणं च॥गोप्यश्च कुंजरपतेर्जनकात्मजायाः पित्रोश्च लब्धशरणा मुनयो वयं च॥९॥

राजसूयार्थं गंतव्यं ततो राजरक्षा कर्तव्येत्याह यष्टव्यमित्यष्टभिः । अतो दिग्विजयहेतोः । उभयार्थो राजसूयार्थः शरणागतरक्षार्थश्च ॥ ३ ॥ ४ ॥ अत्युत्सुकतया सद्य एव जरासंधं हंतुमिच्छतो यादवानालक्ष्याह । स वा इति । अन्येषां ततो बलिनामपि यद्यपि समबल एव भीमस्तथापि तं विना । भीमादेव तस्य मृत्युर्विहित इति भावः ॥ ५॥ ननु स्वबलसाम्येऽपि सेनाबलं तस्याधिकमिति चेदत आह । द्वैरथ इति । द्वंद्वयुद्धे । शतेनाक्षौहिणीभिर्युतो मागधो मा न जेतव्य इत्यर्थः । नन्वसौ स्वसैन्यमेव युद्धाय नियुंजीत कुतस्तेन द्वैरथमिति तत्राह । ब्रह्मण्य इति । न प्रत्याख्याति न निराकरोति ॥ ६ ॥ भिक्षेत द्वंद्वयुद्धं याचताम् । तथाऽपि समबलत्वात्साम्यमेव स्यादत आह । तव सन्निधाविति ॥ ७ ॥ नन्वकिंचित्कुर्वतो मम सन्निधानात्किं स्यादत आह । निमित्तमिति । अयमर्थः । यथा तवारूपस्य कालात्मनो विश्वसर्गे निमित्तं केवलं हिरण्यगर्भस्तथा शर्वश्च तन्निरोधे तथाऽत्र त्वमेव सन्निधिमात्रेण हंता भीमो निमित्तमात्रमिति ॥ ८ ॥ अतोऽनेनोपायेन त्वया स शीघ्रं हंतव्य इत्याश

राजरक्षानिमंत्रणन्तु तदंगसिद्ध्यैव सेत्स्यतीत्येकाक्रिया द्व्यर्थकरी भविष्यतीति भावः । उभयाय राजसूयाय शरणागतरक्षणाय चायमुभयार्थः । “ चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ” इति । ‘ अर्थेन नित्यसमासो विशेष्यलिंगता च ’ इत्यनुशासनात् ॥ ३ ॥ युधिष्ठिरकार्यं सिद्धवत्कृत्वा स्वकार्य्यमभिष्टौति–अस्माकमिति । एतेन जरासन्धवधेन । विमुञ्चतो विमोचयतः, अन्तर्भावितणिजर्थाच्छत्रन्तः ॥ ४ ॥ उद्धववाक्यं श्रुत्वा यादवा नोत्कण्ठिता इति चेदत्राह–अत्युत्सुकेत्यादि । ततो जरासंधात् । इति भाव इति–यद्यपि समबल एव तथापि तं विनेति भीमादेव तस्य मृत्युरिति बृहस्पतेः सकाशादधीतज्योतिरादिशास्त्रेण मयैव पूर्वं विचारितमिति विहि तस्य दुर्वीर्यत्वेनाल्पबलोऽधिकबलं हंति किमुत समबल इति तात्पर्यम् ॥ ९ ॥ पुनस्साम्याशंकां वारयन्समाधत्ते–नन्वित्यादिना । तस्य जरासंधस्य । स जरासंधः । इत्यर्थ इति–महादेवप्रसादादिति भावः । पुनराशंक्य समाधत्ते–नन्वित्यादिना । द्वयो रथयो रथिनोरिदं द्वैरथं द्वंद्वयुद्धमित्यर्थः ॥६॥ तं जरासंधम् । वृकस्तत्संज्ञोऽग्निरुदरे यस्य स वृकोदरो भीमः । “ वृको नाम हि यो वह्निः स सदा उदरे मम । अतिवेलं यदाश्नामि तदा स उपशाम्यति॥” इति ब्रह्मवैवर्ते व्यासं प्रति भीमोक्तेः । भारतेऽपि “तीक्ष्णश्चैव प्रचण्डश्च वृको नामानलो मतः । स पांडवस्य जठरे तेन भीमो वृकोदरः॥”इति । यद्वा–वृकवत्कृशमुदरं यस्येति बलिष्ठता सूचिता।बलिष्ठानां हि सिंहादीनां कृशमध्यत्वमस्तीति भावः।अतिवेलमतिक्रांतमर्यादमित्यर्थः।पुनराशंक्य समाधत्ते–तथापीत्यादिना।स एव जेष्यति किं मया तत्र गमनेनेति तत्राह–तवेति।तव संनिधिं विना तु द्वैरथेपि हंतुं स न प्रभविष्यतीति भावः॥७॥भगवानाशंकते–नन्विति । तात्पर्यमाह–अयमर्थ इति । तन्निरोधे विश्वसंहारे॥८॥यतस्त्वमेव हर्ताऽतो हेतोः । अनेन युद्धयाच्ञारूपेण । स जरासंधः । करुणाकरो दयासमुद्रः । एवं करिष्यति तं मारयित्वा तव पितरं मोचयिष्यतीत्यर्थः।कथं गायंतीत्यत्र लुप्तोपमयाह–अत्रेति । अत्र गायने।अवतारांतरगतं कर्मेत्यर्थः।यतो गायंत्यतो हेतोः। एवंभूतानां त्वत्कर्म गायतीनाम् । तासां राजदेवीनामित्यर्थः।यद्वा–गोप्यश्चेत्यत्र चशब्द एवोपमार्थको

**जरासंधवधः कृष्ण भूर्यर्थायोपकल्पते ॥ प्रायः पाकविपाकेन तव चाभिमतः क्रतुः ॥ १० ॥**

येनाह । गायंतीति । जरासंधधृतानां राज्ञां देव्यः पत्न्यस्ते विशदं कर्म स्वगृहेषु बालकलालनादौ गायंति । किं तत्कर्म । स्वशत्रोर्जरासंधस्य वधमात्मनां पतीनां विमोक्षणं च । वत्स मा रोदीः श्रीकृष्ण एवं करिष्यतीति । अत्र दृष्टांताः । गोप्यश्चेत्यादयः । यथा गोप्यः शंखचूडवधं स्वमोक्षं च गायंति । अवतारांतरगतं कुंजरपतेर्नक्रात् । जनकात्मजायाश्च रावणात् । पित्रोश्च कंसगृहान्मोक्षम् । अत एवंभूतानां तासां कृपया त्वया तथैव कर्तव्यमिति भावः ॥ ९ ॥ किंच जरासंधवध इति । भूर्यर्थायेति ।

निपातानामनेकार्थत्वात् । यद्वा—लब्धशरणा भक्तजनाः । कुंजरपतेरात्मनो देहस्य । विमोक्षणं स्वशत्रूणां कामादीनां वधं च मुनयो वाल्मीक्यादयो जनकात्मजाया विमोक्षणं स्वशत्रुवधमिति पूर्ववत् । वयं च यदवः पित्रो र्देवकीवसुदेवयोर्विमोक्षणं च यथा गायामस्तथा गायंतीत्यर्थः । अत्र विश्वनाथः—दुष्टनिग्रहशिष्टपालनात्मकं तव यशो यद्यपि सद्भिर्गीयमानं पूर्वसिद्धमेवास्ति तदपि जरासंधे हतेऽधुना विपुलीभविष्यतीत्याह—गायंतीति । जरासंधबद्धराज्ञां देव्यः सर्वज्ञश्रीनारदादिप्रबोधिता भाविनमपि जरासंधवधमात्मनां पतीनां विमोक्षणञ्च हे वत्स मारोदीः श्रीकृष्णो जरासंधं हत्वा तव पितरं मोचयिष्यतीति गायंति । अत्र गोप्यादयो दृष्टान्ताः । यथा— गोप्यः शंखचूडवधं तन्निरोधादात्मविमोक्षणं परस्परसांत्वनादौ गायंति, भोः सख्यः समाश्वसित रुदित्वारुदित्वा मा प्राणांस्त्यक्तुमुपक्रमध्वम् यः खलु तादृशशंखचूडमहाव्याघ्रप्रासादरक्षीत्स एव कृपासिंधुः स्वयमेव स्मृत्वा स्वविरहमहाविपत्कालसर्पदंशादपि रक्षिष्यतीति । तेन जरासंधं हत्वा ता देव्यस्तत्पतिभिः संगतीकृत्य त्वया यथा रक्षणीयास्तथैव राजसूयादि कृत्यं समाप्य तत आगमनसमये निभृतं व्रजं गत्वा ता गोप्योपि स्वसंगती कृत्य त्वया रक्षणीयास्ततश्चास्मदादयोपि तत्ते यशो गायाम इत्यवसरप्राप्तस्वाभीप्सितमंत्रणार्पणं ध्वनितम् । किंच—यथा देव्यो गोप्यश्च गायंति तथा लब्धशरणा मुनय आत्मारामभक्ता वयं दासभक्ताश्च स्वसुहृदाश्वासनादौ गायामः । किं तत् । कुंजरपतेः स्वशत्रोर्नक्रस्य वधं तस्मादात्मविमोक्षणं च । जनकात्मजायाः स्वशत्रो रावणस्य वधं पित्रोश्च स्वशत्रोः कंसस्य वधं तस्मात्तस्मादात्मविमोक्षणं चेति । भोस्तपोधना मा विषीदथ यथा नक्रादिभ्यो गजेंद्रादीनुद्दधार तथैवास्मानपि संसारादुद्धरिष्यतीति । भोभो वयस्या भाविकभक्ता यथैवोद्धृता गजेंद्रादिभ्यः स्वसामीप्यदानेन स्वाभीष्टसेवामदात्तथैवास्मभ्यमपि दास्यतीति । अथास्य मंत्रशास्त्रेऽनुष्ठान मपि लिखितं, तच्चेत्थम्—आचमनप्राणायामपूर्वकं संकल्प्य गणेशादीन्संपूज्य ओमस्य गायंतीतिश्लोकात्मकमंत्रस्य श्रीवेदव्यास ऋषिः । श्रीकृष्णः परमात्मा देवता । जगती छंदः । सर्वकार्यसिद्ध्यर्थे जपे विनियोगः ॥ गायंति ते विशदकर्मेत्यंगुष्ठाभ्यां नमः । गृहेषु देव्यो राज्ञां स्वशत्रुवधमिति तर्जनीभ्यां नमः । आत्मविमोक्षणं चेति मध्यमाभ्यां नमः । गोप्यश्च कुंजरपतेरित्यनामिकाभ्यां नमः । जनकात्मजायाः पित्रोश्च लब्धशरणा मुनयो वयं चेति कनिष्ठिकाभ्यां नमः । संपूर्णमंत्रेण करतलकरपृष्ठाभ्यां नमः ॥ एवं हृदयादिन्यासः ॥ अथ ध्यानम्—" ध्यायेद्धरिन्मणिनिभं जगदेकवंद्यं सौन्दर्यशार्ङ्गमरिशंखगदांबुजानि । दोर्भिर्दधानमजितं सुनसं सुभूषं सत्यासमेतमखिलप्रदमिंदिरेशम् ॥ " ॐनमो भगवते जरासंधघातकाय क्लीं क्रों अमुकमाकर्षयाकर्षय ॐ क्लीं कृष्णायाकर्षयाकर्षय स्वाहा ॥ इमं मंत्रमादौ पठित्वा तदनु ॐ गायंतीति श्लोकं पठेत् । इत्थमष्टोत्तर शतं प्रतिदिनं जपित्वा षड्भिर्मासैरनृणो भवेत् बद्धं च मोचयेत् स्वविमुखं स्वनिघ्नं कुर्यादन्यदप्यभीष्टं लभेत् । घृताक्तलाजैर्जपदशांशं जुहुयात् । सिद्धार्थजातीकुसुमांबुजातबिल्वैश्च जुहुयात् । एकविंशतिदिनैरतिकुपितं विप्रं चतुर्दशभिः क्षत्रियं दशभिर्वैश्यं त्रिभिः शूद्रं चाकर्षयेत् । मासैनैकेन देवमप्याकर्षयेत् । पञ्चाधिकत्रिशतोत्तरलक्षजपश्चास्य पुरश्चरणम् ॥ ब्राह्मणद्वारा करणे संकल्पवाक्यम्—अद्यामुकगोत्रस्यामुकशर्मणो देशाधिपतेर्वा परचक्रागतदेशोपद्रवजनितजनिष्यमाणसर्वारिष्टनिवृत्तिपूर्वकं देशस्वास्थ्यार्थं सपरिवारस्यात्मनः क्षेमस्थैर्यायुरारोग्यैश्वर्याभिवृद्ध्यर्थं जरासंधबद्धराजकृतस्वमोक्षणविज्ञप्त्यनंतरश्रीमदुद्धवोक्तवाक्यरूपश्रीमद्भागवतोक्तगायंतीतिश्लोकमं त्रस्य सपादलक्षजपं ब्राह्मणद्वारा कारयिष्ये तदंगतया ब्राह्मणवरणं च यथोक्तद्रव्यैरहं करिष्य इत्यलम् ॥ ९ ॥ किं बहुना जरासंधवधोऽनेकप्रयोजनोपेत इत्याह—किंचेति । ततो जरासंधवधात् । इति भाव इति—प्रबलसहा

श्रीशुक उवाच॥इत्युद्धववचो राजन्सर्वतोभद्रमच्युतम्॥देवर्षिर्यदुवृद्धाश्च कृष्णश्च प्रत्यपूजयन्॥ ११ ॥अथादिशत्प्रयाणाय भगवान्देवकीसुतः॥ भृत्यान्दा रुकजैत्रादीननुज्ञाप्य गुरून्विभुः॥ १२ ॥निर्गमय्यावरोधान्स्वान्ससुतान्सपरिच्छदान्॥संकर्षणमनुज्ञाप्य यदुराजं च शत्रुहन् ॥ सूतोपनीतं स्वरथमारुहद्ग रुडध्वजम्॥ १३ ॥ ततो रथद्विपभटसादिनायकैः करालया परिवृत आत्मसेनया ॥ मृदंगभेर्यानकशंखगोमुखैः प्रघोषघोषत्ककुभो निराक्रमत् ॥ १४ ॥

ततः शिशुपालवधादयोऽपि सुखसाध्या भविष्यंतीति भावः । एतच्च सर्वं भविष्यत्येवेति संभावयन्नाह । प्राय इति । पच्यत इति पाकः कर्म तस्य विपाकः फलं तेन राज्ञां पुण्यविपाकेन जरासंधादीनां पापविपाकेनेति । पाठांतरे जरासंधस्य पापविपाकेनेति । तेनायं क्रतुस्तवाभिप्रेतस्तत्र गते त्वयि सर्वं भविष्यतीत्यर्थः ॥ १० ॥ अच्युतमुप पत्त्या वृद्धम् । यदुवृद्धा इति वदता अनिरुद्धादयस्तथा नापूजयन्निति सूचितम् ॥ ११ ॥ अनुज्ञाप्यानुज्ञां प्रार्थ्य गुरून्वसुदेवादीन् ॥ १२ ॥ अवरोधान्स्वान्दारान् । निर्गमय्य प्रमाणं कारयित्वा ॥ १३ ॥ भटाः पदातयः । सादिनोऽश्वारोहाः रथादिनायकैः करालया तीव्रयाऽऽत्मसेनया परिवृतो निराक्रमन्निरगात् । कुतः सकाशात् ।

यकनाशादित्याशयः । एतच्च—शिशुपालवधादिकं च । राज्ञां जरासंधबद्धानाम् । पुण्यविपाकेनेति त्वद्दर्शनपूर्वकं कारागारनिवृत्त्युत्तरं त्वदुपदेशाचरणात्तेषां मोक्षहेतुत्वात् । जरासंधादीनामित्यत्रादिना शिशुपालशाल्वदुर्यो धनादयो ग्राह्याः । तेषां मृत्युहेतुत्वान्मरणस्य “ पुण्याज्जीवनमुद्दिष्टं पापान्मरणसंभवः ” इत्युक्तेः पापफलत्वात् । इहैव महाभारतबीजांकुरोत्पत्तेर्दुर्योधनादीनामपि पापविपाकेनैवायं क्रतुरिति प्रायोग्रहणान्न केवलं पापविपाक एव सर्वत्र तव दर्शनादिसत्त्वाद्वस्तुतः पुण्यविपाक एवेति भावः । पाठांतरे, प्रायस्तस्य विपाकेनेति पाठे । फलितमाह—तेनेति । तेन पाकविपाकेन हेतुनाऽभिप्रेतोभिप्रायविषय एव । तत्र यागे । इत्यर्थ इति—भूभारावतारणा र्थमवतीर्णस्त्वं सर्वमेतत्करिष्यसीति भावः । भूर्यर्थाय राजसूयसिद्ध्ये राजवृन्दरक्षासिद्ध्ये शिशुपालादिवधसुखसाध्यत्वसिद्ध्ये मद्यंजितार्थविशेषसिद्ध्ये च।पाकः राजसूयस्य निष्पत्तिस्तस्मिन्सति तस्य वा यो विपाकः । विसदृशं फलं कुरुवंशक्षयसूचकदुर्योधनमानभंगस्तेन हेतुना क्रतुश्च तवाभिमतः । ‘पाकः परिणतौ शिशौ ’ इति “विपाकः पाचने स्वेदे कर्मणो विसदृक्फले”इति मेदिनी । एषोर्थस्तत्रत्ययादवकौरवैर्मा बुध्यतामित्युद्धवेन दुर्बोधार्थकं पदं प्रयुक्तम् । पापविपाकेनेति पाठे पापानां शिशुपालादीनां विनाशलक्षणपरिणामेन हेतुनेति विश्वनाथः । तोषिण्यां तु—पाकः साक्षादुद्दिष्टोऽर्थः पांडवराजस्य पारमेष्ठ्यादिः, विपाकः साक्षादनुद्दिष्टोपि मनसि स्थितः शिशु पालदुर्योधनादिलक्षणभूभारहरणरूपः तयोर्द्वैक्यं तेन हेतुना क्रतुश्च तवाभिमतोऽभिप्रेतः । प्रायःशब्देन पांडवानां वनवासादिदुःखनिदानांशे नानाभिमतोपि तेषां परिणामपरमसुखनिदानत्वादेवाभिमत इत्यर्थः । प्राय इति वितर्के वा । पाठांतरे पापानां जरासंधादीनां परिणामेन मोक्षादिलक्षणावस्थांतरप्राप्त्या हेतुना ततश्च पूर्वं राजसूयोद्यतं पांडवमाश्वास्य तदनुज्ञया भीमसेनेन जरासंधं घातयित्वा राजसूयः संपादयितव्य इति भावः । हे कृष्णेति परममहिमादिमयनामत्वात्तेनैव संबोधनं परममहिमानमेवावेदयति “यस्य नाम महद्यशः” इति श्रुतेः । तस्मादत्र दासभावो नाभासीक्रियते ॥१०॥ प्रत्यपूजयन् प्रत्यक्षरं साधुसाध्विति प्रीत्या संश्लाघिरे अच्युतम् । उप पत्त्या युक्त्या । वृद्धं युक्तम् । यदुवृद्धा अक्रूरकृतवर्मादयः यथा तद्वाक्यमश्लाघंत तथाऽनिरुद्धादयो न, तेषां मतं तु प्रथमं राजबंधनिवृत्त्यर्थं जरासंधेन युद्धमेवेति भावः ॥ ११ ॥ अथोद्धवोक्तिश्रुत्यनंतरम् । आदिना प्रब लार्हणादिग्रहः ॥ १२ ॥ ‘ शुद्धांतश्चावरोधश्च ’ इत्यमरः । “ अवरोधस्तिरोधाने राजदारेषु तद्गृहे ” इति मेदिनी च । यद्यप्यवरोधपदं राजदारेषु तद्गृहे चास्ति तथाऽपि भगवतो नृपतित्वाभावेपि “ राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यात् ” इति कोशात् प्रभुत्वात्क्षत्रियत्वाच्च राजशब्दवाच्यत्वादवरोधानित्युक्तम् ॥ १३ ॥ ततो रथारोहणोत्तरम् । रथादीनामुक्तेः परिशेषाद्भटपदं पदातिपरमेवात्र ।

नृवाजिकांचनशिबिकाभिरच्युतं सहात्मजाः पतिमनु सुव्रता ययुः ॥ वरांबराभरणविलेपनस्रजः सुसंवृता नृभिरसिचर्मपाणिभिः ॥ १५ ॥ नरोष्ट्रगोमहिषखराश्वतर्यनःकरेणुभिः परिजनवारयोषितः ॥ स्वलंकृताः कटकुटिकंबलांबराद्युपस्करा ययुरधियुज्य सर्वतः ॥ १६ ॥ बलं बृहद्ध्वजपटछत्रचामरैर्वरायुधाभरणकिरीटवर्मभिः ॥ दिवांऽशुभिस्तुमुलरवं बभौ रवेर्यथार्णवः क्षुभिततिमिंगिलोर्मिभिः ॥ १७ ॥ अथो मुनिर्यदुपतिना सभाजितः प्रणम्य तं हृदि विदधद्विहायसा ॥ निशम्य तद्व्यवसितमाहृतार्हणो मुकुंदसंदर्शननिर्वृतेंद्रियः ॥ १८ ॥ राजदूतमुवाचेदं भगवान्प्रीणयन्गिरा ॥ मा भैष्ट दूत भद्रं वो घातयिष्यामि मागधम् ॥ १९ ॥ इत्युक्तः प्रस्थितो दूतो यथावदवदन्नृपान् ॥ तेऽपि संदर्शनं शौरेः प्रत्यैक्षन्यन्मुमुक्षवः ॥ २० ॥ आनर्तसौवीरमरूंस्तीर्त्वा विनशनं हरिः ॥ गिरीन्नदीरतीयाय पुरग्रामव्रजाकरान् ॥ २१ ॥ ततो दृषद्वतीं तीर्त्वा मुकुंदोऽथ सरस्वतीम् ॥ पांचालानथ मत्स्यांश्च शक्रप्रस्थमथागमत् ॥ २२ ॥

मृदंगादिभिर्वाद्यैः प्रघोषेण घोषत्याः घोषितायाः ककुभः ॥ १४ ॥ नृवाजीति । नृवाजिभिर्नरयानैरश्वैश्च कांचनशिबिकाभिश्चाच्युतं पतिमनुययुः । सुव्रताः पतिव्रताः । वराण्यंबरादीनि यासां ताः ॥ १५ ॥ नरोष्ट्रादिभिर्यानैः । अश्वतरी गर्दभ्यामश्वाज्जाता । अनः शकटम् । करेणुर्गजी । परिजनयोषितो वारयोषितश्च । कटकुटय उशीरादितृणनिर्मितगृहाः कंबलांबरादयश्चोपस्कराः कुड्यादिरूपा यासां ताः । अधियुज्य बलीवर्दादिषु तानुपस्करान् दृढं सन्नह्य ॥ १६ ॥ रवेरंशुभिश्च तद्बलं दिवा बभौ । कथंभूतम् । तुमुलरवमाकुलस्वनम् । क्षुभितैस्तिमिंगिलैरूर्मिभिश्च ॥ १७ ॥ मुनिर्नारदो विहायसा ययाविति शेषः ॥ १८ ॥ मा भैष्टेति बहुत्वं राजाभिप्रायेण ॥ १९ ॥ प्रत्यैक्षन्प्रत्यैक्षंत । यद्यस्मान्मुमुक्षवः ॥ २० ॥ आनर्तादयो मार्गस्थदेशास्तांस्तीर्त्वाऽतिक्रम्य विनशनं कुरुक्षेत्रम् । अतीयायातिक्रम्य ययौ ॥ २१ ॥ शक्रप्रस्थमिंद्र

ककुभो दिशः ॥ १४ ॥ सुसंवृताः परिवारिताः ॥ १५ ॥ "कटः किलिंजशरयोर्वीरणेपि प्रकीर्तितः" इति कोशात् । कटपदेन गुंद्रवीरणादिशाखा ग्राह्याः । संनह्य बद्धा ॥ १६ ॥ अंशुभिरिति बृहद्ध्वजादेः, क्षुभिततिमिंगिलोर्मिभिरिति नरोष्ट्रादेरुदाहरणम् ॥ १७ ॥ अथो सेनाप्रयाणोत्तरम् । तं कृष्णम् । तद्व्यवसितं कृष्णनिश्चितम्, पांडवानां बद्धराज्ञां च युगपन्मनोरथसंपादनरूपम् ॥ १८ ॥ भगवान्सूनृतागिरा इति पाठे सूनृतागिरा प्रेमयुक्तवाचा । "सूनृतं मंगलेपि स्यात्प्रियसत्ये वचस्यपि" इति मेदिनी ॥ १९ ॥ इतीत्थम् । तेऽपि नृपा अपि । परस्मैपदमार्षम् ॥ २० ॥ २१ ॥ ततो गिरिनद्यादिलंघनोत्तरम् । दृषद्वतीं चक्रनदीम् । अथ

तमुपागतमाकर्ण्य प्रीतो दुर्दर्शनं नृणाम् ॥ अजातशत्रुर्निरगात्सोपाध्यायः सुहृद्वृतः ॥ २३ ॥ गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा ॥ अभ्ययात्स हृषीकेशं प्राणाः प्राणमिवादृतः ॥ २४ ॥ दृष्ट्वा विक्लिन्नहृदयः कृष्णं स्नेहेन पांडवः ॥ चिराद्दृष्टं प्रियतमं सस्वजेऽथ पुनःपुनः ॥ २५ ॥ दोर्भ्यां परिष्वज्य रमाऽमलालयं मुकुंदगात्रं नृपतिर्हताशुभः ॥ लेभे परां निर्वृतिमश्रुलोचनो हृष्यत्तनुर्विस्मृतलोकविभ्रमः ॥ २६ ॥ तं मातुलेयं परिरभ्य निर्वृतो भीमः स्मयन्प्रेमजवाकुलेंद्रियः ॥ यमौ किरीटी च सुहृत्तमं मुदा प्रवृद्धबाष्पाः परिरेभिरेऽच्युतम् ॥ २७ ॥ अर्जुनेन परिष्वक्तो यमाभ्यामभिवादितः ॥ ब्राह्मणेभ्यो नमस्कृत्य वृद्धेभ्यश्च यथाऽर्हतः ॥ २८ ॥ मानितो मानयामास कुरुसृंजयकेकयान् ॥ सूतमागधगंधर्वा बंदिनश्चोपमंत्रिणः ॥ २९ ॥ मृदंगशंखपटहवीणापणवगोमुखैः ॥ ब्राह्मणाश्चारविंदाक्षं तुष्टुवुर्ननृतुर्जगुः ॥ ३० ॥ एवं सुहृद्भिः पर्यस्तः पुण्यश्लोकशिखामणिः ॥ संस्तूयमानो भगवान्विवेशाऽलंकृतं पुरम् ॥ ३१ ॥

प्रस्थम् ॥ २२ ॥ २३ ॥ प्राणा इंद्रियाणि प्राणं मुख्यं प्राणमिव ॥ २४ ॥ सस्वजे परिरेभे ॥ २५ ॥ रमाया अमलं निर्दोषमालयम् । विस्मृतो लोकव्यवहारो येन सः ॥ २६ ॥ २७ ॥ अर्जुनेन समत्वात्परिष्वक्त एव केवलम् । पादौ नमस्कुर्वन्नर्जुनः कृष्णेन भुजाभ्यां धृत इति भावः । यमाभ्यां त्वभिवादितश्चेति ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

दृषद्वतीतरणानंतरम् । इह पाञ्चालविनशनौ मार्गस्थावन्यौ देशभेदौ ज्ञेयौ न तु लोकप्रसिद्धाविति संदर्भः । एवमग्रेपि ॥ २२ ॥ तं कृष्णम् ॥ २३ ॥ स युधिष्ठिरः ॥ २४ ॥ अथ दर्शनानंतरम् ॥ २५ ॥ लोकव्यवहारः स्वागतप्रश्नादिरूपः लोकातीतप्रेममग्नत्वात् । रमामलालयमिति रमाया अन्ये ये आलयास्ते सदोषा एवातस्तस्या अनभिरुचेस्तेषु न साक्षात्स्थितिः किंत्वाभासमात्रेण । अस्य तु निर्दोषसर्वगुणाश्रयत्वात्साक्षादेव स्थितिरिति भावः ॥ २६ ॥ तं श्रीकृष्णम् । अर्जुनस्य पश्चादुक्तिश्चिरालिंगनार्था । प्रेम्णा शीघ्रागमनाशक्त्या वा ॥ २७ ॥ इति भाव इति—नरावतारत्वेन मया सम एवायमित्याशयः । यमाभ्यां नकुलसहदेवाभ्याम् । मानिन इति पाठे कुरुषु मान्यान् मानयामासेत्यर्थः । यथार्हतो यथोचितम् ॥ २८ ॥ उप समीपं समेत्य । मंत्रिणो मंत्रकर्तारः ॥ २९ ॥ ब्राह्मणास्तुष्टुवुश्चान्नर्तक्यो ननृतुर्गायकाश्च जगुः । यद्वा—ब्राह्मणा एव भक्त्या ननृतुर्जगुश्च । तदुक्तम्—“ ब्राह्मणो वासुदेवार्थं गायमानोऽनिशं परम् । नववर्षसहस्राणि कुबेरभवने वसेत् ॥ गीतनृत्यादि कुर्वीत द्विजदेवाग्नितुष्टये । न जीवनार्थं युंजीत विप्रः पापभिया क्वचित् ॥ ” इति वाराहे । श्रुतदेवोऽच्युतं प्राप्तमित्यारभ्य धुन्वन्वासो ननर्त ह इत्यन्तेनाग्रे वक्ष्यत्यपि । यद्वा—अस्माकमन्येषां च सद्धर्माणां पालयिता त्वं विजयी भवेति विप्रास्तुष्टुवुः । अरविंदाक्षं दृष्ट्वैव सर्वतापहरं परमामोदप्रदं चेत्यर्थः ॥३०॥ एवमुक्तप्रकारेण । पर्यस्तः परिवृतः पुण्यो मनोज्ञः साक्षाद्धर्मरूपो वा श्लोको येषां युधिष्ठिरादीनां तेषां शिखामणिर्मुख्यो न तादृशपुण्यश्लोकोऽन्योस्तीति भावः ॥३१॥

संसिक्तवर्त्म करिणां मदगंधतोयैश्चित्रध्वजैः कनकतोरणपूर्णकुंभैः ॥ मृष्टात्मभिर्नवदुकूलविभूषणस्रग्गंधैर्नृभिर्युवतिभिश्च विराजमानम् ॥ ३२ ॥ उद्दीप्तदीपबलिभिः प्रतिसद्म जालनिर्यातधूपरुचिरं विलसत्पताकम् ॥ मूर्धन्यहेमकलशै रजतोरुशृंगैर्जुष्टं ददर्श भवनैः कुरुराजधाम ॥ ३३ ॥ प्राप्तं निशम्य नरलोचनपानपात्रमौत्सुक्यविश्लथितकेशदुकूलबंधाः ॥ सद्यो विसृज्य गृहकर्म पतींश्च तल्पे द्रष्टुं ययुर्युवतयः स्म नरेंद्रमार्गे ॥ ३४ ॥ तस्मिन्सुसंकुल इभाश्वरथद्विपद्भिः कृष्णं सभार्यमुपलभ्य गृहाधिरूढाः ॥ नार्यो विकीर्य कुसुमैर्मनसोपगुह्य सुस्वागतं विदधुरुत्स्मयवीक्षितेन ॥ ॥ ३५ ॥ ऊचुः स्त्रियः पथि निरीक्ष्य मुकुंदपत्नीस्तारा यथोडुपसहाः किमकार्यऽमूभिः ॥ यच्चक्षुषां पुरुषमौलिरुदारहासलीलावलोककलयोत्सवमातनोति ॥ ३६ ॥ तत्रतत्रोपसंगम्य पौरा मंगलपाणयः ॥ चक्रुः सपर्यां कृष्णाय श्रेणीमुख्या हतैनसः ॥ ३७ ॥ अंतःपुरजनैः प्रीत्या मुकुंदः फुल्ललोचनैः ॥ ससंभ्रमैरभ्युपेतः प्राविशद्राजमंदिरम् ॥ ३८ ॥ पृथा विलोक्य भ्रात्रेयं कृष्णं त्रिभुवनेश्वरम् ॥ प्रीतात्मोत्थाय पर्यंकात्सस्नुषा परिषस्वजे ॥ ३९ ॥

चित्रध्वजादिभिर्विराजमानम् ॥ ३२ ॥ प्रतिसद्म उद्दीप्तैर्दीपैर्बलिभिः पुष्पादिप्रकरैश्च जुष्टम् । जालेभ्यो गवाक्षेभ्यो निर्गतैर्धूपै रुचिरम् । विलसंत्यः पताका यस्मिंस्तत् । मूर्धन्या मूर्ध्नि भवा हेमकलशा येषां तैः । रजतमयानि रूप्यमयान्युरूणि स्थूलानि शृङ्गाणि कलशाधस्तनभूमिका येषां तैर्भवनैर्जुष्टं कुरुराजस्य धाम पुरं ददर्श ॥ ३३ ॥ नराणां लोचनानि तेषां पानस्य सादरवीक्षणस्य पात्रं विषयम् । किं पुनर्नारीणामित्यर्थः ॥ ३४ ॥ सुष्ठु स्वागतं तत्प्रश्नादिकं प्रियमुत्स्मयवीक्षितेनैव विदधुः ॥ ३५ ॥ उडुपसहाः चंद्रसहचरा इत्यर्थः । अमूभिः किं पुण्यमकारि ॥ ३६ ॥ श्रेण्य एकशिल्पोपजीविनां संघास्तेषु मुख्याश्च ॥ ३७ ॥ अभ्युपेतोभिगमनेन सत्कृतः ॥ ३८ ॥ सस्नुषा द्रौपदीसहिता ॥ ३९ ॥

पुरं वर्णयति–संसिक्तेति । संसिक्तवर्त्म कुरुराजधाम ददर्शेति द्वितीयेनान्वयः । संसिक्तानि वर्त्मानि यस्मिंस्तत्तथा । ‘ धाम देहे गृहे पुरे ’ इति कोशात् ॥ ३२ ॥ ३३ ॥ इत्यर्थ इति–नारीणां तु रम्यपुरुषावलोकनमत्यानन्दकरमिति भावः । मध्याह्नभोजनोत्तरं केषांचिद्विषयासक्तानां शय्यायां निवेशादित्युक्तं तल्पे इति । ‘ तल्पं दाराट्टशय्यायाम् ’ इति कोशात् ॥ ३४ ॥ उत्स्मयो विनयस्तेन वीक्षितं तेन । “ अगर्वे विनये ईषद्धास्याधिक्येपि चोत्स्मयः ” इति निरुक्तिः । तस्मिन्राजमार्गे ॥ ३५ ॥ इत्यर्थ इति । उडुपशब्दस्यानेकार्थत्वादित्थं व्याख्येयमिति भावः । “ चंद्रे प्लवे शिवेऽब्धौ च कीर्त्यत उडुपध्वनिः ” इति निरुक्तिः । यासां चक्षूंषि यच्चक्षूंषि तेषाम् ॥ ॥ ३६ ॥ तत्रतत्र स्थलेस्थले “ श्रेणी राजौ तथा संघ एकशिल्पोपजीविनाम् ” इति धरणिः । यद्वा–श्रेणीमुख्या नगरप्रधानाः ॥ ३७ ॥ अभिगमनेन संमुखगमनेन ॥ ३८ ॥ स्नुषा पुत्रवधूः । स्नुषया सह सस्नुषा पृथा

गोविंदं गृहमानीय देवदेवेशमादृतः ॥ पूजायां नाविदत्कृत्यं प्रमोदोपहतो नृपः ॥ ४० ॥ पितृष्वसुर्गुरुस्त्रीणां कृष्णश्चक्रेऽभिवादनम् ॥ स्वयं च कृष्णया राजन्भगिन्या चाभिवंदितः ॥ ४१ ॥ श्वश्र्वा संचोदिता कृष्णा कृष्णपत्नीश्च सर्वशः ॥ आनर्च रुक्मिणीं सत्यां भद्रां जांबवतीं तथा ॥ ४२ ॥ कालिंदीं मित्रविंदां च शैब्यां नाग्नजितीं सतीम् ॥ अन्याश्चाभ्यागता यास्तु वासःस्रङ्मण्डनादिभिः ॥ ४३ ॥ सुखं निवासयामास धर्मराजो जनार्दनम् ॥ ससैन्यं सानुगामात्यं सभार्यं च नवंनवम् ॥ ४४ ॥ तर्पयित्वा खांडवेन वह्निं फाल्गुनसंयुतः ॥ मोचयित्वा मयं येन राज्ञे दिव्या सभा कृता ॥ ४५ ॥ उवास कतिचिन्मासान्राज्ञः प्रियचिकीर्षया ॥ विहरन्रथमारुह्य फाल्गुनेन भटैर्वृतः ॥४६॥ इति श्रीमद्भा० महा० द० उत्तरार्धे एकसप्ततितमोऽध्यायः ॥७१॥ श्रीशुक उवाच ॥ एकदा तु सभामध्य आस्थितो मुनिभिर्वृतः॥ब्राह्मणैः क्षत्रियैर्वैश्यैर्भ्रातृभिश्च युधिष्ठिरः ॥१॥

कृत्यं प्रकारविशेषम् । प्रमोदेनोपहतोऽभिभूतः ॥ ४० ॥ गुरुस्त्रीणां च । कृष्णया द्रौपद्या च । भगिन्या सुभद्रया ॥ ४१ ॥ आनर्चार्चितवती ॥ ४२ ॥ अन्याश्च याः कृष्णपत्न्योऽभ्यागतास्ता अपि ॥ ४३ ॥ प्रत्यहं नवंनवं यथा भवति तथा सुखं निवासयामास ॥ ४४ ॥ कथंभूतम् । यः प्रेम्णा नित्यं फाल्गुनेन संयुतः । अत एव तस्य सहायेन सता येन खांडवेन वह्निं तर्पयित्वा तत्र च मयं मोचयित्वा तं मयं प्रयुज्य युधिष्ठिराय दिव्या सभा कृता तं जनार्दनम् । अनेन राज्ञः कृष्णोपकारानुस्मरणं दिव्यत्वात्सभाया यथामनोरथं सर्वावकाशसंपादनं च दर्शितम् ॥ ४५ ॥ ४६ ॥ इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्रीध० टीकायामेकसप्ततितमोऽध्यायः ॥ ७१ ॥ ततो द्विसप्ततितमे राज्ञा कार्ये निवेदिते ॥ दुर्जयं मागधं बुद्ध्वा भीमेनाघातयद्धरिः ॥ १ ॥ आस्थितः आसनमिति शेषः ॥ १ ॥

परिषस्वजे । स्नुषा तु पश्चात्स्थित्वैव नम्रत्वादिना तमादृतवतीत्यग्रे वक्ष्यते । यद्यपिविद्यमानता मात्रार्थस्य सहशब्देन समासः किन्त्वेकक्रियायोगिन एवेति शब्दस्मृतिस्तथाप्यत्र वक्ष्यमाणरीत्या समासस्यार्षत्वमंगीकार्यम् ॥ ३९ ॥ गोविंदं शब्दमात्रैकगोचरम् । कथंचित्प्राकट्येपि । देवदेवानां श्रीब्रह्मादीनामपीशम् । आदृत इति । कथं संभ्रान्त इतस्ततो धावस्यहं त्वदधीन एवालं पूजाप्रयासेन सुखमत्रोपविश त्वां पश्यानीत्येवं बहुधा कृष्णेनादृतः सन् नृपः सर्वपूजोपयोगिसंपादने समर्थोपि नाविदत् । तत्र हेतुः—प्रमोदेन भगवदागमनजन्याह्लादेन ॥ ४० ॥ पितृष्वसुः पृथायाः । गुरुस्त्रीणां बाह्लीकादिभार्याणाम् । भगिन्येत्युक्तेर्ज्येष्ठभ्रातुः कनिष्ठभगिन्या अप्यभिवादनं कर्तव्यमेवेति सूचितम् । ईश्वरत्वाद्वा सर्वनमस्य इति ॥ ४१ ॥ श्वश्र्वा पृथया । शैब्यामिति मित्रविंदाविशेषणं द्वितीयतथाशब्देनानुक्तसमुच्चायकेन लक्ष्मणा च गृहीता । यद्वा—शिवं शुभं तद्युक्तां सर्वसुखपूर्णां लक्ष्मणामित्यर्थः॥ ४२॥ अन्या अनुक्तनाम्न्यः । अभ्यागतास्तत्रागताः । मंडनानि भूषणानि “ मंडनं भूषणे क्लीबं स्यात्त्रिष्वलंकरिष्णुनि ” इति मेदिनी ॥ ४३ ॥ ता अपि कृष्णपत्नीरपि ॥ ४४ ॥ यः कृष्णः । अत एव नित्यसंयुतत्वादेव तस्यार्जुनस्य । येन कृष्णेन । तत्र च खांडवे च । मयं दैत्यम् । तं खाण्डववह्निमुक्तं प्रयुज्य प्रेर्य अनेन सभाकारणादिकथनेन । राज्ञो युधिष्ठिरस्य ॥ ४५ ॥ तर्पयित्वेत्यादिश्लोकद्वयेनाष्टपञ्चाशत्तमाध्यायोक्तैव कथा पुनरत्रावेशादेवानुकथिता । ततश्चायं क्रमः । इंद्रप्रस्थे खांडवदाहगांडीवादिप्राप्तिमृगयाकालिंदीप्राप्तिवार्षिकचातुर्मास्यत्रासास्ततो द्वारकागमनकालिंदीभद्रादिविवाहनरकवधादिबहुकथांते एव राजसूयानिमंत्रणादिकामिति ज्ञेयम् ॥ ४६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कंधोत्तरार्द्धे एकसप्ततितमोऽध्यायः ॥ ७१ ॥ ततः सभाप्राप्त्यायनंतरम् । राज्ञा युधिष्ठिरेण । कार्ये यज्ञरूपे ( १ ) । एकदा कतिपयदिनविश्रामोत्तरं योग्यसमय

आचार्यैः कुलवृद्धैश्च ज्ञातिसंबंधिबांधवैः ॥ शृण्वतामेव चैतेषामाभाष्येदमुवाच ह ॥ २ ॥ युधिष्ठिर उवाच ॥ क्रतुराजेन गोविंद राजसूयेन पावनीः ॥ यक्ष्ये विभूतीर्भवतस्तत्संपादय नः प्रभो ॥ ३ ॥ त्वत्पादुके अविरतं परि ये चरंति ध्यायंत्यभद्रनशने शुचयो गृणंति ॥ विंदंति ते कमलनाभ भवापवर्गमाशासते यदि त आशिष ईश नान्ये ॥ ४ ॥ तद्देवदेव भवतश्चरणारविंदसेवाऽनुभावमिह पश्यतु लोक एषः ॥ ये त्वां भजंति न भजंत्युत वोभयेषां निष्ठां प्रदर्शय विभो कुरुसृंजयानाम् ॥ ५ ॥

शृण्वतामेवेति । यत्प्रसन्नः कृष्णः करोति न तदन्यः कश्चिदपि कर्तुं समर्थ इति निश्चित्य सर्वानेव ताननादृत्य कृष्णमुवाचेत्यर्थः । आभाष्य भो भोः कृष्ण भक्तवत्सलेत्येवं संबोध्य ॥ २ ॥ विभूतीरंशान् ॥ ३ ॥ एष चक्रवर्तिनां मनोरथः कथं त्वया क्रियत इति चेदत आह । त्वत्पादुके इति । परि ये चरंतीति यच्छब्दव्यवधानमार्षम् । ये परिचरंति देहेन ध्यायंति मनसा । अभद्रस्य नशने नाशके गृणंति वाचा । ते भवस्यापवर्गं मोक्षं विंदंति । यद्याशासते तर्ह्याशिषोऽपि त एव विंदंति नान्ये चक्रवर्तिनोऽपि ॥ ४ ॥ भगवतो भक्तपक्षपातमाविष्कारयन्नाह । तद्देवदेवेति । तत्तस्मात्पश्यतु साक्षात् । एवं निश्चितेऽपि ये कर्मादिप्रधानाः केचित्कुरुसृंजया

इत्यर्थः । आसनं नृपोचितासनम् ॥ १ ॥ एतेषां मुन्यादीनाम् । इत्यर्थ इति । अनादरे षष्ठीयमिति ध्येयम् । इदं वक्ष्यमाणम् ॥ २ ॥ पावनीः त्वद्दर्शनेनात्मनः पावयन्तीति तथा च ता अपि त्वद्दर्शनदापनेन कृतार्थीकर्तुमिति । " तस्मिन्नेव क्रतुवरे भवन्तं वै सुरादयः । दिदृक्षवः समेष्यंति राजानश्च यशस्विनः ॥ श्रवणात्कीर्तनाद्ध्यानात्पूयन्तेंऽतेव्यसायिनः । तव ब्रह्ममयेशस्य किमुतेक्षाभिमर्शनम् ॥ " इत्युद्धवोक्तेः । हे गोविंदेति । निजाशेषैश्वर्यप्रकटनार्थं भुव्यवतीर्णस्य तव भक्तानामस्माकमीदृगिच्छा युक्तैवेति भावः । देवादीनामपि त्वद्विभूतिबुद्ध्यैव यजनादात्मनोऽनन्यपरत्वमेव भरतवद्दर्शितम् । पावनीः त्वद्भक्तिविघ्नादिदोषनिरसनीस्तृप्तत्वात् । ' त्वां सेवतां सुरकृता बहवोंतरायाः ' इत्युक्तेः । अंशान् इंद्रादीन् । " विभूतिस्संपदैश्वर्योत्पत्त्यंशेषु च भस्मनि " इति धरणिः । प्रभो इति त्वच्छक्त्यैव राजसूयः सेत्स्यतीति भावः । यद्वा—हे नः पांडवानां प्रभो त्वदेकपराणामस्माकं मनोरथः कथं न सेत्स्यतीति भावः ॥ ३ ॥ भगवदाक्षेपाशंकां वारयति—एष इत्यादिना । परिचरंति नित्यं पूजयन्ति । अभद्रं नश्यत आभ्यामित्यभद्रनशने आशासत इच्छन्ति आशिषोऽभिलषितार्थात् त एव पादसेवका एव तव पादुके उपानहावपि किं पुनः साक्षात्त्वच्चरणाब्जद्वयं परिचरंति इह कैमुत्यं ज्ञेयमेवमग्रेपि ततोप्यनायासेन ये कदापि गृणन्ति श्रीकृष्णपादुके एव मम गतिरिति कीर्तयन्तिमात्रं यतस्ते स्वत एवाभद्रनशने अतः शुचयो बहिरन्तर्भक्तिविघातकाभद्ररहितास्ते भक्तिमात्रपुरुषार्था अपि यदि कथंचिद्भक्त्युपयुक्तत्वेनाशासते तदाऽपवर्गं संसारध्वंसमाशिषः सर्वान्प्राकृतांश्च कामान्विन्दन्ति । " सर्वं मद्भक्तियोगेन मद्भक्तो लभतेंऽजसा । स्वर्गापवर्गं मद्धाम कथंचिद्यदि वाञ्छति ॥ " इति स्वयं भगवदुक्तेः । न त्वन्ये " सर्वासामपि सिद्धीनां मूलं त्वच्चरणार्चनम् " इत्यादेः । उभयत्रापि हेतुः—हे कमलनाभ स्वांशेन सर्वाश्रय । हे ईश सर्वेश्वरेति तोषिणीकाराः । अत्र विश्वनाथः—त्वच्चरणसरोजं पश्यतां त्वयाप्यपारकृपयात्मसात्कृतानामस्माकं राजसूये खलु न कोप्याग्रहः किं तु त्वामत्रत्या दुष्टान्तःकरणाः केचित्परमेश्वरं न मन्यन्ते नरमेव मत्वा प्रत्युत दोषदर्शिनो निंदन्त्येतदस्माकं शल्यमतो राजसूयमिषेण ब्रह्मरुद्रादीन्सर्वज्ञान्ब्रह्मर्ष्यादीनपि देवादीनपि चतुर्दशलोकस्थानाहूय काचित्सभा कार्या । तत्र सर्वाग्रिमपूजा तैर्यस्य स्थापयिष्यते स एव परमेश्वर इति साक्षाद्दर्शयित्वा हृच्छल्यं तन्निष्कासनीयमित्येव मदभीप्सितमित्याह—त्वदिति त्रिभिः । अभद्रस्याविद्यापर्यंतस्य नशनं याभ्यां ते ये ध्यायंति यद्याशासते तर्हि त एव विंदंति न त्वन्ये त्वच्चरणानर्चकाः कर्मिप्रभृतयः । किंतु त्वद्भक्ता नैवाशासत इत्यर्थः । अस्माकं तु त्वच्चरणाश्रितानां त्वां साक्षादेव पश्यतामन्यकामनाभावे कैमुत्यमेवेति भावः ॥ ४ ॥ आविष्कारयन् यतो भवच्चरणसेवाफलमनुभवसिद्धमतो लोकोपि प्रत्यक्षप्रमाणोत्थमाहात्म्यं दृग्विषयं करोत्विति प्रार्थयन्नित्यर्थः । यत

न ब्रह्मणः स्वपरभेदमतिस्तव स्यात्सर्वात्मनः समदृशः स्वसुखानुभूतेः ॥ संसेवतां सुरतरोरिव ते प्रसादः सेवानुरूपमुदयो न विपर्ययोऽत्र ॥ ६ ॥

भगवद्भक्तिं न बहु मन्यंते तेषां मोहनिवृत्तये ये त्वां भजंति यदि वा न भजंति तेषामुभयेषां निष्ठां स्थितिं प्रदर्शय ॥ ५ ॥ ननु रागादिरहिते मयि कथमिदं वैषम्यं स्यात्त त्राह । नेति । स्वः पर इति भेदमतिस्तव न स्यादेव । कुतः । ब्रह्मणो निरुपाधेः । किंच सर्वस्यात्मनोऽतः समदृशः । किंच स्वसुखानुभूतेः । अतो रागाद्यभावादिति भावः । तथापि संसेवमानानामेव त्वत्प्रसादो नान्येषाम् । तत्राऽपि सेवाऽनुरूपमुदयः फलं न त्वत्र विपर्ययोऽन्यथाभावः । यथा कल्पद्रुमस्य रागादिराहित्येऽपि सेवकेष्वेव

यस्मादीदृशस्ते सेवानुभावस्तत्तस्माद्धेतोः । एवं निश्चितेपि भगवद्भक्तिरैहिकामुष्मिकफलदास्तीत्येवं निर्णीतेपि । तेषामभक्तानाम् ॥ ९ ॥ भगवानाशंकते—नन्विति । ननु कुतस्तर्हि मद्भक्तिमहिमज्ञेन त्वया परिचर्यादिकं हित्वा राजसूयमिष्यते तत्राह—तदिति । यस्मादेवमेव सत्यं तत्तस्मात् हे देवदेव सर्वाराध्यानामप्याराध्य एवं यद्यपि तव परिचर्ययैव सर्वदेवतृप्तिः सिध्यतीति वयं जानीमस्तथापीत्यर्थः । तत्किमित्यत आह—इह सर्वलोककल्मषामये भवदवतारे एष प्रायो बहिःसंपत्तिमात्रदर्शनचमत्कारी लोको भवतश्चरणारविंदसेवानुभावं पश्यतु तदेव दर्शय । ये इति । येऽस्मल्लक्षणाः कुरुसृंजयास्त्वां भजन्ति ये उत वा दुर्योधनादयस्त्वां न भजंति तेषामुभयेषामपि बहिर्मुखेष्वपि त्वद्भक्तिमहिमप्रदर्शनार्थमेवायमस्माकमुद्यम इति भावः । सेयमानुषंगिकी कामना श्रीनारददर्शितपारमेष्ठ्यकामत्वाभिप्रायस्तु तत्सेवोपयोगो नेति संकोचत्वाद्गोपितः । अत्र विश्वनाथः—तत्तस्मात्तादृशसभायां वृत्तायां तैर्ब्रह्मादिभिस्तव परमेश्वरत्वे स्थापिते सति एष भूर्लोकस्थजनः पश्यतु ततश्च कुरुसृंजयादीनां मध्ये त्वामीश्वरं नत्वा ये भजन्ति ये वा प्राकृतमानुषं मत्वोत न भजन्ति तेषामुभयेषां निष्ठां सद्गतिमसद्गतिं च तैरुच्च मानां त्वं दर्शय । करणीयेऽस्मिन्राजसूये स्वसंमतिप्रदानेनेति भावः । सुरतरोरिवेति । तस्य यथायोग्योयं भजत्वयोग्योयं मा भजत्विति वैषम्यं नास्ति किन्तु सम्यक्सादरं सेवमानमात्राणां संबन्धे प्रसाद एव स्यात् । तथा तवेत्यर्थः । तथाप्यत्र भजने तद्वत्सेवानुरूपमेवोदयः फलं न स्यात्किन्त्वधिकोपि स्यात्, दैवात्सेवावैगुण्ये विपर्ययः फलाभावोपि न स्यात् । तत्र पूर्वं “ तुलसीदलमात्रेण जलस्य चुलकेन च । विक्रीणीते स्वमात्मानं भक्तेभ्यो भक्तवत्सलः ॥ ” इति विष्णुधर्मोक्तेः । तत्र भक्तेभ्य इत्युक्तत्वाद्भावाख्यभक्तितारतम्येनैव फलततारम्यामिति भावः । अथोत्तरं त्यक्त्वा स्वधर्ममित्यादिवत्, अत्र च विश्वास एव कारणमिति भावः । अत्र विश्वनाथः—ननु किं ममापि मत्सरतास्ति यदनुकूलानामुत्कर्षं प्रतिकूलानामपकर्षं दर्शयामीति तत्राह—नेति । स्वपर इति भेदमतिस्तव न स्यादेव कुतो ब्रह्मणो निरुपाधेः । किंच सर्वस्यात्मनः त्वमेवांतर्यामी भूत्वाऽनादि कर्मप्रवाहपतितं सर्वमेव प्रति स्वकर्मणि प्रेरयासि । समदृश इति त्वमेवेश्वरस्तत्तदनुरूपमेव शुभमशुभं वा फलं ददासि न तु क्वापि ते पक्षपात इति भावः । किंच तैः सुखिभिर्दुःखिभिर्वा तव न किमपि कृत्यमित्याह—स्वसुखानुभूतेः । ननु तर्हि मम वात्सल्यौदार्यादयो गुणाः किंविषयकास्तत्राह—संसेवतां त्वां सम्यक्सेवमानेषु तेषु प्रसादो वात्सल्यं यत एव कर्मबंधनकर्तृकात्मपर्यंतप्रदानलक्षणमौदार्यं च ते भवेत् । ननु तर्ह्यायातं ममापि वैषम्यं तत्राह—सुरतरोरिवेति । गुणदोषादिकमविचारयतस्तस्य स्वाश्रितमात्रे यथा प्रसादस्तथा तवापि । यः कोपि सेवतां तत्रैव प्रसादस्तत्रापि सेवानुरूपमेवोदयः । सेवातारतम्येनैव प्रसादफलस्याप्युदयतारतम्यमेव नात्र वैषम्यं विपर्ययोऽन्यथाभावस्तस्मादवैषम्येपि तव भक्तेषु वात्सल्यवशादेव पक्षपाते सिद्धे तेषामनुकूलप्रतिकूलेषु तवाप्यानुकूल्यप्रातिकूल्ये आयात एवेति भावः । तत्राक्षेपे हेतुमाशंकते—कुत इति । न केवलं निरुपाधिरेव त्वमित्याह—किंचेति । अतः सर्वात्मत्वात् । अन्यदाह—स्वसुखस्य स्वरूपानंदस्यानुभूतिरनुभवः पूर्णानन्दोहमिति यस्य तथा तस्य । अतः स्वानंदपूर्णत्वात् । इति भाव इति—पूर्णानन्दरूपस्य रागद्वेषादयो जीवधर्मा

श्रीभगवानुवाच ॥ सम्यग्व्यवसितं राजन्भवता शत्रुकर्शन॥कल्याणी येन ते कीर्तिर्लोकाननुभविष्यति॥७॥ऋषीणां पितृदेवानां सुहृदामपि नः प्रभो॥ सर्वेषामपि भूतानामीप्सितः क्रतुराडयम् ॥८॥ विजित्य नृपतीन्सर्वान्कृत्वा च जगतीं वशे॥ संभृत्य सर्वसंभारानाहरस्व महाक्रतुम्॥९॥एते ते भ्रातरो राजँल्लोकपालांशसंभवाः ॥ जितोऽस्म्यात्मवता तेऽहं दुर्जयो योऽकृतात्मभिः ॥ १० ॥ न कश्चिन्मत्परं लोके तेजसा यशसा श्रिया ॥ विभूतिभिर्वाऽभिभवेद्देवोऽपि किमु पार्थिवः ॥ ११ ॥

फलजनकत्वं नान्येषु ॥ ६ ॥ सत्यं मद्भक्तानामेव कैवल्यादि नान्येषामित्यनुमोदमान आह । सम्यगिति शत्रुकर्शनेति । संबोधयन्सर्वराजविजयशक्तिं संचारयति । अनुभविष्यति द्रक्ष्यति । सर्वलोकव्याप्तो भविष्यतीत्यर्थः ॥ ७ ॥ ८ ॥ किमत्र मयाऽन्येन वा संपादनीयं तव तु सुकर एव राजसूय इत्याह । विजित्येति । जगतीं सर्वां पृथ्वीम्। संभारान्यज्ञोपस्करान्संभृत्य संपाद्याहरस्वानुतिष्ठेत्यर्थः ॥ ९ ॥ ननु नृपतिविजयादि कथं शक्यं स्यादत आह । एत इति । किंच आत्मवता जितेंद्रियेण ते त्वयाऽहं च जितोऽस्मि वशीकृतोऽस्मि । अकृतात्मभिरजितेंद्रियैः ॥ १० ॥ आस्तां तावदेवंभूतस्य तव परैरभिभवशंका अकिंचनमपि मत्परं कोऽपि नाभिभवितुं प्रभवतीत्याह । न

नोदयंत इत्याशयः । नन्वसुराणां दुःखप्रदत्वं सुराणां सुखदत्वं मम प्रसिद्धमिति चेदाह—तथापीति । यद्यपि त्वं सम एव तथापि तत्रापि प्रसादेपि ॥ ६ ॥ नृपोक्तमंगीकुर्वन्नाह—सत्यमित्यादि । येन व्यवसितेन क्रतुराज' निश्चयेन । इत्यर्थ इति—नहि जडायाः कीर्तेर्लोकानुभवोस्ति तथापि तदभिमानिदेवतामालक्ष्येत्थमुक्तमिति भावः । " राजा राजसूयेन यजेत " इति श्रुत्या हे राजन्निति महाराजकर्तव्यत्वमेव राजसूयस्योक्तमिति भावः । शत्रुकर्षणेति सर्वराजजयशक्तिं संचारयति यद्येतादृश्यापि संपत्त्या शत्रून्नोच्छेदयिष्यति तर्हि किमनयेति भावः । लोकाननुलक्ष्यीकृत्य भविष्यतीति त्वत्कीर्तिरेव मया सर्वथा निष्पादनीयेति भावः ॥ ७ ॥ न केवलं तवैवाभीष्टोऽयं क्रतुः किन्तु ऋष्यादीनां सर्वेषामेवेत्याह—ऋषीणामिति । ऋष्यादीनां पूजाप्तेः सुहृदां मानाप्तेरन्येषां केषांचित्कौतुकदर्शनाप्तेः, केषांचित्स्थावरादीनां यज्ञार्थे निजव्यापादात्स्वदेहसाफल्याप्तेश्च सर्वेषामभिमत एवेति भावः ॥ ८ ॥ श्रीकृष्ण आह—किमत्रेति । अत्र यागनिमित्तम् । इत्यर्थ इति—उपसर्गादनुष्ठानार्थेऽपीति भावः ॥ ९ ॥ सांप्रतं सर्वजयो दुःशक इत्याशंकते—नन्विति । कैमुत्याभिसंध्याह—किञ्चेति । आत्माहमेव सेव्यत्वेन विद्यते यस्य तेनात्मवता मत्परमभक्तेनेत्यर्थः । न कृतो मयि नार्पित आत्मा यैस्तैर्मदभक्तैः वस्तुतस्तु लोकपाला अंशसंभवा येषां ते स्वयं भगवतोन्तरङ्गपरिकरत्वात् । 'यूयं नृलोके बत भूरिभागाः' इत्याद्युक्तेः । तेभ्योपि तस्य श्रेष्ठ्यमाह—हे राजन्निति । नाहं त्वां विना कस्यापि वशवर्तीति चाह—जितोस्मीति ॥ १० ॥ तावदधुना । एवंभूतस्य मद्वशीकर्तुर्लो

श्रीशुक उवाच ॥ निशम्य भगवद्गीतं प्रीतः फुल्लमुखांबुजः ॥ भ्रातॄन्दिग्विजयेऽयुंक्त विष्णुतेजोपबृंहितान् ॥ १२ ॥ सहदेवं दक्षिणस्यामादिशत्सह सृंजयैः ॥ दिशि प्रतीच्यां नकुलमुदीच्यां सव्यसाचिनम् ॥ प्राच्यां वृकोदरं मत्स्यैःकेकयैः सह मद्रकैः ॥ १३ ॥ ते विजित्य नृपान्वीरा आजह्रुर्दिग्भ्य ओजसा ॥ अजातशत्रवे भूरि द्रविणं नृप यक्ष्यते ॥ १४ ॥ श्रुत्वाऽजितं जरासंधं नृपतेर्ध्यायतो हरिः ॥ आहोपायं तमेवाद्य उद्धवो यमुवाच ह ॥ १५ ॥ भीमसेनोऽर्जुनः कृष्णो ब्रह्मलिंगधरास्त्रयः ॥ जग्मुर्गिरिव्रजं तात बृहद्रथसुतो यतः ॥ १६ ॥ ते गत्वातिथ्यवेलायां गृहेषु गृहमेधिनम् ॥ ब्रह्मण्यं समयाचेरन्राजन्या ब्रह्मलिंगिनः ॥ १७ ॥ राजन्विद्ध्यतिथीन्प्राप्तानर्थिनो दूरमागतान् ॥ तन्नः प्रयच्छ भद्रं ते यद्वयं कामयामहे ॥ १८ ॥ किं दुर्मर्षं तितिक्षूणां किमकार्यमसाधुभिः ॥ किं न देयं वदान्यानां कः परः समदर्शिनाम् ॥ १९ ॥

कश्चिदिति । तेजसा प्रभावेण । विभूतिभिः सैन्यादिसामग्रीभिः ॥ ११ ॥ अयुंक्त नियुक्तवान् । विष्णोस्तेजसोपबृंहितान्संवर्धितान् । तेजोपबृंहितानिति संधिरार्षः[1] ॥ १२ ॥ नकुलादीनां मत्स्यादिभिः सहायैर्यथासंख्येन संबंधः ॥ १३ ॥ कथंभूताय । यक्ष्यते यागं करिष्यते ॥ १४ ॥ आद्यो हरिः श्रीकृष्णः ॥ १५ ॥ ब्रह्मलिंगधरा ब्राह्मणलिंगधारिणः । यतो यत्र बृहद्रथसुतो जरासंधः ॥ १६ ॥ गृहेषु वर्तमानं समयाचेरन् सम्यगयाचंतेत्यर्थः ॥ १७ ॥ १८ ॥ नन्विदं कामयामह इति विशेषो निर्दि

कपालांशोद्भवभ्रातृयुक्तस्य । मत्परं मत्परायणमात्रं किमुत युष्मानिति भावः ॥ ११ ॥ विष्णोर्विश्वव्यापकस्य तेजसोपबृंहितान्दिग्विजयार्थं तदानीं निजतेजोर्पणादिति भावः ॥ १२ ॥ यथासंख्यमाह—सहदेवं सृंजयैः भीमं मत्स्यैर्नकुलं कैकयैस्सव्यसाचिनं मद्रकैश्च सहेति तत्रातिवात्सल्येन नकुलसहदेवौ प्रति दक्षिणप्रतीच्यौ व्यदिशत्तत्र बहुलदुर्गमदुर्जयाभावात् । सर्वदुर्गमसंचारित्वेन सर्वजयित्वेन च सव्यसाचिनमुदीच्यां महापर्वतमयत्वेन तस्या अतिदुर्गमत्वात्, दुर्जयबहुलदेवगंधर्वमयत्वाच्च । अत एव सव्येनापि पाणिना धनुर्गुणाकर्षणादिना तस्य माहात्म्यमप्युक्तम् । भीमश्च प्राच्यां तत्समबलजरासंधजयापेक्षयेति ज्ञेयम् ॥ १३ ॥ ते सहदेवादयस्त्रयः । अजातशत्रवे इति जितोपि कश्चित्तस्मिन्द्वेषं नाऽकरोत्किन्तु भक्तिमेव स्वभावतस्तस्य कस्मिंश्चिदपि द्वेषाभावात् । विजयस्तु केवलं राजसूयापेक्षयैवेति भावः । आजिग्युरिति पाठे जयतेर्द्विकर्मत्वान्नृपान् द्रविणं विजित्येत्यन्वयः । हे नृपेति स्वपूर्वेषामिदं यशः कर्णपुटैरापीयतामिति भावः ॥ १४ ॥ ननु "जरासंधं निहत्यैव पाण्डवैस्तु दिशो जिताः" इति पुराणांतरविरोधस्य कः परिहार इति चेदत्राह—शिष्टोक्तिरेवेति गृहाण । सा च—"पूर्वाः कथाः परं ब्रूयुः पराः पूर्वं तथैव च । मोहनार्थाय दुष्टानां सर्वव्यत्यास इष्यते ॥" इति विजयध्वजः ॥ १५ ॥ हेति सूचितमितिहासमाह—ब्राह्मणलिंगानि वेदपाठादीनि । सभापर्वणि तु "तपस्विनां ब्राह्मणानां स्नातकानां परिच्छदाम्" इत्युक्तं जरासंधवधार्थं भीमस्यैव गन्तव्येर्जुनगमने हेतुरपि तत्रैवोक्तः । "मयि नीतिर्बलं भीमे रक्षिता चावयोर्जयः । मागधं साधयिष्याम इष्टिं त्रय इवाग्नयः ॥" इति॥१६॥ तं जरासंधम् । आतिथ्यवेलायामादित्ये दिनमध्यं गाहमाने । इत्यर्थ इति—अतीते लिङार्षं इत्याशयः ॥ १७ ॥ तद्वस्तु ॥ १८ ॥ स आक्षिपति—नन्विति । विशेषो याच्यवस्तुभेदः । अन्यथा निर्देशाभावे । अतोत्र

१ संधिरार्षोऽत्र तेजश्शब्दोऽदन्तो वा बोध्यः ।

योऽनित्येन शरीरेण सतां गेयं यशो ध्रुवम् ॥ नाऽऽचिनोति स्वयंकल्पः स वाच्यः शोच्य एव सः ॥ २० ॥ हरिश्चंद्रो रंतिदेव उञ्छवृत्तिः शिबि र्बलिः ॥ व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः ॥ २१ ॥ श्रीशुक उवाच ॥ स्वरैराकृतिभिस्तांस्तु प्रकोष्ठैर्ज्याहतैरपि ॥ राजन्यबंधून्विज्ञाय दृष्ट पूर्वानचिंतयत् ॥ २२ ॥ राजन्यबंधवो ह्येते ब्रह्मलिंगानि बिभ्रति ॥ ददामि भिक्षितं तेभ्य आत्मानमपि दुस्त्यजम् ॥ २३ ॥ बलेर्नु श्रूयते कीर्तिर्वितता दिक्ष्वकल्मषा ॥ ऐश्वर्याद्भ्रंशितस्यापि विप्रव्याजेन विष्णुना ॥ २४ ॥

श्यताम् । अन्यथा यस्य पुत्रादेर्वियोगो दुःसहः स कथं देयः तथा राजमंडनं किरीटाद्यदेयं यत्तद्भिक्षुभ्यः कथं देयं तथाऽतिरम्यं रत्नाभरणादि पुत्रादियोग्यं कथं परस्मै देयमिति चेदत आहुः । किंदुर्मर्षमित्यादि । अथ दृष्टांतत्वेनार्थांतरमाहुः । किमकार्यमिति । यथाऽसाधूनामकार्यं नास्ति तथा तितिक्षूणां दुर्मर्षं दुःसहं नास्ति । वदान्यानाम त्युदाराणामदेयं नास्ति समदर्शिनां परश्च नास्ति । अतः किं विशेषनिर्देशेनेत्यर्थः ॥ १९ ॥ किंच अर्थिने धीरेण मुद्गलादिवत्प्राणा अपि न वंचनीया इत्याशयेनाहुः । योऽनित्येनेति । नाचिनोति न संपादयति स वाच्यः स निंद्यः ॥ २० ॥ विश्वामित्रार्थानृण्याय हरिश्चंद्रो भार्यात्मजादि सर्वं विक्रीय स्वयं चांडालतां प्राप्तोऽप्यनिर्विण्णः सहायोध्यावासिभिर्जनैः स्वर्गं गतः । रंतिदेवः सकुटुंबोऽष्टचत्वारिंशदहान्यलब्धोदकोऽपि कथंचिल्लब्धान्नोदकाद्यर्थिभ्यो दत्त्वा ब्रह्मलोकं गतः ! उञ्छवृत्तिर्मुद्गलः षण्मासं सीदत्कुटुंबोऽप्यातिथ्यदानेन ब्रह्मलोकं गतः । शिबिः शरणागतकपोतरक्षणाय स्वमांसं श्येनाय दत्त्वा दिवं गतः । बलिः सर्वस्वं ब्राह्मणवेषधारिणे हरये दत्त्वा तमेवात्मसा चकार । कपोतश्चातिथये व्याधाय कपोत्या सहात्ममांसं दत्त्वा विमानेन दिवं गतः । व्याधस्तयोः सत्त्वं वीक्ष्य स्वयमतिनिर्विण्णो महाप्रस्थाने वनाग्निदग्धदेहो निष्कल्मषो दिवमारुरोह । एवमन्ये च बहवोऽध्रुवेण शरीरेण ध्रुवं लोकं गता इति ॥ २१ ॥ ज्याहतैर्ज्याघातकिणांकितैः । दृष्टपूर्वान्द्रौपदीस्वयंवरादिषु ॥२२॥२३ ॥ इंद्रस्य श्रियं

अत्र दुर्मर्षत्वे यतस्तितिक्ष्वादीनामित्थं गतिरतो हेतोः । इत्यर्थ इति–देवभेदकथनं त्वब्रह्मण्याग्रे एवोचितं न तु तव ब्रह्मण्यस्यापीति भावः । यद्वा–असाद्युभिः ओ वासुदेवः साधुः साधयिता येषां तेषां किमकार्यं कर्तुमशक्यमपि तु सर्वमेव शक्यमेवेत्यर्थः । ननु किमिच्छथ तद्ब्रूत अन्यथा यदि मत्पुत्र एव वः कामितः स्यात्तर्हि स ममतास्पदपुत्रविच्छेदः कथं सोढव्यस्तत्राहुः–किं दुर्मर्षमिति । विश्वामित्रादिभ्यो । दशरथादिकर्तृकपुत्रादिसमर्पणात् । नन्वेवं प्रार्थयन्तो यदि गृहजनैस्तिरस्क्रियध्वे यूयं तर्हि किं स्यात्तत्राहुः–किमकार्यमिति । ननु यदि मच्छरीरमेव याचथ तर्हि तत्कथं देयं तत्राहुः–किमदेयमिति । दध्यगादौ देवेभ्यः शरीरदानस्यापि दृष्टत्वात् । ननु यदि मच्छत्रवो भवथ तर्हि शत्रुभ्यः कथं देयं तत्राहुः–कः पर इति । समदर्शिनां ज्ञानिनां न हि त्वयि विषमदर्शनरूपमज्ञानमस्तीति भावः ॥ १९ ॥ पुरुषेण यशःसंपाद्यमाह–किंचेति । वाच्यो निंद्यः । "वाच्यस्तु कुत्सिते हीने वचनार्हे च वाच्यवत्" इति मेदिनी ॥ २० ॥२१॥ तानर्थिनः । प्रकोष्ठैः मणिबंधकूर्परांतरैः । "प्रकोष्ठो मणिबंधस्य कूर्परस्यांतरेपि च" इति मेदिनी । 'किणश्चिह्ने व्रणादीनाम्' इति धरणिः । आदिना रुक्मि णीविवाहादिग्रहः स्वरैर्गंभीरैः । आकृतिभिर्हृष्टपुष्टसुंदराकारैः । क्षत्रबंधून् विप्रवेशेन याचनपरत्वेन निकृष्टक्षत्रियान् ॥ २२ ॥ तदेवाभिप्रेत्याह–राजन्येति । एतेऽर्थिनः ॥ २३ ॥ नेतिपाठे काकूक्त्या श्रूयत एवेत्यर्थः ।

श्रियं जिहीर्षतेंद्रस्य विष्णवे द्विजरूपिणे ॥ जानन्नपि महीं प्रादाद्वार्यमाणोऽपि दैत्यराट् ॥ २५ ॥ जीवता ब्राह्मणार्थाय को न्वर्थः क्षत्रबंधुना ॥ देहेन पतमानेन नेहता विपुलं यशः ॥ २६ ॥ इत्युदारमतिः प्राह कृष्णार्जुनवृकोदरान् ॥ हे विप्रा व्रियतां कामो ददाम्यात्मशिरोऽपि वः ॥२७॥ श्रीभगवानुवाच ॥ युद्धं नो देहि राजेंद्र द्वंद्वशो यदि मन्यसे॥ युद्धार्थिनो वयं प्राप्ता राजन्या नान्नकांक्षिणः ॥ २८ ॥ असौ वृकोदरः पार्थस्तस्य भ्राताऽर्जुनो ह्ययम् ॥ अनयोर्मातुलेयं मां कृष्णं जानीहि ते रिपुम् ॥२९॥ एवमावेदितो राजा जहासोच्चैः स्म मागधः॥आह चामर्षितो मंदा युद्धं तर्हि ददामि वः ॥ ३० ॥ न त्वया भीरुणा योत्स्ये युधि विक्लवचेतसा ॥ मथुरां स्वपुरीं त्यक्त्वा समुद्रं शरणं गतः ॥ ३१ ॥ अयं तु वयसाऽतुल्यो नातिसत्त्वो न मे समः ॥अर्जुनो न भवेद्योद्धा भीमस्तुल्यबलो मम ॥ ३२॥ इत्युक्त्वा भीमसेनाय प्रादाय महतीं गदाम् ॥ द्वितीयां स्वयमादाय निर्जगाम पुराद्बहिः ॥ ३३ ॥ ततः समेखले वीरौ संयुक्तावितरेतरौ ॥ जघ्नतुर्वज्रकल्पाभ्यां गदाभ्यां रणदुर्मदौ ॥ ३४ ॥ मंडलानि विचित्राणि सव्यं दक्षिणमेव च ॥ चरतोः शुशुभे युद्धं नटयोरिव रंगिणोः ॥ ३५ ॥ ततश्चटचटाशब्दो वज्रनिष्पेषसन्निभः ॥ गदयोः क्षिप्तयो राजन्दंतयोरिव दंतिनोः ॥ ३६ ॥

जिहीर्षता विप्रव्याजेन विष्णुना भ्रंशितस्यापि बलेः । नु अहो । नेति पाठे न श्रूयते किंम् अपि तु श्रूयत इति ॥ २४ ॥ तं श्लाघते । विष्णव इति । शुक्रेण वार्यमाणोऽपि । अत एव विष्णुरिति जानन्नपि ॥ २५ ॥ पतमानेन पतता क्षत्रबंधुना देहेन ब्राह्मणार्थाय विपुलं यशो नेहता नेहमानेनासंपादयता को न्वर्थः न कोऽपीत्यर्थः ॥ २६ ॥ एवं निश्चित्याह । हे विप्रा इति ॥ २७ ॥ २८ ॥ राजन्यतामेव प्रपंचयति । असाविति ॥ २९ ॥ ३० ॥ यतो मद्भिया समुद्रं शरणं गतः ॥ ३१ ॥ वयसाऽप्यतुल्यो नातिसत्त्वो नातिबलश्च न च देहेन मया समोऽतोऽर्जुनो योद्धा न भवेत् । भीमस्तु भवेत् यतो मम तुल्यबलः ॥ ३२ ॥ प्रादाय दत्त्वेत्यर्थः ॥ ३३ ॥ समेखले युद्धांगणे ॥ ३४ ॥ मंडलानि गदायुद्धगतिभेदान् । सव्यं दक्षिणं च यथा भवति तथा । रंगिणो रंगगतयोर्नटयोरिवेति निर्भयत्वेनोपमा ॥ ३५ ॥ चटचटेति

कश्यपाज्जातस्यास्य विप्रत्वमेव कथं विप्रव्याजेनेति । तर्हि तदिंद्रस्यापि प्रसज्जेत क्षत्रियवृत्त्या त्विंद्रस्य तल्लुतं चेत्तर्ह्युपेन्द्रलिप्सया वामनस्य चैतदलुप्तत्वेपि दंभमयविप्रत्वमेव गम्यत इति भावः ॥ २४ ॥ तं बलिम् । अत एव वार्यमाणत्वेप्यनिवृत्तेरेव । शुक्रेणेतिशेषः ॥ २५ ॥ जीवता क्षत्रबंधुना को न्वर्थ इति संबंधः । इत्यर्थ इति—अर्थोवगतोर्थ इति ॥ २६ ॥ वो युष्मभ्यम् ॥ २७ ॥ इतोऽग्रे क्वचित्पुस्तकेषु श्लोकद्वयं प्रक्षिप्तमपि दृश्यते ' किं देवा ' इत्यादिरूपम् । द्वंद्वशो द्वंद्वयुद्धम् । द्वंद्वश इति द्वंद्वशब्दाच्छस् प्रत्यय आर्षः ॥ २८ ॥ इदमेतदावंगुलिनिर्दिष्टपरौ ॥ २९ ॥ वो युष्मभ्यम् ॥ ३० ॥ कृष्णं प्रत्याह—न त्वयेति । विक्लवमस्थिरं चेतो यस्य तेन ॥ ३१ ॥ अयमर्जुनः अतुल्यः । नातिसत्त्वः न प्रशस्तपराक्रमः । मत्तुल्यगदायुद्धावित्त्वात् । अतो न मे मया सदृशः । असमत्वादेव योद्धा नेति संबंधः ॥ ३२ ॥ भारतीयबाहुयुद्धविरोधस्तु महतीं पूज्यां गदां वाचं प्रादाय भीमाय ' भीमस्तुल्यबलो मम ' इत्युक्तेः । द्वितीयां द्वैरथायोग्यां स्वयं कोर्थः स्वयं भगवते ' न त्वया भीरुणा योत्स्ये ' इत्युक्तेरादाय दत्त्वेति । पुराद्गिरिव्रजात् ॥ ३३ ॥ ततः पुराद्बहिर्गमनोत्तरम् । मेखला परितः कृता मृन्मयमर्यादा तया सहिते । गदाभ्यां वाग्भ्यां निष्ठुरोक्तिभ्याम् ॥ ३४ ॥ नटयोरिवेत्युक्तेन शास्त्रयुद्धमिति । अन्यथा दृष्टान्तवैषम्यापत्तेः ॥ ३५ ॥ ततो युद्धप्रवृत्त्यनन्तरम् । गदयोः क्षिप्तयो

ते वै गदे भुजजवेन निपात्यमाने अन्योन्यतोंसकटिपादकरोरुजत्रून् ॥ चूर्णीबभूवतुरुपेत्य यथार्कशाखे संयुध्यतोर्द्विरदयोरिव दीप्तमन्य्वोः ॥३७॥ इत्थं तयोः प्रहतयोर्गदयोर्नृवीरौ क्रुद्धौ स्वमुष्टिभिरयःस्पर्शैरपिष्टाम् ॥ शब्दस्तयोः प्रहरतोरिभयोरिवासीन्निर्घातवज्रपरुषस्तलताडनोत्थः ॥ ३८ ॥ तयोरेवं प्रहरतोः समशिक्षाबलौजसोः ॥ निर्विशेषमभूद्युद्धमक्षीणजवयोर्नृप ॥ ३९ ॥ एवं तयोर्महाराज युध्यतोः सप्तविंशतिः ॥ दिनानि निरगंस्तत्र सुहृद्वन्निशि तिष्ठतोः ॥ ४० ॥ एकदा मातुलेयं वै प्राह राजन्वृकोदरः ॥ न शक्तोऽहं जरासंधं निर्जेतुं युधि माधव ॥ ४१ ॥ शत्रोर्जन्ममृती विद्वाञ्जीवितं च जराकृतम् ॥ पार्थमाप्याययन्स्वेन तेजसाऽचिंतयद्धरिः ॥ ४२ ॥ संचिंत्यारिवधोपायं भीमस्यामोघदर्शनः ॥ दर्शयामास विटपं पाटयन्निव संज्ञया ॥ ४३ ॥ तद्विज्ञाय महासत्त्वो भीमः प्रहरतां वरः ॥ गृहीत्वा पादयोः शत्रुं पातयामास भूतले ॥ ४४ ॥ एकं पादं पदाक्रम्य दोर्भ्यामन्यं प्रगृह्य सः ॥ गुदतः पाटयामास शाखामिव महागजः ॥ ४५ ॥

गदयोः परस्पराघातशब्दानुकरणम् । वज्रस्य निष्पेषः पातस्तत्सदृशः । युध्यतोर्दन्तिनोर्दंताघातशब्द इव शुशुभे ॥ ३६ ॥ अंसकट्यादीनुपेत्य । दीप्तो मन्युर्ययोस्तयोर्द्विरदयोर्गजयोरर्कशाखाभ्यां समं युध्यतोस्ते यथा चूर्णीभवतस्तद्वत् ॥ ३७ ॥ अपिष्टां चूर्णीचक्रतुः ॥ ३८ ॥ शिक्षा अभ्यासो बलं सत्त्वम् ओजः प्रभावः समानि तानि ययोस्तयोः ॥ ३९ ॥ ४० ॥ ४१ ॥ जन्म शकलरूपं मृतिः पुनः शकलीभावस्ते विद्वान् जानन्जरा नाम राक्षसी तत्कृतम् अचिंतयत्कथमसौ शकलीभवेदिति ॥ ४२ ॥ विटपं शाखाम् । करेण विटपं गृहीत्वा हरिर्भीमस्य यथाऽहं विटपं पाटयामि तथा त्वमेनं विपाटयेति संज्ञया संकेतेनारिवधोपायं दर्शयामासेत्यर्थः ॥ ४३ ॥ ४४ ॥ ॥ ४५ ॥

रन्योन्यं निष्ठुरोक्त्योः सत्योश्चटचटाशब्दस्तलताडनोत्थ एव ज्ञेयः ॥ ३६ ॥ ते गदे तयोर्गृहीते । संध्यभाव आर्षः । भुजजवेन पाणिवेगेन । निपात्यमाने अधःक्रियमाणे । चूर्णीबभूवतुर्निष्फले बभूवतुः । पूर्वोक्तप्रशस्तवाचौ संरंभावेशात् अंसकट्यादीनुपेत्य अहं तेंसं भनज्म्यहं ते कटिमित्याद्युक्त्वा । अर्कशाखादृष्टान्तस्तु नाशमात्र एव ज्ञेय इत्येवं परिहार्यः । एवमग्रेपि ॥ ३७ ॥ प्रहतयोश्चूर्णीभूतयोः । वज्रस्य निर्घातो वज्रनिर्घातस्तद्वत्परुषो निष्ठुरः । राजदंतादिवत्समासः ॥ ३८ ॥ तयोर्भीमजरासंधयोः । निर्विशेषमनुपमम् ‘ विशेषो भेदतुल्ययोः ’ इति धरणिः ॥ ३९ ॥ तत्र गिरिव्रजे ॥ ४० ॥ मातुलेयं श्रीकृष्णम् ॥ ४१ ॥ शत्रोर्जरासंधस्य । आप्याययत् वर्द्धयामास ॥ ४२ ॥ “ विटपो न स्त्रियां स्तंबशाखाविस्तारपल्लवे ” इति मेदिनी । इत्यर्थ इति–विना शकलीकरणमस्य मृत्युः कदापि नेति भावः ॥ ४३ ॥ ४४ ॥ अन्यं द्वितीयपादम् । स

एकपादोरुवृषणकटिपृष्ठस्तनांसके ॥ एकबाह्वक्षिभ्रूकर्णेशकले ददृशुः प्रजाः ॥ ४६ ॥ हाहाकारो महानासीन्निहते मगधेश्वरे ॥ पूजयामासतुर्भीमं परिरभ्य जयाच्युतौ ॥ ४७ ॥ सहदेवं तत्तनयं भगवान्भूतभावनः ॥ अभ्यषिंचदमेयात्मा मगधानां पतिं प्रभुः ॥ मोचयामास राजन्यान्संरुद्धा मागधेन ये ॥ ४८ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधोत्तरार्धे जरासंधवधोनाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ श्रीशुक उवाच ॥ अयुते द्वे शते तान्यष्टौ लीलया युधि निर्जिताः ॥ ते निर्गता गिरिद्रोण्या मलिना मलवाससः ॥ १ ॥ क्षुत्क्षामाः शुष्कवदनाः संरोधपरिकर्शिताः ॥ ददृशुस्ते घनश्यामं पीतकौशेयवाससम् ॥२॥ श्रीवत्सांकं चतुर्बाहुं पद्मगर्भारुणेक्षणम् ॥ चारुप्रसन्नवदनं स्फुरन्मकरकुंडलम् ॥ ३ ॥ पद्महस्तं गदाशंखरथांगैरुपलक्षितम् ॥ किरीटहारकटककटिसूत्रांगदाचितम् ॥४ ॥ भ्राजद्वरमणिग्रीवं निवीतं वनमालया ॥ पिबंत इव चक्षुर्भ्यां लिहंत इव जिह्वया ॥ ५ ॥

एकैकः पादादिर्ययोस्ते शकले ॥ ४६ ॥ ४७ ॥ दुर्वृत्तत्वादसौ हतो न तु राज्याभिलाषेणेति दर्शयन्नाह । सहदेवमिति ॥ ४८ ॥ इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्रीध० टीकायां द्विसप्ततितमोध्यायः ॥ ७२ ॥ ततस्त्रिसप्ततितमे मोचयित्वा नृपान्हरिः ॥ राजार्हभोगैः स्वान्देशान्प्रस्थाप्य पुनरागमत् ॥ १ ॥ अत्युन्नद्धजरासंधवधात्तद्बद्धभूपतीन् ॥ विमोक्ष्य कृपया कृष्णो निजरूपमदर्शयत् ॥ २ ॥ ये निर्जिता जरासंधेन निरुद्धाश्च गिरिद्रोण्यां ते ततो निर्गताः संतो घनश्यामं ददृशुरित्युत्तरेणान्वयः ॥ १ ॥ क्षुधा क्षामाः कृशाः । संरोधेन परिकर्शिताः क्लेशिताः ॥ २ ॥ ३ ॥ ४ ॥ भ्राजन् भ्राजमानो वरमणिः कौस्तुभो यया सा

भीमः ॥ ४५ ॥ ४६ ॥ मगधेश्वरे जरासंधे । जयोर्जुनः ॥ ४७ ॥ तत्तनयं जरासंधात्मजम् । दुर्वृत्तत्वाद्वाममार्गेण रुद्राराधकत्वात् । ननु तन्मार्गस्यापि शास्त्रविहितत्वेन तदाश्रयणे कथं दुर्वृत्तत्वमिति चेत्पुराणांतराख्यानेन तदाह । तथा हि वाराहे गौतमशप्तविप्राणां कलौ वामाचारे प्रवृत्तिः—"पुरा सर्वजनानां तु मोक्षमार्गे व्यवस्थितिम् । दृष्ट्वा स्वर्गादिवैफल्यं देवैरुक्तः स्वयं हरिः ॥ भगवन्सृष्टिनाशं त्वं शमयानुग्रहेण नः । तदाऽहं विष्णुना प्रोक्तो मोहशास्त्रमकल्पयम् । वेदमार्गविरुद्धं यत्तद्रौद्रं मत्प्रवर्तितम् ॥ मदट्टहासपतिता मह्यां तोयस्य बिंदवः । असंख्यातास्तु ते रौद्रा भविष्यंति कलौ युगे ॥ कल्पयिष्यंति शास्त्राणि सुरामांसप्रिया नराः । मयापि कल्पिता विष्णोराज्ञया संहिता पुरा । निःश्वासाख्या वेदबाह्या वामाचारप्रवर्तिका ॥ तत्र मच्छासनरता मदाचारास्तु ये द्विजाः । तेषां वासस्तु नरके भविष्यति न संशयः ॥ शूद्रैस्तदधमैर्ग्राह्य आचारो वामसंज्ञितः । न द्विजैः सर्वथा ग्राह्य इति सत्यं वचो मम ॥" इति रुद्रोऽगस्त्यं प्रत्याह । कलिसंधित्वाज्जरासंधस्तस्मिन्नाचारे प्रवृत्त इति ज्ञेयम् । असौ जरासंधः ॥ ४८ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धे द्विसप्ततितमोऽध्यायः ॥७२॥ ततो जरासंधवधोत्तरम् (१) । अत्युन्नद्धोऽत्युच्छृंखलः । तद्बद्धाञ्जरासंधबद्धान्नृपान् (२) । हे अयुत वासुदेवभक्त 'ईः करुणो द्वापुरि' इत्यनेकार्थमालोक्तेः । द्वाया भूम्या ईशो द्वेश ईश्चासौ द्वेश ईद्वेशस्तत्संबुद्धौ हे ईद्वेश । यद्वा—अयुतपदेन पुनः कर्मधारयेण अयुतेद्वेशेत्येकैव संबुद्धिः । तथा च—हे कृष्णभक्तयालो धरित्रीश तानि षट् । 'टाद्या नव ' इति केरलोक्तेस्तशब्दः षट्संख्यापरः । अष्टौ च 'अंकानां वामतो गतिः ' इति रीत्या षडशीतिसंख्या संपद्यते । " राज्ञां षडशीतिर्जाताः शेषाश्चैव चतुर्दश " इति भारतविरोधोऽपहृतः । ततो गिरिद्रोण्याः । ते राजानः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ पिबंत इत्यादिभिः सर्वेन्द्रियै

जिघ्रंत इव नासाभ्यां रंभंत इव बाहुभिः ॥ प्रणेमुर्हतपाप्मानो मूर्धभिः पादयोर्हरेः ॥ ६ ॥ कृष्णसंदर्शनाह्लादध्वस्तसंरोधनक्लमाः ॥ प्रशशंसुर्हृषीकेशं गीर्भिः प्रांजलयो नृपाः ॥ ७ ॥ राजान ऊचुः ॥ नमस्ते देवदेवेश प्रपन्नार्तिहराव्यय ॥ प्रपन्नान्पाहि नः कृष्ण निर्विण्णान्घोरसंसृतेः ॥ ८ ॥ नैनं नाथान्वसूयामो मागधं मधुसूदन ॥ अनुग्रहो यद्भवतो राज्ञां राज्यच्युतिर्विभो ॥ ९ ॥ राज्यैश्वर्यमदोन्नद्धो न श्रेयो विंदते नृपः ॥ त्वन्मायामोहितोऽनित्या मन्यते संपदोऽचलाः ॥ १० ॥ मृगतृष्णां यथा बाला मन्यंत उदकाशयम् ॥ एवं वैकारिकीं मायामयुक्ता वस्तु चक्षते ॥ ११ ॥ वयं पुरा श्रीमदनष्टदृष्टयो जिगीषयाऽस्या इतरेतरस्पृधः ॥ घ्नंतः प्रजाः स्वा अतिनिर्घृणाः प्रभो मृत्युं पुरस्त्वाऽविगणय्य दुर्मदाः ॥ १२ ॥ त एव कृष्णाद्यग भीररंहसा दुरंतवीर्येण विचालिताः श्रियः ॥ कालेन तन्वा भवतोऽनुकंपया विनष्टदर्पाश्चरणौ स्मराम ते ॥ १३ ॥

ग्रीवा यस्य तम् । निवीतं कंठलंबितया व्याप्तम् । पिबंत इवेत्यादीनां हरेः पादयोः प्रणेमुरित्युत्तरेणान्वयः ॥ ५ ॥ रंभंतः परिरंभमाणा इव ॥ ६ ॥ कृष्णदर्शनाह्लादेन ध्वस्तः संरोधनक्लमो येषां ते ॥ ७ ॥ संरोधाद्रक्षितानस्मान् घोरायाः संसृतेरपि पाहि मोचय ॥ ८ ॥ ननु भवंतो जरासंधासूयाविष्टा इहामुत्र भोगासक्ताश्च कथं संसृतेर्मोचनीया इत्याशंक्य संप्रति न वयं तथाभूता इत्याहुः नैनमित्यष्टभिः । हे नाथ वयमेनं नान्वसूयामः अन्वनु दोषदृष्ट्या न पश्यामः । कुत इत्यत आहुः । अनुग्रह इति । यद्यस्मात् ॥ ९ ॥ एतदेव व्यतिरेकेणोपपादयंति राज्यैश्वर्येति । राज्यैश्वर्याभ्यां मदस्तेनोन्नद्ध उच्छृंखलो नित्या अचलाश्च संपदो मन्यते । यद्वा । अनित्याः सतीरचलाः शाश्वतीर्मन्यते ॥ १० ॥ किंच अवस्तु सद्वस्तुतया पश्यंतीत्याहुः । मृगतृष्णामिति । वैकारिकीं सृष्ट्यादिविकारापन्नाम् । अयुक्ता अविवेकिनः ॥ ११ ॥ राज्यस्य योगवियोगयोरनर्थार्थावहत्वमस्मास्वेव दृष्टमित्याहुः वयमिति द्वाभ्याम् । श्रीमदेन नष्टा दृष्टिर्येषां ते । अस्याः पृथिव्याः इतरेतरस्पृधः परस्परं स्पर्धमानाः । पुरः पुरतः । त्वा त्वां मृत्युमविगणय्य । पुरा ये दुर्मदा वयम् ॥ १२ ॥ हे कृष्ण त एव वयमद्य विनष्टदर्पास्ते चरणौ स्मरामः स्मर्तुमाशास्महे । कथंभूताः । भवतस्तन्वा मूर्त्या कालेन

भगवत्सेवोक्ता ॥ ५ ॥ ६ ॥ ७ ॥ यथा शुनो रक्षितः सिंहादपि रक्ष्यत इत्याशयेनाहुः—संरोधादिति ॥ ८ ॥ हरिराशंकते—नन्विति । तथाभूता असूयावेशलोकद्वयभोगासक्ताः । एनं जरासंधम् । हेतुमाशंक्य समादधते—कुत इत्यादिना ॥ ९ ॥ एतदेवानुग्रहणमेव । व्यतिरेकेण पूर्वोक्तार्थवैपरीत्येन । नित्याचलयोरर्थभेदं मत्वार्थांतरमाह—यद्वेति ॥ १० ॥ इत्थं ज्ञातारो मूर्खा एवेत्याह—किंचेति । सत् भवत् । मृगतृष्णामंबरप्रदेशसंसृष्टदिवाकरकरनिकरम् । उदकाशयं जलपूरम् । मायां महिमानं संपलक्षणम् । वस्तु प्रतिहतिरहितं नित्यम् । चक्षते पश्यंति । “ गोअश्वेत्यादिमहिमेत्याचक्षते ” इति श्रुतेः ॥ ११ ॥ स्वदृष्टयंतेनोक्तमर्थमाहुः—राज्यस्य योगेत्यादिना । अतिनिर्घृणा अतिनिर्दयाः ॥ १२ ॥ स्मरामेत्याशिषि लोट् । यतो राज्यमनर्थहेतुरतो हेतोः । इत्यर्थ इति—“ मा राज्यश्रीरभूत्पुंसः श्रेयस्कामस्य मानद ” इत्यादिवक्ष्यमाणत्वादिति भावः ॥ १३ ॥

अथो न राज्यं मृगतृष्णिरूपितं देहेन शश्वत्पतता रुजां भुवा ॥ उपासितव्यं स्पृहयामहे विभो क्रियाफलं प्रेत्य च कर्णरोचनम् ॥ १४ ॥ तं नः समादिशोपायं येन ते चरणाब्जयोः ॥ स्मृतिर्यथा न विरमेदपि संसरतामिह ॥ १५ ॥ कृष्णाय वासुदेवाय हरये परमात्मने ॥ प्रणतक्लेशनाशाय गोविंदाय नमो नमः ॥ १६ ॥ श्रीशुक उवाच ॥ संस्तूयमानो भगवान्राजभिर्मुक्तबंधनैः ॥ तानाह करुणस्तात शरण्यः श्लक्ष्णया गिरा ॥ १७ ॥ श्रीभगवानुवाच ॥ अद्यप्रभृति वो भूपा मय्यात्मन्यखिलेश्वरे ॥ सुदृढा जायते भक्तिर्बाढमाशंसितं तथा ॥ १८ ॥ दिष्ट्या व्यवसितं भूपा भवंत ऋतभाषिणः ॥ श्रियैश्वर्यमदोन्नाहं पश्य उन्मादकं नृणाम् ॥ १९ ॥ हैहयो नहुषो वेनो रावणो नरकोऽपरे ॥ श्रीमदाद्भ्रंशिताः स्थानाद्देवदैत्यनरेश्वराः ॥ २० ॥

श्रियौ विचालिता विभ्रंशिताः अतो राज्यच्युतिर्भवदनुग्रह एवेत्यर्थः ॥ १३ ॥ अत एवाथो अनंतरं मृगतृष्णिसदृशं राज्यं शश्वत्पतता प्रतिक्षणं क्षीयमाणेन तथा रुजां रोगाणां भुवा जन्मक्षेत्रेण देहेनोपासितव्यं सेव्यं न स्पृहयामहे प्रेत्य परलोके च क्रियाफलं स्वर्गादिभोगमुपासितव्यं न स्पृहयामहे । कथंभूतं कर्णयो रोचनं रुचिजनकमात्रम् । तत्र गतस्य स्पर्धाद्यनपगमेन सुखाभावादित्यर्थः ॥ १४ ॥ यद्येवंभता यूयं तर्हि मम चरणौ स्मरत ततोऽनायासेन मुक्तिर्भविष्यतीति किं मदपेक्षयेति चेदत आहुः । तं न इति । त्वच्चरणस्मृतिरपि त्वत्प्रसादफलमेवेत्यर्थः ॥ १५ ॥ १६ ॥ श्लक्ष्णया मंजुलया ॥ १७ ॥ यथा भवद्भिराशंसितं तथा बाढं निश्चितं वो मयि भक्तिर्जायते जायतामित्यर्थः ॥ १८ ॥ हे भूपाः मद्भजनमेव कर्तव्यमिति भवद्भिर्व्यवसितं संकल्पितं दिष्ट्या भद्रम् । भवद्भिरुक्तं च सत्यमेवेत्याह । भवंत इति । श्रीश्च ऐश्वर्यं च ताभ्यां मदस्तेनोन्नाहमुद्बंधनं स्वैराचारमित्यर्थः । पश्ये पश्यामि ॥ १९ ॥ तदेवाह । हैहय इति । हैहयः कार्तवीर्यश्चक्रवर्ती नरेश्वरः पितुः कामधेनुहरणात्परशुरामेण सपुत्रो हतः । नहुषो देवेंद्रतां प्राप्त उन्मत्तः शचीसंगाय ब्राह्मणान् शिबिकां वाहयंस्तैरेव ततो भ्रंशितोऽजगरत्वमवाप । वेनोऽप्युन्मत्तो ब्राह्मणानधिक्षिपंस्तैरेव

अत एव भवदनुग्रहादेव । यत्र स्वर्गे । इत्यर्थ इति–" एवं लोकं परं विद्वान्नश्वरं कर्मनिर्मितम् " इत्याद्युक्तेरिति भावः ॥ १४ ॥ एवंभूता इहामुत्र भोगविरक्ताः । ततो मच्चरणस्मरणात् । मदपेक्षया मत्प्रसादेन । इत्यर्थ इति–नहि त्वत्प्रसादं विना त्वच्चरणानुरागः स्यादिति भावः ॥ १९ ॥ कृष्णायेत्यादिश्लोकरूपमंत्रजपात्सर्वेप्सितावाप्तिः । कामबीजसंपुटितेन च शीघ्रमेवेष्टलाभः । बंदीमोक्षोऽप्यस्य लक्षजपाद्भवति । ध्यानं चात्र गायंतिमंत्रवत् । ॐ अस्य श्रीकृष्णायेत्यादिमंत्रस्य श्रीकृष्णो देवता । व्यास ऋषिः । अनुष्टुप् छंदः । कामो बीजम् । सर्वाभिलषितावाप्तये जपे विनियोगः ॥ ॐ कृष्णायेत्यंगुष्ठाभ्यां नमः । वासुदेवाय तर्जनीभ्यां नमः । हरये मध्यमाभ्यां नमः । परमात्मनेऽनामिकाभ्यां नमः ।प्रणतक्लेशनाशाय कनिष्ठिकाभ्यां नमः ।गोविंदाय नमोनम इति करतलकरपृष्ठाभ्यां नमः ॥एवं हृदयादिन्यासः ॥यद्वा–'ददृशुस्ते घनश्यामम्' इत्यारभ्य 'निवीतं वनमालया'इत्युक्तमेवाध्यायारंभोक्तमेव ॥ १६ ॥ तान्राज्ञः । मंजुलया मनोज्ञया ॥ १७ ॥ इत्यर्थ इति–भवदुक्तं मया स्वीकृतमिति भावः ॥ १८ ॥ उन्मादकं बुद्धिभ्रंशकरम् ॥ १९ ॥ तदेवोन्मादकत्वमेव । तैरेवागस्त्यादिविप्रैरेव । अपरे मदुक्तेतरे

भवंत एतद्विज्ञाय देहाद्युत्पाद्यमंतवत् ॥ मां यजंतोऽध्वरैर्युक्ताः प्रजा धर्मेण रक्षथ ॥ २१ ॥ संतन्वन्तः प्रजातंतून्सुखं दुःखं भवाभवौ ॥ प्राप्तंप्राप्तं च सेवंतो मच्चित्ता विचरिष्यथ ॥ २२ ॥ उदासीनाश्च देहादावात्मारामा धृतव्रताः ॥ मय्यावेश्य मनः सम्यङ्‌ मामंते ब्रह्म यास्यथ ॥ २३ ॥ श्रीशुक उवाच ॥ इत्यादिश्य नृपान्कृष्णो भगवान्भुवनेश्वरः ॥ तेषां न्ययुंक्त पुरुषान्स्त्रियो मज्जनकर्मणि ॥ २४ ॥ सपर्यां कारयामास सहदेवेन भारत ॥ नरदेवोचितैर्वस्त्रैर्भूषणैः स्रग्विलेपनैः ॥२५॥ भोजयित्वा वरान्नेन सुस्नातान् समलंकृतान् ॥ भोगैश्च विविधैर्युक्तांस्तांबूलाद्यैर्नृपोचितैः ॥ २६ ॥ ते पूजिता मुकुंदेन राजानो मृष्टकुंडलाः ॥ विरेजुर्मोचिताः क्लेशात्प्रावृडंते यथा ग्रहाः॥२७॥ रथान्सदश्वानारोप्य मणिकांचनभूषितान् ॥ प्रीणय्य सूनृतैर्वाक्यैः स्वदेशान्प्रत्ययापयत् ॥ २८ ॥ त एवं मोचिताः कृच्छ्रात्कृष्णेन सुमहात्मना ॥ ययुस्तमेव ध्यायंतः कृतानि च जगत्पतेः ॥ २९ ॥ जगदुः प्रकृतिभ्यस्ते महापुरुषचेष्टितम् ॥ यथाऽन्वशासद्भगवांस्तथा चक्रुरतंद्रिताः ॥ ३० ॥ जरासंधं घातयित्वा भीमसेनेन केशवः ॥ पार्थाभ्यां संयुतः प्रायात्सहदेवेन पूजितः ॥ ३१ ॥ गत्वा ते खांडवप्रस्थं शंखान्दध्मुर्जितारयः ॥ हर्षयंतः स्वसुहृदो दुर्हृदां चासुखावहाः ॥ ३२ ॥

हुंकृतैर्हतः । रावणो राक्षसेश्वरः सीतामभिलषन्राघवेण हतः । नरको दैत्येश्वरोऽदितिकुंडलाद्याहरणान्मयैव हतः । अपरेऽपि श्रीमदात्स्थानाद्भ्रंशिताः ॥ २० ॥ यदुत्पाद्यं देहादि तदंतवत् । एवं विज्ञाय युक्ता अप्रमत्ता रक्षथ रक्षतेत्यर्थः ॥ २१ ॥ प्रजातंतून्पुत्रादिसंततीः । प्राप्तंप्राप्तं समत्वेन सेवमानाः ॥ २२ ॥ मां ब्रह्म यास्यथ ॥ २३ ॥ स्त्रियश्च तेषां मज्जनकर्मण्यभ्यंगस्नानादौ न्ययुंक्त ॥ २४ ॥ २५ ॥ सुस्नातान्सम्यगलंकृतान् भोगैश्च युक्तान्वरेणान्नेन भोजयित्वा पुनस्तेषां सपर्यां सहदेवेन कारयामास ॥ २६ ॥ ग्रहाश्चंद्रादयो यथा ॥ २७ ॥ प्रीणय्य नंदयित्वा ॥ २८ ॥ २९ ॥ जगदुः ऊचुः ॥ ३० ॥ ३१ ॥ खांडवप्रस्थमिंद्रप्रस्थम् ॥ ३२ ॥

त्रिशंक्वादयः ॥ २० ॥ २१ ॥ भवाभवौ मंगलामंगले ॥ २२ ॥ अंते देहावसानेऽज्ञानांते वा ॥ २३ ॥ तेषां बंधच्युतराज्ञाम् । स्त्रियः स्त्रीः ॥ २४ ॥ २५ ॥ वरान्नेन पायसादिना ॥ २६ ॥ ते राजानः ॥ २७ ॥ ॥ २८ ॥ ते नृपाः । तं श्रीकृष्णम् ॥ २९ ॥ ते नृपाः । प्रकृतिभ्यः सुहृदादिभ्यः । यथाऽन्वशासत् ‘ भवंत एतद्विज्ञाय ’ इत्यारभ्य ‘मामन्ते ब्रह्म यास्यथ ’ इत्यंतेन ॥ ३० ॥ ३१ ॥ ते कृष्णार्जुनभीमाः । दुर्हृदा

तच्छ्रुत्वाप्रीतमनस इंद्रप्रस्थनिवासिनः ॥ मेनिरे मागधं शांतं राजा चाप्तमनोरथः ॥३३॥ अभिवंद्याथ राजानं भीमार्जुनजनार्दनाः ॥ सर्वमाश्रावयां चक्रुरात्मना यदनुष्ठितम् ॥३४॥ निशम्य धर्मराजस्तत्केशवेनानुकंपितम् ॥ आनंदाश्रुकलां मुंचन्प्रेम्णा नोवाच किंचन ॥ ३५ ॥ इति श्रीमद्भागवते महापुराणे द० स्कंधोत्त० कृष्णाद्यागमने त्रिसततितमोऽध्यायः ॥७३॥ श्रीशुक उवाच ॥ एवं युधिष्ठिरो राजा जरासंधवधं विभोः ॥ कृष्णस्य चानुभावं तं श्रुत्वा प्रीतस्तमब्रवीत् ॥ १ ॥ युधिष्ठिर उवाच ॥ ये स्युस्त्रैलोक्यगुरवः सर्वे लोकमहेश्वराः ॥ वहंति दुर्लभं लब्ध्वा शिरसैवानुशासनम् ॥ २ ॥ स भवानरविंदाक्षो दीनानामीशमानिनाम् ॥ धत्तेऽनुशासनं भूमंस्तदत्यंतविडंबनम् ॥३॥ न ह्येकस्याद्वितीयस्य ब्रह्मणः परमात्मनः ॥ कर्मभिर्वर्धते तेजो ह्रसते च यथा रवेः ॥ ४ ॥ न वै तेऽजित भक्तानां ममाहमिति माधव ॥ त्वं तवेति च नानाधीः पशूनामिव वैकृता ॥ ५ ॥

शांतं मृतम् । आप्तमनोरथो बभूव ॥ ३३ ॥ ३४ ॥ ३५ ॥ इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्री० टीकायां त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ चतुर्युक्सप्ततितमे राजसूयक्रिया द्विजैः ॥ अग्रपूजाप्रसंगेन चैद्यघातादि वर्ण्यते ॥ १ ॥ राजसूयमुखे हत्वा जरासंधं तदंतरे ॥ चैद्यं तदंते कुर्वंतं बीजं कलिमिवावपत् ॥ २ ॥ कृष्णस्य चानुभावमिति चकारात्तस्य स्वाज्ञाऽनुविधायित्वं चालक्ष्येत्यर्थः ॥ १ ॥ तदाह । ये स्युरिति । ये त्रैलोक्यस्यापि गुरवः स्युः सनकादयः सर्वे च लोका लोकपालाश्च ते शिरसैव तवानुशासनं वहन्ति । दुर्लभं लब्ध्वेति । भाग्येनैतल्लब्धमिति बहुमानेनेत्यर्थः ॥ २ ॥ स भवान्परमेश्वरोऽस्माकमनुशासनं धत्ते तदत्यंतविडंबनमननुरूपमनुकरणम् । स्वतेजोहानिप्रसंगादित्यर्थः ॥ ३ ॥ अथवा तव परिपूर्णस्याज्ञापनाज्ञाधारणाभ्यां न तेजसो हानिवृद्धी अतः कृपया सर्वं संगच्छत इत्याह । न ह्येकस्याद्वितीयस्येति । समानासमानरहितस्य ब्रह्मणस्त वोभयं माया । परमात्मन इति । सर्वजीवनियंतुस्तव नियम्यत्वं सुतरां न वास्तवम् । अतः परानुग्रहार्थैरेतैः कर्मभिस्तव तेजो न च ह्रसति । रवेरिवोदयास्तमयादिकर्मभिरि त्यर्थः । तथा च श्रुतिः । "न कर्मणा वर्धते नो कनीयान्" इति ॥ ४ ॥ नन्वेवमप्यहं परमेश्वरो ममेदं नीचं कर्मायोग्यमिति मनसि कथं न भवेदत आह । न वै त इति ।

शत्रूणाम् ॥ ३२ ॥ तच्छंखवादनम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धे त्रिसप्ततितमोऽध्यायः ॥७३॥ ( १ ) । मुखे आदौ । तदंतरे राजसूयमध्ये । तदंते यज्ञांते ( २ ) । श्रोतृचित्तरञ्जकं क्षमाजनकं वीरवीर्यवर्द्धनं श्रीकृष्णकर्तृकशिशुपालवधमाह—एवं ब्राह्मणवेशादिना । इत्यर्थ इति—अहो सर्वेश्वरा मदाज्ञां कुरुत इति विमृश्येति भावः ॥ १ ॥ तत्स्वाज्ञानुवर्तित्वम् । इत्यर्थ इति—अहो अस्मद्भाग्यं यदीश्वरेश्वरोऽस्मानाज्ञापयतीति भावः ॥ २ ॥ दीनानामज्ञानामीशमानिनाम्, 'ईश्वरोहमहं भोगी' इत्याद्यभिमानवताम् । तदनुशासनधारणम् । अननुरूपमयुक्तम् । इत्यर्थ इति—लोके प्रभुकर्तृकप्रेष्याज्ञाकरणस्य हासास्पदत्वा दिति भावः ॥ ३ ॥ पक्षांतरमाह—अथ वेति । यतो न तेजोहानिवृद्धी स्तः अतो हेतोः । सर्वमुच्चावचकर्मकरणम् । उभयमाज्ञास्वीकाराज्ञापनरूपम् । माया असदेव लीलैव वा । यतो माया अतो हेतोः । इत्यर्थ इति—नहि सर्वदैकरसतेजोवतो रवेस्तेजसो ह्रासवृद्धी यथा तथा भवतोपीति भावः । अत्र प्रमाणम्—तथा चेति । न कनीयान् अत्यल्पोपि न भवतीत्यर्थः ॥ ४ ॥ भगवदाक्षेपं समाधत्ते कैमुत्येन—नन्वित्यादिना । वै एवार्थे । विकृतं

श्रीशुक उवाच ॥ इत्युक्त्वा यज्ञिये काले वव्रे युक्तान्स ऋत्विजः ॥ कृष्णानुमोदितः पार्थो ब्राह्मणान्ब्रह्मवादिनः॥६॥द्वैपायनो भरद्वाजः सुमंतुर्गौतमोऽसितः ॥ वसिष्ठश्च्यवनः कण्वो मैत्रेयः कवषस्त्रितः ॥ ७ ॥ विश्वामित्रो वामदेवः सुमतिर्जैमिनिः क्रतुः ॥ पैलः पराशरो गर्गो वैशंपायन एव च ॥८॥ अथर्वा कश्यपो धौम्यो रामो भार्गव आसुरिः ॥ वीतिहोत्रो मधुच्छंदा वीरसेनोऽकृतव्रणः ॥ ९ ॥ उपहूतास्तथा चान्ये द्रोणभीष्मकृपादयः॥ धृतराष्ट्रः सहसुतो विदुरश्च महामतिः॥१०॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा यज्ञदिदृक्षवः ॥ तत्रेयुः सर्वराजानो राज्ञां प्रकृतयो नृप॥११॥ततस्ते देवयजनं ब्राह्मणाः स्वर्णलांगलैः ॥ कृष्ट्वा तत्र यथाम्नायं दीक्षयांचक्रिरे नृपम् ॥ १२ ॥ हैमाः किलोपकरणा वरुणस्य यथा पुरा ॥ इंद्रादयो लोकपाला विरिंचभवसंयुताः ॥ १३ ॥ सगणाः सिद्धगंधर्वा विद्याधरमहोरगाः ॥ मुनयो यक्षरक्षांसि खगकिन्नरचारणाः ॥ १४ ॥ राजानश्च समाहूता राजपत्न्यश्च सर्वशः ॥ राजसूयं समीयुः स्म राज्ञः पांडुसुतस्य वै ॥ १५ ॥ मेनिरे कृष्णभक्तस्य सूपपन्नमविस्मिताः ॥ अयाजयन्महाराजं याजका देववर्चसः ॥ १६ ॥ राजसूयेन विधिवत्प्राचेतसमिवामराः ॥ सुत्येऽहन्यवनीपालो याजकान्सदसस्पतीन् ॥ अपूजयन्महाभागान्यथावत्सुसमाहितः ॥ १७ ॥ सदस्याग्र्यार्हणार्हं वै विमृशंतः सभासदः ॥ नाध्यगच्छन्ननैकांत्यात्सहदेवस्तदाऽब्रवीत् ॥ १८ ॥ अर्हति ह्यच्युतः श्रैष्ठ्यं भगवान्सात्वतां पतिः ॥ एष वै देवताः सर्वा देशकालधनादयः ॥ १९ ॥

हे अजित तव भक्तानामेव तावदियं नानाधीर्भेदमतिर्नास्ति । यथा पशूनामज्ञानां वैकृता शरीरविषया । तव तु नास्तीति किं पुनर्वक्तव्यमित्यर्थः ॥ ५ ॥ यज्ञिये यज्ञोचिते वसंतादिकाले । युक्तानभियुक्तान् । स युधिष्ठिरः ऋत्विजो होतृप्रमुखान् वव्रे वृतवान् ॥ ६ ॥ तानाह द्वैपायन इति त्रिभिः ॥ ७ ॥ ८ ॥ अकृतव्रणांतानेतानृत्विगुपद्रष्ट्रादिभेदेन वव्रे ॥ ९ ॥ अन्ये चोपहूता यज्ञदिदृक्षवस्तत्रेयुरित्यन्वयः ॥ १० ॥ ११ ॥ देवयजनं यज्ञभूमिम् । कृष्ट्वा कर्षणादिभिः संशोध्य । दीक्षयांचक्रिरे दीक्षासंस्कारयुक्तमकुर्वन् ॥ १२ ॥ उपकरणा उपस्कराः । वरुणस्य राजसूये यथा आसन्निति शेषः । किंच इंद्रादयो देवगणाः ॥ १३ ॥ १४ ॥ ये च राजादयः समाहूतास्तत्र समीयुः स्म ते सर्वे कृष्णभक्तस्य पांडुसुतस्य राज्ञो युधिष्ठिरस्य राजसूयमविस्मिताः संतः सूपपन्नं सुसंपन्नं मेनिरे इत्यन्वयः ॥ १५ ॥ याजका ऋत्विजः ॥ १६ ॥ सुत्येहनि सोमाभिषवदिने ॥ १७ ॥ अग्र्यार्हणमग्रपूजा तस्यार्हं योग्यम् । अनैकांत्यायोग्यानां बहुत्वेनैकस्यानिश्चयात् ॥ १८ ॥ १९ ॥

शरीरं तद्विषया वैकृता । इत्यर्थ इति—अर्थावगतं कैमुत्यमत्रेति ॥ ५ ॥ अभियुक्तान्कल्पोक्तन्यायवेदिनः ॥ ६ ॥ तानृत्विजो नामतो निर्दिशति—द्वैपायन इति त्रयेण ॥ ७ ॥ ८ ॥ उपद्रष्ट्राद्या ऋत्विजां संज्ञाः । ताश्च यज्ञविद्यातोऽवसेयाः ॥ ९ ॥ उपहूता मुनयस्तथान्येऽनुपहूता अपि द्रोणादयस्तूपहूता एव । महामतिः सदोचितोपदेष्टा ॥ १० ॥ तत्र यज्ञे ॥११॥ ततो वरणानन्तरम् । ते ऋत्विजः । तत्र यज्ञे । स्वर्णलांगलैः हेमहलैः ॥ ॥ १२ ॥ तत्र यज्ञे केवलं राजान एव नागताः किंतु देवा अपीत्याह—किंचेति ॥ १३ ॥ १४ ॥ १५ ॥ प्राचेतसं वारुणम् ॥ १६ ॥ १७ ॥ तदाऽनिश्चयवेलायाम् ॥ १८ ॥ अच्युतः स्वरूपतो गुणतो वा न क्षीणः

यदात्मकमिदं विश्वं क्रतवश्च यदात्मकाः ॥ अग्निराहुतयो मंत्राः सांख्यं योगश्च यत्परः ॥ २० ॥ एक एवाद्वितीयोऽसावैतदात्म्यमिदं जगत् ॥
आत्मनाऽऽत्माश्रयः सभ्याः सृजत्यवति हंत्यजः ॥ २१ ॥ विविधानीह कर्माणि जनयन्यदवेक्षया ॥ ईहते यदयं सर्वः श्रेयो धर्मादिलक्षणम् ॥२२॥
तस्मात्कृष्णाय महते दीयतां परमार्हणम् ॥ एवं चेत्सर्वभूतानामात्मनश्चार्हणं भवेत् ॥ २३ ॥ सर्वभूतात्मभूताय कृष्णायानन्यदर्शिने ॥ देयं शांताय
पूर्णाय दत्तस्यानंत्यमिच्छता ॥ २४ ॥ इत्युक्त्वा सहदेवोऽभूत्तूष्णीं कृष्णानुभाववित् ॥ तच्छ्रुत्वा तुष्टुवुः सर्वे साधुसाध्विति सत्तमाः ॥ २५ ॥

सांख्यं ज्ञानम् । योग उपासना ॥ २० ॥ ननु सांख्यं केवलपरं योगः सविशेषणपरः कथमुभयोरेकपरत्वं तत्राह । एक एवाद्वितीयोऽसावतः सांख्यस्यैतत्परत्वं युक्तम् । विशेषण
भूतस्य सर्वप्रपंचस्य तन्मयत्वात्सविशेषणविषयस्य योगस्यापि युक्तमद्वितीयपरत्वमित्याह । ऐतदात्म्यमिति । एष श्रीकृष्ण आत्मा यस्य तदेतदात्म तस्य भाव ऐतदात्म्यम् ।
भवितर्येव भावनिर्देशः । "ऐतदात्म्यमिदं सर्वम्" इति श्रुतेः । अत्र हेतुः । आत्मनेति । हे सभ्या आत्माश्रयोऽन्यनिरपेक्षः स्वयमज इदं जगत्सृजत्यवति हंति चेति ॥ २१ ॥
किंच विविधानीति । यस्यावेक्षयाऽनुग्रहेण विविधानि कर्माणि तपोयोगादीनि जनयन् कुर्वन् यद्यस्मादयं सर्वोऽपि जनो धर्मादिलक्षणं श्रेय ईहते साधयति । कर्माणि
तत्फलानि च यदधीनानीत्यर्थः ॥ २२ ॥ २३ ॥ नन्वात्मना क्रियमाणमर्हणमात्मनः कथं स्यात्तत्राह । सर्वभूतानामात्मभूताय अनन्यदर्शिने निरस्तभेदमतये ॥ २४ ॥
श्रीकृष्णानुभाववित्सहदेव इत्युक्त्वा तूष्णीमभूत् ॥ २५ ॥

श्रीकृष्णः । श्रैष्ठ्यं गुणज्येष्ठयोग्याग्रपूजनम् । "गुणाः श्रुताः सुविरुद्धाश्च देवे सन्ति" इत्यादिश्रुतिवाक्यं हिना सूचयति । सात्वंतस्तंत्रप्रणेतारस्तेषां स्वामी । गतिश्च । इदं चाग्रपूजायोग्यत्वे लिंगम् । "इंद्रो वै सर्वेषां श्रेष्ठः, अग्निर्वै देवानां मुखम्" इत्यादिश्रुतेः । कथमयमर्हणार्ह इति चेदाह—एष कृष्णः । "यो देवानां पुरोहितः पूर्वो यो देवेभ्यो जातः" इत्यादिश्रुतेः । अचेतनमप्येतदधीनसत्ताकमेवेत्याह—देशेत्यादि ॥ १९ ॥
किं बहुना सर्वमेतदात्मकमेवेत्याह—यदात्मकमिति । तात्पर्यात्पुनरुक्तं करोति—क्रतव इति । यः कृष्णः परस्तात्पर्यविषयो यस्य स तथा ॥ २० ॥ सांख्ययोगयोरेकपरत्वमाक्षिपन्समाधत्ते—नन्विति । केवलपरमद्वितीयपरम् ।
तत्राक्षेपे । असौ कृष्ण एवैकोऽद्वितीयो यतोऽतो हेतोः । एतत्परत्वं कृष्णतात्पर्यकत्वम् तन्मयत्वात् । "सर्वं खल्विदं ब्रह्म" इति श्रुतेः कृष्णस्वरूपत्वात् । हे सभ्याः सर्वार्थनिपुणाः । भावितारि भवनशीले कृष्णे ।
अत्र सर्वात्मकत्वे । अज इत्युपलक्षणममृतत्वस्य ॥ २१ ॥ कर्मफलदातृत्वादप्ययमेव योग्य इत्याह—किञ्चेति । 'अवेक्षानुग्रहेक्षणः' इति निरुक्तिः । यस्य कृष्णस्य । यस्मात्कृष्णात् । तत्फलानि कर्मफलानि । यदधीनानि
कृष्णायत्तानि । इत्यर्थ इति—सर्वकर्मफलप्रदस्यैवाग्रार्हणमुचितमिति भावः ॥ २२ ॥ यतोऽसौ कर्मफलदाता तस्माद्धेतोः अस्य तृप्तौ सर्वं तृप्तं स्यादित्याशयेनाह—एवं चेत् श्रीकृष्णार्चने कृते सति ॥ २३ ॥ पुनराशंक्य
समाधत्ते—आत्मनेत्यादि । अपूर्णेषु दत्तमेव नश्यतीति चेदाह—पूर्णायेत्यादि ॥ २४ ॥ देवैः सह वर्तत इति सहदेवो देवव्रतोपि ग्राह्यो, भारते तद्वचनादग्रपूजादानायुक्तेः । यद्वा—देवेन देवशब्देन सह वर्तत इति सहदेवो देव

श्रुत्वा द्विजेरितं राजा ज्ञात्वा हार्दं सभासदाम् ॥ समर्हयद्धृषीकेशं प्रीतः प्रणयविह्वलः ॥ २६ ॥ तत्पादाववनिज्यापः शिरसा लोकपावनीः ॥ सभार्यः सानुजामात्यः सकुटुंबोऽवहन्मुदा॥२७॥वासोभिः पीतकौशेयैर्भूषणैश्च महाधनैः ॥ अर्हयित्वाऽश्रुपूर्णाक्षो नाशकत्समवेक्षितुम् ॥२८॥ इत्थं सभाजितं वीक्ष्य सर्वे प्रांजलयो जनाः ॥ नमो जयेति नेमुस्तं निपेतुः पुष्पवृष्टयः॥२९॥इत्थं निशम्य दमघोषसुतः स्वपीठादुत्थाय कृष्णगुणवर्णनजातमन्युः ॥ उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी संश्रावयन्भगवते परुषाण्यभीतः ॥ ३० ॥ ईशो दुरत्ययः काल इति सत्यवती श्रुतिः ॥ वृद्धानामपि यद्बुद्धिर्बालवाक्यैर्विभिद्यते ॥ ३१ ॥ यूयं पात्रविदां श्रेष्ठा मा मन्ध्वं बालभाषितम् ॥ सदसस्पतयः सर्वे कृष्णो यत्संमतोऽर्हणे ॥ ३२ ॥ तपोविद्याव्रतधरान्ज्ञानविध्वस्तकल्मषान् ॥ परमर्षीन्ब्रह्मनिष्ठाँल्लोकपालैश्च पूजितान् ॥ ३३ ॥ सदसस्पतीनतिक्रम्य गोपालः कुलपांसनः ॥ यथा काकः पुरोडाशं सपर्यां कथमर्हति ॥ ३४ ॥ वर्णाश्रमकुलापेतः सर्वधर्मबहिष्कृतः ॥ स्वैरवर्ती गुणैर्हीनः सपर्यां कथमर्हति ॥ ३५ ॥

द्विजेरितं साधुसाध्विति घोषं श्रुत्वा । हार्दमभिप्रायम् ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ हे सदसस्पतयः सर्वे बालस्य भाषितं म मन्यध्वं मा जानीत मा गृह्णीत । किं तत् । यद्यतः कृष्णोऽर्हणे अग्रपूजायां संमतस्तत् ॥ ३२ ॥ ३३ ॥ अस्यैव वास्तवोऽर्थः पूर्ववदुन्नेयः । गोपाल इति । वेदपृथिव्यादिपालक इत्यर्थः । कुत्सितं वेदविपरीतं लपंतीति कुलपाः पाखंडास्तान् अंसते समाघातयतीति तथा सः । अकाकः कं च अकं च काके सुखदुःखे ते न विद्येते यस्य सोऽकाकः आप्तकाम इत्यर्थः । स तथा । आप्तकामो देवयोग्यं केवलं पुरोडाशमात्रं नार्हत्यपि तु सर्वस्वमपि तथाऽयं श्रीकृष्णोऽपि ब्रह्मर्षियोग्यं सपर्यामात्रं कथमर्हति किं त्वात्मसमर्पणमप्यर्हतीत्यर्थः ॥ ३४ ॥ वर्णाश्रमकुलेभ्योऽपेतो ब्रह्मत्वात् । "अनामगोत्रम्" इति श्रुतेः । अत एवानधिकारित्वात्सर्वैर्धर्मैर्बहिष्कृतः । स्वैरत्वात् । अत

व्रतो भीष्म इत्यर्थः । तत्सहदेववचः । सत्तमा मुन्यादयः ॥ २९ ॥ २६ ॥ तत्पादौ कृष्णांघ्री ॥ २७ ॥ २८॥ सभाजितमार्चितम् । तं कृष्णम् ॥२९॥ इत्थं साधुसाध्विति उत्क्षिप्योर्द्ध्वं कृत्वा । इदं वक्ष्यमाणम् । परुषाणि निष्ठुराणि ॥ ३० ॥ सत्यवती अबाधितार्था । तदुपपादयति–वृद्धानां वयःश्रुतजात्याद्यधिकानाम् । यद्यस्मात् । बालवाक्यैः पौर्वापर्यविचारशून्योक्तिभिः ॥ ३१ ॥ अक्षराधिक्यमार्षम् । तद्बालभाषितं किम् ॥ ३२ ॥ ३३ ॥ इत्यर्थ इति–गोशब्दस्यानेकार्थत्वादिति ज्ञेयम् । इत्यर्थ इति–' आप्तकामः ' इत्यादिश्रुतेः साक्षाद्ब्रह्मैवायमिति भावः । स परमात्मा । इत्यर्थ इति–" परं ब्रह्म कृष्ण इत्यभिधीयते " इति श्रुतेरयं स एवेति भावः ॥ ३४ ॥ अपेतो हीनः । " ब्रह्म नामगोत्रहीनम् " इति श्रुति पदार्थः । नामगोत्रेति जात्यादेरुपलक्षणम् । अत एव ब्रह्मत्वात् । अनधिकारित्वाद्धर्माद्यधिकारस्य मनुष्यपरत्वमेव तदप्यज्ञानिपरमेव । कुत ईश्वरस्य कुतस्तरां साक्षाद्ब्रह्मरूपिणः कृष्णस्य । ' द्वयं तथा ब्रह्मणि कर्म नर्च्छति ' इति दक्षोपाख्याने शिवं प्रकृत्योक्तेरिति भावः । परमेश्वरत्वात्प्रयोजकांतराभावात् । " जगद्वशे वर्ततेऽदः कृष्णस्य सचराचरम् " इति स्मृतेः । अत एव परमेश्वरत्वादेव । एवंभूतः साक्षात्परमात्मरूपः श्रीकृष्णः । इत्यर्थ इति–

ययातिनैषां हि कुलं शप्तं सद्भिर्बहिष्कृतम् ॥ वृथापानरतं शश्वत्सपर्यां कथमर्हति ॥ ३६ ॥ ब्रह्मर्षिसेवितान्देशान्हित्वैतेऽब्रह्मवर्चसम् ॥ समुद्रं दुर्गमाश्रित्य बाधंते दस्यवः प्रजाः ॥ ३७ ॥ एवमादीन्यभद्राणि बभाषे नष्टमंगलः ॥ नोवाच किंचिद्भगवान्यथा सिंहः शिवारुतम् ॥ ३८ ॥ भगवन्निंदनं श्रुत्वा दुःसहं तत्सभासदः ॥ कर्णौ पिधाय निर्जग्मुः शपंतश्चेदिपं रुषा ॥ ३९ ॥ निंदां भगवतः शृण्वंस्तत्परस्य जनस्य वा ॥ ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः ॥ ४० ॥

एव निर्गुणस्तमआदिरहितः । एवंभूतो जीवानां योग्यं तुच्छं सपर्यामात्रं कथमर्हतीत्यर्थः ॥ ३५ ॥ अपि च कथं वर्णनीयो माहात्म्यैरेषां यदूनां महिमा यस्मादेषां कुलं ययातिना शप्तमपि किं सद्भिर्बहिष्कृतमपि तु शिरसा धृतम् । किंचास्मदादिकुलवत्किं वृथापानरतमपि त्वतिनियताचारमित्यर्थः । अहो यदूनामेव तावदीदृशं माहात्म्यम् यदुकुलवृद्धस्य ययातेः शापो न प्राभूदित्यादि । अयं तु साक्षादीश्वरोऽतः सपर्यामात्रं कथमर्हतीत्यर्थः ॥ ३६ ॥ किं च । ये राजानो दुष्टानच्चाटयंति तदर्थं कीकटादिदेशानप्याश्रयंति एते तु ब्रह्मर्षिसेवितानेव देशानाश्रित्याब्रह्मवर्चसं समुद्रं दुर्गमपि हित्वा हापयित्वेत्यर्थः । बाधंते तथा या दस्यवः प्रजास्ताश्च । अयमर्थः वेदस्तदर्थाभियोगो ब्रह्मवर्चसं तद्विरुद्धमब्रह्मवर्चसं समुद्रं मुद्राऽत्र लिंगं तत्सहितं समुद्रम् । वेदविरुद्धलिंगधारिणं पाखंडमित्यर्थः । तल्लिंगं त्याजयित्वा बाधंते दंडयंति । कथंभूतं दुर्गम् । धर्मवत्प्रतीतेरधर्मतया दुर्ज्ञेयमित्यर्थः । तथा दस्यवो दस्यूनपि प्रजावेषेण वर्तमानान् दंडयंति । अतो यदुभ्योऽन्यः को नाम धार्मिकोऽस्तीति । पारुष्यं तूक्तार्थमेव ॥ ३७ ॥ शिवा फेरुस्तस्या रुतं श्रुत्वा यथा सिंहो न किंचिद्ब्रूते तद्वत् ॥ ३८ ॥ ३९ ॥ ४० ॥

सर्वस्वार्पणमर्हतीति भावः ॥ ३५ ॥ ननु कथमयं वर्णाश्रमाद्यपेतो गृहस्थाश्रमोपेतक्षत्रवर्णययातिकुले जातत्वात्तत्राह—ययातिनेति । परमार्थमाह—अपि चेति । इत्यर्थ इति—यत्र शापो न प्रबभूवेति भावः । अन्यदाह—किञ्चेति—वृथापानं मद्यम् । तदुक्तं मेरुतंत्रे—“ वृथापानं तु देवेशि सुरापानं प्रकीर्तितम् । तन्महापातकं ज्ञेयमिति वेदे निरूपितम् ॥ ” । इत्यर्थ इति—काकुना सर्वोत्कृष्टाचारमिति भावः । अतः साक्षादीशत्वादेव । इत्यर्थ इत्युक्तार्थ एव ॥ ३६ ॥ अन्यत्तदुत्कर्षमाह—किञ्चेति । तदर्थं दुष्टोद्घाटनार्थम् । कीकटादिदेशानशुचिदेशान् “ कीकटः कृपणे निःस्वेऽशुचिदेशेभगंडयोः ” इति निरुक्तिः । इत्यर्थ इति—‘ ओहाक्—त्यागे ’ इत्यत्र त्यागपदं त्यजनं त्याजनं वा त्याग इति निरुक्तेरुभयार्थपरत्वादिति भावः । अस्याशयमाह—अयमर्थ इति । तदर्थाभियोगः वेदार्थाभ्यासः “अभ्यासे त्वभियोगः स्यादुद्यमे योजनेऽपि च” इति । “ मुद्रा चिह्ने मुद्रणे च लक्ष्मीकार्षापणोर्मिषु ” इति च निरुक्तिः । इत्यर्थ इति—वेदविरुद्धाचार्येव पाखंड इत्याशयः । तल्लिंगं पाखंडचिह्नम् । इत्यर्थ इति—मूढानां पाखंडमार्गेपि धर्मबुद्ध्या प्रवेशो भवतीति भावः । परुषार्थे तु समुद्राश्रयणाद्दाससाम्यमापादितम् ॥ ३७ ॥ ‘ शिवा क्रोष्ट्री शिवाऽभया ’ इति कोशात् । एवमादीनीत्युक्तेः । तस्य शतापराधक्षमणस्य भगवता प्रतिज्ञातत्वात् । तदुक्तं भारते—“ अपराधशतं क्षाम्यं मातुरस्यैव याचने । दत्तं मया याचितं च तानि पूर्णानि पार्थिवाः । अधुना वधयिष्यामि पश्यतां वो महीक्षिताम् ॥” इति सभापर्वणि ॥ ३८ ॥ तत्सभायां सीदंतीति तथा ॥ ३९ ॥ कुतो निर्जग्मुरिति चेदाह—निंदामिति । तत्परस्य भगवद्भक्तस्य । ततो निंदनस्थानात् । अपैति गच्छति ।

ततः पांडुसुताः क्रुद्धा मत्स्यकैकयसृंजयाः ॥ उदायुधाः समुत्तस्थुः शिशुपालजिघांसवः ॥ ४१ ॥ ततश्चैद्यस्त्वसंभ्रांतो जगृहे खड्गचर्मणी ॥ भर्त्सयन्कृष्णपक्षीयान्राज्ञः सदसि भारत ॥ ४२ ॥ तावदुत्थाय भगवान्स्वान्निवार्य स्वयं रुषा ॥ शिरः क्षुरांतचक्रेण जहारापततो रिपोः ॥ ४३ ॥ शब्दः कोलाहलोऽप्यासीच्छिशुपाले हते महान् ॥ तस्यानुयायिनो भूपा दुद्रुवुर्जीवितैषिणः ॥ ४४ ॥ चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत् ॥ पश्यतां सर्वभूतानामुल्केव भुवि खाच्च्युता ॥ ४५ ॥ जन्मत्रयानुगुणितवैरसंरब्धया धिया ॥ ध्यायंस्तन्मयतां यातो भावो हि भवकारणम् ॥ ४६ ॥ ऋत्विग्भ्यः ससदस्येभ्यो दक्षिणां विपुलामदात् ॥ सर्वान्संपूज्य विधिवच्चक्रेऽवभृथमेकराट् ॥ ४७ ॥ साधयित्वा क्रतुं राज्ञः कृष्णो योगेश्वरेश्वरः ॥ उवास कतिचिन्मासान्सुहृद्भिरभियाचितः ॥ ४८ ॥ ततोऽनुज्ञाप्य राजानमनिच्छंतमपीश्वरः ॥ ययौ सभार्यः सामात्यः स्वपुरं देवकीसुतः ॥ ४९ ॥ वर्णितं तदुपाख्यानं मया ते बहुविस्तरम् ॥ वैकुंठवासिनोर्जन्म विप्रशापात्पुनःपुनः ॥ ५० ॥ राजसूयावभृथ्येन स्नातो राजा युधिष्ठिरः ॥ ब्रह्मक्षत्रसभामध्ये शुशुभे सुरराडिव ॥ ५१ ॥ राज्ञा सभाजिताः सर्वे सुरमानवखेचराः ॥ कृष्णं क्रतुं च शंसंतः स्वधामानि ययुर्मुदा ॥ ५२ ॥

॥ ४१ ॥ ४२ ॥ तावदुत्थायेत्यस्यायमभिप्रायः । एष मत्पार्षदो मत्तुल्यबलः सर्वानेतान्हन्यादतो मयैव शीघ्रं हंतव्य इति तत्क्षणमेवोत्थाय शिरो जहारेति ॥ ४३ ॥ ॥ ४४ ॥ ४५ ॥ नन्वेवं निंदकस्य कथं वासुदेवे प्रवेशस्तत्राह । जन्मत्रयेति । जन्मत्रयेऽनुगुणितमनुवर्तितं यद्वैरं तेन संरब्धयाऽऽविष्टया । तन्मयतां तत्स्वरूपतां यातः । पुनः पार्षदो बभूवेत्यर्थः । अत्र हेतुः । भावो हीति । भावो भावना अनुध्यानं भवस्य ध्येयाकारजन्मनः कारणम् । पेशस्कारिध्यानेन कीटादौ तथा दृष्टत्वादित्यर्थः ॥ ४६ ॥ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ सुरा मानवाः खेचराः प्रमथाश्च ॥ ५२ ॥

सोपि हरिहरिजननिंदाश्रोतापि ॥ ४० ॥ ततो निंदाश्रुतेः ॥ ४१ ॥ ततो मत्स्यादिराज्ञामुत्थानोत्तरम् । असंभ्रांतो निर्भयः ॥ ४२ ॥ ननु सत्स्वनन्तभगवद्योधेषु भगवानेव कथं तद्वधायोत्थित इत्याशंकायामाह–अयमभिप्राय इति । यतो मत्तुल्योऽतो हेतोः ॥ ४३ ॥ तस्य शिशुपालस्य ॥ ४४ ॥ ज्योतिर्जयचैतन्यात्मकम् ॥ ४५ ॥ तत्स्वरूपतां पार्षदः पुनर्बभूवेत्यर्थः । अत्र तत्स्वरूपत्वे । इत्यर्थ इति–" यंयं वापि स्मरन्भावं त्यजत्यंते कलेवरम् । तंतमेवैति कौंतेय सदा तद्भावभावितः ॥" इति श्रीमुखोक्तेरंत्यस्मृतरूपावाप्तिर्भवत्येवेति भावः॥४६॥ एकराट् चक्रवर्ती ॥४७॥४८॥ ततो यज्ञांतस्नानानन्तरम् ॥४९॥ वैकुंठवासिनोर्जयविजययोः ॥५०॥५१॥५२॥

दुर्योधनमृते पापं कलिं कुरुकुलामयम्॥यो न सेहे श्रियं स्फीतां दृष्ट्वा पांडुसुतस्य ताम्॥५३॥ य इदं कीर्तयेद्विष्णोः कर्म चैद्यवधादिकम्॥राजमोक्षं वितानं च सर्वपापैः प्रमुच्यते॥५४॥इति श्रीमद्भागवते महा० दशमस्कन्धोत्त० शिशुपालवधोनाम चतुःसप्ततितमोऽध्यायः॥७४॥ राजोवाच ॥ अजातशत्रोस्तं दृष्ट्वा राजसूयमहोदयम् ॥ सर्वे मुमुदिरे ब्रह्मन्नृदेवा ये समागताः ॥ १ ॥ दुर्योधनं वर्जयित्वा राजानः सर्षयः सुराः ॥ इति श्रुतं नो भगवंस्तत्र कारणमुच्यताम् ॥ २ ॥ श्रीशुक उवाच ॥ पितामहस्य ते यज्ञे राजसूये महात्मनः ॥ बांधवाः परिचर्यायां तस्यासन्प्रेमबंधनाः ॥ ३ ॥ भीमो महानसाध्यक्षो धनाध्यक्षः सुयोधनः ॥ सहदेवस्तु पूजायां नकुलो द्रव्यसाधने ॥४॥गुरुशुश्रूषणे जिष्णुः कृष्णः पादावनेजने ॥ परिवेषणे द्रुपदजा कर्णो दाने महामनाः ॥ ५ ॥ युयुधानो विकर्णश्च हार्दिक्यो विदुरादयः ॥ बाह्लीकपुत्रा भूर्याद्या ये च संतर्दनादयः ॥ ६ ॥ निरूपिता महायज्ञे नानाकर्मसु ते तदा ॥ प्रवर्तंते स्म राजेंद्र राज्ञां प्रियचिकीर्षवः ॥ ७ ॥ ऋत्विक्सदस्यबहुवित्सु सुहृत्तमेषु स्विष्टेषु सूनृतसमर्हणदक्षिणाभिः ॥ चैद्ये च सात्वतपतेश्चरणं प्रविष्टे चक्रुस्ततस्त्ववभृथस्नपनं द्युनद्याम् ॥ ८ ॥ मृदंगशंखपणवधुंधुर्यानकगोमुखाः ॥ वादित्राणि विचित्राणि नेदुरावभृथोत्सवे ॥ ९ ॥ नर्तक्यो ननृतुर्हृष्टा गायका यूथशो जगुः ॥ वीणावेणुतलोन्नादस्तेषां स दिवमस्पृशत् ॥ १० ॥

पापं धर्मद्विषम् । अत्र हेतुः । कलिं कलेरंशम् । अत एव कुरुकुलस्यामयं व्याधिवन्नाशकम् ॥ ५३ ॥ वितानं यज्ञं च ॥ ५४ ॥ इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्री० टीकायां चतुःसप्ततितमोध्यायः ॥ ७४ ॥ पंचयुक्सप्ततितमे यज्ञावभृथसंभ्रमः ॥ सुयोधनस्य चाक्षांत्या मानभंगो दृशिभ्रमात् ॥१॥ दुर्योधनस्यैकस्यैव दुःखे कारणं प्रष्टुमुक्तमनुवदति । अजातशत्रोरिति ॥१॥ इति श्रुतम् । त्वन्मुखादेवेत्यर्थः॥२॥दुर्योधनस्यासहनकारणत्वेन यागमहोत्सवमेव पुनः सिंहावलोकनेन निरूपयति पितामहस्येत्यादिना एकदांतःपुरे तस्येत्यतः प्राक्तनेन ग्रंथेन। प्रेमबंधनाः प्रेमयंत्रिताः ॥३॥ पूजायां संमानने । द्रव्यसाधने नानावस्तुसंपादने ॥ ४ ॥ गुरूणां शुश्रूषणे चंदनालेपनादौ ॥५॥ ६ ॥ निरूपिता नियुक्ताः संतो नानाकर्मसु प्रवर्तंते स्म ॥ ७ ॥ ऋत्विजश्च सदस्याश्च सभासदो बहुविदश्च तेषु । स्विष्टेषु सम्यक्पूजितेषु । सूनृतं प्रियवाक् समर्हणमलंकारादि दक्षिणाश्च प्रसिद्धास्ताभिः द्युनद्यां गंगायाम् ॥ ८ ॥ ९ ॥ १० ॥

ऋते विना । अत्र धर्मद्वेष्टृत्वे । अत एव कल्यंशत्वादेव ॥ ५३ ॥ चैद्यस्य भगवद्विरोधित्वेन पाखण्डत्वात्तद्वधश्रवणमपि पापनाशकमित्याह—कर्म चैद्येत्यादि ॥ ५४ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धे चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ संभ्रम उत्सवः ( १ ) । अजामविद्यां तनोति विस्तारयतीत्यजातः कलिस्तद्रूपो दुर्योधनस्स एव शत्रुर्यस्य सोऽजातशत्रुः । यद्वा—अजातः श्रीकृष्णस्तेन हताः शत्रवो यस्य स तथा । मध्यमपदलोपी समासः । यद्वा—शत्रुरिति भावप्रधानो निर्देशः । तथा च न जातं शत्रुत्वं यस्य स तथा । तस्य युधिष्ठिरस्य । तमलौकिकम् ॥ १ ॥ तत्र दुर्योधनाप्रसन्नतायाम् ॥ २ ॥ तस्य युधिष्ठिरस्य । प्रेमैव बंधनमायत्तीकरणसाधनं येषां ते ॥ ३ ॥ महानसाध्यक्षः पाकशालाध्यक्षः " महानसः पाकशालाप्रभूतशकटालये " इति निरुक्तिः । धनाध्यक्षः सूतस्ततस्समागतधनस्वीकारपरः । तद्धस्ते धनवार्द्धिर्ना रेखाभूदतः श्रीकृष्णानुज्ञया स एव धनाध्यक्षः कृतस्तद्धस्तगतधनस्याक्षय्यत्वादिति ग्रंथांतरादवसेयम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ततः कालव्यवधानाभावेन ॥ ८ ॥ ९ ॥ तेषां वाद्यानाम् । स वाद्यगायननृत्यादि

चित्रध्वजपताकाग्रैरिभेंद्रस्यंदनार्वभिः ॥ स्वलंकृतैर्भटैर्भूपा निर्ययू रुक्ममालिनः ॥ ११ ॥ यदुसृंजयकांबोजकुरुकेकयकोसलाः ॥ कंपयंतो भुवं सैन्यैर्यजमानपुरःसराः ॥ १२ ॥ सदस्यर्त्विग्द्विजश्रेष्ठा ब्रह्मघोषेण भूयसा ॥ देवर्षिपितृगंधर्वास्तुष्टुवुः पुष्पवर्षिणः ॥ १३ ॥ स्वलंकृता नरा नार्यो गंधस्रग्भूषणांबरैः ॥ विलिंपंत्योऽभिषिञ्चन्त्यो विजह्रुर्विविधै रसैः ॥ १४ ॥ तैलगोरसगंधोदहरिद्रासांद्रकुंकुमैः ॥ पुंभिर्लिप्ताः प्रलिंपंत्यो विजह्रुर्वारयोषितः ॥ १५ ॥ गुप्ता नृभिर्निरगमन्नुपलब्धुमेतद्देव्यो यथा दिवि विमानवरैर्नृदेव्यः ॥ ता मातुलेयसखिभिः परिषिच्यमानाः सव्रीडहासविकसद्वदना विरेजुः ॥ १६ ॥ ता देवरानुत सखीन्सिषिचुर्दृतीभिः क्लिन्नांबरा विवृतगात्रकुचोरुमध्याः ॥ औत्सुक्यमुक्तकबराच्च्यवमानमाल्याः क्षोभं दधुर्मलधियां रुचिरैर्विहारैः ॥ १७ ॥ स सम्राड्रथमारूढः सदश्वं रुक्ममालिनम् ॥ व्यरोचत स्वपत्नीभिः क्रियाभिः क्रतुराडिव ॥१८॥ पत्नीसंयाजावभृथ्यैश्चरित्वा ते तमृत्विजः ॥ आचांतं स्नापयांचक्रुर्गंगायां सह कृष्णया ॥ १९ ॥

चित्राणि ध्वजपताकाग्राणि येषु तैरिभेन्द्रैः स्यंदनैरर्वभिरश्वैर्भटैश्च । एवं चतुरंगैः सैन्यैर्निर्ययुः ॥ ११ ॥ यजमानो युधिष्ठिरः पुरःसरो येषां ते ॥ १२ ॥ सदस्या ऋत्विजोऽन्ये च द्विजश्रेष्ठा निर्ययुः ॥ १३ ॥ किंच । गंधादिभिः स्वलंकृता नरा नार्यश्च मिथो विजह्रुः ॥ १४ ॥ रसानेवाह । तैलेति । किंच सांद्रकुंकुमादिभिः पुंभिर्लिप्तास्तान्प्रलिंपंत्यो वारयोषितश्च विजह्रुः ॥ १५ ॥ नृभिर्गुप्ता रथादियानैर्नृदेव्यो राजपत्न्यो निरगमन्निरगुः । एतदुपलब्धं विमानवरैर्देव्यो यथा तद्वत् । मातुलेयैः सखिभिश्च परितः सिच्यमानाः सव्रीडेन हासेन विकसंति वदनानि यासां ताः ॥ १६ ॥ देवरान्पतिभ्रातॄन् उत सखीन्सखीनपि । दृतीभिरुदकनोदनचर्मयंत्रैः सेचनपात्रैश्च । मलधियां कामिनाम् ॥ १७ ॥ क्रियाभिरंगक्रियाभिः क्रतुराट् सशरीरो राजसय इव ॥ १८ ॥ पत्नीसंयाजो यागविशेषः । अवभृथसंबंधि आवभृथ्यं च । तैश्चरित्वाताननुष्ठायेत्यर्थः ॥ १९ ॥

ध्वनिः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ न केवलं निर्ययुरेवेत्याह–किञ्चेति ॥ १४ ॥ अन्यदाह्लादलीलामाह–किञ्चेति ॥ १५ ॥ एतत् क्रीडनम् । उपलब्धुं चक्षुर्विषयीकर्तुम् । देव्यो देवांगनाः । मातुलेयैरिति–कृष्णपट्टराज्ञ्यभिप्रायेण सहदेवादिभिरित्यर्थः । सखिभिः पतिकनिष्ठसखिभिः । ता नृदेव्यः ॥ १६ ॥ ता नृदेव्यः । ‘ दृतिश्चर्मपुटे मत्स्ये ’ इति मेदिनी । “ स्याद्दृतिर्भेदने सेकपात्रे च साध्वसे तथा ” इति निरुक्तिः । आर्द्रचर्मस्पर्शस्याशुचित्वापादकत्वादाह–सेचनपात्रैश्चेति, वंशदलादिनिर्मितैरित्यर्थः । मला मलिना कामाविष्टा धीर्येषां तेषाम् ॥ १७ ॥ स युधिष्ठिरः ॥ १८ ॥ इत्यर्थ इति–छांदस

देवदुंदुभयो नेदुर्नरदुंदुभिभिः समम् ॥ मुमुचुः पुष्पवर्षाणि देवर्षिपितृमानवाः ॥ २० ॥ सस्नुस्तत्र ततः सर्वे वर्णाश्रमयुता नराः ॥ महापातक्यपि यतः सद्यो मुच्येत किल्बिषात् ॥ २१ ॥ अथ राजाऽहते क्षौमे परिधाय स्वलंकृतः ॥ ऋत्विक्सदस्यविप्रादीनानर्चाभरणांबरैः ॥ २२ ॥ बंधुज्ञातिनृपान्मित्रसुहृदोऽन्यांश्च सर्वशः ॥ अभीक्ष्णं पूजयामास नारायणपरो नृपः ॥ २३ ॥ सर्वे जनाः सुररुचो मणिकुंडलस्रगुष्णीषकंचुकदुकूलमहार्घ्यहाराः ॥ नार्यश्च कुंडलयुगालकवृंदजुष्टवक्त्रश्रियः कनकमेखलया विरेजुः ॥ २४ ॥ अथर्त्विजो महाशीलाः सदस्या ब्रह्मवादिनः ॥ ब्रह्मक्षत्रियविट्शूद्रा राजानो ये समागताः ॥ २५ ॥ देवर्षिपितृभूतानि लोकपालाः सहानुगाः ॥ पूजितास्तमनुज्ञाप्य स्वधामानि ययुर्नृप ॥ २६ ॥ हरिदासस्य राजर्षे राजसूयमहोदयम् ॥ नैवातृप्यन्प्रशंसंतः पिबन्मर्त्योऽमृतं यथा ॥ २७ ॥ ततो युधिष्ठिरो राजा सुहृत्संबंधिबांधवान् ॥ प्रेम्णा निवासयामास कृष्णं च त्यागकातरः ॥ २८ ॥ भगवानपि तत्रांग न्यवात्सीत्तत्प्रियंकरः ॥ प्रस्थाप्य यदुवीरांश्च सांबादींश्च कुशस्थलीम् ॥ २९ ॥ अथ राजा धर्मसुतो मनोरथमहार्णवम् ॥ सुदुस्तरं समुत्तीर्य कृष्णेनासीद्गतज्वरः ॥ ३० ॥ एकदान्तःपुरे तस्य वीक्ष्य दुर्योधनः श्रियम् ॥ अतप्यद्राजसूयस्य महित्वं चाच्युतात्मनः ॥ ३१ ॥ यस्मिन्नरेंद्रदितिजेंद्रसुरेंद्रलक्ष्मीर्नाना विभांति किल विश्वसृजोपक्लृप्ताः ॥ ताभिः पतीन्द्रुपदराजसुतोपतस्थे यस्यां विषक्तहृदयः कुरुराडतप्यत् ॥ ३२ ॥ यस्मिंस्तदा मधुपतेर्महिषीसहस्रं श्रोणीभरेण शनकैः क्वणदंघ्रिशोभम् ॥ मध्ये सुचारुकुचकुंकुमशोणहारं श्रीमन्मुखं प्रचलकुंडलकुंतलाढ्यम् ॥ ३३ ॥

॥ २० ॥ २१ ॥ अहते नूतने । आनर्चार्चितवान् ॥ २२ ॥ २३ ॥ सुराणामिव रुक् कांतिर्येषाम् । मणिकुंडलैः सहिता स्रगुष्णीषादयो येषां ते । कुंडलयुगेनालकवृंदेन च जुष्टा वक्त्रश्रीर्यासां ताः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ गतज्वरो निश्चिंत आसीत् ॥ ३० ॥ अच्युते आत्मा यस्य तस्य ॥ ३१ ॥ नरेंद्रादीनां लक्ष्मीर्लक्ष्म्यो विभूतयो विश्वसृजा मयेनोपक्लृप्ता विरचिताः ताभिः सह । कुरुराट् दुर्योधनोऽतप्यत् ॥ ३२ ॥ महिषीसहस्रमिति बहुत्वोपलक्षणम् । क्वणद्भिरंघ्रिभिः शोभा यस्य । मध्येसुचारु सुचारुमध्यमित्यर्थः । कुचकुंकुमैः शोणा हारा यस्य तत् । श्रीमंति मुखानि यस्य तत् । चलैः कुंडलैः कुंतलैश्चाढ्यं संपन्नमशोभतेति शेषः ॥ ३३ ॥

त्वात्कर्मणि तृतीयेति भावः । तं युधिष्ठिरम् । आचांतं कारिताचमनम् । णिजंताच्चमेः क्तः ॥ १९ ॥ २० ॥ तत्र गंगायाम् । ततो युधिष्ठिरस्नानानन्तरम् । यतोऽवभृथस्नानात् । सद्यस्स्नानसमकालमेवेत्यर्थः ॥ २१ ॥ अथ स्नानोत्तरम् । क्षुमा अतसी तज्जे क्षौमे । अहतं नवमंबरमिति पूर्वोक्तलक्षणम् वेत्यर्थः ॥ २२ ॥ अन्यांस्तत्रागतान् ॥ २३ ॥ २४ ॥ अथावभृथस्नानानंतरम् ॥ २५ ॥ तं युधिष्ठिरम् ॥ २६ ॥ २७ ॥ तत ऋत्विगादिप्रस्थानोत्तरम् ॥ २८ ॥ तत्र युधिष्ठिरनगरे । युधिष्ठिरप्रियार्थम् ॥ २९ ॥ इत्थं पूर्वोक्तरीत्या ॥ ३० ॥ अंतःपुरे पुरवद्विस्तीर्णे विमानेंतस्तन्मध्ये । तस्य युधिष्ठिरस्य ॥ ३१ ॥ यस्मिन्नंतःपुरे । ताभिर्नरेंद्रादिविभूतिभिः । यस्यां द्रुपदराजसुतायाम् । कुरुराट् कुरुनगरहस्तिनापुरेश इत्यर्थः ॥ ३२ ॥ तदा यज्ञांतोत्सवे । इत्यर्थ इति—मध्यशब्दस्यैदंतत्वं निपा

सभायां मयक्लृप्तायां क्वापि धर्मसुतोऽधिराट् ॥ वृतोनुजैर्बंधुभिश्च कृष्णेनापि स्वचक्षुषा ॥ ३४ ॥ आसीनः कांचने साक्षादासने मघवानिव ॥ पारमेष्ठ्यश्रिया जुष्टः स्तूयमानश्च बंदिभिः ॥ ३५ ॥ तत्र दुर्योधनो मानी परीतो भ्रातृभिर्नृप ॥ किरीटमाली न्यविशदसिहस्तः क्षिपन्रुषा ॥ ३६ ॥ स्थलेऽभ्यगृह्णाद्वस्त्रांतं जलं मत्वा स्थलेऽपतत् ॥ जले च स्थलवद्भ्रांत्या मयमायाविमोहितः ॥ ३७ ॥ जहास भीमस्तं दृष्ट्वा स्त्रियो नृपतयोऽपरे ॥ निवार्यमाणा अप्यंग राज्ञा कृष्णानुमोदिताः ॥ ३८ ॥ स व्रीडितोऽवाग्वदनो रुषा ज्वलन्निष्क्रम्य तूष्णीं प्रययौ गजाह्वयम् ॥ हाहेति शब्दः सुमहानभूत्सतामजातशत्रुर्विमना इवाभवत् ॥ बभूव तूष्णीं भगवान्भुवो भरं समुज्जिहीर्षुर्भ्रमति स्म यद्दृशा ॥ ३९ ॥ एतत्तेऽभिहितं राजन्यत्पृष्टोऽहमिह त्वया ॥ सुयोधनस्य दौरात्म्यं राजसूये महाक्रतौ ॥ ४० ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधोत्तरार्धे दुर्योधनमानभंगोनाम पंचसप्ततितमोऽध्यायः ॥ ७५ ॥

क्वापि कदाचित्स विरेज इति शेषः । स्वस्य चक्षुषा । हिताहितज्ञापकेन ॥ ३४ ॥ ३५ ॥ मानी साहंकारः । किरीटं च माला च विद्येते यस्य सः । न्यविशद्विवेश । क्षिपन् द्वास्थादीनधिक्षिपन् ॥ ३६ ॥ तत्र स्थले वस्त्रांतमभ्यगृह्णादाकुंचितवान् । कुतः । तस्मिन्स्थले एव भ्रांत्या जलं मत्वा । जले चापतत् । कुतः । स्थलवद्भ्रांत्या ॥ ३७ ॥ ३८ ॥ भुवो भरं भारं जिहीर्षुरिति । अथ संपादितेन कलहबीजेन कुरूणां संहारं करिष्यामीति मत्वेति । किंच यस्य दृशा दृष्टिमात्रेण दुर्योधनो भ्रमति स्म भ्रांतिं प्राप मयमाया तु निमित्तमात्रम् । स भूभारहरणबीजं दुर्योधनस्य भ्रमं भीमादिहास्येन च तस्य पराभवं विधाय तूष्णीमासीदित्यर्थः ॥ ३९ ॥ ४० ॥ इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्री० टीकायां पंचसप्ततितमोऽध्यायः ॥ ७५ ॥

त्यते । मध्यं सुचारु यस्य तन्मध्येसुचारु इति विग्रहादिति ध्येयम् ॥ ३२ ॥ ३४ ॥ ३५ ॥ तत्र सभायाम् ॥ ३६ ॥ तत्र सभायाम् । आकुंचितवान् संकोचितवान् । तत्र हेतुमाशंकते—कुत इति । भ्रांतिरपि कुतस्तत्राह—मयमायेत्यादि ॥ ३७ ॥ तं दुर्योधनम् ॥ ३८ ॥ स दुर्योधनः । बीजहेतुमाह—किञ्चेति । यस्य कृष्णस्य । स कृष्णः । तस्य दुर्योधनस्य । इत्यर्थ इति—भीमं हास्यान्न वारितवान्दुर्योधनं च न सांत्वितवानिति भावः ॥ ३९ ॥ यत्त्वया दुर्योधनस्य दौरात्म्यमुद्दिश्येति शेषः । अहं पृष्ट एतदिति योज्यम् ॥ ४० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धे पंचसप्ततितमोऽध्यायः ॥ ७५ ॥

॥ श्रीशुक उवाच ॥ अथान्यदपि कृष्णस्य शृणु कर्माद्भुतं नृप ॥ क्रीडानरशरीरस्य यथा सौभपतिर्हतः ॥ १ ॥ शिशुपालसखः शाल्वो रुक्मिण्युद्वाह आगतः ॥ यदुभिर्निर्जितः संख्ये जरासंधादयस्तथा ॥ २ ॥ शाल्वः प्रतिज्ञामकरोच्छृण्वतां सर्वभूभुजाम् ॥ अयादवीं क्ष्मां करिष्ये पौरुषं मम पश्यत ॥ ३ ॥ इति मूढः प्रतिज्ञाय देवं पशुपतिं प्रभुम् ॥ आराधयामास नृपः पांसुमुष्टिं सकृद्ग्रसन् ॥ ४ ॥ संवत्सरांते भगवानाशुतोष उमापतिः वरेण च्छंदयामास शाल्वं शरणमागतम् ॥ ५ ॥ देवासुरमनुष्याणां गंधर्वोरगरक्षसाम् ॥ अभेद्यं कामगं वव्रे स यानं वृष्णिभीषणम् ॥ ६॥ तथेति गिरिशादिष्टो मयः परपुरंजयः ॥ पुरं निर्माय शाल्वाय प्रादात्सौभमयस्मयम् ॥ ७ ॥ स लब्ध्वा कामगं यानं तमोधाम दुरासदम् ॥ ययौ द्वारवतीं शाल्वो वैरं वृष्णिकृतं स्मरन् ॥ ८ ॥ निरुध्य सेनया शाल्वो महत्या भरतर्षभ ॥ पुरीं बभंजोपवनान्युद्यानानि च सर्वशः ॥ ९ ॥ सगोपुराणि द्वाराणि प्रासादाट्टालतोलिकाः ॥ विहारान्स विमानाग्र्यान्निपेतुः शस्त्रवृष्टयः ॥ १० ॥

ततः षट्सप्ततितमे वृष्णिशाल्वमहामृधे ॥ द्युमद्गदाप्रहारेण रणात्प्रद्युम्ननिर्गमः ॥ १ ॥ संपाद्य धर्मराजस्य राजसूयमहोदयम् ॥ निहत्य सौभराजादीनथोपारमदच्युतः ॥ २ ॥ १ ॥ २ ॥ ३ ॥ प्रत्यहं सकृत्पांसुमुष्टिमेकां ग्रसन् भक्षयन् ॥ ४ ॥ संवत्सरांत इति । आशुतोषोऽपि भगवानुमापतिः श्रीकृष्णविद्विषि शाल्वे वरस्य वैफल्यं मन्यमानो न शीघ्रं प्रादुरभूत् तस्यातिनिर्बंधमालक्ष्य संवत्सरांते च वरेण च्छंदयामासेच्छां कारितवान्वरं वृणीष्वेत्युवाचेत्यर्थः ॥ ५ ॥ ६॥ तथेति तथेति प्रतिज्ञाय गिरिशेनादिष्टोऽयस्मयं लोहमयं पुरं सौभसंज्ञं निर्माय रचयित्वा प्रादात् ॥ ७ ॥ तमसोंऽधकारस्य धामाश्रयम् । अन्यैर्दुरासदं दुष्प्राप्यम् ॥ ८ ॥ ९ ॥ प्रासादा गृहा

ततो महाभारतबीजवपनोत्तरम् (१) । अथ सौभराजादिवधोत्तरम् (२) । अथ युधिष्ठिरराजसूयानंतरम् ॥१॥ तथा निर्जिताः ॥२॥३॥ इति उक्तरीत्या । पांसुर्धूलिः "पांसुर्धूलौ च सस्यार्थचिरसंचितगोमये" इति मेदिनी ॥४॥इत्यर्थ इति—कृष्णद्विषि वरदानानौचित्येऽपि भक्ताभीष्टदत्वात्तं वरार्थं प्रेरयामासेति भावः॥५॥स शाल्वः । यानं गमनवत्पुरम् "यानं वाहनमुद्दिष्टं यानं गमनवत्पुरम्" इति धरणिः । अभेद्यमिहाकारवाच्चेन वासुदेवेन भेद्यमिति वाचोभिप्रायः । अत एव " तत्कृष्णहस्तेरितया विचूर्णितं पपात तोये गदया सहस्रधा " इत्युक्त्या विरोधो नेति ॥ ६ ॥ " अयस्मयादीनि च्छंदसि " इति पाणिनिः ॥ ७ ॥ स शाल्वः । तमोधाम नीलरश्मिपुंजात्मकत्वात् ॥ ८ ॥ वृष्णिकृतं रुक्मिणीविवाहादिषु जातम् ॥ ९ ॥ तदुपरि प्रासादोपरि । तत्पर्यंतमट्टालिकापर्यंतम् । स शाल्वः । न केवलं स एव बभंजापि तु तस्मान्महादेवप्रसादलब्धविमानादपीत्याह—किं

शिला द्रुमाश्चाशनयः सर्पा आसारशर्कराः ॥ प्रचंडश्चक्रवातोऽभूद्रजसाऽऽच्छादिता दिशः ॥ ११ ॥ इत्यर्द्यमाना सौभेन कृष्णस्य नगरी भृशम् ॥ नाभ्यपद्यत शं राजंस्त्रिपुरेण यथा मही ॥ १२ ॥ प्रद्युम्नो भगवान् वीक्ष्य बाध्यमाना निजाः प्रजाः ॥ मा भैष्टेत्यभ्यधाद्वीरो रथारूढो महायशाः ॥ १३ ॥ सात्यकिश्चारुदेष्णश्च सांबोऽक्रूरः सहानुजः ॥ हार्दिक्यो भानुविंदश्च गदश्च शुकसारणौ ॥ १४ ॥ अपरे च महेष्वासा रथयूथपयूथपाः ॥ निर्ययुर्दंशिता गुप्ता रथेभाश्वपदातिभिः ॥ १५ ॥ ततः प्रववृते युद्धं शाल्वानां यदुभिः सह ॥ यथासुराणां विबुधैस्तुमुलं लोमहर्षणम् ॥१६॥ ताश्च सौभपतेर्माया दिव्यास्त्रै रुक्मिणीसुतः ॥ क्षणेन नाशयामास नैशं तम इवोष्णगुः ॥१७॥ विव्याध पंचविंशत्या स्वर्णपुंखैरयोमुखैः ॥ शाल्वस्य ध्वजिनीपालं शरैः सन्नतपर्वभिः ॥ १८ ॥ शतेनाताडयच्छाल्वमेकैकेनास्य सैनिकान् ॥ दशभिर्दशभिर्नेतॄन्वाहनानि त्रिभिस्त्रिभिः ॥ १९ ॥ तदद्भुतं महत्कर्म प्रद्युम्नस्य महात्मनः ॥ दृष्ट्वा तं पूजयामासुः सर्वे स्वपरसैनिकाः ॥ २० ॥ बहुरूपैकरूपं तद्दृश्यते न च दृश्यते ॥ मायामयं मयकृतं दुर्विभाव्यं परैरभूत् ॥ २१ ॥ क्वचिद्भूमौ क्वचिद्व्योम्नि गिरिमूर्ध्नि जले क्वचित् ॥ अलातचक्रवद्भ्राम्यत्सौभं तद्दुरवस्थितम् ॥ २२ ॥

अट्टालास्तदुपरिगृहास्तोलिकास्तत्पर्यंतकुड्यानि ताः । विहारान् क्रीडास्थानानि च स बभंज । किंच विमानाग्र्यात्तस्माच्छस्त्रवृष्ट्यादयः पेतुः ॥ १० ॥ आसारशर्करा धारासंपातवज्जलोपलाः ॥ ११ ॥ शं सुखं नाभ्यपद्यत ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ तुमुलं व्याकुलम् । लोमहर्षणं रौद्रम् ॥ १६ ॥ नैशं निशि भवं तम उष्णगुः सूर्य इव ॥१७॥ किंच विव्याधेति । स्वर्णमयानि पुंखानि पृष्ठप्रांता येषां तैः । अयो लोहं तन्मयानि मुखान्यग्राणि येषां तैः । ध्वजिनीपालं सेनान्यम् । सन्नतानि निम्नानि पर्वाणि ग्रंथयो येषां तैः ॥ १८ ॥ सैनिकान्भटान् । नेतॄन्सारथीन् ॥ १९ ॥ स्वपरसेनयोर्वर्तमानाः सर्वे पूजयामासुः संमानितवंतः ॥ २० ॥ कदाचिद्बहुरूपं कदाचिदेकरूपं क्वचिद्दृश्यते क्वचिन्न दृश्यते एवं दुर्विभाव्यं दुर्वितर्क्यमभूत् ॥ २१ ॥ किंच क्वचिदिति । एवं तद्दुरवस्थितमनवस्थितं चाभूत् ॥ २२ ॥

चेति ॥ १० ॥ जलोपलाः करकाः ॥ ११ ॥ सौभेन तत्संज्ञपुरेण तत्रत्यशाल्वेन च ॥ १२ ॥ १३ ॥ १४ ॥ दंशिताः संनद्धाः ॥ १५ ॥ ततः पुरात् प्रद्युम्ननिर्गमनोत्तरम् ॥ १६ ॥ ताः शिलाद्रुमवर्षणादिरूपाः । उष्णा गावः किरणा यस्य स तथा ॥ १७ ॥ माया विनाश्य युद्धं चकारेत्याह—किंचेति ॥ १८ ॥ १९ ॥ तच्छाल्वादिताडनरूपम् । तं प्रद्युम्नम् ॥ २० ॥ तत्पुरम् ॥ २१ ॥ तत्पुरगतमन्यदद्भुतमाह—किंचेति । तत्पुरम् ॥ २२ ॥

यत्रयत्रोपलक्ष्येत ससौभः सहसैनिकः ॥ शाल्वस्ततस्ततोऽमुंचन्छरान्सात्वतयूथपाः ॥ २३ ॥ शरैरग्न्यर्कसंस्पर्शैराशीविषदुरासदैः ॥ पीड्यमानपुरानीकः शाल्वोमुह्यत्परेरितैः ॥ २४ ॥ शाल्वानीकपशस्त्रौघैर्वृष्णिवीरा भृशार्दिताः ॥ न तत्यजू रणं स्वंस्वं लोकद्वयजिगीषवः ॥ २५ ॥ शाल्वामात्यो द्युमान्नाम प्रद्युम्नं प्राक्प्रपीडितः ॥ आसाद्य गदया मौर्व्या व्याहत्य व्यनदद्बली ॥२६॥ प्रद्युम्नं गदया शीर्णवक्षःस्थलमरिंदमम् ॥ अपोवाह रणात्सूतो धर्मविद्दारुकात्मजः ॥ २७ ॥ लब्धसंज्ञो मुहूर्तेन कार्ष्णिः सारथिमब्रवीत् ॥ अहो असाध्विदं सूत यद्रणान्मेऽपसर्पणम् ॥ २८ ॥ न यदूनां कुले जातः श्रूयते रणविच्युतः ॥ विना मत्क्लीबचित्तेन सूतेन प्राप्तकिल्बिषात् ॥ २९ ॥ किंनु वक्ष्येऽभिसंगम्य पितरौ रामकेशवौ ॥ युद्धात्सम्यगपक्रांतः पृष्टस्तत्रात्मनः क्षणम् ॥ ३० ॥ व्यक्तं मे कथयिष्यंति हसंत्यो भ्रातृजामयः ॥ क्लैब्यं कथं कथं वीर तवान्यैः कथ्यतां मृधे ॥ ३१ ॥ सारथिरुवाच ॥ धर्मं विजानताऽऽयुष्मन्कृतमेतन्मया विभो ॥ सूतः कृच्छ्रगतं रक्षेद्रथिनं सारथिं रथी ॥ ३२ ॥ एतद्विदित्वा तु भवान्मयापोवाहितो रणात् ॥ उपसृष्टः परेणेति मूर्छितो गदया हतः ॥ ३३ ॥ इति श्रीमद्भागवते महापुराणे द० उ० शाल्वयुद्धे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

॥२३॥ अग्निवद्दाहकोऽर्कवद्युगपत्सर्वतः संस्पर्शो येषां तैः । आशीविषवदेकदेशस्पर्शमात्रेण मारकत्वादुरासदैर्दुःसहैः । पीड्यमानं पुरमनीकानि च यस्य सः । परैर्यदुभिरीरितैर्मुक्तैः ॥२४॥ भृशार्दिता अपि स्वंस्वं रणं स्वांस्वां युद्धभूमिम् ॥ २५ ॥ मौर्व्या कार्ष्णायसमय्या व्याहत्य प्रहृत्य ॥ २६ ॥ अपोवाहान्यतो निनाय ॥२७॥२८॥ मत्तो विना । क्लीबं चित्तं यस्य तेन । त्वया सूतेन ॥ २९ ॥ पितरौ रामकृष्णावभिसंगम्य तत्पार्श्वे गत्वा ताभ्यां पृष्टः स्वयोग्यं किंनु वक्ष्यामीति ॥ ३० ॥ मे भ्रातृभार्याः व्यक्तं निश्चितं मत्क्लैब्यं कथयिष्यंति । तत्कथनमनुकरोति । कथंकथमिति ॥ ३१ ॥ विभो हे समर्थ । एतदपसर्पणम् । धर्ममाह । सूत इति ॥ ३२ ॥ अपोवाहितोऽपनीतः । उपसृष्ट उपसर्गं पीडां प्राप्त इति कृत्वा । यतः परेण शत्रुणा गदया हतः सन्मूर्छितो निःसंज्ञतां गतो भवानिति ॥ ३३ ॥ इति श्रीमद्भा० महापुराणे द० उ० श्री० टी० षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

यत्रयत्र भूम्यादौ । ततस्ततस्तत्रतत्र ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ अपसर्पणं बहिर्निर्गमनम् ॥ २८ ॥ प्राप्तं कल्मषमपवादो येन तस्मात् 'कल्मषं पापनिंदयोः' इति निघंटुः । किल्बिषपाठेपि स एवार्थः ॥ २९ ॥ तत्र पितृपार्श्वे । किं वक्ष्यामि न किमपि वक्तुं योग्यो भविष्यामीत्यर्थः ॥ ३० ॥ तासां कथनं तत्कथनम् ॥ ३१ ॥ ३२ ॥ एतद्वचनम् ॥ ३३ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

श्रीशुक उवाच ॥ स उपस्पृश्य सलिलं दंशितो धृतकार्मुकः ॥ नय मां द्युमतः पार्श्वं वीरस्येत्याह सारथिम् ॥ १ ॥ विधमंतं स्वसैन्यानि द्युमंतं रुक्मिणीसुतः ॥ प्रतिहत्य प्रत्यविध्यन्नाराचैरष्टभिः स्मयन् ॥२॥ चतुर्भिश्चतुरो वाहान्सूतमेकेन चाहनत् ॥ द्वाभ्यां धनुश्च केतुं च शरेणान्येन वै शिरः ॥ ३ ॥ गदसात्यकिसांबाद्या जघ्नुः सौभपतेर्बलम् ॥ पेतुः समुद्रे सौभेयाः सर्वे संछिन्नकंधराः ॥ ४ ॥ एवं यदूनां शाल्वानां निघ्नतामितरेतरम् ॥ युद्धं त्रिणवरात्रं तदभूत्तुमुलमुल्बणम् ॥ ५ ॥ इंद्रप्रस्थं गतः कृष्ण आहूतो धर्मसूनुना ॥ राजसूयेऽथ निर्वृत्ते शिशुपाले च संस्थिते ॥ ६ ॥ कुरुवृद्धाननुज्ञाप्य मुनींश्च ससुतां पृथाम् ॥ निमित्तान्यतिघोराणि पश्यन्द्वारवतीं ययौ ॥ ७ ॥ आह चाहमिहायात आर्यमिश्राभिसंगतः ॥ राजन्याश्चैद्यपक्षीया नूनं हन्युः पुरीं मम ॥ ८ ॥ वीक्ष्य तत्कदनं स्वानां निरूप्य पुररक्षणम् ॥ सौभं च शाल्वराजं च दारुकं प्राह केशवः ॥ ९ ॥ रथं प्रापय मे सूत शाल्वस्यांतिकमाशु वै ॥ संभ्रमस्ते न कर्तव्यो मायावी सौभराडयम् ॥ १० ॥ इत्युक्तश्चोदयामास रथमास्थाय दारुकः ॥ विशंतं ददृशुः सर्वे स्वे परे चारुणानुजम् ॥ ११ ॥ शाल्वश्च कृष्णमालोक्य हतप्रायबलेश्वरः ॥ प्राहरत्कृष्णसूताय शक्तिं भीमरवां मृधे ॥ १२ ॥

सप्तयुक्सप्ततितमे नानामायाविचक्षणः ॥ कृष्णेनागत्य शाल्वस्तु हतः सौभं च चूर्णितम् ॥ १ ॥ दंशितः सन्नद्धः ॥ १ ॥ विधमंतं क्षपयंतम् । प्रतिहत्य प्रतिरुध्य ॥ २ ॥ अष्टानां विनियोगमाह । चतुर्भिरिति ॥ ३ ॥ सौभेयाः सौभस्थाः ॥ ४ ॥ नवानां रात्रीणां समाहारो नवरात्रम् । त्रयाणां नवरात्राणां समाहारस्त्रिणवरात्रम् । सप्तविंशतिमहोरात्राणीत्यर्थः । तुमुलमाकुलम् । उल्बणं घोरम् ॥ ५ ॥ परमतमुपन्यस्यति । इंद्रप्रस्थं गत इत्यादिना ॥ ६ ॥ ७ ॥ आह चेति । स्वगतमेव पथि चिंताविजृंभितभाषणम् । आर्यमिश्राभिसंगतो बलभद्रसहितः ॥ ८ ॥ दुर्निमित्तदर्शनाकुलचित्त एवं चिंतयन् द्वारकामागत्य स्वानां कदनं वीक्ष्य सौभं च शाल्वराजं च वीक्ष्य रामं पुररक्षणं प्रति निरूप्य नियुज्य दारुकं प्राहेत्यन्वयः ॥ ९ ॥ ते त्वया ॥ १० ॥ आस्थाय सम्यगधिष्ठायारुणानुजं ध्वजे वर्तमानं गरुडम् ॥ ११ ॥ हतप्रायश्च बलस्य सैन्यस्येश्वरः ॥ १२ ॥

आगत्य राजसूयात् ( १ ) । स प्रद्युम्नः ॥ १ ॥ उपसर्गवशाद्धमतिरत्र नाशने । शतृप्रत्ययः ॥ २ ॥ अष्टानां बाणानाम् । विनियोगं कृत्यम् ॥ ३ ॥ ४ ॥ तद्युद्धम् ॥ ५ ॥ परमतं व्यासेतरमतम् । उपन्यस्यति कथयति शुकः ॥ ६ ॥ ७ ॥ ८ ॥ तच्छाल्वकृतम् । कदनं मर्दम् 'कदनं मर्दपापयोः' इति मेदिनी ॥ ९ ॥ संभ्रमो भयम् "संभ्रमः साध्वसेऽपि स्यात्संवेगादरयोरपि" इति मेदिनी ॥ १० ॥ ११ ॥ १२ ॥

तामापतंतीं नभसि महोल्कामिव रंहसा॥भासयंतीं दिशः शौरिः सायकैः शतधाऽच्छिनत्॥१३॥तं च षोडशभिर्विद्ध्वा बाणैः सौभं च खे भ्रमत्॥अविध्यच्छरसंदोहैः खं सूर्य इव रश्मिभिः ॥१४॥ शाल्वः शौरेस्तु दोः सव्यं सशार्ङ्गं शार्ङ्गधन्वनः ॥ बिभेद न्यपतद्धस्ताच्छार्ङ्गमासीत्तदद्भुतम् ॥ १५ ॥ हाहाकारो महानासीद्भूतानां तत्र पश्यताम् ॥ विनद्य सौभराडुच्चैरिदमाह जनार्दनम् ॥ १६ ॥ यत्त्वया मूढ नः सख्युर्भ्रातुर्भार्या हृतेक्षताम् ॥ प्रमत्तः स सभामध्ये त्वया व्यापादितः सखा ॥ १७ ॥ तं त्वाद्य निशितैर्बाणैरपराजितमानिनम् ॥ नयाम्यपुनरावृत्तिं यदि तिष्ठेर्ममाग्रतः ॥ १८ ॥ श्रीभगवानुवाच ॥ वृथा त्वं कत्थसे मंद न पश्यस्यंतिकेंऽतकम् ॥ पौरुषं दर्शयंति स्म शूरा न बहुभाषिणः ॥१९॥ इत्युक्त्वा भगवाञ्छाल्वं गदया भीमवेगया ॥ तताड जत्रौ संरब्धः स चकंपे वमन्नसृक्॥२०॥ गदायां सन्निवृत्तायां शाल्वस्त्वंतरधीयत ॥ ततो मुहूर्त आगत्य पुरुषः शिरसाच्युतम्॥ देवक्या प्रहितोऽस्मीति नत्वा प्राह वचो रुदन् ॥ २१ ॥ कृष्णकृष्ण महाबाहो पिता ते पितृवत्सल ॥ बद्ध्वाऽपनीतः शाल्वेन सौनिकेन यथा पशुः॥ ॥ २२ ॥ निशम्य विप्रियं कृष्णो मानुषीं प्रकृतिं गतः ॥ विमनस्को घृणी स्नेहाद्बभाषे प्राकृतो यथा ॥ २३ ॥ कथं राममसंभ्रान्तं जित्वाऽजेयं सुरासुरैः ॥ शाल्वेनाल्पीयसा नीतः पिता मे बलवान्विधिः ॥ २४ ॥ इति ब्रुवाणे गोविंदे सौभराट् प्रत्युपस्थितः ॥ वसुदेवमिवानीय कृष्णं चेदमुवाच सः ॥ २५ ॥ एष ते जनिता तातो यदर्थमिह जीवसि ॥ वधिष्ये वीक्षतस्तेऽमुमीशश्चेत्पाहि बालिश ॥ २६ ॥

॥ १३ ॥ तं च शाल्वम् । शरसंदोहैः शरजालैः । खं सूर्य इव रश्मिभिरिति सुनीलत्वविपुलत्वादिभिराकाशोपमा सौभस्य । अचिंत्यवेगबाहुल्यादिभिः शराणां रश्मिसादृश्यम् । अयत्नेनैव रश्मिवच्छरजालप्रसारणात्सूर्यतुल्यः श्रीकृष्ण इति ॥ १४ ॥ दोर्बाहुम् ॥ १५ ॥ १६ ॥ सख्युः शिशुपालस्य । ईक्षतामस्माकम् ।प्रमत्तोऽनवहितः । व्यापादितो निहतः ॥ १७ ॥ अपराजितोऽहमिति मानिनं मानवंतम् । अपुनरावृत्तिं मृत्युम् । तिष्ठेः स्थास्यसि ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ घृणी दयावान् ॥ २३ ॥ २४ ॥ २५ ॥ जनिता जनयिता ईशश्चेच्छक्तश्चेत् ॥ २६ ॥

तां शक्तिम् ॥ १३ ॥ तं शाल्वम् ॥ १४ ॥ तच्छार्ङ्गपतनम् ॥ १५ ॥ तत्र युद्धे । इदं वक्ष्यमाणम् ॥ १६ ॥ सखित्वादेव भ्रातुरित्युक्तम् । स शिशुपालः ॥ १७ ॥ तं सखिहंतारम् ॥ १८ ॥ अंतकं तवांतकर्तारं मामित्यर्थः ॥ १९ ॥ स शाल्वः ॥ २० ॥ ततोंतर्द्धानानंतरम् । मुहूर्ते मुहूर्तमिते काले गते सति । पुरुषः द्वारकास्थपुरुषः ॥ २१ ॥ २२ ॥ प्रकृतिं स्वभावम् ॥ २३ ॥ अहो विधिर्दैवम् ॥ २४ ॥ इदं वक्ष्यमाणम् ॥ २५ ॥ यदर्थं पितृनिमित्तम् । पितरि मृते त्वमपि मरिष्यसीति वृद्धवसुदेवकृपया त्वां न मारयामि । मृते त्वस्मिन्पुनस्त्वामप्यहं मारयिष्यामीति भावः ॥ २६ ॥

एवं निर्भर्त्स्य मायावी खड्गेनानकदुंदुभेः ॥ उत्कृत्त्य शिर आदाय खस्थं सौभं समाविशत् ॥ २७ ॥ ततो मुहूर्तं प्रकृतावुपप्लुतः स्वबोध आस्ते स्वजनानुषंगतः ॥ महानुभावस्तदबुध्यदासुरीं मायां स शाल्वप्रसृतां मयोदिताम् ॥ २८ ॥ न तत्र दूतं न पितुः कलेवरं प्रबुद्ध आजौ समपश्यदच्युतः ॥ स्वाप्नं यथा चांबरचारिणं रिपुं सौभस्थमालोक्य निहंतुमुद्यतः ॥ २९ ॥ एवं वदंति राजर्षे ऋषयः केच नान्विताः ॥ यत्स्ववाचो विरुध्येत नूनं तन्न स्मरंत्युत ॥ ३० ॥ क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसंभवाः ॥ क्व चाखंडितविज्ञानज्ञानैश्वर्यस्त्वखंडितः ॥ ३१ ॥ यत्पादसेवोर्जितयाऽऽत्मविद्यया हिन्वंत्यनाद्यात्मविपर्ययग्रहम् ॥ लभंत आत्मीयमनंतमैश्वरं कुतो नु मोहः परमस्य सद्गतेः ॥ ३२ ॥

॥ २७ ॥ स्वबोधः स्वतःसिद्धज्ञानवानपि स्वजनस्नेहतः प्रकृतौ मनुष्यस्वभावे उपप्लुतो निमग्न आस्ते अतिष्ठत् ततस्तत्सर्वमासुरीं मायामबुध्यत् । मायेयमिति ज्ञातवान् ॥ २८ ॥ स्वाप्नः स्वप्नप्रपंचं यथा ॥ २९ ॥ एवं परमतमुपन्यस्तं निराकरोति । एवमिति । केच केचन । नान्विता अनन्विताः पूर्वापरानुसंधानरहिताः । तदाह । यत्स्ववाच इति । तन्नानुस्मरंतीत्यर्थः । अयमभिप्रायः । न तावद्राजसूयार्थं रामेण सह गतः श्रीकृष्णः संकर्षणमनुज्ञाप्येति पूर्वमुक्तत्वात् ॥ ३० ॥ असंभावितं चेत्याह । क्व शोकमोहाविति।भयं वा दुर्निमित्तदर्शनकृतं नूनं हन्युः पुरीं ममेति यदुक्तं यच्च हस्ताच्छार्ङ्गं न्यपतदित्युक्तं तद्वयं वा क्वेति । अज्ञेषु संभवो येषां ते । अखंडितानि विज्ञानज्ञानैश्वर्याणि यस्य सः। तत्र विज्ञानं स्वरूपविषयम् । ज्ञानं बाह्यविषयम् ॥ ३१ ॥ किंच । यस्य पादसेवया ऊर्जिता पुष्कला या आत्मविद्या तया अनादिश्वा

एवमुक्तरीत्या निर्भर्त्स्य कटुक्त्वा । उत्कृत्त्य छित्त्वा ॥ २७ ॥ ततो वसुदेवशिरश्छेदोत्तरम् । स शाल्वः । तथा च श्रुतिः–" यदचरस्तन्वा वावृधानो बलानींद्र प्रब्रुवाणो जनेषु ॥ मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा विवित्से " इति श्रुतिसिद्धोयमर्थः । तथा हि–हे इंद्र तन्वा वावृधानः स्वरूपेण भृशं वर्द्धमानस्त्वं बलानि वीर्याणि विक्रमलक्षणानि अचरः अकृतेति यत्स्वजनेषु प्रब्रुवाणः व्याकुर्वाणो वर्तस इति शेषः ॥ तस्मात्स्वभावरहस्यं स्वजना जानंतीत्यर्थः । शाल्वादिशत्रुणा क्रियमाणानि यानि युद्धान्याहुः । पुराणादावेतानि त्वामुद्दिश्य सा मयोदिता माया इत् इंद्रजाललक्षणैव त्वं पुरा प्रथमतो मुहूर्त्तं शत्रुसुखत्रोटनान्मायां न विवित्से न ज्ञातवानसि । अद्याधुना । विवित्से ननु पश्चात्सा सिद्धाभूदित्यर्थः ॥ २८ ॥ तत्र युद्धे । अच्युतो ज्ञानच्युतिरहितः ॥ २९ ॥ तदाह पूर्वपरानुसंधानराहित्यमाह । स्ववाचो यद्विरुध्येत । इत्यर्थ इति–तद्विरोधलक्षणं वचो नानुसंदधत इति । अत्र तात्पर्यमाह–अयमभिप्रायः । न तावदित्यादिना, मम त्वित्थं प्रतिभाति–केच ऋषयः । हे राजर्षे एवं वदंति । किंभूताः–"नान्विताः अनु पश्चादुक्तिं संकर्षणमनुज्ञाप्येत्यादिकां न इता न ज्ञातवन्त इत्यर्थः । यद्यतः । स्वस्य मम वाचः । संकर्षणमित्यादिकामेव ते न स्मरंति । अतस्तदुक्त्या " आह चाहमिहायात आर्यमिश्राभिसंगतः " इत्यादिकया विरुध्येत । तदुक्त्येति शेषः । विरुध्येतेति भावे लिङ् । उपसर्गवशाद्धुधेरकर्मकत्वम् । तीर्थस्तु–' खेचरान्विता विरुध्यंते ' इति पाठमाह । स्वस्य स्वतंत्रस्य हरेर्वाचो वेदलक्षणाः । विरुध्यंते यत् हरिमोहादिकं प्रति हरेर्मोहादिकं न सहंते । " अजस्यावक्रचेतसः " इति श्रुतेः । खेचरा भूतास्तदावेशयुतास्तथा ॥ ३० ॥ विपरीतं तत्कथनं निषेधति–क्वेति ॥ ३१ ॥ कैमुत्येन तदेव द्रढयति–किञ्चेति । अतो मोहाभावात् । एतद्वचनं ' ततो मुहूर्तम् '

तं शस्त्रपूगैः प्रहरंतमोजसा शाल्वं शरैः शौरिरमोघविक्रमः ॥ विद्ध्वाऽच्छिनद्वर्म धनुः शिरोमणिं सौभं च शत्रोर्गदया रुरोज ह ॥ ३३ ॥ तत्कृष्णहस्तेरितया विचूर्णितं पपात तोये गदया सहस्रधा ॥ विसृज्य तद्भूतलमास्थितो गदामुद्यम्य शाल्वोऽच्युतमभ्यगाद्द्रुतम् ॥ ३४ ॥ आधावतः सगदं तस्य बाहुं भल्लेन छित्त्वाऽथ रथांगमद्भुतम् ॥ वधाय शाल्वस्य लयार्कसन्निभं बिभ्रद्बभौ सार्क इवोदयाचलः ॥ ३५ ॥ जहार तेनैव शिरः सकुंडलं किरीटयुक्तं पुरुमायिनो हरिः ॥ वज्रेण वृत्रस्य यथा पुरंदरो बभूव हाहेति वचस्तदा नृणाम् ॥ ३६ ॥ तस्मिन्निपतिते पापे सौभे च गदया हते ॥ नेदुर्दुंदुभयो राजन्दिवि देवगणेरिताः ॥ सखीनामपचितिं कुर्वन्दंतवक्रो रुषाऽभ्यगात् ॥ ३७ ॥ इति श्रीमद्भा० द० उत्त० सौभवधो नाम सप्तसप्ततितमोऽध्यायः ॥७७॥ श्रीशुक उवाच ॥ शिशुपालस्य शाल्वस्य पौंड्रकस्यापि दुर्मतिः ॥ परलोकगतानां च कुर्वन् पारोक्ष्यसौहृदम् ॥ ॥ १ ॥ एकः पदातिः संक्रुद्धो गदापाणिः प्रकंपयन् ॥ पद्भ्यामिमां महाराज महासत्त्वो व्यदृश्यत ॥ २ ॥ तं तथाऽऽयांतमालोक्य गदामादाय सत्वरः ॥ अवप्लुत्य रथात्कृष्णः सिंधुं वेलेव प्रत्यधात् ॥३॥ गदामुद्यम्य कारूषो मुकुंदं प्राह दुर्मदः ॥ दिष्ट्यादिष्ट्या भवानद्य मम दृष्टिपथं गतः ॥४॥

सावात्मविपर्ययग्रहश्च अहं कृशः सुखी दुःखीत्यादिलक्षणस्तं हिन्वंति नाशयंति संतः । ऐश्वरं पदं च । तस्य सतां गतेः कुतो नु मोह इति । अतो नैतद्वचनं सत्यमित्यर्थः ॥ ३२ ॥ किं तर्हि सत्यं तदाह । तं शस्त्रपूगैरिति । वर्म कवचम् । रुरोज बभंज ॥ ३३ ॥ ३४ ॥ लयार्कसंनिभं प्रलयकालीनसूर्यसदृशम् ॥ ३५ ॥ ३६ ॥ देवगणैरीरिता वादिताः । किंच सखीनामिति ॥ ३७ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे श्री० टीकायां सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ततोऽष्टसप्ततितमे दंतवक्त्रविदूरथौ ॥ हत्वा हरिः पुरे रेमे रामः सूतं ततोऽवधीत् ॥ १ ॥ सखीनामपचितिं कुर्वन्नित्युक्तं तदेवाह । शिशुपालस्येति । पारोक्ष्यसौहृदं पारोक्ष्ये करणीयं सुहृत्कृत्यम् ॥ ॥ १ ॥ २ ॥ प्रत्यधात्प्रतिरुरोध ॥ ३ ॥ मुकुंदं प्राह दुर्मद इत्यादेरधिक्षेपपरता स्फुटैव । परमार्थस्तु दुर्मदो गतमदः प्राह । मुकुंदं तृतीये जन्मनि मुक्तिदानार्थमागतम् । अद्येति । जन्मत्रयेऽन्विष्यमाणोऽद्य ब्रह्मशापावसाने भवान्मम स्वामी दृष्टिपथं गतः प्राप्तः एतद्दिष्ट्यादिष्ट्या भद्रंभद्रम् । अतिहर्षे वीप्सा ॥ ४ ॥

इत्यादिरूपम् । इत्यर्थ इति—न सर्वथा सत्यम् । "यदचरस्तन्वा" इत्यादिश्रुत्या तद्व्यवहारस्य मायिकत्वावगमादिति भावः ॥ ३२ ॥ सत्यमाशंक्य वक्ति—किमिति । तत्सत्यम् ॥ ३३ ॥ तत्सौभं तच्चूर्णितसौभम् ॥३४ ॥ तस्य शाल्वस्य । अथ बाहुच्छेदानन्तरम् ॥ ३९ ॥ तेनैव चक्रेणैव । तदा शिरश्छेदनसमये ॥ ३६ ॥ तस्मिन् शाल्वे । अन्यदाह—किं चेति ॥ ३७ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धे सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ततः शाल्ववधोत्तरम् । ततः श्रीकृष्णोपरत्यनन्तरम् ( १ )। तदेवापचयनमेव ॥ १ ॥ इमां भूमिम् ॥ २ ॥ तं दंतवक्रम् । तथायांतं सगदम् ॥ ३ ॥ कारूषः करूषदेशेशः ॥ ४ ॥

त्वं मातुलेयो नः कृष्ण मित्रध्रुङ्मां जिघांससि ॥ अतस्त्वां गदया मंद हनिष्येवज्रकल्पया ॥ ५ ॥ तर्ह्यानृण्यमुपैम्यज्ञ मित्राणां मित्रवत्सलः ॥ बंधुरूपमरिं हत्वा व्याधिं देहचरं यथा ॥ ६ ॥ एवं रूक्षैस्तुदन् वाक्यैः कृष्णं तोत्रैरिव द्विपम् ॥ गदयाताडयन्मूर्ध्नि सिंहवद्व्यनदच्च सः ॥ ७ ॥ गदयाऽभिहतोऽप्याजौ न चचाल यदूद्वहः ॥ कृष्णोऽपि तमहन्गुर्व्या कौमोदक्या स्तनांतरे ॥ ८ ॥ गदानिर्भिन्नहृदय उद्वमन्रुधिरं मुखात् ॥ प्रसार्य केशबाह्वंघ्रीन्धरण्यां न्यपतद्व्यसुः ॥ ९ ॥ ततः सूक्ष्मतरं ज्योतिः कृष्णमाविशदद्भुतम् ॥ पश्यतां सर्वभूतानां यथा चैद्यवधे नृप ॥ १० ॥ विदूरथस्तु तद्भ्राता भ्रातृशोकपरिप्लुतः ॥ आगच्छदसिचर्मभ्यामुच्छ्वसंस्तज्जिघांसया ॥११॥ तस्य चापततः कृष्णश्चक्रेण क्षुरनेमिना ॥ शिरो जहार राजेंद्र सकिरीटं सकुंडलम् ॥ १२ ॥ एवं सौभं च शाल्वं च दंतवक्रं सहानुजम् ॥ हत्वा दुर्विषहानन्यैरीडितः सुरमानवैः ॥ १३ ॥ मुनिभिः सिद्धगंधर्वैर्विद्याधरमहोरगैः ॥ अप्सरोभिः पितृगणैर्यक्षैः किन्नरचारणैः ॥ १४ ॥ उपगीयमानविजयः कुसुमैरभिवर्षितः ॥ वृतश्च वृष्णिप्रवरैर्विवेशालंकृतां पुरीम् ॥ ॥ १५ ॥ एवं योगेश्वरः कृष्णो भगवाञ्जगदीश्वरः ॥ ईयते पशुदृष्टीनां निर्जितो जयतीति सः ॥ १६ ॥

किंच । हे कृष्ण त्वमस्माकं मातुलेयो बंधुः । एवमपि मित्रध्रुक् मित्राणि घातितवान्मां च जिघांससि तस्मादस्माकं त्वत्तो मृत्युः सनकाद्यनुग्रहप्राप्तो नूनं दुर्वारः । अतस्त्वामेव तावन्मात्रमहं याचे । किं तदाह । अमंद सर्वसहनसमर्थ । क्षात्रधर्मेण सेवितुं गदया त्वां हनिष्ये प्रहरिष्यामि । तामेकवारं सहस्वेति । ननु वज्रतुल्यां त्वद्गदां को वा सहेत नैवमित्याह । अवज्रकल्पया उत्पलमालावदतिकोमलयेत्यर्थः ॥ ५ ॥ नन्वेवं हनने कस्तव पुरुषार्थस्तमाह । तर्हीति । अज्ञ न विद्यते ज्ञो यस्मात् हे सर्वज्ञेत्यर्थः । परमार्थतः । स्वामिनमेतद्देहसंबंधेन बंधुरूपमरिं ब्रह्मशापेन शत्रुत्वेन प्रतीतं त्वां हत्वा मित्राणामानृण्यमुपैम्युपैष्यामि । विशेषेणाधीयते मनसि चिंत्यत इति व्याधिः । देहेंऽतर्यामितया चरतीति तथा तमीश्वरं हत्वा क्षात्रधर्मेणाराध्य । हंतेर्गत्यर्थस्य ज्ञानार्थत्वाज्ज्ञात्वेति वा । तेन यथा पित्रादीनामानृण्यमुपयंति तद्वदिति ॥ ६ ॥ रूक्षैरित्यादि प्रतीत्यभिप्रायेण । तोत्रैरंकुशादिभिः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ एवं श्रीकृष्णो महाबलानपि लीलया जयत्येवेति

सम्बन्धं द्योतयति–किञ्चेति । एवमपि बंधुस्सन्नपि । मित्राणि शिशुपालादीनि । यस्मान्मां जिघांससि तस्मादित्यर्थः । यतो दुर्वारोऽतो हेतोः।तद्याचनं स्वयमाशंक्य समाधत्ते–नन्विति।इत्यर्थ इति–अद्वयोऽज्यते प्राप्यते इत्य वज्रमुत्पलम् । अप्पूर्वादजतेरो बाहुलकाद्वीभावाभावः । तत्कल्पप्रत्यये रूपमिति ज्ञेयम्॥५॥पुनराशंकते–नन्विति । अनेकार्थत्वादर्थतात्पर्याद्वा हंतेराराधनार्थत्वं लभ्यते। किं क्लिष्टकल्पनयेत्याह–हंतेरित्यादि । तेनाराधनज्ञानयोरन्यतरेण । ‘ न किंकरो नायमृणी च राजन् ’ इत्यारभ्य ‘ गतो मुकुन्दं परिहृत्य कर्तम् ’ इति वक्ष्यमाणत्वात् । तद्वत्पित्राद्यानृण्यवत् ॥ ६ ॥ स दंतवक्रः ॥ ७ ॥ तं दंतवक्रम् ॥ ८ ॥ “ सेनातूर्यप्राण्यंगानां द्वंद्व एकवद्वा ” इति एकवचनांतमपि साधु केशबाह्वंघ्रीति ॥ ९ ॥ ततः पतनानंतरम् । ज्योतिर्विजयात्मकं तेजः ॥ १० ॥ तद्भ्राता दंतवक्रानुजः । तज्जिघांसया कृष्णहननेच्छया ॥ ११ ॥ तस्य विदूरथस्य ॥ १२ ॥ एवमुक्तविधया । अन्यैः कृष्णेतरैः ॥१३॥१४॥१५॥ महाबलानतिबलान् । स कृष्णः । पशुदृष्टीनां तन्माहात्म्यमविदुषाम् । योगेश्वरः अचिंत्यवैभवः । अत्र हेतुर्भगवानिति । तत्रापि हेतुर्जगदीश्वरः सर्वेश्वर इति ॥ १६ ॥

श्रुत्वा युद्धोद्यमं रामः कुरूणां सह पांडवैः ॥ तीर्थाभिषेकव्याजेन मध्यस्थः प्रययौ किल ॥ १७ ॥ स्नात्वा प्रभासे संतर्प्य देवर्षिपितृमानवान् ॥ सरस्वतीं प्रतिस्रोतं ययौ ब्राह्मणसंवृतः ॥ १८ ॥ पृथूदकं बिंदुसरस्त्रितकूपं सुदर्शनम् ॥ विशालं ब्रह्मतीर्थं च चक्रं प्राचीं सरस्वतीम् ॥१९॥ यमुनामनु यान्येव गंगामनु च भारत ॥ जगाम नैमिषं यत्र ऋषयः सत्रमासते ॥ २० ॥ तमागतमभिप्रेत्य मुनयो दीर्घसत्रिणः ॥ अभिवंद्य यथान्यायं प्रणम्योत्थाय चाऽऽर्चयन् ॥ २१ ॥ सोऽर्चितः सपरीवारः कृतासनपरिग्रहः ॥ रोमहर्षणमासीनं महर्षेः शिष्यमैक्षत ॥ २२ ॥ अप्रत्युत्थायिनं सूतमकृतप्रह्वणांजलिम् ॥ अध्यासीनं च तान्विप्रांश्चुकोपोद्वीक्ष्य माधवः ॥ २३ ॥ कस्मादसाविमान्विप्रानध्याऽऽस्ते प्रतिलोमजः ॥ धर्मपालां स्तथैवास्मान्वधमर्हति दुर्मतिः ॥ २४ ॥ ऋषेर्भगवतो भूत्वा शिष्योऽधीत्य बहूनि च ॥ सेतिहासपुराणानि धर्मशास्त्राणि सर्वशः ॥ २५ ॥ अदां तस्याविनीतस्य वृथापंडितमानिनः ॥ न गुणाय भवंति स्म नटस्येवाऽशितात्मनः ॥ २६ ॥

कृत्वा स कदाचिज्जरासंधादिभिर्निर्जित इति पशुदृष्टीनामीयते । नित्यजये हेतवः । योगेश्वरो भगवान् जगदीश्वर इति ॥ १६॥ विदूरथांतमामथ्य; पूतनादिदनोः कुलम् । कृष्णस्तूपारमन्नाराद्रामोऽहन्सूतबल्वलौ ॥ तत्प्रसंगमाह । श्रुत्वेति ॥ १७ ॥ प्रतिस्रोतं प्रातिलोमम् ॥ १८ ॥ सुदर्शनं तीर्थम् । चक्रं चक्रतीर्थम् ॥ १९ ॥ यमुनामनु यानि तीर्थानि गंगामनु च यानि तानि सर्वाणि गत्वा नैमिषमरण्यं जगाम ॥ २० ॥ अभिप्रेत्य श्रीराम इति ज्ञात्वा ॥ २१ ॥ महर्षेर्व्यासस्य ॥ २२ ॥ सूतं प्रतिलोमजम् । न कृतं प्रह्वणमंजलिश्च येन तम् । अध्यासीनं च तान् तेभ्योऽप्युच्चैरासीनमित्यर्थः ॥ २३ ॥ २४ ॥ अजानन्नध्यास्त इति चेन्नै वमित्याह । ऋषेरिति ॥ २५ ॥ ननु बहुज्ञः कथमेवं कुर्यात्तत्राह । अदांतस्येति । गुणाय यथोचितानुष्ठानाय ॥ २६ ॥

आमथ्यायि नाश्य । पूतनादिर्यस्य तत् । दनोर्दैत्यस्य मारणं मारो दैत्यनाशनं तस्मात् । कथांतरमाह—श्रुत्वेति । मध्यस्थ उदासीनः सन् ॥१७॥१८॥ प्राचीति महत्फलश्रवणात् । "नूनं प्राचीनपापानि मेरुतुल्यानि भारत । सद्यो दहति निस्नाता प्रातः प्राची सरस्वती ॥" इति पुराणात् ॥ १९ ॥ यत्र नैमिषे । आसते कुर्वैति । कृञर्थस्य सर्वधातुष्वनुस्यूतत्वात् ॥ २० ॥ तं रामम् ॥ २१ ॥ स रामः ॥२२॥ प्रह्वणं नमनम् । इत्यर्थ इति—"अधि पूर्वाणां शीङ्स्थासाम्" इति कर्मत्वं तानिति ज्ञेयम् ॥२३॥ तस्याग्निकुंडोद्भूतत्वेन जातिसूतत्वाभावेऽपि चरुनिक्षेपवैपरीत्यात्प्रातिलोमज इत्युक्तिः । अन्यः कश्चित्प्रतिलोमजो विप्रान्माध्यास्तादध्यास्ते चेत्तर्हि अस्माभिः स वध्य एव 'नाधर्मिणां वधे दोषः' इत्युक्तेः । अस्मानिति बहुत्वं तु भगवद्दत्ताधिकारमत्तुल्यनृपधर्मादिभिः स वध्य एवेति बोधयति । अन्यथा—"विप्रो वक्ता सुधीः कार्यो विशुद्धोभयवंशजः । इतिहासपुराणानां विप्रान्यो धर्महानिकृत् ॥" इति संहितोक्तिरसमंजसा स्यात् । किञ्च—नायं जातिसूत इति ज्ञात्वा निवृत्तोपि भगवति भावित्वात्तद्वधो जातोऽत एव तस्य प्रायश्चित्ते प्रवृत्तिरिति ॥ २४ ॥ २५ ॥ अत्राशंकते—नन्विति । एवं महदवज्ञानम् । यथा नट शिक्षितप्राणायामादिर्न मोक्षाय तथाऽविनीतस्य शास्त्राभ्यासादिरपि न श्रेयसे इति । "विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय । खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय ॥" इत्याद्युक्तेः ॥ २६ ॥

एतदर्थो हि लोकेऽस्मिन्नवतारो मया कृतः ॥ वध्या मे धर्मध्वजिनस्ते हि पातकिनोऽधिकाः ॥ २७ ॥ एतावदुक्त्वा भगवान् निवृत्तोऽसद्वधादपि ॥ भावित्वात्तं कुशाग्रेण करस्थेनाहनत्प्रभुः ॥ २८ ॥ हाहेति वादिनः सर्वे मुनयः खिन्नमानसाः ॥ ऊचुः संकर्षणं देवमधर्मस्ते कृतः प्रभो ॥ २९ ॥ अस्य ब्रह्मासनं दत्तमस्माभिर्यदुनंदन ॥ आयुश्चात्माक्लमं तावद्यावत्सत्रं समाप्यते ॥ ३० ॥ अजानतैवाचरितस्त्वया ब्रह्मवधो यथा ॥ योगेश्वरस्य भवतो नाम्ना योऽपि नियामकः ॥३१॥ यद्येतद्ब्रह्महत्यायाः पावनं लोकपावन ॥ चरिष्यति भवाँल्लोकसंग्रहोऽनन्यचोदितः ॥३२॥ श्रीभगवानुवाच ॥ करिष्ये वधनिर्वेशं लोकानुग्रहकाम्यया ॥ नियमः प्रथमे कल्पे यावान्स तु विधीयताम् ॥ ३३ ॥

विप्रानध्यास्तामन्यद्वा किंचित्करोतु किं तवेति चेत्तत्राह । एतदर्थ इति । धर्मध्वजिन उत्तमलिंगधारिणः ॥ २७ ॥ भावित्वादिति । नहि भवितव्यं केनापि परिहर्तुं शक्यत इत्यर्थः । अहनत अहन् ॥ २८ ॥ ते त्वया ॥ २९ ॥ अधार्मिकप्रतिलोमजवधः कोऽयमधर्म इति चेत्तत्राहुः । अस्येति । पुराणप्रवचनायात्मनः शरीरस्य नास्ति क्लमो यस्मिंस्तदायुश्च दत्तमिति॥ ३०॥ब्रह्मवधेऽपि किं ममेश्वरस्येति चेत्सत्यमेव तथापि प्रायश्चित्तं कर्तव्यमित्याशयेनाहुः योगेश्वरस्येति सार्धेन । आम्नायो 'ब्राह्मणो न हंतव्यः'इत्यादिलक्षणः॥ ३१ ॥तथाऽप्येतस्या ब्रह्महत्यायाः पावनं प्रायश्चित्तं हे लोकपावनानन्यचोदितः स्वयमेव भवान्यदि करिष्यति तर्हि लोकसंग्रहो भविष्यति नान्यथेति॥ ३२॥वधस्य

ननु शुभाऽशुभकर्मफलभोक्तृत्वं कर्तुर्भवति किं तव शासने प्रयोजनमित्याह—विप्रानध्यास्तामित्यादिना । उत्तमलिंगधारिणो नीचा भूत्वोत्तमजातिचिह्नधारिणः । हि यतः । ते धर्मध्वजिनः । अधिका ब्रह्महत्यादिमहापातकिभ्योऽधिकपापिनः । सर्वेश्वराज्ञारूपवेदातिक्रमकारित्वात् ।" नैतस्मादधिकं पापमहं मन्ये नराधिप । यद्वेदातिक्रमो लोके विनापदमकारयत् ॥" इत्यादिपुराणात् ॥ २७ ॥ तं सूतम् । इत्यर्थ इति—"भवितव्यं भवत्येव प्रतिकारे कृते खलु " इत्याद्युक्तेः । " न हि चलति कदाचिद्भाविनी कर्मरेखा " इत्याद्युक्तेश्चेति भावः । करस्थकुशचालनमात्रेण मृत्युमापेत्यर्थः ॥ २८ ॥ २९ ॥ अधार्मिकेत्यादि भगवदाक्षेपं समादधिरे । अस्य सूतस्य । " अग्निर्वै ब्राह्मणः " इति श्रुतेः । :तदुद्भूतत्वादयं ब्राह्मण एवात एव ब्रह्मासनं वेदेतिहासपुराणवक्तृब्राह्मणयोग्यासनं दत्तमिति । क्लमो ग्लानिः ॥ ३० ॥ इवयथाशब्दाभ्यां जानतैव ब्रह्मवधः कृत इति प्रतीयते इत्याह—ब्रह्मवधेपीति । नियामक इत्थं कुर्वित्थं मा कुर्वित्येवं नियंता । न कुत इति चेदाह—योगेश्वरस्य ज्ञानिनामधिपतेः । " त्रैगुण्यविषया वेदाः " इत्युक्तेर्ज्ञानिनोऽतीतविधिनिषेधत्वेन कुतस्तदधिपस्य तदाशंकेति भावः । यद्यपि :न नियामकस्तथापीति । "न मे पार्थास्ति कर्तव्यं वर्त एव हि कर्मणि"इति श्रीमुखोक्तेः । अन्यथा प्रायश्चित्ताकरणे । जगदांध्यं प्रसज्येतेति भावः ॥ ३१ ॥ ३२ ॥ स तावान् । मुख्यकल्पे मुख्यविधौ 'कल्पः शास्त्रे विधौ न्याये' इति मेदिनी । उपदिश्यताम् उपसर्गवशाद्धातेरुपदेशार्थत्वम् । किं च—"प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते । न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम्॥" इति शांतिपर्वण्यापद्धर्मोक्तेः । प्रभुणा श्रीबलदेवेन प्रथमकल्प एव स्वीकृतः । "अनुकल्पः परो धर्मो धर्म

दीर्घमायुर्बतैतस्य सत्त्वमिंद्रियमेव च ॥ आशासितं यत्तद्ब्रूत साधये योगमायया ॥३४॥ ऋषय ऊचुः ॥ अस्त्रस्य तव वीर्यस्य मृत्योरस्माकमेव च ॥ यथा भवेद्वचः सत्यं तथा राम विधीयताम् ॥ ३५ ॥ श्रीभगवानुवाच ॥ आत्मा वै पुत्र उत्पन्न इति वेदानुशासनम् ॥ तस्मादस्य भवेद्वक्ता आयुरिंद्रियसत्त्ववान् ॥ ३६ ॥ किं वः कामो मुनिश्रेष्ठा ब्रूताहं करवाण्यथ ॥ अजानतस्त्वपचितिं यथा मे चिंत्यतां बुधाः ॥ ३७ ॥ ऋषय ऊचुः ॥ इल्वलस्य सुतो घोरो बल्वलोनाम दानवः ॥ स दूषयति नः सत्रमेत्य पर्वणि पर्वणि ॥३८॥ तं पापं जहि दाशार्ह तन्नः शुश्रूषणं परम् ॥ पूयशोणितविण्मूत्रसुरामांसाभिवर्षिणम् ॥ ३९ ॥ ततश्च भारतं वर्षं परीत्य सुसमाहितः ॥ चरित्वा द्वादशान्मासांस्तीर्थस्नायी विशुध्यसे ॥ ४० ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधोत्तरार्धे बलदेवचरित्रे बल्वलवधोपक्रमोनामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

निर्वेशं प्रायश्चित्तम् । प्रथमे कल्पे मुख्यकल्पे । विधीयतामुपदिश्यताम् ॥ ३३ ॥ किंच बत हे मुनयः एतस्य दीर्घमायुः सत्त्वं बलमिंद्रियं तत्पाटवं च अन्यच्च यद्भवद्भिराशासितमपेक्षितं तद्ब्रूत सर्वम् ॥ ३४ ॥ अस्त्रादीनां यथा सत्यता भवेदस्माकं च वचः सत्यं यथा भवेत्तथा विधीयतामित्यर्थः ॥ ३५ ॥ तथा संपादयन्नाह । आत्मा वा इति । " अंगादंगात्संभवसि हृदयादभिजायसे ॥ आत्मा वै पुत्रनामासि स जीव शरदः शतम् " इत्यादि वेदानुशासनं वेदवचनम् । तस्मादस्य रोमहर्षणस्य पुत्र उग्रश्रवा भवतां पुराणप्रवक्ता भवेत्स चायुरादिमांश्च भवेत् अतः साक्षादजीवनादस्त्रस्य मृत्योश्च सत्यता पुत्ररूपेण चायुरादिसिद्धेर्युष्मद्वचनस्यापि सत्यता स्यादिति भावः ॥ ॥ ३६ ॥ प्रथमं तावदपेक्षितं कथयत तदहं करिष्यामीत्याह । किं वः काम इति । किंविषयो वः कामो वर्तते तद्ब्रूतेति । अथानंतरं ब्रह्मदंडं गृहीत्वाऽपचितिं निष्कृतिमजानतो मे हे बुधा यथावच्चिंत्यतामपचितिरिति ॥ ३७ ॥ प्रथमं तावदपेक्षितं कर्तव्यं कथयंति इल्वलस्येति द्वाभ्याम् ॥ ३८ ॥ ३९ ॥ प्रायश्चित्तमाहुः । ततश्चेति । परीत्य प्रदक्षिणीकृत्य । सुसमाधानादिगुणविशेषादेकाब्दमात्रमुक्तमित्यविरोधः । सुसमाहितः कामक्रोधादिरहितः । चरित्वा कृच्छ्राणि ॥ ४० ॥ इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्री० टीकायामष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

वादैस्तु केवलम् । विश्वैर्देवैश्च साध्यैश्च ब्राह्मणैश्च महर्षिभिः ॥ अन्यस्तुमरणाद्वीतैर्विधिः प्रतिनिधीकृतः । " इत्यपि तत्रैव ॥ ३३ ॥ स्वसामर्थ्यं द्योतयन्नाह–किंश्चेति । एतस्य मृतसूतस्य । योगमायया निजैश्वरीसामर्थ्येन ॥ ३४ ॥ इत्यर्थ इति–अस्त्रवीर्ययोरमोघत्वं मृत्योरनावृत्तित्वमस्मद्वचसश्चावंध्यफलत्वं यथा स्यात्तथा कुर्विति भावः ॥ ३५ ॥ यथा मुनिभिरुक्तं तथा संपादयन्नित्यर्थः । अंगादंगात्पृथक्पृथगंगात्तत्तदंगरूपेण स त्वं जीवेत्यर्थः । स चोग्रश्रवाः । अतस्तत्पुत्रस्य तादृशकरणात् । इति भाव इति–तस्यैव जीवनादिना सर्वमेवासमंजसं भवेदित्याशयः ॥ ३६ ॥ यदन्यदभीप्सितं तदपि ब्रूतेत्याह–प्रथममित्यादि । निष्कृतिं प्रायश्चित्तं यथाऽजानतः प्रायश्चित्तं भवद्भिः कथ्यते तथा जानतोपि मे कथ्यतां ब्राह्मणाज्ञां विना करणात्फलानिष्पत्तिः । " श्रौतं स्मार्तं च यत्कर्म जानतापि च सर्वथा । विप्राज्ञयैव कर्तव्यमन्यथा निष्फलं हि तत् ॥" इति वारतंतव्युक्तेः ॥ ३७ ॥ तावदधुना । पर्वण्यमायां पौर्णमास्यां चेत्यर्थः ॥ ३८ ॥ तं बल्वलम् । तत् हननम् ॥ ३९ ॥ ततो बल्वलहननोत्तरम् । ननु ब्रह्मघ्नो द्वादशाब्दप्रायश्चित्तस्य " द्वादशाब्दाविति चरेद्ब्रह्मघ्नस्तत्कपा

श्रीशुक उवाच ॥ ततः पर्वण्युपावृत्ते प्रचंडः पांसुवर्षणः ॥ भीमो वायुरभूद्राजन्पूयगंधस्तु सर्वशः ॥१॥ ततोऽमेध्यमयं वर्षं बल्वलेन विनिर्मितम् ॥ अभवद्यज्ञशालायां सोऽन्वदृश्यत शूलधृक् ॥ २ ॥ तं विलोक्य बृहत्कायं भिन्नांजनचयोपमम् ॥ तप्तताम्रशिखाश्मश्रुं दंष्ट्रोग्रभ्रुकुटीमुखम् ॥ ३ ॥ सस्मार मुसलं रामः परसैन्यविदारणम् ॥ हलं च दैत्यदमनं ते तूर्णमुपतस्थतुः ॥ ४ ॥ तमाकृष्य हलाग्रेण बल्वलं गगनेचरम् ॥ मुसलेनाहनत्क्रुद्धो मूर्ध्नि ब्रह्मद्रुहं बलः ॥ ५ ॥ सोऽपतद्भुवि निर्भिन्नललाटोऽसृक्समुत्सृजन् ॥ मुंचन्नार्तस्वरं शैलो यथा वज्रहतोऽरुणः ॥ ६ ॥ संस्तुत्य मुनयो रामं प्रयुज्यावितथाशिषः ॥ अभ्यषिंचन्महाभागा वृत्रघ्नं विबुधा यथा ॥ ७ ॥ वैजयंतीं ददुर्मालां श्रीधामाम्लानपंकजाम् ॥ रामाय वाससी दिव्ये दिव्यान्याभरणानि च ॥ ८ ॥ अथ तैरभ्यनुज्ञातः कौशिकीमेत्य ब्राह्मणैः ॥ स्नात्वा सरोवरमगाद्यतः सरयुरास्रवत् ॥ ९ ॥ अनुस्रोतेन सरयूं प्रयागमुपगम्य सः ॥ स्नात्वा संतर्प्य देवादीञ्जगाम पुलहाश्रमम् ॥ १० ॥ गोमतीं गंडकीं स्नात्वा विपाशां शोण आप्लुतः ॥ गयां गत्वा पितॄनिष्ट्वा गंगासागरसंगमे ॥ ११ ॥

ऊनाशीतितमे रामो बल्वलं द्विजतुष्टये ॥ निहत्य तीर्थस्नानाद्यैः सूतहत्यामपानुदत् ॥ १ ॥ १ ॥ उपावृत्ते प्राप्ते ॥ २ ॥ भिन्नो विदीर्णोऽञ्जनचय उपमा यस्य तमति कृष्णमित्यर्थः । तप्तताम्रवच्छिखाश्मश्रूणि च यस्य तम् । दंष्ट्राभिरुग्रं भ्रुकुटीयुतं मुखं यस्य तम् ॥ ३ ॥ ४ ॥ ५ ॥ अरुणो रुधिरेण दैत्यः । शैलो धातुभिर्यथेति ॥ ६ ॥ ७ ॥ श्रियो धामान्यम्लानानि पंकजानि यस्यां ताम् ॥ ८ ॥ किं तत्सरः । यत इति । आस्रवदुद्गात् ॥ ९ ॥ अनुस्रोतेनानुलोमतः पुलहाश्रमं हरिक्षेत्रम् ॥ १० ॥ गोमत्यां गंडक्यां विपाशायां च स्नात्वा शोणे च आप्लुतः इष्ट्वा संपूज्य ॥ ११ ॥

लभृत् । ख्यापयन्नात्मनः कर्म भिक्षां विप्रेषु संचरन् ॥ " इत्यादिना पाराशराद्यैर्विहितत्वात्तद्विरुद्धं 'द्वादशान्मासान्' इति कथमुच्यते—इति चेत्तत्राह—सुसमाधानादीति । समाधानं चित्तैकाग्र्यम् । आदिना बाह्येंद्रियनिग्रहादिग्रहः । गुणविशेषसंबंधादेकाब्दोपि दक्षिणाविशेषयोगाद्युधिष्ठिरैकाश्वमेधस्याश्वमेधत्रयतुल्यत्ववद्वादशाब्दवद्भवतीत्युक्तमविरोध इति । कृच्छ्राणीति शेषः । कृच्छ्राणि कृच्छ्रतप्तकृच्छ्रपर्णकृच्छ्रातिकृच्छ्रादीनि । "एकभक्तैश्च नक्तैश्च तथैवायाचितैरपि । उपवासैश्चतुर्भिश्च कृच्छ्रः षोडशभिर्दिनैः ॥ " इत्यादिना पराशरादिभिरुक्तलक्षणानि बहूनि संति विस्तरभियेह नोक्तानीति । द्वादशान् द्वादश ॥ ४० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धेऽष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ आदिना कृच्छ्रादिग्रहः ( १ ) । ततः वरदानोत्तरम् ॥ १ ॥ ततो दुर्गंधप्राप्त्युत्तरम् । स बल्वलः ॥ २ ॥ तं बल्वलम् । इत्यर्थ इति—ततोधिकमन्यत्र कार्ष्ण्यं नास्तीति भावः ॥ ३ ॥ ते हलमुसले ॥ ४ ॥ तं दैत्यम् ॥ ५ ॥ स बल्वलः ॥ ६ ॥ ७ ॥ वैजयंतीं विजयकरीम् ॥ ८ ॥ अथ वस्त्रमालादिसत्कारानंतरम् । तैर्ब्राह्मणैः । मानसं सरोवरम् । यतः सरोवरात् ॥ ॥९॥स बलः । आदिना दिव्यपित्रादिग्रहः ॥१०॥ पितॄनिति—ननु जीवत्पितृकेण रामेण कथं पितृयागः कृत इति चेदाह—" वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति । येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥"

उपस्पृश्य महेंद्राद्रौ रामं दृष्ट्वाऽभिवाद्य च ॥ सप्तगोदावरीं वेणां पंपां भीमरथीं ततः ॥ १२॥ स्कंदं दृष्ट्वा ययौ रामः श्रीशैलं गिरिशालयम् ॥ द्रविडेषु महापुण्यं दृष्ट्वाद्रिं वेङ्कटं प्रभुः ॥१३॥ कामकोष्णीं पुरीं कांचीं कावेरीं च सरिद्वराम् ॥ श्रीरङ्गाख्यं महापुण्यं यत्र सन्निहितो हरिः ॥ १४ ॥ ऋषभाद्रिं हरेः क्षेत्रं दक्षिणां मथुरां तथा ॥ सामुद्रं सेतुमगमन्महापातकनाशनम् ॥ १५ ॥ तत्रायुतमदाद्धेनूर्ब्राह्मणेभ्यो हलायुधः ॥ कृतमालां ताम्रपर्णीं मलयं च कुलाचलम् ॥ १६ ॥ तत्रागस्त्यं समासीनं नमस्कृत्याभिवाद्य च ॥ योजितस्तेन चाशीर्भिरनुज्ञातो गतोर्णवम् ॥ दक्षिणं तत्र कन्याख्यां दुर्गां देवीं ददर्श सः ॥ १७ ॥ ततः फाल्गुनमासाद्य पंचाप्सरसमुत्तमम् ॥ विष्णुः सन्निहितो यत्र स्नात्वाऽस्पर्शद्गवायुतम् ॥ १८ ॥ ततोऽभिव्रज्य भगवान्केरलांस्तु त्रिगर्तकान्॥गोकर्णाख्यं शिवक्षेत्रं सान्निध्यं यत्र धूर्जटेः॥१९॥आर्यां द्वैपायनीं दृष्ट्वा शूर्पारकमगाद्बलः॥तापीं पयोष्णीं निर्विंध्यामुपस्पृश्याथ दंडकम् ॥२०॥ प्रविश्य रेवामगमद्यत्र माहिष्मती पुरी ॥ मनुतीर्थमुपस्पृश्य प्रभासं पुनरागमत्॥२१॥श्रुत्वा द्विजैः कथ्यमानं कुरुपांडवसंयुगे ॥ सर्वराजन्यनिधनं भारं मेने हृतं भुवः ॥ २२ ॥ स भीमदुर्योधनयोर्गदाभ्यां युध्यतोर्मृधे ॥ वारयिष्यन्विनशनं जगाम यदुनंदनः ॥ २३ ॥ युधिष्ठिरस्तु तं दृष्ट्वा यमौ कृष्णार्जुनावपि ॥ अभिवाद्याभवंस्तूष्णीं किं विवक्षुरिहागतः ॥ २४ ॥

॥ १२ ॥ श्रीशैलं श्रीपर्वतम्॥ १३ ॥ कांचीं पुरीम् ॥ १४ ॥ १५ ॥ १६ ॥ दक्षिणमर्णवम् ॥ १७ ॥ फाल्गुनमनंतपुरम् । पंचाप्सरसं सरः । अस्पर्शदस्पृशत ददौ ॥ १८ ॥ केरलाख्यान्देशान् ॥ १९ ॥ द्वीपमयनं यस्यास्ताम् ॥ २० ॥ २१॥२२॥ विनशनं कुरुक्षेत्रम् ॥ २३ ॥ विवक्षुर्वक्तुमिच्छुः । किं वदिष्यतीति भिया तूष्णीमासन्निति ॥ २४ ॥

इति स्मृतेर्जीवत्पितृपितामहस्यापि श्राद्धेऽधिकारो न तु जीवत्पितृपितामहप्रपितामहस्यापीति । यच्चोक्तम्—" अमाश्राद्धं गयाश्राद्धं न कुर्यात्सपिता पुमान् " इति । तत्तु जीवत्पितृकेण गयामुद्दिश्य न गंतव्यमित्येवंपरं प्रसंगात्प्राप्तौ तु श्राद्धं कार्यमेवेति तत्त्वम् ॥ ११ ॥ उपस्पृश्येति पूर्वान्वयि । रामं जामदग्न्यम् । ततो रामदर्शनानंतरम् । सप्तशाखाभेदेन समुद्रं गताऽतः सप्तगोदावरीति ॥ १२ ॥ वेंकटमद्रिम् ॥ १३ ॥ यत्र श्रीरंगक्षेत्रे ॥ १४ ॥ दक्षिणा मथुराऽन्या व्रजानंतर्गतेति । तथा दृष्ट्वा । महापातकानि ब्रह्महत्यादीनि " केदारं रामसेतुं च दृष्ट्वा भारतसंहिताम् । श्रुत्वा कोटिश्च गायत्र्या ब्रह्महत्यां व्यपोहति ॥" इति पुराणांतरात् ॥ ॥ १५ ॥ तत्र रामसेतौ । कृतमालादीनां ययाविति शेषः ॥ १६ ॥ तत्र मलये । तेनागस्त्येन । तत्र दक्षिणार्णवतटे । स बलदेवः ॥ १७ ॥ ततः कन्यादेवीदर्शनोत्तरम् । फाल्गुनम्—अर्जुनेन तत्र ग्राहभावमिताः पंचाप्सरसो मोचिता इति फाल्गुनेन प्रकाशितत्वात्तत्संज्ञमिति । यत्र पंचाप्सरससरसि । गुण आर्षः ॥ १८ ॥ ततो गोदानानंतरम् । यत्र गोकर्णक्षेत्रे । धूर्जटेः शिवस्य ॥ १९ ॥ आर्यां दुर्गाम् । द्वैपायनीं द्वीपवासिनीं व्यासस्थापितां वा । शूर्पारकं क्षेत्रम् । अथ निर्विंध्यास्नानोत्तरम् । दंडकं वनम् ॥ २० ॥ यत्र रेवातटे ॥ २१ ॥ २२ ॥ विशेषेण नश्यति पापं यत्र तद्विनशनम् । स बलः ॥ २३ ॥ तं बलम् । किं किंचिद्विव

गदापाणी उभौ दृष्ट्वा संरब्धौ विजयैषिणौ ॥ मंडलानि विचित्राणि चरंताविदमब्रवीत् ॥२५॥ युवां तुल्यबलौ वीरौ हे राजन्हे वृकोदर॥एकं प्राणाधिकं मन्ये उतैकं शिक्षयाधिकम्॥ २६ ॥ तस्मादेकतरस्येह युवयोः समवीर्ययोः ॥ न लक्ष्यते जयोऽन्यो वा विरमत्वऽफलो रणः ॥ २७ ॥ न तद्वाक्यं जगृहतुर्बद्धवैरौ नृपार्थवत् ॥ अनुस्मरंतावन्योन्यं दुरुक्तं दुष्कृतानि च ॥ २८ ॥ दिष्टं तदनुमन्वानो रामो द्वारवतीं ययौ ॥ उग्रसेनादिभिः प्रीतैर्ज्ञातिभिः समुपागतः ॥ २९ ॥ तं पुनर्नैमिषं प्राप्तमृषयोऽयाजयन्मुदा ॥ क्रत्वंगं क्रतुभिः सर्वैर्निवृत्ताखिलविग्रहम् ॥ ३० ॥ तेभ्यो विशुद्धविज्ञानं भगवान्व्यतरद्विभुः ॥ येनैवात्मन्यदो विश्वमात्मानं विश्वगं विदुः ॥ ३१ ॥ स्वपत्न्यावभृथस्नातो ज्ञातिबंधुसुहृद्वृतः ॥ रेजे स्वज्योत्स्नयेवेंदुः सुवासाः सुष्ठ्वलंकृतः ॥ ३२ ॥ ईदृग्विधान्यसंख्यानि बलस्य बलशालिनः ॥ अनंतस्याप्रमेयस्य मायामर्त्यस्य संति हि ॥ ३३ ॥ योऽनुस्मरेत रामस्य कर्माण्यद्भुतकर्मणः ॥ सायं प्रातरनंतस्य विष्णोः स दयितो भवेत् ॥३४॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधोत्तरार्धे बलदेवतीर्थयात्रानिरूपणं नामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥ राजोवाच ॥ भगवन्यानि चान्यानि मुकुंदस्य महात्मनः ॥ वीर्याण्यनंतवीर्यस्य श्रोतुमिच्छामहे प्रभो ॥ १ ॥

॥ २५ ॥ २६ ॥ अन्यः पराजयो वा । रणः संग्रामः ॥ २७ ॥ अर्थवद्वाक्यम् ॥ २८ ॥ दिष्टं प्राचीनं कर्म । समुपागतः संगतः ॥ २९ ॥ क्रत्वंगं यज्ञमूर्तिम् ॥ ३० ॥ आत्मन्यधिष्ठाने विश्वगं सर्वानुस्यूतं येनैव विदुः पश्यंति तद्विशुद्धं विज्ञानं व्यतरददात् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्री० टीकायामेकोनाशीतितमोऽध्यायः ॥ ७९ ॥ छ ॥ अथाशीतितमे कृष्णः श्रीदामानं गृहागतम् ॥ संपूज्यापृच्छदर्थेप्सुं गुरुवासकथां मुदा ॥ १ ॥ सुरारिमारको हरिः पुरा चकार शं सताम् ॥ अतः परं विनैव तन्निजोपकारमाचरत् ॥ २ ॥ रामचरितानि श्रुत्वा पुनर्मुकुंदवीर्याणि पृच्छति । हे भगवन् श्रोतुमिच्छामे

क्षतीति वा किंविवक्षुः ॥ २४ ॥ संरब्धौ क्रुद्धौ । इदं वक्ष्यमाणम् ॥ २५ ॥ प्राणाधिकं बलाधिकं भीमम् 'प्राणो हृन्मारुते बले' इति धरणिः ॥ २६ ॥ यतः समवीर्यौ तस्माद्धेतोः । अन्यः पराजयः ॥ ॥ २७ ॥ तद्वाक्यं रामवाक्यम् । अर्थवद्युक्तियुक्तम् । दुरुक्तं द्रौपदीमुद्दिश्य दुर्वचनम् । दुष्कृतानि जतुगृहदाहादीनि ॥ २८ ॥ तन्निजवाक्यानादरणं युद्धं वा ॥ २९ ॥ तं रामम् । सर्वैः प्रकृतिविकृतियागैः । निवृत्ताखिलविग्रहं दूरीभूतसर्वदुरितम् "काये तापे तथा पापे विरोधे विग्रहो ग्रहे" इति निरुक्तिः ॥ ३० ॥ तेभ्य ऋषिभ्यः । येनैव ज्ञानेनैव ॥ ३१ ॥ स्वपत्न्या रेवत्या ॥ ३२ ॥ ईदृग्विधानि पाखंडिदमनासुरहरणशुभाचरणलक्षणानि॥३३॥ स स्मर्ता ॥३४॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धे एकोनाशीतितमोऽध्यायः ॥७९॥अथ बलदेवतीर्थयात्रानंतरम् । अर्थेप्सुं धनार्थिनम् (१)। पुरा पूर्वोपाख्यानेषु । शं कल्याणम् ।

को नु श्रुत्वा सकृद्ब्रह्मन्नुत्तमश्लोकसत्कथाः ॥ विरमेत विशेषज्ञो विषण्णः काममार्गणैः ॥ २ ॥ सा वाग्यया तस्य गुणान्गृणीते करौ च तत्कर्मकरौ मनश्च ॥ स्मरेद्वसंतं स्थिरजंगमेषु शृणोति तत्पुण्यकथाः स कर्णः ॥ ३ ॥ शिरस्तु तस्योभयलिंगमानमेत्तदेव यत्पश्यति तद्धि चक्षुः ॥ अंगानि विष्णोरथ तज्जनानां पादोदकं यानि भजंति नित्यम् ॥ ४ ॥ सूत उवाच ॥ विष्णुरातेन संपृष्टो भगवान्बादरायणिः ॥ वासुदेवे भगवति निमग्नहृदयोऽब्रवीत् ॥ ५ ॥ श्रीशुक उवाच ॥ कृष्णस्यासीत्सखा कश्चिद्ब्राह्मणो ब्रह्मवित्तमः ॥ विरक्त इन्द्रियार्थेषु प्रशांतात्मा जितेंद्रियः ॥ ६ ॥

त्यन्वयः ॥ १ ॥ उत्तमश्लोकस्य श्रीकृष्णस्य । सत्यो मनोहरा विषयवैतृष्ण्यजनिकाः कथाः । विशेषज्ञः सारवित् । विषण्णो विषादं प्राप्तः ॥ २ ॥ कथाश्रवणं स्तुवन् दृष्टांततयाऽन्यार्थानाह । सा वागिति । तावेव करौ यौ तत्कर्मकर्तारौ । तदेव मनो यत्स्थिरजंगमेषु वसंतं स्मरेत् । यस्तस्य पुण्याः कथाः शृणोति स एव कर्णः ॥ ॥ ३ ॥ उभयलिंगं स्थिरं जंगमं च तस्यैव लिंगमिति मत्वा आनमेत्तदेव शिरः । तदेव तस्य लिंगमित्येव यत्पश्यति तदेव चक्षुः । तान्येवांगानि यानि पादोदकं भजं

अतो दैत्यहननेन सज्जनावनात्।तं सुरारिनाशम्।निजा भक्ताः (२)। अधुना न केवलं हरिभक्तानां पारत्रिकमेव सुखं किंत्वैहिकमप्यलौकिकं तद्भवतीत्यध्यायद्वयेनाह—अन्यानि असुरसंहारादितराणि भक्तवात्सल्यबोधकानि॥ १ ॥ २ ॥यया वा चा । तत्कर्मार्चनादि कुरुत इति । तथा अनेन वागादिपदानामन्वर्थतोक्ता । वक्तीति वाक् । करोतीति करः । मन्यते जानातीति मनः । कर्णयति शृणोतीति कर्णः । क्रमाद्वचिकृञ्मनिकर्णीनां परिभाषणकरणज्ञानाकर्णनार्थकानां धातूनामेतेऽन्वर्थकाः प्रयोगाः ॥ ३ ॥ तस्यैव भगवतो लिंगं मूर्तिम् “ लिंगं चिह्ने तु माने च मूर्तिप्रकृतिहेतुषु । शिश्ने च शिवलिंगे च ज्ञानज्ञापकयोरपि ॥ ” इति निरुक्तिः । तज्जनानां हरिभक्तानाम् । ‘ श्रिञ्—सेवायाम् ’ । अस्य नमनलक्षगसेवायां शिर इति निपात्यते । चष्टे पश्यतीति चक्षुः । दर्शनेऽपि चक्षिरस्ति । अंगंति पानस्नानादिरूपां सेवां प्राप्नुवंतीत्यंगानि । अथ कोर्थो मंगलानि शुभानि । अथेति मंगलानंतरारंभकात्स्न्याधिकारसमुच्चयेष्विति । एतेन शीर्षादीनामप्यन्वर्थतोक्ता ॥ ४ ॥ निमग्नहृदयः प्रविष्टचेताः ॥ ५ ॥ “ श्रीदामानौ सखायौ द्वौ लांगलिवासुदेवयोः । एको गोपाललीलायां द्वितीयः शास्त्रचिंतने ॥ आद्यो गोपः परो विप्रो द्वावेव परमप्रियौ । रामकेशवयोर्ज्ञेयौ श्रीकृष्णस्य विशेषतः ॥ ” इति बृहत्संहितोक्तेः । “ श्रीदामानाम गोपालो रामकेशवयोः सखा ” इदमेवार्द्धं पृथुकोपाख्यानेऽपि मंडूकप्लुतिन्यायेनानेयं तत्र गोपालपदं श्लेषेण गा वेदलक्षणा वाणीः पालयते तदुक्तानुष्ठानेनेति गोपालो विप्र इति वक्ति । अत एव स्वामिचरणैश्श्रीदामसुहृद इति व्याख्यातम् । किंच तत्रैव श्रीदामपदार्थोऽप्युक्तः—“ अमर्त्यालभ्या या संपत्सा श्रीरित्यभिधीयते। श्रीशेन दत्ता सा यस्मै स श्रीदामाभिधीयते ॥ ” तच्चेहोक्तं स्वयं भगवता—“प्राप्तो मामस्य दास्यामि संपदोऽमर्त्यदुर्लभाः ” इति । एतेन श्रीदामपदं पृथुकोपाख्याने नास्ति प्रत्युक्तं प्राप्तो मामित्यादिवाक्येन सूचितत्वात् । ननु कश्चिदित्युक्तेस्सुदामेतर एव किं न स्यात्तत्रेदं बोध्यम् । “ श्रीदामनामभक्तार्थं भूम्यानीतेंद्रवैभवे ” इत्यष्टोत्तरशतनामपाठात्स एवेति। साक्षात्तन्नाम तु श्रीकृष्णस्य ज्येष्ठगुरुभ्रातृत्वेन गुरुत्वादेव श्रीयोगींद्रेण नोपात्तम् । “ आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठपुत्रकलत्रयोः॥” इति स्मृतेः । यद्वा—‘ब्राह्मणो ब्रह्मवित्तमः’ इत्यनेनैव सुदामश्रीदामनाम्नोर्ग्रहणमर्थैक्येन पर्यायत्वात्, तथाहि—ब्रह्मणो वेदस्य विल्लाभो यस्मात्स ब्रह्मवित् । वेदनं वित् विल्लाभोऽतो भावे क्विप् । वेदाध्यापकत्वेनात्युदारोऽतिशयेर्थे तमपो विधानात् । “सर्वेभ्य एव दानेभ्यो विद्यादानं विशिष्यते । अहार्यधनमेतद्धि तद्दाता सर्वदायकः ॥ ” इति स्मृतेः । सुष्ठु

यदृच्छयोपपन्नेन वर्तमानो गृहाश्रमी ॥ तस्य भार्या कुचैलस्य क्षुत्क्षामा च तथाविधा ॥७॥ पतिव्रता पतिं प्राह म्लायता वदनेन सा॥दरिद्रा सीदमाना सा वेपमानाभिगम्य च॥८॥ ननु ब्रह्मन्भगवतः सखा साक्षाच्छ्रियः पतिः ॥ ब्रह्मण्यश्च शरण्यश्च भगवान्सात्वतर्षभः॥९॥तमुपेहि महाभाग साधूनां च परायणम् ॥ दास्यति द्रविणं भूरि सीदते ते कुटुंबिने ॥१०॥ आस्तेऽधुना द्वारवत्यां भोजवृष्ण्यंधकेश्वरः ॥ स्मरतः पादकमलमात्मानमपि यच्छति ॥ किं त्वर्थकामान्भजते नात्यभीष्टाञ्जगद्गुरुः॥११॥ स एवं भार्यया विप्रो बहुशः प्रार्थितो मृदु ॥ अयं हि परमो लाभ उत्तमश्लोकदर्शनम् ॥१२॥ इति संचिंत्य मनसा गमनाय मतिं दधे ॥ अप्यस्त्युपायनं किंचिद्गृहे कल्याणि दीयताम् ॥१३॥ याचित्वा चतुरो मुष्टीन्विप्रान्पृथुकतंडुलान् ॥ चैलखंडेन तान्बद्ध्वा भर्त्रे प्रादादुपायनम्॥१४॥स तानादाय विप्राग्र्यः प्रययौ द्वारकां किल॥कृष्णसंदर्शनं मह्यं कथं स्यादिति चिंतयन् ॥१५॥ त्रीणि गुल्मान्यतीयाय तिस्रः कक्षाश्च सद्विजः ॥ विप्रोऽगम्यांधवृष्णीनां गृहेष्वच्युतधर्मिणाम्॥१६॥ गृहं द्व्यष्टसहस्राणां महिषीणां हरेर्द्विजः ॥ विवेशैकतमं श्रीमद्ब्रह्मानंदं गतो यथा॥१७॥ तं विलोक्याच्युतो दूरात्प्रियापर्यंकमास्थितः ॥ सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा ॥ १८ ॥ सख्युः प्रियस्य विप्रर्षेरंगसंगादिनिर्वृतः ॥ प्रीतो व्यमुंचदब्बिंदून्नेत्राभ्यां पुष्करेक्षणः ॥ १९ ॥ अथोपवेश्य पर्यंके स्वयं सख्युः समर्हणम् ॥ उपहृत्यावनिज्यास्य पादौ पादावनेजनीः ॥ २० ॥

तीति ॥ ४ ॥ ५ ॥ ६ ॥ तथाविधा कुचैला । किंच क्षुत्क्षामा यत्किंचित्संपन्नमन्नं तस्मै परिविष्य स्वयं क्षुधा जीर्णा ॥ ७ ॥ पतिव्रता सती । म्लायता शुष्यता वदनेन । सीदमाना भर्तुर्भोगसंपादनाशक्त्याऽवसीदंती । वेपमाना भयेन कंपमाना ॥८॥९॥ १० ॥ भोजवृष्ण्यंधकेश्वर इति तत्स्वीकारमात्रेण सर्वे ते दास्यंतीति भावः । नात्यभीष्टान्परिपाकविरसत्वात् ॥११॥१२॥ अप्यस्ति किमस्तीति प्रश्नः ॥१३॥१४॥ मह्यं मम ॥१५॥ गुल्मानि रक्षार्थं सैन्यस्थानानि । कक्षाः प्रतोलीः । अतीयायातिक्रम्य जगाम । सद्विजः द्विजैः सहितः । ततश्च अगम्या दुर्गमा येऽधा अंधका वृष्णयश्च तेषां गृहेषु ॥१६॥ तथा हरेर्द्व्यष्टसहस्राणां महिषीणां च ये गृहास्तेषु मध्ये श्रीमदेकतमगृहं विवेश । तदा च स द्विजो ब्रह्मानंदं गतो यथा तथा बभूवेति शेषः ॥१७॥ पर्यग्रहीत्पर्यरंभत ॥१८॥अब्बिंदूनानंदाश्रूणि॥१९॥ समर्हणमुपायनमुपहृत्य

ददातीति सुदामा । श्रीः ददातीति श्रीदामा सुष्ठुश्रीशब्दवाचको वेद एव "सा हि श्रीरमृता सताम्" इति श्रुतेः ॥ ६॥ तस्य विप्रस्य । तथाविधा भर्तृवन्मलिनवस्त्रा । न केवलं मलिनांबरैवेत्याह–किंचेति ॥७॥८॥९॥ तं भगवन्तम् । ते तुभ्यम् । सीदते दरिद्राय ॥ १० ॥ ते भोजादयः । इति भाव इति–स्वामिनाऽऽदृतस्य भृत्याः परमादरं कुर्वंतीति प्रसिद्धेः । परमार्थमाह–किंत्विति । पाकविरसान् परिणामे संतापकरान् । जगद्गुरुः सर्वहितकर्तेति हेतुगर्भितविशेषणम् ॥ ११ ॥ स विप्रः ॥ १२ ॥ इति हरिदर्शनलाभम् ॥ १३ ॥ 'पृथुकः स्याच्चिपिटके' इत्यमरः ॥ १४ ॥ तान्पृथुकतंडुलान् ॥ १५ ॥ प्रतोलीः रथ्याः 'रथ्या प्रतोली विशिखा' इत्यमरः । ततो गुल्मादिलंघनानन्तरम् । अच्युतधर्मिणामनवच्छिन्नवर्माणां हरिभक्तानां वा ॥ १६ ॥ तदा च गृहप्रवेशावसरे ॥ १७ ॥ तं विप्रम् ॥ १८ ॥ १९ ॥ अथांगसंगानन्तरम् । अस्य विप्रस्य ॥

अग्रहीच्छिरसा राजन्भगवाँल्लोकपावनः ॥ व्यलिंपद्दिव्यगंधेन चंदनागुरुकुंकुमैः ॥ २१ ॥ धूपैः सुरभिभिर्मित्रं प्रदीपावलिभिर्मुदा ॥ अर्चित्वाऽऽवेद्य तांबूलं गां च स्वागतमब्रवीत् ॥ २२ ॥ कुचैलं मलिनं क्षामं द्विजं धमनिसंततम् ॥ देवी पर्यचरत्साक्षाच्चामरव्यजनेन वै ॥ ॥ २३ ॥ अंतःपुरजनो दृष्ट्वा कृष्णेनामलकीर्तिना ॥ विस्मितोऽभूदतिप्रीत्या अवधूतं सभाजितम् ॥ २४ ॥ किमनेन कृतं पुण्यमवधूतेन भिक्षुणा ॥ श्रिया हीनेन लोकेऽस्मिन्गर्हितेनाधमेन च ॥ २५ ॥ योऽसौ त्रिलोकगुरुणा श्रीनिवासेन संभृतः ॥ पर्यंकस्थां श्रियं हित्वा परिष्वक्तोऽग्रजो यथा ॥ ॥२६॥ कथयांचक्रतुर्गाथाः पूर्वा गुरुकुले सतोः ॥ आत्मनोर्ललिता राजन्करौ गृह्य परस्परम् ॥२७॥ श्रीभगवानुवाच ॥ अपि ब्रह्मन्गुरुकुलाद्भवता लब्धदक्षिणात् ॥ समावृत्तेन धर्मज्ञ भार्योढा सदृशी न वा॥२८॥प्रायो गृहेषु ते चित्तमकामविहतं तथा॥नैवातिप्रीयसे विद्वन्धनेषु विदितं हि मे॥२९॥ केचित्कुर्वंति कर्माणि कामैरहतचेतसः ॥ त्यजंतः प्रकृतीर्दैवीर्यथाऽहं लोकसंग्रहम् ॥ ३० ॥

समर्प्य । पादावनेजनीरपः ॥ २० ॥ २१ ॥ २२ ॥ धमनिभिः शिराभिः संततं व्याप्तम् ॥ २३ ॥ अवधूतं मलिनम् ॥ २४ ॥ विस्मयमाह किमनेनेति द्वाभ्याम् ॥ २५ ॥ संभृतः संमानितः ॥ २६ ॥ सतोर्वसतोः गृह्य गृहीत्वा ॥ २७ ॥ भार्या ऊढा परिणीता नवेति गृहस्थलिंगदर्शनाद्भोगादर्शनाच्च संशयादिव प्रश्नः ॥ २८ ॥ अप्रतिषेधादुद्वाहमनुमतं मत्वाऽऽह । प्राय इति । तर्हि ते चित्तं नूनमकामविहतं कामैर्विहतं न भवतीति मे विदितम् । तथाहि धनेषु वस्त्रादिषु नैवातिप्रीयसे । हे विद्वन्निति । विदुषस्त्वैतद्युक्तमिति भावः ॥ २९ ॥ कामहतत्वाभावे किं गृहधर्मक्लेशेनेत्याशंक्याह । केचिदिति । दैवीरीश्वरमायारचिताः प्रकृतीर्विषयवासनास्त्यजंतः । कामैरनाकृष्टचेतसामपि। कर्मकरणे दृष्टांतः।यथाऽहमिति।लोकसंग्रहे लोकस्य संग्रहो ग्रहणं यथा भवति तथाऽहमीश्वरोऽपि कर्माणि यथा करोमि तद्वत् ॥ ३० ॥

॥ २० ॥२१॥ गां चेति व्याख्यातमक्रूरोपाख्याने ॥२२॥ शिरा नाडी “ धमनी तु शिराहट्टविलासिन्योस्तु योषिति ” इति मेदिनी । शैब्या भद्रा । अत्र ‘ देवी पर्यचरत्साक्षात् ’ इति पाठ एव श्रीधरसंमतः । अग्रे ‘ पर्यंकस्थां श्रियं हित्वा ’ इत्यत्र “ तावच्छ्रीर्जगृहे हस्तं तत्परा परमेष्ठिनः ” इत्यत्र च श्रीपदोपादानात्स्वामिभिः शैब्यापरत्वेन व्याख्यानाच्च । अत एव चक्रवर्तिना ‘ गृहं द्व्यष्टसहस्राणाम् ’ इत्यत्र रुक्मिणीगृहमिति व्याख्याय तत्र पाद्मोत्तरखण्डवाक्यं प्रमाणत्वेन न्यस्तम् । ‘स तु रुक्मिण्यंतःपुरद्वारि क्षणं तूष्णीं स्थितः ’ इति । बालबोधिन्यां शैब्येति पाठमंगीकृत्य शैब्या लक्ष्मणेति व्याख्याय श्रीपदं लक्ष्म्यंशभूतलक्ष्मणापरत्वेन व्याख्यातम् । तत्र च शैब्याशब्दस्य लक्ष्मणापर्यायत्वे मानमन्वेष्यम् । अशीतितमाध्याये ‘ शैब्ये रोहिणि लक्ष्मणे ’ इत्यत्र शैब्ये मित्रविंदे इति पर्यायालेखनात्परस्परविरोधो विवेचनीयः सुधीभिरिति । अतः शैब्येति पाठोऽशोभनः प्रतिभाति ॥ ॥ २३ ॥ २४ ॥ किमनिर्वचनीयम् ॥ २५ ॥ श्रियं श्र्यंशभूतां शैब्याम् ॥ २६ ॥ आत्मनोर्निजयोः ॥ २७ ॥ गृहस्थलिंगमुष्णीषबन्धनादि । भुज्यंते इति भोगा वस्त्रभूषणादयः ॥ २८ ॥ अप्रतिषेधान्मया विवाहो न कृत इत्युत्तराप्रदानात् । इति भाव इति—नहि संसारतत्त्वविदो विषयासक्ता भवंतीत्याशयः ॥ २९ ॥ स्वयमाशंक्य समाधत्ते—कामहतत्वेत्यादिना । “ यदि ह्यहं न वर्तेयं जातु कर्मण्यतंद्रितः । मम वर्त्मानुवर्तंते मनुष्याः पार्थ सर्वशः ॥”

कच्चिद्गुरुकुले वासं ब्रह्मन्स्मरसि नौ यतः ॥ द्विजो विज्ञाय विज्ञेयं तमसः पारमश्नुते ॥ ३१ ॥ स वै सत्कर्मणां साक्षाद्द्विजातेरिह संभवः ॥ आद्योऽग यत्राश्रमिणां यथाऽहं ज्ञानदो गुरुः ॥ ३२ ॥ नन्वर्थकोविदा ब्रह्मन्वर्णाश्रमवतामिह ॥ ये मया गुरुणा वाचा तरंत्यंजो भवार्णवम् ॥ ३३ ॥ नाहमिज्याप्रजातिभ्यां तपसोपशमेन च ॥ तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा ॥ ३४ ॥ अपि नः स्मर्यते ब्रह्मन्वृत्तं निवसतां गुरौ ॥ गुरुदारैश्चोदितानामिंधनानयने क्वचित् ॥ ३५ ॥

नौ आवयोः । यतो गुरोः विज्ञेयं परमात्मतत्त्वम् । तमसः संसारस्य ॥ ३१ ॥ तत्रात्मज्ञानप्रदस्य गुरोरत्यंतं पूज्यत्वं वक्तुं पुरुषस्य त्रीन् गुरूनाह । स वा इति । इह संसारे यत्र संभवो जन्ममात्रं स पिता तावदाद्यः प्रथमो गुरुः पूज्यः । कर्मविद्याप्रदं गुरुमाह । द्विजातेः सतः पुंसः सत्कर्मणां यत्र संभवः उपनीय वेदाध्यापक इत्यर्थः । स द्वितीयो गुरुर्यथाऽहमीश्वरस्तथा प्रथमादपि पूज्य इत्यर्थः । ब्रह्मविद्याप्रदं गुरुमाह । आश्रमिणां सर्वेषामपि ज्ञानदो यः स तु साक्षादहमेवेति ॥ ३२ ॥ अतो ज्ञानप्रदं गुरुरूपं मामाश्रित्य ये संसारं तरंति ते बुद्धिमंत इत्याह । नन्विति । हे ब्रह्मंस्ते ननु वर्णाश्रमवतां मध्येऽर्थकोविदाः । इह मनुष्यजन्मनि तत्रापि वर्णाश्रमवत्त्वे सति ये मया गुरुणा गुरुरूपेण वक्त्रा वाचा उपदेशमात्रेणांजः सुखेनैव भवार्णवं तरंतीति ज्ञानप्रदाद्गुरोरधिकः सेव्यो नास्तीत्युक्तम् ॥ ३३ ॥ अत एव तद्भजनादधिको धर्मश्च नास्तीत्याह । नाहमिति । इज्या गृहस्थधर्मः प्रजातिः प्रकृष्टं जन्म उपनयनं तेन ब्रह्मचारिधर्म उपलक्ष्यते । ताभ्यां तथा तपसा वनस्थधर्मेण उपशमेन यतिधर्मेण वा अहं परमेश्वरस्तथा न तुष्येयं यथा सर्वभूतात्माऽपि गुरुशुश्रूषयेति ॥ ३४ ॥ किंच अस्माकं गुरुशुश्रूषणं किमपि दैवादेव संपन्नं तत्किं त्वया स्मर्यत इति पृच्छति । अपि न इति । गुरौ

इति श्रीमुखोक्तेः ॥ ३० ॥ पारं परमात्मानम् ‘ यस्तस्य पारेऽभिविराजते परः ’ इत्याद्युक्तेः ॥ ३१ ॥ तत्र तावत् । इत्यर्थ इति—आचार्य इति भावः । इत्यर्थ इति—“ उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ” इति मात्स्ये । ब्रह्म गायत्री वेदो वेति ज्ञेयम् । अहमेवेति—“ददामि बुद्धियोगं तं येन मामुपयांति ते ” इति गीतोक्तेः ॥३२॥ यतस्त्रयाणां गुरूणां मध्ये ज्ञानद एव श्रेष्ठोऽतो हेतोः । तत्रापि मनुष्यजन्मन्यपि॥३३॥अत एव ज्ञानप्रदगुरोर्मद्रूपत्वादेव । तद्भजनाज्ज्ञानदगुरुसेवातः । सर्वभूतात्मापि गुरुसेवातोऽहं यथा तुष्ये तथा नान्यधर्मैरिति । “ गुरुसेवा कृता येन तेन सर्वं कृतं शुभम् ” इत्यादिपुराणाद्गुरुसेवैव परो धर्मोऽतोऽन्यथा सर्वधर्मवैयर्थ्यं स्यादिति भावः । “ नित्यं कार्या गुरोः सेवाऽवसरे कार्यसंकुलैः । निजोपार्जितधर्माणां सांगतावाप्तये नृभिः । आषाढ्यां पौर्णमास्यां सा कार्या पूजा प्रयत्नतः ॥ आषाढ्यां पौर्णमास्यां च व्यासपूजाकृतो नराः । सुविद्याधनसंपत्तिं लभंते चाक्षयां सदा ॥ आषाढ्यां च नरश्रेष्ठ व्यासार्चाविमुखो नरः । याम्यैः पाशैः परिवृतः कष्टं प्राप्नोति दारुणम्॥ कामाल्लोभात्तथा मोहाद्व्यासार्चां न करोति यः । तस्य सांवत्सरो धर्मो नाशमायाति पांडव । व्यासपूजा गुरौ कार्या ब्राह्मणेऽध्यापके शुचौ।यद्वोपनेतारि गुरावलाभे पुस्तकादिषु॥अध्यापके क्षत्रियादौ विप्रे त्यक्तनिजाश्रमे।सा न कार्या कदाचिच्च व्यासार्चा शुभमीप्सुभिः॥व्यासार्चने पूर्णमासी त्रिमुहूर्त्ताधिका वरा।त्रिमुहूर्ताधिका नो चेत्तदा पूर्वदिने भवेत् ॥” ‘ त्यक्तनिजाश्रमे ’ इत्युक्तेः कलिप्रवृत्तनानाऽशास्त्रीयमार्गप्रवृत्ते ब्राह्मणेपि गुरौ सा न कार्येति भावः । पुस्तकादिष्विहादिपदेन शालिग्रामाक्षतपुंजतन्मूर्त्यादयो ग्राह्या इति। “धर्मोपदेष्टा सर्वेषां व्यासः सर्वगुरुर्मतः । तदर्चितेऽर्चिताः सर्वे पितरो गुरवोऽमराः॥” इति सर्वं स्मृतिसारे संहितायां चेह प्रसंगादुक्तं स्पष्टम् । अलं प्रकृतानुप्रकृतेन ॥ ३४ ॥ घुणाक्षरन्यायेन जातं गुरुशुश्रूषणमाह—किंचेति । दैवादेवाचिंतितमेव । तद्गुरुसेवनम् ।

प्रविष्टानां महारण्यमपर्तौ सुमहद्द्विज ॥ वातवर्षमभूत्तीव्रं निष्ठुराः स्तनयित्नवः ॥ ३६ ॥ सूर्यश्चास्तं गतस्तावत्तमसा चावृता दिशः ॥ निम्नं कूलं जलमयं न प्राज्ञायत किंचन ॥३७॥ वयं भृशं तत्र महानिलांबुभिर्निहन्यमाना मुहुरंबुसंप्लवे ॥ दिशोऽविदंतोऽथ परस्परं वने गृहीतहस्ताः परि बभ्रिमातुराः ॥ ३८ ॥ एतद्विदित्वा उदिते रवौ सांदीपनिर्गुरुः ॥ अन्वेषमाणो नः शिष्यानाचार्योऽपश्यदातुरान् ॥ ३९ ॥ अहो हे पुत्रका यूयमस्मदर्थेऽतिदुःखिताः ॥ आत्मा वै प्राणिनां प्रेष्ठस्तमनादृत्य मत्पराः ॥ ४० ॥ एतदेव हि सच्छिष्यैः कर्तव्यं गुरुनिष्कृतम् ॥ यद्वै विशुद्धभावेन सर्वार्थात्मार्पणं गुरौ ॥ ४१ ॥ तुष्टोऽहं भो द्विजश्रेष्ठाः सत्याः संतु मनोरथाः ॥ छंदांस्ययातयामानि भवंत्विह परत्र च ॥ ४२ ॥ इत्थंविधान्यनेकानि वसतां गुरुवेश्मसु ॥ गुरोरनुग्रहेणैव पुमान्पूर्णः प्रशांतये ॥ ४३ ॥

निवसतामस्माकं यत्किमपि वृत्तं तत् । क्वचित्कदाचित् ॥ ३५ ॥ अपर्तौ अपगते ऋतौ अकाल इत्यर्थः । वातश्च वर्षं च तयोः समाहारः । स्तनयित्नवो गर्जितानि चाभवन् ॥ ३६ ॥ निम्नं कूलं नतमुन्नतं च स्थानम् ॥ ३७ ॥ अंबूनां संप्लवो व्यामिश्रणं यस्मिन्नेकोदके तस्मिन्वने इत्यर्थः । परिबभ्रिम ' भृञ् भरणे ' इति धातो रूपम् । परि परितो बभ्रिम इडागमश्छांदसः । भारान् धृतवंत इत्यर्थः ॥ ३८ ॥ ३९ ॥ उवाच कृपया श्लोकत्रयीं यया वयं कृतार्था इत्याह । अहो इति। आत्मा देहः ॥४०॥ गुरोर्निष्कृतं प्रत्युपकारः सर्वे अर्था यस्मात्स आत्मा देहस्तस्यार्पणं विनियोगः ॥ ४१ ॥ अयातयामानि यातो यामो यस्य पक्वस्यान्नस्य तद्गतसारं भवति । तद्वदन्यदपि गतसारं गौण्या वृत्त्या यातयाममित्युच्यते । अगतसाराणि छंदांसि मत्तोऽधीयमानानि भवंत्वित्यर्थः ॥ ४२ ॥ इत्थंविधान्येवंप्रकाराण्यनेकानि वृत्तानि किं त्वया स्मर्यंत

गुरुदारैरिति दारशब्दस्य बहुवचनांतत्वात्, तत्पुरुषस्य परप्रधानत्वाद्वृत्तावपि बहुत्वमेवेति॥३५॥इत्यर्थ इति–वर्षाकालमंतरेणेति भावः॥३६॥तावत्तदा । जलमयं प्रचुरजलम् । किंचन तृणकण्टकादि च॥३७॥तत्र वने । इत्यर्थ इति–मार्गादीनां जलाच्छादितत्वेनैकोदकतयाऽप्रतीयमान इति भावः । इत्यर्थ इति–सभारा इतस्ततोऽगच्छाम इति भावः । भ्रमणस्य परिशब्दावगतत्वादिति ॥३८॥ एतत् इंधनार्थमस्मत्प्रेषणम् । विदित्वा भार्यातोऽवगम्य । आतुरान् क्लिष्टान् ॥३९॥यया श्लोकत्रय्या । तमात्मानम् । अनादृत्याऽगणय्य॥४०॥ ईयदेव एतावन्मात्रमेव ॥४१॥गौण्या वृत्त्या–शोणो धावतीतिवत्तत्तद्गुणसंबन्धाद्गौणी वृत्तिर्भवतीति । इत्यर्थ इति–मत्तोऽधीतं सकलमिह परत्र च सफलं भवत्विति भावः॥४२॥फलितं गुरुसेवनलब्धं वस्तु।प्रशांतये मोक्षाय।पूर्ण ऐहिकामुष्मिकसुखभोगेन विरक्तः सन्।एवकारेण–''न यत्प्रसादायुतभागलेशमन्ये च देवा गुरवो जनाः स्वयम्।कर्तुं समेताःप्रभवन्ति पुं

१एतदेव–इत्यत्र इयदेव इति पाठेयमर्थः ।

ब्राह्मण उवाच ॥ किमस्माभिरनिर्वृत्तं देवदेव जगद्गुरो ॥ भवता सत्यकामेन येषां वासो गुरावभूत् ॥ ४४ ॥ यस्य च्छंदोमयं ब्रह्म देह आवपनं विभो ॥ श्रेयसां तस्य गुरुषु वासोत्यंतविडंबनम् ॥ ४५ ॥ इति श्रीमद्भा० म० द० उ० श्रीसुदामचरितेऽशीतितमोऽध्यायः ॥ ८० ॥ श्रीशुक उवाच ॥ स इत्थं द्विजमुख्येन सह संकथयन्हरिः ॥ सर्वभूतमनोऽभिज्ञः स्मयमान उवाच तम् ॥ १ ॥ ब्रह्मण्यो ब्राह्मणं कृष्णो भगवान्प्रहसन्प्रियम् ॥ प्रेम्णा निरीक्षणेनैव प्रेक्षन्खलु सतां गतिः ॥ २ ॥ श्रीभगवानुवाच ॥ किमुपायनमानीतं ब्रह्मन्मे भवता गृहात् ॥ अण्वप्युपाहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत् ॥ भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥ ३ ॥ पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ॥ तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ ४ ॥ इत्युक्तोऽपि द्विजस्तस्मै व्रीडितः पतये श्रियः ॥ पृथुकप्रसृतिं राजन्न प्रायच्छदवाङ्मुखः ॥ ५ ॥

इति शेषः । फलितमुपसंहरति । गुरोरिति ॥ ४३ ॥ अस्माभिः किमनिर्वृत्तमसंपन्नं येषामस्माकं भवता सह वासोऽभूत् ॥ ४४ ॥ भवतस्तु सर्वमेतद्विडम्बनमात्रमित्याह । यस्येति । छंदोमयं वेदाख्यं ब्रह्म तथा श्रेयसामावपनं तदुद्भवस्थानं देहो मूर्तिर्यस्य तस्य तव ॥ ४५ ॥ इति श्रीमद्भागवते म० दशमस्कंधोत्तरार्द्धे श्रीध० टीकायामशीतितमोऽध्यायः ॥ ८० ॥ एकाशीतितमे सख्युर्जग्ध्वा पृथुकतंडुलान् ॥ श्रियं निर्मितवानिंद्रदुर्लभां तु तदाश्रमे ॥ १ ॥ संकथयन्सुखगोष्ठीः कुर्वन् । सर्वभूतानां मनसोऽभिज्ञः मदर्थं पृथुकानानीय दातुं लज्जित इति जानन्नित्यर्थः ॥ १ ॥ प्रहसन् क्ष्वेलीं कुर्वन् ॥ २ ॥ लज्जया त्वकथयतस्तामपनुदन्नाह अण्वपीति द्वाभ्याम् ॥ ३ ॥ ४ ॥ ५ ॥

सस्तमीश्वरं त्वां शरणं प्रपद्ये ॥ " इति सूचितम् ॥ ४३ ॥ किमसंपन्नं किं तु सर्वमेव संपन्नमेव । सत्यकामेन सत्यसंकल्पेन । गुराविति सामीपिकाधारे सप्तमी, गुरुगृह इत्यर्थः ॥ ४४ ॥ एतत्कथनं तु सामान्यत एव न तु त्वामुद्दिश्येत्याह—भवत इति । श्रेयसां तपोयज्ञदानादिफलानाम् । आ समंतादुप्यते बीजरूपेण संतन्यतेऽन्नादि यत्र तदावपनम् । यस्य तवेति अनुकरणं लोकसंग्रहार्थमेवेति भावः ॥ ४५ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कंधोत्तरार्द्धेऽशीतितमोऽध्यायः ॥ ८० ॥ जग्ध्वा भक्षयित्वा । तदाश्रये तद्गृहे ( १ ) । स हरिः । इत्यर्थ इति—राजराजाधिपे भगवति बहुसुस्वाद्वन्नाद्यशनकर्तारि दरिद्रजनाशनार्हमिदमन्नमहं कथं दास्यामीति व्रीडितोऽयं ज्ञातवानिति भावः ॥ १ ॥ क्ष्वेलीं 'क्ष्वेली स्यात्सवयोहास्ये' इति निरुक्तिः ॥ २ ॥ तां लज्जाम् । दरिद्रस्य मम भूरिद्रव्यासत्त्वात् भवतो महतोऽल्पं तुष्टिकरं न स्यादिति नानीतमिति चेदाह—अण्वपीति । भक्तैर्भक्तियुक्तैः । प्रेम्णांतरप्रीत्या । उपाहृतं समर्पितम् । एतेन—द्रव्यभूरित्वाभूरित्वे मत्प्रीतौ न हेतू किंतु भक्तिरेवेत्युक्तम् ॥ ३ ॥ तद्दर्शयति—पत्रमिति । विदुरस्य पत्रं गजेंद्रस्य पुष्पं शबर्याः फलं रन्तिदेवस्य तोयमिति । एतेषां प्रीत्या समर्पितपत्रादिभिरेव तृप्तेः प्रासिद्धत्वात् । तत्पत्रादि ॥ ४ ॥ तस्मै कृष्णाय । प्रसृतिमर्द्धांजलिम् 'अर्द्धांजलौ तु प्रसृतिः' इति यादवः ॥ ५ ॥

सर्वभूतात्मदृक् साक्षात्तस्यागमनकारणम् ॥ विज्ञायाचिंतयन्नायं श्रीकामो माऽभजत्पुरा ॥ ६ ॥ पत्न्याः पतिव्रतायास्तु सखा प्रियचिकीर्षया ॥ प्राप्तो मामस्य दास्यामि संपदोऽमर्त्यदुर्लभाः ॥ ७ ॥ इत्थं विचिंत्य वसनाच्चीरबद्धान्द्विजन्मनः ॥ स्वयं जहार किमिदमिति पृथुकतंडुलान् ॥ ॥ ८ ॥ नन्वेतदुपनीतं मे परमप्रीणनं सखे ॥ तर्पयंत्यंग मां विश्वमेते पृथुकतंडुलाः ॥ ९ ॥ इति मुष्टिं सकृज्जग्ध्वा द्वितीयां जग्धुमाददे ॥ तावच्छ्रीर्जगृहे हस्तं तत्परा परमेष्ठिनः ॥ १० ॥ एतावताऽलं विश्वात्मन्सर्वसंपत्समृद्धये ॥ अस्मिँल्लोके तथाऽमुष्मिन्पुंसस्त्वत्तोषकारणम् ॥ ११ ॥ ब्राह्मणस्तां तु रजनीमुषित्वाऽच्युतमंदिरे ॥ भुक्त्वा पीत्वा सुखं मेने आत्मानं स्वर्गतं यथा ॥ १२ ॥ श्वोभूते विश्वभावेन स्वसुखेनाभिवंदितः ॥ जगाम स्वालयं तात पथ्यनुव्रज्य नंदितः ॥ १३ ॥ स चालब्ध्वा धनं कृष्णान्न तु याचितवान्स्वयम् ॥ स्वगृहान्व्रीडितोऽगच्छन्महद्दर्शननिर्वृतः ॥ १४ ॥

सर्वभूतानामात्मदृगंतःकरणसाक्षी ॥ ६ ॥ अमर्त्यानां देवानामपि दुर्लभाः ॥ ७ ॥ अतिजीर्णत्वाद्वसनस्य पुनस्तन्मध्ये चीरेण बद्धान् ॥ ८ ॥ अंग हे सखे । मां विश्वं विश्वात्मानं माम् ॥९॥ इति वदन्नेकां मुष्टिं जग्ध्वा । तत्परेति । अयं भावः । एतावता पुंस इहामुत्र च मत्कटाक्षविलासभूतानां सर्वसंपदां समृद्ध्येऽलम् । अतःपरं द्वितीयमुष्ट्यदनेन मा मामेतदधीनां कुर्विति ॥१०॥ त्वत्तोषकारणं तव तोषस्य कारणं यथा भवेत्तथा सर्वसंपत्समृद्धये । यां भक्तस्य समृद्धिं दृष्ट्वा त्वं तुष्येरित्यर्थः ॥ ११ ॥ स्वर्गतं स्वर्गवासिनम् ॥ १२ ॥ श्वोभूते उदिते रवौ । विश्वं भावयतीति विश्वभावस्तेनेति पुरतो भाविनमिंद्रदुर्लभं विभवं सूचयति । स्वसुखेन स्वानंदपूर्णेनेति दानेऽदीनतां दर्शयति । नंदितो विनयोक्तिभिः ॥ १३ ॥ व्रीडितः स्वचित्तकार्पण्येन लज्जितः । महतः श्रीकृष्णस्य दर्शनेन निर्वृतः सुखं प्राप्तः ॥ १४ ॥

तस्य सुदाम्नः । अयं सुदामा ॥ ६ ॥ अस्य सख्युः ॥ ७ ॥ तन्मध्ये वस्त्रमध्ये । चीरेण वस्त्रखंडेन । इदं चीरबद्धं किमिति द्विजन्मनो वसनात्कक्षस्थसंकुचितजीर्णवस्त्रात्स्वयं जहाराददौ ॥ ८ ॥ एतत्पृथुकतंडुलरूपमन्नम् ॥ ९ ॥ तावत् द्वितीयमुष्टिग्रहणकाले । तत्परेति भगवदेकनिष्ठा । अत्राशयमाह—अयं भाव इति । एतावता एकमुष्टितंडुलादनेन । अलं पर्याप्तम् । पक्षांतरमाह—त्वत्तोषेति । इत्यर्थ इति—यादृशभक्तसमृद्ध्या तव तोषो भवेत्तादृशीं त्वेकमुष्ट्यशनेनैवाहं संपादयिष्यामीति भावः ॥ १० ॥ ११ ॥ यस्मिन्दिने गतस्तां रात्रिं तद्दिनरात्रिमित्यर्थः । भक्ष्यं भुक्त्वा पेयं दुग्धादि पीत्वा मेने इति शेषः ॥ १२ ॥ नहि विश्वकर्तुर्विप्रगृहेऽलौकिकसंपत्संपादनं स्वानंदतृप्तस्य च दाने दैन्याभावश्चमत्कृतिहेतुरिति भावः ॥ १३ ॥ स च सुदामा । लज्जितो—मां मत्प्रिया किं वदिष्यतीति संकुचितः । निर्वृतोऽवाप्तानंदः ॥ १४ ॥

अहो ब्रह्मण्यदेवस्य दृष्टा ब्रह्मण्यता मया ॥ यद्दरिद्रतमो लक्ष्मीमाश्लिष्टो बिभ्रतोरसि॥१५॥ क्वाहं दरिद्रः पापीयान्क्व कृष्णः श्रीनिकेतनः॥ब्रह्मबंधुरिति स्माहं बाहुभ्यां परिरंभितः॥१६॥निवासितः प्रियाजुष्टे पर्यंके भ्रातरो यथा॥महिष्या वीजितः श्रांतो बालव्यजनहस्तया॥१७॥ शुश्रूषया परमया पादसंवाहनादिभिः ॥ पूजितो देवदेवेन विप्रदेवेन देववत्॥१८॥ स्वर्गापवर्गयोः पुंसां रसायां भुवि संपदाम्॥सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम्॥१९॥ अधनोऽयं धनं प्राप्य माद्यन्नुच्चैर्न मां स्मरेत् ॥ इति कारुणिको नूनं धनं मे भूरि नाददात् ॥ २० ॥ इति तच्चिंतयन्नंतः प्राप्तो निजगृहांतिकम् ॥ सूर्यानलेंदुसंकाशैर्विमानैः सर्वतो वृतम् ॥ २१ ॥ विचित्रोपवनोद्यानैः कूजद्द्विजकुलाकुलैः ॥ प्रोत्फुल्लकुमुदांभोजकह्लारोत्पलवारिभिः ॥२२॥ जुष्टं स्वलंकृतैः पुंभिः स्त्रीभिश्च हरिणाक्षिभिः ॥ किमिदं कस्य वा स्थानं कथं तदिदमित्यभूत् ॥ २३ ॥ एवं मीमांसमानं तं नरा नार्योऽमरप्रभाः ॥ प्रत्यगृह्णन्महाभागं गीतवाद्येन भूयसा॥२४॥पतिमागतमाकर्ण्य पत्न्युद्धर्षाऽतिसंभ्रमा ॥ निश्चक्राम गृहात्तूर्णं रूपिणी श्रीरिवालयात्॥२५॥

निर्वृतिमेवाह अहो इति चतुर्भिः । यद्यतः लक्ष्मीमुरसि बिभ्रता आश्लिष्टोऽहम् ॥ १५ ॥ पापीयान्नीचः ॥ १६॥१७॥ पूजितश्चंदनलेपनादिभिः ॥१८॥ एवं संपूज्यापि धनस्यादाने कारणं कल्पयति स्वर्गापवर्गयोरिति द्वाभ्याम्॥१९॥स्वर्गादीनां यद्यपि तस्य चरणार्चनमेव कारणं तथाऽपि कारुणिकत्वादभूर्यपि स्वल्पमपि धनं मह्यं नाददात्॥ ॥ २० ॥ इत्येवं चिंतयन्निजगृहस्यांतिकं तत्प्रांतम् । तस्य विशेषणं सूर्येति ॥ २१ ॥ विचित्रोपवनादिभिर्वृतम् । कथंभूतैः । कूजद्भिर्द्विजकुलैः पक्षिसमूहैराकुलैर्व्याप्तैः । तथा प्रोत्फुल्लानि कुमुदादीनि येषु तानि वारीणि येषु तानि तथा तैः ॥ २२ ॥ किंच जुष्टमिति । हरिणीनामिवाक्षीणि यासां ताभिः । तदैश्वर्यं दृष्ट्वा वितर्कितवांस्तदाह । किमिदमिति । प्रथमं तेजःपुंजं दृष्ट्वा किमिदमिति पश्चाद्विमानानि दृष्ट्वा कस्य चेति स्थानं स्वीयमिति ज्ञात्वा कथं तदिदं स्थानमित्येवंरूपमभूदिति ॥ २३ ॥ अमरप्रभास्तत्तुल्यकांतयः प्रत्यगृह्णन्नुपायनादिभिरादृतवंतः ॥ २४ ॥ उद्धूतो हर्षो यस्याः सा । अति संभ्रम आदरो यस्याः सा । आलयात्कमलवनाद्रूपधारिणी श्रीरिव । स्वर्गस्य

॥ १९ ॥ दारिद्र्यस्यातिपापफलत्वात्पापीयानिति । नीचः नीचवत्परिहार्यः । 'दारिद्रो नादृतः क्वचित्' इत्युक्तेः । ब्रह्मबंधुर्ब्राह्मणानां बंधुर्दायादोऽयमिति स्मृत्वेत्यर्थः ॥ १६ ॥ भ्रा व्यावहारिकभारस्ती येतेऽनेनेति भ्रातरः । "ऋदोरप्" इत्यप् । 'भ्राता भ्रा ब्रह्मा प्रकटो भारः' इति सौभरिः । भ्रातर इत्यदंतोपि भ्रातृवाचकशब्दो व्याकरणार्णवनिष्पन्नो ज्ञेयः । 'यान्युज्जहार' इति भीमसेनोक्तेः । छांदसो वाऽन्यथा दृष्टांतवैषम्यं स्यात् एकत्वबहुत्वयोरसंबंधात् ॥ १७ ॥ १८ ॥ तच्चरणार्चनं कृष्णांघ्रिपूजनम् ॥ १९ ॥ अभूर्यपि स्वल्पमपि ॥ २० ॥ तस्य गृहस्य । विमानैः सप्तभूमिप्रासादैः "विमानोऽस्त्री हये पोते प्रासादे सप्तभूमिके । व्योमयाने सार्वभौमगृहे मानविवर्जिते ॥" इति निरुक्तिः ॥ २१ ॥ २२ ॥ विशेषसौभाग्यमाह–किंचेति । तत् अलौकिकम् । तत्तार्कितम् । इदं स्थानं तत् द्वारकासदृशं कथं जातमिति ॥ २३ ॥ तं सुदामानम् । तत्तुल्या देवतुल्या कांतिर्यासां तास्तथा ॥ २४ ॥ तत्र सुदाम्नः स्थाने । तयोस्तत्स्त्रीसुदाम्नोः । इति भाव इति–यत्कृपाकटाक्षपाताद्‌द्भुतैश्वर्यं जातं तत एव तद्रूपमप्यद्भुतमभूदिति तात्पर्यम् ॥ २५ ॥

पतिव्रता पतिं दृष्ट्वा प्रेमोत्कंठाऽश्रुलोचना ॥ मीलिताक्ष्यनमद्बुद्ध्या मनसा परिषस्वजे ॥ २६ ॥ पत्नीं वीक्ष्य विस्फुरंतीं देवीं वैमानिकीमिव ॥ दासीनां निष्ककंठीनां मध्ये भांतीं स विस्मितः ॥ २७ ॥ प्रीतः स्वयं तया युक्तः प्रविष्टो निजमंदिरम् ॥ मणिस्तम्भशतोपेतं महेंद्रभवनं यथा ॥ २८ ॥ पयःफेननिभाः शय्या दांता रुक्मपरिच्छदाः ॥ पर्यंका हेमदंडानि चामरव्यजनानि च ॥ २९ ॥ आसनानि च हैमानि मृदूपस्तरणानि च ॥ मुक्तादामविलंबीनि वितानानि द्युमंति च ॥ ३० ॥ स्वच्छस्फटिककुड्येषु महामारकतेषु च ॥ रत्नदीपान्भ्राजमानाँल्ललनारत्नसंयुतान् ॥ ३१ ॥ विलोक्य ब्राह्मणस्तत्र समृद्धीः सर्वसंपदाम् ॥ तर्कयामास निर्व्यग्रः स्वसमृद्धिमहैतुकीम् ॥ ३२ ॥ नूनं बतैतन्मम दुर्भगस्य शश्वद्दरिद्रस्य समृद्धिहेतुः ॥ महाविभूतेरवलोकतोऽन्यो नैवोपपद्येत यदूत्तमस्य ॥ ३३ ॥ नन्वब्रुवाणो दिशतेऽसमक्षं याचिष्णवे भूर्यपि भूरिभोजः ॥ पर्जन्यवत्तत्स्वयमीक्षमाणो दाशार्हकाणामृषभः सखा मे ॥ ३४ ॥

तत्र भगवता आनीतत्वात्स्वर्गिणामिव तयो रूपं च बभूवेति भावः ॥ २५ ॥ बुद्ध्या अयमेवं वंद्य इति निश्चयेन । मनसा संकल्पेन ॥ २६ ॥ २७ ॥ २८ ॥ यत्र मंदिरे पयःफेननिभाः शय्या आस्तरणानीत्यादिसंपदस्तत्र सर्वसंपदां समृद्धीर्विलोक्य तर्कयामासेति चतुर्थेनान्वयः । यत्र च दांता गजदंतमयाः पर्यंकाः ॥ २९ ॥ यत्रासनानि च मृदून्युपस्तरणानि तूलादिमयानि येषु तानि । यत्र मुक्तादामविलंबवंति द्युमंति च वितानानि ॥ ३० ॥ ३१ ॥ स ब्राह्मणो निर्व्यग्रः सन् स्थिरः सन्नहैतुकीमाकस्मिकीं स्वस्य समृद्धिं तर्कयामास । कुत एषा समृद्धिरागतेति ॥ ३२ ॥ निश्चिनोति । नूनमिति । एतन्ममेति । एष चासावहं च तस्यैतन्मम । महती विभूतिर्यस्य तस्यावलोकादन्यः ॥ ३३ ॥ ननु स चेदवलोकनमात्रेण महदैश्वर्यं दत्तवांस्तर्हीदं तुभ्यं मया दत्तमिति किं नावोचदत आह । नन्विति । ननु मे सखा समक्षमब्रुवाण एव याचिष्णवे याचकाय भूरि बह्वपि दिशते ददाति । अत्र हेतुः । भूरिभोजः । स्वयं तद्देयं पर्जन्यवदीक्षमाण इति । अयमर्थः । स्वयं तावद्भूरिभोजो बहुभोज आप्तकामत्वाल्लक्ष्मीपतित्वाच्च अतो यथा पारावारपरिपूरकोऽतिवदान्यः पर्जन्यः कदाचिद्बह्वपि वर्षमल्पमेव च मन्यमानो लज्जयेव समक्षमवर्षन्रात्रौ निद्राणे कर्षके तत्क्षेत्रमा

अयमेव पतिरेव ॥ २६ ॥ स सुदामा । विस्मितो जाताश्चर्यः ॥ २७ ॥ तया पत्न्या ॥ २८ ॥ २९ ॥ द्युमंति द्युतिमंति ॥ ३० ॥ यत्र स्वच्छस्फटिककुड्येषु विमलस्फाटिकभित्तिषु । रत्नदीपाः संति ‘ कुड्यं भित्तौ विलेपने ’ इति मेदिनी ॥ ३१ ॥ तत्र मंदिरे । समृद्धिं वृद्धिम् ॥ ३२ ॥ बत हर्षे । दुर्भगस्य मंदभाग्यस्य । अवलोकः कृपाकटाक्षः ॥ ३३ ॥ अत्राशंकते—नन्विति । अत्राकथने । पर्जन्यो मेघः । अत्राशयमाह—

किंचित्करोत्युर्वपि यत्स्वदत्तं सुहृत्कृतं फल्ग्वपि भूरिकारी ॥ मयोपनीतां पृथुकैकमुष्टिं प्रत्यग्रहीत्प्रीतियुतो महात्मा ॥३५॥ तस्यैव मे सौहृदसख्यमैत्रीदास्यं पुनर्जन्मनि जन्मनि स्यात् ॥ महानुभावेन गुणालयेन विषज्जतस्तत्पुरुषप्रसंगः ॥ ३६ ॥ भक्ताय चित्रा भगवान्हि संपदो राज्यं विभूतीर्न समर्धयत्यजः ॥ अदीर्घबोधाय विचक्षणः स्वयं पश्यन्निपातं धनिनां मदोद्भवम् ॥३७॥ इत्थं व्यवसितो बुद्ध्या भक्तोऽतीव जनार्दने ॥ विषयाञ्जायया त्यक्ष्यन् बुभुजे नातिलंपटः ॥ ३८ ॥ तस्य वै देवदेवस्य हरेर्यज्ञपतेः प्रभोः ॥ ब्राह्मणाः प्रभवो दैवं न तेभ्यो विद्यते परम् ॥ ३९ ॥

प्लावयत्येवं श्रीकृष्णोऽपि स्वभोगापेक्षया तद्देयमिंद्रादिपदमप्यतितुच्छं मन्वानस्तस्य च भजनं बहुमन्यमानः समक्षमब्रुवाण एव ददातीति ॥ ३४ ॥ तदेवाह । किंचिदिति । उरु बह्वपि स्वदत्तं यत्किंचित्करोत्यल्पं मन्यते । सुहृत्कृतं फल्ग्वतितुच्छमपि भूरिकारी बहु मन्यत इत्यर्थः । अत एव मयोपनीतां समीपं नीतां प्रीतियुतः स्वयमेव प्रतिगृहीतवान् ॥ ३५ ॥ श्रीकृष्णस्य भक्तवात्सल्यं दृष्ट्वा तद्भक्तिं प्रार्थयते । तस्येति । सौहृदं प्रेम सख्यं हिताशंसनं च मैत्री उपकारकत्वं च दास्यं सेवकत्वं तत्समाहारैकवचनम् । तस्य तत्संबंधिनो मे मम स्यान्न तु विभूतिः । किंच महानुभावेन तेनैव विषज्जतो विशेषेण संगं प्राप्नुवतस्तद्भक्तेषु प्रकृष्टः संगः स्यादिति ॥ ३६ ॥ ननु भक्तेः फलं संपदं प्राप्य पुनर्भक्तिं किमिति प्रार्थयसेऽत आह । भक्तायेति । संपदः कोशादीन् राज्यमैश्वर्यं विभूतीः कलत्रपुत्रादीन्न समर्थयति न ददात्यपि तु दृढां भक्तिमेव । कुतः ।अदीर्घबोधाय । अविवेकिनो मम तु भक्त्यभावादेवं जातमतस्तद्भक्तिरेव स्यादिति भावः ॥३७॥ त्यक्ष्यन् शनैःशनैस्त्यागमभ्यस्यन् । जायया सह बुभुजे ॥३८॥ श्रीकृष्णस्यैवं

अयमर्थः—आप्तकामस्य श्रीपतेश्च सर्वलोकैश्वर्यमपि तुच्छं प्रतीयत इति भावः । अत आप्तकामत्वादेः । एवं पर्जन्यवत् । तस्य निजभक्तस्य । यथात्युदारः समक्षमल्पवस्तु दातुं लज्जमानस्तद्गृहे प्रेषयति तथा श्रीकृष्णोपीति ॥ ३४ ॥ तदेव भक्तभक्त्यपेक्षया स्वदानाल्पमननमेव । इत्यर्थ इति—भक्तवात्सल्यादल्पमपि बह्वेव जानातीति भावः । अत एव भूरिमननादेव ॥ ३५ ॥ तदभिलषितमाह—श्रीकृष्णस्येत्यादिना । तस्यैव श्रीकृष्णस्यैव । एवकारेणान्ययोगव्यवच्छेदः । तेषां सौहृदादीनाम् । समाहारद्वंद्वे एकवचनम् । न तु विभूतिरित्यर्थावगतं तस्य अग्रिमपद्येनानर्थहेतुकथनात् । अन्यदभिलषितमाह—किंचेति । महान् जगदुत्पादकत्वादिरूपोऽनुभावः प्रभावो यस्य तेन । तद्भक्तेषु ब्रह्मरुद्रादिष्वपि । एतेन भगवज्जनसंगं विना भगवद्भक्तिरपि भक्तानां तोषकरी नेत्युक्तम् ॥ ३६ ॥ हरिरैहिकमैश्वर्यदो नेति मंदानुमितस्वदोषमार्जनायेयं संपादितेतिभावेनाशंक्य समाधत्ते—नन्विति । अतोऽत्र आदिना गजाश्वादिग्रहः । ऐश्वर्यं प्रयोजकत्वं न प्रेर्यत्वम् । आदिना पौत्रस्नुषादिग्रहः । संपदाद्यदाने हेतुमाशंकते—कुत इति । एवं जातम् ऐश्वर्यादि जातं । यतोहमदीर्घबोधोऽतो हेतोः । इति भाव इति—मम संसृतिनिवर्तकदीर्घबोधाय श्रीकृष्णभक्तिरेवास्त्वित्याशयः ॥ ३७ ॥ नातिलंपटः अनासक्तः ॥ ३८ ॥ ब्राह्मण्यता ब्रह्मणभाक्तिः । तस्य श्रीकृष्णस्य । देवदेवस्य सर्वपूज्यस्य यज्ञपतेः सर्वकर्मफलदातुः प्रभोः सर्वेश्वरस्यापि प्रभवः स्वामिनः । यद्वा—प्रभवः समर्था अशुचीनामपि शोधकत्वात्तदुक्तं वसिष्ठस्मृतौ—" समाप्ते शौचकालेपि न शुद्धिर्ब्राह्मणैर्विना । शोधयन्त्यसमाप्तेपि ततस्ते प्रभवो मताः ॥" इति । दैवं पूज्याः । ' वेदाः प्रमाणम् '

एवं स विप्रो भगवत्सुहृत्तदा दृष्ट्वा स्वभृत्यैरजितं पराजितम् ॥ तद्ध्यानवेगोद्ग्रथितात्मबंधनस्तद्धाम लेभेऽचिरतः सतां गतिम् ॥ ४० ॥ एतद्ब्रह्मण्य देवस्य श्रुत्वा ब्रह्मण्यतां नरः ॥ लब्धभावो भगवति कर्मबंधाद्विमुच्यते ॥ ४१ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधोत्तरार्धे पृथुकोपाख्यानंनामैकाशीतितमोऽध्यायः ॥ ८१ ॥ श्रीशुक उवाच ॥ अथैकदा द्वारवत्यां वसतो रामकृष्णयोः ॥ सूर्योपरागः सुमहानासीत्कल्पक्षये यथा ॥ १ ॥ तं ज्ञात्वा मनुजा राजन् पुरस्तादेव सर्वतः ॥ स्यमंतपंचकं क्षेत्रं ययुः श्रेयोविधित्सया ॥ २॥ निःक्षत्रियां महीं कुर्वन्रामः शस्त्रभृतां वरः ॥ नृपाणां रुधिरौघेण यत्र चक्रे महाह्रदान् ॥ ३ ॥

ब्रह्मण्यता नातिचित्रमित्याह । तस्येति ॥ ३९ ॥ अन्यैरजितमपि स्वभृत्यैः पराजितं दृष्ट्वा तस्य ध्यानं तस्य वेगस्तेनोद्ग्रथितमात्मबंधनमहंकारो यस्य सः । गतिमित्याविष्टलिंगं धामविशेषणम् । सतां ब्रह्मविदां प्राप्यमित्यर्थः ॥ ४० ॥ एतत्पृथुकोपाख्यानं श्रुत्वा तत्र ब्रह्मण्यतां विशेषतः श्रुत्वेति ॥ ४१ ॥ इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्री० एकाशीतितमोऽध्यायः ॥ ८१ ॥ ॥ द्व्यशीतितम आगत्य कुरुक्षेत्रं रविग्रहे ॥ वृष्णीन् दृष्ट्वा मुदा भूपाश्चक्रुः कृष्णकथा मिथः ॥ १ ॥ श्रीदामसुहृदे कृष्णः प्रकल्प्यैन्द्रं पदं भुवि ॥ नंदादिसुहृदानंदी कुरुक्षेत्रं जगाम सः ॥ २ ॥ कल्पक्षये यथा सर्वग्रास इत्यर्थः ॥ १ ॥ ज्योतिर्विद्भिः कथ्यमानमादावेव ज्ञात्वा । स्यमंतपंचकं क्षेत्रं कुरुक्षेत्रम् ॥ २॥ अब्रह्मण्यक्षत्रियवधस्थानत्वेन परशुरामस्याघापनुत्तिस्थानत्वेन च क्षेत्रस्य पापनिरासकत्वमाह निःक्षत्रियामिति द्वाभ्याम् ॥ ३॥

इतिवद्ब्राह्मणा दैवमित्युद्देश्यविधेयभावत्वाल्लिंगसंख्यानियमाभावः । तेभ्यो ब्राह्मणेभ्यः । ‘ न ब्राह्मणैस्तुलये भूतमन्यत् ’ इति श्रीमदृषभोक्तेः ॥ ३९ ॥ अनासक्तभोगे सुदाम्नः का सिद्धिर्जातेति चेदाह—एवमित्थम् । तदाऽनासक्तभोगपूर्वकहरिभक्तिकरणसमये । तस्य श्रीकृष्णस्य । धाम स्वरूपम् । आविष्टं व्याप्तं लिंगं यस्मिंस्तत्तथा । व्याप्तस्य त्यागासंभवादजहल्लिंगमित्यर्थः । इत्यर्थ इति—गम्यते प्राप्यते साधनसंपत्त्या साक्षात्क्रियत इति । गतिरिति निरुक्त्यायमर्थः ॥ ४० ॥ एतच्चारिताकर्णनफलमाह—एतदिति । लब्धभावः प्राप्तभक्तिः ॥ ४१ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्धे एकाशीतितमोऽध्यायः ॥ ८१ ॥ रविग्रहे सूर्यग्रहणे ( १ ) । स कृष्णः ( २ ) । इत्यर्थ इति—कल्प्यते तत्त्वसमूहेनेति कल्पं ब्रह्मांडं जगदिति यावत् । तस्य क्षये प्रलयादौ इत्यर्थोऽन्यदापि सर्वग्रासग्रहे प्रलयसाम्यं लोके भवतीति भावः । महाभारतस्य तदुत्तरभावित्वात् ॥ १ ॥ तं सूर्योपरागं दृष्ट्वा[१] ज्ञात्वा पंचकस्य जामदग्न्यकृतह्रदपंचकस्य समंते[२] समीपे वर्तमानो देशः समंतपंचकः । कुरुक्षेत्रदेशोऽष्टचत्वारिंशत्क्रोशात्मकस्तम् । सर्वतः सर्वदेशेभ्यः । श्रेयः पापहानिपूर्वकं कल्याणावाप्तिस्तस्य विधित्सा कर्तुमिच्छा तया ॥ २ ॥ ह्रदकारणमाह—निःक्षत्रियामिति । ननु श्रीभार्गवरामास्त्रिःसप्तकृत्वः क्षत्रियाणामनेकदेशहतानां रक्तेन कथं कुरुक्षेत्रे ह्रदांश्चक्रे इत्याशंक्य ब्रह्माण्डपुराणमध्यभागसप्तचत्वारिंशत्तमाध्यायवचनैर्वारयति, तथाहि—“ ततो मूर्द्धावसिक्तानां राज्ञाममिततेजसाम् । षट्सहस्रद्वयं १२००० रामो जीवग्राहं गृहीतवान् ॥ ततो राजसहस्राणि गृहीत्वा मुनिभिः सह । स जगाम कुरुक्षेत्रं महातेजास्तपोमयः ॥

१ दृष्ट्वेत्यपि पाठे । २ समन्तपंचकमित्यपि पाठः सर्वत्र ।

ईजे च भगवान्रामो यत्रास्पृष्टोऽपि कर्मणा ॥ लोकस्य ग्राहयन्नीशो यथाऽन्योऽघापनुत्तये ॥ ४ ॥ महत्यां तीर्थयात्रायां तत्राऽगन्भारतीः प्रजाः ॥ वृष्णयश्च तथाऽक्रूरवसुदेवाहुकादयः ॥ ५ ॥ ययुर्भारत तत्क्षेत्रं स्वमघं क्षपयिष्णवः ॥ गदप्रद्युम्नसांबाद्याः सुचंद्रशुकसारणैः ॥ ६ ॥ आस्तेऽनिरुद्धो रक्षायां कृतवर्मा च यूथपः ॥ ते रथैर्देवधिष्ण्याभैर्हयैश्च तरलप्लवैः ॥ ७ ॥ गजैर्नदद्भिरभ्राभैर्नृभिर्विद्याधरद्युभिः ॥ व्यरोचंत महातेजाः पथि कांचनमालिनः ॥ ८ ॥ दिव्यस्रग्वस्त्रसन्नाहाः कलत्रैः खेचरा इव ॥ तत्र स्नात्वा महाभागा उपोष्य सुसमाहिताः ॥ ९ ॥ ब्राह्मणेभ्यो ददुर्धेनूर्वासः स्रग्रुक्ममालिनीः ॥ रामह्रदेषु विधिवत्पुनराप्लुत्य वृष्णयः ॥ १० ॥ ददुः स्वन्नं द्विजाग्र्येभ्यः कृष्णे नो भक्तिरस्त्विति ॥ स्वयं च तदनुज्ञाता वृष्णयः कृष्णदेवताः ॥ ११ ॥ भुक्त्वोपविविशुः कामं स्निग्धच्छायांघ्रिपांघ्रिषु ॥ तत्रागतांस्ते ददृशुः सुहृत्संबंधिनो नृपान् ॥ १२ ॥ मत्स्योशीनरकौशल्यविदर्भकुरुसृंजयान् ॥ कांबोजकेकयान्मद्रान्कुंतीनानर्तकेरलान् ॥ १३ ॥ अन्यांश्चैवात्मपक्षीयान्परांश्च शतशो नृप ॥ नंदादीन्सुहृदो गोपान्गोपीश्चोत्कंठिताश्चिरम् ॥ १४ ॥

अन्यो विद्वान्यथा ॥ ४ ॥ आगन्नाजग्मुः । भारतीर्भारत्यः ॥ ५ ॥ ६ ॥ सुचंद्रशुकसारणैः सहानिरुद्धो द्वारकारक्षायामास्ते । तथा कृतवर्मा च यूथपतिः सेनानीः । देवधिष्ण्याभैर्विमानसंकाशैः । तरलास्तरंगास्तद्वत् प्लवो गतिर्येषां तैः ॥ ७ ॥ विद्याधरद्युभिर्विद्याधराणामिव द्युतिर्येषां तैः । महातेजा महातेजसः ॥ ८ ॥ दिव्या अत्युत्तमाः स्रग्वस्त्रसन्नाहा येषाम् ॥ ९ ॥ पुनरन्येद्युराप्लुत्य । यद्वा तस्मिन्नेवाह्नि मुक्तिस्नानं कृत्वा ॥ १० ॥ ११ ॥ स्निग्धा शीतला छाया येषामंघ्रिपाणामंघ्रिषु मूलेषु ॥ १२ ॥ १३ ॥ १४ ॥

सरसां पञ्चकं तत्र खानयित्वा भृगूद्वहः । सुखावगाहतीर्थानि तानि चक्रे समंततः ॥ जघान तत्र वै राज्ञस्तच्छरीरभवासृजा । सरांसि तानि वै पञ्च पूरयामास भार्गवः ॥ स्नात्वा तेषु यथान्यायं जामदग्न्यः प्रतापवान् ॥ पितॄन्संतर्पयामास यथाशास्त्रमतंद्रितः ॥ पितुः प्रेतस्य श्राद्धादि मातुश्चैव यथोदितम् । कृत्वा तीर्णप्रतिज्ञः स तीर्थानि तानि चाकरोत् ॥ संतुष्टपितृवरतस्ततः प्रोक्तं हि नाम तत् । समंतपञ्चकमिति मुनिभिर्दैवतैः सह॥" इति । यत्र समंतपंचके ॥ ३ ॥ ईश्वरत्वेनाहंकाराभावादस्पृष्टकर्मापि "यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते । हत्वापि स इमाँल्लोकान्नायं हंति न हन्यते॥" इति श्रीमुखोक्तेः । लोकसंग्रहार्थमीजे । यथान्यः प्राकृतः ॥ ॥ ४ ॥ तीर्थयात्रायामुपस्थितायाम् । तत्र कुरुक्षेत्रे ॥ ५ ॥ तत्क्षेत्रं समंतपंचकम् ॥ ६ ॥ ते वृष्णयः । "तरलश्चंचले वक्रे तरंगे सुरषिङ्गयोः" इति कोशात् । 'भेकोडुपगतौ प्लवः' इति । भेकादीनां समाहारद्वंद्वः ॥ ७ ॥ महातेजा इति समासांतो डप्रत्ययः ॥ ८ ॥ तत्र रामह्रदेषु ॥ ९॥ अन्येद्युरन्यस्मिन्दिने द्वितीयदिवसस्नाने । पुनःपदप्रयोगास्वारस्यं मत्वाह—यद्वेति । मुक्तिस्नानं ग्रहणांतस्नानम् । "आदौ स्नानं तथा चांते मध्ये दानं प्रकीर्तितम्" इति स्मृतेः ॥१०॥ तदनुज्ञाता ब्राह्मणादिष्टाः । 'स्निग्धः शीतलचिक्कणे' इति धरणिः । अंघ्रिषु अधस्तात् ॥११॥ तत्र कुरुक्षेत्रे । ते यदवः ॥१२॥ आनर्तेत्यत्र आरट्टेति पाठोपि क्वचित् ॥१३॥ आत्मप

अन्योऽन्यसंदर्शनहर्षरंहसा प्रोत्फुल्लहृद्वक्त्रसरोरुहश्रियः ॥ आश्लिष्य गाढं नयनैः स्रवज्जला हृष्यत्त्वचो रुद्धगिरो ययुर्मुदम् ॥ १५ ॥ स्त्रियश्च संवीक्ष्य मिथोऽतिसौहृदस्मितामलापांगदृशोऽभिरेभिरे ॥ स्तनैः स्तनान्कुंकुमपंकरूषितान्निहत्य दोर्भिः प्रणयाश्रुलोचनाः ॥ १६ ॥ ततोऽभिवाद्य ते वृद्धान्य विष्ठैरभिवादिताः ॥ स्वागतं कुशलं पृष्ट्वा चक्रुः कृष्णकथां मिथः ॥ १७ ॥ पृथा भ्रातॄन्स्वसॄर्वीक्ष्य तत्पुत्रान्पितरावपि ॥ भ्रातृपत्नीर्मुकुंदं च जहौ संकथया शुचः ॥ १८ ॥ कुंत्युवाच ॥ आर्य भ्रातरहं मन्ये आत्मानमकृताशिषम् ॥ यद्वा आपत्सु मद्वार्तां नानुस्मरथ सत्तमाः ॥ १९ ॥ सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि ॥ नानुस्मरंति स्वजनं यस्य दैवमदक्षिणम्॥२०॥वसुदेव उवाच ॥ अंब मास्मानसूयेथा दैवक्रीडनकान्नरान् ॥ ईशस्य हि वशे लोकः कुरुते कार्यतेऽथवा ॥ २१ ॥ कंसप्रतापिताः सर्वे वयं याता दिशंदिशम् ॥ एतर्ह्येव पुनः स्थानं दैवेनासादिताः स्वसः ॥ २२ ॥ श्रीशुक उवाच ॥ वसुदेवोग्रसेनाद्यैर्यदुभिस्तेऽर्चिता नृपाः ॥ आसन्नच्युतसंदर्शपरमानंदनिर्वृताः ॥ २३ ॥ भीष्मो द्रोणोंऽबिकापुत्रो गांधारी ससुता तथा ॥ सदाराः पांडवाः कुंती सृंजयो विदुरः कृपः ॥ २४ ॥ कुंतिभोजो विराटश्च भीष्मको नग्नजिन्महान् ॥ पुरुजिद्द्रुपदः शल्यो धृष्टकेतुः स काशिराट् ॥ २५ ॥ दमघोषो विशालाक्षो मैथिलो मद्रकेकयौ ॥ युधामन्युः सुशर्मा च ससुता बाह्लिकादयः ॥ २६ ॥ राजानो ये च राजेंद्र युधिष्ठिर मनुव्रताः ॥ श्रीनिकेतं वपुः शौरेः सस्त्रीकं वीक्ष्य विस्मिताः ॥ २७ ॥

प्रोत्फुल्लैर्हृद्वक्त्रसरोरुहैः श्रीः शोभा येषां ते ॥ १५ ॥ अतिसौहृदेन यत् स्मितं तेनामला अपांगैर्दृशो दृष्टयो यासां ताः मिथः परस्परं संवीक्ष्य दोर्भिर भिरेभिरे आलिंगनं कृतवत्यः ॥ १६ ॥ १७ ॥ संकथया मिथः सप्रेमगोष्ठ्या ॥ १८ ॥ तामेव वसुदेवपृथयोः संकथामाह आर्येत्यादिचतुर्भिः । अकृताशिषमपूर्णमनोरथम् ॥ १९ ॥ यस्य दैवमदक्षिणमननुकूलं तं स्वजनमपि संतं सुहृदादयो नानुस्मरंति । अतो मम दैवं प्रतिकूलं युष्माकं कोऽपराध इति भावः ॥ २० ॥ २१ ॥ ईशवशत्वमेवाह । कंसप्रतापिता इति । हे स्वसः । एतर्ह्येव संप्रत्येव ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ युधिष्ठिरं येऽनुव्रतास्ते राज

क्षीयाः पांडवाद्याः । पराश्च दुर्योधनपक्षीया गांधाराद्याः ॥ १४ ॥ १५ ॥ निहत्य संयोज्य ॥ १६ ॥ ततः स्त्रीमेलापोत्तरम् । ते यदवः ॥ १७ ॥ तत्पुत्रान् भ्रातृस्वसृपुत्रान् । शुचः शोकान् अश्रूणि वा ' शोकेऽस्रे शुक् तथा शुद्धौ ' इति निरुक्तिः " गाथायां च पुराणादेः प्रेमगोष्ठ्यां च संकथा " इति च ॥ १८ ॥ तामेव प्रेमगोष्ठीरूपामेव । आर्यभ्रातर्ज्येष्ठभ्रातः । यद्यपि " अग्रजातेति तां कन्यां शूरोऽनुग्रहकाम्य या । अददत्कुंतिभोजाय " इति महाभारतोक्त्या पृथैव ज्येष्ठा तथापि तद्भ्रातृषु वसुदेवस्यैव ज्यैष्ठ्यमिति यत्तदोर्नित्यसंबंधाद्यतो नानुस्मरथ ततो हेतोरकृतात्मानमिति योज्यम् ॥ १९ ॥ यस्य तं नानुस्मरंतीत्यर्थः । " प्रतिकूले रमाकांत सरले वक्रता भवेत् " इत्याद्युक्तेः ॥ २० ॥ ' स्वसरि मातरि चांबा ' इति व्याडिः । अंब हे स्वसः ॥ २१ ॥ २२ ॥ ते कुरुक्षेत्रागताः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ ये राजानः ॥ २७ ॥

अथ ते रामकृष्णाभ्यां सम्यक्प्राप्तसमर्हणाः ॥ प्रशशंसुर्मुदा युक्ता वृष्णीन्कृष्णपरिग्रहान् ॥ २८ ॥ अहो भोजपते यूयं जन्मभाजो नृणामिह ॥ यत्पश्यथासकृत्कृष्णं दुर्दर्शमपि योगिनाम् ॥ २९ ॥ यद्विश्रुतिः श्रुतिनुतेदमलं पुनाति पादावनेजनपयश्च वचश्च शास्त्रम् ॥ भूः कालभर्जितभगापि यदंघ्रिपद्मस्पर्शोत्थशक्तिरभिवर्षति नोऽखिलार्थान् ॥ ३० ॥ तद्दर्शनस्पर्शनानुपथप्रजल्पशय्यासनाशनसयौनसपिंडबंधः ॥ येषां गृहे निरयवर्त्मनि वर्ततां वः स्वर्गापवर्गविरमः स्वयमास विष्णुः ॥ ३१ ॥ श्रीशुक उवाच ॥ नंदस्तत्र यदून्प्राप्ताञ्ज्ञात्वा कृष्णपुरोगमान् ॥ तत्रागमद्वृतो गोपैरनःस्थार्थैर्दिदृक्षया ॥ ३२ ॥ तं दृष्ट्वा वृष्णयो हृष्टास्तन्वः प्राणमिवोत्थिताः ॥ परिषस्वजिरे गाढं चिरदर्शनकातराः ॥ ३३ ॥ वसुदेवः परिष्वज्य संप्रीतः प्रेमविह्वलः ॥ स्मरन्कंसकृतान्क्लेशान्पुत्रन्यासं च गोकुले ॥ ३४ ॥

सूये जितत्वात् ॥ २७ ॥ २८ ॥ जन्मभाजो नृणां मध्ये सफलजन्मानः ॥ २९ ॥ किंच न केवलं तस्य दर्शनमेवापि त्वत्यंतदुर्लभं बहु युष्माकं स्वतःसंपन्नमित्याहुः यद्विश्रुतिरिति द्वाभ्याम् । यदिति पृथक्पदम् । यस्येत्यर्थः । विश्रुतिः कीर्तिः श्रुतिभिर्नुता वेदैः स्तुता इदं विश्वमलमत्यर्थं पुनाति । यद्विश्रुतिश्रुतिरमीवमलमिति पाठे श्रुतिः श्रवणममीवं पापमिति । यस्य पादावनेजनपयो गंगा च यस्य वचो वाक्यरूपं शास्त्रं च वेदाख्यं विश्वं पुनाति । किंच कालेन भर्जितं दग्धं भगं माहात्म्यं यस्याः सा तथाविधाऽपि भूर्यस्यांऽघ्रिपद्मस्पर्शेनोत्था आविर्भूता शक्तिर्यस्याः सा नोऽस्माकमखिलानर्थानभितो वर्षति ॥ ३० ॥ दर्शनं च स्पर्शनं चानुपथोऽनुगतिश्च प्रजल्पो गोष्ठी च शय्या शयनं चासनं चाशनं भोजनं च यौनं विवाहसंबंधस्तेन सह वर्तमानः सपिंडबंधो दैहिकसंबन्धः । तेन श्रीकृष्णेन सह दर्शनाद्युपलक्षितः सयौनः सपिंडबंधो येषां वोऽस्ति । किंच येषां वो गृहे विष्णुः स्वयमास आविरभूत् । निरयवर्त्मनि प्रवृत्तिमार्गे वर्तमानानां स्वर्गापवर्गाभ्यां विरमयति वितृष्णान्करोतीति तथा सः । ते यूयं जन्मभाज इति । यद्वा तदिति सामान्यनिर्देशः स इत्यर्थः । विष्णुः स्वयं येषां वो निरयवर्त्मनि संसारकारणे गृहे वर्तमानानामपि बध्यते संबध्यत इति बंधो दर्शनादिभिः संबद्धः सन्स्वर्गापवर्गविरम आस परमसुखप्रदो बभूवेत्यर्थः ॥ ३१ ॥ अनःस्थार्थैरिति । तत्रैव वासचिकीर्षया शकटेषु स्थापितैरर्थैः सहागत इत्यर्थः ॥ ३२ ॥ ३३ ॥ वसुदेवस्तं परि

॥ २८ ॥ यद्यतः ॥ २९ ॥ अन्यदाह—किञ्चेति । बहु श्रीकृष्णनैकव्यम् । इत्यर्थ इत्यर्थकः । न केवलं वयं पूता एवापि त्वभीष्टमपि प्राप्ता इत्याहुः—किञ्चेति । कालेन कलिना । तथाविधापि नष्टसामर्थ्यापि ॥ ३० ॥ तेन यौनबंधसपिंडबंधेन । स यौनसापिंडबंधः । दर्शनस्पर्शनानुपथप्रजल्पशय्यासनाशनैरुपलक्षितश्चासौ सयौनसपिंडबंधस्तथा । पुनस्तेन सह दर्शनादिः सपिंडबंधांतस्तथा । येषामित्यस्य पुनरन्वयमाह—किंचेति । पूर्वव्याख्यायामर्थदौर्लभ्यं मत्वाऽऽह—यद्वेति । सामान्यनिर्देशो हि शब्दमात्रनिर्देशः । इत्यर्थ इति—स च प्रकृतार्थपर इति । इत्यर्थ :इति—परमसुखं भक्तिसुखमेव । "या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् । सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्किंत्वंतकासिलुलितात्पततां विमानात् ॥" इति ध्रुवोक्तेरिति भावः । तीर्थस्तु स्वर्गापवर्गयोर्विशेषेण रमणं यस्मात्स तथा । "ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गः" इति श्रुतेरित्याह ॥ ३१ ॥ तत्र कुरुक्षेत्रे । तत्र कृष्णादिपार्श्वे । इत्यर्थ इति—तीर्थयात्रामुख्यफलश्रीकृष्णदर्शनमेवेति मत्वा तत्पार्श्वे एवागत इति भावः ॥ ३२ ॥ तं नंदम् ॥ ३३ ॥ ३४ ॥

कृष्णरामौ परिष्वज्य पितरावभिवाद्य च ॥ न किंचनोचतुः प्रेम्णा साश्रुकंठौ कुरूद्वह ॥ ३५ ॥ तावात्मासनमारोप्य बाहुभ्यां परिरभ्य च ॥ यशोदा च महाभागा सुतौ विजहतुः शुचः ॥ ३६ ॥ रोहिणी देवकी चाथ परिष्वज्य व्रजेश्वरीम् ॥ स्मरंत्यौ तत्कृतां मैत्रीं बाष्पकंठ्यौ समूचतुः ॥ ३७ ॥ का विस्मरेत वां मैत्रीमनिवृत्तां व्रजेश्वरि ॥ अवाप्याप्यैंद्रमैश्वर्यं यस्या नेह प्रतिक्रिया ॥ ३८ ॥ एतावदृष्टपितरौ युवयोः स्म पित्रोः संप्रीणनाभ्युदयपोषणपालनानि ॥ प्राप्योषतुर्भवति पक्ष्म ह यद्वदक्ष्णोर्न्यस्तावकुत्रचभयौ न सतां परः स्वः ॥ ३९ ॥ श्रीशुक उवाच ॥ गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपंति॥ दृग्भिर्हृदीकृतमलं परिरभ्य सर्वास्तद्भावमापुरपि नित्ययुजां दुरापम् ॥ ४० ॥ भगवांस्तास्तथाभूता विविक्त उपसंगतः ॥ आश्लिष्यानामयं पृष्ट्वा प्रहसन्निदमब्रवीत् ॥ ४१ ॥

ष्वज्य प्रेमविह्वलो बभूवेति शेषः ॥ ३४ ॥ ३५ ॥ तौ सुतौ परिरभ्य नंदो यशोदा च विरहशोकान्विजहतुस्तत्यजतुः । यद्वा शुचोऽश्रूणि विजहतुर्मुमुचतुरित्यर्थः ॥ ॥ ३६ ॥ व्रजेश्वरीं यशोदाम् ॥ ३७ ॥ अनिवृत्तां निवृत्तिकारणे सत्यप्यनुवर्तमानाम् । ऐंद्रमैश्वर्यं प्राप्यापि यस्याः प्रतिक्रिया कर्तुं न शक्यत इत्यर्थः ॥ ३८ ॥ तत्कृतां मैत्रीमाहतुः । एताविति । न दृष्टौ पितरौ याभ्यां तौ वस्तुतस्त्वजन्मत्वादेवादृष्टपितरौ । हे भवति युवयोः पित्रोर्न्यस्तावेतौ संप्रीणनादीनि प्राप्याकुत्रचभयौ क्वचिदपि भयरहितौ भूत्वोषतुर्वासं चक्रतुः । अक्ष्णोर्नेत्रयोः । रक्षकं पक्ष्म यद्वत्तथा रक्षकयोः युक्तं युवयोरेतद्यतः सतां परः स्व इति नास्ति वैषम्यम् ॥ ३९ ॥ अभीष्टत्वे लिंगम् । यद्यस्य श्रीकृष्णस्य प्रेक्षणे दृशिषु नेत्रेषु व्यवधायकं पक्ष्मकृतं विधातारं शपंति । दृग्भिर्नेत्रद्वारैर्हृदिकृतं हृदये प्रवेशितं परिरभ्य तद्भावं तदात्मतां प्रापुः । अपि नित्ययुजा

रामकृष्णयोर्जनमोहनविडंबनमाह—कृष्णरामाविति । पूर्वमभिवाद्य ततः परिष्वज्य ॥ ३५ ॥ चान्नंदः । शुक्पदस्योभयार्थत्वादाह—यद्वेति । इत्यर्थ इति—मोक्षणत्यागावेकार्थकावेवेति ॥ ३६ ॥ तत्कृतां यशोदाकृताम् । मैत्रीं पुत्ररक्षणरूपाम् ॥ ३७ ॥ वां युवयोर्नंदयशोदयोः । यस्या मैत्र्याः । इत्यर्थ इति—राजभयत्यक्तास्मत्सुतपालनं भवद्भ्यां विना कोपि तदा कर्तुं न समर्थः क्रूरकंसभयात्तच्चाप्रतीकार्यमेवैंद्रादिपददानेनापीति भावः ॥ ३८ ॥ तत्कृतां तयोः कृताम् । एतौ रामकृष्णौ । पितरौ पितृशब्दास्पदावावामेव । परमार्थमाह—वस्तुतस्त्विति । अजन्मत्वात्परमेश्वरत्वेन जन्मरहितत्वादेव । जन्मवतां जीवानामेव पितृदर्शनं भवतीति भावः । भातीति भवती दीप्तियुता तत्संबुद्धौ । तथा कुत्रचेत्यव्ययं ‘ किमः सामान्ये ’ इति चांतं कुत्रार्थे । ततो नञा समासः । तथा च न कुत्रच भयं ययोस्तावकुत्रचभयौ । वस्तुतस्तु ईशत्वादेताभ्यामेव सर्वे बिभ्यति “ भीषास्माद्वातः पवते ” इत्यादिश्रुतेः । कथंभूतयोर्वा तथा तद्वत् रक्षकयोरिति शेषः । अर्थांतरं सूचयतः युक्तमित्यादिना । सतामुदाराणाम् । तदुक्तम् “अयं स्वीयः परो वेति गणना लघुचेतसाम् । उदारचरितानां तु वसुधैव कुटुंबिनी॥” इति॥ ॥ ३९ ॥ लिंगं हेतुः । व्यवधायकं व्यवधानकर्तारम् । प्रेक्षणे तादर्थ्ये सप्तमी प्रेक्षणार्थम् । तदात्मतां तद्रूपताम् । आरूढयोगिनामित्यनेन भक्त्यतिशयो दर्शितः ॥ ४० ॥ ता गोप्यः । तथाभूताः प्रेमरताः । इदं

अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया ॥ गतांश्चिरायिताञ्छत्रुपक्षक्षपणचेतसः ॥ ४२ ॥ अप्यवध्यायथाऽस्मान्स्विदकृतज्ञाविशंकया ॥ नूनं भूतानि भगवान्युनक्ति वियुनक्ति च ॥ ४३ ॥ वायुर्यथा घनानीकं तृणं तूलं रजांसि च ॥ संयोज्याक्षिपते भूयस्तथा भूतानि भूतकृत् ॥ ॥ ४४ ॥ मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते ॥ दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापनः ॥ ४५ ॥ अहं हि सर्वभूतानामादिरंतोऽन्तरं बहिः ॥ भौतिकानां यथा खं वार्भूर्वायुर्ज्योतिरंगनाः ॥४६॥ एवं ह्येतानि भूतानि भूतेष्वात्मात्मना ततः ॥ उभयं मय्यथ परे पश्यताभातमक्षरे॥४७॥

मारूढयोगिनामपि ॥ ४० ॥ ४१ ॥ चिरायितान्विलंबितान् । अत्र हेतुः । शत्रूणां पक्षस्य क्षपणे चेतो येषां तान् ॥ ४२ ॥ अपि स्वित् अस्मानवध्यायथाऽवजानीथ । अकृतज्ञा एत इत्याविशंकया ईषच्छंकया । न शंकामात्रं निश्चितमेवैतत्परित्यज्य गतत्वादित्यत आह । नूनमिति ॥ ४३ ॥ एतत्सदृष्टांतमाह । वायुरिति । आक्षिपते पृथक्करोतीत्यर्थः ॥ ४४ ॥ अपि च अतिभद्रमिदं यदुत भवतीनां मद्वियोगेन मत्प्रेमातिशयो जात इत्याह । मयीति । मयि भक्तिमात्रमेव तावदमृतत्वाय कल्पत इति । यदुत भवतीनां मत्स्नेह आसीत्तद्दिष्ट्याऽतिभद्रम् । कुतः । मदापनो मत्प्रापण इति ॥ ४५ ॥ कीदृशस्त्वं यं वयं स्नेहेन प्राप्स्याम इत्यपेक्षायामात्मस्वरूपमाह । अहं हीति । हे अंगनाः भौतिकानां शरावसैंधवादीनां यथाऽऽकाशादीनि पंच महाभूतान्याद्यंतादिरूपाण्येवं सर्वभूतानां जरायुजादीनामहम् । अतो व्यापकं मां भवत्यः प्राप्ता एवेति ॥४६॥ ननु चतुर्विधभूतग्रामाणां तद्भोक्ता आत्मैवाद्यंतादिरूपस्तस्मिंश्च सर्वव्यापके सर्वभूतानि वर्तंत इति कुतस्त्वत्प्राप्तिरस्माकमित्यत आह । एवं हीति । अयमर्थः । शरावादीनां यथा भौतिकानां महाभूतान्याद्यंतादिरूपाण्येवमेवैतानि चतुर्विधानि भूतान्यपि भौतिकत्वाविशेषात्स्वकारणेषु भूतेष्वेव वर्तंते न तु भोक्तर्यात्मनि । आत्मा तु तेषु भूतेष्वात्मना भोक्तृरूपेण ततो व्याप्तो न कारणत्वेन । अथैतदुभयं भूतभौतिकरूपं भोग्यं च भोक्तारं चात्मानं मय्यक्षरे परिपूर्णे आभातं पश्यतेति ॥ ४७ ॥

वक्ष्यमाणम् ॥ ४१ ॥ अत्र चिरायितत्वे ॥ ४२ ॥ एतेऽस्मानिति बहुत्वं स्वस्यानेकरूपत्वबोधनाय रासक्रीडायां ताभिर्दृष्टचरत्वात् । एतदकृतज्ञत्वम् । भगवान् कालः ॥ ४३ ॥ एतत्संयोगवियोगकरणम् । भूतकृत्कालः ॥ ४४ ॥ गोपीभाग्यं श्लाघते—अपि चेति । अतिभद्रत्वे हेतुमाशंकते—कुत इति । मत्प्रापणो मत्सांनिध्यानंददः, अमृतत्वे एतन्न संभवत्यत एव भक्तैस्तन्नाद्रियते इति रहस्यम् ॥ ४५ ॥ प्राप्य स्वरूपं पृच्छंतीनां तदाह—कीदृश इत्यादिना । अहमाद्यंतरूपः यतोऽतो हेतोर्व्यापकं माम् ॥ ४६ ॥ अत्राशंकते—तद्भोक्ता चतुर्विधभूतग्रामांतर्यामी । अत्राशयमाह—अयमर्थ इति । परिपूर्णे परमात्मनि । आभातं रज्जौ भुजं

श्रीशुक उवाच ॥ अध्यात्मशिक्षया गोप्य एवं कृष्णेन शिक्षिताः ॥ तदनुस्मरणध्वस्तजीवकोशास्तमध्यगन् ॥४८॥ आहुश्च ते नलिननाभपदारविंदं योगेश्वरैर्हृदि विचिंत्यमगाधबोधैः ॥ संसारकूपपतितोत्तरणावलंबं गेहंजुषामपि मनस्युदियात्सदा नः ॥ ४९ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधोत्तरार्धे वृष्णिगोपसंगमोनाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ श्रीशुक उवाच ॥ तथानुगृह्य भगवान्गोपीनां स गुरुर्गतिः ॥ युधिष्ठिरमथापृच्छत्सर्वांश्च सुहृदोऽव्ययम् ॥ १ ॥ त एवं लोकनाथेन परिपृष्टाः सुसत्कृताः ॥ प्रत्यूचुर्हृष्टमनसस्तत्पादेक्षाहतांहसः ॥ २ ॥ कुतोऽशिवं त्वच्चरणांबुजासवं महन्मनस्तो मुखनिःसृतं क्वचित् ॥ पिबंति ये कर्णपुटैरलं प्रभो देहंभृतां देहकृदस्मृतिच्छिदम् ॥ ३ ॥ हि त्वाऽऽत्मधाम विधुतात्मकृतत्र्यवस्थमानंदसंप्लवमखंडमकुंठबोधम् ॥ कालोपसृष्टनिगमावन आत्तयोगमायाकृतिं परमहंसगतिं नताः स्म ॥ ४ ॥

अध्यात्मशिक्षया स्वरूपोपदेशेन शिक्षिता बोधितास्तस्यानुस्मरणेन ध्वस्तो जीवकोशो लिंगं यासां तास्तमेवाध्यगन् प्रापुः ॥ ४८ ॥ एवं प्राप्तोऽपि कृष्णः पुनर्गृहव्यासंगेन माऽपयात्विति तच्चरणस्मरणं प्रार्थयामासुरित्याह । आहुश्चेति । हे नलिननाभ ते पदारविंदं गेहंजुषां गृहसेविनामपि नो मनसि सदा उदियादाविर्भवेत् ॥ ४९ ॥ इति श्रीमद्भागवते दशमस्कंधोत्त० श्री० टी० द्व्यशीतितमोऽध्यायः॥८२॥त्र्यशीतितम एवं च स्त्रीणां कृष्णकथोत्सवे ॥ द्रौपद्यै कृष्णभार्याभिरुक्ताः स्वस्वकरग्रहाः ॥१॥ अव्ययं कुशलम् ॥ १ ॥ तत्पादेक्षया हतमंहो येषां ते ॥ २ ॥ महतां मनस्तः सकाशान्मुखद्वारतो निःसृतं क्वचित्कदाचिद्देहंभृतां देहधारिणां देहकृच्चासावस्मृतिश्चाविद्या तां छिनत्तीति तथा तम् । देहकृदीश्वरस्तद्विषयाज्ञानच्छिदं वा ॥ ३ ॥ हि त्वेति पदद्वयम् । त्वा त्वां हि एव त्वामेव नताः स्मेत्यर्थः । कथंभूतम् आत्मधाम्ना स्वरूपप्रकाशेन विधुता निरस्ता आत्मकृता बुद्धिनिमित्तास्तिस्रोऽवस्था यस्मिंस्तम् । अत एवानंदसंप्लवं सर्वानंदकदंबरूपम् । अखंडं चापरिच्छिन्नम् । यतो न कुंठः कुंठितो बोधश्चिच्छक्तिर्यस्य तम् । नन्वेवंरूपता श्रीकृष्णस्य कुतः अस्मदादिवत्प्रतीतेरत आहुः । कालोपसृष्टेति । कालेनोपसृष्टा विप्लुताश्च ते निगमाश्च तेषामवने रक्षार्थमात्ता उपात्ता योग

गादिकमिव प्रतीतं यूयं पश्यत अधिष्ठेयस्याधिष्ठानातिरेकत्वाभावादित्यर्थः ॥ ४७ ॥ तमेव श्रीकृष्णमेव ॥ ४८ ॥ अपयातु विस्मृतिं गच्छतु । तच्चरणस्मरणं कृष्णपादस्मृतिम् । अगाधबोधैरनन्तबोधाढ्यैर्योगेश्वरैः सनकाद्यैः संसारकूपपतितानामुत्तरणायोर्द्ध्वगमनायावलंबं हस्ताधारम् । अनेन प्राप्तात्मतत्त्वैरप्यभीप्समानतया भक्तेराधिक्यं ध्वनितम् ॥ ४९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धे द्व्यशीतितमोऽध्यायः ॥८२ ॥ एवं गोपीवत् ( १ ) । तथा प्रार्थनाऽनुसारेण । अथ गोप्यनुग्रहोत्तरम् । स कृष्णः ॥ १ ॥ ते सुहृदः । तत्पादेक्षया कृष्णांघ्रिदर्शनेन । अंहो दुरितम् ॥ २ ॥ न स्मृतिर्यया सा तथा । जडाया देहकरणासामर्थ्यं मत्वार्थांतरमाह—अथकृदीश्वर इति । अन्ये तु हे प्रभो त्वच्चरणांबुजासवं त्वदंघ्रिमाहात्म्यबोधिकथामृतं कर्णपुटैर्ये पिबंति तेषां त्वत्त्वत्तो दुर्जनशास्तुः कालरूपात्कुतोऽशिवं भयं भवतीत्यन्वयः । “ आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ । तस्यर्ते यत्क्षणो नीत उत्तमश्लोकवार्त्तया ॥” इत्युक्तेः । कथंभूतं महात्मनां व्यासादीनां मुखेभ्यो निस्सृतं गलितं क्वचित्कदाचिदपि व्यासादिवाक्यैस्त्वामात्मत्वेन जानतां न दुःखं भवतीत्यर्थः । ईश्वरस्य ममात्मत्वमेव कथं तत्राह—देहंभृत इति । देहंभृतो जीवाः त्वत्कृते त्वद्धेतुत्वेन उच्छ्वसंति जीवंति । “ को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनंदो न स्यात् ” इति श्रुतेः । अथ वा त्वन्मुखनिस्सृतं त्वच्चरणांबुजासवं ये पिबंति तेषां महात्मनां कुतोऽशिवमित्यन्वयः । त्वत्कृते भगवन्नमस्कारकारणाय । अत्र पक्षे ‘ देहंभृतस्त्वत्कृत उच्छ्वसंति हि ’ इति पाठोस्ति ॥ ३ ॥ इत्यर्थ इति—व्याख्या । ‘ देहे बुद्धौ चितिश्चात्मा ’ इति

ऋषिरुवाच ॥ इत्युत्तमश्लोकशिखामणिं जनेष्वभिष्टुवत्स्वंधककौरवस्त्रियः ॥ समेत्य गोविंदकथा मिथोऽगृणंस्त्रिलोकगीताः शृणु वर्णयामि ते ॥ ५ ॥ द्रौपद्युवाच ॥ हे वैदर्भ्यच्युतो भद्रे हे जांबवति कोसले ॥ हे सत्यभामे कालिंदि शैब्ये रोहिणि लक्ष्मणे ॥ ६ ॥ हे कृष्णपत्न्य एतन्नो ब्रूत वो भगवान्स्वयम् ॥ उपयेमे यथा लोकमनुकुर्वन्स्वमायया ॥७॥ रुक्मिण्युवाच ॥ चैद्याय माऽर्पयितुमुद्यतकार्मुकेषु राजस्वजेयभटशेखरितांघ्रिरेणुः ॥ निन्ये मृगेंद्र इव भागमजाविथूथात्तच्छ्रीनिकेतचरणोऽस्तु ममार्चनाय ॥ ८ ॥ सत्यभामोवाच ॥ यो मे सनाभिवधतप्तहृदा ततेन लिप्ताभिशापमपमार्ष्टुमुपाजहार ॥ जित्वर्क्षराजमथ रत्नमदात्स तेन भीतः पिताऽदिशत मां प्रभवेऽपि दत्ताम् ॥ ९ ॥

मायया आकृतिर्निराकारमूर्तिर्येन तम् । परमहंसानां गतिं त्वाम् । अतस्तवैवंरूपत्वादस्माकं च त्वन्माययैतत्सर्ववैपरीत्यात्त्वामेव नताः स्मेति । यद्वा त्वामिति प्रकरणाज्ज्ञातव्यम् । त्वां नताः स्म । किं कृत्वा हित्वा । किम् । आत्मधाम आत्मा शरीरं धाम गृहं तच्च तच्च । देहदैहिकसंगं परित्यज्येत्यर्थः । समानमन्यत् ॥ ४ ॥ त्रिषु लोकेषु गीताः ॥ ५ ॥ कोसले हे सत्ये शैब्ये हे मित्रविंदे । रोहिणीनाम काचित्पट्टमहिषीतुल्या ॥ ६ ॥ हे अन्याः श्रीकृष्णस्य पत्न्यः ॥ ७ ॥ मा मामर्पयितुं संपादयितुं राजसु जरासंधादिषूद्यत्कार्मुकेषु सत्स्वजेया ये भटास्तेषां शेखरिता मुकुटवत्कृता अंघ्रिरेणवो येन । तेषां मूर्ध्नि पदं दधदित्यर्थः । तस्य श्रीनिकेतस्य चरणो ममार्चनायास्तु॥ ॥ ८ ॥ सनाभेर्भ्रातुर्वधेन सिंहकृतेन तप्तं हृदयस्य तेन मे ततेन तातेन लिप्तमभिशापं दुर्यशोऽपमार्ष्टुं परिहर्तुमृक्षराजं जित्वा रत्नं स्यमंतकमुपाजहारानीतवान् । अथानंतरं

धरणिः । अवस्था जागराद्याः । ‘ बुद्धेर्जागरणं स्वप्नस्सुषुप्तिरिति वृत्तय ’ इति नारदोक्तेः । अत एव अवस्थात्रयातीतत्वादेव । यतो यस्मात् । अत्राऽऽशंकते–एवंरूपता सर्वानंदाखंडाकुंठबोधरूपता । ‘ आकारो देह आकृतिः ’ इति यादवः । यतस्त्वं परमहंसगम्योऽसि अंतो हेतोः । प्रकरणलभ्यस्याप्यभ्यर्हितत्वेन “ पादादौ न प्रयोक्तव्याः प्रायशश्चादयो बुधैः ” इत्यालंकारिकसमयत्वाचाह–यद्वेति । इत्यर्थ इति–गृहत्यागस्य शक्यत्वेऽपि शरीरत्यागस्याशक्यत्वात्तयोरासक्तित्यागोऽर्थोऽत्र विवक्षित इति भावः ॥ ४ ॥ इत्युक्तरीत्या । उत्तमश्लोका युधिष्ठिराद्यास्तेषां शिखा शेखरीभूतो रुद्रस्तस्य मणिं मणिवद्धार्यं श्रीकृष्णम् ॥ ५ ॥ ६ ॥ यथा येन विधिना । एतं विधिम् ॥ ७ ॥ इत्यर्थ इति–‘ जह्रे पदं मूर्ध्नि दधत्सुपर्णः ’ इत्युक्तोरीति भावः । अजानामवीनां च यूथात् ॥ ८ ॥ भ्रातुः प्रसेनस्य । अथर्क्षराजजयानंतरम् । तेन मिथ्याभिशापरूपेण ।

जांबवत्युवाच ॥ प्राज्ञाय देहकृदमुं निजनाथदैवं सीतापतिं त्रिणवहान्यमुनाऽभ्ययुध्यत् ॥ ज्ञात्वा परीक्षित उपाहरदर्हणं मां पादौ प्रगृह्य मणिनाऽहममुष्य दासी॥१०॥कालिंद्युवाच ॥ तपश्चरंतीमाज्ञाय स्वपादस्पर्शनाऽऽशया॥सख्योपेत्याग्रहीत्पाणिं योहं तद्गृहमार्जनी॥११॥मित्रविंदोवाच॥यो मां स्वयंवर उपेत्य विजित्य भूपान्निन्ये श्वयूथगमिवात्मबलिं द्विपारिः ॥ भ्रातंश्च मेऽपकुरुतः स्वपुरं श्रियौकस्तस्यास्तु मेऽनुभवमंघ्र्यवनेजनत्वम् ॥१२॥ सत्योवाच ॥ सप्तोक्षणोऽतिबलवीर्यसुतीक्ष्णशृंगान्पित्रा कृतान्क्षितिपवीर्यपरीक्षणाय ॥ तान्वीरदुर्मदहनस्तरसा निगृह्य क्रीडन्बबंध ह यथा शिशवोऽजतोकान् ॥ १३ ॥ य इत्थं वीर्यशुल्कां मां दासीभिश्चतुरंगिणीम् ॥ पथि निर्जित्य राजन्यान्निन्ये तद्दास्यमस्तु मे ॥ १४ ॥ भद्रोवाच ॥ पिता मे मातुलेयाय स्वयमाहूय दत्तवान् ॥ कृष्णे कृष्णाय तच्चित्तामक्षौहिण्या सखीजनैः ॥ १५ ॥

मत्पित्रे रत्नमदात् । तेन स्वापराधेन भीतः स मे पिता प्रभवे श्रीकृष्णाय मामदिशत् ददौ । दत्तामक्रूरादिभ्यः प्रतिश्रुतामपीत्यर्थः ॥९॥ देहकृत्पिता अमुं श्रीकृष्णं निजनाथं स्वामिनं देवमीश्वरं सीतापतिं प्राज्ञायाविज्ञाय त्रिणवहानि त्रिनवाहानि । ह्रस्वश्छंदोऽनुरोधेन । सप्तविंशतिदिनान्यमुनाऽभ्ययुध्यत् । परीक्षितः संजाता परीक्षा यस्य स परीक्षितस्तं साक्षात्सीतापतिरेवासाविति ज्ञात्वा पादौ प्रगृह्य मणिना सह मामर्हणमुपाहरदर्हणतया समर्पितवान् । अहो तर्हि त्वमतिश्रेष्ठाऽसि नेत्याह । अमुष्याहं दासीति॥१०॥ सख्या अर्जुनेन । तस्या गृहमार्जनी गृहसंमार्जनकर्त्री ॥ ११ ॥ शुनां यूथगतं स्वबलिं द्विपारिः सिंह इवेति मे भ्रातॄंश्चापकुरुतोऽपकारं कुर्वतो विजित्य । श्रियौको लक्ष्मीनिवासः । तस्यांघ्र्यवनेजनत्वं चरणक्षालनकर्तृत्वमनुभवं प्रतिजन्म मेऽस्तु ॥ १२ ॥ सप्तोक्षणो वृषभान् । बलं च वीर्यं च सुतीक्ष्णशृंगाणि चातिशयितानि येषां तान्मे पित्रा कृतान्संपादितान्बलीयसे मां दातुं क्षितिपानां वीर्यस्य बलस्य परीक्षणाय तानतिप्रसिद्धान्वीराणां दुर्मदं घ्नंति ये तांस्तरसा शीघ्रमेव निगृह्य दमयित्वा क्रीडन्ननायासेनैव बबंध । अजतोकानजापत्यानि ॥ १३ ॥ वीर्यमेव शुल्कं देयं यस्यास्ताम् । दासीभिः सह चतुरंगिणीं गजाश्वादिसेनायुक्तां पुरं निन्ये ॥ १४ ॥ हे कृष्णे हे द्रौपदि ।

इत्यर्थ इति–वाग्दत्ताया अन्यस्मै दानं न दोषाय ' सकृत्प्रदीयते कन्या ' इति स्मृतिर्जलदत्तापरेति ध्येयमिति भावः ॥९॥ छंदोऽनुरोधेन छंदोलोभेन–"अपि माषं मषं कुर्याच्छंदोभंगं न कारयेत् " इति शिष्टाचारात् । आर्षो गुणरूप एकादेशो वा । ज्ञात्वेति नहि प्राकृतो मया योद्धुं कल्पोऽतो मत्प्रियार्थं सीतापतिरेवायं रामायणयुद्धात्तृप्तं निजयुद्धेन मां तोषयितुमागत इति विज्ञायेत्यर्थः । अमुष्य कृष्णस्य ॥ १० ॥ यः कृष्णः । गृहमार्जनीति–निजभक्त्यतिशयमाह ॥ ११ भ्रातॄन् विंदानुविंदादीन् । तस्य श्रीनिवासस्य ॥ १२ ॥ तान् उक्षणः ॥ १३ ॥ यः कृष्णः ॥ १४ ॥ पिता धृष्टकेतुः । मातुलस्य वसुदेवस्य पुत्राय । तस्मिन्कृष्णे ॥ १५ ॥

अस्य मे पादसंस्पर्शो भवेज्जन्मनिजन्मनि ॥ कर्मभिर्भ्राम्यमाणाया येन तच्छ्रेय आत्मनः ॥ १६ ॥ लक्ष्मणोवाच ॥ ममापि राझ्यच्युतजन्मकर्म श्रुत्वा मुहुर्नारदगीतमास ह ॥ चित्तं मुकुंदे किल पद्महस्तया वृतः सुसंमृश्य विहाय लोकपान् ॥१७॥ज्ञात्वा मम मतं साध्वि पिता दुहितृवत्सलः ॥ बृहत्सेन इति ख्यातस्तत्रोपायमचीकरत् ॥ १८ ॥ यथा स्वयंवरे राज्ञि मत्स्यः पार्थेप्सया कृतः ॥ अयं तु बहिराच्छन्नो दृश्यते स जले परम् ॥ ॥ १९ ॥ श्रुत्वैतत्सर्वतो भूपा आययुर्मत्पितुः पुरम् ॥ सर्वास्त्रशस्त्रतत्त्वज्ञाः सोपाध्यायाः सहस्रशः ॥ २० ॥ पित्रा संपूजिताः सर्वे यथावीर्यं यथावयः ॥ आददुः सशरं चापं वेद्धुं पर्षदि मद्धियः ॥ २१ ॥ आदाय व्यसृजन्केचित्सज्यं कर्तुमनी श्वराः ॥ आकोष्टं ज्यां समुत्कृष्य पेतुरेकेऽमुना हताः ॥ २२ ॥ सज्यं कृत्वाऽपरे वीरा मागधांबष्ठचेदिपाः ॥ भीमो दुर्योधनः कर्णो नाविंदंस्तदवस्थितिम् ॥ २३ ॥

तस्मिन्नेव चित्तं यस्यास्तां माम् अक्षौहिण्या सेनया सह सखीजनैश्च सह॥१५॥ पादसंस्पर्शेनात्मनो मे तत्कैवल्याख्यं श्रेयो भवेत्सः । यद्वा येन कारणेनात्मनो जीवस्य । तच्छ्रेयः स एव पुरुषार्थ इति ॥१६॥ राज्ञि हे द्रौपदि यथा मित्रविंदायास्तथैव ममापि चित्तं मुकुंदविषयमासीत् सुसंमृश्य सुविचार्य पद्महस्तया श्रिया वृतः किलातोऽपि मम चित्तं श्रीमुकुंदे आसेति ॥ १७ ॥ तत्र श्रीकृष्णप्राप्तावुपायमचीकरत्कारयामास ॥ १८ ॥ यथा राज्ञि तव स्वयंवरे पार्थस्येप्सया आप्तुमिच्छया कृतस्तथा मत्स्यं कारितवान् । पाठांतरे पार्थस्येषुणाऽप्राकृतः । तर्हि ममाप्यर्जुन एव किं नाविध्यत्तत्राह । अयं त्विति । स मत्स्यो बहिरेवाच्छन्नो नांतरतः । स्तंभलग्नयोर्ध्वदृष्ट्या संलक्ष्यतेऽयं तु न तथा किंतु स्तंभमूले निहितकलशजले केवलं दृश्यतेऽतो दृष्टिरधस्तादुपरि च लक्ष्यमिति श्रीकृष्णव्यतिरेकेण न कस्यापि भेद्य इति भावः ॥ १९ ॥ २० ॥ मत्स्यं वेद्धुम् । पर्षदि संसदि । मद्धियो मय्येव धीर्येषामिति । अन्यचित्ता न वेद्धुं शक्ता इति भावः ॥ २१ ॥ तदेवाह । आदायेति । अमुना चापेन ॥ २२ ॥ नाविंदंस्तदव

तीर्थस्तु तस्येति पपाठ । तत्प्रसिद्धम् । स पादस्पर्शः । नहि सर्वकल्याणहेतुरेकस्य संभवतीत्यरुच्याह—यद्वेति । स एव पादस्पर्श एव । 'अद्यापि यत्पदरजः श्रुतिमृग्यमेव' इत्युक्तेः ॥ १६ ॥ अत लक्ष्मीवरणादेव ॥ १७ ॥ कृष्णं विना नान्यं वृणोमीति मम मतम् ॥ १८ ॥ पाठांतरे पार्थेष्वपाकृत इति पाठेऽपाकृतश्चालितः "पार्थो यतोऽसृजद्बाणं नाच्छिनत्परपस्पृशे परम्" इति वक्ष्यमाणत्वात् । स मत्स्यस्त व स्वयंवरमत्स्यः । अयं यो मत्स्वयंवरे कृतो दीर्घस्थूणाशिखरेऽवलंबितः बहिराच्छन्नः काचकरंडिकादिनाच्छादितः यतो जल एव दृश्यतेऽतो हेतोः।इति भाव इति—अलक्ष्यलक्ष्यभेदने तु पार्थोपि शक्त एव तथापि लक्ष्मणाया लक्ष्म्यंशत्वेन कृष्णं विनाऽन्यस्य प्राप्तुमयोग्यत्वात्ततो न बिभिदेऽतो भगवानेव समर्थ इति तात्पर्यम् ॥ १९ ॥ एतन्मत्स्यस्वयंवरम् ॥ २० ॥ मत्स्यमिति शेषः । 'सदसि सत्पर्षदौ च' इति कोशात् । इति भाव इति—मत्स्यवेधने चित्ताभावात्तद्वेद्धुं नाशकन्निति तात्पर्यम्॥२१॥तदेवान्यचित्तत्वमेव॥२२॥सज्यं सगुणम् । तदवस्थितिं मत्स्यावस्थितिम् । इत्यर्थ इति—क्रियाशक्तिश्शस्त्रचालनादिसामर्थ्यं दैहिकबलवत्त्वेन भवेदपि तु लक्ष्याभिज्ञत्वं गुरुप्रसादा

मत्स्याभासं जले वीक्ष्य ज्ञात्वा च तदवस्थितिम् ॥ पार्थो यत्तोऽसृजद्बाणं नाच्छिनत्पस्पृशे परम् ॥ २४ ॥ राजन्येषु निवृत्तेषु भग्नमानेषु मानिषु ॥ भगवान्धनुरादाय सज्यं कृत्वाऽथ लीलया ॥ २५ ॥ तस्मिन्संधाय विशिखं मत्स्यं वीक्ष्य सकृज्जले ॥ छित्त्वेषुणाऽपातयत्तं सूर्ये चाभिजिति स्थिते ॥ २६ ॥ दिवि दुंदुभयो नेदुर्जयशब्दयुता भुवि ॥ देवाश्च कुसुमासारान्मुमुचुर्हर्षविह्वलाः ॥ २७ ॥ तद्रंगमाविशमहं कलनूपुराभ्यां पद्भ्यां प्रगृह्य कनकोज्ज्वलरत्नमालाम् ॥ नूत्ने निवीय परिधाय च कौशिकाग्र्ये ःसव्रीडहासवदना कबरीधृतस्रक् ॥ २८ ॥ उन्नीय वक्त्रमुरुकुंतलकुंडलत्विड्गंडस्थलं शिशिरहासकटाक्षमोक्षैः ॥ राज्ञो निरीक्ष्य परितः शनकैर्मुरारेरंसेऽनुरक्तहृदया निदधे स्वमालाम् ॥ ॥ २९ ॥ तावन्मृदंगपटहाः शंखभेर्यानकादयः ॥ निनेदुर्नटनर्तक्यो ननृतुर्गायका जगुः ॥ ३० ॥ एवं वृते भगवति मयेशे नृपयूथपाः ॥ न सेहिरे याज्ञसेनि स्पर्धंतो हृच्छयातुराः ॥ ३१ ॥ मां तावद्रथमारोप्य हयरत्नचतुष्टयम् ॥ शार्ङ्गमुद्यम्य सन्नद्धस्तस्थावाजौ चतुर्भुजः ॥ ३२ ॥ दारुकश्चोदयामास कांचनोपस्करं रथम् ॥ मिषतां भूभुजां राज्ञि मृगाणां मृगराडिव ॥ ३३ ॥

स्थितिमिति मागधादीनां क्रियाशक्तिरेव न तु लक्ष्याभिज्ञतेत्यर्थः ॥ २३ ॥ यत्तो यत्नवान् । असृजन्मुमोच । स बाणो मत्स्यं नाच्छिनत्परं केवलं पस्पर्श । ज्ञानवानप्यर्जुनो बलेनापूर्ण इत्यर्थः ॥ २४ ॥ २५ ॥ अभिजिति सर्वार्थसाधके मुहूर्ते ॥ २६ ॥ २७ ॥ भगवत्प्राप्तिहर्षनिर्भरेणात्मानमेवानुवर्णयंत्याह द्वाभ्याम् । तद्रंगमिति । तत्तदा कलौ कलस्वनौ नूपुरौ ययोस्ताभ्यां पद्भ्यां रंगं प्राविशम् । कनकेनोज्ज्वलां रत्नमालाम् । निवीय प्रावृत्य परिधाय च नीवीबंधेन च । कौशिकाग्र्ये उत्तमकौशेयवस्त्रे । सव्रीडो हासो यस्मिंस्तद्वदनं यस्याः सा । कबर्यां धृताः स्रजो यया सा ॥ २८ ॥ उरवः कुंतला यस्मिन् । कुंडलयोस्त्विषो ययोस्ते गंडस्थले यस्मिंस्तच्च तच्च । शिशिरः संतापहरो हासो येषु तैः कटाक्षमोक्षैरपांगमोक्षणविलासैः अनुरक्तं हृदयं यस्याः साऽहम् ॥ २९ ॥ ३० ॥ याज्ञसेनि हे द्रौपदि ईशे श्रीकृष्णे मया वृते सति स्पर्धंतः स्पर्धमानाः । नन्वेवं परमैश्वर्यं दृष्टवतां कुतः स्पर्धाऽवसरस्तत्राह । हृच्छयातुरा इति । हृच्छयेन कामेनातुरा विवशाः । कामविजृंभिता स्पर्धेति भावः ॥ ३१ ॥ हयरत्नानां चतुष्टयं यस्मिंस्तं रथम् । द्वाभ्यां मामालिंग्य द्वाभ्यां धनुर्बाणौ गृहीत्वा चतुर्भुजस्तस्थौ ॥ ३२ ॥ मृगाणां मिषतां मृगराडिव तदा हारिर्जगाम

भ्यासलभ्यमेवेति भावः ॥ २३ ॥ मत्स्यस्याभासं प्रतिबिम्बं पस्पृश इत्यार्षत्वात्तङ् । इत्यर्थ इति–छेदनस्य पूर्णबलसाध्यत्वेन छेदनज्ञाने सत्यपि तन्नास्तीति भावः ॥ २४ ॥ अथ सर्वराजाभिमाननिवृत्तेरनंतरम् ॥ २५ ॥ तस्मिन् धनुषि । तं मत्स्यम् । अभिजिति, तच्चोक्तम्–" मध्याह्ने तु यदा शंकोर्मूले छाया प्रजायते । सर्वार्थसाधनी चैकाभिजिदाख्या घटी स्मृता ॥ " इति ज्योतिःशास्त्रात् । मध्याह्नात्परतो घटिकैका यावत्तावदभिजिदित्यर्थः । विस्तरेण तृतीये स्कंधे चैतदस्तीति ॥ २६ ॥ २७ ॥ निर्भरोतिशयः । कलस्वनौ मधुरास्फुटशब्दौ । रंगं स्वयंवरस्थलम् । कबर्यां केशपाशरचनायाम् ॥ २८ ॥ २९ ॥ तावन्मालानिक्षेपसमये ॥ ३० ॥ ईशपदेनात्र न शंभुरग्रिमपद्ये चतुर्भुज इत्युक्तेः । अत्राऽऽशंकते–नन्विति । इति भाव इति–कामाकुलिताचित्तत्वाद्भगवदैश्वर्यविस्मृतिर्जाता । 'कामातुराणां त भयं न लज्जा ' इत्युक्तेः ॥ ३१ ॥३२॥ तदा रथे स्थयोरो

तेऽन्वसज्जंत राजन्या निषेद्धुं पथि केचन ॥ संयत्ता उद्धृतेष्वासा ग्रामसिंहा यथा हरिम्॥३४॥ते शार्ङ्गच्युतबाणौघैः कृत्तबाह्वंघ्रिकंधराः॥निपेतुः प्रधने केचिदेके संत्यज्य दुद्रुवुः ॥ ३५ ॥ ततः पुरीं यदुपतिरत्यलंकृतां रविच्छदध्वजपटचित्रतोरणाम् ॥ कुशस्थलीं दिवि भुवि चापि संस्तुतां समाविशत्तरणिरिव स्वकेतनम् ॥३६॥पिता मे पूजयामास सुहृत्संबंधिबांधवान् ॥ महार्हवासोलंकारैः शय्यासनपरिच्छदैः॥३७॥ दासीभिः सर्वसंपद्भिर्भटेभरथवाजिभिः ॥ आयुधानि महार्हाणि ददौ पूर्णस्य भक्तितः ॥ ३८ ॥ आत्मारामस्य तस्येमा वयं वै गृहदासिकाः ॥ सर्वसंगनिवृत्त्याऽद्धा तपसा च बभूविम ॥ ३९ ॥ महिष्य ऊचुः ॥ भौमं निहत्य सगणं युधि तेन रुद्धा ज्ञात्वाऽथ नः क्षितिजये जितराजकन्याः ॥ निर्मुच्य संसृतिविमोक्षमनुस्मरंतीः पादांबुजं परिणिनाय य आप्तकामः ॥४०॥ न वयं साध्वि साम्राज्यं स्वाराज्यं भौज्यमप्युत ॥ वैराज्यं पारमेष्ठ्यं च आनंत्यं वा हरेः पदम् ॥४१॥

मेति शेषो ज्ञातव्यः । दारुकस्यैव वा मृगराजोपमा ॥ ३३ ॥ अन्वसज्जंत पृष्ठतः सक्ता बभूवुः । निषेद्धुं प्रतिबंधं कर्तुं केचन पुरतो गत्वा पथि संयत्ता बभूवुरित्यर्थः । उद्धृतेष्वासा ऊर्ध्वकृतचापाः । ग्रामसिंहाः श्वानो हरिं सिंहं यथेति ॥ ३४ ॥ ३५ ॥ रविं छादयंति ते रविच्छदा ध्वजेषु पटा यस्यां चित्राणि तोरणानि यस्यां सा च सा च । तां कुशस्थलीं पुरीं यदुपतिः समाविशत् । स्वकेतनं मंडलमस्ताचलं वा ॥३६ ॥ महार्हवासःप्रभृतिभिः सुहृदादीन्पूजयामास॥३७॥दास्यादिभिः सहायुधानि पूर्णायापि ददौ ॥ ३८ ॥ इमा अष्टौ वयं सर्वसंगनिवृत्त्या तपसा स्वधर्मेणाद्धा साक्षात्तस्य गृहदासिका बभूविम ॥३९॥ क्षितिजये दिग्विजये जितानां राज्ञां कन्या नोऽस्मांस्तेन रुद्धा ज्ञात्वा ततो निर्मुच्य संसृतेर्विमोक्षो यस्मात्तत्पादांबुजमनुस्मरतीर्नः परिणिनायोदवहत् । आप्तकामोऽपि यः ॥ ४० ॥ न वयमिति । साम्राज्यादि न कामयामहे किं तु

पणकाले । अध्याहारे गौरवं मत्वाह–दारुकस्येति ॥ ३३ ॥ ये तत्रागतास्ते । इत्यर्थ इति–मार्गे रुरुधुरिति भावः ॥ ३४ ॥ प्रधने युद्धे ॥ ३५ ॥ ततो मार्गस्थराजन्यजयोत्तरम् । तरणिः सूर्यः । मंडलमत्र सूर्यलोकः । स्वलोकं गतस्य प्रतिदिनागमनं यद्यपीशत्वाद्भगवतो रवेर्न संभवेत्तथाप्यज्ञजनबुद्ध्यारोहार्थमाह–अस्ताचलं वेति ॥ ३६ ॥ पिता बृहत्सेनः ॥३७॥ पूर्णायापि पूजायां स्वये दीपदानवत्तत्कर्मांगत्वाद्ददाविति भावः ॥ ३८ ॥ तस्य श्रीकृष्णस्य दासीत्वञ्च तपआदिनाऽस्माभिर्लब्धमिति भावः ॥ ३९ ॥ महिष्यः शतोत्तरषोडशसहस्रसंख्याकाः । अथ भौममरणानंतरम् । यः श्रुत्या आप्तकामपदेनोक्तः परमात्मा सोप्यस्मत्पूर्वपुण्यसफलीकरणार्थं पारिणीतवान्न कामुकत्वेनेति भावः ॥४०॥ वयमपि तत्पादरजोभजनमंतरेण नान्यत्पदमाशास्मह इत्याहुः–न वयमिति । द्वयोरन्वयः । एतस्य श्रीकृष्णस्य । अत्राऽऽशंकते–नन्विति । तदुभयभोगभाक्त्वं सार्वभौमेंद्रभोगसेवित्वरूपम् । इत्यर्थ इति–अणिमादिसिद्धिमत एव विविधं राजमानत्वादिति भावः । तत्सालोक्यादि तत्समानलोकवासादि । आदिना सामीप्यादिग्रहः । लोकाद्वेदो गरीयानिति न्यायमाश्रित्याह–यद्वेति ॥ ४१ ॥

कामयामह एतस्य श्रीमत्पादरजः श्रियः ॥ कुचकुंकुमगंधाढ्यं मूर्ध्ना वोढुं गदाभृतः ॥ ४२ ॥ व्रजस्त्रियो यद्वांछंति पुलिंद्यस्तृणवीरुधः ॥ गावश्चारयतो गोपाः पादस्पर्शं महात्मनः ॥ ४३ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधोत्तरार्धे त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ ॥ छ ॥ श्रीशुक उवाच ॥ श्रुत्वा पृथा सबलपुत्र्यथ याज्ञसेनी माधव्यथ क्षितिपपत्न्य उत स्वगोप्यः ॥ कृष्णेऽखिलात्मनि हरौ प्रणयानुबंधं सर्वा विसिस्म्युरलमश्रुकलाकुलाक्ष्यः ॥ १ ॥ इति संभाष्यमाणासु स्त्रीभिः स्त्रीषु नृभिर्नृषु ॥ आययुर्मुनयस्तत्र कृष्णरामदिदृक्षया ॥ २ ॥ द्वैपायनो नारदश्च च्यवनो देवलोऽसितः ॥ विश्वामित्रः शतानंदो भरद्वाजोऽथ गौतमः ॥ ३ ॥ रामः सशिष्यो भगवान्वसिष्ठो गालवो भृगुः ॥ पुलस्त्यः कश्यपोऽत्रिश्च मार्कंडेयो बृहस्पतिः ॥ ४ ॥

एतस्य श्रीमत्पादरजो मूर्ध्ना वोढुं कामयामहे इति । ननु तस्य गृहिण्यो यूयं सर्वसंपद्भाजः किमेवं कामयध्वमत आहुः । हे साध्वि । साम्राज्यं सार्वभौमपदम् । स्वाराज्यमैंद्रं पदम् । भौज्यं तदुभयभोगभाक्त्वम् । विविधं राजत इति विराट् तस्य भावो वैराज्यमणिमादिसिद्धिभाक्त्वमित्यर्थः । पारमेष्ठ्यं ब्रह्मपदम् । आनंत्यं मोक्षम् । हरेः पदं तत्सालोक्यादि न तु कामयामह इति । यद्वा बह्वृचब्राह्मणोक्तक्रमेण प्रागादिदिक्चतुष्टयाधिपत्यानि साम्राज्यभौज्यस्वाराज्यवैराज्यानि व्याख्येयानि ॥ ४१ ॥ तर्त्किं तत्पादरज एव काम्यतेऽत आहुः । श्रियः कुचकुंकुमगंधाढ्यमिति । ब्रह्मादिसेव्यया लक्ष्म्याऽपि सेवितत्वादिति भावः ॥ ४२ ॥ ननु तर्ह्येतिदुर्लभत्वात्किं तद्वांछयाऽत आह । व्रजस्त्रिय इति । यद्यथा गावो गाः महात्मनोऽपि गाश्चारयतः पादस्पर्शं च गोपा यथा वांछंति तद्वत् । तत्पराणां सुलभ इति भावः ॥ ४३ ॥ इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्री० टीकायां त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ चतुर्भिरधिकाशीतितमे मुनिसमागमे ॥ वसुदेवमखोत्साहबंधुप्रस्थापनादिकम् ॥ १ ॥ सुबलपुत्री गांधारी । माधवी सुभद्रा । क्षिति

किं कुतः । इति भाव इति—या सर्वसेव्या रमा तया तत् सेव्यतेऽतोऽस्माकमपि तत्रैव रतिरित्याहुः—श्रिय इति ॥ ४२ ॥ अत्राशंक्य समाधत्ते—नन्विति । इति भाव इति—अन्यैः प्रबलैरपि यन्नाप्यते तत्तद्भक्तैर्दुर्बलैरपि प्राप्यते, भक्तवात्सल्येन हरिर्निजजनानामसुलभमपि सुलभं करोतीति तात्पर्यम् । पादैः स्पृश्यते इति पादस्पर्शं पदरज एवेत्यर्थः ॥ ४३ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धे त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ वसुदेवमखोत्साहोत्तरं बंधूनां नंदादीनां प्रस्थापनादिकम् । आदिना स्वप्रस्थानादिग्रहः ( १ ) । हरेर्ज्ञानिप्रियत्वं यज्ञस्य तदेकविषयत्वं तत्प्रीतेर्मुक्तिसाधनत्वं पुत्रादिस्नेहस्य संसारमूलत्वं चात्राध्याये कथयति । तत्र व्यासादिमुनीनामागमनं वक्तुं पृथादिस्त्रीणां संतोषोद्रेकमाह—श्रुत्वेति । स्वशब्देन गोपीषु हरेस्स्नेहोद्रेकं वक्ति मुनिः । प्रणयानुबंधं कृष्णभार्याणामिति शेषः ॥ १ ॥ इत्युक्तरीत्या । तत्र रामकृष्णसमीपे ॥ २ ॥ अथ चार्थे ॥ ३ ॥ ४ ॥

द्वितस्त्रितश्चैकतश्च ब्रह्मपुत्रस्तथांगिराः ॥ अगस्त्यो याज्ञवल्क्यश्च वामदेवादयोऽपरे ॥ ५ ॥ तान्दृष्ट्वा सहसोत्थाय प्रागासीना नृपादयः ॥ पांडवाः कृष्णरामौ च प्रणेमुर्विश्ववंदितान् ॥ ६ ॥ तानानर्चुर्यथा सर्वे सहरामोऽच्युतोऽर्चयत् ॥ स्वागतासनपाद्यार्घ्यमाल्यधूपानुलेपनैः ॥ ७ ॥ उवाच सुखमासीनान्भगवान्धर्मगुप्ततनुः ॥ सदसस्तस्य महतो यतवाचोऽनुशृण्वतः ॥८॥श्रीभगवानुवाच ॥ अहो वयं जन्मभृतो लब्धं कात्स्न्र्येन तत्फलम् ॥ देवानामपि दुष्प्रापं यद्योगेश्वरदर्शनम् ॥ ९ ॥ किं स्वल्पतपसां नृणामर्चायां देवचक्षुषाम् ॥ दर्शनस्पर्शनप्रश्नप्रह्वपादार्चनादिकम् ॥ १० ॥ न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ॥ ते पुनंत्युरुकालेन दर्शनादेव साधवः ॥११॥ नाग्निर्न सूर्यो न च चंद्रतारका न भूर्जलं खं श्वसनोऽथ वाङ्मनः ॥ उपासिता भेदकृतो हरंत्यघं विपश्चितो घ्नंति मुहूर्तसेवया ॥ १२ ॥

पानां राज्ञां पत्न्यः । स्वगोप्यः कृष्णभक्ता गोप्यः विसिस्म्युर्विस्मयं चक्रुः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ आनर्चुरर्चितवंतः ॥ ७ ॥ धर्मगोप्त्री तनुर्यस्य स धर्मगुप्ततनुः । यता नियता वाग्यस्य तस्य सदसः ॥ ८ ॥ जन्मभृतः सफलजन्मानः । तत्फलं जन्मफलम् । किं तत् । यद्योगेश्वरदर्शनम् ॥ ९ ॥ किं च युष्माकं दर्शनमेव तावद्देवानामपि दुष्प्रापमस्माकं तु स्पर्शनादिकमपि कथं नु घटितमिति विस्मयेनाह । किमिति । स्वल्पतपसां तीर्थस्नानादिमात्रे तपो बुद्धिर्येषां तथाऽर्चायां प्रतिमायां देव इति चक्षुर्दृष्टिर्येषां तेषां योगेश्वरदर्शनादिकमिदं किमसंभावितमित्यर्थः ॥ १० ॥ एतत्प्रपंचयति न ह्यम्मयानीति त्रिभिः ॥ ११ ॥ वाङ्मनसयोरप्युपासना

द्वितत्रितैकताः सहोदराः । “ त्रितः कूपेऽवहितो देवान्हवत ऊतये ” इति श्रुतेः । तथा चार्थे । अपरे उक्तान्ये धौम्यकृपादयः ॥ ५ ॥ तान् मुनीन् । प्रागुत्थाय ॥ ६ ॥ यथा यथाविधि । अर्चयत् । अडागमाभाव आर्षः ॥ ७ ॥ तस्य सदसः विप्रनृपसभायाः ॥ ८ ॥ योगेश्वराणां भक्तिज्ञानयोगाद्युपदेष्टॄणां विप्राणां दर्शनम् ॥ ९ ॥ अतिदुर्लभलाभमाह–किंस्वेति । इत्यर्थ इति–किमत्रासंभावनायां व्याख्येयम् । ‘अर्चा पूजाप्रतिमयोः’ इति हलायुधः ॥ १० ॥ एतदर्चादिषु देवादिबुद्धित्वम् । नहि बहिर्मुखानां तीर्थादिना जन्मसाफल्यं किंतु सज्जनदर्शनादेवेत्याह–नहीति । तत्रतत्र सन्निहितास्तीर्थदेवादयः उरुकालेन कालक्षेपं कृत्वैव न तु तदानीमेव । तत्र किं कारणमित्यस्य देहलीदीपकन्यायेनोरुकालेनेत्येवोत्तरम् । तथाहि–कलनं कालः ज्ञानम्, ‘कल–गतौ’ गत्यर्थकानां ज्ञानार्थतापीति वामनादयः । उरुगुरुशब्दौ पर्यायौ । उरुणा गुरुणा दत्तः काल उरुकालः मध्यमपदलोपी समासस्तेन गुरूपदिष्टज्ञानेन तत्तत्स्वरूपं तत्तन्मन्त्रं तत्तदंगाचरणादिकं ज्ञात्वा समुपास्य तत्तद्दर्शनं प्राप्य तत्तद्देवादिप्रसादेनावक्षये पावित्र्यमतो गुरूपदेशः कारणमित्यर्थः । प्रकृते किमागतमिति चेदाह–दर्शनादेवेति । साधवः शास्त्रानुयायिनः शिष्टा इति यावत्, स्वदर्शनादन्यथाज्ञानमपगमयंति । एवशब्दः गुरूपदेशं व्यवच्छिनत्ति ॥ ११ ॥ तन्मूलमवमूलम् । अत्राज्ञानाहरणे देवानां भेदकर्तृत्वं भेदज्ञान

यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः ॥ यत्तीर्थबुद्धिः सलिले न कर्हिचिज्जनेष्व भिज्ञेषु स एव गोखरः ॥ १३ ॥ श्रीशुक उवाच ॥ निशम्येत्थं भगवतः कृष्णस्याकुंठमेधसः ॥ वचो दुरन्वयं विप्रास्तूष्णीमासन्भ्रमद्धियः ॥ १४ ॥ चिरं विमृश्य मुनय ईश्वरस्ये शितव्यताम् ॥ जनसंग्रह इत्यूचुः स्मयंतस्तं जगद्गुरुम् ॥ १५ ॥ यन्मायया तत्त्वविदुत्तमा वयं विमोहिता विश्वसृजाम धीश्वराः ॥ यदीशितव्यायति गूढ ईहया अहो विचित्रं भगवद्विचेष्टितम् ॥ १६ ॥

विषयत्वम् । " यो वाचं ब्रह्मेत्युपास्ते मनो ब्रह्मेत्युपास्ते " इति श्रुतेः । अयं तन्मूलमज्ञानं न हरंति । अत्र हेतुः । भेदकृतो भेदकर्तारः । यद्वा भेदबुद्धिं कुर्वतः पुंसः । विपश्चितो निरस्तभेदाः । ते तु मुहूर्तमात्रसेवयैवाघं घ्नंतीति ॥ १२ ॥ अतः साधूनविहायान्यत्रात्मादिबुद्ध्या सज्जमानोऽतिमंद इत्याह । यस्येति । आत्मबुद्धिरहमिति बुद्धिः । त्रयो धातवो वातपित्तश्लेष्माणः प्रकृतयो यस्य तस्मिन्कुणपे शरीरे स्त्रीपुत्रादिषु स्वधीः स्वीया इति बुद्धिः । भौमे भूविकारे इज्यधीर्देवताबुद्धिः । यत्पस्य तीर्थबुद्धिस्तीर्थ मिति बुद्धिः । अभिज्ञेषु तत्त्ववित्सु यस्य ता बुद्धयो न संति स एव गोष्वपि खरो दारुणोऽत्यविवेकी । यद्वा गवां तृणादिभारवाहः खरो गर्दभ इति ॥ १३ ॥ दुरन्वयम ननुरूपम् । भ्रमंत्यनवस्थिता बुद्धिर्येषां ते ॥ १४ ॥ ईशितव्यतामनीश्वरतां कर्माधिकारितां जनसंग्रहमात्रमेतदित्यूचुः । स्मयंतो हसंतः ॥ १५ ॥ अनन्वयं विवृण्वंत आहुर्द्वाभ्याम् । यन्माययेति । तत्त्ववित्सूत्तमा अपि वयम् । काऽसौ माया यया विमोहिता इति तामाहुः । यदिति । यत्स्मादीहया नरचेष्टितेन गूढः सन्नीशितव्याय

यत्वेनात्मस्वरूपज्ञानाभावात् । तदुक्तम्—"नैते स्वरूपं विदुरात्मनस्ते ह्यजादयो नात्मतया गृहीताः" इत्युक्तेः, 'ब्रह्मादयस्तनुभृतो मिथुरर्द्यमानाः' इत्याद्युक्तेश्च ब्रह्मादीनां शुद्धसात्विकत्वेन ज्ञानदाने समर्थत्वेन तेषामज्ञानि त्यकथनमनुचितं मत्वाह—यद्वेति । ते कस्य पापं न हरंतीति चेदाह—भेदबुद्धिं कुर्वत इति । ते ज्ञानिनस्तु ज्ञानिसंगस्य सर्वपुण्यावाप्तिहेतुत्वात् । 'स्नातं तेन समस्ततीर्थसलिले' इत्याद्युक्तेः ॥ १२ ॥ यतः साधव एव सर्वोत्तमा अतो हेतोः । अन्यत्र देहादिषु । प्रकृतयो मूलकारणं स्वभावा वा । कुणपे शववदचेतने " पूतिगंधौ शवे चैव पुद्गले कुणपः स्मृतः " इति मेदिन्यादयः । ता बुद्धय आत्मादिबुद्धयः । गोषु बलीवर्देषु खरः 'खरस्तीक्ष्णे च दारुणे' इति धरणिः । बलीवर्दास्तु स्वभावत एव दारुणाः संतीति खरपदकृतविशेषस्य तत्राभावादाह—यद्वेति । पशूनां पशुरित्यर्थः । यद्वा—गवि भूमौ खरो रासभवद्भारवाहकेवेत्यर्थः ॥ १३ ॥ अकुंठमेधसोऽप्रतिहतज्ञानस्य । अननुरूपं दुर्ज्ञेयाभिप्रायम् ॥ १४ ॥ तं श्रीकृष्णम् । "ईशितव्यस्त्वनीशत्वे दास्ये च परिकीर्तितः " इति । जगद्गुरुं जगच्छास्तारम् ॥ १५ ॥ तां मायाम् । अत्राऽऽशंकते—नन्विति ।

अनीह एतद्बहुधैक आत्मना सृजत्यवत्यात्ति न बध्यते यथा ॥ भौमैर्हि भूमिर्बहुनामरूपिणी अहो विभूम्नश्चरितं विडंबनम् ॥ १७ ॥ अथापि काले स्वजनाभिगुप्तये बिभर्षि सत्त्वं खलनिग्रहाय च ॥ स्वलीलया वेदपथं सनातनं वर्णाश्रमात्मा पुरुषः परो भवान् ॥ १८ ॥ ब्रह्म ते हृदयं शुक्लं तपःस्वाध्यायसंयमैः ॥ यत्रोपलब्धं सद्व्यक्तमव्यक्तं च ततः परम् ॥ १९ ॥ तस्माद्ब्रह्मकुलं ब्रह्मन् शास्त्रयोनेस्त्वमात्मनः ॥ सभाजयसि सद्धाम तद्ब्रह्मण्याग्रणीर्भवान् ॥ २० ॥ अद्य नो जन्मसाफल्यं विद्यायास्तपसो दृशः ॥ त्वया संगम्य सद्गत्या यदंतः श्रेयसां परः ॥ २१ ॥

त्यनीश्वरवदाचरति भवान् । नन्वहमीश्वरश्चेत्किमित्येवमाचरेयं तत्राहुः । अहो इति । भगवतस्तव विचेष्टितं विचित्रमतर्क्यम् ॥ १६ ॥ भगवत्त्वमेवाहुः । अनीह इति । अनीहोऽक्रिय एव । आत्मना स्वरूपमात्रेण । बहुधेत्यत्र दृष्टांतः । यथा भौमैरिति । भौमैर्घटादिविकारैरुपलक्षिता । "वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुतेः । ननु कथमहं जगत्सृष्ट्यादिकर्ता वसुदेवपुत्रत्वादिति तत्राहुः । अहो इति । विभम्नः परिपूर्णस्य तवेदं जन्मादिचरितं विडंबनमनुकरणमात्रं न तु तत्त्वमिति ॥ १७ ॥ जनसंग्रहमाहुः अथापीति त्रिभिः । सत्त्वं शुद्धसत्त्वात्मकं रूपं बिभर्षि । स्वलीलया आचारेण वेदपथं च बिभर्षि ॥ १८ ॥ अत एव ब्राह्मणेषु बहुमानमपि करोषीति सहेतुकमाहुः । ब्रह्मेति । ब्रह्म वेदाख्यं शुक्लं शुद्धं ते हृदयमंतरंगं रूपम् । कुत इत्यत आहुः । यत्रेति । यत्र ब्रह्मणि व्यक्तं कार्यमव्यक्तं कारणं ततः परं सत्सन्मात्रं ब्रह्म च तपआदिभिरुपलब्धं तद्ब्रह्म ॥ १९ ॥ तस्माद्वेदस्य हृदयत्वाद्वेदप्रवर्तकं ब्राह्मणकुलं शास्त्रयोनेर्वेदप्रमाणकस्य तव सद्धाम श्रेष्ठमुपलब्धिस्थानं सभाजयसि संपूजयसि तत्तस्मादेव कारणात्त्वं ब्रह्मण्यानामग्रणीर्मुख्यस्तत्प्रवर्तकः सन्कर्माचरसीत्यर्थः ॥ २० ॥ तस्मादीश्वरस्य तवेदं जनसंग्रहमात्रं वयं तु तव संगत्या कृतार्था इत्याहुः अद्येति षड्भिः । सतां गत्या त्वया संगम्य संग

तत्राक्षेपे । विचेष्टितं लीला १६ ॥ सृष्ट्यादिकर्तृत्वमाक्षिपति–नन्विति ॥ १७ ॥ काले सज्जनोपप्लवसमये । वर्णाश्रमाणामात्मा नियंता तत्तद्धर्मप्रवर्तकः ॥ १८ ॥ अंतरंगरूपम् 'वेदो नारायणः साक्षात्' इति स्मृतेः । अंतरंगरूपत्वे हेतुमाशंकते–कुत इति । ब्रह्मणि वेदे । ततः कार्यकारणात् । ब्रह्म परमात्मा । ब्राह्मणैरिति शेषः । उपलब्धं साक्षाद्दृष्टम् ॥ १९ ॥ उपलब्धिस्थानं ब्राह्मणकुलम् । ब्राह्मणकुले एव त्वं लभ्यसेऽन्येषामपि तत्रोपलब्धिर्ब्राह्मणद्वारैव तस्यैवोपदेशाधिकारात् । "ब्राह्मणस्यैवाधिकारो धर्ममात्रोपदेशने" इति संहितोक्तेः । तत्तस्माद्ब्राह्मणकुलसभाजनादेव । तत्प्रवर्तको वेदमार्गप्रवर्तकः । इत्यर्थ इति–"यदि ह्यहं न वर्तेयं जातु कर्मण्यतंद्रितः । मम वर्त्मानुवर्तंते मनुष्याः पार्थ सर्वशः ॥" इति श्रीमुखोक्तेरिति भावः ॥ २० ॥ यतस्त्वं वेदप्रवर्तकस्तस्मादित्यर्थः । गत्या प्राप्त्येन । न केवलं जन्मन एव साफल्यं किंतु विद्यादेरपीत्याह–विद्याया इति । "सा विद्या तन्मतिर्यया । तत्तपो यद्धरेः प्रियम् । तदेव यत्पश्यति तद्धि चक्षुः" इत्याद्युक्तेः । साफल्यमिति समासांतर्गतमप्यन्यत्रान्वेति "भीष्मद्रोणप्रमुखतः सर्वेषाञ्च महीक्षिताम्" इतिवत् । श्रेयसां

नमस्तस्मै भगवते कृष्णायाकुंठमेधसे ॥ स्वयोगमायया च्छन्नमहिम्ने परमात्मने ॥ २२ ॥ न यं विदंत्यमी भूपा एकारामाश्च वृष्णयः ॥ मायाजवनिकाच्छन्नमात्मानं कालमीश्वरम् ॥ २३ ॥ यथा शयानः पुरुष आत्मानं गुणतत्त्वदृक् ॥ नाममात्रेंद्रियाभातं न वेद रहितं परम् ॥ २४ ॥ एवं त्वा नाममात्रेषु विषयेष्विंद्रियेहया ॥ मायया विभ्रमच्चित्तो न वेद स्मृत्युपप्लवात् ॥ २५ ॥ तस्याद्य ते ददृशिमांघ्रिमघौघमर्षतीर्थास्पदं हृदि कृतं सुविपक्वयोगैः ॥ उत्सिक्तभक्त्युपहताशयजीवकोशा आपुर्भवद्गतिमथोऽनुगृहाण भक्तान् ॥ २६ ॥ श्रीशुक उवाच ॥ इत्यनुज्ञाप्य दाशार्हं धृतराष्ट्रं युधिष्ठिरम् ॥ राजर्षे स्वाश्रमान्गंतुं मुनयो दधिरे मनः ॥ २७ ॥ तद्वीक्ष्य तानुपव्रज्य वसुदेवो महायशाः ॥ प्रणम्य चोपसंगृह्य बभाषेदं सुयंत्रितः ॥२८॥ वसुदेव उवाच ॥ नमो वः सर्वदेवेभ्य ऋषयः श्रोतुमर्हथ ॥ कर्मणा कर्मनिर्हारो यथा स्यान्नस्तदुच्यताम् ॥ २९ ॥

प्राप्य । यद्यस्मात्त्वं श्रेयसां परोऽवधिः ॥२१॥२२॥ एकस्मिन्नेव स्थाने आरामो येषां तेऽपि । कालं सृष्ट्यादिकारणम् । ईश्वरं नियंतारम् ॥ २३ ॥ एतत्स दृष्टांतमाहुः । यथेति । शयानः स्वप्नान्पश्यन् । गुणतत्त्वदृक् स्वप्नविषयेषु तत्त्वदृष्टिः नाममात्रमिंद्रियेण मनसा आभातं सिंहव्याघ्रादिरूपमात्मानं वेद तद्रहितं देवदत्तादिरूपमात्मानं न वेद यथा ॥ २४ ॥ एवं त्वा त्वां नाममात्रेषु स्वप्नादितुल्येषु विषयेष्विंद्रियैर्या ईहा प्रवृत्तिः सैव माया तया विभ्रमच्चित्तो न वेद । स्मृतेर्विवेकस्योपप्लवान्नाशात् ॥ २५ ॥ अघौघस्य मर्षं नाशं करोति यद्गंगाख्यं तीर्थं तस्यास्पदमाश्रयं तेंघ्रिं सुविपक्वयोगैरपि हृदि कृतं केवलं न तु दृष्टं तस्य तेंघ्रिं ददृशिम दृष्टवंतो वयं बहुभिः पुण्यैरतोऽस्मान् भक्ताननुगृहाण । भक्तान् कृत्वाऽनुग्रहं कुर्वित्यर्थः । ननु किं भक्त्या यथापूर्वं तप एव तप्यतामिति नेत्याहुः । उत्सिक्ता उद्रिक्ता या भक्तिस्तयोपहत आशयलक्षणो जीवकोशो येषां त एव पूर्वे भवद्गतिमापुर्नान्य इति ॥ २६ ॥ २७ ॥ उपसंगृह्य चरणौ पाणिभ्यां धृत्वा । बभाषे इदमिति संधिरार्षः ॥ २८ ॥ सर्वे देवा येषु तेभ्यः ।

कल्याणानाम् "श्रेयो मुक्तौ शुभे धर्मेऽतिप्रशस्ते च वाच्यवत्" इति मेदिनी । परोऽवधिः । "श्रेयसामिह सर्वेषामात्मा ह्यवधिरर्थतः " इत्युक्तेः ॥ २१ ॥ महिमा स्वरूपम् ॥ २२ ॥ आराम आवासः " आरामो वासनिलये क्रीडायाश्च वने तथा " इति कोशात् । यं कृष्णम् ॥ २३ ॥ एतत् भगवत्स्वरूपाज्ञानम् । तद्रहितं सिंहव्याघ्रादिभ्योऽन्यम् ॥ २४ ॥ २९ ॥ यं मायया न वेद तस्येत्यर्थः । यतो वयं त्वच्चरणदर्शनाद्धृतपापा अथो अतोऽर्थे अतो हेतोः । इत्यर्थ इति–" यदा यस्यानुगृह्णाति भगवानात्मनां गतिः । भक्तियोगं स लभतेऽनेकजन्मार्जितैः शुभैः ॥ " इत्यादिपुराणाद्भक्तिदानमेव भगवतः परमानुग्रह इति भावः । अत्राऽऽशंकते–नान्विति । आशयलक्षणो जीवकोशोऽहंकारः । "जरयत्याशु या कोशं निगीर्णमनलो यथा " इति कपिलोक्तेः । " विबुध्य भक्त्यैव कथोपनीतया प्रपेदिरेंजोऽच्युत ते गतिं पराम् " इति ब्रह्मोक्तेश्च ॥ २६ ॥ इतीत्थम् ॥ २७ ॥ तत् तेषां गमनम् । तान् मुनीन् ॥ २८ ॥ यावतीर्यावत्यः, तास्तावत्यः । इति श्रुतिपदार्थः । इयमेव श्रुतिर्विप्राणां तप्तमुद्राधारणाऽभावं द्योतयति । " श्रुतौ या वेदावित्त्वोक्तिः सा गायत्री वै सर्वमिदम् " इति श्रुतेर्गायत्र्याः सर्ववेदमूलत्वेन तन्मात्रविद्यपि वर्तत एव एतदभिप्रेत्यैव भगीरथं प्रति बृहन्नारदीये धर्मराजेनोक्तम्– " ब्राह्मणस्य तनूर्ज्ञेया सर्वदेवसमान्विता । सा चेत्संतापिता राजन्किं वक्ष्यामि तदेनसः ॥ शंखचक्राद्यंकनं च गीतनृत्यादिकं तथा । एकजातेरयं धर्मो न जातु स्याद्द्विजन्मनः ॥" किं च–"शंखचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा । स शूद्रवद्बहिः कार्यः सर्वस्माद्द्विजकर्मणः ॥" इत्याश्वलाय

नारद उवाच ॥ नातिचित्रमिदं विप्रा वसुदेवो बुभुत्सया ॥ कृष्णं मत्वाऽर्भकं यन्नः पृच्छति श्रेय आत्मनः ॥ ३० ॥ संनिकर्षोऽत्र मर्त्यानामनादरणकारणम् ॥ गांगं हित्वा यथाऽन्यांभस्तत्रत्यो याति शुद्धये ॥ ३१ ॥ यस्यानुभूतिः कालेन लयोत्पत्त्यादिनाऽस्य वै ॥ स्वतोन्यस्माच्च गुणतो न कुतश्चन रिष्यति ॥ ३२ ॥ तं क्लेशकर्मपरिपाकगुणप्रवाहैरव्याहतानुभवमीश्वरमद्वितीयम् ॥ प्राणादिभिः स्वविभवैरुपगूढमन्यो मन्येत सूर्यमिव मेघहिमोपरागैः ॥ ३३ ॥ अथोचुर्मुनयो राजन्नाभाष्यानकदुंदुभिम् ॥ सर्वेषां शृण्वतां राज्ञां तथैवाच्युतरामयोः ॥ ३४ ॥ कर्मणा कर्मनिर्हार एष साधु निरूपितः ॥ यच्छ्रद्धया यजेद्विष्णुं सर्वयज्ञेश्वरं मखैः ॥ ३५ ॥

“ यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसंति” इति श्रुतेः । येन कर्मणा यथा कृतेन वा कर्मणा निर्हारो निरासो भवति तदुच्यताम् ॥ २९ ॥ श्रीकृष्णं हित्वाऽस्मान्पृच्छतीति विस्मितान्प्रत्याह । नातीति । बुभुत्सया बोद्धुमिच्छया ॥ ३० ॥ तत्रत्यो गंगातीरवासी ॥ ३१ ॥ श्रीकृष्णेऽर्भकत्वमानोऽविद्याविजृंभित इत्याह यस्येति द्वाभ्याम् । अनुभूतिर्ज्ञानं कुतश्चिदपि न रिष्यति न नश्यति । तदेवाह कालेन कर्कटिकाफलवत् । अस्य विश्वस्य लयोत्पत्त्यादिनाऽपि । स्वतश्च विद्युदादिवत् । अन्यस्माच्च मुद्गरादेर्घटादिवत् । गुणतो रूपाद्यंतरोत्पत्तेः पूर्वरूपादिना देहादिवत् ॥ ३२ ॥ तमेव कुतश्चिदप्यव्याहतानुभवमत एवेश्वरम् । किं च अद्वितीयं कृष्णमन्यः प्राकृत उपगूढमाच्छन्नं मनुष्यं मन्येत । कैः क्लेशकर्मादिभिः । तत्र क्लेशरागादयश्च तत्पूर्वकाणि कर्माणि च तत्परिपाके सुखदुःखे च सत्त्वादीनां गुणानां पुनः प्रवाहश्च तैः

नेनाप्युक्तम् । श्रुतौ ब्राह्मणपदं द्विजातिपरमेव बृहन्नारदीयादिवाक्यस्य तदुपबृंहणत्वात्, तद्वृत्तिविधायकवाक्यानि द्विजेतरपराण्येव वैष्णवाभासैर्विप्रपरत्वबोधकानि वाक्यानि कल्पयित्वा पुराणेष्वाधुनिकैर्निक्षिप्तानि । याः श्रुतयस्तत्र प्रमाणत्वेन न्यस्तास्ता वेदभाष्यकर्तृभिरन्यपरतया व्याख्याताः । स्मृतयश्च हारीताद्यास्तेषां प्रसिद्धस्मृतिभ्यो विरुद्धत्वात्कल्पिता एव । यदि प्राप्तौ सत्यां निषेध इति न्यायमाश्रित्य ब्राह्मणं प्रति प्राप्तमेवेति निषिध्यते तत्रोत्तरं नहि ब्राह्मणं प्रकृत्य कुत्रापि सुरापानं विधिर्निषेधस्तु सर्वत्रैवैवमत्राप्यप्राप्तनिषेधोयम् । किंच–तांत्रिकैः प्रसिद्धवर्णाश्रमेभ्य इतरेपि ब्राह्मणादिवर्णा ब्रह्मचर्याद्याश्रमाश्च स्वीकृतास्तद्विषयमेव वैताद्विधानं, स्पष्टं चैतत्सूतसंहितायाम् । वस्तुतस्तु तांत्रिकोयं विधिस्तत्र वैदिकानां नाधिकारस्तदुक्तम्–“ विष्ण्वागमादितंत्रेषु दीक्षितानां विधीयते । शंखचक्रगदापद्मैरंकनं नान्यदेहिनाम् ॥” किंच– “ श्रुतिपथगलितानां मानुषाणां तु तंत्रं गुरुगुरुरखिलेशः सर्ववित्प्राह शंभुः । श्रुतिपथनिरतानामस्ति नैवात्र किंचिद्धितकरमिह सर्वं पुष्कलं सत्यमुक्तम् ॥” इत्यलं प्रसक्तानुप्रसक्तेन । यद्वा–सर्वस्मिन्देशे काले शास्त्रे इतिहासे पुराणे वेदे आगमे च देवो देवनं प्रकाशनं येषां ते तेभ्यस्तथा । सर्वलोकपूज्येभ्य इत्यर्थः । निरासो मूलच्छेदः । तत् तथा ॥ २९ ॥ यद्वसुदेवो नः पृच्छति तन्नातिचित्रम् ॥ ३० ॥ अन्यांभस्तडागादिजलम् ॥ ३१ ॥ अर्भकत्वमानो बालत्वाभिमानः । तदेव ज्ञानानशनमेव । रिष्यति ‘ रिष–हिंसायाम् ’ दिवादिर्लट् ॥ ३२ ॥ तं कृष्णम् । अत एवाहतज्ञानत्वादेव । सर्वथा विद्यमानैश्वर्योऽप्यज्ञानामनीश एव प्रतीयते इत्याह–किंचेति । तत्र तेषु क्लेशादिषु । तत्पूर्वकाणि रागादिपूर्वकाणि । तत्परिपाके कर्मफले । पुनःपुनः प्रवाहो मुहुर्मुहुः सृष्ट्यादिरूपो वा शांतघोरविमूढत्वादिस्वभाववशाच्छुक्लादिकर्मकरणाविच्छेदः। अत्र कार्येणकारणावृतौ अभ्रतुषारराहवो हि रविप्रकाश्यत्वेन रविकार्याण्येव “तद्धेतुत्वात्तत्प्रसिद्धेर्दृग्रूपाभ्यां यथा रवेः” इत्याद्युक्तेः । प्रकाश्यप्रकाशकयोरपि कार्यकारणभावोऽज्ञानप्रपंचादिषु दृश्यत एवेति॥३३॥ अथ नारदवाक्यानंतरम् ॥३४॥यद्यजेदे॰

चित्तस्योपशमोऽयं वै कविभिः शास्त्रचक्षुषा ॥ दर्शितः सुगमो योगो धर्मश्चात्ममुदावहः ॥ ३६ ॥ अयं स्वस्त्ययनः पंथा द्विजातेर्गृहमेधिनः ॥ यच्छ्रद्धयाऽऽप्तवित्तेन शुक्लेनेज्येत पूरुषः ॥ ३७ ॥ वित्तैषणां यज्ञदानैर्गृहैर्दारसुतैषणाम् ॥ आत्मलोकैषणां देव कालेन विसृजेद्बुधः ॥ ३८ ॥ ग्रामे त्यक्तैषणाः सर्वे ययुर्धीरास्तपोवनम् ॥ ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितृणां प्रभो ॥ यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्य त्यजन्पतेत् ॥ ३९ ॥ त्वं त्वद्य मुक्तो द्वाभ्यां वै ऋषिपित्रोर्महामते ॥ यज्ञैर्देवर्णमुन्मुच्य निर्ऋणोऽशरणो भव ॥ ४० ॥

प्राणादिभिश्च स्वैर्विभवैः स्वकार्यैः । अत्र दृष्टांतः । मेघहिमोपरागैरभ्रतुषारराहुभिः स्वविभवैः सूर्यमिवेति ॥ ३३ ॥ ३४ ॥ ३५ ॥ चित्तस्योपशम उपशमहेतुः । योगो मोक्षोपायश्च । शनैरात्ममुदमावहतीति तथा । सुगमः प्रवृत्त्याश्रयत्वात् । धर्मश्चावश्यकः । अन्यथा विहिताकरणेन मालिन्यप्रसंगात् ॥ ३६ ॥ ननु " न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" इत्यादिना त्यागस्यैव विहितत्वात्कथं कर्म मोक्षोपाय इत्याशंक्यादावेव त्यागस्याशक्यत्वादित्याशयेनाहुः अयमिति सार्धचतुर्भिः । स्वस्त्ययनः स्वस्ति क्षेममीयतेऽनेनेति तथा । श्रद्धया निष्कामतया शुक्लेन शुद्धेनाप्तेन वित्तेन पुरुष ईश्वर इज्येतेति यदेष पंथाः ॥ ३७ ॥ स्वस्त्ययनमाहुः । वित्तैषणामिति । वित्तफलभूतैर्यज्ञैर्दानैश्च वित्तैषणां वित्तेच्छां विसृजेत् । गृहैर्गृहोचितैर्भोगैर्दारसुतैषणां विसृजेत् । तदनुभवेनैव तदौत्सुक्यनिवृत्तेः । देहे मृते आत्मनः स्वर्गादिलोकैषणां कालेन क्षयानुसंधानेन विसृजेत् । देव हे वसुदेव । यद्वा देवकालेन देवानामपि मृत्युना मृत्युहेतुभूतेनेत्यर्थः ॥ ३८ ॥ अत्राचारं प्रमाणयति । ग्राम इति किं च ऋणैरिति । तथा च श्रुतिः । 'जायमानोह वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इत्यादि । तान्यनिस्तीर्य तेषामृणान्यनपाकृत्य। तथा च मनुः । ' ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ' इति ॥ ३९ ॥ निर्ऋणो निर्मुक्तऋणः । अशरणो भव

इत्यन्वयः ॥ ३९ ॥ अयम् आत्मन ईशस्य मुदावहः प्रीतिकरः चित्तशोधको वा । श्रद्धया विष्णुयजनलक्षणः । अन्यथा एतदनाचरणे ॥ ३६ ॥ अत्राशंकते—नन्विति । शुद्धेन न्यायार्जितेन ॥ ३७ ॥ बुधः संसारासारज्ञः । वित्तैषणां धनेच्छाम् । तदनुभवेन दारसुताद्यनुभवेन । तेष्वौत्सुक्यस्योत्कंठायाः । देवशब्देन वसुदेवग्रहणमेकदेशिन्यायापेक्षमत आह—यद्वेति । अत्रैषणात्रयत्यागे । धीरास्त्यागशक्तिमंतः । ग्रामे गृहस्थाश्रमे । गृहस्थस्यैव ग्रामस्थित्यधिकारात् 'तत्स्थ्यात्ताच्छद्व्यम्' इति न्यायेन ॥ ३८ ॥ अत्र संगतार्थमाह—किंचेति । 'अनृणः' इति श्रुतिशेषपदं ज्ञेयम् । स्मृतिरप्यत्र प्रमाणं तथा चेति । अपाकृत्य दूरीकृत्य । मोक्षे मोक्षमार्गे संन्यासादौ । अधो व्रजति देवादीनां कोपान्नरकं गच्छतीत्यर्थः ॥ ३९ ॥ ' शरणं गृहरक्षित्रोः ' इत्यमरः । न विद्यते शरणं यस्य सः । एतेनर्णापाकरणं विना गृहस्थत्वत्यागोऽनुचित इत्युक्तम् ॥ ४० ॥

वसुदेव भवान्नूनं भक्त्या परमया हरिम् ॥ जगतामीश्वरं प्रार्चः स यद्वां पुत्रतां गतः ॥ ४१ ॥ श्रीशुक उवाच ॥ इति तद्वचनं श्रुत्वा वसुदेवो महामनाः ॥ तानृषीनृत्विजो वव्रे मूर्ध्नाऽऽनम्य प्रसाद्य च ॥ ४२ ॥ त एनमृषयो राजन्वृता धर्मेण धार्मिकम् ॥ तस्मिन्नयाजयन्क्षेत्रे मखैरुत्तमकल्पकैः ॥ ४३ ॥ तद्दीक्षायां प्रवृत्तायां वृष्णयः पुष्करस्रजः ॥ स्नाताः सुवाससो राजन्राजानः सुष्ठलंकृताः ॥ ४४ ॥ तन्महिष्यश्च मुदिता निष्ककंठ्यः सुवाससः ॥ दीक्षाशालामुपाजग्मुरालिप्ता वस्तुपाणयः ॥ ४५ ॥ नेदुर्मृदंगपटहशंखभेर्यानकादयः ॥ ननृतुर्नटनर्तक्यस्तुष्टुवुः सूतमागधाः ॥ जगुः सुकंव्यो गंधर्व्यः संगीतं सहभर्तृकाः ॥ ४६ ॥ तमभ्यषिंचन्विधिवदक्तमभ्यक्तमृत्विजः ॥ पत्नीभिरष्टादशभिः सोमराजमिवोडुभिः ॥ ४७ ॥ ताभिर्दुकूलवलयैर्हारनूपुरकुंडलैः ॥ स्वलंकृताभिर्विबभौ दीक्षितोऽजिनसंवृतः ॥ ४८ ॥ तस्यर्त्विजो महाराज रत्नकौशेयवाससः ॥ ससदस्या विरेजुस्ते यथा वृत्रहणोऽध्वरे ॥ ४९ ॥ तदा रामश्च कृष्णश्च स्वैःस्वैर्बन्धुभिरन्वितौ ॥ रेजतुः स्वसुतैर्दारैर्जीवेशौ स्वविभूतिभिः ॥ ५० ॥ ईजेऽनुयज्ञं विधिना अग्निहोत्रादिलक्षणैः ॥ प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रियेश्वरम् ॥ ५१ ॥

गृहात्प्रव्रज ॥ ४० ॥ किं च अविशुद्धचित्तानामयं क्रमस्त्वं तु कृतार्थ एवेत्याहुः । वसुदेवेति । भवान्नूनं निश्चितं परमया प्रेमलक्षणया भक्त्या हरिम् । प्रार्चोऽर्चितवान् । यद्यस्मात् वां युवयोः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ आलिप्ताः कुंकमादिभिः । वस्तुपाणयो गृहीतार्हणहस्ताः ॥ ४५ ॥ ४६ ॥ अक्तं नेत्रयोरंजनेन । अभ्यक्तं सर्वांगेषु नवनीतेन ॥ ४७ ॥ ताभिः पत्नीभिः सहितो दीक्षितो विरेजे ॥ ४८ ॥ ४९ ॥ जीवेशौ सर्वजीवानामीशौ ॥ ५० ॥ अनुयज्ञं प्रतियज्ञम् । आम्नातसर्वांगाः

न त्वामुदिश्यैतदुक्तमित्याह–किं चेति । प्रार्चः आर्चैतत्रानसि । स हरिः । यद्यतः । किंभूतस्त्वम्–भं कलत्रं तदस्यास्तीति भवान्सकलत्र इत्यर्थः “ कलत्रोडुतेजसि स्याद्भं भो भ्रातरि भास्करे ” इति निरुक्तिः । वामित्युक्तिरप्येवं संगच्छते । प्रार्च इत्यनद्यतनातीतवाचिना लङा बहूनि जन्मानि सूचितानि । “ बहूनां जन्मनामंते ज्ञानवान्मां प्रपद्यते ” इति गीतोक्तेः ॥ ४१ ॥ इतीत्थम् । तद्वचनं मुनिकथनम् । तान् मुनीन् ॥ ॥ ४२ ॥ तस्मिन् विनशने । मखैरिति बहुत्वमंगेष्टयपेक्षम् । कल्प्यंत आभिरिति कल्पकाः सामग्र्यः, उत्तमा राजसूयादयस्तेष्विव कल्पका येषु तैः । प्रकृतिविकृतियागैरित्यर्थः । धर्मेण कल्पोक्तविधिना । ‘ अहिंसाविधिपुण्येषु धर्मः ’ इति कोशात् ॥ ४३ ॥ तद्दीक्षायां यज्ञारंभसंकल्परूपायाम् ‘ दीक्षा स्याद्व्रतसंग्रहः ’ इति यादवः । पुष्करस्रजः कमलबीजमालावलंबिकंठाः ॥ ४४ ॥ तन्महिष्यो राजपत्न्यः, वसुदेवभार्या वा । गृहीतमर्हणं यैस्ते गृहीमार्हणास्ते हस्ता यासां तास्तथा । “ हिरण्यं रजतं चापि गृहीत्वा क्रमुकं फलम् । शालां विशेद्यज्ञपत्नी शपेयुस्त्वन्यथा सुराः ॥ ” इत्युक्तेः । यज्ञोस्यास्तीति यज्ञो यज्ञकर्ता तस्य पत्नीत्यर्थः ॥ ४५ ॥ ॥ ४६ ॥ तं वसुदेवम् । यज्ञारंभे यज्ञकर्तुरंजनं नेत्रयोर्दत्त्वा गोनवनीतेन तद्वपुः सर्वतो मर्दयित्वा च तं स्नापयेदिति श्रुत्या विहितम् ॥ ४७ ॥ विभवैर्भूषणाद्यैः स्वलंकृताभिः । अजिनमत्र मृगचर्म ॥ ४८ ॥ तस्य वसुदेवस्य । होत्राद्याः षोडश । ते पूर्वं वृता ये इत्यर्थः । वृत्रहण इंद्रस्य । कुत्वाभावालोपाभावावार्षौ ॥ ४९ ॥ तदा यज्ञसमये । स्वस्य विभूतिभिर्मूर्तिमद्भिरणिमादिभिः । यद्वा–लुतोपमा बोध्या । जीवेशौ जीवात्मपरमात्मानौ । स्वैर्विभूतिभिरहंकारादियोगमायादिभिः ॥ ५० ॥ तेभ्यः प्राकृतेभ्यो यागेभ्यश्चोदनालिंगादिभिर्विधिलिंगप्रकरणसमाख्यादिभिः अतिदेशेन ‘ प्रकृतिवद्विकृतिः कर्तव्या ’ इति वाक्येन प्राप्तान्यंगानि येषु ते वैकृताः ।

अथर्त्विग्भ्योऽददात्काले यथाम्नातं स दक्षिणाः ॥ स्वलंकृतेभ्यो विप्रेभ्यो गोभूकन्या महाधनाः॥५२॥ पत्नीसंयाजावभृथ्यैश्चरित्वा ते महर्षयः ॥ सस्नू रामह्रदे विप्रा यजमानपुरःसराः ॥ ५३ ॥ स्नातोऽलंकारवासांसि बंदिभ्योऽदात्तथा स्त्रियः ॥ ततः स्वलंकृतो वर्णाना श्वभ्योऽन्नेन पूजयत् ॥ ५४ ॥ बन्धून्सदारान्स सुतान्पारिबर्हेण भूयसा ॥ विदर्भकोसलकुरून्काशिकेकयसृंजयान् ॥ ५५ ॥ सदस्यर्त्विक्सुरगणान्नृभूतपितृचारणान् ॥ श्रीनिकेतमनुज्ञाप्य शंसंतः प्रययुः क्रतुम् ॥ ५६ ॥ धृतराष्ट्रोनुजः पार्था भीष्मो द्रोणः पृथा यमौ ॥ नारदो भगवान्व्यासः सुहृत्संबंधिबांधवाः ॥ ५७ ॥ बंधून्परिष्वज्य यदून्सौहृदाऽऽक्लिन्नचेतसः ॥ ययुर्विरहकृच्छ्रेण स्वदेशांश्चापरे जनाः ॥ ५८ ॥ नंदस्तु सह गोपालैर्बृहत्या पूजयार्चितः ॥ कृष्णरामोग्रसेनाद्यैर्न्यवात्सीद्बन्धुवत्सलः ॥ ५९ ॥ वसुदेवोऽञ्जसोत्तीर्य मनोरथमहार्णवम् ॥ सुहृद्वृतः प्रीतमना नंदमाह करे स्पृशन् ॥६०॥ वसुदेव उवाच॥ भ्रातरीशकृतः पाशो नृणां यः स्नेहसंज्ञितः ॥ तं दुस्त्यजमहं मन्ये शूराणामपि योगिनाम् ॥ ६१ ॥ अस्मास्वप्रतिकल्पेयं यत्कृताऽज्ञेषु सत्तमैः ॥ मैत्र्यर्पिताऽफला वापि न निवर्तेत कर्हिचित् ॥ ६२ ॥

प्राकृता ज्योतिष्टोमदर्शपूर्णमासादयस्तेभ्यश्चोदनालिंगादिभिरतिदेशप्राप्तांगा वैकृताः सौरसत्रादयस्तैः सर्वैः । द्रव्यं पुरोडाशादि । ज्ञानं मंत्रः । क्रिया कर्म । तेषामीश्वरम् ॥ ५१ ॥ ५२ ॥ सस्नुः स्नानं चक्रुः ॥ ५३ ॥ आ श्वभ्यः शुनोऽभिव्याप्य । अन्नेन पूजयदपूजयत् ॥ ५४॥ बंध्वादिचारणांतान्पारिबर्हेण प्रीतिदानेन चापूजयत् । ते च सर्वे प्रययुः ॥ ५५ ॥ ५६ ॥ प्रयाणे केषांचिद्विशेषमाह धृतराष्ट्र इति द्वाभ्याम् । अनुजो विदुरः । पार्था युधिष्ठिरभीमार्जुनाः । यमौ नकुलसहदेवौ ॥ ५७ ॥ सौहृदेनाक्लिन्नानि चेतांसि येषां ते ॥ ५८ ॥ ५९ ॥ मनोरथो यज्ञविषयस्तमेव महार्णवम् ॥ ६० ॥ शूराणां बलेन योगिनां ज्ञानेनापीत्यर्थः ॥ ६१ ॥ तत्कुतस्तत्राह । अस्मास्विति । कृताज्ञेषु कृतमुपकारमजानत्सु सत्तमैर्भवद्भिरप्रतिकल्पा अनुपमा मैत्रीयमर्पिता अफलाऽपि प्रत्युपकारशून्यापि कर्हिचिद्यस्मान्न निवर्तेत तस्मादीश्वरकृतः

ईश्वरं स्वामिनम्॥५१॥आम्नातानि कथितानि सर्वाण्यंगान्याराादुपकारकादीनि येषु ते आम्नातसर्वांगाः । अथ प्राकृतवैकृतयागोत्तरम् । काले यथोदितसमये । यथाम्नातं यथोदितम् । स वसुदेवः॥५२॥पत्नीसंयाजः पत्नीभिः क्रियमाणः, काश्चन देवता उद्दिश्य यजनम् । अवभृथः समाप्तिकर्मस्थानम् । उभयत्रेष्टिविशेषाश्च भवंति । तैश्चरित्वा तांश्च कृत्वेत्यर्थः ॥ ५३ ॥ यथा स ददौ तथा स्त्रियोपि ददुरित्यर्थः । ततः स्नानोत्तरम् ॥ ५४ ॥ पारिबर्हेण पूजाद्रव्येण बंध्वादींश्चापूजयदिति शेषः ॥ ५५ ॥ ते च बंध्वादयः ॥ ५६ ॥ ५७ ॥ आक्लिन्नान्यार्द्राणि ॥ ५८ ॥ न्यवात्सीत् उवास ॥ ५९ ॥ ६० ॥ तं स्नेहपाशम् । इत्यर्थ इति—नहि बलेन ज्ञानेन च स्नेहपाशश्छिद्यते, रामचंद्रादिषु तथा दर्शनादिति भावः ॥६१॥ अत्र प्रकारमाक्षिपति—तत्कुत इति । तत्स्नेहपाशाक्रंतनम् । कुतः कथमवगतम् । तत्रात्रेत्यर्थः । यद्यतः कृता तस्माद्धेतोः । इत्यर्थ इति—'सर्वः स्वार्थं

प्रागकल्पाच्च कुशलं भ्रातर्वो नाचराम हि ॥ अधुना श्रीमदांधाक्षा न पश्यामः पुरः सतः ॥ ६३ ॥ मा राज्यश्रीरभूत्पुंसः श्रेयस्कामस्य मानद ॥ स्वगतानुत बंधून्वा न पश्यति यथांधदृक् ॥ ६४ ॥ श्रीशुक उवाच ॥ एवं सौहृदशैथिल्यचित्त आनकदुंदुभिः ॥ रुरोद तत्कृतां मैत्रीं स्मरन्नश्र विलोचनः ॥ ६५ ॥ नंदस्तु सख्युः प्रियकृत्प्रेम्णा गोविंदरामयोः ॥ अद्यश्व इति मासांस्त्रीन्यदुभिर्मानितोऽवसत् ॥ ६६ ॥ ततः कामैः पूर्यमाणः सव्रजः सहबांधवैः ॥ पराध्यर्याभरणक्षौमनानानर्घ्यपरिच्छदैः ॥ ६७ ॥ वसुदेवोग्रसेनाभ्यां कृष्णोद्धवबलादिभिः ॥ दत्तमादाय पारिबर्हं यापितो यदुभिर्ययौ ॥ ६८ ॥ नंदो गोपाश्च गोप्यश्च गोविंदचरणांबुजे ॥ मनः क्षिप्तं पुनर्हर्तुमनीशा मथुरां ययुः ॥ ६९ ॥ "पाण्डवाश्च महात्मानः पृथा च नृपसत्तम ॥ अनुज्ञाताः केशवेन बाष्पगद्गदभाषिणः ॥ शक्रप्रस्थं ययुः सर्वे स्वजनैः परिवारिताः ॥ १ ॥" बंधुषु प्रतियातेषु वृष्णयः कृष्णदेवताः ॥ वीक्ष्य प्रावृषमासन्नां ययुर्द्वारवतीं पुनः ॥ ७० ॥ जनेभ्यः कथयांचक्रुर्यदुदेवमहोत्सवम् ॥ यदासीत्तीर्थयात्रायां सुहृत्संदर्शनादिकम् ॥ ७१ ॥ इति श्रीमद्भागवते म० दशमस्कंधोत्तरार्धे तीर्थयात्रानुवर्णनंनाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥ श्रीबादरायणिरुवाच ॥ अथैकदात्मजौ प्राप्तौ कृतपादाभिवंदनौ ॥ वसुदेवोऽभिनंद्याह प्रीत्या संकर्षणाच्युतौ ॥ १ ॥

पाशोऽयं भवतामिति गम्यत इत्यर्थः ॥ ६२ ॥ अफलत्वमेवाह । प्रागिति । हे भ्रातः अकल्पादसामर्थ्याद्वः कुशलं प्रियं न ह्याचराम न कृतवंतो वयम् । श्रीमदेनांधान्यक्षीणि येषां ते ॥ ६३ ॥ राज्यश्रीर्माभूत् । छांदसोऽडागमः ॥ ६४ ॥ ६५ ॥ अद्य श्व इति प्रातर्निर्गमेऽद्यैवापराह्णे गम्यतामित्यपराह्णे निर्गमे श्वो गम्यतामिति पुनःपुनरेवं मानितः ॥ ६६ ॥ ६७ ॥ यापितो महासैन्येन प्रस्थापितः ॥ ६८ ॥ ६९ ॥ ७० ॥ यदुदेवस्य वसुदेवस्य महोत्सवं यज्ञादिलक्षणं सुहृत्संदर्शनादिकं चेति ॥ ७१ ॥ इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्री० टीकायां चतुरशीतितमोऽध्यायः ॥ ८४ ॥ पंचाशीतितमे रामकृष्णौ संप्रार्थितौ सुतौ ॥ पित्रे ज्ञानमथो मात्रे मृतान्पुत्रानयच्छताम् ॥ १ ॥ नंदयित्वा कुरुक्षेत्रयात्रायां सुहृदो बहून् ॥ तत्त्वज्ञानं ततः पित्रोरादिशन्मृतसूनुभिः ॥ २ ॥ १ ॥

समीहते ' इति न्यायेन तं विना यज्ञेषु प्रतीकारासमर्थेषु जानतां मैत्रीकरणमीशप्रेरणयैव संभवतीति भावः॥६२॥अकल्पत्वं च कंसोपद्रुतत्वात् । पुरः सतः अग्रे स्थितान्॥६३॥ अदर्शने हेतुमाह–मेति । सुजनान् गुरुजनान्। तपस्विबहुश्रुताचार्यादीनपि किं पुनरन्यान् । यया राज्यश्रियांऽधदृक् आवृतचक्षुः ॥६४॥ एवमुक्तरीत्या । तत्कृतां नंदकृताम् । मैत्रीं विपदि स्त्रीपुत्ररक्षणलक्षणाम् । प्रतिकर्तुमसमर्थः केवलं रुरोदेति ॥६५॥ सख्युर्वसुदेवस्य । निर्गमे गंतुमुद्यते ॥६६॥ ततो मासत्रयसहवासोत्तरम् । कामैर्नानाद्रव्यैः । तदाह–परार्ध्येति॥६७॥६८॥ क्षिप्तं लग्नम् ॥६९॥ प्रावृषं वर्षर्तुम् ॥७०॥७१॥ एतदाख्यानश्रुतिफलमाह–य इति ॥७२॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धे चतुरशीतितमोऽध्यायः॥८४॥अथो पितृज्ञानदानानंतरम् । अयच्छतां ददतुः (१) । ततः सुहृदानंददानोत्तरम् । पित्रोर्मातापितृभ्याम् (२) । अथ तीर्थयात्रानंतरम् । अभिनंद्य संश्लाघ्य॥१॥

मुनीनां स वचः श्रुत्वा पुत्रयोर्धामसूचकम् ॥ तद्वीर्यैर्जातविश्रंभः परिभाष्याभ्यभाषत ॥ २ ॥ कृष्णकृष्ण महायोगिन्संकर्षण सनातन ॥ जाने वामस्य यत्साक्षात्प्रधानपुरुषौ परौ ॥ ३ ॥ यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा ॥ स्यादिदं भगवान्साक्षात्प्रधानपुरुषेश्वरः ॥ ४ ॥

धाम प्रभावस्तत्सूचकम् । जातविश्रंभ उत्पन्नविश्वासः । परिभाष्य संबोध्य ॥ २ ॥ अस्य विश्वस्य यत्साक्षात्स्वरूपभूतं कारणं प्रधानपुरुषौ नाम परौ तयोरपि कारणत्वेनेश्वरौ च साक्षाद्वां युवामिति जाने ॥ ३ ॥ नन्विदं विश्वमनेकैः कारकैर्जायमानं कुतः प्रधानपुरुषात्मकं कुतस्तरामावयोस्तत्कारणत्वेनेश्वरत्वं तत्राह। यत्रेति । यत्राधिकरणे । येन कर्त्रा करणेन च। यतः अपादानात् । यस्य संबंधेन। षष्ठ्यर्थस्याकारकत्वेऽपि निमित्ततोक्ता।यस्मै संप्रदानाय । यद्यदिति प्रयोज्यकर्तृकर्मकारके दर्शिते। ननु तयोर्नास्ति भेदः। यथोक्तम्। 'करोति क्रियमाणेन न कश्चित्कर्मणा विना ॥ भवत्यर्थस्य कर्ता च करोतेः कर्म जायते' ॥ तथा। 'करोत्यर्थस्य यः कर्ता भवितुः स प्रयोजकः ॥ भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यते' इति च। सत्यम्। तथाऽप्यवस्थाभेदे भेदो विवक्षितः। दृश्यते चावस्थाभेदः। तंडुलानोदनं पचति मृदं घटं करोतीति । तदेवं सप्त विभक्त्यर्था दर्शिताः। यथेति यदेति च क्रियाविशेषणभतानामन्येषां चाव्ययानामर्थाः। स्यादिति क्रियापदार्थोपलक्षणम्।एवं सर्वं प्रपंचमनूद्य तत्कारणस्य भगवद्रूपतां

तद्वीर्यैः श्रीकृष्णपराक्रमैः । उत्पन्नविश्वासोंकुरितनिश्चयः॥२॥परौ विलक्षणत्वेनोत्तमौ । तयोरपि प्रकृतिपुरुषयोरपि । "तन्मायाफलरूपेण द्विधा समभवद्बृहत्" इत्याद्युक्तेः ॥ ३ ॥ अत्राक्षिपति—नन्विति । अकारकत्वेऽपि यद्यपि संबंधस्य कारकत्वं नास्ति क्रियायोगाभावात्तथापि साक्षात्क्रियायोगाभावेपि साधोर्धनं तिष्ठतीत्यादिषु धनादिद्वारा तत्संबंधात्कारकनिमित्तमस्त्येवेति । पुनराशंकते—नन्विति । तयोः प्रयोज्यकर्तृकर्मणोः । प्रमाणमाह—यथोक्तमिति । क्रियमाणेन कर्मणा विना कश्चिन्न करोतीत्यन्वयः । भवत्यर्थस्य सत्तार्थकस्य धातोः भवतीत्यत्र धातुनिर्देशे श्तिप् । तथाहि—घटो भवतीह भवत्यर्थस्य कर्ता घटः, स करोतेः कर्म जायते कुलालो घटं करोतीतिवत् ॥ १ ॥ अन्यदाह—तथेति । करोत्यर्थस्य करणार्थस्य भवितुः सत्तार्थकस्य कर्तुः भविता सत्तार्थकधातुकर्ता तं प्रयोजकमपेक्ष्य प्रयोज्यत्वं प्रपद्यते । यथा—घटो भवति कुलालः प्रेरयतीत्यत्र करोत्यर्थकर्तुः कुलालस्य भवितुर्घटस्य प्रयोजकत्वम्, भवत्यर्थकर्ता घटस्तु तं कुलालमपेक्ष्य प्रयोज्यत्वं प्राप्तः । यथा—घटो भवति कुलालः प्रेरयति कुलालो घटं भावयतीति ( १ ) "प्रेरणाविषयो यस्तु प्रयोज्यः स विधीयते । प्रयोजकः स विज्ञेयः प्रयुक्तो नापरैर्यदि ॥ मुख्यकर्तारमाचष्टे प्रत्ययोऽनेककर्तृकः । मुख्यप्रयोजकस्स स्याद्योऽप्रयुक्तः परेण हि ॥ " इत्यलम् । इति च सत्यम् यद्यप्येतत्सत्यम् । तथापि दृश्यते चेति । यथा वस्तुतस्तंडुलौदनयोरभेदेपि तंडुलावस्थात ओदनावस्था पाकक्रियया भिन्नास्ति । यथा च—मृद्घटयोः करणलक्षणया क्रियया मृदवस्थातो घटावस्था भिन्ना । एवं प्रेरणक्रियया प्रयोज्यकर्त्रवस्थातः प्रयोज्यकर्मावस्थापि भिन्नैवेति ज्ञेयम् । तदेवमित्थं क्रियाविशेषणता चेत्थं यदा भवतीति यत्कालिकं भवनं यथा भवतीति यत्प्रकारकं भवनमिति च भवनक्रिया विशेष्या । यदेत्यादिविशेषणं च अन्येषां क्रियाविशेषणताहीनानां चादीनां च । एवं च इत्थं च । सर्वप्रपञ्चं षट्कारकादिसाध्यं तस्य प्रपञ्चस्य कारणमभिन्ननिमित्तोपादानं भगवांस्तद्रूपतां भगवद्रूपताम् । तयोर्भोक्तृभोग्ययोः । तीर्थस्तु—यत्र यस्मिंस्तिष्ठति । "यस्मिन्निदम्" इति श्रुतेः । "येन जातानि जीवन्ति" इति श्रुतेः । "यतो वा इमानि भूतानि" इति च । "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनं मृत्युर्यस्योपसे

एतन्नानाविधं विश्वमात्मसृष्टमधोक्षज ॥ आत्मनानुप्रविश्यात्मन्प्राणो जीवो बिभर्ष्यज: ॥ ५ ॥
प्राणादीनां विश्वसृजां शक्तयो याः परस्य ताः ॥ पारतंत्र्याद्वैसादृश्याद्द्वयोश्चेष्टैव चेष्टताम् ॥ ६ ॥

विधत्ते । इदं साक्षादिति । प्रधानं भोग्यं पुरुषो भोक्ता तयोरीश्वरो भगवाँस्त्वमेव साक्षादिति तयोरैक्यमभिप्रेत्यैकवचनम् ॥ ४ ॥ किंच धारणपोषणकर्ताऽपि त्वमेवेत्याह । एतदिति । हे आत्मन् प्राणः क्रियाशक्तिर्जीवो ज्ञानशक्तिश्च संस्त्वमेव बिभर्षि ॥ ५ ॥ ननु प्राणादीनां विचित्रशक्तीनां कारणत्वावगमात्कथं परमेश्वरस्यैव कारणत्वेन सर्वात्मकत्वमुच्यत इत्याशंक्य प्राणादिशक्तयोऽपि तस्यैवेत्याह । प्राणादीनामिति । प्राणः सूत्रं तदादीनां विश्वसृजां विश्वकारणानां याः शक्तयस्ताः परस्य परमकारणस्येश्वरस्यैव । कुतः पारतंत्र्यात् । यथा वेधशक्तिर्न बाणस्यापि तु पुरुषस्य तद्वदित्यर्थः । ननु भगवतः प्राणादिवर्गस्य च स्वातंत्र्यमेव किं न स्यादत आह । वैसादृश्याद्द्वयोरिति । चेतनाचेतनत्वेन विसदृशत्वाद्द्वयोः अचेतनप्राणादिवर्गस्य चेतनपारतंत्र्यमेवं युक्तमित्यर्थः । यद्वा प्राणादिषु द्वयोर्द्वयोरेव तावद्विसदृशत्वम् । विरुद्धक्रियाकारित्वात्किं पुनर्बहूनाम् । तस्मादेकेन सर्वज्ञेन सर्वशक्तिनाऽधिष्ठितानामेव विशिष्टकार्यारंभकत्वं युक्तं न स्वतंत्राणामिति । तथा चोक्तम् । "यदैते संहता भावा भूतेंद्रियमनोगुणाः ॥ यदायतननिर्माणे न शेकुर्ब्रह्मवित्तम ॥ तदा संहत्य चान्योन्यं भगवच्छक्तिचोदिताः ॥ सदसत्त्वमुपादाय चोभयं ससृजुर्ह्यदः" इति ॥ तथा । 'नानात्वात्स्वक्रियाऽनीशाः प्रोचुः प्रांजलयो विभुम्' इत्यादि । ननु प्राणादीनां क्रियाकारित्वं शक्त्यभावे कुतः स्यादत आह । चेष्टैव चेष्टतामिति । चेष्टमानानामेषां चेष्टैव न तु शक्तिः । यथा वायोः

चनम् " इति काठकश्रुतेः । " यस्मा इदं क्रियते " इति । " सच्च त्यच्चाभवत् " इति । "यथास्थितं यदा काले इदं स्यात्तथा तदास्मात् ब्रह्मैवेदं सर्वम् " इति श्रुतेः । इदं जगत्साक्षात्स्पष्टं निर्विचारं प्रधान पुरुषेश्वरशब्दवाच्यो भगवानेव स्यात्तत्सत्ताया अपि तदधीनत्वादित्याह ॥४॥ अन्यदाह–किंचेति । आत्मना जीवेन रूपेण "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः ॥ ५ ॥ कारणत्वे पुनराशंकते–नन्विति । कारणत्वावगमात्कारणत्वानिश्चयात् । तस्यैव परमेशस्यैव । " प्राणो वै सूत्रम् " इति श्रुतेः । तदादीनां सूत्रमहत्तत्त्वाहंकारादीनाम् । प्राणादिवर्गस्य पारतंत्र्यात्स्वातंत्र्याभावात् । इत्यर्थ इति–तद्वद्बाणे वेधनशक्तिवदीशस्य तत्त्वमेव तेषामिति भावः । पुनराशंकते–नन्विति । इत्यर्थ इति–अचेतनस्य चेतनाधीनतैव युक्तेति भावः । प्राणादीनां स्वातंत्र्यावगमे सृष्ट्यादिनिरोध एव स्यादित्याह–यद्वेति । प्राणादिषु द्वयोरेव प्राणापानयोरेव । विरुद्धक्रिया प्राणस्योपरिगमनरूपाऽपानस्याधोगमनरूपा । यद्वा–प्राणस्य सूत्रात्मनः क्रियाशक्तिरूपाऽहंकारस्याभिमतिरूपा । एवमन्यत्राप्यूह्यम् । तस्मादैकमत्याभावात् । अत्र च पूर्वोक्तं स्मारयति–तथा चोक्तमिति । पुनरा

कांतिस्तेजः प्रभा सत्ता चंद्राग्न्यर्कर्क्षविद्युताम् ॥ यत्स्थैर्यं भूभृतां भूमेर्वृत्तिर्गंधोऽर्थतो भवान् ॥ ७ ॥ तर्पणं प्राणनमपां देवत्वं ताश्च तद्रसः ॥ ओजः सहो बलं चेष्टा गतिर्वायोस्तवेश्वर ॥ ८ ॥ दिशां त्वमवकाशोऽसि दिशः खं स्फोट आश्रयः ॥ नादो वर्णस्त्वमोंकार आकृतीनां पृथक्कृतिः ॥ ९ ॥ इंद्रियं त्विंद्रियाणां त्वं देवाश्च तदनुग्रहः ॥ अवबोधो भवान्बुद्धेर्जीवस्यानुस्मृतिः सती ॥ १० ॥

शक्त्या तृणादीनां चलनम् । यथा वा पुरुषस्य शक्त्या शराणां वेग इति ॥६॥ पारतंत्र्यमेव प्रपंचयति कांतिरिति पंचभिः । चंद्रस्य कांतिः । अग्नेस्तेजः । अर्कस्य प्रभा । ऋक्षविद्युतां सत्ता स्फुरणमात्रेण सत्त्वम् । अर्थतो वस्तुतो भवान् । तथा च श्रुतिः । " न तत्र सूर्यो भाति न चंद्रतारकं नेमा विद्युतो भांति कुतोऽयमग्निः ॥ तमेव भातमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति । स्मृतिश्च । "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ॥ यच्चंद्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" इति । भूमेर्वृत्तिः प्राणिनामाधारत्वेन वर्तनं गंधश्च भवान् । तवैव शक्तिरित्यर्थः ॥ ७ ॥ किंच हे देव अपां तर्पणं तृप्तिजनकत्वं प्राणनं जीवनहेतुत्वं ता आपश्च तासां रसश्च त्वमेव । किंच वायोरोजःसहआदि तवैव शक्तिः ॥ ८ ॥ दिशामुपाधिकृताकाशप्रदेशानामवकाशो दिशश्च त्वम् । खं सामान्याकाशस्तदाश्रयः स्फोटश्च शब्दतन्मात्रं परावस्था वागित्यर्थः । नादः पश्यंती । ओंकारो मध्यमा । वर्णश्चाकृतीनां पदार्थानां पृथक्कृतिः पृथक्करणमभिधानं यस्मात्तत्पदम् । वर्णपदाद्यात्मिका वैखरी च त्वमित्यर्थः ॥ ९ ॥ इंद्रियाणामिंद्रियं विषयप्रकाशनशक्तिर्देवाश्चेंद्रियाधिष्ठातारस्तदनुग्रहस्तेषामधिष्ठानशक्तिश्च त्वम् । अवबोधोऽध्यवसायशक्तिः अनुस्मृतिः प्रतिसंधानशक्तिः ॥ १० ॥

शंकते—नन्विति । एषां प्राणादीनाम् ॥ ६ ॥ कांतिः कमनीयता । पारतंत्र्ये श्रुतिमाह—तथा चेति । तत्रात्मनि । तमेवात्मानमेव ॥ ७ ॥ अन्यदाह—किंचेति । इमं न्यायमन्यत्राप्यतिदिशति—किंचेति ॥ ८ ॥ तदाश्रयः सामान्याकाशाश्रयः । इत्यर्थ इति—अतीवसूक्ष्मा पराख्या वागेव शब्दतन्मात्रमिति भावः । आकृतीनां घटाद्याकाराणाम् । इत्यर्थ इति—परापश्यंतीमध्यमावैखरीरूपस्त्वमेव । प्रपंचयिष्यते चैतदेकादशस्कंधे । यद्वा—वैयाकरणाभिमताष्टविधस्फोटरूपोपि त्वमेव । ते चाष्टौ स्फोटाः—वर्णस्फोटपदस्फोटवाक्यस्फोटा इति त्रयो व्यक्तिस्फोटाः । वर्णत्वजातिर्वाचिकेति पक्षे वर्णपदवाक्यभेदेन त्रयो जातिस्फोटाः । वर्णपदस्फोटवाक्यपदस्फोटौ चेत्यष्टौ संति । यथा—राम इत्यत्र रकाराकारमकाराकारवर्णा वाचका इति वर्णस्फोटः १, राम इति पदमेव वाचकमिति पदस्फोटः २, राम मां पाहीति वाक्यमेव वाचकमिति वाक्यस्फोटः ३, तत्र व्यक्तिस्फोटवाचकानां मते वैर्णपदवाक्यव्यक्तिरेव वाचिका । जातिस्फोटवाचकानां मते तु वर्णत्वपदत्ववाक्यत्वजातिरेव वाचिका ६, केषांचिन्मते वर्णानां पदस्यापि राम इत्यत्र वाचकत्वं तत्र वर्णपदस्फोटः ७, राम मां पाहीति वाक्ये पदवाक्य

भा. द. उ.
श्री. टी.
॥४१७॥

भा. टी. प्र.
टीका.
अ० ८५

भूतानामसि भूतादिरिंद्रियाणां च तैजसः ॥ वैकारिको विकल्पानां प्रधानमनुशायिनाम् ॥११॥नश्वरेष्विह भावेषु तदसि त्वमनश्वरम् ॥ यथा द्रव्यविकारेषु द्रव्यमात्रं निरूपितम् ॥१२॥ सत्त्वं रजस्तम इति गुणास्तद्वृत्तयश्च याः ॥ त्वय्यद्धा ब्रह्मणि परे कल्पिता योगमायया ॥ १३ ॥ तस्मान्न संत्यमी भावा यर्हि त्वयि विकल्पिताः ॥ त्वं चामीषु विकारेषु ह्यन्यदाऽव्यावहारिकः ॥ १४ ॥ गुणप्रवाह एतस्मिन्नबुधास्त्वखिलात्मनः ॥ गतिं सूक्ष्मामबोधेन संसरंतीह कर्मभिः ॥ १५ ॥ यदृच्छया नृतां प्राप्य सुकल्पामिह दुर्लभाम् ॥ स्वार्थे प्रमत्तस्य वयो गतं त्वन्माययेश्वर ॥ १६ ॥ असावहं ममैवैते देहे चास्यान्वयादिषु ॥स्नेहपाशैर्निबध्नाति भवान्सर्वमिदं जगत्॥१७॥युवां न नः सुतौ साक्षात्प्रधानपुरुषेश्वरौ॥भूभारक्षत्रक्षपण अवतीर्णौ तथात्थ ह॥१८॥

भूतानां कारणं भूतादिस्तामसोऽहंकारस्त्वमसि। इंद्रियाणां कारणं तैजसो राजसोऽहंकारस्त्वम्। विविधमधिदैवाध्यात्माधिभूतभेदेन विकल्प्यंत इति विकल्पा देवास्तेषां कारणं वैकारिकः सात्त्विकोऽहंकारश्च त्वम्। अनुशायिनां जीवानां संसारकारणं प्रधानं त्वम् ॥ ११ ॥ अपि च। नश्वरेषु नाशशीलेष्विहैतेषु भावेषु यदनश्वरमवशिष्यमाणं रूपं तत्त्वमसि। द्रव्यविकारेषु मृत्सुवर्णादिकार्येषु घटकुंडलादिषु नश्वरेषु च द्रव्यमात्रं मृत्सुवर्णादिमात्रमनश्वरं यथा तद्वत् ॥ १२ ॥ ननु त्रिगुणात्मककार्यरूपोऽपि त्वमित्युक्तत्वात्कथमनश्वरत्वं तत्राह। सत्त्वमिति। तद्वृत्तयस्तत्परिणामाश्च महदादयः। अद्धा साक्षात्त्वयि परे ब्रह्मणि कल्पिताः ॥ १३ ॥ तस्मान्न संतीति। नन्वसतां कथं प्रतीतिरत आह। यर्हीति। यदा विकल्पितास्तदैव प्रतीतिमात्रेण त्वयि संति त्वं चामीषु तदैव कारणतयाऽनुगतः। अन्यदा त्वव्यावहारिकोऽविकल्पकस्त्वमेवावशिष्यस इत्यर्थः ॥ १४ ॥ एवंरूपत्वादज्ञाननिबंधनश्च संसार इत्याह। गुणप्रवाह इति। सूक्ष्मां निष्प्रपंचां गतिमबुधा अविद्वांसः। अबुद्धेति वा पाठः। अतोऽबोधेन देहाभिमानेन कृतैः कर्मभिः संसरंतीति ॥ १५ ॥ एवं तयोस्तत्त्वं निरूप्य तदप्राप्त्या शोचति। यदृच्छयेति। नृतां मनुष्यताम्। सुकल्पां पटुतरेंद्रियाम् ॥ १६ ॥ अहो किमिति प्रमत्तोऽसि त्वया बहुभिः पाशैर्निबद्धत्वादित्याह। असावहमिति। देहे अस्य देहस्यान्वयादिषु पुत्रादिषु च ममैवैत इति ॥ १७ ॥ अहो त्वत्पुत्रयोरावयोः किमिदमारोप्यते

योरुभयोर्वाचकत्वमिति पदवाक्यस्फोटः ८, स्फुटति प्रकटीभवत्यर्थोऽनेनेति स्फोटः। ध्वनिविशेषावच्छिन्नं ब्रह्मैव स्फोटपदवाच्यमिति सिद्धांतः ॥ ९ ॥ १० ॥ ११ ॥ अन्यदाह—अपि चेति। भावेषु देहादिषु ॥१२॥ त्रिगुणात्मत्वे शंकते—नन्विति ॥१३॥ यतः कल्पितास्तस्मादित्यर्थः। तदैव विकल्पसमय एव। अमीषु भावेषु। अन्यदा ज्ञानावस्थायाम्। अव्यावहारिकः सर्वव्यवहारातीतोऽविकल्पो जीवेश्वरादिविकल्परहितः। इत्यर्थ इति—'योऽवशिष्येत सोऽस्म्यहम्' इत्युक्तेस्तत्त्वज्ञानेनात्मकल्पितप्रपंचबाधे रज्जुज्ञानेन भुजंगबाधे रज्जुवत्त्वमेवाऽवशिष्यस इति भावः ॥ १४ ॥ एवंरूपत्वाज्ज्ञानं सर्वबाधावधित्वाज्ज्ञाननिबंधनं कारणं यस्य स तथा। एतस्मिन्प्रत्यक्षसिद्धे। पूर्वपाठापेक्षयाऽबुद्धेति पाठस्य झटित्यर्थप्रत्यायकत्वात्सम्यक्त्वम्। यतो न विदंत्यतो हेतोः ॥ १५ ॥ इत्थं तयो रामकृष्णयोः। तदप्राप्त्या तत्त्वाप्राप्त्या। इह संसारे। स्वार्थे तत्त्वावाप्तिरूपे। यदृच्छया प्रारब्धकर्मणा। ममेति शेषः ॥ १६ ॥ भगवदाक्षेपे स्वासामर्थ्यं द्योतयन्भगवतः सर्वसामर्थ्यमाह—अहो किमित्यादिना। अन्वयादिषु इंद्रियकलत्रादिषु। न केवलं मामेव किन्तु सर्वमिति ॥ १७ ॥ पुनराक्षिपति—अहो इत्यादि। भूभारक्षत्रक्षपण इति निमित्ते सप्तमी। "एङः पदांतादति" इति पूर्वरूपसंधिबाधस्त्वार्षः। कथयसि—"संरक्षणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय भविष्यामि युगेयुगे॥" इति गीतोक्ति

॥४१७॥

तत्ते गतोऽस्म्यरणमद्य पदारविंदमापन्नसंसृतिभयापहमार्तबंधो ॥ एतावताऽलमलमिंद्रियलालसेन मर्त्यात्मदृक् त्वयि परे यदपत्यबुद्धिः ॥ १९ ॥ सूतीगृहे ननु जगाद भवानजो नौ संजज्ञ इत्यनुयुगं निजधर्मगुप्त्यै ॥ नानातनूर्गगनवद्विदधज्जहासि को वेद भूम्न उरुगाय विभूतिमायाम् ॥ ॥ २० ॥ श्रीशुक उवाच ॥ आकर्ण्येत्थं पितुर्वाक्यं भगवान्सात्वतर्षभः ॥ प्रत्याह प्रश्रयाऽऽनम्रः प्रहसन् श्लक्ष्णया गिरा ॥२१ ॥ श्रीभगवानुवाच ॥ वचो वः समवेतार्थं तातैतदुपमन्महे ॥ यन्नः पुत्रान्समुद्दिश्य तत्त्वग्राम उदाहृतः ॥ २२ ॥ अहं यूयमसावार्य इमे च द्वारकौकसः ॥ सर्वेऽप्येवं यदुश्रेष्ठ विमृश्याः सचराचरम् ॥ २३ ॥ आत्मा ह्येकः स्वयंज्योतिर्नित्योऽन्यो निर्गुणो गुणैः ॥ आत्मसृष्टैस्तत्कृतेषु भूतेषु बहुधेयते ॥ २४ ॥

अत आह । युवामिति । भूभारक्षत्रक्षपणार्थमवतीर्णौ तथा ह निश्चितमात्थ कथयसि॥ १८॥ तत्तस्मादरणं शरणमापन्नानां संसृतिभयमपहंतीति तथा तत् । ननु त्वमतिसुखी वृथा किं निर्विद्यसेऽत आह। एतावतेति । इंद्रियलालसेनेंद्रियार्थतृष्णया । यद्येनेंद्रियलालसेन मर्त्ये शरीरे आत्मदृगात्मबुद्धिरहं त्वयि च परे परमेश्वरेऽपत्यबुद्धिरस्मि तेनालं पर्याप्तमिति ॥ १९ ॥ ननु कुत एतदहं परमेश्वर इति तत्राह । सूतीगृह इति । नौ आवयोः । अनुयुगं प्रतियुग्मम् । यदा सुतपाः पृश्निरिति युग्मम् ।यदा कश्यपोऽदितिश्चेति युग्मम् । अधुना वसुदेवो देवकीति युग्मम् । एवं हि प्रतियुग्ममज एवाहं संजज्ञेऽवतीर्ण इति भवान्नूनं जगाद । नन्वन्योऽसौ चतुर्भुजो देव इति तत्राह । नानातनूरिति । गगनवदसंग एव त्वम् । भूम्नः सर्वगतस्य विभूतिरूपां मायां को वेदेति ॥ २० ॥ २१ ॥ उपमन्महे उपमन्यामहे । समुद्दिश्य विषयीकृत्य । तत्त्वग्रामस्तत्त्वसमूहः ! उदाहृतः सम्यङ् निरूपितः ॥२२॥ इमामेव दृष्टिं सर्वत्र विधत्स्वेत्याह । अहमिति । एवं विमृश्या ब्रह्मत्वेनैवान्वेषणीयाः । किंच सचराचरं जगदपि ॥ २३ ॥ ननु नानाविकारवतां

रूपेण वदसीत्यर्थः ॥ १८ ॥ यतस्त्वमीशस्तत्तस्मात् । आर्तबंधो इति संसृतिभीतानां त्वमेव रक्षक इत्याह । आक्षिप्य समाधत्ते—नन्वित्यादि । एतावता इयत्प्रमाणकेनाद्यपर्यंतेनेति यावत् । मर्त्ये मृत्युशिरस्के । अह मिति बुद्धिरहंपदार्थः । तेनेंद्रियलालसेन ॥ १९॥ पुनराक्षिपति—नन्विति । एतत् इदं कुतोऽवगतमित्यर्थः । तत्राक्षेपे । अजः शुक्रशोणितसंपर्कजन्यशरीररहितः । ननु निश्चयेन । पुनराशंकते—नन्विति । असौ सूतीगृहगः । उरुगायेति नानारूपतामाह । न कोपीत्यर्थः ॥ २० ॥ ब्रह्माद्यन्यतममंतरेण भगवता साक्षात्संलापो वसुदेवं विनाऽन्यस्य दुर्लभ इतिभावेन कृष्णस्य प्रतिवचनप्रकारमाह—आकर्ण्येत्यादि । प्रश्रयेण प्रणयेनेषन्नम्रः । “ प्रकृष्टसेव्ये विनये प्रश्रयः प्रणयेपि च ” इति निरुक्तिः ॥ २१ ॥ एतत्त्वदुक्तम् । समवेतार्थं श्रुतिस्मृत्युपपन्नार्थम् प्रसिद्धार्थं वा । यद्वचः ॥ २२ ॥ न केवलमिम एवापि तु सर्वमेवेत्याह—किञ्चेति । अन्वेषणीया द्रष्टव्याः “ सर्वं खल्विदं ब्रह्म ” इति श्रुतेः ॥ २३ ॥ अत्राशंकते—नन्विति । तत्कृतेषु पंचीकृतभूतकृतेषु । आदिनाल्पादिग्रहः । आत्मसृष्टैः प्रकृतिं द्वारीकृत्य । तत्कृतेषु गुणकृतेषु । पुनश्च बहुधात्वेऽपि कुतः कथं

खं वायुर्ज्योतिरापो भूस्तत्कृतेषु यथाशयम् ॥ आविस्तिरोऽल्पभूर्येको नानात्वं यात्यसावपि ॥ २५ ॥ श्रीशुक उवाच ॥ एवं भगवता राजन्वसुदेव उदाहृतः॥श्रुत्वा विनष्टनानाधीस्तूष्णीं प्रीतमना अभूत् ॥ २६॥ अथ तत्र कुरुश्रेष्ठ देवकी सर्वदेवता ॥ श्रुत्वाऽऽनीतं गुरोः पुत्रमात्मजाभ्यां सुविस्मिता ॥ २७॥कृष्णरामौ समाश्राव्य पुत्रान्कंसविहिंसितान् ॥ स्मरंती कृपणं प्राह वैक्लव्यादश्रुलोचना ॥२८॥ देवक्युवाच ॥ रामरामाप्रमेयात्मन्कृष्ण योगेश्वरेश्वर ॥ वेदाहं वां विश्वसृजामीश्वरावादिपूरुषौ॥२९॥कालविध्वस्तसत्त्वानां राज्ञामुच्छास्त्रवर्तिनाम् ॥ भूमेर्भारायमाणानामवतीर्णौ किलाद्य मे ॥३०॥ यस्यांशांशांशभागेन विश्वोत्पत्तिलयोदयाः ॥ भवंति किल विश्वात्मंस्तं त्वाऽद्याहं गतिं गता ॥ ३१ ॥ चिरान्मृतसुतादाने गुरुणा किल चोदितौ ॥ आनिन्यथुः पितृस्थानाद्गुरवे गुरुदक्षिणाम् ॥ ३२ ॥ तथा मे कुरुतं कामं युवां योगेश्वरेश्वरौ ॥ भोजराजहतान्पुत्रान्कामये द्रष्टुमाहृतान् ॥ ३३ ॥ ऋषिरुवाच ॥ एवं संचोदितौ मात्रा रामः कृष्णश्च भारत ॥ सुतलं संविविशतुर्योगमायामुपाश्रितौ ॥ ३४ ॥ तस्मिन्प्रविष्टावुपलभ्य दैत्यराड् विश्वात्मदैवं सुतरां तथात्मनः ॥ तद्दर्शनाह्लादपरिप्लुताशयः सद्यः समुत्थाय ननाम सान्वयः ॥ ३५ ॥

कुतो ब्रह्मत्वमिति चेन्न । ब्रह्मण एवोपाधिधर्मैर्बहुधा प्रतीतेरिति सदृष्टांतमाह द्वाभ्याम् । आत्मा हीति । यथा खादिभूतानि तत्कृतेषु घटादिष्वाविस्तिरोभावादि यांत्येवमसावात्माऽप्यात्मसृष्टैर्गुणैः कृत्वा तत्कृतेषु देहेषु बहुधा ईयते पुनश्च यथाशयं यथोपाध्याविर्भावतिरोभावादिरूपेण प्रतीयते न वस्तुतः।कुतः।एको बहुधा स्वयंज्योतिर्दृश्यत्वेन नित्योऽनित्यत्वेनानन्योऽन्यत्वेन निर्गुणः सगुणत्वेनेत्यादि बहुधात्वं प्रपंचनीयम्॥२४॥२५॥२६॥सुविस्मिता सती॥२७॥ समाश्राव्य संबोध्य ॥२८॥२९॥ भूमेर्भारायमाणानां राज्ञामर्थे तेषां निधनार्थं मे मयि किलावतीर्णौ ॥ ३० ॥ हे आद्य यस्यांशः पुरुषस्तस्यांशो माया तस्या अंशा गुणास्तेषां भागेन परमाणुमात्रलेशेन विश्वोत्पत्त्यादयो भवंति । तं त्वा त्वां गतिं शरणं गताऽस्मि ॥ ३१ ॥ आनिन्यथुरानीतवंतौ । पितृस्थानाद्यमसदनात् ॥ ३२ ॥ ३३ ॥ ३४ ॥ दैत्यराट् बलिः ।

बहुधात्वं तदाह–एक इति । सर्वमिदमौपाधिकमिति भावः ॥ २४ ॥ २५ ॥ एवमित्थम् ॥ २६ ॥ अथ मंगलारंभे । तत्र तदा ॥ २७ ॥ कृपणं दीनम् ॥ २८ ॥ वां युवाम् ॥ २९ ॥ मे मयि, सप्तम्येकवचनेऽपि 'मे' आदेशो विपरीतग्रहात्सूत्रे अर्थे इति शेषः ॥ ३० ॥ 'शरणेपि गतिः स्मृता' इति कोशात् ॥ ३१ ॥ यमसदनात् यमलोकात् ॥ ३२ ॥ यथा गुरुकामं कृतवंतौ तथा मेऽपीत्यर्थः । योगेश्वरेश्वरावित्युक्तिष्टकांरित्वमाह । आहृतान् आनीतान् ॥ ३३ ॥ एवमुक्तरीत्या । सुतलं तृतीयं विवरम् ॥ ३४ ॥ तस्मिन्सुतले । तयो रामकृष्णयोर्दर्शनेन य आल्हादस्तेन परिप्लुतो व्याप्त आशयोंतःकरणं यस्य स तथा ॥ ३५ ॥

तयोः समानीय वरासनं मुदा निविष्टयोस्तत्र महात्मनोस्तयोः ॥ दधार पादाववनिज्य तज्जलं सवृंद आब्रह्म पुनद्यदंबु ह ॥ ३६ ॥ समर्हयामास स तौ विभूतिभिर्महार्हवस्त्राभरणानुलेपनैः ॥ तांबूलदीपामृतभक्षणादिभिः स्वगोत्रवित्तात्मसमर्पणेन च ॥३७॥ स इंद्रसेनो भगवत्पदांबुजं बिभ्रन्मुहुः प्रेमविभिन्नया धिया ॥ उवाच हाऽऽनंदजलाकुलेक्षणः प्रहृष्टरोमा नृप गद्गदाक्षरम् ॥ ३८ ॥ बलिरुवाच ॥ नमोऽनंताय बृहते नमः कृष्णाय वेधसे ॥ सांख्ययोगवितानाय ब्रह्मणे परमात्मने ॥ ३९ ॥ दर्शनं वां हि भूतानां दुष्प्रापं चाप्यदुर्लभम् ॥ रजस्तमःस्वभावानां यन्नः प्राप्तौ यदृच्छया ॥ ४० ॥ दैत्यदानवगंधर्वाः सिद्धविद्याध्रचारणाः ॥ यक्षरक्षःपिशाचाश्च भूतप्रमथनायकाः ॥ ४१ ॥

कथंभूतौ । विश्वस्यात्मभूतं दैवम् । सान्वयः सपरिवारः ॥ ३५ ॥ सवृंदः सपरिजनः । कथंभूतौ पादाववनिज्य यदंबु ययोरवनेजनोदकमाब्रह्म ब्रह्माणमभिव्याप्य जगत्पुनत्पवित्रयद्वर्तते तौ ॥ ३६ ॥ ३७ ॥ इंद्रसेनो बलिः । प्रेमविभिन्नया प्रेमार्द्रया धिया । बिभ्रद्धारयन् ॥ ३८ ॥ अनंताय शेषाय । बृहते फणैकदेशे विश्वधारणाद्बृहत्तस्मै कृष्णाय सदानंदरूपाय च । वेधसे जगद्विधात्रे । सांख्ययोगवितानायेत्यादिपदत्रयमैक्यविवक्षया ॥ ३९ ॥ योगेश्वराणामपि दुर्दर्शौ युवामस्माभिर्दृष्टावित्येतन्नाति चित्रमित्याह । दर्शनमिति । दुष्प्रापमपि युष्मत्कृपया केषांचिददुर्लभं सुलभमपि भवति तदाह । रजस्तमःस्वभावानामिति । नो दर्शनं प्राप्तौ ॥४०॥ अहो विद्विषो वयं सात्त्वि

तयो रामकृष्णयोः । तत्र वरासने । तज्जलं पादोदकम् । ययो रामकृष्णयोः । वृष्णिषु प्राप्य जन्मनी इत्युक्तेर्वस्तुतो बलदेवोपि विष्णुरेवेति । ततश्च यदंब्विति समंजसम् । पुनत् पुनातेः शत्रंतः । तौ रामकृष्णौ ॥ ३६ ॥ स बलिः । तौ रामकृष्णौ । अमृतभक्षणं रसायनभोजनम् "अमृतं व्योम्नि देवान्ने यज्ञशेषे रसायने । अयाचिते जले जग्धौ मोक्षणे हेम्नि गोरसे ॥ क्लीबे ना त्वमरे स्त्री तु गुडूच्यां मद्यभिक्षयोः । " इति यादवः । तच्च बलपुष्ट्यादिसंपादकौषधीविशेषः । गोत्रं कुलं, वित्तं धनम्, आत्मा देहस्तेषां समर्पणेन 'गोत्रं नाम्नि कुले बले' 'आत्मा देहे धृतौ जीवे' इति यादवः ॥ ३७ ॥ स प्रकृतः । हा शुभमिति स्मरन् 'हा विषाद शुभार्तिषु' इति । यद्वा—ह स्फुटम् ॥ ३८ ॥ सांख्ययोगयोर्ज्ञानकर्मणोर्वितानो विस्तारो येन तस्मै सांख्यशास्त्रकारिणे वा । अनीश्वरकपिलव्यावृत्तये ब्रह्मण इति । कथमनेन व्यावृत्तिरत्राह—परमात्मने इति । ऐक्य विवक्षया समाहारद्वंद्वविवक्षया । तथा च ज्ञानभक्तिकर्मयोगस्वरूपायेत्यर्थः ॥ ३९ ॥ इत्येतत् भवद्दर्शनम् । तत् दुर्लभसौलभ्यम् । यदृच्छयेति देवयोर्युवयोरिच्छया 'देवेच्छापि यदृच्छा स्यात्' इति हलधरः ॥ ॥ ४० ॥ निजभाग्यं श्लाघयन्नाह—अहो इत्यादि । शास्त्रं वेदादिग्रंथ एव शरीरं प्रतिमा यस्य तस्मिन् 'शास्त्रं ग्रंथनिदेशयोः' इति यादवः । अत एव श्रीभागवतं प्रकृत्य स्कांद उक्तम्—" तेनेयं वाङ्मयी मूर्तिः कृष्णस्य

विशुद्धसत्त्वधाम्न्यद्धा त्वयि शास्त्रशरीरिणि ॥ नित्यं निबद्धवैरास्ते वयं चान्ये च तादृशाः ॥ ४२ ॥ केचनोद्बद्धवैरेण भक्त्या केचन कामतः ॥ न तथा सत्त्वसंरब्धाः सन्निकृष्टाः सुरादयः ॥ ४३ ॥ इदमित्थमिति प्रायस्तव योगेश्वरेश्वर ॥ न विदंत्यपि योगेशा योगमायां कुतो वयम् ॥ ४४ ॥ तन्नः प्रसीद निरपेक्षविमृग्ययुष्मत्पादारविंदधिषणान्यगृहांधकूपात ॥ निष्क्रम्य विश्वशरणांघ्र्युपलब्धवृत्तिः शांतो यथैक उत सर्वसखैश्चरामि ॥ ४५ ॥ शाध्यस्मानीशितव्येश निष्पापान्कुरु नः प्रभो ॥ पुमान्यच्छ्रद्धया तिष्ठंश्चोदनाया विमुच्यते ॥ ४६ ॥

कभक्तेभ्योऽपि सभाग्या इत्याह दैत्येत्यादित्रिभिः ॥ ४१ ॥ ४२ ॥ उद्बद्धवैरेण या भक्तिस्तया । केचनेति चैद्यादयः । कामतो भक्त्या गोप्यादयो यथा सन्निकृष्टास्त्व दात्मतां प्राप्ताः तथा च सत्त्वसंरब्धाः सत्त्वाविष्टा अपि सुरादयो न सन्निकृष्टा इति ॥ ४३ ॥ ननु सात्त्विकेभ्योऽपि राजसादयः सन्निकृष्टा इति चित्रं तदाह । इदमित्थ मिति । इदमिति स्वरूपतः इत्थमिति विशेषतश्च ॥ ४४ ॥ तदेवं यद्यपि वैरभावेन त्वत्प्राप्तिर्भवेत्तथाऽपि मां सात्त्विकं कुर्विति प्रार्थयते । तदिति । तत्तथा नः प्रसीद । यथा निरपेक्षैराप्तकामैरपि विमृग्यं युष्मत्पादारविंदं तदेव धिषणमाश्रयस्तस्मादन्यद्गृहं तदेवांधकूपस्तस्मान्निष्क्रम्य निर्गत्य । विश्वस्य शरणं रक्षितारो वृक्षास्तेषामंघ्रिमूलेषु स्वत एव गलितैः फलादिभिरुपलब्धा प्राप्ता वृत्तिर्जीविका येन सोऽहं शांतः सन्नेक एव चरामि । उत अथवा सर्वेषां सखायो महांतस्तैः सह यथा चरामीति ॥ ४५ ॥ कथमल्पपुण्यानामेवं भावः संभवतीति चेत्तर्हि यथैतद्भवेत्तथाऽस्माननुशिक्षयेत्याह । शाधीति । हे प्रभो ईशितव्याः सर्वे जीवास्तेषामीश यत्तवानुशासनमातिष्ठन्नाश्रयंश्चोदनाया

जगदीशितुः " इति । ' वेदो नारायणः साक्षात् ' इति च । ते वयं चान्ये राक्षसादयश्च तादृशा निबद्धवैराः । एतेनास्मासु न कापि भगवद्दर्शनयोग्यतेति ॥ ४१ ॥ ४२ ॥ ननु नित्यानुसंधानलक्षणांतःकरणगुणे नाविर्भूतज्ञानगुणोस्तीति माशंकीरिति चेदयं सुरादीनामपि नास्ति कुतोस्माकमित्याभिप्रेत्याह—केचनेति ॥ ४३ ॥ पुनराशंकते—नन्विति । तत्राक्षेपे । योगेशा ज्ञानिश्रेष्ठा नारदादयः । योगमायां जगत्सृष्ट्याद्यनुसंहितस्व रूपमाहात्म्यम् ॥ ४४ ॥ स्वाशयमाह—तदित्यादिना । तदेवमित्थम् । तस्मात्पादारविंदधिषणात् । ' सर्वः शर्वः शिवः स्थाणुः ' इति सहस्रनामसु सर्वशब्दो विष्णुवाचकोपि । सर्वो विष्णुः सखा येषां ते सर्वसखायो हारिजनास्तैरिति वा ॥ ४५ ॥ भगवदाक्षेपं समादधानो वक्ति—कथमित्यादिना । एवंभावः एवंविधत्यागः । एतत्त्यागादि । इति भाव इति—'देवर्षिभूताप्तनृणां पितॄणां न किंकरो नायम् ' इत्याद्युक्तेः ॥ ४६ ॥

श्रीभगवानुवाच ॥ आसन्मरीचेः षट् पुत्रा ऊर्णायां प्रथमेंऽतरे ॥ देवाः कं जहसुर्वीक्ष्य सुतां यभितुमुद्यतम् ॥ ४७ ॥ तेनासुरीमगन्योनिमधुनाऽ वद्यकर्मणा ॥ हिरण्यकशिपोर्जाता नीतास्ते योगमायया ॥ ४८ ॥ देवक्या उदरे जाता राजन्कंसविहिंसिताः ॥ सा तान्छोचत्यात्मजान्स्वांस्त इमेऽध्यासतेंऽतिके ॥ ४९ ॥ इत एतान्प्रणेष्यामो मातृशोकापनुत्तये ॥ ततः शापाद्विनिर्मुक्ता लोकं यास्यंति विज्वराः ॥ ५० ॥ स्मरोद्गीथः परिष्वंगः पतंगः क्षुद्रभृद् घृणी ॥ षडिमे मत्प्रसादेन पुनर्यास्यंति सद्गतिम् ॥ ५१ ॥

विधिनिषेधलक्षणायाः सकाशाद्विमुच्यते । न खलु त्वद्भक्तो विधिकिंकरः स्यादिति भावः ॥ ४६ ॥ तदुक्तं सर्वमनुमोद्य स्वागमनकारणं सप्रपञ्चं कथयति आसन्निति पंचभिः । ऊर्णायां भार्यायाम् । प्रथमेंऽतरे स्वायंभुवमन्वंतरे । ते देवाः सुतां वाचं यभितुं यब्धुं मैथुनेन रमयितुमुद्यतमुद्युक्तं कं प्रजापतिं जहसुरुपहसितवंतः ॥ ४७ ॥ तेना वद्यकर्मणा पापेनासुरीं योनिमगन्नगमन् । अधुना तत्क्षणमेव । हिरण्यकशिपोर्जाता इत्यर्थः ॥ ४८ ॥ ते च योगमायया ततो नीताः संतो देवक्या उदरे जाताः । हे राजन् बले ते च कंसेन विहिंसिताः सा च तानात्मजान्मत्वा शोचति । ते चेमे तवांतिकेऽध्यासते ॥ ४९ ॥ लोकं देवलोकम् ॥ ५० ॥ स्मरोद्गीथः स्मरसहित उद्गीथः ।

तदुक्तं बल्युक्तम् । विगीतव्यावृत्त्यर्थमर्थान्तरमाह—सुखं तनोतीति सुता भार्या ताम् । नामैकदेशन्यायेन भीमादिवदक्षरमुष्टिन्यायेन वाऽऽभाकादिवदत्र सुना सुखग्रह इति ॥ ४७ ॥ तेन महदुपहासलक्षणेन । इत्यर्थ इति—अधुनेति पदमत्र नेदानीमर्थकं किं तु तत्क्षणार्थकमिति भावः । ते च हिरण्यकशिपुजाताः । ततो हिरण्यकशिपुगृहात् । योगमायापार्श्वमेतावत्कालपर्यंतं स्थित्वा पुनरधुना देवक्या उदरे जाता इत्युत्तरेणान्वयः । अत्र च हरिवंशीया कथाऽनुसंधेया । सा च—“हिरण्यकशिपुपुत्रकालनेमिनः षट् पुत्रा ब्रह्मप्रसादावाप्तये तपश्चक्रुस्तत्तपसा तुष्टो ब्रह्मा तदभीप्सितममरत्वं ददौ । तच्छ्रुत्वा तेषां पितामहो हिरण्यकशिपुस्तान्छशाप—यतो मां सर्वेश्वरं त्यक्त्वा ब्रह्माणमाराधितवंतोऽतः स्वपितृवध्या भविष्यतेत्युक्त्वा तांस्तत्याज । ततो विष्णुर्ब्रह्मवरं सत्यीकर्तुं तेषामात्मन आकृष्य योगनिद्रायै ददौ । ते च जलगर्भे शयनं चक्रुस्तेषां जीवात्मनो योगमाया भगवदाज्ञप्ता देवकीगर्भे निवेशितवतीति तेषां स्वप्नवत्स्वदृष्ट्या देवक्यां जनिर्लोकदृष्ट्या साक्षाज्जनीरिति ॥ ४८ ॥ सा च देवकी । तान्कंसविहिंसितान् । ते च कंसहिंसिताः । इमे संमुखस्थाः । अध्यासते तिष्ठंति ॥४९॥ इतस्तव पार्श्वतः । ततो मातृशोकापनुत्त्यनंतरम् । शापान्महदुपहासलक्षणपापात् “शापः पापाक्रोशादिव्यप्राप्तकल्याणकेषु च” इति निरुक्तिः ॥ ५०॥ अभिज्ञानार्थं तन्नामानि

इत्युक्त्वा तान्समादाय इंद्रसेनेन पूजितौ ॥ पुनर्द्वारवतीमेत्य मातुः पुत्रानयच्छताम् ॥ ५२ ॥ तान्दृष्ट्वा बालकान्देवी पुत्रस्नेहस्नुतस्तनी ॥ परिष्वज्यांकमारोप्य मूर्ध्न्यजिघ्रदभीक्ष्णशः ॥ ५३ ॥ अपाययत्स्तनं प्रीता सुतस्पर्शपरिप्लुता ॥ मोहिता मायया विष्णोर्यया सृष्टिः प्रवर्तते ॥ ५४ ॥ पीत्वाऽमृतं पयस्तस्याः पीतशेषं गदाभृतः ॥ नारायणांगसंस्पर्शप्रतिलब्धात्मदर्शनाः ॥ ५५ ॥ ते नमस्कृत्य गोविंदं देवकीं पितरं बलम् ॥ मिषतां सर्वभूतानां ययुर्धाम दिवौकसाम् ॥ ५६ ॥ तं दृष्ट्वा देवकी देवी मृतागमननिर्गमम् ॥ मेने सुविस्मिता मायां कृष्णस्य रचितां नृप ॥ ५७ ॥ एवंविधान्यद्भुतानि कृष्णस्य परमात्मनः ॥ वीर्याण्यनंतवीर्यस्य संत्यनंतानि भारत ॥ ५८ ॥ सूत उवाच ॥ य इदमनुशृणोति श्रावयेद्वा मुरारेश्चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः ॥ जगदघभिदलं तद्भक्तसत्कर्णपूरं भगवति कृतचित्तो याति तत्क्षेमधाम ॥ ५९ ॥ इति श्रीभागवते महापुराणे दशमस्कंधोत्तरार्द्धे मृताग्रजानयनंनाम पंचाशीतितमोऽध्यायः ॥ ८५ ॥

सद्गतिं मोक्षम् । स्मरस्यैव पूर्वं कीर्तिमानिति नाम । अतः " कीर्तिमंतं प्रथमजं कंसायानकदुंदुभिः । अर्पयामास" इत्युक्तम् ॥ ५१ ॥ अयच्छतामर्पयामासतुः ॥ ५२ ॥ ॥ ५३ ॥ ५४ ॥ अमृतत्वे हेतुः । गदाभृतः पीतशेषमिति नारायणांगसंस्पर्शेन प्रतिलब्धं देवा वयमित्यात्मदर्शनं यैस्ते ॥५५॥ धाम देवलोकम् ॥५६ ॥ मृतानामागमनं निर्गमनं च श्रीकृष्णस्य मायां मेने । तेनैवापत्यादिरूपेण रचिताम् ॥ ५७ ॥ ५८ ॥ अमृतं कीर्तिर्यस्य तस्य । व्यासपुत्रैरिति बहुवचनं पूजार्थम् । जगतामघं भिनत्तीति तथा तत् । अलं निःशेषं यथा भवति तथा दिनकृच्छ्रादिवदिति । तदेवं मोक्षहेतुत्वं पापक्षयहेतुत्वं चोक्तम् । तद्भक्तानां तु सत्कर्णपूरं परमसुखावहं कर्णाभरणमिति स्वयं सुखरूपतामाह । किंच भगवति कृतमावेशितं चित्तं येन स तथा भूत्वा तस्य क्षेमधाम कालादिभयरहितं लोकं यातीति ॥ ५९ ॥ इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्री० टीकायां पंचाशीतितमोऽध्यायः ॥ ८५ ॥

निर्दिशति—स्मर इत्यादि । अतस्तन्नामत्वात् ॥ ५१ ॥ तान्स्मरादीन् । मातुर्मात्रे ॥ ५२ ॥ ५३ ॥ यया मायया ॥ ५४ ॥ तस्या देवक्याः । 'अमृतंपय' इति पाठे तु अमृतममृतत्वापादकं पयोऽमृतपयः । यद्वा—नंदगेहगमनात्पूर्वं स्वाविर्भावावसर एव जाताह्लादा देवकी तन्मुखे स्तनं ददौ । स्वयमेव मुखे स्तनं गृहीत्वा पुनर्वसुदेवाय मां नंदगृहं नयेत्युक्तवानिति ध्येयं पूर्वजन्मापेक्षयैतज्जन्मनोऽन्यत्वादिति ॥ ५५ ॥ ते स्मरादयः ॥ ५६ ॥ तत्तदा ॥ ५७ ॥ कृष्णलीलानंत्यमतिदिशति—एवमिति ॥ ५८ ॥ अमृतं कीर्तिरिव यस्येति कीर्तेरमृताधिक्यं मोक्षहेतुत्वात् । न कृच्छ्रादिवत्प्रयोगोक्तमात्रपापहरम् । आदिना चांद्रायणा

राजोवाच ॥ ब्रह्मन्वेदितुमिच्छामः स्वसारं रामकृष्णयोः ॥ यथोपयेमे विजयो या ममासीत्पितामही ॥ १ ॥ श्रीशुक उवाच ॥ अर्जुनस्तीर्थयात्रायां पर्यटन्नवनीं प्रभुः ॥ गतः प्रभासमश्रृणोन्मातुलेयीं स आत्मनः ॥ २ ॥ दुर्योधनाय रामस्तां दास्यतीति न चापरे ॥ तल्लिप्सुः स यतिर्भूत्वा त्रिदंडी द्वारकामगात् ॥ ३ ॥ तत्र वै वार्षिकान्मासानवात्सीत्स्वार्थसाधकः ॥ पौरैः सभाजितोऽभीक्ष्णं रामेणाऽजानता च सः ॥ ४ ॥ एकदा गृहमानीय आतिथ्येन निमंत्रितम् ॥ श्रद्धयोपाहृतं भैक्ष्यं बलेन बुभुजे किल ॥ ५ ॥ सोऽपश्यत्तत्र महतीं कन्यां वीरमनोहराम् ॥ प्रीत्युत्फुल्लेक्षणस्तस्यां भावक्षुब्धं मनो दधे ॥ ६ ॥

षडशीतितमे दंभात्सुभद्रामर्जुनोहरत् ॥ गत्वा च मिथिलां कृष्णो नृपविप्रावनंदयत् ॥ १ ॥ पित्रोः स्वज्ञानमादिश्य सुभद्रां फाल्गुनाय च ॥ जगाम मिथिलां कृष्णः स्वभक्तप्रियकृत्ततः ॥ २ ॥ देवक्या मृतपुत्रलाभवदर्जुनस्य सुभद्रालाभोऽपि रामप्रातिकूल्याद्दुर्घट इति मन्यमानः प्रसंगात्पृच्छति । ब्रह्मन्निति ॥ १ ॥ २ ॥ कथमश्रृणोत् । दुर्योधनायेति । अपरे वसुदेवादयो न दास्यंतीति । तल्लिप्सुस्तस्या मातुलेय्या लिप्सुः । रामं वंचयितुं पूज्यतमं त्रिदंडिवेषं विधाय गत इत्याह । स यतिरिति ॥ ३ ॥ स्वार्थसाधकः कन्यां प्रेप्सुः ॥ ४ ॥ तमातिथ्येन निमंत्र्य गृहमानीय बलेन यच्छ्रद्धयोपाहृतं परिविष्टं तद्भैक्ष्यं किलार्जुनो बुभुजे इत्यन्वयः ॥ ५ ॥ भावेन रत्यभिप्रायेण क्षुभितं मनो दधे ॥ ६ ॥

दिग्रहः । तदेवं निश्शेषाघहरत्वादुभयहेतुत्वं युक्तम् । तद्भक्तानां मुरारिभक्तानाम् । स्वयं सुखरूपतां परमानंदरूपतां व्यनक्तीत्यर्थः । लोकं वैकुंठम् । " न कर्हिचिन्मत्पराः शांतरूपे नंक्ष्यंति नोऽनिमिषो लेढि हेतिः " इत्युक्तेः ॥ ५९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कंधोत्तरार्द्धे पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥ लोकवंचनविहितमिथ्यानुष्ठानं दंभः । अनंदयत् साह्लादौ चक्रे ( १ ) । स्वसारं सुभद्राम् । विजयोर्जुनः ॥ १ ॥ तीर्थयात्रायां ब्राह्मणधनरिरक्षया स युधिष्ठिरद्रौपदीगृहांतर्गतधनुर्ग्रहणार्थतद्गतप्रतिज्ञातद्वादशवार्षिकतीर्थयात्रायामिति स्फुटं महाभारते । सोर्जुनः ॥ २ ॥ लिप्सुरिच्छावान् । त्रिदंडीति—एकदंडधारणं तु परमहंसस्यैव न तु हंसादेस्तेषां त्रिदंडविधानं ग्रंथांतरे प्रतिपादितम् । अत्र भारतविरोधः त्रिषु लोकेषु दण्डो यस्य स त्रिदण्डो जिष्णुर्विष्णुर्वा पुत्रत्वेन पालकत्वेन च यस्य विद्यते स त्रिदण्डी यतिः । कन्याहरणे यत्नवान्भैक्ष्यं प्रार्थनया दत्तं बुभुजे 'भिक्ष—याच्ञायाम्' इत्येवं परिहार्यः ॥ ३ ॥ तत्र द्वारकायाम् । सोर्जुनः ॥ ४ ॥ संध्यभाव आर्षः । बलेन रामेण ॥ ५ ॥ स त्रिदंडवेष्यर्जुनः । तत्र गृहे । तस्यां कन्यायाम् । क्षुभितं

सापि तं चकमे वीक्ष्य नारीणां हृदयंगमम् ॥ हसंती व्रीडितापांगी तन्न्यस्तहृदयेक्षणा ॥ ७ ॥ तां परं समनुध्यायन्नंतरं प्रेप्सुरर्जुनः ॥ न लेभे शं भ्रमच्चित्तः कामेनातिबलीयसा ॥ ८ ॥ महत्यां देवयात्रायां रथस्थां दुर्गनिर्गताम् ॥ जहारानुमतः पित्रोः कृष्णस्य च महारथः ॥ ९ ॥ रथस्थो धनुरादाय शूरांश्चाऽऽरुंधतो भटान् ॥ विद्राव्य क्रोशतां स्वानां स्वभागं मृगराडिव ॥ १० ॥ तच्छ्रुत्वा क्षुभितो रामः पर्वणीव महार्णवः ॥ गृहीतपादः कृष्णेन सुहृद्भिश्चान्वशाम्यत ॥ ११ ॥ प्राहिणोत्पारिबर्हाणि वरवध्वोर्मुदा बलः ॥ महाधनोपस्करेभरथाश्वनरयोषितः ॥ १२ ॥ श्रीशुक उवाच ॥ कृष्णस्यासीद्द्विजश्रेष्ठः श्रुतदेव इति श्रुतः ॥ कृष्णैकभक्त्या पूर्णार्थः शांतः कविरलंपटः ॥ १३ ॥ स उवास विदेहेषु मिथिलायां गृहाश्रमी ॥ अनीहयाऽऽगताऽऽहार्यनिर्वर्तितनिजक्रियः ॥ १४ ॥ यात्रामात्रं त्वहरहर्दैवादुपनमत्युत ॥ नाधिकं तावता तुष्टः क्रियाश्चक्रे यथोचिताः ॥ १५ ॥ तथा तद्राष्ट्रपालोऽङ्ग बहुलाश्व इति श्रुतः ॥ मैथिलो निरहंमान उभावप्यच्युतप्रियौ ॥ १६ ॥

व्रीडितापांगी सव्रीडकटाक्षा । तस्मिन्नेव न्यस्तं हृदयमीक्षणं च यया सा ॥ ७ ॥ अंतरं हर्तुमवसरं प्रेप्सुः प्राप्तुमिच्छुः । कामेन भ्रमच्चित्तं यस्य सः । शं रामादिसन्मान निमित्तं सुखम् ॥ ८ ॥ ९ ॥ आसमंताद्रुंधत आवरणं कुर्वतः ॥ १० ॥ ११ ॥ पारिबर्हाणि वरवध्वोः प्रीतिदेयानि ॥ १२ ॥ १३ ॥ अनीहयाऽनुद्यमेनैवागतं यदाहार्यं भोज्यं तेन निर्वर्तिता निजाः क्रिया येन सः ॥ १४ ॥ यात्रामात्रं शरीरादिनिर्वाहमात्रं भोज्यमुपनमति तं प्रत्यागच्छति ॥ १५ ॥ मिथिलस्य जनकस्य वंश्यो मैथिलः ॥ १६ ॥

संचलितम् ॥ ६ ॥ साऽपि कन्याऽपि । तं त्रिदंडिनम् । चकमे कामयामास ॥ ७ ॥ तां कन्याम् । परं केवलम् ॥ ८ ॥ पित्रोर्देवकीवसुदेवयोः । अनुमतोंगीकृतः । श्रीकृष्णेनैकांते सुभद्रामिच्छसि चेत्तर्हि देवयात्रागतां गृहीत्वा गच्छानुमतं चैतन्मम पित्रोश्च विना राममिति स्पष्टं भारते ॥ ९ ॥ १० ॥ तत्सुभद्राहरणम् । पर्वणि पूर्णिमायाम् ॥ ११ ॥१२॥ "यमेवैष वृणुते तेन लभ्यः" इति श्रुत्यर्थं व्यक्तीकुर्वन्नितिहासमाह—पूर्णार्थः भक्तिमंतरेणान्यमर्थमनाकांक्षमाणः । कृष्णलीलाप्रबंधकर्तृत्वात्कविः । शब्दादिविषयेच्छारहितत्वादलंपटः ॥ १३ ॥ मिथिलायां नगर्याम् । आहार्यमित्युपलक्षणं वस्त्रादेः । निर्वर्तिताः संपादिताः क्रिया भोजनाच्छादनादिरूपा नित्यनैमित्तिका वा ॥ १४ ॥ तावता दैवागतमात्रेण । उचिता अतिथिसत्कारादिरूपाः ॥ १५ ॥ यथा श्रुतदेवस्तत्परायणस्तथा तद्राष्ट्रपालो मिथिलाप्रांतदेशपतिः । उभौ श्रुतदेवबहुलाश्वौ ॥ १६ ॥

तयोः प्रसन्नो भगवान्दारुकेणाहृतं रथम् ॥ आरुह्य साकं मुनिभिर्विदेहान्प्रययौ प्रभुः ॥ १७ ॥ नारदो वामदेवोऽत्रिः कृष्णो रामोऽसितोऽरुणिः ॥
अहं बृहस्पतिः कण्वो मैत्रेयश्च्यवनादयः ॥ १८ ॥ तत्रतत्र तमायांतं पौरा जानपदा नृप ॥ उपतस्थुः सार्घहस्ता ग्रहैः सूर्यमिवोदितम् ॥ १९ ॥
आनर्तधन्वकुरुजांगलकंकमत्स्यपांचालकुंतिमधुकेकयकोसलार्णाः ॥ अन्ये च तन्मुखसरोजमुदारहासस्निग्धेक्षणं नृप पपुर्दृशिभिर्नृनार्यः ॥ २० ॥
तेभ्यः स्ववीक्षणविनष्टतमिस्रदृग्भ्यः क्षेमं त्रिलोकगुरुरर्थदृशं च यच्छन् ॥ शृण्वन्दिगंतधवलं स्वयशोऽशुभघ्नं गीतं सुरैर्नृभिरगाच्छनकैर्विदेहान् ॥
॥२१॥ तेऽच्युतं प्राप्तमाकर्ण्य पौरा जानपदा नृप ॥ अभीयुर्मुदितास्तस्मै गृहीतार्हणपाणयः ॥ २२ ॥ दृष्ट्वा त उत्तमश्लोकं प्रीत्युत्फुल्लाननाशयाः ॥
कैर्धृतांजलिभिर्नेमुः श्रुतपूर्वांस्तथा मुनीन् ॥ २३ ॥ स्वानुग्रहाय संप्राप्तं मन्वानौ तं जगद्गुरुम् ॥ मैथिलः श्रुतदेवश्च पादयोः पेततुः प्रभोः ॥ २४ ॥

प्रभुरेव स्वयं विदेहान्देशान् प्रययौ ॥ १७ ॥ कृष्णो व्यासः । रामो भार्गवः । अहं शुकः । एवमादिभिः सह ॥ १८ ॥ १९ ॥ आनर्ताद्यर्णांतास्तद्देशवर्तिन्यो नृनार्यः । उदारहासं स्निग्धमीक्षणं यस्मिंस्तत् । दृशिभिर्नेत्रैः ॥ २० ॥ स्ववीक्षणेनैव विनष्टतमिस्रा दृग्येषां तेभ्यः । क्षेममभयमर्थदृशं तत्त्वज्ञानं च ॥ २१ ॥ अभीयुः प्रत्युज्जग्मुः ॥ २२ ॥ प्रीत्योत्फुल्लान्याननान्याशया अंतःकरणानि च येषां ते । कैः शिरोभिः ॥ २३ ॥ २४ ॥

तयोश्श्रुतदेवबहुलाश्वयोः । भक्त्येति शेषः ॥ १७ ॥ मुनीन्नामतो निर्दिशति—नारद इत्यादि । कृष्णो व्यासः । रामो जामदग्न्यः । अहं शुकः । आदिना भृग्वादयः ॥ १८ ॥ तत्रतत्र पुरादौ । तं श्रीकृष्णम् । सूर्योदयसमये ग्रहाणामपि किंचित्प्रतीतिरस्तीति तेन प्रभुसमीपेऽपि ते पूज्या एवेत्युक्तम् ॥ १९ ॥ तद्देशवर्तिनृनार्यः तेष्वानर्ताद्यर्णान्तेषु देशेषु वर्तिन्यो नृनार्यो नरसहिता नार्यः । 'तात्स्थ्यात्ताच्छब्द्यम्' इति न्यायेन वाऽऽनर्ताद्या विद्यंते यासां निवासत्वेन तास्तथा । अन्ये उक्तदेशेभ्योऽन्यदेशस्थाश्च ॥ २० ॥ विनष्टतमिस्रा निरस्ताज्ञाना दृग्बुद्धिर्येषां तेभ्यः :। अभयं सांसारिकभयाभावं तद्धेतुभूतं तत्त्वज्ञानमपरोक्षज्ञानञ्च । तेभ्य आनर्तादिवासिभ्यः । दिगंतान् धवलयति शोधयतीति तथा । सर्वत्र व्याप्तम् । अशुभघ्नं महापातकनाशकम् । विदेहान् मिथिलादेशान् ॥ २१ ॥ ते मैथिलाः । तस्मै तं पूजयितुम् ॥ २२ ॥ ते उक्तार्थाः । यथा तं तथा मुनीन् पूर्वं श्रुताः श्रुतपूर्वास्तान्नेमुः ॥ २३ ॥ तं श्रीकृष्णम् । किंभूतम्—जगद्भिः सर्वलोकैर्गम्यते स्वस्वाभिलषितावाप्तये प्राप्यते इति जगद्गु औणादिकोत्र डुः ब्राह्मणकुलं तद्गाति स्वीकरोति स्वीयत्वेनेति

न्यमंत्रयेतां दाशार्हमातिथ्येन सह द्विजैः ॥ मैथिलः श्रुतदेवश्च युगपत्संहतांजली ॥ २५ ॥ भगवांस्तदभिप्रेत्य द्वयोः प्रियचिकीर्षया ॥ उभयो राविशद्गेहमुभाभ्यां तदलक्षितः ॥ २६ ॥ श्रोतुमप्यसतां दूराज्जनकः स्वगृहागतान् ॥ आनीतेष्वासनाग्र्येषु सुखासीनान्महामनाः ॥ २७॥ प्रवृद्धभक्त्या उद्धर्षहृदयास्राविलेक्षणः ॥ गत्वा तदंघ्रीन्प्रक्षाल्य तदपो लोकपावनीः॥२८॥सकुटुंबो वहन्मूर्ध्ना पूजयांचक्र ईश्वरान् ॥ गंधमाल्यांबराक ल्पधूपदीपार्घगोवृषैः ॥२९॥ वाचा मधुरया प्रीणन्निदमाहान्नतर्पितान् ॥ पादावंकगतौ विष्णोः संस्पृशञ्छनकैर्मुदा॥३०॥ राजोवाच ॥ भवान्हि सर्व भूतानामात्मा साक्षी स्वदृग्विभो ॥ अथ नस्तत्पदांभोजं स्मरतां दर्शनं गतः ॥३१॥ स्ववचस्तदृतं कर्तुमस्मद्दृग्गोचरो भवान् ॥ यदात्थैकांतभक्तान्मे नानंतः श्रीरजः प्रियः ॥ ३२ ॥ को नु त्वच्चरणांभोजमेवंविद्विसृजेत्पुमान् ॥ निष्किंचनानां शांतानां मुनीनां यस्त्वमात्मदः ॥ ३३ ॥

॥ २५ ॥ तदभिप्रेत्यांगीकृत्य तत्तदोभाभ्यामपि ताभ्यां मद्गृहादन्यस्य गेहं यातीत्यलक्षितोऽविदितः । यद्वा उभाभ्यां रूपाभ्यां तदलक्षितस्ताभ्यामलक्षित इति ॥ २६ ॥ २७ ॥ उद्धर्षमुद्गतहर्षं हृदयं यस्य अस्रैराविले क्लिन्ने ईक्षणे यस्य सः स च स च ॥ २८ ॥ ईश्वरान् ईश्वरं तत्तुल्यांश्चेत्यर्थः ॥ २९ ॥ प्रीणन्प्रीणयन् । संस्पृशन्संमर्दयन् ॥ ३० ॥ आत्मा चेतयिता । साक्षी प्रकाशकः । स्वदृक् स्वप्रकाशः । अथातःकारणात् ॥ ३१ ॥ अनंतो बंधुरपि श्रीर्भार्याऽपि अजः

जगद्गुरुस्त्रापि रातेर्डुः ब्राह्मणकुलसहितमित्यर्थः ॥ २४ ॥ आतिथ्येनाऽतिथियोग्येन कर्मणा न्यमंत्रयेतां भोजनार्थं प्रार्थयताम् । संहतः कृतोंजलिः प्रसृतकरद्वयसंयोगो याभ्यां तौ तथा ॥ २५ ॥ तन्निमंत्रणम् । ताभ्यां श्रुतदेवबहुलाश्वाभ्याम् । तत्पदस्य तदार्थत्वे क्लिष्टकल्पनामपेक्ष्याह–यद्वेति ॥ २६ ॥ जनकः 'ईश्वरान्पूजयांचक्रे' इति तृतीयेनान्वयः । श्रोतुमपि दूरान् कर्णाविषयान् । असतां तच्छ्रवणमपि दुर्लभमिति भावः ॥ २७ ॥ तदंघ्रीन् कृष्णसहितमुनिचरणान् । तदपस्तच्चरणजलानि ॥ २८ ॥ ईश्वरश्चेश्वराश्चेत्येकशेषः । इत्यर्थ इति–ईश्वरवज्जगत्सु पूज्यत्वेनेश्वरतुल्यानिति भावः । यद्वा–ईश्वरो विद्यते येषु त ईश्वरा इति मत्त्वर्थीयोऽच् । ईश्वरसहितानित्यर्थः । गोवृषैरिति मधुपर्कांगत्वेनोक्तम्–"मा गामनागामदितिं वधिष्ट" इति श्रुत्या दर्शनमात्रं विहितं वधस्य निषिद्धत्वादित्युक्तं पुरस्तात् । गोषु वाक्षु वृषैश्श्रेष्ठैः श्रुतिवाक्यैरिति वा ॥२२॥ मधुरया लौकिकश्लाघायुक्तया । इदं वक्ष्यमाणम् ॥ ३० ॥ यतो भवान् स्वेषु प्रकाशते इति स्वप्रकाशः अतः कारणादित्यर्थः ॥ ३१ ॥ अनंतो बलदेवः । तत्स्ववचः तत्किं यदित्यात्थ । एकस्मिन्नंतोऽध्यवसायो यस्यास्सैकान्ता सा चासौ भक्तिरेकांतभाक्तिरभेदोपासना तद्वानेकांतभक्तो ज्ञानीत्यर्थः । "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इत्युक्तेः ॥ ३२ ॥ एवंवित् उक्तार्थज्ञः । एकांतभक्तेभ्यः किं ददातीति चेदाह–

योऽवतीर्य यदोर्वंशे नृणां संसरतामिह ॥ यशो वितेने तच्छांत्यै त्रैलोक्यवृजिनापहम्॥३४॥नमस्तुभ्यं भगवते कृष्णायाकुंठमेधसे॥नारायणाय ऋषये सुशांतं तपईयुषे ॥ ३५ ॥ दिनानि कतिचिद्भूमन्गृहान्नो निवस द्विजैः ॥ समेतः पादरजसा पुनीहीदं निमेः कुलम् ॥३६॥ इत्युपामंत्रितो राज्ञा भगवाँल्लोकभावनः ॥ उवास कुर्वन्कल्याणं मिथिलानरयोषिताम् ॥ ३७ ॥ श्रुतदेवोऽच्युतं प्राप्तं स्वगृहाञ्जनको यथा ॥ नत्वा मुनीन्सुसंहृष्टो धुन्वन्वासो ननर्त ह ॥ ३८॥ तृणपीठबृसीष्वेतानानीतेषूपवेश्य सः ॥ स्वागतेनाभिनंद्यांघ्रीन्सभार्योऽवनिजे मुदा ॥ ३९ ॥ तदंभसा महाभाग आत्मानं सगृहान्वयम् ॥ स्नापयांचक्र उद्धर्षो लब्धसर्वमनोरथः ॥ ४० ॥ फलार्हणोशीरशिवामृतांबुभिर्मृदा सुरभ्या तुलसीकुशांबुजैः ॥ आराधयामास यथोपपन्नया सपर्यया सत्त्वविवर्धनांधसा ॥ ४१ ॥ स तर्कयामास कुतो ममान्वभूद्गृहांधकूपे पतितस्य संगमः ॥ यः सर्वतीर्थास्पदपादरेणुभिः कृष्णेन चास्यात्मनिकेतभूसुरैः ॥ ४२ ॥

पुत्रोऽपि ॥ ३२ ॥ ३३ ॥ तच्छांत्यै संसारोपशमाय ॥ ३४ ॥ ३५ ॥ गृहान् गृहेष्वित्यर्थः ॥ ३६ ॥ ३७ ॥ धुन्वन्परिभ्रमयन् ॥ ३८ ॥ अवनिजे अवनिर्निजे प्रक्षालितवान् ॥ ३९ ॥ ४० ॥ फलैरामलकादिभिरर्हणेनोशीरैस्तृणविशेषमूलैः सुवासितैः शिवैरमृतवत्स्वादुभिरंबुभिः । सुरभ्या मृदा कस्तूरीप्रमुखया । सपर्यया पूजया । यथोपपन्नयाऽनायासेन संपन्नया । भूतानुपद्रवलब्धत्वात् । सत्त्वविवर्धनं यदंधोऽन्नं तेन च ॥ ४१ ॥ अस्य श्रीकृष्णस्यात्मा मूर्तिस्तस्य निकेतैः स्थानविशेषैर्भूसुरैश्च सर्व

आत्मदः स्वरूपसाक्षात्कारप्रदः ॥ ३३ ॥ ३४ ॥ ३५ ॥ इत्यर्थ इति–सप्तम्यर्थे द्वितीया छांदसीति भावः ॥ ३६ ॥ ३७ ॥ अथ श्रुतदेवोत्सवमाह–श्रुतेति । धुन्वन्निति अंतर्भावितणिजर्थः ॥ ३८ ॥ तृणपीठानि कटानि कुशादिनिर्मितानि तान्येव वृष्यस्तासु । 'व्रतिनामासनं वृषी ' इत्यमरः । एतान् ऋषीन् । आनीतेष्वन्येषूर्णाद्यासनेषु । अवनिजेऽत्राभ्यासलोपस्त्वार्षः ॥ ३९ ॥ तदंभसाऽवनेजनजलेन । आत्मानं स्वदेहम् । गृहं भार्याऽन्वयः पुत्रादिस्ताभ्यां सहितम् । सर्वेषां मनांसि रथो वाहनं यस्य स सर्वमनोरथः । सर्वहृद्वासी हरिस्स लब्धो येन स तथा । अंतर्यामी दृग्विषयो जातोऽहो भाग्यं ममेत्यात्मानं श्लाघितवानिति भावः ॥ ४० ॥ अर्हणेन चंदनादिना । तृणविशेषस्य वीरणस्य मूलैः "स्याद्वीरणं बीरतरं मूलेस्योशीरमस्त्रियाम्" इत्यमरः । शिवैः कल्याणकरैरंबुभिस्तीर्थोदकैरित्यर्थः । तुलसीदलमालाकुशपवित्रकमलबीजपुष्पैः । सत्त्वविवर्द्धनं तमोरजोवारकं यदंधः नीवारादि ॥ ४१ ॥ स श्रुतदेवः । निकेतैः स्थानभूतैः । यद्वा–अस्यात्मा निकेत आश्रयो येषां तैः । सर्वतीर्थानामास्पदं पादरेणुः येषां तैः । "गंगाद्यास्सरितः सर्वास्तीर्थैश्च पुष्करादिभिः । तिष्ठंति सततं राजन्विप्रपादरजस्सु वै ॥" इत्यादिपुराणात् । वचनव्यत्यासेन कृष्णविशेषणं च अनुपदं विस्मयेऽप्रसिद्धमत आह–यद्वेति । अस्याकारवाच्यवासुदेवस्यात्मा वेदस्तस्य निकेतैराश्रयैः वेदस्य कृष्णात्मत्वे "वेदो नारायणः

सूपविष्टान्कृतातिथ्याञ्छ्रुतदेव उपस्थितः ॥ सभार्यस्वजनापत्य उवाचांघ्र्यभिमर्शनः ॥४३॥ श्रुतदेव उवाच ॥ नाद्य नो दर्शनं प्राप्तः परं परमपूरुषः ॥ यर्हीदं शक्तिभिः सृष्ट्वा प्रविष्टो ह्यात्मसत्तया ॥ ४४ ॥ यथा शयानः पुरुषो मनसैवात्ममायया ॥ सृष्ट्वा लोकं परं स्वात्ममनुविश्यावभासते ॥ ४५ ॥ शृण्वतां गदतां शश्वदर्चतां त्वाऽभिवंदताम् ॥ नृणां संवदतामंतर्हृदि भास्यमलात्मनाम् ॥ ४६ ॥ हृदिस्थोऽप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम् ॥ आत्मशक्तिभिरग्राह्योऽप्यंत्युपेतगुणात्मनाम् ॥ ४७ ॥ नमोऽस्तु तेऽध्यात्मविदां परात्मने अनात्मने स्वात्मविभक्तमृत्यवे ॥ सकारणाकारणलिंगमीयुषे स्वमायायाऽसंवृत रुद्धदृष्टये ॥ ४८ ॥

तीर्थास्पदपादरेणुभिः कृष्णादिभिर्यः संगमः स मम कुतोऽन्वभूदिति । अनु इति विस्मये । यद्वा आ इति वितर्के नु इति विस्मये ॥ ४२ ॥ उपस्थितः समीप उपविष्टः । भार्या भर्तव्याः स्वजना अपत्यानि च तैः सहितः । श्रीकृष्णस्यांघ्रिमभिमृशति संमर्दयतीत्यंघ्र्यभिमर्शनः ॥ ४३ ॥ यर्हीदं प्रविष्टस्तदैव दर्शनं प्राप्त इति स एव सन्मात्रो नाद्यतनीभूतस्त्वमित्यर्थः । यद्वा नोऽस्मानद्यैव प्राप्त इति न किंतु तदैव प्राप्तो यर्हीदं विश्वं स्वशक्तिभिः सत्त्वादिभिः सृष्ट्वा स्वसत्तयाऽनुप्रविष्टस्त्वम् । त्वद्दर्शनं तु परं केवलमद्यैव प्राप्तम् ॥ ४४ ॥ मायासृष्टिप्रवेशयोरविद्यासृष्टिप्रवेशौ दृष्टांततयाह । यथेति । आत्ममायया स्वाविद्यया । यद्वा आत्मनस्तव माययेति ॥ ४५ ॥ किंच । शृण्वतामिति । नित्यं श्रवणकीर्तनादिपराणाममलात्मनामपि हृद्येव त्वं भासि । मम तु लोचनगोचरस्त्वमहो भाग्यमिति भावः ॥ ४६ ॥ ननु सर्वेषां हृदि स्थितः कथं केषांचिदेव हृदि भासि मेघैः सूर्यवज्जीवोपाधिभिरावृतत्वादिति यद्युच्यते तर्हि न कस्यापि भायादित्यत आह । हृदिस्थोऽपीति । कर्मभिर्विक्षिप्तं चेतो येषां तेषामात्मशक्तिभिरहंकारादिभिरग्राह्यो व्यवहितोऽप्युपेतगुणः प्राप्तश्रवणकीर्तनादिसंस्कार आत्मा अंतःकरणं येषां तेषामंति समीपे । अव्यवहितस्त्वमित्यर्थः ॥ ४७ ॥ एतदेव प्रपंचयन्नमस्यति । नमोस्त्विति । ते तुभ्यं नमोऽस्तु अध्यात्मविदां निवृत्तदेहाद्यहंकाराणां परात्मने परमात्मत्वेन प्रकाशमानाय मोक्षप्रदायेत्यर्थः । अनात्मने देहाद्यभिमानिने जीवाय

साक्षात् " इति यमपुरुषोक्तेरेव मानत्वम् । किंच–"ब्रह्मात्मतत्त्वमवितुं प्रथमं त्वमस्माग्निप्रांस्तपोव्रतधरान्मुखतश्च साक्षात्" इति दक्षोक्तेश्च तथात्वम् ॥ ४२ ॥ अंघ्र्याभिमर्शनः पादसंवाहनं कुर्वन् ॥४३॥ "तत्सृष्ट्वा तदेवानुप्राविशत् " इति श्रुतेरिदं विश्वं यदा प्रविष्टः । इत्यर्थ इति–त्वं सृष्ट्यादिकर्ता साक्षान्नारायणो न त्वं देवदत्तादिसमः कश्चिदसीति प्राक्तनं निजानुभवं द्योतयमानो वक्तीति भावः । ननु मद्दर्शने पुनः कथं तव संसार इति चेदाह–यद्वेति।तदापाततो दर्शनेऽपि विवेकतस्तु दर्शनमद्यैव जातं विविक्तदर्शनस्यैव संसारनाशकत्वमिति भावः॥४४॥मायया सृष्टिप्रवेशौ तयोः।जाग्रद्रचना।समर्थस्य स्वप्नरचनमपि न संभवत्यतो भगवन्मायारचितजाग्रत्प्रपंचवत्स्वाप्नप्रपंचोपि तन्मायारचित एवेत्याह–यद्वेति ॥४५॥ अन्यदद्भुतमाह–किंचेति । त्वा त्वाम् । इति भाव इति–ऐकांतिकभक्तेभ्योपि मद्भाग्यमधिकमिति तात्पर्यम् ॥ ४६ ॥ अत्राक्षिपति–नन्विति । जीवोपाधिभिरहंकारादिभिः । भायात्प्रतीयात् । कर्मभिर्दानादानादिभिः । आत्मशक्तिभिर्जीवोपाधिभिः । ता आह–अहंकारादिभिः।आदिना क्रोधलोभादिग्रहः । व्यवहितोपि अज्ञानां दृष्ट्या दूरस्थोपि । इत्यर्थ इति–श्रवणादिनाऽज्ञाननिवृत्त्याऽपरोक्षीभवसीति भावः ॥ ४७ ॥ एतदेव तवाऽज्ञपरोक्षत्वविज्ञापरोक्षत्वमेव । इत्यर्थ इति–स्वरूपप्रकाशस्यैव मोक्षहेतुत्वादिति भावः । परत्वेन ब्रह्मरूपत्वेन अहं जीवानां मृत्युदोऽत्र । को हेतुरित्याशंकते–कुत

स त्वं शाधि स्वभृत्यान्नः किं देव करवामहे ॥ एतदंतो नृणां क्लेशो यद्भवानक्षिगोचरः ॥ ४९ ॥ श्रीशुक उवाच ॥ तदुक्तमित्युपाकर्ण्य भगवान्प्रणतार्तिहा ॥ गृहीत्वा पाणिना पाणिं प्रहसंस्तमुवाच ह ॥ ५० ॥ श्रीभगवानुवाच ॥ ब्रह्मंस्तेऽनुग्रहार्थाय संप्राप्तान्विद्ध्यमून्मुनीन् ॥ संचरंति मया लोकान्पुनंतः पादरेणुभिः ॥ ५१ ॥ देवाः क्षेत्राणि तीर्थानि दर्शनस्पर्शनार्चनैः ॥ शनैः पुनंति कालेन तदप्यर्हत्तमेक्षया ॥ ५२ ॥ ब्राह्मणो जन्मना श्रेयान्सर्वेषां प्राणिनामिह ॥ तपसा विद्यया तुष्ट्या किमु मत्कलया युतः ॥ ५३ ॥ न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम् ॥ सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम् ॥ ५४ ॥

परत्वेनाप्रकाशमानत्वात् । स्वात्मनः सकाशाद्विभक्तः समर्पितो मृत्युः संसारो येन तस्मै । कुत एतत्तत्राह । सकारणं महदादि कार्यमकारणं प्रकृतिस्तदुभयालिंगमुपाधिं नियम्यतया ईयुषे प्राप्तवते । अत उभयनियंतुः स्वस्मात्सकाशात्तदुभयवश्याय जीवाय विभक्तमृत्यव इत्यर्थः । नियंतृनियम्यत्वे कारणं वदन्नाह । हे स्वमायया संवृतेति । अतोऽलुप्तैश्वर्यत्वान्नियंत्रे तुभ्यं नमः । किंच रुद्धदृष्टये मायावित्वादेवान्येषां रुद्धा आवृता दृष्टिर्येन तस्मै । यद्वा स्वमायया स्वस्यासंवृता अन्येषां रुद्धा दृष्टिर्येन तस्मै इत्येकं पदम् ॥ ४८ ॥ स एवंभूतः परमेश्वरस्त्वं नोऽस्मान्स्वभृत्यान् शाध्यनुशिक्षय ॥ ४९ ॥ ५० ॥ स्वस्मिन्नादरमत्यधिकं ब्राह्मणेषु मंदमिवालक्ष्य लोकसंग्रहपरो भगवान्मत्तोऽपि ब्राह्मणेषु श्रद्धातिरेकं कुर्वित्येवं तमनुशास्ति ब्रह्मन्निति सप्तभिः । मया हृदिस्थितेन ॥ ५१ ॥ देवादिभ्योऽपि ब्राह्मणाः श्रेष्ठा इत्याह । देवा इति । ते शनैः पुनंति एते तु सद्यः । किंच देवादीनि यत्पुनंति तदप्यर्हत्तमानामीक्षया ॥ ५२ ॥ मम कला परिकलनमुपास्तिस्तया युतः ॥ ५३ ॥ किंच ब्राह्मणाराधनमेव मम

एतदिति । तत्राक्षेपे । यत उपाधिनियंता त्वमतो हेतोः । उभयनियंतुः कार्यकारणप्रेरकस्य । तदुभयवश्याय कार्यकारणाधीन । इत्यर्थ इति—नियंतैव नियम्यानां सुखदुःखविभाजको भवतीति भावः । तेन नियंत्र इति लब्धम् । जीवानां नियम्यत्वे असंवृतानाच्छादितदृष्टे । यतोऽसंवृतज्ञानोसि अतो हेतोः । अन्येषां लुप्तदृष्टित्वमाह—किंचेति । स्वमाययेति पदस्य रुद्धदृष्टय इत्यनेन पृथक्पृथक्संबंधे गौरवं मत्वाऽऽह—यद्वेति ॥ ४८ ॥ एवंभूतो वशीकृतमायः ॥ ४९ ॥ तदुक्तं श्रुतदेवोक्तम् । तं श्रुतदेवम् ॥ ५० ॥ इदानीं ब्राह्मणमहत्त्वमाह—स्वस्मिन्नित्यादिना । हृदिस्थेन सर्वदा मां हृदये वहंतो विचरंतीति तेनैते मत्तोऽधिका एते इति ध्येयम् । तदुक्तमभियुक्तैः—“पृथ्वी शेषधृता स शंभुमुकुटे कैलासवासोऽप्यसौ कैलासोपि दशाननेन तुलितो बद्धोप्यसौ वालिना । वाली राघवविष्णुना युधि जितो विष्णुः सतां मानसे तस्माद्विष्णुपरायणाद्गुरुतरो नान्योस्ति लोकत्रये ॥” इति ॥ ५१ ॥ तदेवाह—देवादिभ्योपीति । ते देवादयः । शनैश्चिरकालसेवनेन । एते तु ब्राह्मणास्तु । सद्यो दर्शनसमकालमेव । देवादिषु यच्छोधनसामर्थ्यं तदपि ब्राह्मणप्रसादकृतमेवेत्याह—किंचेति । अर्हतः कुलवृद्धाद्या अर्हत्तरा देवा अर्हत्तमा ब्राह्मणा ममापि पूज्यत्वात् । ‘स मत्परोऽहं द्विजदेवदेवः’ इति पंचमे ऋषभदेवोक्तेः । ‘सोऽहं भवद्भ्य उपलब्धसुतीर्थकीर्तिः’ इति सनकादीन्प्रति वैकुंठनाथोक्तेः । तेषामीक्षया प्रसादेन । “तीर्थयात्रा जपो दानं व्रतमिष्टादिकञ्च यत् । विप्राराधनतः सांगमन्यथा विगुणं शिव ॥” इति तंत्रशास्त्रात् ॥ ५२ ॥ प्राणिनां जीवमात्राणाम् । जन्मना ब्राह्मणदेहावाप्तिलक्षणेन । शंखक्षीरन्यायेन कैमुत्यमाह—तपआदिना, विप्रश्रैष्ठ्यं तु वक्तुं न शक्यामिति भावः ॥ ५३ ॥ मम प्रियं स्वरूपं च ब्राह्मणा एवेत्याह—किंचेति । विप्राराधनस्य प्रेष्ठत्वे हेतुमाह—इत्यर्थ इति—मत्संबंधिज्ञानं विप्रद्वारैव भवति ते एव शास्त्रद्वारा मां प्रकाशयंति,

दुष्प्रज्ञा अविदित्वैवमवजानंत्यसूयवः ॥ गुरुं मां विप्रमात्मानमर्चादाविज्यदृष्टयः ॥५५॥ चराचरमिदं विश्वं भावा ये चास्य हेतवः ॥ मद्रूपाणीति चेतं स्याधत्ते विप्रो मदीक्षया॥५६॥तस्माद्ब्रह्मऋषीनेतान्ब्रह्मन्मच्छ्रद्धयाऽर्चय ॥ एवं चेदर्चितोऽस्म्यद्धा नान्यथा भूरिभूतिभिः ॥५७॥ श्रीशुक उवाच ॥ स इत्थं प्रभुणाऽऽदिष्टः सहकृष्णान्द्विजोत्तमान् ॥ आराध्यैकात्मभावेन मैथिलश्चाप सद्गतिम् ॥ ५८ ॥ एवं स्वभक्तयो राजन्भगवान्भक्तभक्तिमान् ॥ उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥ ५९ ॥ इति श्रीमद्भाग० म० दशमस्कन्धोत्त० श्रुतदेवानुग्रहोनाम षडशीतितमोऽध्यायः ॥ ८६ ॥

प्रेष्ठमित्याह । नेति । हेतुमाह । सर्ववेदमयो विप्र इति । प्रमाणाधीनत्वात्प्रमेयस्य वेदमयो विप्रो देवमयादस्माद्रूपात्श्रेष्ठ इत्यर्थः ॥ ५४ ॥ असूयवो दोषदृष्टयः । इज्यदृष्टयः पूज्यबुद्धयः ॥ ५५ ॥ अस्य विश्वस्य हेतवो भावा महदादयः । मदीक्षया ममैव सर्वत्रेक्षया ॥ ५६ ॥ ५७ ॥ ५८ ॥ सतां वेदानां त्रिकांडविषयाणां प्रवृत्तिप्रकार मादिश्य ॥ ५९ ॥ इति श्रीमद्भागवते म० दशमस्कंधोत्तरार्धे श्री० टीकायां षडशीतितमोऽध्यायः ॥ ८६ ॥ ॥ छ ॥

प्रकाश्यापेक्षया प्रकाशक एव महानिति भावः । सर्ववेदमयत्वाद्विप्राः प्रकाशका वेदस्यैव देवप्रकाशकत्वान्मम देवत्वात् अहं प्रकाश्य इति ॥ ५४ ॥ मंदमतय इत्थं न जानंतीत्याह–दुष्प्रज्ञा इति । एवं मन्निश्चयम् । असूयवः पाषंडविभिन्नमतयः । मां मद्रूपम् । गुरुं वर्णाश्रमपूज्यम् । आत्मानं सर्वव्यापि ब्रह्मरूपम् । "ब्रह्म ब्राह्मण आत्मना" इति श्रुतेः । मामित्यनेन पुनरुक्तिर्न शंक्या सगुणाभिप्रायत्वात्तस्या इति । आदिना जलाग्न्यादि ग्रहः ॥ ५५ ॥ विप्रो धत्त इत्यनेनाऽभेदविचारो ब्राह्मणस्यैव न त्वितरेषामिति सूचितम् । प्रव्रज्याधिकारिकत्वात्तद्विचारस्येति ॥ ५६ ॥ फलितमाह–तस्मादिति । यतो विप्रार्चनमेव मदर्चनं तस्माद्धेतोः । एतानुप स्थितान् । मयि या श्रद्धाऽऽदराधिक्यं तया मच्छ्रद्धया । एवं चेत् मच्छ्रद्धया विप्रोर्चिते सति । अद्धा साक्षात् । अन्यथाऽवरप्रीत्या विप्रानर्चनेऽहं भूरिभूतिभिर्बहुविधसामग्रीभिरप्यर्चितो न भवामीत्यर्थः । यतो मे मुख्या मूर्तिर्ब्राह्मण एव "ब्रह्म ब्राह्मण आत्मना " इति श्रुतेः । "सदाऽहं विप्ररूपेण विचरामि महीतले " इति स्मृतेश्च । किञ्च–" अव्यक्तरूपिणो विष्णोः स्वरूपं ब्राह्मणा भुवि " इति पाद्मोक्तेश्च । अत एव स्वयमेव भगवतोक्तम्–" न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम् " इति ॥ ५७ ॥ इत्थमुक्तरीत्या । स श्रुतदेवः । सहस्य सादेशो बाहुलकत्वान्न । एकात्मभावेनाभेदभावेन विप्राश्श्रीकृष्णस्वरूपाः श्रीकृष्णश्च विप्रस्वरूप इत्येवंरूपेण । मैथिलो बहुलाश्वश्च । तद्गतिं श्रीकृष्णसारूप्यम् ॥ ५८ ॥ एवमुक्तविधया । भक्तानां भक्तिर्विद्यते यस्य स तथा । भक्तेषु प्रसादलक्षणस्नेहवान् । त्रिकांडविषयाणां कर्मोपास्तिज्ञानरूपात्रिकांडविषयाणाम् ॥ ५९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धे षडशीतितमोऽध्यायः ॥ ८६ ॥

परीक्षिदुवाच ॥ ब्रह्मन्ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ॥ कथं चरंति श्रुतयः साक्षात्सदसतः परे ॥ १ ॥

सप्ताशीतितमे नारायणनारदवादतः ॥ वेदैः स्तुतिर्गुणालंबा निर्गुणावधि वर्ण्यते ॥ १ ॥ वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि ॥ यस्यास्ते हृदये संवित्तं नृसिंहमहं भजे ॥ २ ॥ संप्रदायविशुद्ध्यर्थं स्वीयनिर्बंधयंत्रितः ॥ श्रुतिस्तुतिमितव्याख्यां करिष्यामि यथामति ॥ ३ ॥ श्रीमद्भागवतं पूर्वैः सारतः सन्निषेवितम् ॥ मया तु तदुपस्पृष्टमुच्छिष्टमुपचीयते ॥ ४ ॥ पूर्वाध्यायांते, "एवं स्वभक्तयो राजन्भगवान्भक्तभक्तिमान् ।उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात्" इत्यत्र सन्मार्गं सतां स्वतःप्रमाणभूतानामप्रामाण्यकारणरहितानां वेदानां मार्गं ब्रह्मपरत्वमुपदिश्य भगवानगादित्युक्तं तत्र वेदानां ब्रह्मपरत्वमघटमानं मन्वानः पृच्छति । ब्रह्मन्निति । तत्र तावन्मुख्या लक्षणा गुणभेदेन त्रिधा शब्दप्रवृत्तिः । मुख्या

भावार्थदीपिकाप्रकाशः वंशीधरी—नारायणनारदयोर्वादतः संवादेन । गुणान्कल्याणगुणानालंबते विषयीकरोति या सा गुणालंबा । निर्गुणोऽवधिर्यस्मिंस्तद्यथा भवति तथा वर्ण्यते (१) । स्वेष्टदेवं स्मरति—वागीशेति । वागीशा सरस्वती । संवित्सम्यग्ज्ञानम् (२) । संप्रदायो भक्तिरसाविघातः । स्वीयनिर्बंधोऽहं सर्वं भागवतं व्याख्यास्य इति हठस्तेन यंत्रितो बद्धः (३) । पूर्वैर्हनुमच्छंकरचित्सुखादिभिः । सारतः सारेण याथातथ्येन । संनिषेवितं व्याख्यातम् । तदुपस्पृष्टं तैरुपस्पृष्टम् । त्यक्तं सुगमत्वान्न व्याख्यातम् । उच्छिष्टमवशिष्टमुपचीयत एकत्र संपाद्यते ( ४ ) । अप्रामाण्ये कारणरहितानामिति—पुरुषवाक्यानामप्रामाण्यं भ्रम-प्रमाद-विप्रलिप्सा-करणापाटवरूपदोषचतुष्टयेन पुरुषबुद्धेर्दूषितत्वात् । भ्रमः संशयः, प्रमादोऽनवधानता, विप्रलिप्सा लोभाधिक्यम्, करणापाटवं रोगादिनेंद्रियाणां स्वविषयग्रहणे सामर्थ्याभावः । वेदस्य त्वपौरुषेयं वाक्यं वेद इति लक्षितत्वेन पौरुषेयत्वाभावादप्रामाण्ये कारणाभाव इत्यर्थः । वेदः प्रमाणमित्यत्र किं प्रमाणमित्यत आह—स्वतः प्रमाणभूतानामिति । वेदे वेद एव प्रमाणमन्यथाऽनवस्था स्यादिति भावः । तत्र भगवदुपदेशवाक्ये "वेदा ब्रह्मात्मविषया त्रिकाण्डविषया इमे" इति श्रीमुखोक्तिरूपे ब्रह्मपरत्वं केवलं ब्रह्मैव प्रतिपादयति । वेदो नान्यदित्येवंभूतत्वमघटमानमसंभवम् । किञ्चात्रान्यदपि प्रश्नबीजं ध्येयम्—पूर्वाध्याये "सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम्" इति स्वस्य स्वयमेव भगवता वेदप्रमेयत्वमुक्तम् । ब्रह्मरातेनापि तस्मिँच्छ्रीकृष्णाख्ये भगवति परब्रह्मत्वं तत्रतत्रावधारितम् । तद्यथा—'गूढं परं ब्रह्म मनुष्यलिंगम्' इति । 'परं ब्रह्म नराकृति' इति । 'तदमितं ब्रह्माद्वयं शिष्यते' इति । 'तत्रोद्वहत्पशुपवंशशिशुत्वनाट्यं ब्रह्माद्वयम्' इति । "यन्मित्रं परमानंदं पूर्णं ब्रह्म सनातनम्" इत्यादिषु । अतस्तत्रैव वेदप्रमेयत्वं संदिह्य पृच्छति—ब्रह्मन्निति । 'ब्रह्मविद्ब्रह्मैव' इति श्रुतेस्त्वमपि साक्षाद्ब्रह्मैव, वेदरूप एवेत्युत्तरकथने सामर्थ्यद्योतनं संबुद्ध्यभिप्रायः । तत्र तावत्सकलवेदादिशास्त्रे मुख्याद्यष्टशब्दवृत्तयः सन्ति । संज्ञा शब्दः, संज्ञी चार्थसंकेतः शक्तिः । सा च अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छातो भवति ।

---

१ तत्त्वबुभुत्सोः कथा वादः, स चाष्टनिग्रहस्थानानामधिकरणम् । तानि च न्यूनाधिकापसिद्धान्तहेत्वाभासपञ्चकञ्चेत्यष्टौ । यथा—स्वसिद्धान्तसिद्धान्तितानामवयवानां मध्ये यत्किञ्चिदेकस्यावचनं तन्न्यूनम्, यथा—हेत्ववयवाश्चत्वारो द्वौ वेति । हेतूदाहरणाधिक्यमधिकम्, यथा—नित्यः शब्दः श्रावणत्वाच्छब्दत्वाद्वेति । एकसिद्धान्तमाश्रित्य कथाप्रवृत्तौ तद्विरुद्धसिद्धान्तमालंब्योत्तरदानमपसिद्धान्तः, यथा—इदं द्रव्यं जगदेकप्रकृतिविकारत्वात्, एकमृत्पिण्डप्रकृतिकशरावविदिति । सांख्यमतमालम्ब्य प्रयुंक्ते का प्रकृतिः को विकार इति प्रतिवादिना पृष्टे यस्मिन्नवस्थिते धर्मिणि एकधर्मनिवृत्तौ धर्मान्तरमुत्पद्यते सा प्रकृतिः । यो धर्मो निवर्तते उत्पद्यते च स विकार इत्युत्तरमपसिद्धान्तः । तन्मतेऽसत उत्पत्तिर्नास्ति, किन्त्वाविर्भावतिरोभावमात्रं कार्यकारणयोरभेदः । कारणरूपेण सूक्ष्मतयाऽवस्थानं तिरोभावः, कार्यरूपेण स्थूलतयाऽवस्थानमाविर्भाव इति । सत्कार्यवादिमते, प्रकृतिविकारयोर्भेदाभावादनुमानमिदं न सिद्ध्यति । असतः कार्यतावादे त्वपसिद्धान्त इति । हेत्वाभासेषु बहुवक्तव्यत्वात्तेऽत्र नोक्तास्तज्ज्ञैस्तेऽनुसंधेयाः । तिष्ठत्वेतत् । वादत इति तृतीयार्थे तसिः । तथा च वादेन संवादेनेत्युक्तम् । वादशब्दस्य संवादवाचकत्वं तूपसर्गस्य त्रिधा गतित्वाद्वाद एव संवाद इति । इह समुपसर्गो धातुस्थमेव संवादार्थं द्योतयति । "धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्तते । विशिनष्टि तमेवार्थमुपसर्गगतिस्त्रिधा ॥" इति वाक्यात् वादसंवादपदयोरेकार्थतैव । अत एव तत्त्वस्य याथात्म्यस्य बुभुत्सोर्बोद्धुमिच्छोः कथाऽन्योऽन्यप्रश्नोत्तरादिकथनं वादः संवाद इत्यर्थः ।

ऽपि रूढियोगभेदेन द्विधा । रूढिश्च स्वरूपेण जात्या गुणेन वा निर्देशार्हे वस्तुनि संज्ञासंज्ञिसंकेतेन प्रवर्तते । यथा डित्थो गौः शुक्ल इति । लक्षणा च तेनैव संकेतेनाभिहितार्थसंबंधिनि । यथा गंगायां घोष इति । गौणी चाभिहितार्थलक्षितगुणयुक्ते तत्सदृशे । यथा सिंहो देवदत्त इति । यथाऽऽहुः । "अभिधेयाविनाभूतप्रवृत्तिर्लक्षणेष्यते । लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता" इति । योगवृत्तिस्तु एतत्त्रिविधवृत्तिप्रतिपादितपदार्थयोः प्रकृतिप्रत्ययार्थयोर्वा योगेन । यथा पंकजमौपगवः पाचक इत्यादि । तत्र तावद्ब्रह्मणि रूढिवृत्तिर्न संभवतीत्याह । साक्षात्कथं चरंतीति । तत्र हेतुः । अनिर्देश्ये । अनिर्देश्यत्वेऽपि हेतुं वदन्गुणवृत्तिं निराकरोति । निर्गुणे गुणवृत्तय इति । गुणैर्वर्तमानाअपि निर्गुणे कथं चरंतीत्यर्थः । निर्गुणत्वे च हेतुं वदन् लक्षणां योगं च निराकरोति । सदसतः पर इति । कार्यकारणाभ्यां परस्मिन्नसंगे केनचिदपि संबंधाभावान्न लक्षणायोगवृत्ती संभवत इत्यर्थः । एवं पदार्थत्वायोगादपदार्थस्य च वा वाक्यार्थत्वायोगान्न श्रुतिगोचरत्वं ब्रह्मण इत्यभिप्रायः ॥ १ ॥

शक्तेस्तु शब्दशब्दार्थोभयनिष्ठत्वात् संज्ञासंज्ञिसंकेतत्वम् । ततश्च स्वरूपेणारूढस्योदाहरणम्—डित्थ इति । छिन्नवृक्षस्य मूलभागो डित्थ इत्युच्यते । डित्थशब्दः संज्ञा, तद्वाच्यं छिन्नवृक्षस्य मूलपिण्डः संज्ञी, संकेतेनायमेव डित्थ इति रूढया प्रतीयते । समुदायशक्तिः रूढिः । न त्वत्रावयवकल्पनयार्थप्रतीतिरिति । एवं डवित्थोऽपि ज्ञेयः । वल्मीककीटसमुद्भूतबृहन्मृत्पिण्डो डवित्थः । सुपद्मव्याकरणे तु—"डित्थः काष्ठमयो हस्ती डवित्थस्तन्मयो मृगः" इत्युक्तम्, कलापटीकायां तु—"श्यामरूपो युवा विद्वान्सुस्वरः प्रियदर्शनः । सर्वशास्त्रार्थवेत्ता च डित्थ इत्याभिधीयते ॥" इत्युक्तम्, तन्मते त्विमौ शब्दौ जातिरूढयुदाहरणत्वेन ज्ञेयौ । जातिरूढस्योदाहरणं गौरिति । जातेर्लक्षणञ्च—नित्यमेकमनेकसमवेतं सामान्यम् । तच्च परापरपरापरभेदेन त्रिधा । सकलसामान्यव्यापकं परं सत्ता, सामान्यांतरव्यापकमपरं, परिमाणभेदेन भिन्नेषु बाल्यकौमारादियुक्तशरीरेषु देवदत्तत्वादि । कस्यचित्सामान्यस्य व्यापकं कस्यचित्सामान्यस्य व्याप्यं चान्त्यं द्रव्यत्वादि । यथा—पृथिवीत्वादि घटत्वादेर्व्यापकं सत्ताव्याप्यञ्च तदिति । तथा च—गोशब्दो हि गोत्वजातिविशिष्टपिण्डस्य वाचकः । सास्नावत्त्वं गोत्वम्, एवं महिषादिरपि । गुणरूढस्योदाहरणम्—शुक्ल इति । शुक्लशब्दस्तु शुक्लगुणवाचकः, तथा रक्तपीतादिः । रूढिवृत्तिमुक्त्वा लक्षणावृत्तिमाह—लक्षणा चेति । तेनैव संज्ञासंज्ञिसंकेतेनाभिहितो यो गंगादिरूढोऽर्थः प्रवाहस्तत्संबंधिनि तीरादौ । मुख्यार्थबाधे गौणार्थकल्पनं लक्षणा । तथा च—गंगायां घोषो वसतीत्युक्ते गंगाशब्देन लक्षणया तीरमुच्यते, गंगातीरे घोषो वसतीत्यर्थः । 'घोष आभीरपल्ली स्यात्' इत्यमरः । तथा वटेषु गावो दुह्यन्त इत्यादि ज्ञेयम् । गुणवृत्तिमाह—गौणी चेति । अभिहितो वाच्योऽर्थः । सिंहादिशब्दस्य सिंहादिरूपः पिण्डः । तत्र लक्षिता ये विक्रमप्रसह्यकारित्वक्रूरत्वादिरूपा गुणास्तद्युक्ते देवदत्ते तत्सदृशे सिंहसदृशे तद्गुणयोगात् । अयं देवदत्तः सिंहः सिंहगुणयोगादिति । एवमयं देवोऽयं राक्षस इत्यादि ज्ञेयम् । लक्षणागौणीवृत्त्योर्लक्षणं वृत्तिकारभट्टवाक्येनाह—यथाहुरिति । अभिधेयेनाविनाभूतमभिधेयाविनाभूतं तेन प्रवृत्तिरभिधेयाविनाभूतप्रवृत्तिर्लक्षणोच्यते । अभिधेयेन मुख्यावृत्त्या गंगादिशब्दवाच्येनार्थेन गंगादिस्वरूपेणाविनाभूतेन सार्धं शक्यसंबंधिनि तीरादौ गंगादिपदस्य या प्रवृत्तिर्व्यापारः सा लक्षणेत्यर्थः । यद्वा—अभिधेयस्य वाच्यार्थस्य योऽविनाभूततीरादौ संबंधस्तस्य प्रवृत्तिर्लक्षणेति पूर्वार्द्धार्थः । परार्धार्थमाह—लक्ष्यमाणगुणैः अभिधेये सिंहादिरूपे ये गुणा विक्रमप्रसह्यकारित्वादयो लक्ष्यमाणास्तैर्योगात्संबंधात्सादृश्याद्देवदत्तादौ या सिंहादिशब्दस्य प्रवृत्तिस्तस्या गौणतेष्टेति । रूढिवृत्तिमुक्त्वा योगरूढिमाह—योगवृत्तिस्त्विति । रूढिर्लक्षणा गौणी चेति वृत्तित्रयम् । एतत्त्रिविधया वृत्त्या प्रतिपादितयोः पदपदार्थयोः प्रकृतिप्रत्ययोगेन योगवृत्तिर्भवतीत्यर्थः । उदाहरणं पंकजादि योगरूढेरुदाहरणम् । पंकजमिति । पंकशब्दोपपदजनधातुः प्रकृतिः, प्रत्ययः जनेर्डः पंकाज्जायत इति पंकज इति योगरूढिवृत्तिः प्रतिपादितपदार्थत्वम् । अवयवसमुदायोभयशक्तिकमेकजातीयार्थप्रतिपादकं योगरूढम् । यथा—पंकजपदमवयवशक्त्या पंकजत्वेन रूपेण कमलमेव बोधयति समुदायशक्त्या च कमलत्वेन रूपेणात एव समुदायशक्तिरावश्यकी । पंकजमानयेत्युक्तौ शैवालादेरप्रतीतेः । किन्तु पद्म एव रूढित्वम् । तथा मंडप इत्युक्ते बहिर्मंदिरे रूढिः न तु मंडं पिबतीति यः स मंडपः । मण्ड ओदनाद्यग्रनिःसृतो रसः 'सर्वरसाग्रे मंडमस्त्रियाम्' इत्यमरः 'मंडपोऽस्त्री जनाश्रयः' इति च । औपगवः उप समीपे

गावो यस्य स उपगुस्तस्यापत्यमौपगवः । उपगुशब्दस्तावल्लक्षणया प्रवृत्तो बहुव्रीहेस्तथैव प्रतीतेः । बहुव्रीहौ तार्किकैर्लक्षणैव स्वीकृता । यथा—चित्रगुरित्यत्र गोपदं चित्रगोस्वामिलक्षकं चित्रपदं तात्पर्यग्राहकम्, तथात्राप्यु पगुरिह गोपदं समीपगोस्वामिलक्षकमुपपदं तात्पर्यग्राहकमिति ध्येयम् । उपगोः प्रकृतेः तद्धितप्रत्ययोऽण् स च गोत्रापत्ये । 'गोत्रं च चरणैः सह' इति भाष्योक्तजातिलक्षणस्य तत्र सत्त्वाज्जातिरूढिवृत्तिप्रतिपादित पदार्थत्वम् । यद्वा—उपगुपदं जातौ लाक्षणिकम् । पाचक इत्यत्र प्रकृतिः पचधातुः कृत्प्रत्ययो ण्वुल् पचतीति पाचकः स च पचनादन्यत्रापि पाचक इत्युच्यते पाचकत्वगुणयोगात् । गुणवृत्तिप्रतिपादितपदार्थत्वम् आदि पदादन्यदपि यथायथमूह्यम् । एवञ्चाष्टधा शब्दप्रवृत्तिरुक्ता । सा यथा—मुख्याया रूढेरुदाहरणं स्वरूपेण डित्थः जात्या गौर्गुणेन शुक्ल इति । लक्षणाया उदाहरणं गंगायां घोष इति । गौण्या उदाहरणं सिंहो देवदत्त इति । मुख्याया योगवृत्तेरुदाहरणं रूढया पंकजम्, जातिलक्षणया औपगवः । गुणेन पाचक इति । अथैतासां वृत्तीनां ब्रह्मण्यभावमाह—तत्रेति । तत्र तासां मध्ये तावदधुना चरन्ति गतार्था भवन्तीत्यर्थः । तत्र रूढयभावे गुणैर्मायामयैर्वर्तमानास्तत्प्रतिपादनपराः । इत्यर्थ इति—शब्दप्रवृत्तिर्मायामये भवति न तु मायाऽतीत इति भावः । इत्यर्थ इति—लक्षणायोगवृत्त्योरुभयोरपि शक्यसंबंधरूपप्रकृतिप्रत्ययसंबंधरूपसंगापरपर्यायोगसंबंधशब्दघ ठितत्वादसंगे तयोः प्रवृत्तिर्न संपद्यत इति भावः । तथैवाह—केनचिदिति । लक्षणायाः शक्यसंबंधविषयत्वात् । योगवृत्तेरपि प्रकृतिप्रत्ययार्थयोगविषयत्वान्न ते वृत्ती असंगे ब्रह्मणि प्रवर्तेते इति भावः । एवमुक्तविधया पदार्थत्वायोगाद्ब्रह्म न कस्यापि पदस्यार्थोऽतोऽपदार्थं ब्रह्म तस्यापदार्थस्य ब्रह्मणो वाक्यार्थत्वं सुतरां न भवति । पदार्थज्ञाने पदज्ञानमिव वाक्यार्थज्ञाने पदार्थज्ञानस्यैव कारणत्वात् । श्रुतिगोचरत्वं श्रुतिप्रतिपाद्यत्वम् । इत्य भिप्राय इति—श्रुतिर्हि पदकदंबवाक्यरूपास्ति ब्रह्मणश्च तदर्थत्वायोगान्न तद्विषयतेति तात्पर्यम् ॥ * ॥ **श्रीधरानुयायिनी** । पूर्वाध्यायान्ते वेदानां ब्रह्मपरत्वमुपदिश्य भगवानगादित्युक्तं, तच्चाघटमानं मत्वा राजा पृच्छति—हे ब्रह्मन्ब्रह्मणि श्रुतयः कथं चरन्तीति । ब्रह्मणो रूपादिरहितत्वेन तत्र प्रमाणान्तराप्रसक्त्या श्रुत्यैव तत्सिद्धिं मन्यसे इति ब्रह्मविदर्थकेन ब्रह्मन्निति संबोधनेन द्योत्यते तन्न संगच्छते । तथाहि—शक्तिर्लक्षणा गौणी चेति त्रिधा शब्दवृत्तिः । शक्तिरपि रूढियोगभेदेन द्विधा । तत्र प्रथमं रूढिं निराकरोति—साक्षादिति । ब्रह्मणि साक्षात्कथं चरन्तीत्यन्वयः । तत्र हेतुमाह—अनिर्देश्य इति । निर्देष्टुमनर्ह इत्यर्थः । रूढिर्हि स्वरूपेण, जात्या, गुणेन वा निर्देशार्ह एव । वस्तुनि संज्ञासंज्ञिसंकेतेन प्रवर्तते, यथा—डित्थो गौः शुक्ल इति । अत्र क्रमेण छिन्नवृक्षमूलभागात्मकस्वरूपेण, गोत्वजात्या, श्वेतरूपेण च डित्थादिशब्दप्रवृत्तिः । ब्रह्मणि चाकारजातिगुणाभा वान्न रूढया वेदानां प्रवृत्तिः । अनिर्देश्येऽपि हेतुं वदन् गौणीं निराकरोति—निर्गुण इति । निर्धर्मक इत्यर्थः । यथाश्रुतार्थे तु निर्गुणानामपि गुणकर्मादीनां जात्यादिना निर्देशप्रसिद्ध्या निर्गुणत्वस्यानिर्देश्यत्वसाधकत्वानुपपत्तिः स्यात् । वाच्यार्थवृत्तिगुणसदृशगुणात्मकधर्माधार एव गौणी वृत्तिः । यथा—सिंहो देवदत्त इत्यत्र वाच्यार्थे सिंहे ये क्रौर्यादयो गुणास्तत्सदृशक्रौर्याधारो देवदत्तः । ब्रह्मणि च कस्यापि धर्मस्यासत्त्वान्न गौणीत्याशयः । निर्गुणत्वेऽपि हेतुं वदन् लक्षणां योगञ्च निराकरोति—सदसतः पर इति । कार्यकारणाभ्यां परस्मिन्नसंग इत्यर्थः । शक्यसंबंधो लक्षणा, यथा—गंगायां घोष इति । अत्र गंगापदशक्यस्य प्रवाहस्य संबंधिनि तीरे गंगापदस्य लक्षणा । ब्रह्मणश्च केनापि संबंधाभावान्न लक्षणा । अत एव न योगेऽपि रूढिलक्षणागौणीनां मध्ये कयाप्येकया वृत्त्या प्रतिपादितयोः पदार्थयोः प्रकृतिप्रत्ययार्थयोर्वा योगेन योगवृत्तिः । यथा—पंकजमित्यत्र पदार्थयोर्योगेन योगः रूढया पंकेति जेतिपदाभ्यां प्रतिपादितयोः कर्दमजनिपदार्थयोः कर्दमापादानकजनिकर्तृत्वरूपेण योगात् पंकजपदं कमले यौगिकम् । यथा वा—औपगवः पाचक इत्यादौ प्रकृतिप्रत्ययार्थयोर्योगेन योगः । औपगवे उप समीपे गावो यस्य तस्योपगोरपत्यमित्यपत्यार्थेऽण् प्रत्ययस्तद्धितः । एवं चात्रोपगुसंबंध्यपत्यत्वरूपेण प्रकृतिप्रत्ययार्थयोर्योगेन यौगिकत्वम् । एवं पाचके पचिधातोः कृत्प्रत्ययो ण्वुल् । तथा चात्र पाककर्तृकत्वरूपेण प्रकृतिप्रत्ययार्थयोर्योगेन यौगिकत्वम्, तच्चासंगत्वादेव ब्रह्मणि न सङ्गच्छते । ननु वैदिकशब्दत्वाद्धर्मादिसंबंधरहितेऽपि शक्त्यतिशयेन श्रुतीनां प्रवृत्तिः स्यादित्याशंक्याह—गुणवृत्तय इति । गुणेषु धर्मेषु निमित्तभूतेषु सत्स्वेव वृत्तिः शक्तिलक्षणाद्या यासां ता गुणवृत्तय इत्यर्थः । लोके वेदे च शब्दार्थयोरैक्येन लौकिकशब्दवदेव वैदिकशब्दस्यापि धर्मसंबंधिन्येव वस्तुनि प्रवृत्तिरुचिता । लोके वेदे च शब्दार्थयोर्भेदे तु शक्तिग्रहासंभवेन वेदो मूक एव स्यादित्युभयथाऽपि श्रुतिभिर्निर्धर्मकब्रह्मणः प्रतिपादनमशक्यमेव । तथा च केन प्रमाणेन ब्रह्मणः सिद्धिरिति राज्ञः प्रश्नः ॥ * ॥ **तोषिणी**—ॐ सन्मार्गमादिश्येत्युक्तम् आदेशे च 'तत्तु समन्वयात्' इति न्यायेन वेदसम न्वयापेक्षा लभ्यते समन्वयपराकाष्ठा च । "वदन्ति तत्तत्वविदस्तत्त्वं यज्ज्ञानमव्ययम् । ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥" इत्युक्तलक्षणे परतत्त्व एव । तच्च कैश्चिद्वस्तुतो निर्विशेषमेव । कैश्चित्तु सृष्ट्यादिशक्ति

मदेव मन्यमानैर्ब्रह्मेति शब्द्यते । स्वाभाविकशत्यानंदविशेषमेव मन्यमानैः श्रीभागवतैः परमात्मेति, भगवानिति च । तत्रान्तर्यामित्वमात्रस्वशक्त्या भगवानेव परमात्मेति । शुद्धपरिपूर्णैश्वर्याद्यात्मिकया परमधामादौ स्वयं विलसन्त्या वशीकृतमायाशक्तकया परमशक्त्या तु भगवानिति । अद्वयत्वं च शक्तिमात्रं विना शक्तेरभावात्, तां च विना तत्कार्याभावात्, वस्त्वन्तरात्यन्ताभावाच्चेति । एवमेव खलु " एकमेवाद्वितीयं ब्रह्म" " नेह नानास्ति किञ्चन " इत्यनयोर्निषेध्यांस्तदवधिभूतांश्चार्थान्स्वयमाह मंत्रवर्णः—" न तस्य कार्यं करणञ्च विद्यते । न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते । स्वाभाविकी ज्ञानबलक्रिया च " इति । तदेवं सति मध्यमं मतं नात्याक्षिपन्सर्वशक्तिविशिष्टे परब्रह्मणि श्रीभगवति वेदस्य प्रवृत्तिं संमतां निर्विशेषे ब्रह्मण्यसंमतां मन्यमानः श्रीविष्णुरातत्वेन तद्गुणाद्यपलापनिंदामसहिष्णुः श्रीमन्मुनीन्द्राभ्युपगमेन स्वमतं पुपुक्षुः केवलतन्मात्रवेदार्थिन आक्षिपति—ब्रह्मन्निति । अथवा पूर्वोक्तं " सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम् " इत्येवाक्षेपबीजं मंतव्यम् । यतस्तत्र व्याख्यातम् वेदानां भगवत्येव तात्पर्यमंगीकृत्य पूर्वरीत्या । परमतमाक्षिपति—ब्रह्मन्निति । तैर्व्याख्यातम् । तत्र गुणेनैतावद्रूढिवृत्तिर्न संभवतीति निर्गुणे गुणवृत्तय इत्युक्तम् । गुणाः सत्त्वादयस्तत्कार्यभूताः शुक्लपीतादयश्च तदतीत इत्यर्थः । निर्गुणत्वादेव जातिनिर्देश्यत्वमपि निरस्तं गुणभेदत्वाज्जातेः, तथा स्वरूपानिर्देश्यत्वं निर्गुणत्वेनैव दृष्टश्रुतविलक्षणस्वरूपत्वात् । अत आनंदादिपदैश्च न तन्निर्दिश्यते प्रसिद्धचित्तवृत्तिविशेषादावेव तेषां संकेतितत्वादिति तेषां मतम् । अतोऽर्थापत्तिसहितानि वृत्त्यंतराणि च निर्गुणत्वादिभिर्निरस्तान्येव । स्वरूपभूतगुणास्तु तेषां मते न सन्तीति निर्विशेषब्रह्मणि तेषां संमतिर्न संभवत्येव । श्रीभागवतानां तु श्रीभगवतो विलक्षणस्वरूपत्वेऽपि विलक्षणस्वरूपपरापौरुषेयतत्तच्छब्दवाच्यतया मायिकगुणासंबद्धत्वेऽपि मायातीतानंतगुणतया सदसद्भ्यां परत्वेऽपि तेन तयोरनुस्यूततया सर्वा अपि वृत्तयः श्रीभगवति "मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहम् " इति ' वेदैश्च सर्वैरहमेव वेद्यः ' इति श्रीभगवत्संमत्या यथायथं संभवत्येव । " यतो वाचो निवर्तन्ते " इत्यादिकं त्वानंत्यादिपरमेव । केवलानाप्तौ यत इत्यवधित्वनिर्देशो न घटेत कर्मणा ज्ञानेन वाप्तमेवावधिः क्रियते न त्वनाप्तमिति । अन्यथा यच्छब्देनापि निर्देष्टुं न शक्येत । अप्राप्येति तु प्रकर्षेणैवाप्तिं निषेधयति न त्वंशेनापि । आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति मंत्रशेषे तु दर्शयिष्यत एव ज्ञानेन प्राप्तिः । एतेन यद्वाचानभ्युदितमित्याद्यपि व्याख्यातम् । अत्राप्यभिशब्दोऽस्तीति अवचनेनैव प्रोवाचेत्यपि यतो वाच इत्यभिप्रायमेव अनंततया वक्तुमशक्यत्वेनैव तस्याप्रवचनमिति । ततश्च " शास्त्रयोनित्वात् " इति श्रुतेश्च शब्दमूलत्वादिति ' तर्काप्रतिष्ठानात्' इति च न्यायात् "तं त्वौपनिषदं पुरुषं पृच्छामि " इति " नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रष्ठ " इत्यादिश्रुतेश्च शास्त्रैकप्रमाणत्वादस्त्येव सर्ववेदसंगतिः । न च—प्रमाणान्तरप्रयुक्तदोषगंधोऽपीति विवेचनीयम् । तस्मात्तैः संमते निर्विशेषे ब्रह्मणि कथं चरन्ति नैव चरन्तीत्यर्थः ॥ * ॥ **विश्वनाथी**—पूर्वाध्यायान्ते सन्मार्गमादिश्य भगवानगादित्युक्तम्, तत्र सतां भक्तानां मार्गो हि भक्तियोगो भगवद्विषयकोऽवगम्यत एव । एवं सतां ज्ञानिनां ज्ञानयोगोऽपि ब्रह्मविषयक एव ज्ञातव्यः । किंतु— ब्रह्मणः श्रुतिप्रतिपादितत्वमेव तावन्न बुद्ध्यते, इत्यतः पृच्छति—ब्रह्मन्निति । ब्रह्मणि श्रुतयः कथं साक्षादव्यवधानेनाभिधया वृत्त्या चरन्ति । यतोऽनिर्देश्ये निर्देष्टुमशक्ये जातिद्रव्यगुणक्रियासु मध्ये ब्रह्म किमपि न संभवतीति तस्यानिर्देश्यत्वम् । तथाहि—निर्गुणे गुणेभ्यः परे, सदसतः परे सत्पृथिव्यादि द्रव्यमसदनिष्पन्नस्वभावं वस्तु क्रिया ताभ्यां परस्मिन् तथा । तत्तदाश्रितत्वाज्जातेरपि परस्मिन् । यद्वा—सद्द्रव्यमसद्द्रव्यं जातिः क्रिया च ततः परस्मिन् । गुणवृत्तयः गुणैः प्रवृत्तिनिमित्तैर्जात्यादिभिर्वर्तमानाः श्रुतयो निर्जात्यादिके ब्रह्मणि कथं चरन्ति ॥ १ ॥

**नीलकंठी**—ॐ श्रीगणेशाय नमः ॥ ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यः ॥ ॥ श्रीमद्गोपालमानम्य श्रीधरोदितया दिशा । वेदस्तुतिं विवृणुते नीलकंठो यथामति ॥ १ ॥ सर्वस्मिन्वाङ्मये सारं श्रीमद्भागवतं मतम् । तत्राप्येकादशस्कन्धस्तस्य सूत्रं श्रुतिस्तुतिः ॥ २ ॥ पञ्चमान्ते यथा गीताषष्ठाध्यायार्थसूत्रणम् । स्पर्शान्कृत्वा बहिर्बाह्यानित्यादिश्लोकयुग्मतः ॥ ३ ॥ दशमान्ते तथैवैकादशस्कंधार्थसूत्रणम् । श्रीमद्भागवते चक्रे वेदस्तुत्या महामुनिः ॥ ४ ॥ अत्र नर्कुटकैरष्टाविंशत्या यदुदीरितम् । तदेवान्यत्र विज्ञेयं यन्नेहास्ति न तत्क्वचित् ॥ ५ ॥ तत्र तु प्रथमे श्लोके कृत्स्नशास्त्रार्थसूत्रणम् । अध्यारोपापवादाभ्यां द्वितीये ब्रह्मलक्षणम् ॥ ६ ॥ कर्मन्यासो विविदिषोर्विदुषश्च तृतीयके । चतुर्थे बंधमूलञ्च सनाशोपायमीर्यते ॥ ७ ॥ समष्ट्युपास्तेर्ब्रह्मातिशेषत्वं पञ्चमे स्थितम् । मूर्तिध्यानपथेनैव षष्ठे ब्रह्मातिरीर्यते ॥ ८ ॥ स्वकर्मणार्चयेद्विष्णुं मुमुक्षुरिति सप्तमे । अवतारकथां विष्णोः श्रृणुयादिति चाष्टमे ॥ ९ ॥ अभक्तनिन्दा नवमे दशमे तु विमुक्तये । कामाद्द्वेषाद्भयाद्वापि ध्याता मूर्तिर्हरेर्भवेत् ॥ १० ॥ अतर्क्यमांध्यजं चित्तमात्रं

श्रीशुक उवाच ॥ बुद्धींद्रियमनःप्राणाञ्जनानामसृजत्प्रभुः ॥ मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥ २ ॥

उत्तरमाह । बुद्धींद्रियेति । बुद्ध्यादीनुपाधीन् जनानामनुशायिनां जीवानां मात्राद्यर्थं प्रभुरीश्वरोऽसृजत् । मीयंत इति मात्रा विषयास्तदर्थम् । भवार्थं भवो जन्मलक्षणं कर्म । तत्प्रभृति कर्मकरणार्थमित्यर्थः । आत्मने लोकांतरगामिने।आत्मनस्तत्तल्लोकभोगायेत्यर्थः।अकल्पनाय कल्पनानिवृत्तये मुक्तय इत्यर्थः । अर्थधर्मकाममोक्षार्थमिति क्रमेण पद चतुष्टयस्यार्थः । जनानामिति वदन् जीवार्थमीश्वरस्य सृष्ट्यादिषु प्रवृत्तिरिति दर्शयति । प्रभुरितीश्वरस्योपाधिवश्यताभावेन नित्यमुक्ततां दर्शयति । अयमभिप्रायः । सगुणमेव गुणैरनभिभूतं सर्वज्ञं सर्वशक्तिं सर्वेश्वरं सर्वनियंतारं सर्वोपास्यं सर्वकर्मफलप्रदातारं समस्तकल्याणगुणनिलयं सच्चिदानंदं भगवंतं श्रुतयः प्रतिपादयंति । "यः सर्वज्ञः

जगदिति त्रिभिः । ज्ञानेनाधिकृतः शुद्धब्रह्मोपास्त्यापि मुक्तये॥११॥इंद्रियैस्तर्प्यते यः स सर्वशक्तिभृदित्यपि । उक्तं पञ्चदशे सोऽयं सर्वस्रष्टेति षोडशे॥१२॥यं बहुत्वं प्रधानस्य हेतुत्वञ्च द्वयोर्हतम् । ततो द्वयोर्मुमुक्षूणां शरणं शिवसद्गुरू ॥ १३ ॥ वैराग्यमेकविंशे च द्वाविंशेऽभ्यास ईर्यते । श्रुतार्थमननं द्वाभ्यां ततः परमुदीरितम् ॥ १४ ॥ बंधमोक्षव्यवस्था च पञ्चविंशे समीरिता । निःशेषकामविलयः षाड्विंशे मोक्षलक्षणम् ॥ १५ ॥ जीवन्मुक्तिः सप्तविंशेऽष्टाविंशे तु गिरां गतिः । अतान्निरसनेनैव निर्गुणात्मनि वर्णिता ॥ १६ ॥ वेदान्तक्षीरधेः सारं श्रुतिगीतिसुधां बुधाः । पायंपायं प्रतृप्यन्तु श्रीमद्व्यासप्रसादतः ॥ १७ ॥ श्रुतिशिरोम्बुनिधिर्गहनः क्व वा जडतरा मम बुद्धिरियं क्व वा । तदपि तं गुरुलक्ष्मणपादुकातरणिसंश्रयणेन तितीर्षति ॥ १८ ॥ पूर्वाध्यायान्ते आदिश्य सन्मार्गमिति ब्रह्मप्राप्तिमार्गमुपदिश्येत्युक्तम्, तदेतद्वाचामगोचरस्य ब्रह्मण उपदेश्यत्वमाक्षिपन्परीक्षिदुवाच–ब्रह्मन्नित्यादि । अनिर्देश्यत्वे निर्गुणत्वं हेतुः । निर्गुणत्वे सदसतः परत्वं हेतुः । सदसती हि कार्यकारणे त्रिगुणमयमायारूपे । तत्रैव खलु शब्दानां वृत्तिः संभवति, न तु मायातीते ब्रह्मणि ॥ १ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**–अतन्निरसनेन ब्रह्मणि श्रुतयश्चरन्ति । तन्निषेधार्थं बुद्ध्यादीनुपाधीन् जनानामसृजदित्यध्यारोपापवादाभ्यां 'निष्प्रपञ्चं प्रपञ्च्यते' इत्युक्तेर्विनाध्यारोपमपवादो न संपनीपद्यत इत्युत्तरमाह–बुद्ध्यादीन् । इहादिनेन्द्रियादिग्रहः । उपाधीयते विषयतया स्वीक्रियते इत्युपाधिः । अनुशायिनां ब्रह्मणा सह प्रलये ईशं प्रविश्य शयित्वा जातानां मीयन्ते प्रमितिविषयीक्रियन्ते इति मात्राः । इत्यर्थ इति–जन्मना कर्म लक्ष्यते, इन्द्रियैर्विना कर्मानिष्पत्तेरिति भावः । इत्यर्थ इति–मनो विना "यतोयतो धावति दैवचोदितं मनो विकारात्मकमाप पञ्चसु" इत्याद्युक्तेर्लोकांतरभोगो न संभवतीति भावः । कल्पना माया । इत्यर्थ इति–प्राणं विना मोक्षोऽपि न संभवति । वक्ष्यति च "आहारार्थं समीहेत युक्तं तत्प्राणधारणम् । तत्त्वं विमृश्यते येन यत एतद्विमुच्यते ॥" इति श्रीकृष्णः । प्रभुरिति–कर्तुमकर्तुमन्यथा कर्तुं समर्थत्वादेव नित्यमुक्तः । अत्र लक्षणापरैक्यपरानिषेधपरोपासनापरसृष्टिपराणां पञ्चविधानां श्रुतीनां सगुणालंबनं निर्गुणे पर्यवसानमिति दर्शयितुमाह–अयमभिप्राय इति । यद्यप्यष्टविधानां वृत्तीनां मध्ये उक्तरीत्या कापि वृत्तिर्ब्रह्मणि न संभवति, तथापि सर्वश्रुतीनां परंपरादिना ब्रह्मपरत्वं घटत एवेत्याह–सगुणमेवेति । सगुणं समस्तगुणाश्रयं तैर्गुणैरनभिभूतमवशीकृतं पूर्वोक्तमर्थं क्रमेणाह–यः सर्वज्ञ इत्यादिश्रुतिभिः । "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं

सर्ववित् । यस्य ज्ञानमयं तपः । सर्वस्य वशी सर्वस्येशानः । यः पृथिव्यां तिष्ठन्पृथिव्या आंतरः । सोऽकामयत बहु स्याम् । स ऐक्षत तत्तेजोऽसृजत । सत्यं ज्ञानमनंतं ब्रह्म." इत्याद्याः । तथाभूतेश्वरतां तावत्संसारिणो जीवस्य तन्निवृत्तये तत्त्वमसीत्यादिवाक्यानि बोधयंति । तत्र च तत्त्वंपदयोः सामानाधिकरण्यं प्रतीयते । तच्च प्रकारां तरेणाघटमानं ब्रह्मणि पर्यवसानं गमयति । तथाहि । न तावद्वैश्वदेव्यामिक्षेतिवदुभयोरेकार्थाभिधानेन सामानाधिकरण्यम् । यथोक्तम् । "आमिक्षां देवतायुक्तां वदत्येवैष

तपः " सर्वज्ञतोदाहरणम् । सामान्येन सर्वं जानातीति सर्वज्ञः, विशेषेण सर्वं वेत्तीति सर्ववित् । यस्य ज्ञानमयं ज्ञानविकार एव, सर्वज्ञतालक्षणं तपः, अनायासलक्षणमित्यर्थः । सर्वस्य वशीति—सर्वस्य ब्रह्मेंद्रादेर्वशी सर्वो ह्यस्य वशे वर्तते "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठतः" इति श्रुतेः । भारते च—"ससुरासुरगन्धर्वसयक्षोरगराक्षसम् । जगद्वशे वर्ततेऽदः कृष्णस्य सचराचरम् ॥ " इत्यनेन सर्व शक्तिता दर्शिता । न केवलं वशी, सर्वस्येशान ईशिता च । अनेन सर्वेश्वरता " यः पृथिव्यां तिष्ठन् पृथिव्या अंतरः पृथिवी यस्य शरीरं पृथिवी यं न वेद यः पृथिवीमंतरो यमयत्येष त आत्मांतर्याम्यमृतः " इति । अस्यार्थः—यः पृथिव्यां तिष्ठन् पृथिवीतोंतरो भवति, अन्तरोऽभ्यंतरो भूत्वा पृथिवीं यमयति नियमयति, एष ते तवांतर्यामी अमृतः सदैकरसः, इत्यनेन सर्वनियंतृत्वं सर्वोपास्यत्वं सर्वकर्मफलदातृत्वञ्चोक्तम् । श्रीभगवद्गीतासु च—" योयो यांयां तनुं भक्तः श्रद्धयार्चितुमिच्छति । तस्यतस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान्मयैव विहि तान्हितान् ॥ " इति । अनेनांतर्यामिणः श्रीकृष्णस्यैव तत्तद्देवतारूपेणोपास्यत्वं सर्वकर्मफलदातृत्वञ्चोक्तम् । सकलकल्याणगुणनिलयस्योदाहरणमाह—" सोऽकामयत बहु स्यां स ऐक्षत तत्तेजोऽसृजत " इति । अर्थश्च—यत आकाशः संभूतः सोऽकामयत कामितवान् कथं बहु स्यां बहुतरं यथा भवति तथा स्यां भवेयम्, स आत्मा सर्वज्ञस्वभावत्वात् एक ऐक्षत अद्राक्षीत् । ईक्षतेति पाठेऽडागमाभावश्छांदसः । स तत्प्रत्यक्षसिद्धं तेजोऽसृजत सृष्टवान् । ईश्वरस्य कामनादीनां लोकोपकारार्थत्वेन तादृशकल्याणगुणाभिव्यक्तेः । सच्चिदानंदत्वोदाहरणमाह—" सत्यं ज्ञानमनन्तं ब्रह्म " आदिना " विज्ञानमानंदं ब्रह्म " इति ग्रहः । अर्थस्तु—यद्रूपेण यन्निश्चितं तद्रूपं यतो न व्यभिचरति तत्सत्यं ब्रह्म । असत्यनिवृत्त्यर्थं विशेषणम् । असत्यतानिवृत्त्या विकारनिवृत्तिः, तन्निवृत्त्या च कारणता प्राप्ता । निर्विकारस्त्वावस्थो मृदादिरेव कारणं भवति न तु विकारो घटादिरिति । कारणस्य च कारकवस्तुत्वात् " कर्ता कर्म च करणं संप्रदानं तथैव च । अपादानाधिकरणमित्याहुः कारकाणि षट् ॥ " इत्युक्तषट्कारकान्यतमरूपत्वात् मृदादिवदचिद्रूपता प्राप्ता तन्निवृत्तये ज्ञानं ब्रह्मेति । ज्ञानं ज्ञप्तिरवबोधस्तद्रूपमित्यर्थः । लौकिकज्ञानस्यान्तवत्त्वादिदर्शनात्प्राप्तं ज्ञानरूपस्यापि ब्रह्मणोन्तवत्त्वं तन्निवृत्त्यर्थमनंतमिति विशेषणम् । एतेन सच्चिदानंदरूपत्वं स्पष्टमेवोक्तम् । एवं लक्षणापराणां श्रुतीनां सगुणपरत्वं प्रदर्श्य, स्वरूपपराणामपि स्वरूपपरत्वञ्च प्रदर्श्य, ऐक्यपरत्वश्रुतीनामपि सगुणप्रतिपादनमुखेन निर्गुणे पर्यवसानं दर्शयन्ति स्वामिचरणाः—तथाभूतेत्यादिना । निर्गुणे पर्यवसानमित्यन्तेन तथाभूतेश्वरतां पृथिव्यादिनियमनरूपामीश्वरताम् । तावदधुना । तन्निवृत्तये संसारनिवृत्तये । इत्यादिवाक्यानीत्यत्रादिना " प्रज्ञानं ब्रह्म " " अहं ब्रह्मास्मि " "अयमात्मा ब्रह्म" इत्यादीनि गृह्यन्ते । तद्ब्रह्म त्वमसि भवसि नान्यः संसारीत्यर्थः । तत्र च महावाक्ये तत्त्वंपदयोः सामानाधिकरण्यं प्रतीयते । अपर्यायपदानामेकार्थवृत्तित्वं सामानाधिकरण्यम् । पर्यायत्वञ्च स्वरूपभिन्नत्वे सत्येकार्थबोधकत्वं घटकलशवत् । तच्च सामानाधिकरण्यम् । तथाहीति । " आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः " इत्यमरः । केचित्तु " पय एव घनीभूतमामिक्षेत्यभिधीयते " इत्याहुः । शृते स्थाल्यां कृतपाके उष्णे दुग्धे या विकृतिः सामिक्षेत्यर्थः । विश्वेदेवस्येयमामिक्षा वैश्वदेवी विश्वेदेवस्य संबंधिनी आमिक्षा भवति न तु विश्वेदेवत्वं प्राप्नोति अत आमिक्षाविश्वेदेवपदयोः सामानाधिकरण्यं नानर्थयोरिति । यथोक्तं भट्टैः—' आमिक्षां देवतायुक्तां वदत्येव ' इत्यादि । आमिक्षां देवतायुक्तां विश्वदेवसंबद्धाम् एष ताद्धितोऽण् प्रत्ययो वदति कथम् आमिक्षापदस्य सान्निध्यात्सन्निहितत्वात् तस्यैव तद्धितप्रत्ययान्तस्यैव वैश्वदेवीपदस्यैव विषये आमिक्षापदस्यार्पणं तद्धितप्रत्ययेन क्रियत इति । यद्वा—ननु वैश्वदेव्यामिक्षापदयोर्नैकार्थाभिधायकत्वं वैश्वदेवीपदेनामिक्षाभिधाने आमिक्षापदप्रयोगो नोचितः, ' उक्तार्थानामप्रयोगः ' इति न्यायात् । किञ्च—विश्वेदेवस्तुतिपराया ऋगादेरपि वैश्वदेवीपदार्थत्वसंभवात्कथमामि

तद्धितः ॥ आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम्" इति । कुतः । भिन्नार्थत्वात् । न चाजहत्स्वार्थया निरूढलक्षणया विशेषणविशेष्यभावेन नीलमुत्पलमितिवत् । यथोक्तम् । "स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणम्" इत्यादि । कुतः । विरुद्धार्थत्वेन तदयोगात् । न च जहत्स्वार्थत्वेन संबंधिलक्षणया कुसुमितद्रुमा गंगेतिवत् । कुतः । एकार्थत्वस्य विवक्षितत्वात् । अतो जहदजहत्स्वार्थलक्षणया सोऽयं देवदत्त इतिवद्विरुद्धांशत्यागेनानुगतचिदंशेनैकार्थेन सामानाधिकरण्येन निर्गुणे पर्यवसानम् ।

क्षामात्रार्थकत्वमिति चेत्तत्राह—यथोक्तमिति । एष देवतार्थस्तद्धितोऽण्प्रत्ययो विश्वेदेवदेवतायुक्तामामिक्षां वदत्येव न तूक्तदूषणभिया न वदतीति शंकनीयम् । तर्ह्यामिक्षापदसान्निध्यवैयर्थ्यं तत्राह—आमिक्षापदसान्निध्यादिति । वैश्वदेवीपदेन विश्वेदेवताकः कश्चन द्रव्यविशेष इति सामान्येनामिक्षापदोक्तावपि कोऽसौ द्रव्यविशेष इत्यपेक्षायामामिक्षापदसान्निध्यादामिक्षारूप इत्यवगम्यते । वृक्षमात्रं पश्येत्यादौ सामान्यविशेषशब्देषु तथा दर्शनात् । तथा चामिक्षापदसान्निध्येन तस्यैव तद्धितस्यैव सामान्यतो वाचकस्य विशेषतो विषयार्पणं भवतीत्यर्थः । अनेन प्रकारेणैकार्थत्वाभावं प्रदर्श्य कुत इति हेतुमाशंक्य समाधत्ते—भिन्नार्थत्वादिति । तद्धितप्रत्ययेन पदयोः सामानाधिकरण्यं बोधितं न त्वर्थयोरिति भिन्नार्थतैवोभयोः । पुनः प्रकारान्तरेण दर्शयति—न चेति । न जहत् अत्यजन् स्वार्थो नीलपीतादिरूपो यया साऽजहत्स्वार्था तया तृतीयांतान्यपदार्थबहुव्रीहिः । निर्गतं रूढं प्राकट्यं प्रादुर्भावो यस्याः सा निरूढा सा चासौ लक्षणा चेति निरूढलक्षणा तया । यद्वा—नितरां रूढा निरूढा पुनः पूर्ववत् । अनादिपरंपरागतया न सांप्रतं रचितयेत्यर्थः । विशेष्यमुत्पलं विशेषणं नीलं नीलमुत्पलमितिवत् । सामानाधिकरण्यं न च कुतः विरुद्धार्थत्वेन तत्त्वंपदार्थयोः परोक्षत्वापरोक्षत्वरूपविरुद्धार्थत्वेन तस्या निरूढलक्षणाया अयोगात् अभावात् । यथोक्तं भट्टैः—"स्वरूपसत्त्वमात्रेण नहि किञ्चिद्विशेषणम् । स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणम् ॥" अर्थस्तु—स्वाकारेण विशेष्यमनवभास्य किञ्चिदपि वस्तु स्वरूपसत्त्वमात्रेण स्वस्थित्यैव विशेषणं नहि न भवति, किन्तु येन पीतनीलादिना स्वबुद्ध्या स्वाकारज्ञानेन विशेष्यमुत्पलादि रज्यते भ्रमरादिभ्यो व्यावर्त्यावभास्यते तद्विशेषणमित्यर्थः । अयं भावः—नीलगुणोत्पलद्रव्ययोर्गुणगुणिनोरविरुद्धस्वभावत्वेन विशेषणविशेष्यभावः कल्प्यतेऽनुपपत्तेरभावात् । भवेत्तत्र जहत्स्वार्था निरूढलक्षणा । अत्र तु परोक्षत्वापरोक्षत्वादिविरुद्धार्थत्वेन विशेषणविशेष्यभावकल्पनानुपपत्तौ न निरूढलक्षणेति । अनेन विशेषणविशेष्यभावप्रकारेण चैकार्थत्वं प्रदर्श्य पुनः प्रकारान्तरेण दर्शयति—न चेति । जहत्त्यजन्स्वार्थो यया सा जहत्स्वार्था, सा चासौ लक्षणा चेति जहत्स्वार्थलक्षणा तया कुसुमिता जातपुष्पा द्रुमा यस्यां सा कुसुमितद्रुमा गंगा इतिवत्सामानाधिकरण्यं न च कुतस्तत्त्वंपदयोरेकार्थत्वस्य विवक्षितत्वात् वक्तुमिष्टत्वात् । संबंधिलक्षणायां तु संबंधिनः संबंधस्य च स्फुरणान्नैकार्थत्वमिति भावः । प्रकारान्तरेणाघटमानं प्रदर्श्य येन प्रकारेण ब्रह्मणि पर्यवसानं तद्दर्शयति—अत इति । यतः प्रकारान्तरेण सामानाधिकरण्यं न संभवति अतो हेतोः । जहती त्यजत्यजहती न त्यजती स्वार्थौ ये ते तत्त्वंपदे यस्यां सा जहदजहत्स्वार्था सा चासौ लक्षणा चेति तया । एकार्थत्वेन निर्गुणे पर्यवसानं सोऽयं देवदत्त इति । यथा कश्चित् काश्यां दृष्टं देवदत्तं पुनर्बहुकालेन काश्यामपश्यत् देशकालविप्रकर्षात्प्रत्यभिज्ञातुमसमर्थः पूर्वदृष्टादन्यं पश्चाद्दृष्टं मन्यते तमन्यः प्रत्यभिज्ञाकुशलः प्रतिबोधयति सोऽयं देवदत्त इति यस्त्वया पूर्वं दृष्टः । तत्र तच्छब्देन विप्रकृष्टदेशकालविशिष्टोऽर्थोऽभिधीयते इदंशब्देन च सन्निकृष्टदेशकालविशिष्टोऽर्थोऽभिधीयते । तदुक्तम्—" इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ॥ " इति । विप्रकृष्टं विदूरम्, सन्निकृष्टं सन्निहितम्, न च सन्निकृष्टविप्रकृष्टयोरेकार्थत्वं संभवति तस्माद्विरोधिविशेषणसंबंधपरित्यागेन भागलक्षणया सोऽयमिति पदद्वयं देवदत्तस्य स्वरूपमखण्डितं प्रतिपादयति । तथा जीवोऽपि परमार्थतो ब्रह्मैव सन्नविद्यादोषवशादसंसारिणो ब्रह्मणोऽत्यन्तभिन्नं संसारिणमात्मानं मन्यते तं श्रुतिर्बोधयति तत्त्वमसीति । तत्र तत्पदेन प्रकृतं परोक्षं वस्तु कथ्यते । प्रकृतमेकमद्वितीयमीक्षितृ जगत्कारणं ब्रह्म त्वंपदेनाप्यविद्याद्युपाधिपरिच्छिन्नो नित्यापरोक्षः प्रत्यगात्माऽभिधीयते । न च परोक्षापरोक्षपरिच्छिन्नापरिच्छिन्नयोरेकत्वं संभवति । तस्मात्तत्पदार्थगतं

अस्थूलादिवाक्यानां तु साक्षादुपाधिनिषेधेन तत्पदार्थशोधन उपयोगान्निर्गुण एव पर्यवसानम्।तथा चात्रैवोपक्रमे स्वसृष्टमिदमापीयेत्यादिना विशिष्टमालंबनं वक्ष्यति।अंते च "श्रुतयस्त्वयि हि फलंत्यतन्निरसनेन भवन्निधनाः"इत्युपसंहारिष्यंति। उपासनादिवाक्यानां तु क्रियार्थप्रवृत्तसृष्ट्याद्यवलंबनेन ज्ञानसाधनविधानेन तत्परत्वमित्येषा दिक् ॥२॥

परोक्षाऽपरिच्छेदादिकं त्वंपदार्थगतमपरोक्षपरिच्छेदादिकं परित्यज्य जहदजहत्स्वार्थलक्षणया तत्त्वंपदद्वयं सच्चिदेकरसमखण्डमात्मतत्त्वं प्रतिपादयति । असिपदमपि प्रकृत्यर्थस्य सतः प्रत्ययार्थस्य च प्रतीचः संवट्टनेनानुवददाभ्यां संबध्यते । इति निषेधपरश्रुतीनां तत्परत्वमाह–अस्थूलेत्यादि । अस्थूलमत एव ह्रस्वमदीर्घमित्यादिवाक्यानामुपाधिनिषेधेन स्थूलत्वाद्युपाधिनिषेधेन साक्षाद्ब्रह्मणि पर्यवसानमित्यर्थः । सगुणगतानामिव स्थूलत्वाद्युपाधीनामनुवादाद्विशिष्टालंबनत्वमस्त्येव । विशिष्टं सगुणम् । उपासनापरसृष्टिपरश्रुतीनां तत्परत्वमाह–उपासनादिवाक्यानामत्रादिना सृष्ट्यादिग्रहः । क्रियार्थो यज्ञार्थस्तत्र प्रवृत्तानां सृष्ट्यादिवाक्यानां "यतो वा इमानि भूतानि जायन्ते " इत्यादिवाक्यानां यज्ञार्थैव प्रवृत्तिः । यतो वा एतानि जातानि तं यजतेति । एवं " स ऐक्षत " इति य ऐक्षत तं यजत इत्यादिष्वपि ध्येयम् । मुख्या प्रवृत्तिस्तु वैराग्यार्थेत्याह–आगमापायिसृष्टिस्थितिप्रलयानिरूपणेन ज्ञानसाधनवैराग्यविधानं तेन तद्वारा तत्परत्वं ब्रह्मणि पर्यवसानम् । उपासनावाक्यैस्तूदराद्युपाध्यालंबनसगुणब्रह्मनिरूपणेनांतःकरणशुद्धिलक्षणं यत् ज्ञानसाधनविधानं तेन ब्रह्मणि पर्यवसानम् । कर्मादिपराणां " यावज्जीवमग्निहोत्रं जुहुयात् " इत्यादिकानां श्रुतीनां विविदिषायां विनियोगादनुपादानं तमेतं वेदानुवचनेन यज्ञेनेत्यादिश्रुतेर्ज्ञानेच्छायामुपयोगादत्र न ग्रहणमिति ज्ञेयं सुधीभिरिति । अथान्यः सिद्धान्त उच्यते–निर्गुणे ब्रह्मणि सगुणाः श्रुतयः कथं चरन्तीतिप्रश्नस्य सिद्धान्तः स्वामिचरणैर्लक्षणापरादिश्रुतीनां यथा ब्रह्मणि तात्पर्यं तथा प्रदर्श्य कृत एव । तथाप्यत्राशंकास्ति सा यथा–" बुद्धीन्द्रियमनःप्राणाञ्जनानामसृजत्प्रभुः । मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥" इति लोकानां प्रभुरसृजदिति कथमुक्तं श्रीशुकदेवेन प्रश्नोत्तराऽनुपयोगित्वादिवेति–अत्रोच्यतेऽस्माभिः–बुद्धिर्हि द्विविधा–व्यवसायात्मिकाऽव्यवसायात्मिका चेति, तत्राव्यवसायात्मिका हि त्रिवर्गसाधने सत्त्वादिगुणभेदेन त्रिधा भूत्वाऽनंता बुद्धयः स्युः । "व्यवसायात्मिका बुद्धिरेकेह कुरुनंदन । बहुशाखा ह्यनंताश्च बुद्धयोऽव्यवसायिनाम् ॥" इति । " सुखमात्यंतिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् " इत्युक्तेः । अतो बुद्धेः सर्जनं वेदोक्तकर्मप्रतिपादितभोगानंतरं मोक्षार्थमिति। इन्द्रियादिसृष्टेः प्रयोजनं यथा–इन्द्रियं वागिन्द्रियं तस्य मुख्यत्वात् । मुख्यत्वं तु वचनपूर्वकत्वात् सर्वव्यवहारासिद्धेः । ततश्च वाङ्मनःप्राणाः ऋग्यजुःसामवेदा भवन्ति । तथा च श्रुतिः–" ऋचं वाचं प्रपद्ये मनो यजुः प्रपद्ये साम प्राणं प्रपद्ये " इति । अन्येऽपि लोकादयः सर्वे वागादय एव भवन्तीत्यत्र सम्यक्प्रबोधनार्थमन्याः श्रुतयोऽपि लिख्यंते–"त्रीण्यात्मने कुरुतेति । मनो वाचं प्राणं तान्यात्मने कुरुत एव एतन्मयोऽयमात्मा वाङ्मयो, मनोमयः, प्राणमयः । त्रयो लोका एत एव–वागेवायं लोको, मनोऽन्तरिक्षलोकः, प्राणोऽसौ लोकः । त्रयो वेदा एत एव–वागेव ऋग्वेदो, मनो यजुर्वेदः, प्राणः सामवेदः । देवाः पितरो मनुष्या एत एव–वागेव देवाः, मनः पितरः, प्राणो मनुष्याः । माता पिता प्रजैत एव–वाङ्माता, मनः पिता, प्राणः प्रजा । विज्ञातं विजिज्ञास्यमविज्ञातमेत एव "यत्किञ्चिद्विज्ञातं वाचस्तद्रूपं वाग्घि विज्ञाता वागेनं तद्भूत्वावति, यत्किञ्चिद्विजिज्ञास्यं मनसस्तद्रूपं मन एनं तद्भूत्वावति, यत्किञ्चिदविज्ञातं प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः प्राण एनं तद्भूत्वावति; तस्यैव वाचः पृथिवी शरीरं ज्योतीरूपमग्निः यावत्येव वाक्तावती पृथिवी तावानयमग्निः, अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यः, तद्यावदेव मनस्तावती द्यौस्तावानसावादित्यः, अथैतस्य प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्रः, तद्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रः । त एते सर्व समाः सर्वेऽनन्ताः स यो हैतानंतवत उपास्ते, अंतवंतं लोकं जयति । अथ यो हैताननंतानुपास्ते सोऽनंतलोकं जयति " इति । सुगमत्वान्न व्याख्यायते । इहामुत्रानंतलोकसुखभोगाय त्रीणि मनो वाचं प्राणम् एतान्यात्मने आत्मार्थं यूयं कुरुत यत एतन्मयोऽयमात्मा यतस्त्रयो वेदा एत एव असौ लोकः परलोकः यत्किञ्चिद्विज्ञातं विशेषेण ज्ञातं वस्तु तत्सर्वं वाचो रूपमतो वाक्तद्विज्ञातं वस्तु भूत्वा एनं पुरुषं संकटादावति रक्षति एवमुत्तरत्रापि ज्ञेयम् । ज्ञातुमिच्छा जिज्ञासा यत्र विजिज्ञासा वर्तते तद्विजिज्ञास्यम् । अंतवतो विनाशवतः । ह स्फुटम् । जयति प्राप्नोति स्पष्टमन्यत् । अकल्पनायेत्यस्यार्थः । एवं धर्मार्थकामान् वेदोक्तमार्गेण संसेव्य विमुक्तये विरज्य परमात्मानं

ज्ञात्वा प्रव्रजेदित्यत्र श्रुतिः—" एतमेव विदित्वा मुनिर्भवति एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति । एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रज्ञानं कामयन्ते । किं प्रजया करिष्यामो येषां नोऽयमात्मा लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा सा लोकैषणा उभे ह्येषणे एव भवतः तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्ये तिष्ठासेत्, बाल्यञ्च पाण्डित्यञ्च निर्विद्याथो मुनिरमौनं मौनं च निर्विद्याथो ब्राह्मणः स ब्राह्मणः येन स्यात्तेनेदृश एवातोऽन्यदार्तम्" इति सुगमम् । तस्मादिति ब्राह्मणः ब्राह्मणजातिगुणविशिष्टः बाल्येन बालस्वभावेन तिष्ठासेत् स्थातुमिच्छेत् । तर्हि सदा बाल्येन तिष्ठेत् नेत्याह—बाल्यं च पांडित्यं च निर्विद्य त्यक्त्वा मुनिर्यतवाग्भवेत् । तर्हि किं सदा मौनेन तिष्ठेत् नेत्याह—मौनं चामौनं च हित्वा ब्राह्मणः ब्रह्मनिष्ठः स्यात् । स ब्राह्मणः केन स्यादित्यस्योत्तरम्—येनेति । येन ब्राह्मणः स्यात्तेनानिर्वचनीयेन ब्रह्मात्मलाभेन ईदृश एवोक्तप्रकारेण ब्राह्मण एव स्यात् तद्वस्तु अतः पांडित्यादेरसतः अन्यत्पृथगेवार्तं सत्यमिति । तस्मादेतेन बुद्धीन्द्रियेत्यादिश्लोकेन जनानां चतुर्वर्गं प्रतिपादयंत्यः श्रुतयो यथा ब्रह्मणि चरन्ति तथा प्रदर्श्य शुकदेवेन राद्धान्तः कृतः । नीलकण्ठस्तु तदेतन्मनो वाचं प्राणं तान्यात्मने कुरुतेत्येतामेव श्रुतिमनुसृत्य परिहरन् श्रीशुक उवाचेत्याह—तत्र श्रुतौ मनसा बुद्धिज्ञानेंद्रियाणि वाचा कर्मेंद्रियाणि च संगृह्य तेषां सप्राणानामात्मप्रकाशार्थत्वमुक्तम् । अत्र तु विषयविभागेनेति विशेषः । तत्र विषयपरिच्छेदो मात्रा तदर्थं प्रभुर्जनानां बुद्धिमसृजत् । परिच्छिद्यन्ते हि बुद्ध्याऽतींद्रिया अप्यपूर्वादयः । ब्रह्मणश्च स्वयं फलात्मनो घटादिवत्फलव्याप्यत्वाभावेऽपि वृत्तिव्याप्यत्वमुपगम्यते "यन्मनसा न मनुते" "मनसैवानुद्रष्टव्यम्" इति श्रुतिद्वयाविरोधाय । एवं वाच्यत्वाऽनुपगमेऽपि लक्ष्यत्वमुपगम्यते । "यद्वाचानभ्युदितं" " तं त्वौपनिषदं पुरुषं पृच्छामि " इति श्रुतिद्वयाविरोधाय । तथा च तत्त्वमसीतिवाक्यकरणकधीवृत्तिव्याप्यत्वोपगमान्नात्यन्तमनिर्देश्यत्वं ब्रह्मणोऽस्तीत्यर्थः । न केवलं बुद्धिमयकर्तृगोचरो ब्रह्मापि तु इन्द्रियमनआख्यकरणगोचरोऽपीत्याह—भवार्थमिंद्रियाण्यसृजत्, आत्मार्थं मनोऽसृजत, इति । भवो घटाद्यधिष्ठानभूतप्रकाशः, प्राप्त्यर्थस्य भवतेर्ज्ञानार्थत्वोपपत्तेः । यमपेक्ष्य घटादिज्ञानमनुभव इत्युच्यते तदर्थमिंद्रियाण्यसृजत् । इयमत्र प्रक्रिया—चित्प्रतिबिंबगर्भमन्तःकरणं वृत्त्याकारेण परिणम्य यदा चक्षुरादिद्वारा घटादिविषयं प्राप्नोति तदा घटाद्यवच्छिन्नब्रह्मचैतन्यावरके ज्ञानेऽभिभूते स्वतःप्रकाशमाने ब्रह्मणि घटाद्यध्यस्यते । तत्रांतःकरणावच्छिन्नं चैतन्यं प्रमाता वृत्त्यवच्छिन्नं चैतन्यं प्रमाणं घटाद्यवच्छिन्नं प्रमेयम् तत्र कुल्याद्वारा तटाककेदारसलिलयोरिव वृत्तिद्वारा प्रमातृप्रमेयचैतन्ययोरैक्यं प्रमाफलमात्मबोध इति गीयते । एवं सति शुक्तिरजताद्यध्यास इव घटादिदृश्यवाच्याध्यासेऽपि दृग्वागन्वयव्यतिरेकयोरधिष्ठानप्रकाश एवोपक्षयः । तदेतदाह—भवार्थमिन्द्रियाण्यसृजदिति । फलमपि ब्रह्मैव शास्त्रं च तदन्यानिवृत्त्यर्थमेवेत्युक्तं वृद्धैः ।परागर्थप्रमेयेषु या फलत्वेन संमता संवित्सैवेह मेयोऽर्थो वेदांतोक्तिप्रमाणत इति सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते। इति च घटरजतादिकं त्वाविद्यकं प्रतिभासमात्रम्। एवं च रज्ज्वां स्रक्सर्पधियोरिव ब्रह्मणि रज्जुसर्पधियोर्जाग्रत्स्वप्नयोर्वा परस्परनिरोधकत्वमेव बाधस्तु तयोर्ब्रह्मज्ञानेनैवेति दृष्टिसमसमयां सृष्टिमुपयन्तो वेदान्तवृद्धाः।तेषां ब्रह्मणि पारमार्थिकी सत्ता दृश्ये प्रातिभासिकी इतरेषां तु सत्ताद्वैविध्यमभिमतं स्वप्नरज्जुभुजंगादौ प्रातिभासिकी सत्ता प्रबोधरज्ज्वादिज्ञानेन सद्यो बाध्या,जाग्रद्रज्ज्वादौ तु-व्यावहारिकी ब्रह्मज्ञानैकबाध्येति।तत्र पूर्वेषां ब्रह्मणि सर्वशब्दवाच्यतास्ति"नामानि सर्वाणि यमाविशन्ति" इति श्रुतेः । अवाच्यत्वश्रुतिस्तु लौकिकशब्दप्रवृत्तिनिमित्तजातिगुणाद्यभावपरा। परेषां तु 'शरीरं रथमेव तु' इत्यत्र यथाशरीरशब्देन शरीरोपादानमव्यक्तं लक्ष्यते तद्वद्घटाद्युपादानं ब्रह्म घटादिशब्दैरिति मतम् । एवं कर्तृकरणसृष्टेः ब्रह्मप्रकाशार्थमुक्त्वा क्रियाशक्तिमत्प्राणसृष्टेरपि तदुभयानुग्राहकतया तदर्थत्वमाह—कल्पनाय प्राणानसृजत्, कल्पनं बुद्ध्यादेः स्वस्वविषयकप्रकाशनसामर्थ्यसंपादनं तस्मै । यस्माद्ब्रह्मणः सर्वशब्दप्रत्ययगम्यत्वमस्ति तस्माद्ब्रह्मत्येव सन्मार्गोपदेश इति ॥ * ॥ **श्रीधरानुयायिनी—**उत्तरमाह श्रीशुकदेवः—बुद्धीति । प्रभवत्यस्मादिति प्रभुर्मायोपहितेश्वरः, आकाशादि सृष्ट्वा तत्सात्त्विकांशेभ्यो जनानां प्रमातॄणामुपाधिभूतान् बुद्धीन्द्रियमनःप्राणानसृजत्, कारणाज्ञाने लीनान्पुनः प्रादुरभावयत् । तत्र प्रयोजनमाह—मात्रार्थमिति । " मात्रा परिच्छदे माने प्रवृत्तौ कर्णभूषणे " इत्यनुशासनान्मात्रा प्रवृत्तिस्तदर्थं, 'कथं चरन्ति श्रुतयः ' इति प्रश्नाच्छ्रुतीनामिति शेषः । तथा च—श्रुतीनां ब्रह्मण्यपि प्रवृत्त्यर्थमित्यर्थः । बुद्ध्यादिकं विना वचनस्याप्रवृत्तेः । "मनसा वा अग्रे संकल्पयत्यथ वाचा व्याहरति " इति

---

१ पंडाऽध्ययनजातब्रह्मबुद्धिः तद्वान्पंडितस्तस्य कृत्यं पांडित्यं श्रवणं तन्निर्विद्य निश्चयेन लब्ध्वा बाल्येन ज्ञानबलभावेन मननेन शुद्धान्तःकरणेन वा स्थातुमिच्छेत् । तद्द्वयं लब्ध्वाऽथ श्रवणमननानंतरं मुनिर्मननशीलो निदिध्यासनपरः स्यात्। अमौनं श्रवणमनने मौनं च निदिध्यासनं लब्ध्वा उक्तत्रयस्य ब्रह्मसाक्षात्कारहेतुत्वात्त्रयानंतरं ब्रह्मावगच्छतीति ब्राह्मणः साक्षात्कृतब्रह्मा भवतीत्यर्थः ।

श्रुतेः । अयं भावः—निर्धर्मके शुद्धे ब्रह्मणि श्रुतीनां प्रवृत्त्यसंभवेऽपि "अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते " इत्युक्त्वा " यतो वा इमानि भूतानि जायन्ते" " तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्याद्याः श्रुतयः ईश्वरात्सृष्ट्याद्युक्त्वा ता एव तत्त्वमसीत्याद्या जीवेश्वरयोरभेदं बोधयन्त्यः सोऽयं देवदत्त इत्यादौ विरुद्धयोर्देशकालयोरिवात्रापि विरुद्धयोर्जीवेशोपाध्योस्त्यागं विना तयोरभेदानुपपत्त्या जदजहल्लक्षणया शुद्धे पर्यवस्यान्ति । अत एवान्ते अतन्नि रसनेन भवान्निधनाः' इत्युक्तम् । एवं च मायोपहितस्येश्वरस्य कारणोक्त्या तत्र धार्मिसमसत्ताकधर्मसंबंधसत्त्वेन श्रुतीनां शक्त्यैव प्रवृत्तिः । असंगे शुद्धब्रह्मणि च तादृशधर्माभावेन वास्तवतत्संबंधाभावेऽपि दीपे रज्जुसर्पस्येवाध्यासिकसंबंधोऽस्त्येवेति लक्षणायाः संबंधापेक्षत्वेऽपि तया वेदानां कल्पितधर्माधारे ब्रह्मणि प्रवृत्तिर्निराबाधैव । प्रेमभक्तास्तु—ब्रह्मणः शब्दवाच्यत्वाभावादेवानिर्देश्यत्वामित्याशंकायां यदि परमेश्वरो बुद्धीन्द्रियादीनि नास्रक्ष्यत्तदा रूपशब्दादयोऽप्यनिर्देश्यादृश्यत्वेन ब्रह्मतुल्या एवाभविष्यन् यतोऽद्याप्याजन्मांधमूकस्य रूपशब्दौ ब्रह्मवददृश्यानिर्देश्यावेव भवतः अतोऽस्मदादिभ्यो येनाग्रहेण ग्राहकाणि बुद्धींद्रियादीनि दत्त्वा सर्वे विषयाः सुखेन दर्शननिर्देशादियोग्याः कृतास्तेनैव परमेश्वरेण कृपया कस्मैचित्स्वभक्ताय ब्रह्मणोऽपि ग्राहकं किमप्यलौकिकं सामर्थ्यविशेषं दत्त्वाऽऽकारजातिगुणक्रियातिरिक्तं किमपि शब्दप्रवृत्तिनिमित्तं सृष्ट्वाऽसृष्ट्वैव वा ब्रह्मापि शब्दनिर्देश्यं करिष्यत्येव, यतः प्रभुः अनिर्देश्यमपि निर्देश्यं कर्तुं समर्थः । अतः श्रुतयो ब्रह्मणि चरेयुरेवेत्युत्तरमाहुः । अन्यदपि प्रयोजनद्वयमाह—भवायेति । ऐहिकपारलौकिकभोगसुखायेत्यर्थः । बुद्ध्यादीन् विना यज्ञादिकर्मणां सुखभोगस्य चासंभवात् । तथात्मनेकल्पनाय चेति । आत्मानं जीवमुद्दिश्य या जन्ममरणादिकल्पना तदभावाय मोक्षार्थमितियावत् । बुद्ध्यादिकं विना मोक्षसाधनीभूतस्य शमदमादेर्योगज्ञानयोश्चासंभवात् । यद्वा—आत्मने स्वस्मै स्वोपासनार्थं यद्बुद्ध्यादीनां कल्पनं विनियोगस्तस्मै श्रीकृष्णभजनार्थमिति यावत् । बुद्ध्यादीन्विना भक्त्यंगस्य श्रवणकीर्तनादेरप्यसंभवात् । भोगमोक्षयोर्वैलक्षण्यसूचनाय संध्यकरणम् । त्रयाणामपि प्राधान्यद्योतनाय चकारत्रयम् । अन्ये तु स्वप्रकाशस्य ब्रह्मणः सिद्धिः प्रमाणं नापेक्षते इत्याशयेनोत्तरमदत्त्वैव ब्रह्मणो ज्ञानार्थं तटस्थलक्षणमाहुः—बुद्धीत्यादि । तत्सृष्टौ प्रयोजनान्याह—मात्रार्थमैहिकविषयभोगार्थं भवार्थं पारलौकिकविषयभोगार्थम् आत्मने कल्पनाय मोक्षार्थं चेत्याहुरित्यलम् ॥ * ॥ **तोषिणी**—अत्र ऋषिरुवाचेति तस्य सर्वज्ञत्वात्तत्र प्रावीण्यं दर्शितम् । श्रीशुक उवाचेति पाठे ब्रह्मवैवर्तोक्तां कथां सूचयति । यत्र श्रीकृष्णेनैव तस्य तन्नाम कृतं मायाबंधनतश्च मोचित इति । ततः श्रीविष्णुरातवत्कृपाविशेषलाभेन समवासनतया सोऽपि तदनुकूलमेवोवाचेत्यर्थः । तथाहि—बुद्धीन्द्रियेति । एतदुक्तं भवति येन स्वरूपलक्षणेन तटस्थलक्षणेन वा परमकारणं तत्त्वं निरूप्यते, तदुभयमपि श्रीभगवत्तत्त्वमेव पर्यवसाययति न तु निर्विशेषब्रह्मत्वम् । तत्रादौ " यः सर्वज्ञः सर्ववित् " इत्याद्यनुसारेण प्रभुरित्यन्यनैरपेक्ष्येणोक्तत्वात्स्वरूपेणैवेश्वरत्वम् । स च सर्वव्यापनशीलज्ञानेच्छाक्रियाशक्तिमान् " सत्यं ज्ञानमनंतं ब्रह्म " इति " विज्ञानमानंदं ब्रह्म " इति " यल्लक्ष्यते तस्यैव खल्वेतस्यानंदस्यान्यानि भूतानि मात्रामुपजीवन्ति " इति " को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनंदो न स्यात् " इति " आनंदादेव खल्विमानि भूतानि जायन्ते, आनंदेन जातानि जीवन्ति, आनंदं प्रयन्त्यभिसंविशन्ति " इति " न तस्य कार्यं करणञ्च विद्यते " इत्यादिश्रुतयः स्वाभाविकशक्तिं दर्शयन्ति । वक्ष्यति च 'त्वमकरणः स्वराडखिलशक्तिधरः ' इति उपाधिसंबंधेन तत्तच्छक्तित्वे तूपाधेरेवेश्वरतापातात् । वक्ष्यन्ति श्रुतयः ' त्वमसि यदात्मना समवरुद्धसमस्तभगः ' इति । अथ द्वितीये ' तत्तेजोऽसृजत ' इत्याद्यनुसारेण जनानां बुद्धीन्द्रियादीनसृजदिति सुतरामेव तादृशत्वं परिणामे वा विवर्ते वा योग्यस्यैवोपादानात्तन्निमित्ते च स्वीकारौचित्यादिति योग्यत्वमेव हि शक्तिरिति । अत्र तु कर्तृनिर्देशात्स्वातंत्र्यप्राप्तेः सुतराम् । अत एव सर्वबुद्ध्यादिस्रष्टृत्वेन तदीक्षणात्पूर्वं प्रकृतिक्षोभाभावेन च तस्य हि विलक्षणस्वाभाविकबुद्ध्यादिमत्त्वमवगतम् । " स ऐक्षत " इत्याद्यनुसारेण मात्रार्थञ्चेत्यादिना विचारपूर्वकस्रष्टृत्वानिर्णयात्तु सुतरां तथैव । मात्रार्थमित्यादिना तत्तत्सर्वपुरुषार्थं परमाश्रयत्वञ्च । " सर्वकामः सर्वगंधः सर्वरस अयमात्मापहतपाप्मा " इत्यादिश्रुतेः न चारोपितमेव सर्वमिदं तन्मतेऽपि तावदविषये वस्तुन्यारोपासंभवात् । ब्रह्मणः कालत्रयेऽपि शुद्धत्वे नान्यस्य त्वारोप्यकोटिप्रवेशेनाज्ञानस्य जडत्वेनारोपकासंभवे च तदसंभवात् । तस्मान्न जीवरूपस्य स्वस्य स्वाज्ञानेन तदारोपकत्वं वेदस्यारोपकत्वम्, चेत्तस्य स्वाज्ञानमयत्वेन स्वप्नप्रलापतुल्यतया सकर्तृकारोप एव तात्पर्यं सत्यविशेषात् । वेदस्य स्वातंत्र्येऽप्यारोप्यस्य हेयतया " प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरम् " इति न्यायेन स्वयं तद्बाधयितुमयोग्यत्वात् स्वाभाविकीत्यादिश्रुतिविरोधात् श्रुतेश्च शब्दमूलत्वादिति न्यायविरोधाच्च आरोपितत्वे सत्यनीश्वरवादप्रसंगाच्च स्थाणौ पुरुषाभिमानिवद्ब्रह्मणीश्वराभिमानिनः कालत्रयेऽप्यभावापत्तेः स्वाज्ञानकल्पितपुरुषकल्पितत्वज्ञानस्य स्वाज्ञानकल्पितत्व एव पर्यवसानात् मध्ये कल्पकान्तरमननवैयर्थ्याच्च ।

संज्ञामूर्तिक्लृतिस्तु 'त्रिवृत्कुर्वत उपदेशात् ' इत्यादिन्यायवृंदासंमतं हि तत् । निंदितञ्च श्रीगीतासु " असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् । अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥" इति । असत्यं मिथ्याभूतं सत्त्वा सत्त्वाभ्यामनिर्वचनीयत्वेनाप्रतिष्ठम् निर्देशशून्यं स्वाज्ञानकल्पितत्वादनीश्वरम् । अपरस्परसंभूतमनाद्यज्ञानपरंपराजातम्– " अपरस्पराः क्रियासातत्ये " अतः कामहेतुकं मनःसंकल्पमात्रजातं स्वप्नवदित्यर्थः । अत्र 'प्रवृत्तिं च निवृत्तिं च ' इत्यादिना पूर्वे तेषां संस्कारदोष उक्तः । 'एतां दृष्टिमवष्टभ्य ' इत्यादिना गतिश्च निंदिष्यते इति ज्ञेयम् । तस्मात्सर्ववेदार्थः श्रीभगवानेव "यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च " इति श्रीनृसिंहतापिन्यां " वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् " इति श्रीगीतासु " नतः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती" इति विष्णुपुराणे "मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहम् " इति एकादशे च । तथा " सदेव सौम्येदमग्र आसीत् " इति यस्य सतः सर्वकारणतया स्थितत्वम्, "आत्मा वा इदमग्र आसीत्" इति परमात्मस्वरूपत्वम्, " सत्यं ज्ञानमनंतं ब्रह्म " "विज्ञानमानंदं ब्रह्म" इति स्वरूपलक्षणम्, "निर्गुणं निरंजनम्" इति दोषराहित्यम्, "न तस्य कार्यं करणञ्च विद्यते" इत्यादौ "स्वाभाविकी ज्ञानबलक्रिया च" इति तत्तदागंतुकशक्त्यादिराहित्यानुवादेनैव स्वाभाविकविलक्षणशक्त्यादियुक्तत्वम् । एवं निषेधांतरवाक्येनाऽपि तथात्वम् । "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् तमात्मानं ये तु पश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्" इति तत्तद्विवरणम् । "तमीश्वराणां परमं महेश्वरं तं देवतानां परमं तु दैवतम् । सकारणाकारणयोस्तथा धियो न तस्य कश्चिज्जनिता न चाधिपः" इतीदृशमाहात्म्येनैव सर्वकारणत्वम् । "आनंदं ब्रह्मणो रूपं वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसःपरस्तात् न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति रूपमस्य यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति विलक्षणस्वरूपमूर्तित्वं दर्शितम् । तस्य तु "एको ह वै नारायण आसीन्न ब्रह्मा नेशानः" इत्यस्माकमेवाभीष्टरूपत्वमिति । तथा "यस्य पृथिवी शरीरं यस्यात्मा शरीरं यस्याव्यक्तं शरीरं यस्याक्षरं शरीरमेष सर्वभूतांतरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" इति श्रुत्यंतरम् । सर्वशक्तियुक्तत्वेन प्रकाशकत्वात्पृथिव्यादी नामात्मत्वेन तमेवाह, पुराणेतिहासवचनानि च–"ह्लादिनी संधिनी संवित्त्वय्येका सर्वसंश्रये । ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते ॥ कलाकाष्ठानिमेषादिकालसूत्रस्य गोचरे । यस्य शक्तिर्न शुद्धस्य प्रसीदतु स मे हरिः ॥ ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥ कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः ॥" इति । विष्णुपुराणे–"न शक्यः स त्वया द्रष्टुमस्माभिर्वा बृहस्पते । यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति ॥ " इति । मोक्षधर्मस्थनारायणीयोपाख्याने–" एतत्त्वया न विज्ञेयं रूपवानिति दृश्यते । इच्छन्मुहूर्तान्नश्येयमीशोऽहं जगतो गुरुः ॥ माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि ॥ " इति च । तथैव तत्रैव श्रीश्वेतद्वीपवति वाक्ये, अस्यार्थः–त्वयैतन्न विज्ञेयं रूपवान् इति हेतोः अयं दृश्यते इति । यतो मद्दर्शने मदिच्छैव कारणमित्याह–इच्छन्निति । नश्येयमदर्शनमापद्येयम् तस्मादिन्द्रियागोचरत्वादलौकिकम्, स्वेच्छया स्वतः प्रकाशमानत्वात्स्वप्रकाशमेव मद्रूपमिति भावः । यथोक्तं नारायणाध्यात्म्ये–" नित्याव्यक्तोऽपि भगवानीक्षते निजशक्तितः । तामृते परमात्मानं कः पश्येतामितं प्रभुम् ॥ " इति । तदेवमपि मां सर्वभूतगुणैर्युक्तं यत्पश्यसि तद्युक्तत्वेन प्रत्येषि एषा माया मयैव सृष्टा मम माययैव तथा भातमित्यर्थः । तस्मात्त्वमेवं ज्ञातुं नार्हसीति । तथा ' कूटस्थोऽक्षर उच्यते ' ' अक्षरं परमं ब्रह्म ' " यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥ ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च । शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ " इति गीतासु, वक्ष्यन्ति च श्रुतयः–' श्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ' इति, ' त्वमसि यदेष्ववशेषमृतम् ' इति, ' त्वमसि यदात्मना समवरुद्धसमस्तभगः ' इति, " त्वमुत जहासि त्वामहिरिव त्वचमात्तभगो महसि महीयसेष्टगुणितेऽपरिमेयभगः " इति, ' भवत उपासतेंघ्रिमभवं भुवि विश्वसिताः ' इति, " न परिलषन्ति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसंगविसृष्टगृहाः " इति, अत एव "स्त्रिय उरगेन्द्रभोगभुजदंडविषक्तधियो वयमपि ते समाः समदृशोंघ्रिसरोजसुधाः" इति, व्याख्यास्यते तु तत्रतत्रैव । तदेवं सर्ववेदार्थत्वेन सर्वविलक्षणत्वात्सर्वविलक्षणत्वेनैव सर्ववेदार्थत्वाद्वेदैकवेद्यत्वाद्वेदानां च स्वतःप्रमाणभूतत्वादन्यशब्दवाच्यसाधारण्येन दोषा न प्रसञ्जनीयाः । श्रुतयोऽपि तथा वक्ष्यन्ति–'त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ' इति । तदेवं श्रीभगवत्येव संगतिस्तु संगता, तथापि ते तत्त्वमस्यादिलक्षणमैक्यवाक्यमस्थूलादिलक्षणनिषेधवाक्यं वा महावाक्यत्वेन मत्वा लक्षणयोपासनादिवाक्यानि तदनुगतत्वेन मत्वा स्वमते ब्रह्मणि यथाकथञ्चिदेव संगतिं कुर्वन्ति । तथाहि–तत्र तावत्तेषां मते मुख्या गौणी च शब्दवृत्तिर्ब्रह्मणि न संभ

वत्येव लक्षणा च न संभवतीत्युक्तम्, अत एव तन्निषेधान्यथानुपपत्त्यावगतार्थापत्तिश्च न । यद्धि स्वरूपादिभिः साक्षान्निर्देश्यं स्यात्तत्रैव सा संभवतीति । तथापि तत्र तावज्जहदजहल्लक्षणया मन्यन्ते सा कथं घटेत । सा च खलु शब्दवृत्तिसामान्येन पूर्ववद्दोषावहैव । शुक्त्यादौ रूप्यारोपेण संबंधाभावेऽप्यारोप्येण संबंधो मंतव्य एव तेन विना कल्पनाऽनर्हत्वात् । आरोपस्याप्यारोप्यत्वेऽनवस्थाप्रसंगः । आरोपश्च वाङ्मनसागोचरे न संभवति । कथञ्चित्संभवे वा शब्दविषयत्व इवारोपविषयत्वेऽपि कथमनित्यत्वादिकं नापतेत् रज्जुशुक्त्यादिवदिति । यत्त्वौपाधिक आविद्यक एव वा जीवेश्वरविभाग इति मतं ब्रह्मस्तवव्याख्यायां मया परिहृतं तच्च तथैवात्र द्रष्टव्यम् । श्रीवैष्णवानां भाष्यतदीयटीकयोः शतदूषण्यादिषु च तत्त्ववादिनां विष्णुतत्त्वप्रकाशिकादौ न्यायामृतादौ तथाऽस्माकं तद्दृष्टिलेशावष्टंभिश्रीभागवतसंदर्भे तट्टीकादौ च विशेषो द्रष्टव्यः । किञ्चाज्ञानस्यैव भेदमात्रमूलत्वे सति तत्त्वंपदार्थयोरैक्यज्ञानमात्रेणैक्यं संगच्छते । जीवत्वं तु कस्याज्ञानेन कुत्र कल्पितमिति न बुध्यते ब्रह्मणश्चिन्मात्रस्याज्ञानाश्रयत्वविषयत्वयोरसंभवात् । ईश्वरत्वं तु जीवाज्ञानकल्पितं विद्यामयञ्चेति नाप्यसौ तदाश्रयविषयः जीवाज्ञानेन जीवे जीवत्वं कल्पितमिति तु परस्पराश्रयेण स्वाश्रयाश्रयेण च दुष्टमित्यलमतिप्रसंगेन । तस्माद्यत्काचित्सामानाधिकरण्यमुच्यते तत्राप्येषा गतिः । लक्षणा हि तत्स्वरूपस्यान्यस्वरूपत्वं न बोधयाति किं तु तच्छब्देनान्यद्वाचयति, यथा नीलमुत्पलमिति तटमिदं गंगेति । सोऽयं देवदत्त इत्यत्र स इति तत्कालविशिष्टत्वेन स्मर्यमाण इत्यर्थः, अयमिति एतत्कालविशिष्टत्वेन दृश्यमान इत्यर्थः । ततोऽनयोः सामानाधिकरण्ये स्यान्न विरोध इति लक्षणैव न स्यात्, ततस्तद्वदत्र न लक्षणा गौणी चोभयत्र विवक्षितगुणयोगं स्थापयत्येव यथा–पित्तलमिदं सुवर्णमिति । तस्मात् " यस्यात्मा शरीरम् " इति श्रुतेः सूर्य्यतन्मण्डलगंगातत्प्रवाहगोजातितद्व्यक्तिवन्नियताधिष्ठानाधिष्ठात्रोः प्रसिद्ध एवाभेदप्रयोगः । यद्वा–" इमास्तिस्रो देवता अनेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि " इति महापुरुषवचनश्रुतौ अनेनेति जीवस्य भेदनिर्देशादंशत्वे प्राप्ते " ममैवांशो जीवलोके जीवभूतः सनातनः " इति " अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ " इति गीतासु मायाख्या परप्रकृत्यतीततयैव जीवस्य तादृशत्वे व्यक्ते सत्यभिन्नशुद्धशक्त्या जीवेश्वरभेदे सूर्यतद्रश्मिपरमाणुवृन्दवदविनाभावेन प्रकाशैकरूपेण चाभेद उपदिश्यते । प्रयोजनं तु मुमुक्षूणां परमेश्वरतादात्म्यानुभवात् स्वशुद्धतानुभवेन देहाद्यावेशनिरसनं, भक्तीच्छूनां तन्नित्यसंबंधज्ञानेन तद्भजनम् । वक्ष्यन्त्येव श्रुतयः–" स्वकृतपुरेष्वमीष्वबहिरंतरसंवरणं तव पुरुषं वदन्त्यखिलशक्तिधृतोंशकृतम् । इति नृगतिं विविच्य कवयो निगमावपनं भवत उपासतेंघ्रिमभवं भुवि विश्वसिताः ॥ " इति । येन श्रीभगवति सर्वपुरुषार्थशिरोमणिपरप्रेमास्पदत्वस्यानुभवश्च स्यात्, तदनुभवं हि दुरवगमेत्यादौ ' न परिलषन्ति केचिदपवर्गमपीश्वर ते ' इति तथैव श्रीब्रह्मस्तवान्ते राजप्रश्नानंतरं श्रीमुनींद्रेणोत्तरितं च । ननु तत्त्वमस्यादिवाक्यानां महावाक्यत्वमात्मैकत्वं प्रयोजनं वा युक्तं लक्षणामयवाक्यस्य प्रमाणान्तरसापेक्षत्वेन स्वतः प्रामाण्यहानेर्गौणत्वापातात्, तादृशमहावाक्यानुगतानां सर्वासामपि श्रुतीनां तत्प्रसंगात् । अथानेकेषां वाक्यानां महावाक्यत्वायोगात् तेषां प्रादेशिकत्वाच्च निंदितं च तासां सर्वासामेव गौणार्थत्वमात्रस्वीकरणम् । तथाहुः–एकस्यापि च शब्दस्य गौणत्वस्वीकृतौ सत्यां " महती जायते लज्जा यत्रयत्राखिला वराः" अत्र मुख्यार्थ इति च देवास्तन्मार्गानुवर्तिनं "कथं न जायते लज्जा वक्तुं शाब्द त्वमात्मनः" इति । न च जीवेशयोरैक्यज्ञानं सर्ववेदार्थस्तत्सिद्धनिर्विशेषं वा निराकृतत्वात् भगवत एव तदर्थत्वेन दर्शितत्वाच्च । तथाऽस्थूलमित्यादीनां नेतिनेतीत्यादीनां च निषेधवाक्यानां तन्मते यद्वाङ्मनसातीतनिर्विशेषवस्त्वधिकत्वं तदपि न संभवति । न हि यन्न जायते तदवधिः कर्तुं शक्यते निर्विशेषं वा ज्ञातुं शक्यते तस्मात्प्राकृततत्तन्मात्रधर्मतानिषेधतात्पर्यत्वमेव तेषामप्राकृतयुगपद्विचित्रधर्माश्रयताज्ञापनाय तथा " नेहनानास्ति किञ्चन " इत्यस्यापि यदिह किञ्चन नास्ति तन्नाना नास्ति किन्त्वेकात्मैकत्वमेव विवक्षितम् अन्यथा इह किञ्चन नास्ति नाना वा नास्ति इति एकतरेणैवाभिप्रेतासिद्धिः स्यात्किं द्वयोरुपादानेन तस्मादपि तदीयधर्माणां तदेकात्मकत्वात्पूर्ववदेवाप्राकृतत्वादिकमिति न च निर्विशेषत्वं वक्ष्यमाणस्तुतेः संमतं जयजयेत्याद्युपक्रमे स्वरूपशक्तेरहेयत्वावगमात् । द्युपतय इत्याद्युपसंहारे च अतश्चशब्देन पूर्वार्धोक्तस्यार्थः कालदेशपरिच्छेद एव लभ्यते । यदि च तस्यां स्तुतौ निर्विशेषज्ञानमेव विवक्षितं स्यात्, तर्हि तत्फलं ब्रह्मैक्यमेव मध्येमध्ये स्तूयेत प्रत्युत तदतिक्रमात् ' न परिलषन्ति ' इत्यादिभिः श्रीभगवद्भक्तिरेव स्तुता तस्माद्यद्विधियते तदेव स्तूयते इति वैदिकन्यायेन श्रीभगवानेव प्रकरणार्थः । स्वमतेऽपि तत्त्वमस्यादिवाक्यैः कथञ्चिदेव तत्तदर्थस्यावगमः सिद्धिश्च ":न तु दुरवगमात्मतत्त्वनिगमाय तवात्ततनोश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः । न परिलषन्ति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसंगविसृष्टगृहाः ॥ " इतिवत् परमानंदेनैवेति ज्ञेयम् । तदेवं तत्त्वमस्यादीनामप्राधान्यं

मत्वा स्वतःप्रमाणभूतानां वेदानां प्रादुर्भावकक्षाद्यबीजस्य तद्बीजत्वादेव वेदः प्रणव एवाग्र इत्युक्तत्वात्सर्ववेदवाक्यार्थसमन्वयाविधानत्वेन महत्त्वमकाराद्यक्षरात्मकपरस्परसंबद्धपदसमूहत्वाद्वाक्यत्वम् । ततश्च परमवाक्यस्य साक्षाद्भगवद्वाचकस्य श्रीमत्प्रणवस्यैव प्राधान्यम् । अत एव—“ अमात्रोऽनंतमात्रश्च द्वैतस्योपशमः शिवः । ओंकारो विदितो येन स मुनिर्नेतरो जनः ॥ ” इति श्रुत्यन्तरं तदेव निर्धारयाति—स्वयममात्र एकरूपः स्ववृत्तिश्रुतिभिरनंतमात्रः द्वैतस्योपशमः भगवन्मात्रवाचकतया वे शांतरनिरासकश्चेत्यर्थः । तदभिधेयस्य श्रीभगवत एव सर्वयोग्यताहेतुत्वेन परमयोग्यत्वं वदन्सर्ववेदाभिधेयत्वमाह—अत्र प्रणवस्य साक्षाद्वाचकत्वादिकम् “ ॐमित्येतद्ब्रह्मणो नेदिष्ठं नाम ” इति श्रुतेः नेदिष्ठमतिशयेन निकटं स्वल्पमपि व्यवधानं विनैव वाचकमित्यर्थः । तथा ‘ ॐविश्वं विष्णुः ’ इति सहस्रनामस्तोत्रात् “ स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः । स सर्वोपनिषद्ब्रह्मवेदबीजं सनातनम् ॥ ” इति । “ ततोऽभूत्त्रिवृदोंकारो योऽव्यक्तप्रभवः स्वराट् । यत्तल्लिंगं भगवतो ब्रह्मणः परमात्मनः ॥ ” इति च द्वादशात् । श्रीभगवतः सर्वयोग्यताहेतुत्वं च ‘ दृतय इव श्वसंत्यसुभृतो यदि तेऽनुविधाः ’ इत्यादि वक्ष्यमाणात् “ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ ”. इति श्रुतेः “ या वै साधनसंपात्तिः पुरुषार्थचतुष्टये । तया विना तदाप्नोति नरो नारायणाश्रयः ॥ ” इति मोक्षधर्मात् “ यत्कर्माभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् । योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥ सर्वं मद्भक्तियोगेन मद्भक्तो लभतेञ्जसा । स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वांछति ॥ ” इति चैकादशात् । अतो मोक्षान्यथानुपपत्त्या सामानाधिकरण्यं व्यज्यत इति च निरस्तम् । अथ प्रणवार्थानुसारेण बुद्धीन्द्रियेत्यस्यार्थश्च अकाराद्यात्मकपदचयप्रणवार्थो हि ‘ सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः ’ इत्यादौ स्थित्यादय इतिवत् स्थितिसृष्टिप्रलयकर्तृत्वोपलक्षितः प्रणवमयसर्ववेदैः सर्वभजनीयः परमपुरुष एव समार्थितः अत्रापि तथेति । तथाहि जनानां प्रलये निजैकाश्रयाणां जीवानां पालनाय मात्रार्थमैहिकविषयभोगार्थं, भवार्थं जन्मांतरतद्भोगार्थम्, आत्मने शुद्धात्मभावाय आत्यन्तिकप्रलयलक्षणमोक्षाय, अकल्पनाय कल्पनासंकल्पानंतरं तद्रहिताय प्रेमैकमयशुद्धस्वभजनायेत्यर्थः । तस्मात् “ ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः । द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः ॥ यथेंद्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः । एको नानेयते तद्वद्भगवाङ्छास्त्रवर्त्मभिः ॥ ” इति श्रीकपिलदेवदार्शितः सर्वतः पूर्णाविर्भावः श्रीभगवानेव न निर्विशेषं ब्रह्मेति साध्वेवोक्तं भवता । अतः स एव बंदिजनतुल्येवदस्तुत्यत्वेनोपक्रमोपसंहारादिभिर्दर्शयितव्यः । किंतु—ब्रह्मवादिनो द्विविधाः रजततया शुक्तिवदज्ञानेन ब्रह्मैव द्वैततया विवर्तत इत्येके । तत्र पूर्वे तु श्रुतेस्तु शब्दमूलत्वादिति श्रीबादरायणमताद्बहिर्भूता अनीश्वरवादिन इति पूर्वपूर्वयुक्त्या खंडिताः । उत्तरे चैते खल्वीश्वरवादिनोऽपि भक्तिविशेषं विना सच्चिदानंदविग्रहत्वादिभगवत्ताविशेषग्रहणासमर्था भगवन्तमेव निर्विग्रहतया मन्यन्ते उपासते च । तच्च तथैव बुद्धीन्द्रियेत्याद्यनुसारेण भगवद्दत्तशक्त्यैवानुभवन्ति । यथोक्तं श्रीमत्स्यदेवेन—“ मदीयं महिमानं च परब्रह्मेति शाब्दितम् । वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदि ॥ ” इति । अत्राभेदेऽपि महिमत्वेन निर्देशस्तदपि स्वस्यैकदेशाविर्भावरूपमिति वैभवविशेषतया रूपयता स्वस्य भगवद्रूपतायां पूर्णप्रकाशकत्वं व्यञ्जितम् । यदुक्तं श्रीध्रुवेण—‘ या निर्वृतिस्तनुभृतां तव पादपद्मध्यानात् ’ इत्यादौ ‘ सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत् ’ इति तादृशब्रह्मोपासनाफलं शुद्धात्मतया तत्तादात्म्यप्राप्तिश्च नादृता सालोक्यसार्ष्टिसारूप्येत्यादिना तदेतद्ब्रह्म च सर्वातीतप्रकाशत्वादप्राकृतस्वरूपगुणत्वादनिर्देश्यमेव तदेतच्च यया भगवद्दत्तशक्त्यानुभवन्ति सा चाप्राकृतस्वरूपगुणत्वावलम्बकोपनिषदाख्यश्रुतिसंबंधादुद्भवति । औपनिषदः पुरुष इति—“ तं त्वौपनिषदं पुरुषं पृच्छामि ” इति श्रुतेः । ‘ यस्मान्मनोऽपि तस्मिंश्चरति ’ इति वक्ष्यते “ तदेतद्वर्णितं राजन्येन प्रश्नः कृतस्त्वया । यथा ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि मनश्चरेत् ॥ ” इति यथा जयजयेत्याद्यष्टाविंशप्रकारश्रुतिमार्गेणाप्रकाशितानिजगुणेऽपि किमुत प्रकाशितानिजगुण इत्यर्थः । अथवा पूर्वम्—“ सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम् ” इति स्वस्य स्वयं भगवता सर्ववेदप्रमेयत्वमुक्तम् । श्रीविष्णुरातेन च तस्मिन् श्रीकृष्ण एव भगवति तत्रतत्र ब्रह्मत्वमवधारितम् ‘ गूढं परब्रह्म मनुष्यालिंगम् ’ ‘ तदमितं ब्रह्माद्वयं शिष्यते ’ “ यन्मित्रं परमानंदं पूर्णं ब्रह्म सनातनम् ” इत्यादेः । अतः श्रीगोपालतापन्याम्—‘ कथमस्यावतारस्य ब्रह्मता भवति ’ इति प्रश्नः ब्रह्मत्वं त्वनुपचारितं बृहत्तमत्वं तच्च स्वरूपेण गुणेन च वाच्यम्, अतः वैकल्ये तदंशहीनत्वादुपचारितत्वप्राप्तेः तदेवं ब्रह्मता कथं स्यादिति प्रसिद्धानुवादेनैव श्रुतौ गांधर्व्यायाः प्रश्नः । तत्र च श्रीपरीक्षितः तत्प्रस्ताव एव चानेनात्र कर्तुं युक्तः तदर्थमेव श्रीदशमस्कंधस्य श्रोतुमारब्धत्वात् । सर्वविद्वत्परंपरादिगुरूणां श्रुतीनामपि तदेकालम्बतावाक्ये श्रीमुनीन्द्रोऽपि तथैवांगीकरिष्यति ।

“ स्त्रिय उरगेन्द्रभोगभुजदंडविषक्तधियो वयमपि ते समाः समदृशोंऽघ्रिसरोजसुधाः ” इति । अतः श्रीनारदोऽपि तच्छ्रवणानंतरं तमेवोद्दिश्य तदभेदेन श्रीनारायणं नमस्यति—“ नमस्तस्मै भगवते कृष्णायामलकीर्तये । यो धत्ते सर्वभूतानामभवायोशतीः कलाः ॥ ” इति । अत एव श्रीविष्णुरात उवाचेत्युक्त्वा ‘ द्रौष्यस्त्रविप्लुष्टमिदं मदंगम् ’ इत्याद्यर्थस्य सूचनात्तस्य तादृशाभिप्राय एव दृढीकृतः ततस्तत्रैव वेदप्रमेयत्वं संदिह्य पृच्छति—‘ ब्रह्मन्निति ’ श्रीकृष्णत्वस्य साक्षाद्व्यञ्जकपदविशेषाप्रयोगस्तु सामान्याकारतयापि प्रश्लेष्य जिज्ञासितं ज्ञास्यते किं विशेषेणेत्यभिप्रायात् । अतो जयजयेत्युपक्रमे वीप्सायुक्तो जिधातोरुत्कर्षाविष्करणरूपोऽर्थः श्रीकृष्णत्वव्यञ्जकासाधारणो गुणपर्यन्त एव ज्ञेयः । अतन्निरसनेनेत्युपसंहारेऽपि— “ अंतर्भवेऽनंत भवंतमेव ह्यतत्त्यजन्तो मृगयन्ति सन्तः ” इति श्रीब्रह्मव्याख्यानुसारेण तत्पर्यन्त एव । ततश्च ब्रह्मणि अनंतस्वरूपगुणे तत्राप्यनिर्देश्ये सर्वप्रत्यग्रूपत्वादेकांशेनापि निर्देष्टुमशक्ये श्रूयन्त इति श्रुतयः परिमिताः पराग्रूपाश्च साक्षान्मुख्यावृत्त्या कथं केन प्रकारेण चरन्ति तं प्रकारं कथयेत्यर्थः । “ यतो वाचो निवर्तन्ते ” “ विष्णोर्नु कं वीर्याणि प्रवोचम् ” “ यद्वाचानभ्युदितम् ” “ येन वागभ्युद्यते ” इति श्रुतेः ‘ भेजुर्मुकुंदपदवीं श्रुतिभिर्विमृग्याम् ’ ‘ अद्यापि यत्पदरजः श्रुतिमृग्यमेव ’ इत्युक्तत्वाच्च यतो निर्गुणे निर्गता गुणेभ्यः सत्त्वादिभ्यो गुणा यस्य तस्मिन् मध्यमपदलोपी समासः । तथा सदसतः परे तेषां तत्कार्याणां च संबंधरहिते तत्तद्रूपत्वाद्दृष्टान्तद्वारा गौण्या संबंधिद्वारा लक्षणया निर्देष्टुमनर्हे इत्यर्थः । कथं तत्राह—गुणवृत्तयः सत्त्वादिगुणेषु तत्कार्येषु च वृत्तिर्यासां ताः । यथोक्तं श्रीगीतासु “ त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ” इति श्रीभगवतः प्रकृतिगुणातीत गुणत्वं च प्रसिद्धम् । तथैवाग्रे वक्ष्यति—“ हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः । स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेत् ॥ ” इति । श्रीविष्णुपुराणे—“ सत्त्वादयो न संतीशे यत्र च प्राकृता गुणाः । स शुद्धः सर्वशुद्धेभ्यः पुमानाद्यः प्रसीदतु ॥ ” इति । एकादशे—“ मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् । सुहृदं प्रियमात्मानं साम्यासंगादयो गुणाः ॥ ” इति । अत्र निर्गुणं प्रकृतिगुणैरसंस्पृष्टमेव मां कथंभूतास्ते अगुणाः गुणपरिणामरूपा न स्युरिति टीकासंमतिश्च । प्रथमे “ एते चान्ये च भगवन्नित्या यत्र महागुणाः ” इति । अत्र च नित्यत्वादप्राकृतत्वमेव लभ्यते । एतदुक्तम् पूर्वं भगवति श्रुतीनां प्रमाणत्वं व्यञ्जितं तच्च साक्षात्कारणत्व एव संगच्छते, अन्यथा साधकतमं करणमित्यत्र तमबर्थहानेः । तासां तु विशेषतः स्वतःप्रमाणभूतत्वमेवांगीकृतं श्रीभगवतस्तदेकप्रमेयत्वञ्च । ततः साक्षाच्चरणमेवोभयवादिभिर्मंतव्यं विशेषतश्च भगवन्नामादिमहिमविज्ञैर्भेत्रद्विधभागवतैरन्यथाचरणमात्रं मया न पृच्छ्यते मया विदं पृष्टं कथं साक्षाच्चरन्तीति । येन प्रकारेण साक्षाच्चरन्ति स प्रकारः कथ्यतामित्यर्थः । अत्र समाधत्ते—बुद्धीन्द्रियेति । जनानां मनुष्यत्वबीजनानाजातिजीवानां महाप्रलये प्रकृत्या सह स्वस्मिँल्लीनानां मात्रार्थं मीयन्ते गुणाः कार्याणि गुणातीतानि चाभिरिति मात्राः श्रुतयस्तदर्थं तद्धारणाद्यर्थं बुद्ध्यादीनसृजत् तद्द्वारा च भवार्थमभ्युदयार्थं ब्रह्मलोकादिभोगप्राप्त्यर्थम्, आत्मने जीवतत्त्वं ज्ञापयितुम् , अकल्पनाय कल्पना मायावृत्तयस्तद्रहितं भगवत्तत्त्वमकल्पनम् । यदुक्तं वरुणेन—“ नमस्तस्मै भगवते ब्रह्मणे परमात्मने । न यत्र श्रूयते माया लोकसृष्टिविकल्पना ॥ ” इति । तदपि ज्ञापयितुं बुद्ध्यादीनसृजत् तत्र विचाराऽसम्यक्त्वेन श्रुतिधारणादिकस्य पूर्वद्वयार्थता तत्सम्यक्त्वेन तु भगवदेकार्थतेत्युत्तरोत्तरापादानप्राप्तपूर्वपूर्वपरितोषप्राप्तेनोत्तरोत्तरोत्कर्षेण लभ्यते । तदुक्तं द्वितीये—“भगवान्ब्रह्मकार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया । तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवेत् ॥ ” इति । ‘ यं सर्वे देवा नमन्ति ’ इत्यादिपूर्वोदाहरणेभ्यश्च । अयं भावः—श्रुतिधारणाद्यर्थं बुद्ध्यादीनसृजदिति ते च बुद्ध्यादयो भवादिसाधनानीति बुद्ध्यादिषु श्रुतौ च तत्तद्योग्यतां न्यस्तवान् अत एव प्रभुपदोपादानं तत्र बुद्ध्यादीनां योग्यता श्रुतिधारणादिषु स्वतः अन्येषु श्रुतिद्वारा बुद्ध्यादिसंस्कर्त्रीणां श्रुतीनां सर्वत्र स्वतः यथा मंत्रादीनां स्वरूपप्रभावमयी, उपनिषदादीनां तदंशमिश्रस्वाभिधादिशक्तिमयी, कर्मकांडादीनां तदंशद्वयमिश्रस्वविधिमात्रबलानुष्ठानमयीति । सासा पुनर्द्विविधा मायातद्गुणावलम्बिनी स्वरूपतद्गुणावलंबिनी च । तत्र स्वरूपतो मायातद्गुणानां निष्कर्षः प्रसिद्ध एव । स्वरूपे त्वात्मपरमात्मब्रह्मभगवद्रूपेणावस्थितेऽपि भगवत्येव परमोत्कर्षो ज्ञेयः । “कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्” “ विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ” ‘ ब्रह्मणो हि प्रतिष्ठाहम् ’ ‘ यस्मात्क्षरमतीतोऽहम् ’ इत्यादिभ्यः । तस्मात्परमोत्कृष्टस्वरूपगुणनिर्देशेन चरन्त्यः श्रुतयः साक्षादेव श्रीभगवति चरन्ति । तदेकवाक्यत्वेनान्या अपि चरन्तीति ‘ त्रैगुण्यविषया वेदाः ’ इति तु कर्मोपासनाविषयमेव । तथैव परममहावाक्यतयांगीकृतं प्रणवमुद्दिश्योक्तं द्वादशे—“ स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः । स सर्वमंत्रोपनिषद्वेदबीजं सनातनम् ॥ ” इति । अतः खण्डवाक्येन क्रमात्तमुपदेष्टुमेव मायादिषु आत्मादिषु अपि

चरन्ति । तथैव वक्ष्यन्ति श्रुतयः—‘ क्वचिदजयात्मना च चरतोऽनुचरेन्निगमः ’ इति । तथैव व्याख्यातं ब्रह्मस्तवे—“ अंतर्भवेऽनंत भवन्तमेव ह्यतत्त्यजन्तो मृगयन्ति सन्तः ” इति । रासे च—‘ मनोरथान्तं श्रुतयो ययुः ’ इति । एवमेवोक्तं ‘ श्रुतिभिर्विमृग्यम् ’ इत्यादि । किञ्च—श्रीभगवति श्रुतयः साक्षाच्चरन्तीति किं वक्तव्यम् यत्र भगवन्नाममंत्रादिरूपा विनाप्यर्थज्ञानमुच्चारणमात्रेण तमाकर्षयन्ति । यथोक्तं षष्ठे—“नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः” इति । टीका च नामोच्चारणं पुरुषविषया मतिर्भवतीत्यादिका ‘ सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ’ इति। तत्स्वरूपभूता एव च ताः प्रभासपुराणे—“ मधुरमधुरमेतन्मंगलं मंगलानां सकलनिगमवल्लीसत्फलं चित्स्वरूपम् । सकृदपि परिगीतं श्रद्धया हेलया वा भृगुवर नरमात्रं तारयेत्कृष्णनाम ॥ ” इति । नारदपञ्चरात्रे, अष्टाक्षरमुद्दिश्य—“ व्यक्तं हि भगवानेव साक्षान्नारायणः स्वयम् । अष्टाक्षरस्वरूपेण मुखेषु परिवर्तते ॥” इति । श्रुतिश्च—“ नामचिद्विवित्तनमहस्ते विष्णो सुमतिं भजामहे ” इति । माण्डूकोपनिषच्च प्रणवमुद्दिश्य—“प्रणवो ह्यपरं ब्रह्म प्रणवश्च परं स्मृतम् ” इत्यादिका । अतो “ यतो वाचो निवर्तन्ते ” इत्यादिकाः श्रुतयश्चानंतत्वलोकप्रसिद्धतादि सूचयित्वा तथैव वदन्ति। वक्ष्यंत्येव श्रुतयः—‘द्युपतय एव ते न ययुरंतमनंततया’ इत्यादि, ‘इह न वेदवंतावरजन्मलयोप्रसरम्’ इत्यादि ॥ * ॥ **विश्वनाथी**—जनानां जीवानां मात्रार्थं प्रभुरीश्वरो बुद्ध्यादीनसृजत्। मीयन्त इति मात्रा विषयास्तदर्थं कर्मफलभोगार्थमित्यर्थः । भवः पुनःपुनर्जन्म तदर्थं भवबंधहेतुकर्मकरणार्थमित्यर्थः । आत्मने ब्रह्मपरमात्मभगवत्स्वरूपिणे स्वस्मै यत्कल्पनं बुद्ध्यादीनां समर्पणं तदर्थम् । यद्वा—आत्मने स्वमुपासयितुं यत्कल्पनं बुद्ध्यादीनां त्रिनियोगास्तदर्थम् । त्रयाणामेव प्राधान्यबोधकं चकारत्रयम् । बुद्ध्यादीन्विना न कर्मफलस्वर्गादिर्भोगो, नापि कर्मकरणं, नापि शमदमाद्यंगज्ञानं, नाप्यष्टांगयोगो, नापि श्रवणकीर्तनादिभक्तियोगः सिद्ध्यतीत्यतस्तानसृजत् । ननु त्वं क्व गच्छसीति प्रश्ने, मयाद्य दध्यन्नं भुक्तमित्युत्तरं यथा तथैव श्रुतयः कथं ब्रह्मणि चरन्तीति प्रश्ने प्रभुर्मात्रार्थं बुद्ध्यादीनसृजदित्युत्तरमभूत् । मैवम् “ परोक्षवादा ऋषयः परोक्षं मम च प्रियम् ” इति भगवदुक्तेरत्राभिधया वृत्त्या प्रश्ने व्यञ्जनावृत्त्येदमुत्तरं संगतमेव । तथाहि—शब्दवाच्यत्वाभावादेव ब्रह्मणः खल्वनिर्देश्यत्वं ब्रूषे यदीन्द्रियाणि परमेश्वरो नास्रक्ष्यत्तदा शब्दस्पर्शादयोऽप्यनिर्देश्या ब्रह्मतुल्या एवाभविष्यन् । अद्यापि जन्मांधबधिरस्य रूपशब्दौ ब्रह्मवदनिरूप्यौ भवत एव, तेनास्मदादिभ्यो येन ग्राहकाणीन्द्रियाणि दत्त्वा शब्दादयो निर्देश्याः सुगमाः कृतास्तेनैव परमेश्वरेण कस्मैचित्कृपया ब्रह्मणोऽपि ग्राहकं किमपि सामर्थ्यं दत्त्वा जातिद्रव्यगुणक्रियातिरिक्तं किमपि शब्दप्रवृत्तिनिमित्तं स्पृष्ट्वाऽस्पृष्ट्वैव वा ब्रह्मापि शब्दनिर्देश्यं कारिष्यते यतः स प्रभुरनिर्वचनीयमपि निर्वचनीयं कर्तुं समर्थः । ततश्च श्रुतयोऽपि तत्र सुखं चरेयुरिति । तदुक्तं भगवता मत्स्यदेवेन—“ मदीयं महिमानं च परंब्रह्मेति शब्दितम् । वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदि ॥ ” इति । अस्यार्थः—मम महिमानं महत्त्वरूपं सर्वव्यापकत्वलक्षणं यद्ब्रह्म तत्त्वं वेत्स्यसि कथं वेत्स्यामि संप्रश्नैस्तद्ब्रह्म कीदृशमिति तत्प्रश्नैर्ब्रह्मेदृशमिति मुनिदत्तैरुत्तरैश्च शब्दितं साक्षाच्छब्दनिर्दिष्टीकृतं ब्रह्म वेत्स्यसि । तत्र हेतुः—मे मयाऽनुगृहीतं प्रसादीकृतं मद्दत्तांतःप्रसादं विना ब्रह्मणः साक्षाच्छब्दानिर्दिष्टत्वं न संभवेदित्यर्थः । अत्र मदनुग्रहकल्पितत्वरूपहेत्वन्यथानुपपत्तेर्व्यवधानेन शब्दानिर्दिष्टत्वं न व्याख्येयम् तथा व्याख्यानाभ्युपगमे शब्दितमिति पदस्य वैयर्थ्यं स्यादित्यभिप्रायः । स्वामिचरणैर्व्याख्यातं यथा मे मयाऽनुगृहीतं प्रसादीकृतं परं ब्रह्म हृदि अपरोक्षं वेत्स्यसीति भगवत्कृपया श्रीमदर्जुनेनापि ब्रह्म साक्षाद्दृष्टम् । यथा श्रीहरिवंशे विप्रकुमाराहरणप्रसंगे तं प्रति भगवद्वाक्यम्—“ब्रह्म तेजोमयं दिव्यं महद्यद्दृष्टवानसि । अहं स भरतश्रेष्ठ मत्तेजस्तत्सनातनम् ॥ प्रकृतिः सा मम परा व्यक्ताव्यक्तसनातनी । तां प्रविश्य भवन्तीह मुक्ता योगविदुत्तमाः ॥ सा साध्यानां गतिः पार्थ योगिनाञ्च तपस्विनाम् । तत्परं परमं ब्रह्म सर्वं विभजते जगत् ॥ ममैव तद्घनं तेजो ज्ञातुमर्हसि भारत । ” इति । यद्वा—भो राजन् निर्विशेषे ब्रह्मणि श्रुतयो नैव चरन्ति ‘शब्दो न यत्र पुरुकारकवान्क्रियार्थः ’ इति ब्रह्मोक्तेस्तथा सविशेषे सच्चिदानंदाकारे ब्रह्मण्यपि श्रुतयो न चरन्ति तस्य प्राकृतजात्यादिपदार्थातीतत्वात् । किञ्च—“सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः ” इति वैष्णवोक्तौ प्राकृता न सन्तीत्युक्तेऽप्राकृताः सन्तीति लभ्यते ‘साक्षी चेता केवलः’ इत्यादिना निर्गुणत्वेऽप्यप्राकृतसाक्षित्वादिगुणोक्तेश्च ’ ‘ वेदैश्च सर्वैरहमेव वेद्यः ’ इत्यादिस्मृतेश्चाप्राकृतानंतगुणान्वये तास्मिन् शब्दप्रवृत्तिनिमित्तानामप्राकृतजात्यादीनां सत्त्वात्साक्षादेव श्रुतयस्तत्र

चरन्तीत्याह–बुद्धीति । बुद्धिपदेन महत्तत्त्वमिन्द्रियपदेन शब्दाद्याकाशादिकार्यज्ञानञ्च बोध्यते । मात्रार्थं शब्दादीनां ब्रह्मण्यपि प्रवृत्त्यर्थं बुद्ध्यादीनसृजत् “ मात्राः परिच्छदे देशे प्रवृत्तौ कर्णभूषणे ” इत्यनुशासनात् । प्राणादिकं विना वचनस्याप्यसंभवान्मनआदिसृष्टिरपि शब्दप्रवृत्त्यर्था ज्ञेया । सृष्टेः फलान्तरमप्याह–भवार्थं जीवानां कल्याणार्थं ‘भवो भद्रे हरे प्राप्तौ’ इत्यनुशासनात् । तथात्मने स्वस्मै बुद्ध्यादीनामप्राकृतानां प्राकृतानाञ्च यत्कल्पनं स्वमुपासितुं विनियोगस्तस्मै । यथा गोपालतापनी श्रुतिः “ सत्पुंडरीकनयनं मेघाभं वैद्युताम्बरम् । द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरम् ॥ ” इति । अत्र सिद्धभक्तानामप्राकृतबुद्धीन्द्रियैरप्राकृतपुंडरीकमेघविद्युतां सुग्राह्यत्वात्ताभिरुपमितेषु भगवन्नयनवपुर्वसनेष्वप्राकृती तापनीश्रुतिर्भगवन्नयनादिवर्णयित्री सुखेनैव चरति । साधकभक्तानां तु बुद्ध्यादिभिरग्राह्यत्वेऽपि तत्र प्राकृतपुण्डरीकादिसादृश्यारोपेणैव ते यथाकथञ्चिदेव बुद्धिं प्रवेशयन्ताश्चित्तैकाग्र्येणापि वस्तुतोऽस्पृष्टतद्रूपभासा अपि भगवंतं प्रभुं ध्यायाम इत्यभिमानिनो हृष्यन्ति । भगवानप्यपारकृपातरङ्गवशादेवैभिर्भक्तैरहं ध्यात इत्यभिमन्यमानस्तद्भक्तिपरिपाके सति तान्स्वभक्तान्स्वचरणान्तिकं सेवार्थमानयतीति भगवत्स्वरूपस्य श्रुतिगम्यत्वं तत्कृपयैव सिद्धम् ॥ २ ॥

**नीलकण्ठी**–तदेतन्मनो वाचं प्राणं तान्यात्मनेऽकुरुतेति श्रुतिमनुसृत्य परिहरन् श्रीशुक उवाच–बुद्धीन्द्रियेत्यादि । तत्र श्रुतौ मनसा बुद्धिज्ञानेंद्रियाणि वाचा कर्मेन्द्रिणाणि च संगृह्य तेषां सप्राणानामात्मप्रकाशार्थत्वमुक्तम् । अत्र तु विषयविभागेनेति विशेषः । तत्र विषयपरिच्छेदो मात्रा तदर्थं प्रभुर्जनानां बुद्धिमसृजत् । परिच्छिद्यन्ते हि बुद्ध्या अतीन्द्रिया अप्यपूर्वादयः । ब्रह्मणश्च स्वयं फलात्मनो घटादिवत्फलव्याप्यत्वाभावेऽपि वृत्तिव्याप्यत्वमुपगम्यते । ‘ यन्मनसा न मनुते ’ ‘ मनसैवानुद्रष्टव्यम् ’ इति श्रुतिद्वयाविरोधाय । एवं वाच्यत्वानुपगमेऽपि लक्ष्यत्वमुपगम्यते । “ यद्वाचानभ्युदितम् ” “ तं त्वौपनिषदं पुरुषं पृच्छामि ” इति श्रुतिद्वयाविरोधाय । तथा च तत्त्वमसीति वाक्यकरणकधीवृत्तिव्याप्यत्वोपगमान्नात्यन्तमनिर्देश्यत्वं ब्रह्मणोऽस्तीत्यर्थः । न केवलं बुद्धिमयकर्तृगोचरो ब्रह्मापि तु इन्द्रियमनआख्यकरणगोचरोऽपीत्याह–भवार्थमिन्द्रियाण्यसृजत् आत्मार्थं मनोऽसृजदिति । भवो घटाद्यधिष्ठानभूतप्रकाशः प्राप्त्यर्थस्य भवतेर्ज्ञानार्थत्वोपपत्तेः । यमपेक्ष्य घटादिज्ञानमनुभव इत्युच्यते तदर्थमिन्द्रियाण्यसृजत् । इयमत्र प्रक्रिया–चित्प्रतिबिम्बगर्भमंतःकरणं वृत्त्याकारेण परिणम्य यदा चक्षुरादिद्वारा घटादिविषयं व्याप्नोति तदा घटाद्यवच्छिन्नब्रह्मचैतन्यावरकेऽज्ञानेऽभिभूते स्वतः प्रकाशमाने ब्रह्मणि घटाद्यध्यस्यते तत्रान्तःकरणावच्छिन्नं चैतन्यं प्रमाता वृत्त्यवच्छिन्नं प्रमाणं घटाद्यवच्छिन्नं प्रमेयं तत्र कुल्याद्वारा तटाककेदारसलिलयोरिव वृत्तिद्वारा प्रमातृप्रमेयचैतन्ययोरैक्यं प्रमाफलमात्मबोध इति गीयते । एवं सति शुक्तिरजताद्यध्यास इव घटादिदृश्यवाच्याध्यासेऽपि दृग्वागन्वयव्यतिरेकयोरधिष्ठानप्रकाश एवोपक्षयः । तदेतदाह–‘ भवार्थमिंद्रियाण्यासृजत् ’ इति । फलमपि ब्रह्मैव शास्त्रं च तदन्यनिवृत्त्यर्थमेवेत्युक्तं वृद्धैः–“ परागर्थप्रमेयेषु या फलत्वेन संमता । संवित्सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः ॥ ” इति । “ सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते । प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते॥” इति च । घटरजतादिकं त्वाविद्यकं प्रतिभासमात्रम् । एवञ्च रज्ज्वां स्रक्सर्पधियोरिव ब्रह्मणि रज्जुसर्पधियोर्जाग्रत्स्वप्नयोर्वा परस्परनिरोधकत्वमेव । बाधस्तु तयोर्ब्रह्मज्ञानेनैवेति दृष्टिसमसमयां सृष्टिमुपयन्तो वेदान्तवृद्धाः । तेषां ब्रह्मणि पारमार्थिकी सत्ता दृश्ये प्रातिभासिकी । इतरेषां तु दृश्ये सत्ताद्वैविध्यमभिमतं स्वप्नरज्जुभुजंगादौ प्रातिभासिकी सत्ता प्रबोधरज्ज्वादिज्ञानेन सद्यो बाध्या । जाग्रद्रज्ज्वादौ तु व्यावहारिकी ब्रह्मज्ञानैकबाध्येति । तत्र पूर्वेषां ब्रह्मणि सर्वशब्दवाच्यतास्ति “नामानि सर्वाणि यमाविशन्ति” इति श्रुतेः । अवाच्यत्वश्रुतिस्तु लौकिकशब्दप्रवृत्तिनिमित्तजातिगुणाद्यभावपरा । परेषां तु ‘शरीरं रथमेव तु ’ इत्यत्र यथा शरीरशब्देन शरीरोपादानमव्यक्तं लक्ष्यते तद्वद्घटाद्युपादानं ब्रह्म घटादिशब्दैरिति मतम् । एवं कर्तृकरणसृष्टेः ब्रह्मप्रकाशार्थत्वमुक्त्वा क्रियाशक्तिमत्प्राणसृष्टेरपि तदुभयानुग्राहकतया तदर्थत्वमाह–कल्पनाय प्राणानसृजत् कल्पनं बुद्ध्यादेः स्वस्वविषयप्रकाशनसामर्थ्यसंपादनं तस्मै । यस्माद्ब्रह्मणः सर्वशब्दप्रत्ययगम्यत्वमस्ति तस्मात्संभवत्येव सन्मार्गोपदेशः ॥ २ ॥

**सैषा ह्युपनिषद्ब्राह्मी पूर्वेषां पूर्वजैर्धृता ॥ श्रद्धया धारयेद्यस्तां क्षेमं गच्छेदकिंचनः ॥ ३ ॥**
**अत्र ते वर्णयिष्यामि गाथां नारायणान्विताम् ॥ नारदस्य च संवादमृषेर्नारायणस्य च ॥ ४ ॥**

अत्र चानादिशिष्टपरंपरागतत्वान्न संदेहो युक्त इत्याह । सैषेति । सैषा यथोक्तालंबना ब्राह्मी ब्रह्मपरा । श्रद्धया आदरेण वैतंडिकतर्कानभिनिवेशेन यः श्रवणादिना धारयेत्सः अकिंचनो निरस्तदेहाद्युपाधिः सन् परं पदं प्राप्नुयादिति ॥ ३ ॥ एतदेव सर्वश्रुत्यर्थनिरूपणेन प्रपंचयितुमितिहासमवतारयति । अत्रेति । नारायणान्वितां नारायणः प्रवक्तृत्वेनान्वितो यस्या ताम् । गाथामितिहासम् ॥ ४ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—अत्र च वेदानां ब्रह्मपरत्वे च । वितंडा स्वपरपक्षस्थापनहीना कथा तद्युक्ता वैतण्डिकास्तेषां तर्का निष्फलवादास्तत्रानभिनिवेशेन हठाभावेन । आदिना मननादिग्रहः । निरस्तोऽपाकृतो देहाद्युपाधिर्देहाद्यभिनिवेशो येन स तथा सन् परं ब्रह्मावाप्तिरूपम् या त्रिवर्गसाधनपरा सा तूपनिषत् त्रिवर्गनिष्ठैर्मरीच्यादिभिर्धृता एषा तु ब्रह्मपरा ब्रह्मप्रतिपादिकाऽत एव ब्रह्मनिष्ठैः सनकादिभिर्धृतेति भावः । "उपनीयेयमात्मानं ब्रह्मापास्तद्वयं यतः । निहंत्यविद्यां तज्जं च तस्मादुपनिषद्भवेत् ॥" इत्युपनिषल्लक्षणं भारते । उपनिषद्यते प्राप्यते ब्रह्म यद्विचारेण सोपनिषदिति निरुक्तेः । कर्मादिप्रतिपादकविद्यासूपनिषत्प्रयोगस्तु परंपरया तासामपि ब्रह्मपरत्वादेवेति ध्येयम् ॥ * ॥ **श्रीधरानुयायिनी**—तत्र तावद्वेदस्तुतेरनादित्वं वदन्नेतच्छ्रवणादेर्मोक्षं फलं चाह—सैषेति । श्रीनारायणादिबुद्धिस्थां तत एव दक्षादीनामपि पूर्वजैः सनकादिभिः श्रवणादिना धारितां ब्रह्मप्रतिपादिकां वेदान्तरहस्यविद्यामिमां यः श्रद्धया श्रवणादिना धारयेत्स निरस्तदेहाद्युपाधिः सन्मोक्षं प्राप्नुयात् ॥ * ॥ **विश्वनाथी**—पूर्ववाक्यं प्रमाणयति स्तौति च—सा प्रसिद्धा एषा श्लोकद्वयी प्रश्नोत्तरमयी ब्राह्मी उपनिषद्भवति आवाभ्यामाविर्भूतैव न त्वावाभ्यामेव कृता यतः पूर्वेषां श्रीनारदादीनां पूर्वजैः सनकादिभिः स्वान्तःकरणेषु धृता । यद्वा—सैषा जयजयेत्यादिना वक्ष्यमाणा । क्षेमं 'मर्त्यो मृत्युव्यालभीतः पलायन्' इत्याद्यनुसारेण श्रीभगवच्चरणारविन्दरूपम् । ब्रह्मपरा उपाधिनिरसनद्वारा ब्रह्मप्रतिपादनपरा ॥ ३ ॥

**नीलकण्ठी**—अत्रार्थे आख्यायिकामारचयति—सैषा उपनिषद्रहस्यविद्या । अकिञ्चनो निष्परिग्रहः संन्यासीत्यर्थः ॥ ३ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—एतदेव ब्रह्मपरत्वमेव । अत्र श्रुतीनां ब्रह्मपरत्वे । एतेन क्षीरोदशायिनः श्रीनारायणाच्छ्रुत्वा सनंदादिभिर्यन्निर्णीतं तदेव श्रीनारायणोऽपि नारदायोक्तवानित्यवगम्यते । नियतलिंगत्वाद्गाथामित्यस्य विशेषणं संवादमिति ॥ * ॥ **श्रीधरानुयायिनी**—अत्र संदेहाभावार्थमाख्यायिकामवतारयति—अत्रेति । श्रुतीनां ब्रह्मपरत्वे श्रीनारायणेन नारदायोपदिष्टमितिहासं ते वर्णयिष्यामि ॥ * ॥ **विश्वनाथी**—उक्तमर्थं द्रढयितुमितिहासमवतारयति—अत्र एतत्प्रसंगे, गाथामितिहासम्, वर्तयिष्यामि चिरमतीतामपि वर्णयिष्यामीत्यर्थः । नारायणो महत्स्रष्ट्रादिपुरुषत्रयाश्रयः सर्वजीवाश्रयश्च । स तु नारायणस्त्वं नहि सर्वदेहिनामित्याद्यनुसारेण स्वयं भगवाञ्छ्रीकृष्णः स एवान्वित उपक्रमोपसंहारादिष्वनुगतो यस्यां तां नारदस्य परमभागवतत्वाच्छ्रीभगवन्माहात्म्यमेवोद्देश्यमिति सिद्धान्तः सूचितः । अतो भगवत्प्रिय इति । वक्ष्यते च संवादं संवादरूपाम् । ऋषेरिति क्षीरोदशायिपरमव्योमेश्वरयोर्व्यावृत्त्यर्थम् ॥ ४ ॥

**नीलकण्ठी**—॥ ४ ॥

**एकदा नारदो लोकान्पर्यटन्भगवत्प्रियः ॥ सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम् ॥ ५ ॥ यो वै भारतवर्षेऽस्मिन्क्षेमाय स्वस्तये नृणाम् ॥ धर्मज्ञानशमोपेतमाकल्पादास्थितस्तपः ॥ ६ ॥ तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः ॥ परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह ॥ ७ ॥ तस्मै ह्यवोचद्भगवानृषीणां शृण्वतामिदम् ॥ यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम् ॥ ८ ॥**

॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—एकदैकास्मिन्काले। नारायणाश्रमं कलापग्रामम्। सनातनं तन्नामानं प्राक्तनं वा नारायणं वा ॥ * ॥ **श्रीधरानुयायिनी**—कदाचिद्भगवद्भक्तो नारदो लोकान्पर्यटन्सन् भारतवर्षवासिनामैहिकामुष्मिककल्याणाकल्याणमभिव्याप्य ब्रह्मदिनप्रथमांशमारभ्य धर्मज्ञानशमोपेते तपसि स्थितं सनातनं श्रीनारायणमृषिं द्रष्टुं बदरिकाश्रमे कलापग्रामाख्यं तदाश्रमं ययौ ॥ * ॥ **विश्वनाथी**—सनातनमाद्यं श्रीभगवंतम् ऋषिं धर्मपुत्रं श्रीनारायणम् । श्रीनारायणाश्रमं तन्नाम्नैव प्रसिद्धं बदरिकाश्रमप्रदेशम् ॥ ५ ॥

**नीलकण्ठी**— ॥ ५ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—कोऽसावृषिस्तमाह—य इति । स्वस्तये सुस्थितये । क्षेमाय समृद्धये । आकल्पात्कल्पमभिव्याप्य ॥ * ॥ **श्रीधरानुयायिनी**—॥*॥ **विश्वनाथी**—ऋषित्वे कारणं वदँस्तदीयकारुण्यमयलीलामाह—य इति । क्षेमाय ऐहिकाय, स्वस्तये आमुष्मिकाय, मंगलाय लोकशिक्षार्थं धर्माद्युपेतं तपोयोगं स्वधर्मं वास्थितः । धर्मो भक्त्युपयोगि ज्ञानं भगवद्विषयं शमो भगवच्चित्ततेति विवेकः । आकल्पाद्ब्रह्मादिनप्रथमांशमारभ्य ॥ ६ ॥

**नीलकण्ठी**—॥ ६ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—तत्र कलापग्रामे। स्वाश्रमे स्थितम्। इदं श्रुतीनां ब्रह्मपरत्वम्। उपविष्टमिति वैयग्र्यराहित्यमाह तेन प्रश्नावसर उक्तः। ऋषिभिः परीतमिति सर्वसंगत्वेन प्रश्नमाहात्म्यं चोक्तम् ॥ * ॥ **श्रीधरानुयायिनी**—हे राजन् सशिष्यं स्वाश्रमे स्थितं नारायणं प्रणम्य नारदस्तमिदमेवापृच्छत् ॥ * ॥ **विश्वनाथी**—तत्र निजाश्रमे । उपविष्टमिति वैयग्र्यराहित्येन प्रश्नावसर उक्तः । ऋषिभिः परीतमिति सर्वसंमतत्वात्प्रश्नोत्कर्षोऽसूचि । इदमेव ब्रह्मन्ब्रह्मण्यनिर्देश्य इत्येव । कुरूद्वहेति शुद्धवंशोद्भूतत्वेनैव तवाप्ययं प्रश्न इति भावः ॥ ७ ॥

**नीलकण्ठी**—॥ ७ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—तस्मै नारदाय। इदं किं यो ब्रह्मवादस्तदिदम्। उद्देश्यविधेयभावत्वाल्लिंगवैषम्यमदोषः। "यत्रोद्देश्यविधेयत्वं तत्रायं नियमो नहि" इत्युक्तेः। शृण्वतामिति सावधानत्वमुक्तम्। जनशब्दोऽदतोऽपि भुवनवाची सान्तश्च 'जनस्तपःसत्यनिवासिनो जनाः' इति तृतीयोक्तेः ॥ * ॥ **श्रीधरानुयायिनी**—शृण्वतामृषीणां मध्ये स्थितो नारायणो जनलोकवासिभिः सनंदनादिभिः प्राक्प्रवर्तितां ब्रह्मविषयगाथां नारदायावोचत् ॥ * ॥ **विश्वनाथी**—शृण्वतामिति सावधानत्वम् । ब्रह्मणि वेदे वादस्तत्त्वबुभुत्सार्थकथारूपः न तु जल्पवितंडारूपः ॥ ८ ॥

**नीलकण्ठी**—॥ ८ ॥